# ॥ बेळगांव रामतत्त्वप्रकाश छापखाना. ॥

खालीं लिहीलेलीं पुस्तकें आमच्याकडे मिळतात.

| | किं०रु० |
|---|---|
| श्रीमहाभारत सटीक उत्तमटाईपाचें. | |
| श्रीमद्भागवत विजयध्वजी टीका. | |
| तात्पर्यनिर्णय पदच्छेदमोठ्याअक्षरांतछापत आहे जनार्दनीटीका. नवीनआवृत्ति मोठेंअक्षर. | |
| विष्णुपुराण. सटीक | |
| वाल्मीकीयरामायण सटीक. बालबोधलिपी कानडीभाषा. | |
| श्रीमद्वादिराजकृत तात्पर्यनिर्णय. | |
| हरिकथामृतसार. | |
| दासरपदगळु भाग १ ला. | |
| दासरपदगळु भाग २ रा. | |
| हरिवंश सटीक. | |
| ब्रह्मसूत्रभाष्यतत्त्वप्रकाशिकाटीका. | |

| | किं०रु० |
|---|---|
| मध्वविजय सटीक. | ४ |
| वैष्णवीब्रह्मकर्म आवृत्ती २ विषय ७० | १॥ |
| स्मृत्यर्थसागर छलारी. | १।॥ |
| मूलाद्यंत श्लोक सटीक. | ॥· |
| मध्वविजयमूळ मोठें अक्षर, | ।॥· |
| मध्वविजय. | ॥· |
| वष्णुसहस्रनाम वैष्णवी भाष्य. | ॥· |
| वायुस्तुति सटीक. छलारी | ॥· |
| द्वादशस्तोत्र सटीक. | ·= |
| वायुस्तुति सटीक. | ॥= |
| सत्यनारायण पू० क० सार्थ. | ·= |
| हरितालिका पू० क० सार्थ. | ॥- |
| ऋषिपंचमी पू० क० सार्थ. | ·= |

इदं पुस्तकं बेळगांवनगरस्थरामतत्त्वप्रकाशकमुद्रणयन्त्रालयाधिपतिना सावंतोपाह्वावाजीरामचंद्रेण मोहमय्यां गणपतकृष्णाजीमुद्रणयंत्रालये तदधिपतिना आत्मारामकान्होबाभिख्येन मुद्रापितम्.

अध्यायांक.

तिसद्गीतयोपदिश्य गृहीतशस्त्रंकृत्वा कुरुपांडवैरन्योन्यपृतनांघातयित्वा भी
अर्जुनंबाणै रथादपातयदित्यादि.

२६ द्रोणेयुद्धंकुर्वतिसति अर्जुनेनभगदत्तवधः। चक्रव्यूहेअभिमन्यौमृतेसति श्रीकृष्ण
निशिअर्जुनंकैलासंप्रतिनीत्वा रुद्रदत्तास्त्रबलात्सैंधवंघातयित्वा धृष्टद्युम्नेनद्रोणेहत
ति नारायणास्त्राद्भीमंररक्षेत्यादि.

२७ नपार्थेनयुद्धेपराजितेनकर्णे पुनःशल्यंसारथिमवाप्य बाणैर्युधिष्ठिरंशीर्णांगं शि
गतं अर्जुनंचश्रीकृष्णोमृत्योरपात् भीमेनदुःशासनेहतेसतिपश्चात्कर्णःअर्जुनेनह
त्यादि

२८ युधिष्ठिरेणशल्यवधेकृतेसति समस्तेकुरुकुलेपार्थैर्हतेसति भीमेनदुर्योधनादिशतौ
हतेसति रात्रौअश्वत्थाम्नाशिबिरेसुतानांवधेकृतेसति श्रीकृष्णःराज्यंप्राप्तान्पांड
न् परीक्षितंचब्रह्मास्त्राद्ररक्ष

२९ विप्रैर्युताभ्यांकृष्णाभ्यां राज्येभिषिक्तःधर्मजःस्वनिंदकेभिक्षुकेब्राह्मणैर्दग्धेसति

ध्यायांक

ज्यंत्यक्तुंउद्यतोभूत् ततःकृष्णवचनतः भीष्मादखिलधर्मनिर्णयंशुश्रावेत्यादि.

३० भीष्मःश्रीकृष्णंस्मृत्वास्वमूलरूपंप्राप युधिष्ठिरःश्रीकृष्णेनशासितःसन् निर्दुःखः
धर्मनिरतश्चभूत्वा स्वराज्येकलिंनिर्जित्य राज्यंजुगोप श्रीकृष्णः पार्थंबोधयित्वा ब्राह्म
णायमृतांशिशुं पुनरादायदत्वा पांडवैर्यज्ञंकारयामासेत्यादि

३१ श्रीकृष्णेनयुक्ताःपांडवाःक्षितिंररक्षुः धर्मराजःभगवत्प्रीतये धर्मनिरतोभूत् भीम
वचनात्वैराग्यविशिष्टंवनंगतंधृतराष्ट्रं श्रीवेदव्यासःनिजमनोभीष्टवंतंचकार पार्थाः
भगवत्पदंस्मरंतःसंतःमुमुदुः

३२ श्रीकृष्णःअश्वमेधयागंकृत्वा विप्रशापात्स्वव्यूहकलहेन यदुकुलंनाशयित्वा दे
वैः प्रार्थितःसन् भैष्म्यादिभिर्युतःस्वलोकमागात् ततःपांडवाअपिनिजपदंप्रापुः दै
त्याःविष्णुवैष्णवद्वेषात् तमसिनिपतिताः ततःश्रीहरिर्बुद्धोभवत् कलियुगांतेदुर्जन
नाशाय कल्क्यात्माभविष्यतीत्यादिनिर्णयः

संपूर्णोयमनुक्रमः।



अध्यायांक.

गवत्सेवांकर्तुं पांडुतनयाःसंतो जज्ञिरे.

**१३** गर्गाचार्यात् क्षत्रिययोग्यान्संस्कारान्प्राप्य बालचरितैः गोपान्गोपीश्चसंतोष्य सवत्साधेनूश्चरक्षन् कालियसर्पंदमयित्वा दावाग्निंपीत्वा विप्रवनिताप्रीतिंकृत्वा गोवर्धनमुद्धृत्य गोगोपीगोपालान्संरक्ष्य निशासुक्रीडांकृत्वा मधुरांगत्वा गजंमल्लान्कंसं हतवानित्यादि.

**१४** श्रीकृष्णःपितरौविमोच्य उग्रसेनायराज्यंदत्त्वा गुरोःसांदीपिनेःमृतंपुत्रमानीत्वा युधिजरासंधाद्यरीन्विजित्य पितृहीनान्स्वनगरंप्राप्तपांडवान्दृष्ट्वा उद्धवद्वारा नंदादीन् गतविरहशोकांश्चकारेत्यादि.

**१५** पांडवाःव्यासस्वरूपादपिभगवतःसकाशात् विदितवेद्याःसंतःसंतोषंप्रापुः तथा द्रोणःस्वपुत्रार्थं वित्तेच्छयापरशुराममंगत्वा तस्मादात्तधनुर्विद्योभूत्वा द्रुपदराजसमीपंगतः तत्राप्यनाप्तकामःसन् शिष्यत्वेनपरिगृहीतकुरुपांडवेभ्यः अस्त्रविद्याअदात्

**१६** श्रीकृष्णः नृपैःसहपुनरागतंजरासंधंज्ञात्वा नीतयेअग्रजेनसह अतिगहनंगोमंतगिरिंगत्वा तत्रागताद्गरुडात् लब्धकिरीटोभूत्वा उन्नतपर्वताग्राद्गत्य रिपून्जित्वा सृगालवासुदेवंहत्वा मधुरांप्राप

**१७** जरासंधादिसर्वनृपतीन् भग्नाशांकृत्वा पट्टाभिषिक्तोभूत्वा भीष्मकेणसत्कृतःसन् कालयवनहनननानंतरं रुग्मिणीमूढ्वा दुर्गर्वरुग्म्यादिकान्जिगाय सत्यभामापाणिग्रहणंकृतवाश्चेत्यादि.

**१८** भीमसेनंविनाअस्त्रज्ञेष्वधिकोर्जुनः द्रुपदराजंबद्ध्वाद्रोणायगुरुदक्षिणामदात् तथा द्रुपदोपिद्रोणांतकरंपुत्रं अर्जुनायदातुंयोग्यांपुत्रींचाप्तवान् धर्मजश्चवारणावतेराज्यंकृतवानित्यादि.

अध्यायांक

**१९** पांडवानांलाक्षागृहेदहनं भीमेनहिडिंबहननं हिडिंब्युद्वाहनंच एकचक्रनगरेपांडवानांभिक्षाचारेणनिवासः भीमेनबकवधः पांचालनगरेद्रौपदीपाणिग्रहणं पांडवा रणे अखिलभूपतीन्जित्वा हस्तिनपुरंप्राप्य इंद्रप्रस्थंगताअभूवन्

**२०** स्त्रीपुत्रादियुतपांडवानांरक्षकः अष्टमहिषीणांप्रियः श्रीकृष्णः शतधन्वानंहत्वा नारदकृतस्तुत्यनंतरं नरकंहत्वा पारिजाततरुमपहृत्यबह्वीःस्त्रियऊढ्वा अर्जुनाय स्वर्भगिनींसुभद्रांदत्त्वा खांडवदाहमकारयत्

**२१** पांडवार्थं मयेनसभांकारयित्वा स्वपुरंगत्वा ततः सूर्यपर्वणिकुरुक्षेत्रमागत्य पुनर्द्वारकापुरंगत्वा यज्ञंकृत्वा पांडवान्प्राप्य भीमेनजरासंधंनिहत्य पांडवैःराजसूययागं कारयित्वा पुनर्द्वारकांप्राप्तः अक्षक्रीडायांपराजितपांडवैःस्मृतश्च

**२२** पांडवाअरण्यंप्राप्य भीमकृतकिर्मीरवधानंतरं ऋष्यादीन्पोषयंतःस्थिताः। ततःपांडवाःवनंगताइतिवार्ताश्रुत्वा आगतेनश्रीकृष्णेन संमानिताःसंतः जयद्रथंजित्वा घोषयात्रायांइंद्रप्रेषितचित्रसेनादिगंधर्वैर्बद्धान्दुर्योधनादीन्विमोच्य यक्षरूपधर्मप्रश्नान्प्राहुः

**२३** वेषांतरंगताःपांडवाः विराटालयंप्राप्य विराटदेहस्थविष्णुसेवांकृत्वा भीमकृतमल्लकीचकादिवधानंतरं गोग्रहणार्थमागतान् सुशर्मभीष्मद्रोणादीन्जित्वा विराटेनसंमानिताःसंतअ.गतंकृष्णंप्राप्य अभिमन्योरर्थेउत्तरांलब्धवंतः

**२४** द्रुपदप्रेषितब्राह्मणोक्त्याऽपि धृतराष्ट्रः पांडवेभ्यःराज्यंनादात् तदा श्रीकृष्णोर्जुनस्यसाहाय्यंकृतवान् किंच कुरुपांडवसंधानार्थंहस्तिनपुरंगत्वा स्ववचनेदुर्योधनादीनां अनभिमतेसति पुनः पार्थान्प्रापेत्यादि.

**२५** अर्जुनसारथिर्भूत्वा युद्धोन्मुखेकुरुपांडवसेनेदृष्ट्वाकरुणयाउज्झितशस्त्रंफल्गुनंप्र

# ॥ श्रीमन्महाभारततात्पर्यनिर्णयस्य विषयानुक्रमः ॥

| अध्यायांक. | |
|---|---|
| १ | भगवतः सृष्टेः पूर्वस्थितिः जगदुदरत्वं सुखनिधित्वं अमितवासुदेवादिरूपैःस क्रीडाकर्तृत्वं सदातारतम्योपेतब्रह्मादिदेवगणग्यसुगुणत्वं वेदवेद्यत्वं दोषरहितत्वे मर्त्यवृत्त्याअसुरजनमोहकत्वं भक्तानांमुक्तिदातृत्वं द्वेषिणांतमोदातृत्वंचेत्यादिस शास्त्रार्थनिर्णयः |
| २ | कलौभारतादिसद्ग्रंथसमूहे अन्यथाज्ञानिभिर्विलुलितेसति श्रीवेदव्यासेनप्रेरित श्रीमदाचार्यवर्यः विष्णोःसर्वोत्तमत्वस्य सुराणांतारतम्यस्य वायोर्जीवोत्तमत्वादिव स्यच प्रतिपादकानि सुवाक्यान्युज्जहार. |
| ३ | भगवानादौ वासुदेवादिचतूरूपोभूत्वा क्रमशःब्रह्मादिदेवान्ब्रह्मांडंअब्जज दिदेवान्सृष्ट्वाअंततोहरति तथापूर्ववदेव अस्यजगतःस्रष्टा मत्स्यादिरूपेणा तीर्य स्वांशाविष्टलक्ष्मणाद्यनुजैःसहरामनामादशरथात्मजोभूदितिसर्गानुसर्गप्रादुर्भा निर्णयः |
| ४ | रामनाम्नःश्रीहरेः नित्यप्रवृद्धस्यापि जनमोहकवृद्धिः स्वदर्शनेनसज्जनाह्लादकत्व ऋषिविप्रियकारिताटकांहत्वाविश्वामित्रक्रतुरक्षकत्वंअहल्यामुद्धृत्यपत्यासंयोजनं हर चापंभङ्क्त्वाजानकीपरिणयः अयोध्यापुरमार्गेपरशुरामजयः अयोध्याप्रवेशश्चेत्यादि |
| ५ | श्रीरामः मातृवचनेन राज्यंत्यक्त्वावनंगतःसन् काकाक्षिगंदैत्यंहत्वा शूर्पणखां विकर्णनासिकांकृत्वा खरादिराक्षसान् मारीचंचहत्वा रावणहृतांसीतां अन्वेषयन्वि वपंपांप्राप्तःसन् हनुमत्सुग्रीवाभ्यांवंदितोभूदित्यादि |
| ६ | ततःसुग्रीवेणमित्रत्वंप्राप्य वालिवधेशपथंकृत्वा सप्ततालान्विभिद्यवालिहननंकृत्वा सुग्रीवंकपिराज्येस्थापयित्वा सीतान्वेषणार्थंदक्षिणाशांगतेनहनूमताअब्धितरणेसंस्तु तोभूदित्यादि |
| ७ | श्रीहनूमान्रामानुग्रहतः तीर्णांबुधिःसन् लंकांप्रविश्यवैदेहींदृष्ट्वा वनंभङ्क्त्वा अक्षा दिराक्षसान्संहृत्य दशकंधरंवीक्ष्य लंकांदग्ध्वा पुनरब्धिंतीर्त्वा कपिभिःसहश्रीरामं प्राप्यननाम |
| ८ | श्रीरामःकपिसैन्ययुतःसन् दक्षिणसमुद्रमागत्य विभीषणायराज्यंदत्त्वा समुद्रेण प्रार्थितःसन् सेतुंबद्ध्वा लंकांप्राप्य इंद्रजित्कुंभकर्णदशाननादिराक्षसान्हत्वा जान कीमादायस्वपुरंप्राप्तइत्यादि. |
| ९ | ततःसाम्राज्यंप्राप्तःसन् भरतंयुवराज्येभिषिच्य स्वजनान्रक्षन् सीतायांद्वौपुत्रौजन यित्वा यज्ञैःस्वमेवायजत् सीतानिमित्तं भूमिंगतदैत्यान्विमोह्य ब्रह्मादिदेवैःप्रार्थितः सन् हनूमतेवरंदत्त्वा स्वंधामप्राप्तोभूदित्यादि. |
| १० | श्रीहरिःसमुद्रमथनादिचरितेन देवैःस्तुतःसन् सज्ज्ञानार्थंपराशरऋषिणासत्यवत्यां व्यासत्वेनावतीर्य वेदविभागंकृत्वा सर्वाणिशास्त्राणिचविधाय स्वभक्तेषुज्ञानंसंस्था प्य तद्गतकलिंशमयामास |
| ११ | यस्मिंश्चन्द्रवंशेपुरूरवाः यदुभरतादयः भीष्मांबिकेया यादवाश्चजाताः तस्मिन्वंशे भूभारक्षयमिच्छद्भिर्ब्रह्मादिभिः प्रार्थितःश्रीनारायणः देवैःसहआविर्बभूवामास |
| १२ | श्रीहरिःवसुदेवतःदेवक्यांअग्रजयुतःसन्नवतीर्य व्रजंगत्वा पूतनांशकटंचहत्वा जन न्यैस्वमुखेविश्वंप्रदर्श्य तृणावर्तंजघान तथा भगवदवतारात्पूर्वंपरतश्चधर्मवाय्वादयःप्र |

॥ श्रीवेदव्यासायनमः ॥ श्रीमदानंदतीर्थगुरुभ्योनमः ॥ ॐ नमोभगवतेवासुदेवाय ॥ नारायणंपूर्णगुणैकदेहं जन्मादिदंज्ञानविबंधहेतुम् ॥ विश्वस्यभक्तेतरसौख्यदुःखसद्धेतुमीशंविततंनमामि ॥१॥ नमामिनीलांबुदकांतिकांतं व्यासंनिरस्ताखिलदोषपुंजं ॥ ज्ञानादिदंब्रह्मशिवादिकेभ्यः सत्तर्कमुद्राभययुक्तहस्तं ॥ २ ॥ जयतिश्रीमदानंदतीर्थमार्तंडचंडगौः ॥ यत्संपर्कःसतांमोहशर्वरींसमदोदलत् ॥ ३ ॥ गुरून्नत्वाभारतार्थनिर्णयस्यप्रदीपिका ॥ वेदांगतीर्थसद्व्याख्यामाश्रित्यक्रियते मया ॥ ४ ॥ महाभारततात्पर्यनिर्णयस्यप्रदीपिकां ॥ कर्तुमुद्योगिनःसंतः क्षाम्यंतुममदुर्नयं ॥५॥ क्वश्रीमध्वगुरोरुक्तिः क्वतदर्थेमदाग्रहः ॥ खद्योतरोचिषाकोपि विभातंकर्तुमीहते ॥६॥ ज्ञानाधिकेषुसंवादात्पूर्वापरविमर्शनात् ॥ लेखनाद्बुद्धिशुद्धिर्यत्सार्थोमेजायतेश्रमः ॥ ७ ॥ श्रीमदानंदतीर्थाः सकलपुराणार्थनिर्णयं विशेषतोभारतार्थनिर्णयंच चिकीर्षवः प्रारिप्सितपरिसमाप्त्यादिफलकमन्येषांस्वेनच स्वभावतःकृतंमंगलं शास्त्रप्रतिपाद्यगुणयुतस्वेष्टदेवतानमस्काररूपं शिष्यशिक्षायै निबध्नंति । नारायणायेति । तेनमोनमइत्यन्वयः। ग्रंथकरणकालेप्यपरोक्षीकृतभगवद्रूपत्वात् तेइत्युक्तम्। आदराद्द्विर्वचनं। डित्थादिवन्नारायणनामेदंसंकेतमात्रमपितुविशिष्टार्थप्रतिपादकमिति तदर्थमाह । परिपूर्णगुणार्णवायेति । तेनारविरुद्धानारागुणास्तेषामयनमितिव्युत्पत्तिर्दर्शिता । एतस्यकिंलक्षणमित्यतोलक्षणान्याह ।

**ॐ नमो नारायणाय ॥ नारायणाय परिपूर्णगुणार्णवाय विश्वोदयस्थितिलयोन्नियतिप्रदाय ॥ ज्ञानप्रदाय विबुधासुरसौख्यदुःखसत्कारणाय विततायनमोनमस्ते ॥ १ ॥**

विश्वेति । विश्वस्यसर्वजगतःउत्पत्तिः केषांचिज्जडानामभूत्वाभावित्वं । केषांचिज्जीवानांशरीरसंबंधः । केषांचिज्जडानांउपचयः । केषांचिज्जीवानांपराधीनविशेषावाप्तिः । ‘प्रकृतिःपुरुषःकालो वेदाश्चेतिचतुष्टयं। नित्यंस्वरूपतोविष्णोर्विशेषावाप्तिमात्रतः । उत्पत्तिमदितिप्रोक्तं लक्ष्मीस्तदभिमानिनी’ इत्यनुव्याख्यानात् । लयश्चकेषांचिन्नाशः। केषांचिच्छरीरवियोगः। केषांचिदुपचयनाशः। केषांचिदतिसामीप्यं। पालनंतुसर्वेषांसमं। नित्यानित्यसत्तायास्तदधीनत्वात्। उन्नियतिस्तत्तद्देवेषुस्थित्वातान्प्रेरयित्वास्यप्रेरणं। ज्ञानप्रदायेत्युपलक्षणं। अज्ञानप्रदायेत्यपिग्राह्यं। यद्वा ज्ञानपदेनसज्ज्ञानंमिथ्याज्ञानंचग्राह्यं। ज्ञानप्रदानंचेतनमात्रसाधारणं। उत्पत्त्यादिचतुष्टयंतुचेतनाचेतनसाधारणं। चेतनेष्वपिविबुधासुरसाधारणं। मोक्षदत्वंनाचेतनपरमितिज्ञापयितुंपृथक्पदेनजन्मादिज्ञानमुक्तिप्रदत्वमुक्तं। तदुक्तं। ‘सृष्टिस्थित्यप्ययेहानियतिदृशितमोबंधमोक्षाश्चयस्मादस्यश्रीब्रह्मरुद्रप्रभृतिसुरनरद्व्यीशशश्वात्मकस्य। विष्णोर्व्यस्ताःसमस्ता’ इतिभागवततात्पर्ये। विबुधासुरपदाभ्यांसदसतौउच्येते। सुखस्यभावःसौख्यं स्वाभाविकंसुखमितियावत् भावप्रत्ययेनसुखेप्राशस्त्यमुच्यते। स्वरूपभूतेनापिसुखेनविशेषशक्त्यासुखत्वंसुखित्वंचभवतीतिसूचनाय सौख्यपदंप्रायोजि। तेनमोक्षप्रदत्वमुक्तंभवति। बद्धस्यमोक्षइति बंधदत्वमपिज्ञेयं। सदितिकालादिवन्नेतिसूचयति। उक्तंमोक्षस्यद्विविधत्वं। छांदोग्यभाष्ये

तथाहि । 'विकारेच्छादिभिर्मुक्तश्चिन्मात्रेच्छादिसंयुतः । मुक्तइत्युच्यतेजीवोमुक्तिश्चद्विविधामता । चिन्मात्रदेहदुःखेचदेहोमिथ्यादृगात्मकः । निषिद्धेछाश्रयस्त्वस्यु
नित्यासामुक्तिरासुरी । चिन्मात्रावैष्णवीभक्तिर्देहःसम्यग्दृगात्मकः । सुखमिच्छानुकूलंचमुक्तिर्दैवीतुनामता' इतिनारायणश्रुतिरिति १ ॥ यद्वा मूलोक्तसप्तोपलक्षणी
कृत्यान्यदप्यनुक्तंग्राह्यं । तथाहि । तत्त्वसंख्याने । 'सृष्टिस्थितिःसंहृतिश्चनियमोज्ञानबोधने । बंधोमोक्षःसुखंदुःखमावृत्तिर्ज्योतिरेवच । विष्णुनास्यसमस्तस्यसमा-
सव्यासयोगत' इति । इदंचस्थितिनियमौसर्वस्यसृष्टिसंहृतीनित्यस्यानित्यस्यच ॥ अज्ञानंभावरूपंदुःखस्पृष्टस्य ज्ञानाभावस्तुसर्वस्य बोधनंचेतनस्य । सुखंप्राप्त
तमसोविना 'दुःखंदुःखास्पृष्टंविनेत्यादीतिव्याख्यातंजयतीर्थैः । अविभोःकथंसकलकारणत्वमतउक्तंविततायेति । तथाचोत्पत्त्यादिप्रदत्वरूपानेकलक्षणान्युक्तानि
भवंति । एकेनैवलक्षणेन लक्ष्यनिर्धारणसंभवेप्यनेकलक्षणकथनं भगवतोजीवेभ्योत्यंतव्यावृत्तिसाधनार्थं । अथवा नन्वत्रोपयोगिविशेषणंपरिपूर्णेतिविशिष्टत्वंवि
श्वोदयेतिप्रतिपाद्यत्वं ज्ञानेतिविबुधासुरेतीष्टत्वमाह २ ॥ यद्वा परिपूर्णगुणार्णवायेति प्रथमाध्यायार्थं परितःसर्वतःसर्वदापूर्णाइति गुणानांविशेषणात् सर्वदेशेसर्व
कालेगुणसत्त्वेउदिते गुणानांदोषाणांच विरोधादर्थान्निर्दोषत्वमुक्तं । तेनद्वितीयाध्यायार्थं ज्ञानेतितृतीयाध्यायार्थं विबुधासुरसौख्येति चतुर्थाध्यायार्थमाह ॥ ३ ॥ अथ-
वासंकर्षणमीमांसायां सविष्णुराहहीत्यंतिमसूत्रानुसारेण ब्रह्मशब्दोविष्णावेवेतिभाष्येव्याख्यातं । तत्रविष्णुशब्दार्थभूतांकालतोव्याप्तिंनारायणायेतिपदेनापोनारा-
इतिस्मृत्याप्रलयकालवर्तित्वस्यार्थतउक्तत्वात् । परिपूर्णेतिगुणतोव्याप्तिं विततायेतिदेशतोव्याप्तिं नमोनमइतिजिज्ञास्यं विश्वेतिसृष्ट्यादिकर्तृत्वमाह । तेनसूत्रद्वया-
र्थउक्तोभवति ॥ १ ॥ ॥ मंगलाचरणेनैवसर्वशास्त्रार्थनिरूपणात्किमग्रिमग्रंथेनेत्याशंक्य । 'सृष्टौलयेतारतम्यंदेवानांज्ञायतेस्फुटं । तारतम्यपरिज्ञानेमहातात्पर्य
मिष्यते । अतस्तद्बहुशस्तूक्तमन्यच्चैतत्प्रकाशकमि' ति वामनपुराणवचनात् । सृष्टिप्रलयाभ्यांहिसर्वस्वरूपनिर्णयः । तदर्थंहिसृष्ट्यादिकंनिरूपणीयमित्युत्तरमभि
प्रेत्य । सृष्टिंवक्तुंकारणस्यपूर्वभावित्वात् । सृष्टिकर्तुःसृष्टेःप्रागवस्थानमाह ॥ आसीदिति । अग्रेजगदग्रे प्रलयेसप्रसिद्धः नारायणएकएवचोवधारणेआसीत् । ननु
जीवानांसत्त्वात्कथमेकएवेत्युक्तमित्यतउक्तं संशातेति । संशांताविनष्टासंवित्ज्ञानंयस्य तदखिलंजगत् जठरेनिधाय अनेनेदं'आत्मावाइदमेकएवाग्रआसीत् नान्यत्किंच
नमिषदि' तिश्रुतिसिद्धमितिसूचयति । अग्रआसीदित्येतत् । नारायणशब्दविवरणरूपमित्यभिप्रेत्यनारायणइत्युक्तं । आत्मशब्दार्थमाह । उदारेति । उदाराउत्कृष्टाः
गुणास्तेषांवारिधिरिववारिधिः समुद्रदृष्टांतेन प्राप्तपरिमितत्वंनिवारयति । अप्रमेयइति । जठरइत्यनेनप्राकृतनाशकाले विद्यमानस्यदेहस्याप्राकृतत्वंप्राप्तंतत्कथमित्यत-
उक्तं । परमादव्यक्तात्परतमइति ब्रह्मणःसकाशात् लक्ष्म्याआधिक्यमिवनेत्युक्तस्तमप्प्रत्ययः । तेनप्रकृतिनियामकलक्ष्म्याअत्युत्तमत्वात् अप्राकृतत्वं । पुंलिंग-
चपुंशक्तिमत्वादक्षरशब्दवत् । अखिलमेकएवेत्युक्त्या लक्ष्म्याअपिउदरप्रवेशःप्राप्तइत्यतउक्तं । लक्ष्मीति । लक्ष्मीःभुजांतरगतायस्येति सुखार्थंतस्याअनुस
रणमित्यतउक्तं । स्वरतोपीति । स्वरतस्यापिलक्ष्म्यनुग्रहार्थमेतदितिज्ञेयं २ यद्वा अथास्यकालाद्यत्वंवक्तुं प्रलयेकारणसत्वबोधिकात्मावाइदमितिश्रुत्यर्थमनुव-

दति । आसीदिति । आत्मशब्दार्थमाह । उदारेति । सनारायणएकएवइदंजगदपेक्षया अग्रेआसीत् गुणतःकालतश्चाग्र्यआसीत् । रमापेक्षयाकालतोग्र्यत्वं कथमित्यतआह । परतमइति परमात् परतमःरमायाःउत्तमत्वात् हरेःरमासत्तायाअपितदधीनत्वात् । नरमायाःकालाग्र्यत्वंस्वातंत्र्यसत्तायाःकालाग्र्यपदेनविवक्षितत्वात् । विद्यमानापिरमापराधीनसत्तावत्वान्नाग्र्येत्येवन अपितु गुणैरूनत्वाच्चनाग्र्येत्याह । अप्रमेयइति । गुणानामनंतत्वात् । अप्रमेयःज्ञातुंअशक्यः रमातुयतोहरेःसकाशात् गुणैरूनातोपिनाग्र्येतिभावः । ननुजीवानांलक्ष्म्याश्चसत्वात् कथमेकआसीत् इत्युक्तमित्यतआह । संशांतेति । संशांताविलीनासंवित् ज्ञानंयस्यतत्सुप्तं जगज्जठरेनिधायेति । अनेननान्यत्किंचनमिषदितिश्रुतिर्व्याख्याताभवति । मिषच्छब्दार्थऐतरेयभाष्ये। 'तदेवमिषणंनामसद्रूपंमिनुतेयत'इति । मिनुतेसद्येनमीयते सत्येनवातन्मिषदन्यदमिषत् तेनसज्जगदादिज्ञानाभावात्सुप्तंजगादितिभावः । मुक्तानांलक्ष्म्याःसुप्त्यभावात् कथमुक्तंसंशांतेत्यतआह । लक्ष्मीभुजांतरगतायस्येति । तेनलक्ष्म्याःपराधीनत्वेनविद्यमानमपि ज्ञानमविद्यमानमेवेतिबोध्यं । लक्ष्म्याःपराधीनत्वोक्त्यासुतरांमुक्तानांपराधीनत्वमितिभावः । हरेरप्यन्याधीनत्वंकिमित्यतआह । स्वरतोपीति । स्वतएवस्वयमेववारतोरतिमान्नपरतइत्यर्थः । तदुक्तमैतरेयभाष्ये । 'एकोनारायणस्त्वासीत्प्रलयेरमया-

**आसीदुदारगुणवारिधिरप्रमेयो नारायणः परतमः परमात्स एकः ॥ संशांतसंविदखिलं जठरे निधाय लक्ष्मी**
**भुजांतरगतः स्वरतोपि चाग्रे ॥ २ ॥ तस्योदरस्थजगतः सदमंदसांद्रस्वानंदतुष्टवपुषोपि रमारमस्य ॥**
**भूत्यै निजाश्रितजनस्य हि सृज्यसृष्टावीक्षा बभूव परनामनिमेषकांते ॥ ३ ॥**

सह । नित्याततगुणत्वात्सआत्मेतिश्रुतिषूदितः । इदंसर्वमपेक्ष्यासौ कालतोगुणतस्तथा । अग्र्यएवसमस्तेशस्तद्वशत्वाद्रमापिसा । विद्यमानापिनाग्रस्थागुणैरूनाततोयतः । नब्रह्मानशिवश्चासीन्नैवान्यत्त्वमिषत्क्वचित् । सुप्तास्तत्रयतोजीवाःसर्वेब्रह्मशिवादिकाः । असुप्ताश्रीश्चमुक्ताश्चस्वतंत्रोन्मेषवर्जनात् । अनुन्मेषाएवतेपिस्वतंत्रोन्मेषएकराट् । नारायणोनचान्योस्तिपूर्णोन्मीलगुणात्मकः । पराधीनेनवित्तेनभुंजन्नपिहिभिक्षुकः । वित्तवानितिनैवोक्तस्तथाश्रीर्मुक्तिगाअपि । मिषंतोप्यन्यतंत्रत्वान्नमिषंतःकथंचन । सर्वदाप्येकएवायं स्वतंत्रोनापरःक्वचित् । कालाग्र्यत्वंक्रमस्यप्रलयेस्थितिरुच्यत'इति ॥ तथा । 'प्रलयेप्यखिलंदेवी रमाविष्णुप्रसादतः । जानातिनित्यज्ञानेनमुक्ताध्यानस्थितालये'। इतिसत्तत्त्वे । अत्रमुक्तब्रह्मणःप्रलयेपिप्रातिभातपरावरइत्यनेन प्रलयेपिब्रह्ममनोवृत्तेः सत्वाद्बाह्यव्यापाराभावाच्च । स्वप्नतुल्यावस्थायाः सुप्तिशब्देनगृहीतत्वात् अविरोधः । सुप्तिशब्दस्यस्वप्नेवृत्तिः । स्वापोद्विविधः । स्वप्नःसुषुप्तिश्चेति षट्प्रश्नटीकोक्तेर्ज्ञेया ॥ २ ॥ ततःकिमित्यतआह । तस्येति । तस्योदरस्थजगतइत्यनुवादः । परनामनिमेषकांते । ब्रह्मणोवर्षशतंपरमित्युच्यते तन्नामयस्य परनामा सचासौनिमेष-

कश्चतस्यांते परस्यनिमेषत्वेतेनायुर्गणनास्यादतः कप्रत्ययेननिमेषत्वंकुत्सयति । 'कालोयंहि परार्धाख्यो निमेषउपचर्यते । अव्याकृतस्यानंतस्यह्यनादेर्जगदात्मनः' । इतितृतीयस्कंधवचनात् । सृज्यसृष्टावीक्षाइच्छाबभूव । उदरस्थजगन्मात्रप्राप्तिव्यावृत्यर्थं सृज्येत्युक्तं । 'ज्ञानंनित्यंबलंनित्यंक्रियानित्या परात्मन' इतिप्रमाणात् । प्राक्विद्यमानस्यैव कदाचिदचिंत्यशक्त्याभवनव्यवहारविषयत्वमीक्षाबभूवेत्यनेनोच्यते। तथोक्तंगीताभाष्ये । 'नचेश्वरज्ञानवत्भूत्वाभाविताताद्धितदर्क्षतेति' । ईक्षावतःकुलालादेर्निमित्तत्वदर्शनात् । अस्यापिनिमित्तत्वंवक्तुमीक्षाबभूवेतिप्रयोगः । तेनविवर्तपरिणामवादा निरस्ता भवंति । एतेनसऐक्षतलोकानुसृजाइतिश्रुतिर्विवृता । सुज्ञेक्षाप्रवृत्योःप्रयोजनपूर्वकत्वात्तदाह । भूत्याइति । स्वप्रयोजनंविहायपरप्रयोजनकथनंकथमित्यतआह । रमारमेति रमांरमयतीतिरमारमस्तस्येति सादितिच । सन्निर्दुष्टः । अनित्यत्वदुःखयुतत्वाल्पत्वादिदोषात्यंताभाववान् । असंद्रःपूर्णःसांद्रःनिबिडःस्वानंदःस्वरूपभूतानंदस्तेनतुष्टंनिराकांक्षंप्रयोजनमननुसंदधत्वपुर्यस्यसतथोक्तः । तस्मात्श्रीपतित्वेनस्वानंदतुष्टत्वेनचास्यप्राप्यप्रयोजनाभावात् परप्रयोजनेनप्रवृत्तिरितिभावः ॥ ३ ॥ उक्तामीक्षांविवरणपूर्वकंश्लोकद्वयेनाह । दृष्ट्वेति । सनारायणःजठरेशयानान् । विद्यमानान् । द्विविधान्चेतनगणान् मुक्तान्संसारिणश्चदृष्ट्वा । चेतनगणेषुसंसारिणःचेतनगणान्स्रक्ष्यइत्यै

**दृष्ट्वा स चेतनगणान् जठरे शयानानानंदमात्रवपुषः सृतिविप्रमुक्तान् ॥ ध्यानं गतान् सृतिगतांश्च सुषुप्तिसंस्थान् ब्रह्मादिकान्कलिपरान्मनुजांस्तथैक्षत् ॥ ४ ॥**

क्षदितिसंबंधः । तत्रमुक्तान्विशिनष्टि । आनंदेति । तेहिद्विविधाः विलिंगाआनंदानुभाविनःअन्येविलिंगमात्राःउभयेअपिआनंदमात्रवपुषः । ध्यानंगतांश्च । द्विविधेभ्योमुक्तेभ्योन्येमुक्ताविलिंगादुःखमात्रवपुषोपिज्ञेयाः । अमुक्तान्विशिनष्टि । सृतिगतान्सुषुप्तिसंस्थानिति । तेत्रिविधाःतिस्रोविधाःदर्शयति । ब्रह्मादिकान्कलिपरान्मनुजानिति । ब्रह्माआदिर्येषामितिअतद्गुणसंविज्ञानोबहुव्रीहिः । भाविब्रह्मत्वेनब्रह्मशब्देनवायुरपिग्राह्यः । 'यदाचाज्ञापयेद्धरिः । तदामुक्ताइतिप्रोक्तानपुराज्ञाविहीनतः' । इति । तथा 'त्यक्तलिंगाश्रयेमुक्तावासुदेवशरीरगाः । अमुक्ताइतिचोच्यंतेसंचारादेरभावत' इतिवचनात् । अमुक्तब्रह्मणःसत्वंज्ञेयं । यद्वा भाविब्रह्मत्वेनब्रह्मशब्देनवायुरेवग्राह्यःरुद्राद्यानित्यर्थः । ब्रह्माआदिरुत्पादकोयेषामितिवायुजत्वंरुद्रस्याप्यस्ति । ब्रह्मादयोब्रह्मपुत्राइतिचतुर्थस्कंधतात्पर्यात् । यद्वाब्रह्मशब्देनभाविब्रह्माणोऋजवोग्राह्याः । तत्रब्रह्माणऋजवआदयोयेषामित्यर्थः । तथा'त्वदाज्ञयैवाखिलभंबुजोद्भवाविर्तनिरंग्याश्वरमाश्रयेन्ये' इति । तेषुब्रह्मशब्दापरपर्यायांबुजोद्भवशब्दप्रयोगात् । 'शतंपरानाभिपश्यैवदेवं ब्रह्माचरहुश्वरंयत्तपोग्न्यामि' ति ब्रह्मशब्दप्रयोगाच्च । अथवा ब्रह्मशब्देनबृहस्पतिर्ग्राह्यः । आदिपदेनतदुत्तमाःकेचिदवराः सर्वेग्राह्याःनामतस्तद्ग्रहणंतुदेवपुरोहितत्वात् । इदमपितृतीयतात्पर्येउक्तं । तथाहि । 'यस्मिन्ब्रह्माराजनिपूर्वएती' तिश्रुतेः । 'बृहस्पतिःपुरोगश्चब्रह्माचब्रह्मणस्पतिरि' त्य

भिधानादिति । 'ब्रह्मापितन्नजानातिईषत्सर्वोपिजानती'त्यत्रजयतीर्थीयैः तथाव्याख्यातत्वाच्च यच्चैतरेयभाष्येउक्तं । 'सुप्तास्तत्रयतोजीवाः सर्वेब्रह्मशिवादिका'इति । तथा शेनसुप्तोब्रह्मात्विवितितात्पर्यंच । तत्सुप्तेदेवेजनार्दनेइतिवत् मुद्रितनेत्रत्वंग्राह्यं । 'तावत्त्वेचनिशातातयत्रमील्यतिविश्वदृक्' । इतितृतीयस्कंधात् । ' सुप्तिस्तुप्रकृतेःप्रोक्ता अतीवभगवद्रतिः । अनास्थान्यत्रचप्रोक्ता विष्णोश्चक्षुर्निमीलनमिति'व्योमसंहितावाक्यात् । विष्णोश्चक्षुर्निमीलनेविशेषोज्ञेयः । अथवा स्वप्नतुल्यावस्थावत्त्वंसुप्तिरितिव्याख्येयं । स्वप्नावस्थासाम्यंचमनोवृत्तेःसत्वात्बाह्यव्यापाराभावाच्च । कथमन्यथातन्मनोवृत्तेरनादिनित्यत्वं । उक्तंचप्रलयेपिप्रतिभातपरावरइतितत्वप्रकाशिकायामपिस्वरूपातिरिक्तज्ञानानित्यत्वाभिप्रायेणेति । ननु प्रलयेब्रह्ममनोवृत्तेःकथंसृष्टिर्लयकालत्वादितिचेन्न । 'यएषुसुप्तेषुजागर्तिकामंकामंपुरुषोनिर्मिमाण'इतिश्रुतेःसृष्टेःसत्वात् । नचेयंस्वप्नपरानप्रलयपरेतिवाच्यं । एतद्भाष्येचप्रलयादिष्विति व्याख्यातत्वात् । प्रलयेपिकेषांचित्सुप्तिशब्दोक्तस्वप्नावस्थासमानावस्थायाःविद्यमानत्वात् । ' अज्ञानंसुप्तिशब्दोक्तंस्वप्नश्चैवविपर्यय'इतितात्पर्यं । अथवा ब्रह्मादिराद्योएषामितितद्गुणसंविज्ञानःब्रह्माणिसुप्तिशब्देनस्वप्नोग्राह्यः । सकृत्प्रयुक्तस्यानेकार्थतातु वाधकस्यसत्वातसोढव्या । उदरावस्थितिःस्थानविशेषकथनपूर्वकउक्त्वा । ब्रह्मांडपुराणे । 'धामत्रयस्थितामुक्तावटपत्रस्थशौरिणः । कुक्षिगताध्यानयुतायावत्सृष्टिर्भवेत्पुनः । तावत्तिष्ठंति

स्त्रक्ष्ये हि चेतनगणान् सुखदुःखमध्यसंप्राप्तये तनुभृतां विहृतिं ममेच्छन् ॥
सोयं विहार इह मे तनुभृत्स्वभावसंभूतये भवति भूतिकृदेव भूत्याः ॥ ५ ॥

चानंदाःसृष्टौयांतिस्वकंस्थलं । तमःप्राप्तास्तामसाश्च स्वरूपेणव्यवस्थिताः । लिंगभंगमनुप्राप्ताःपूर्णद्वेषात्मकाःसदा । नाभेरधश्चतिष्ठंतिदुःखमात्रस्वरूपिणः । नाभेरुपरिभागेतु सृतिस्थाःसृतिमागताः । त्रिवर्गाअपितिष्ठंति यावत्सर्गःपुनर्भवेत् । नित्यसंसारिणःसर्वेसृष्टौसृष्टाभवंतिच । नतेषांसंसृतेर्नाशः क्वचित्कापिभविष्यतीति' । प्रयोजनमाह । सुखेति । तनुभृतांब्रह्मादीनांसुखदुःखंमध्यंसुखदुःखंतत्प्राप्तये । यद्वा सुखदुःखमध्येतितज्जनकंस्थानंलक्ष्यते स्वर्गनरकभूसंप्राप्तयेसंसारप्राप्तयइत्यर्थः । स्थानप्राप्तेः संसारत्वमुक्तमनुव्याख्याने । 'चेतनस्यद्वयंभोग्यंसंसारोमुक्तिरेवच । संसारस्त्रिविधस्तत्रस्वर्गोमध्यस्तथाधमः । मुक्तिश्चद्विविधातत्रसुखंनित्यंतथापरं । नित्यदुःखमितिज्ञेयंसाधनंसंसृतावपि । काम्यंकर्मनिषिद्धंच साज्ञानामितिनिश्चयः । द्वेषोभक्तिश्चमुक्तौतुमुक्तिद्वयविधायकं' । इतिपैंगिश्रुतेरिति । किंकुर्वन्नमेममरूपाणांविहृतिंविहरणमग्निविहरणवत् । सिद्धस्यस्थानविशेषेस्थापनमिच्छन्प्रवेशंकुर्वन्नित्यर्थः । 'ससर्जोच्चावचानादौ स्वयमात्मप्रसिद्धये । एवंसृष्टास्वभूतानिस्थविष्ठैःपंचधातुभिः । एकधादशधात्मानं विभजन्जुषतेगुणानि'त्येकादशस्कंधवाक्यात् । 'तत्सृष्ट्वातदेवानुप्राविशत्' इतिश्रुतेश्च । 'सृष्ट्वाजगदिदंसर्वं नियामकतयास्यतु । बहुरूपोभवानीतिस्याज्जगच्चेत्यचिंतयदि'तिऐतरेयभाष्येच । यद्वा विहृतिंक्रीडामिच्छन्'क्रीडार्थंतुविपश्चितः । साचक्रीडास्वभावोस्यकतोऽतप्त्यास्पदाविभोरि'तिमांडकभाष्ये

तत्प्रयोजनमाह । सइति । सोयंमेविहारइहसंसारे तनुभृतांस्वभवस्यसंभूतयेयोग्यानांस्वगुणज्ञानार्थंभवति । अयोग्यानांद्वेषादिजननायभवति । नित्यसंसारिणांतूदासीनत्वायभवति । नैतावन्मात्रमपितुभूत्याःभूतिनियम्यप्रकृतेःनियामकलक्ष्म्याअपिभूतिकृत् । महदादिरूपेणबहुत्वकृत् । नियामकानेकरूपकृदेवचभवति । तदुक्तंसुधायां तदनेनपारमेश्वरीसृष्टिर्योग्यानांस्वगुणज्ञानार्थेत्युक्तंभवतीति' । 'प्रकृतेःपरिणामादि'तिसूत्रेभाष्येच । प्रकृतावनुप्रविश्यतांपरिणाम्यतत्परिणामनियामकत्वेन तत्रस्थितत्वात्मनोबहुधाकरणादिति । यद्वा तनुभृतांस्वभावसंभूतये सात्विकादिभाकव्याय लक्ष्म्याःपुत्रपौत्रादिभूतिकृदेवभवतीति ॥४॥ ५॥ तत्रसृष्टिश्चतुर्धा शुद्धसृष्टिः पराधीनविशेषवाप्तिरूपासृष्टिः मिश्रसृष्टिः केवलसृष्टिरिति । तत्रशुद्धसृष्टिर्नामदेहेंद्रियांतःकरणादेरीषदपिविकाराभावेपिकेवलंलीलयैवजगदुपकारायमूलरूपाद्बहिरागमनं उत्तरापराधीनप्रकृतिस्वामित्वादिविशेषावाप्तिः । तृतीयानित्यानामेवबाह्यदेहयोगेन । चतुर्थीप्रागविद्यमानानांदेहादीनांसृष्टिः । तत्रसप्रयोजनांप्रथमांसृष्टिंवक्ति ॥ इत्थमिति । परामामतिर्यस्येति । तृतीयंवासुदेवाख्यं जगदावरकांमितंदेशतइतिवचनात् । नारायणःपुरुषोवासुदेवइतिविवक्षाभेदेनतृतीयत्वंतत्कृत्यमाह । निजानांआत्मीयानां यद्वा निजमात्मीयंनित्यंवामुक्त्याख्यंस्थानंतस्यप्रदाता । निजमात्मीयनित्ययोरित्यभिधानात् । द्वितीयसृष्टिमाह । तस्येति । यद्रूपमपितस्यनारायणस्यैवाज्ञयानियता । अनेनल-

**इत्थंविचिंत्यपरमःसतुवासुदेवनामाबभूवनिजमुक्तिपदप्रदाता ॥ तस्याज्ञयैव नियताथ रमापि रूपं बभ्रे द्वितीयमपि यत्प्रवदंति मायाम् ॥ ६ ॥ संकर्षणः स च बभूव पुनः सुनित्यः संहारकारणवपुस्तदनुज्ञयैव ॥ देवी जयेत्यनुबभूव स सृष्टिहेतोः प्रद्युम्नतामुपगतः कृतितां च देवी ॥ ७ ॥**

क्ष्म्याः पराधीनताकेवलंनारायणेनेतिसुचयति ॥ ६ ॥ पुनःशुद्धांसृष्टिमाह । संकर्षणइति । सनारायणःपुनःवासुदेवावतारानंतरं । संहारेकारणभूतंवपुर्यस्येति तेनेश्वरलक्षणस्यदेहेकथनात् । देहदेहिनोरभेदइतिज्ञापितंभवति । बभूवेत्युक्त्याचतुर्थ्राप्राप्तांसादित्वानित्यत्वशंकां परिहरति । सुनित्यइति । सुशब्देनानित्यत्वंदेहहानिदुःखप्राप्तिरपूर्णता नाशश्चतुर्विधोज्ञेयः तदभावोहरेःसदेतिचतुर्विधनाशाभावंसूचयति । तेनसुनित्यपदेनसनातनतोच्यते । ध्वंसाप्रतियोगितामात्रंनोच्यते । तेनेदंचतुर्ष्वपिअन्वेतव्यं । देवीलक्ष्मीःतदनुज्ञयैवतस्याज्ञया । तदुक्तंसुधायां । 'आदिकालेहिभगवान्नारायणोनिजमुक्तिपदप्रदानायर्थवासुदेवादिचतुर्व्यूहोबभूव । ततःकालांतरेप्रयोजनार्थंदशद्वादशादिव्यूहोजात'इति कालशब्दवाच्यःसर्वगतः तदुक्तं । तृतीयतात्पर्ये । 'पुरुषोहादिस्थःपरमःकालःसर्वगतोहरिः । अथवारुद्रदेहस्थोहरिःकालइतीरितइति । यत्तु 'अनासायस्त्वसन्नामा पूर्वंनारायणाभिधः । सआसीद्यश्चसन्नामावासुदेवोभवत्प्रभुः । सवासुदेवःस्वात्मानंचक्रेसंकर्षणादिकं' । तदादिवासुदेवादिव्यूहव्यतिरिक्तवासुदेवव्यूहपरंज्ञेयं । देवीलक्ष्मीःतदनुज्ञयैवतस्याज्ञामात्रेण । पुनःशुद्धांसृष्टिमाह । सइति । सृष्टीतिप्रयोजनकथनं चशब्दात्तदनुज्ञयैवानुवभूवे

त्यावर्तनीयं ॥७॥ अमूभिःस्वमूर्तिभिर्वासुदेवादिभिःमानुषेणमानेनशरदांवर्षाणांसहस्रंस्थित्वा । प्रद्युम्नरूपकश्चरमात्मनेऽनिरुद्धायेमान्स्वोदरस्थदीर्घसंसारिणोजीवान् । तमोयोग्यांश्चादात् । अचिंत्यशक्तिरित्यनेनएकत्वेपितद्रूपविशेषेतत्तत्स्थापनशक्तिंसूचयति । तेनवटपत्रशायिस्थजीवानां कथंवासुदेवादिषुस्थितिरितिचोद्यंनिरस्तंभवति । तदुक्तंनारदीये । 'जातेब्रह्मलयेब्रह्मन्भगवान्हरिरीश्वरः । चतुर्धाव्यभजज्जीवान् तथातेषांस्थलानिच । पूर्णसाधनसंपन्नान् विलिंगान् दृष्टविंबकान् । कर्मत्रयविनिर्मुक्तान् वासुदेवोदरेकरोत् । प्रारब्धशेषिणोयेचकिंचिदूनांश्चसाधनैः । सलिंगान्दृष्टबिंबांश्च चक्रेसंकर्षणोदरे । भविष्यद्ब्रह्मणासार्धंयेषांमुक्तिपदंभवेत् । तान्सर्वाननिरुद्धस्य कुक्षिगानकरोद्विभुः । दीर्घसंसारिणःशिष्टान्प्रद्युम्नस्योदरेकरोत् । वटपत्रपुटेयस्तु संशेतेहरिरीश्वरः । केवलंतदुरस्थाहिपूर्वंमुक्तियुताजनाः । चतुर्व्यूहात्मकोविष्णुर्वटपत्रशयंहरिं । विशत्यमंदसांद्रौघचिदानंदघनोहरिः । सृष्टिकालउपावृत्तेपुनःसर्वेश्वरोहरिः । चतुर्व्यूहात्मकोभूत्वातदादौसर्वकारणः । चतुर्धाव्यभजज्जीवान् यथापूर्वंव्यवस्थितान् । सृष्ट्वाब्रह्मांडमतुलंयद्विराड्रूपमुत्तमं । ततःसाधनसंपन्नान् विलिंगानपरोक्षिणः । वासुदेवःस्वोदरगान् बहिर्निःसृत्यतान्विभुः । श्वेतद्वीपंशिशुमारंदृष्ट्वास्वेच्छाविहारिणः । संतोगच्छंत्वितिप्राज्ञान् यदाचाज्ञापयद्धरिः । तदामुक्ताइतिप्रोक्ताः पुनराज्ञाविहीनत 'इति । पंचरात्रेप्रलयकालेपेश्वतद्वीपशिशुमारदर्शनस्योक्तत्वात् ।

**स्थित्यै पुनःस भगवाननिरुद्धनामा देवी च शांतिरभवच्छरदां सहस्रम् ॥ स्थित्वा स्वमूर्तिभिरमूभिरचिंत्यशक्तिः प्रद्युम्नरूपक इमांश्चरमात्मनेदात् ॥ ८ ॥ निर्देहकान्स भगवाननिरुद्धनामा जीवान् स्वकर्मसहितानुदरे निवेश्य ॥ चक्रेथ देहसहितान् क्रमशः स्वयंभूप्राणात्मशेषगरुडेशमुखान्समग्रान् ॥९॥**

द्विवारंश्वेतद्वीपशिशुमारदर्शनं ज्ञेयं । तथाहि । 'विरजायांकृतस्नाना ब्रह्मणासहसर्वशः । त्यक्तलिंगास्ततःसर्वेस्वरूपेणव्यवस्थिताः । ततोदृष्ट्वाशिशुमारं श्वेतद्वीपंनिरीक्ष्यच । विशंतिवासुदेवाख्यंहरेरूपंचतुर्थकं । साकंचवासुदेवेन वैकुंठेहरिमेधसः । विशंत्युदरमेवास्य यावत्सर्गःपुनर्भवेत् । त्यक्तलिंगाश्चयेमुक्ता वासुदेवशरीरगाः । अमुक्ताइतिचोच्यंते संचारादेरभावतः । विनिर्गत्यपुनःसृष्टौवासुदेवशरीरतः । तदामुक्ता इतिप्रोक्ता संचारादेश्चसंभवादि 'ति ॥ ८ ॥ इदानींमिश्रसृष्टिंकेवलसृष्टिमेकीकृत्याह । निर्देहकान्लिंगदेहरहितान् । जीवान्जन्यजीवान् । उदरेस्वोदरे निवेश्यसंस्थाप्य । क्रमशःकालक्रमेणाधिक्यक्रमेणवा । देहसहितान्सूक्ष्मदेहसहितान्चक्रे । अनेनस्थितिसर्जनोभयकर्तृत्वंविवृतंभवति । आधिक्यक्रममेवाह । स्वयंभ्विति । प्राणात्मावायुः । जननेहेतुमाह । स्वेति । अनेनैवजन्यजीवानांग्रहणमितिज्ञापितं । तेनसंकर्षणोदरस्थानामपि । सूक्ष्मदेहकारणंज्ञातव्यं । तेषांसर्वेषांपालनार्थंप्रद्युम्नायदानंचज्ञातव्यं । व्यूह्य तृतीयात्पुनरेवेतितृतीयाध्यायेकथनात् । अत्रब्रह्मादीनांजीवानांदेहयोगेनजननकथनान्मिश्रसृष्टिः देहजननकथनात् केवलसृष्टिरुक्ताभवति । कालक्रमस्तत्वविवेके । 'कालतोबलतश्चैवज्ञानानंदादिकैरपि । गुणैःसर्वैर्विष्णुरेवश्रेष्ठस्तदवमारमा । अनंतांशेनकालत्तु

समातस्याश्वतुर्मुखः । अवरोबहुलांशेन तत्समोवायुरुच्यते । नियमाद्वायुरेवैकोब्रह्मत्वंयातिनापरः । तस्मात्समानतामुक्तौ वायुर्वोकिंचिदूनता । दशवर्षंतुतत्पश्चाज्जननंतात्स्थियोरपि । आनंदादिस्तद्दशांशःकालःसंवत्सरात्परः । वायूत्पत्यनंतरं संवत्सरात्मकःकालोज्ञेयः । यावत्पश्चाज्जनिस्तावत्पूर्वंदेहक्षयोभवेत् । ब्रह्मवायोस्तुयेदेव्यौतद्दशांशःसुखादिकः । शेषस्यगरुडस्यापि कालोदिव्यसहस्रकः । शेषरुद्रौब्रह्मवायू यथातद्वत्परस्परं । तद्देव्यस्तद्दशांशास्युः ततस्त्विंद्रादयोमताः । एवंमुक्तौचपूर्वंच नान्यथाकाचिदिष्यत ' इति । नन्वत्र प्रद्युम्नस्यसृष्टिकर्तृत्वमनिरुद्धस्यस्थितिकर्तृत्वमुक्तमत्रैव निर्दहकानित्यनेन तथा तृतीयेध्याये व्यूहात्तृतीयादित्यनेन तथाषड्विंशाध्याये । ' नमाद्दशोन्धोस्तिकुतःपरोयत्सोहंचतुर्धाजगतोहिताय । स्थातोस्मिमोक्षप्रलयात्स्थितोनांसृष्टेश्चकर्ताक्रमशःस्वमूर्तिभिः । सवासुदेवादिचतुःस्वरूपस्थितोनिरुद्धोहृदिचाखिलस्य ' इत्यनेनप्रद्युम्नस्यास्थितिकर्तृत्वमानिरुद्धस्यसृष्टिकर्तृत्वमुच्यते । अतोविरोधइतिचेत्सत्यं । सूक्ष्मसृष्टिकारणस्त्रीपुंमजननात् । बीजरूपजीवदानात् । ' स्वदेहादिच्छयाविश्वं मुक्तपूर्वंजनार्दनः । ससर्जमातापितृवत् ऊर्णनाभिवदेवचे ' तिवचनात्तस्यापिस्रष्टृत्वात् । सृष्टिकर्तृत्वं बहिःस्थित्वास्थूलसृष्टेःपालनात् स्थितिकर्तृत्वंचप्रद्युम्नस्योपपद्यते । तथानिरुद्धस्यसूक्ष्मसृष्टिपालनात्पश्चादपिजीवइतिभगवतोनिरुद्धस्या'ख्ये'तिश्रुतेः 'सजीवनामाभगवान् प्राणधारणहेतुत' इतिस्मृतेश्च । अनेनजीवेनात्मनेतिश्रुतेश्च । स्थितिकर्तृत्वं

**पंचात्मकः स भगवान् द्विषडात्मकोभूत्पंचद्वयी शतसहस्रपरोमितश्च ॥**
**एकः समोप्यखिलदोषसमुज्झितोपि सर्वत्र पूर्णगुणकोपि बहूपमोभूत् ॥१०॥**

स्थूलसृष्टिकरणाच्चसृष्टिकर्तृत्वंसिद्धं । अतउभयोरुभयस्यापिसत्वान्नविरोधः । प्रद्युम्नस्यसर्जनंप्रथमंप्राप्तमिति । सृष्टिहेतुत्वंप्रथमतउक्तं । एवमनिरुद्धस्य सूक्ष्मसृष्टिपालनस्य प्रथमप्राप्तत्वात् । स्थित्यैइतिप्रथमतः पालनमुक्तमितिभावः । यद्वाल्पमितितत्रतत्रबहुस्थानेषुचनकथितं यथाल्पत्वेन वासुदेवसंकर्षणयोश्चसृष्टिकर्तृत्वंनकथितं ॥ ९ ॥ पुनः शुद्धांसृष्टिमाह । पंचेति । पंचात्मकःवासुदेवादिमूर्तिभिःसहपंचस्वरूपःनारायणः । केशवादिरूपैःद्विषडात्मकः द्वादशात्माभूत् । यद्वा उक्तानुक्तसृष्टिमेकीकृत्याह । पंचेति । सभगवान्नारायणःपंचात्मकःपुरुषवासुदेवादिरूपेण पंचात्मकःअभवत् । ननु ' विष्णोस्तुपुरुषाख्यानि त्रीणिरूपाण्यदोविदुः । प्रथमंमहतःस्रष्टृ द्वितीयंत्वंडसंस्थितं । तृतीयं देहिनांदेहे तानिज्ञात्वाविमुच्यत ' इत्युक्तत्वात् । सप्तात्मकइतिभाव्यं कथंपंचेतिचेत्सत्यं । तेषांरूपाणांएकत्वात् । पंचेत्युक्तं । तदुक्तं । ' आद्योवतारोविष्णोस्तु पुरुषोनाम कीर्तितः । असृजत्समहत्तत्वंसएवांडसमाविशत् । सब्रह्मणोहृदिस्थत्वात् हृदयंचेतिकीर्त्यत ' इति । अत्रब्रह्मणइत्युपलक्षणंसर्वेषामितिज्ञेयं । उभयत्रस्वरूपवाचकात्मपदप्रयोगात् । सर्वावताराणांअभेदंसूचयति । पंचद्वयीमत्स्यादिदशरूपवान् । नारायणादिरूपेणशतरूपवान् । परशब्देनअष्टादशस्थानगतासंख्याचोच्यते । तदुक्तंवायुपुराणे । ' स्थानंदशगुणंविद्यादेकंदशशतंततः । सहस्रमयुतंतस्मान्नियुतंप्रयुतंततः । अर्बुदंन्यर्बुदंचैववृंदंचैवततःपरं । खर्वंचैवनिखर्वंच शंखपद्मंतथैवच । समुद्रोमध्यमंतश्च परा

धंपरमेवच। एवमष्टादशैतानि पैदानगणनाविधौ। कल्पसंख्याप्रवर्तस्तु परार्धोब्रह्मणःस्मृतः। तावच्छेषोस्यकालोन्यःतदंतेप्रति सृज्यते। परार्धंद्विगुणंचापिपरमाहुर्मनीषिण' इति। परादिरूपेणपरसंख्याकरूपवान्। शतंचसहस्रंचपरंचशतसहस्रपरागिरूपाणियस्यसइतिसमासः। अजितादिरूपेणामितरूपवान्। तथोक्तंब्रह्मपुराणे। 'सएवद शधाप्रोक्तोविष्णुर्मत्स्यादिरूपकः। शतंनारायणाद्यात्मा विश्वाद्यात्मासहस्रकः। परादिरूपोबहुधासोनंतात्माजितादिक' इति। ननु भगवतःबहुसंख्यावत्त्वेनबहुतान्यूनाधि कगुणवत्त्वादिबहुदोषाःस्युरेकत्वेचपंचद्व्यादिसंख्याकथनंकथमित्यतआह। एकमिति। एकत्वसंख्यावान्अभिन्नइत्यर्थः। सर्वत्रसर्वरूपेषुदेशकालाभ्यांसमोपि। अखि लदोषसमुज्झितोपि। पूर्णगुणकोपि। बहूपमःबहुनास्वाभाविकबहुनाजीवेनोपमायस्यसतथोक्तः। किंतुशक्तिप्रसाधितमेवबहुत्वंभगवतः। नतुजीवानामिवस्वाभाविकंबहु त्वं। अतोनभेदशंकेतिभावः। सृष्टिकालएवावताराणांपृथक्भावः नतुतत्तत्काले। तदुक्तंगीताभाष्ये। मोक्षधर्मे। 'रूपाण्यनेकान्यसृजत्प्रादुर्भावभवायसः। वाराहंनारसिंहं चवामनंमानुषंतथे' ति। तत्रैवप्रथमसर्गकालएवावताररूपाविभक्त्युक्तेरितिसंहारकालेचरूपाणांसंश्लेषएवनत्वैक्यंतदुक्तं 'हरेरपिस्वरूपाणामेकीभावोयदोच्यते। संश्लेषएवासि द्धत्वात्स्वरूपैक्यस्यनोभव' इति। रूपाणांद्वितीयतृतीयत्वादिकंब्रह्मबुद्धौव्यक्तिक्रममपेक्ष्य तदुक्तंतंत्रसारे। 'वर्णानांदेवतानांचनित्यत्वात्तत्क्रमस्वतः। व्यक्तिक्रमंब्रह्मबुद्धा

**निर्दोषपूर्णगुणविग्रह आत्मतंत्रो निश्चेतनात्मकशरीरगुणैश्च हीनः ॥**
**आनंदमात्रकरपादमुखोदरादिः सर्वत्र च स्वगतभेदविवर्जितात्मा ॥११॥**

वपेक्ष्यक्रमउच्यत' इति। यद्वा विश्लेषमनुसृत्य अतएवोक्तंबृहद्भाष्ये। परावरत्वंतेषांतुव्यक्तिमात्रविशेषतः नदेशकालसामर्थ्यैःपरावरकथनंच। लौकिकव्यवहारोयोमृभारक्षण णादिकः। तदद्दृष्टिंविनानान्योलयःकृष्णादिनाक्वचिदि' तिप्रथमतात्पर्ये। वाराहेच। तत्स्वीकारादिशब्दस्तु हस्तस्वीकारवत्स्मृतः। वैलक्षण्यं नवातत्रज्ञानमात्रार्थमीरितं। के वलैश्वर्यसंयोगादीश्वरःप्रकृतेःपरः। जातोगतस्त्विदंरूपं तदित्यादिचवर्तते' इति। ननु पद्मनाभात् विश्लेषसंश्लेषौश्रूयते। तथाहिप्रथमस्कंधे। 'एतन्नानावताराणांनिधानं बीजमव्ययं। यस्यांशांशेनसृज्यंते देवतिर्यङ्नरादय' इति। अत्रैकीभवंतिअंतेऽवताराःयस्मिंश्चेतिचेत्सत्यं। अंडाद्बहिर्मूलरूपात्विश्लेषस्तस्मिन्नेवसंश्लेषः। अंडांतस्थप द्मनाभात्। विश्लेषस्तस्मिन्संश्लेषइतिविवेकः ॥ १० ॥ इदानींसर्वसदागमार्थं प्रमाणैरुपपादयितुं निर्दोषपूर्णेत्यारभ्यार्थोयमित्यंतेनग्रंथेनवक्ति। अतएवनात्रपरस्परंसं गतिः ॥ निर्दोषेति। निर्दोषाःपूर्णाःगुणाःएवविग्रहोयस्येति। आत्मतंत्रःस्वतंत्रः निश्चेतनात्मकंजडंशरीरंजडाःगुणाश्चतैर्हीनः। गुणविग्रहत्वमेवाविवृणोति। आनंदइति। आनंदइत्युपलक्षणंज्ञानादेरपिग्राह्यं। मात्रशब्दोऽयोगव्यवच्छेदार्थः। अनानंदादिव्यावर्तकोवा। ईश्वरगुणानामभेदसूचकोवा। सर्वत्रसर्वावतारेषुस्वगतभेदविवर्जितःआ त्मादेहोयस्यसतथेति ॥ ११ ॥ स्वगतभेदाभावेपिकालाद्युपाधिनास्यादित्यतआह। कालादीति। देशाद्गुणतःसत्त्वादिगुणेभ्यः। आदिःपूर्वावधिःअंतःउत्तरावधिः। तत्रहेतु

गर्भविशेषणद्वयं । सदातनस्यसर्वदैकप्रकारेणवर्तमानस्येति । तदुपपादकंपरस्येति । एतादृशः एतत्समानः क्वचकस्मिंश्चिदतीतेकालेनबभूव । भाव्यउत्पत्स्यमानोनचैव । इदानींतनोनास्तीत्यपियोज्यं । यदासमोनास्तितदोत्तमो नास्तीतिकिमुवक्तव्यं । तत्रहेतुःपरात्लक्ष्म्याःपरतमस्यउत्कृष्टस्यविष्णोःदेशकालगुणैःव्याप्तस्येति नन्वस्यकैमुत्यन्याय स्यभंगःलक्ष्म्यामितिचेन्न । तद्गुणवत्वेसतितदाधिकगुणोह्यधिकउच्यते । तथासति । यएवयदाधिकस्तएवतत्समइति तदेतत्सूचितमाचार्येण ' बलेनविद्ययावापिनसमस्तत्पतिंविने ' तितत्वनिर्णयवाक्यमुद्धरता ॥ १२॥ समोनास्तीत्युपपादयितुमीश्वरस्वरूपंतदन्यस्वरूपंचाह । सर्वज्ञइति । पूर्वार्धेनेश्वरस्वरूपकथनं । उत्तरार्धेनअन्याधीनत्वरूपमन्यस्वरूपकथनं । सविष्णुरीश्वरतमईश्वराणामधिपतिःसर्वविषयेसर्वपूर्णशक्तिर्यस्येति । पूर्णानिअव्ययानिआत्मनःस्वस्यबलचित्सुखवीर्याणितैःश्रेष्ठः । आत्मनःस्वरूपभूतानीतिवा । यस्यविष्णोःकस्यचकस्याप्यर्थैविषयेनतुसमर्थनैव ॥१३॥ तदाज्ञारहितस्याशक्तत्वात्तदधीनमिदमित्युक्त्वा प्रकारांतरेणापितदधीनत्वमाह ।

कालाच्च देशगुणतोस्य न चादिरंतो वृद्धिक्षयौ न तु परस्य सदातनस्य ॥ नैतादृशः क्व च बभूव नचैव भाव्यो नास्त्युत्तरः किमु परात्परमस्य विष्णोः ॥ १२ ॥ सर्वज्ञ ईश्वरतमः स च सर्वशक्तिः पूर्णाव्ययात्मबलचित्सुखवीर्यसारः ॥ यस्याज्ञया रहितमिंदिरया समेतं ब्रह्मेशपूर्वकमिदं न तु कस्य चेशं ॥ १३ ॥ आभासकोस्य पवनः पवनस्य रुद्रः शेषात्मको गरुड एव च शक्रकामौ ॥ वींद्रेशयोस्तदपरे त्वनयोश्च तेषामृष्यादयः क्रमश ऊनगुणाः शतांशात् ॥१४॥ आभासका त्वथ रमास्य मरुत्स्वरूपाच्छ्रेष्ठाप्यजातदनुगीः शिवतो वरिष्ठा ॥ तस्या उमा विपतिनी च गिरस्तयोस्तु शच्यादिकाः क्रमश एव यथा पुमांसः ॥ १५ ॥

आभासकइति । आईषत्भासतेप्रकाशतेइत्याभासः प्रतिबिंबःसचतदधीनःतत्सदृशश्चदृष्टः अतःअस्यहरेःपवनःमुख्यवायुःआभासःतदधीनःकिंचित्तत्सदृशः । शेषात्मकःभाविशेषोरुद्रःगरुडएवनत्वन्यात्मकइत्यर्थः । चःसमुच्चये । अथवाशेषात्मकएवशेषोपिगरुडश्चेत्यन्वयः । अनयोःशक्रकामयोःतदपरेतेभ्यः । अपरेआहंकारिकप्राणानिरुद्धादिचंद्रसूर्यादयःतेषांसूर्यादीनांआभासत्वेनिमित्तमाह । क्रमशइति । शतांशादूनशब्दस्यनित्यसापेक्षत्वात्समासः । ऊनाःगुणाःयेषामिति ॥१४॥ यथापुरुषाणामाभासत्वेन तद्वशत्वंतथास्त्रीणामपीत्याह । आभासकेति । तुशब्दआभासत्वेपूर्वोक्तादपिविशेषोस्तीतिसूचयति । अथमंगलरूपाअथानंतरत्वात्स्त्रीत्वाद्वा रमाहरेराभासका । श्रीपवनयोःहरेःआभासत्वेसाम्यंस्याद्ब्रह्मणश्चामुक्तत्वात् । कस्याभासःकस्मादानंतर्यंचेत्यतआह । मरुदिति । मरुत्स्वरूपादजादपिश्रेष्ठातेनब्रह्मणोपितदाभासत्वंलक्ष्म्यानंतर्यंचोक्तंभवति । तस्यागिरःतयोःउमासौपर्ण्योःयथापुमांसःआभासाःतथास्त्रियःक्रमशएव गुणक्रमादेवआभासाःपुरुषानंतरंस्त्रीतिनियमोनास्ति । उमाप्र

तिर्बिंबायाः शच्याःप्राणावरत्वदर्शनादेवमन्यासु ॥ १५ ॥ पुरुषेभ्यःस्त्रीणामपिशतगुणन्यूनत्वंकिमित्यतआह । ताभ्यइति । तेपुरुषाःताभ्यःस्त्रीभ्यः । शतगुणैर्दशगुणैः पंचोत्तरैःपंचदशगुणैरधिकाःकथमेतज्ज्ञेयमित्यतआह । यथेति । यथायेनक्रमशःक्रमेणश्रुतिस्थाःश्रुतौउक्तास्तेनक्रमेणज्ञेयाः। ननु प्रजापतिशब्दवाच्यरुद्राच्छतगुणाधिक्यमुक्तंब्रह्मणस्तैत्तरैयश्रुतौ।छांदोग्येतुस्मरशब्दवाच्यरुद्राच्छताधिकाशाशब्दवाच्यायाः सरस्वत्यास्तस्याःप्राणस्यशतगुणाधिक्यमुक्तमतःश्रुतीनांविरोधात्कथंज्ञेयमित्यतआह । शब्दइति । शतमितिशब्दःबहुत्ववचनः बहुत्वंदशसहस्रादि तद्वाची अतःश्रुत्यंतरेषुबहुधानेकधोक्तेः विरुद्धताविरोधोनाहि ॥१६॥ ननु संसारावस्थायामुपाधिवैचित्र्यात्तारतम्यमस्तूपाधिनाशेमुक्तौतन्नास्तीतिप्राप्तमतआह । तेषामिति । इदंतारतम्यंतेषांजीवानांस्वरूपमेवयतःअथतस्मान्मुक्तावप्येवमेव यथासंसारेउच्चनीचाः तथासततंनिरंतरंउच्चनीचरूपाःसंति । स्वरूपस्यैवोपाधित्वात्तस्यचानाशात् । तस्योच्चनीचत्वाच्चमुक्तावपितारतम्योपेताइतिभावः । तदुक्तंस्कांदे । 'जीवोपाधिर्द्विधाप्रोक्ता स्वरूपंबाह्यमेवच।बाह्योपाधिर्लयंयाति मुक्तावन्यस्यतुस्थितिरि 'ति । शतशब्दस्य बहुत्ववाचित्वेकिंप्रमाणमित्यतआह । शब्दइति । श्रुत्यर्थानुवादपूर्वकंप्रतीकग्रहणंशतमिति । तेनदशशतंसहस्रमित्यपरिमितनामानीतिशब्दःश्रुतिस्मृतिप्रसिद्धःयस्मात्तस्माच्छतशब्दोहीनवचनोल्पवाचीन । यद्वा शतंदशसहस्रंच पद

**ताभ्यश्च ते शतगुणैर्दशतो वरिष्ठाः पंचोत्तरैरपि यथा क्रमशः श्रुतिस्थाः ॥ शब्दो बहुत्ववचनः शतमित्यतश्च श्रुत्यंतरेषु बहुधोक्तिविरुद्धता न ॥ १६ ॥ तेषां स्वरूपमिदमेव यतोथ मुक्तावप्येवमेव सततोच्चविनीचरूपाः ॥ शब्दः शतं दशसहस्रमिति स्म यस्मात्तस्मान्न हीनवचनोथ ततोग्र्यरूपाः ॥ १७ ॥**

मानंत्यवाचकं । यन्मयोक्तंतुवचनं नतदानंत्यवाचकमिति । शब्दआगमस्येति उपसंहरति अथेति । अथशतादिशब्दानामधिकार्थवाचित्वात्तउक्तादशशतादेरग्र्यरूपाः । तच्चद्वेधा । 'संख्यान्यथात्वंयत्रस्यात्तत्रावेशविशेषतः । अवराणांगुणस्यापि परमांगत्वतस्तथे' तिछांदोग्यभाष्योक्तप्रकारेणाथवातैतरेयभाष्योक्तप्रकारेण । तथाहि । 'सर्वैर्गुणैःशतगुणाःक्रमेणोक्तेनतेखिलाः । अथवासहस्रगुणिताअनंतगुणितास्तथा । परिमाणेशतगुणेप्यानंदस्फुटतावशात् । तथादीपाच्छतगुणाप्यग्निज्वालानदीपवत् । स्फुटीभवेद्यथैवाग्निर्बहुलोपिनसूर्यवत् । यथैवसूर्याद्द्विगुणः चंद्रोनैवंस्फुटीभवेत् । उत्तरेषामुत्तरेषांगुणाएवमतिस्फुटाः । प्रतिबिंबायतःसर्वेब्रह्मांतानांनरादयः । अतोऽस्फुटस्वरूपास्ते स्फुटरूपास्तथोत्तर ' इति । अनुव्याख्यानेपिज्ञानस्यअतिस्फुटत्वमुक्तं ।'बहुलाचातिविशदास्फुटाचैवश्रियोमतिः । महाशुद्धाचितित्वेन ततोप्यतिमहाचितिः । अशेषोरुविशेषाणामतिस्पष्टतयादृशिः । नित्यमेकप्रकाराच नारायणमतिःपरा । सूर्यप्रभावदखिलं भासयंति निरंतरा । निर्लेपावीतदोषाच नित्यमेवाविकारिणी । विशेषांस्तद्गतांस्त्यक्त्वा प्रायस्तल्लक्षणाश्रियः । तथैवस्पष्टताभावात् तत्तंत्रत्वाच्चकेवलं । नतादृशीब्रह्मणस्तुप्रायएवश्रियोयथा । मुक्ता

नांतुतदन्येषां समुद्रतरलोपमा । अग्निज्वालावदेवस्यात्सृतिगानांदशोभव इति ॥ १७ ॥ ननु यदामुक्तास्तदानसंसारिणः यदासंसारिणस्तदानमुक्ताः संसारिषु मुक्तेषुचसदातारतम्यकथनंसृष्ट्यादिकथनंचकथमित्यत आह । एवमिति । एवंकेषांचिन्मुक्तौसत्यामपिअन्येनरोत्तमपराः नरोत्तमोवायुः परःमुख्यएषांतेनरोत्तमामनुष्योत्तमाएव परे अवरेयेषुतेनरोत्तमपराः । इतिपदमावृत्ययोज्यं । पराश्चेतथैवाराद्वयार्थाभिधायिनइतितात्पर्यं । विमुक्तियोग्याःसंतिअन्येचमनुष्योत्तमेभ्यः अन्येपि मनुष्यमध्यमाः संसृतिपराःसंसृतावेवपराः आसक्ताःसंति । तमोगाःअंधंतमोगंतुंयोग्याअसुराःअन्येप्राप्ततमोभ्यः अन्येचसंतिअतउक्तमुपपद्यतइतिभावः । ननूक्तनियमस्यान्यथात्वंयदाकदाचिदपिस्यात्किमित्यत आह । एवंसदेति । एवंनियमःसदैवास्ति । क्वचिदन्यथानभावता यदिनरोत्तमांताः मुक्तियोग्याःअसुरास्तमोगाःतर्हि तेइदानींनोपलभेरन्मुक्त्यादिप्राप्तेरित्यत आह । यावदिति । यावत्पूर्तिःसाधनस्येतिशेषः । नभविता उततावत्समस्ताःमोक्षतमोयोग्याःसमस्ताः नित्यसंसारिणश्च संसृति

**एवं नरोत्तमपरास्तु विमुक्तियोग्या अन्ये च संसृतिपरा असुरास्तमोगाः ॥ एवं सदैव नियमः क्वचिदन्यथान याव न्नपूर्तिरुत संसृतिगाः समस्ताः ॥ १८ ॥ पूर्तिश्च नैव नियमाद्भविता हि यस्मात्तस्मात्समाप्तिमपि यांति न जीवसंघाः ॥ आनंत्यमेव गणशोऽस्ति यतो हि तेषामित्थं ततः सकलकालगता प्रवृत्तिः ॥ १९ ॥ एतैः सुरादि भिरतिप्रतिभादि युक्तयुक्तैः सहैव सततं प्रविविंचितयाद्भिः ॥ पूर्तेरचिंत्यमहिमः परमः परात्मा नारायणोऽस्य गुणविस्मृतिरन्यगा क्व ॥ २० ॥**

गाःभवंति ॥१८॥ नन्वनंतेकाले एकैकस्यमुक्तिमःप्राप्तावपिसमस्तानांपरिसमाप्तेः पुनर्मुक्तियोग्यतमोयोग्यानामभावः प्राप्तइत्यत आह । पूर्तिश्चेति । नियमाद्धरिसंकल्पात् पूर्तिःसाधनसमाप्तिर्यस्मान्नभवितातस्माज्जीवसंघाःसमाप्तिमपिनयांति । पूर्त्यभावेनिमित्तमाह । आनंत्यमिति । तेषांब्रह्मादिपदयोग्यानांगणशश्चानंत्यमस्त्येव । यतस्ततः इत्थंप्रवाहाविच्छेदेनसकलकालगताप्रवृत्तिर्युक्ता । यथैवकालनियमःसुरादिनियमस्तथा । तस्माज्ञानीदृशंक्वापिविश्वमेतद्भविष्यतीतिप्रमाणांहिशब्दाभ्यांसूचयति ॥ १९ ॥ विष्णोः सर्वोत्तमत्वसर्वज्ञत्वसर्वैश्वर्यत्वादिलक्षणवैशिष्ट्यंतत्सदृशस्याधिकस्यचाभावंरमादीनां तदधीनत्वंचनैतादृशः क्वचवभूवेत्यादिनोक्तमुपसंहारन्यायेनोपपादयति । एतैःसुरादिभिरितिश्लोकद्वयेन।परमःश्रेष्ठःउत्तमज्ञानवान्वा परमात्मास्वामीउत्तमस्वामीतिवा। नारायणःअतिप्रतिभादियुक्तैर्युक्तैःउद्युक्तैःसहैवमिलितैःसततंप्रविविंचितयाद्भिः। एतैःप्रसिद्धैःसुरादिभिःअचिंत्यमहिमःयस्मात्तस्मादस्यनारायणस्यगुणविस्तृतिरन्यगाक्व । अचिंत्यमहिमत्वेहेतुःपूर्तेरिति। देशतःकालतःगुणतश्च पूर्णत्वात ॥ २० ॥

अस्यहरेः साम्येकनापिमुक्तेनपरमेणोत्तमेनब्रह्मणापिनचाप्यंनकेवलमविमुक्तेनतेनकिंतुमुक्तेनापितेननप्राप्यामित्यर्थः। यतोतअस्याभिदाऽभेदःक्वचित्कालेचचेतनगणैःकुतः प्राप्येतनकुतोपीत्यर्थः । कुतोनप्राप्येतेत्यतःउभयेषांस्वरूपंनिरूपयति विशेषणैः । सततंनित्यमस्वतंत्रैःनित्यस्वतंत्रवपुषःपरमादव्यक्तात्परस्येतितेनविरुद्धधर्मयोःनाभेदइतिभावः ॥ २१ ॥ एवंसदागमार्थमभिधायास्यसदागमप्रतिपाद्यत्वंकुतइत्यतः तद्गतानिवाक्यानिउदाहृत्यसाधयितुंप्रतिजानीते । अर्थोयमिति । अयमर्थःनिर्दोषपूर्णगुणविग्रहत्वादिरूपः । भारतपंचरात्राभ्यांसहितैःनिखिलैःवेदवाक्यैःनिखिलैःरामायणैःरामायणगतवाक्यैः । यद्वा प्रकारांतरेणबहूनांरामायणानांसत्त्वाद्बहुवचनं । अन्यैश्चशास्त्रवचनैःपुराणवचनैःतत्त्वसूत्रैःतत्वनिर्णायकब्रह्मसूत्रैःसह । सहैवैकार्थप्रतिपादकत्वेनमिलितैः । ननुनिर्णेतुस्तेषांवातत्रतात्पर्याभावेउक्तार्थोनासिध्येदित्यतउक्तं सहृदयंसाभिप्रायमिति ॥ २२ ॥ अधुनातद्वाक्यप्रतीकंअर्थतःगृह्णाति । नारायणस्येति । नारायणस्यनसमइति 'नास्तिनारायणसमं नभूतंनभविष्यति' । इतिवाक्यंनैतादृशःक्वचबभूवेत्यत्रमानं । पुरुषोत्तमोहं जीवाक्षरेभ्यधिगतोस्मीति । 'यस्मात्क्षरमतीतोहमक्षरादपिचोत्तमः । अतोस्मिलोकेवेदेचप्रथितःपुरुषोत्तम' इतिवाक्यंसंगृण्हाति ।

**साम्यं न चास्य परमेण च केन चाप्यं मुक्तेन च क्वचिदतस्त्वभिदा कुतोस्य ॥ प्राप्येत चेतनगणैः सततास्वतंत्रैर्नित्यस्वतंत्रवपुषः परमात्परस्य ॥ २१ ॥ अर्थोयमेव निखिलैरपि वेदवाक्यै रामायणैः सहितभारतपंचरात्रैः ॥ अन्यैश्च शास्त्रवचनैः सह तत्वसूत्रैर्निर्णीयते सहृदयं हरिणा सदैव ॥ २२ ॥ नारायणस्य न समः पुरुषोत्तमोहं जीवाक्षरे ह्यधिगतोस्मि ततोन्यदार्तं ॥ मुक्तोपसृप्य इह नास्ति कुतश्च कश्चि न्नानेव धर्मपृथगात्मदृगेत्यधोहि ॥ २३ ॥**

जीवंब्रह्मादिजीवजातमक्षरांलक्ष्मीमधिकत्वेनगतअतीतोहंयतःअतःपुरुषोत्तमइत्यर्थः । इदंचपरात्परतमस्येत्यत्रमानं । ततोन्यदार्तं ततःविष्णोरन्यद्ब्रह्मादिआर्तंक्लेशयुक्तंइयंचश्रुतिः । 'अक्लेशपूर्वकमिदंनतुकस्यचेश' मित्यत्रप्रमाणं । मुक्तोपसृप्यः मुक्तैरुपसृप्यःप्राप्यइति । 'मुक्तोपसृप्यव्यपदेशादि' तिसूत्रंसाम्यंनचास्यपरमेणेत्यत्रमानं । तत्प्राप्यत्वोक्तेस्तदभेदोनास्तीतिभावः । 'इहनास्तिकुतश्चकश्चिदि' ति । नेहनानास्तिकिंचनेतिश्रुतिर्गृहीता । किंचनेत्यनेनकुतश्चकश्चिदितिव्याख्यातं । इहब्रह्मणिकिंचिदवयवावयविनोर्भेदःगुणगुणिनोर्भेदोवा । कुतश्चावतारादिनिमित्तादपिनास्तीति नानेवेत्यनेन । 'मृत्योःसमृत्युमाप्नोतियइहनानेवपश्यतीति' । तथा । 'धर्मपृथगात्मदृगेत्यधोहीति' । धर्माणांपृथगात्मत्वंभिन्नत्वंभावप्रधानोनिर्देशः । हरेर्धर्माणामेववा परस्परभिन्नत्वंदृक्पश्यतीतिसअधःनरकमेतीत्यनेन । 'यथोदकंदुर्गेवृष्टंपर्वतेषुविधावति । एवंधर्मान्पृथक्पश्यंस्तानेवानुविधावती' तिश्रुतिंगृह्णाति । अस्यार्थः इहब्रह्मणिनानाभेदामिवभेदाभेदंचयःपश्यतिसःमृत्योःसंसारान्मृत्युंनरकंपश्यतीति । 'इवोभयेचसादृश्ये' इतिवचनात् । यथादुर्गेपर्वतोच्चप्रदेशेवृष्टमुदकंपर्वतेषुपर्वताधोदेशेषुविधावतिगच्छतिएवंधर्मान् ज्ञानादीन् पृथक्भगवतःमिथश्चपृथक्भिन्नान्पश्यन्तान्पृथक्द्रष्टा । ननु एवअनंतरमेवधर्मभेददर्शी

नानंतरमेव विधावतिविशेषेणाधःपतति । इदंवाक्यत्रयंसर्वत्रचस्वगतभेदविवर्जितात्मेत्यत्रमानं ॥ २३ ॥ आभासएवेति । आभासएवच जीवःपरमात्मनआभासएवप्रतिबिं
बएवच। भिन्नश्चेतिसूत्रमाभासकोस्यपवनइत्यादौमानं । पृथगीशतएषजीवइति। पृथगुपदेशात् ईशतइतिविशेषकथनं। ईशतःमुक्तःपृथक्भिन्नःउपदेशाद्धि सोचिंत्यःपरमो
जीवसंघादितिकौशिकश्रुतेरितिसूत्रमभिदाकुतोस्येत्यत्रमानं। मुक्तस्येतिमुक्तस्यजगतःविषयेजगन्निर्माणविषयेशक्तिर्नास्तीत्यादिना । जगद्व्यापारवर्जमिति । जगत्सर्जना
दिव्यापारवर्जताहिनान्यान्कामानूप्राप्नोतीतिसूत्रं साम्यंनचास्यपरमेणचेत्यत्रमानं ।मात्रापरइत्यादिना ।'परोमात्रयातन्वावृधाननतेमहित्वमन्वश्नुवंती'तिश्रुतिर्गृहीता। मात्रय
मात्रायाःमितेःपरउत्कृष्टअसिपरशब्दस्यावधिसापेक्षत्वात्संनिहितमात्रापदमवधिवाचकमितिज्ञापयितुंमात्रापरोसीत्यनुवादःकृतः । सूर्यवदंशतोलोकव्याप्तिर्नेत्याह । तन्वे
ति । तन्वादेहेनैववृधानअपरिच्छिन्नतेमहित्वंगुणमहिमानं नाश्नुवंतिप्राप्नुवंतीत्यर्थः । इदमपिसाम्यंनचास्येत्यत्रमानं। षाड्गुण्यविग्रहेत्यनेन । 'जितंतेपुंडरीकाक्षपूर्णषाड्गुण्य
विग्रह'इतिपंचरात्रवाक्यं । सुपूर्णगुणैकदेहेत्यनेन'सच्चिदानंदरूपायवरेण्याय नमोनम'इतिपंचरात्रवाक्यं॥२४॥ माहात्म्यदेहेत्यनेन महाविभूतेमाहात्म्यशरीरेतिमोक्षधर्मस्थं

आभास एव पृथगीशत एष जीवो मुक्तस्य नास्ति जगतो विषये तु शक्तिः ॥ मात्रापरोसि न तु तेश्नुवते महित्वं षाड्गु
ण्यविग्रहसुपूर्णगुणैकदेह ॥ २४ ॥ माहात्म्यदेहसृतिमुक्तिगते शिवश्च ब्रह्मा च तद्गुणगतौ न कथं च नेशो ॥ न श्रीः
कुतस्तदपरेस्य सुखस्य मात्रामश्नंति मुक्तसुगणाश्च शतावरेण ॥ २५ ॥ आभासकाभासपरावभासरूपाण्यजस्राणि च
चेतनानां ॥ विष्णोः सदैवातिवशात्कदापि गच्छंति केशादिगणा न मुक्तौ ॥ २६ ॥ ॥ ॥ ॥

गीताभाष्योद्धृतंवाक्यं । माहात्म्यंमहिमाशरीरंयस्येति । निर्दोषपूर्णगुणविग्रहेत्यत्रमानं । सृतिमुक्तिगतेसंसृतिःसंसारःमुक्तिर्मोक्षःअनयोर्गतिःप्राप्तिर्यस्मात्तस्यसंबुद्धिः । इ
त्यनेन 'बंधकोभवपाशेनभवपाशाच्चमोचक'इतिवाक्यंसाम्यंनचास्येत्यत्रमानं । शिवश्चब्रह्माचतद्गुणगतौतस्यविष्णोर्गुणानामवगतौ । कथंचनकेनापिप्रकारेणनेशावित्यनेन
'नांतंगुणानामगुणस्यजग्मुर्यईश्वरायेभवपद्ममुख्या'इत्यादिभागवतवाक्यमस्यगुणविस्तृतिरन्यगाक्वेत्यत्रमानं । श्रीरपितद्गुणगतौनेशातत्तस्मादपरेकुतइत्यनेन'परोदिवापरए
नापृथिव्यैतावतीमहिनासंबभूवे'तितत्रैवमानं । अस्यसुखस्येति । मुक्ताःसुगणाःशोभनसमुदायाः । अस्यविष्णोःसुखस्यमात्रामंशंप्रतिबिंबभूतानंदांशंशतावरेणाश्नुवंतीत्य
नेन'एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंती'तिश्रुतिर्मुक्तेनचेत्यत्रमानं ॥ २५ ॥ आभासकेतिभगवद्वाक्यंपूर्वार्धमाभासकोस्येत्यत्रोत्तरार्धंतु यस्याज्ञयारहितमित्यत्र
मानं । चेतनानांब्रह्मादीनांआभासकःपवनस्तस्याभासःरुद्रः तस्यापरःअन्य.आभासःशक्रइत्येतानिरूपाणिस्वरूपाणिअजस्राणिनित्यानि । केशादिगणाः कःब्रह्मा ईः
शोरुद्रस्तावादीयेषांतेचतेगणाःमुक्तौकदापिसंसारेपिसदैवविष्णोरतिवशान्नगच्छंतीत्यन्वयः ॥ २६ ॥ ॥ ॥ ॥

यस्मिन्परेन्येप्यजजीवकोशाइत्यनेन । "वयंनतातप्रभवामभूम्नोभवंति कालेनभवंतिहीदृशाः । "यस्मिन्परेन्येप्यजजीवकोशाःसहस्रशोयत्रवयंभ्रमाम' इत्येतद्गृण्हाति । अस्यार्थः । इदंरुद्रवाक्यंदुर्वाससंप्रति । हेताततवयंतस्यभूम्नःसुदर्शनात्रक्षितुंनप्रभवाम यतोभूम्नःईदृशाःमत्सदृशाःकालेसृष्टिकालेभवंति । कालेप्रलयकालेनभवंति । यस्मिन्परेहरौअन्येपिभूतभविष्यंतःसहस्रशःअजजीवकोशाब्रह्मांडानिभवंति । यत्रयेषुब्रह्मांडेषुवयंभ्रमामइत्यर्थः । नाहंपरायुरित्यनेन "नाहंपरायुर्ऋषयोनमरीचमुख्याःजानंति यद्विरचितंखलुसत्वसंघा' इत्येतद्गृण्हाति । जानंतीत्येतदर्थंपुराणस्थं । इदंत्रयंएतैःसुरादिभिरित्यत्रमानं ॥२७॥ नैवैकएवपुरुषःपुरुषोत्तमोसावेकइत्यनेन "नैतदिच्छंति पुरुषमेकंकुरुकुलोद्वहेति' । बहुनांपुरुषाणांहियैथकायोनिरुच्यते । तथातंपुरुषंविश्वमाख्यास्याभिगुणाधिकमितिवाक्यंगृण्हाति । कुतःसपुरुषोयतएवजात्येत्यादिना । "यतःस्वरूपतश्चान्योजातितःश्रुतितोर्थतः । कथमस्मिसइत्येवसंबंधः स्यादसंहित' इतिमोक्षधर्मवचनमभिदाकृतास्येत्यत्रमानं । अस्यार्थः । बहवःपुरुषाब्रह्मन्नुताहोएकएवेति जनमेजयेनपृष्टे इदमुत्तरंनैतदिच्छंतीति तदनुवादः एकएवपुरुषोजीवःनैवेति बहवःपुरुषाश्चेत्तर्हिएकमेवाद्वितीयमित्युक्तिःकथमतआह बहूनामिति । यथाशास्त्रादौब

**यस्मिन्परेन्येप्यजजीवकोशा नाहं परायुर्न मरीचमुख्याः ॥ जानंति यद्गुणगणान्ब्रह्मादयोपि नित्यस्वतंत्र उत कोस्ति तदन्य ईशः ॥ २७॥ नैवैक एव पुरुषः पुरुषो त्तमोसावेकः कुतः स पुरुषो यत एव जात्या ॥ अर्थाच्छ्रुतेश्च गुणतो निजरूपतश्च नित्यान्य एव कथमस्मि स इत्यपि स्यात् ॥ २८॥ सर्वोत्तमो हरिरिदं तु तदाज्ञयैव चेतुं क्षमं स तु हरिः परमस्वतंत्रः ॥ पूर्णोव्ययागणितनित्यगुणार्णवोसावित्येव वेदवचनानि परोक्तयश्च ॥ २९ ॥**

हूनांपुरुषाणांएकायोनिःजन्मादिकारणं यतोवाइमानिभूतानिजायंत इतिश्रुतौ"जन्माद्यस्ययत'इतिसूत्रेचोच्यते । तथातंपुरुषंविश्वंव्याप्तंगुणाधिकमेकमाख्यास्यामीत्युत्तरं । तदनुवादः । असौपुरुषोत्तमएकइति । जन्यजनकत्वेप्यैक्यंकुतोनेत्यतआह । यतःस्वरूपतइति । तदनुवादःकुतइति । सजीवःपुरुषएवहरिरेवेतिकुतः । नकुतोपीत्यर्थः । तत्रहेतुर्यतःसईश्वरोयंजीवइतिजात्यासःनिष्प्रयोजनः अयंसप्रयोजनइत्यर्थात् । अन्यमीशमितिद्वासुपर्णेत्यादिश्रुतेःसअनंतगुणअयमल्पगुणइति । गुणतःस्वतंत्रःअयंपरतंत्रइतिनिजरूपतःनित्यान्यःभिन्नएवातःसोस्मीति अपिवाक्यमपिकथंस्यात् युक्तंनस्यादित्यर्थः ॥ २८ ॥ उक्तसर्वार्थसंग्राहकंप्रमाणमुदाहरति । सर्वोत्तमइति । हरिःसर्वोत्तमःइदंजगत्तस्यहरेःआज्ञयैवचेतुंचेष्टितुंवेत्तुंवाक्षमंसमर्थमर्थं सतुसएवहरिःपरमःस्वतंत्रःअसौपूर्णःव्याप्तःअव्ययाः ह्रासरहिताःअगणिताअसंख्याताःनित्याःयेगुणास्तेषांअर्णवइतिपृथगन्वयचतुष्टयं । अर्थोयामित्यादिनोक्तमर्थमुपसंहरति । इतीति । इत्येवानेनैवप्रकारेण । परस्यव्यासस्यउक्तयश्चप्रतिपादयंतीतिशेषः । इत्येवएतमेवार्थमितिवा ॥ २९ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

नैतैर्वाक्यैर्विष्णोःसर्वोत्तमत्वादिसदागमप्रतिपाद्यमितिसिध्यति । तेषामन्यथापिनेतुंशक्यत्वात् प्रतीतार्थप्रामाण्यायोगादित्यतउक्तशंकानिवर्तकमुक्तानुक्तार्थप्रतिपादकं । भविष्यत्पर्वनामकोपपुराणवचनमुदाहरति । ऋगादयइति । ऋगादयःस्वतोमानंसंवादनिरपेक्षप्रमाणंस्मृतं । संवादनिरपेक्षताचापौरुषेयत्वेनापौरुषेयत्वंच 'वाचाविरूपनित्यये'तिश्रुतेःसिद्धं । पंचरात्रादीनांतुसंवादनिरपेक्षत्वंचेतिहासःपुराणःपंचमोवेदानांवेदइतिश्रुतिसिद्धं । इतिहासशब्देनपंचरात्रादित्रितयंग्राह्यं । पंचरात्रंभारतंचमूलरामायणंतथा । इतिहासइतिप्रोक्तोब्रह्माद्यंचपुराणकमितिप्रकाशिकावचनात् । अतएवव्यासस्मृतौ । 'वेदाश्चैवेतिहासाश्च पुराणंभागवतंतथा । मूलप्रमाणमुद्दिष्टं मीमांसाचोत्तरातथे'तिबहुवचनेनानिर्देशश्चकृतः । सूत्रस्यनिर्णायकत्वान्नान्यापेक्षा । वराहपुराणेचोपपुराणगणनायांभविष्यत्पर्वेतिपुराणनामकथितमस्ति ॥ ३० ॥ अस्योक्तप्रामाण्यस्यऋगादिसमूहस्ययदविरुद्धंतत्तुतदेवप्रमाणंच । प्रमाणमेवअन्यथाप्रमाणंन एतेषांपूर्वोक्तानांऋगादीनांविरुद्धंकथंचन । कालपुरुषव्यवस्थयापिनतुस्यान्नैवस्यात् ॥ ३१ ॥ इतिहासपुराणइतिश्रुतौपुराणस्यस्वतःप्रमाणवेदसमत्वेनोक्तत्वात्तत्किमर्थंपूर्वोक्तेपुनर्गणितमित्यतआह । वैष्णवानीति । पंचरात्रात्मकत्वतःपंचरात्रार्थप्रतिपादकत्वात् । वैष्ण

**ऋगादयश्च चत्वारः पंचरात्रं च भारतं ॥ मूलरामायणं ब्रह्मसूत्रं मानं स्वतः स्मृतं ॥ ३० ॥ अविरुद्धं तु यत्त्वस्य प्रमाणं तच्च नान्यथा ॥ एतद्विरुद्धं यत्तु स्यान्न तन्मानं कथं च न ॥३१॥ वैष्णवानि पुराणानि पंचरात्रात्मकत्वतः ॥ प्रमाणान्येव मन्वाद्याः स्मृतयोप्यनुकूलतः ॥ ३२ ॥ एतेषु विष्णोराधिक्यमुच्यतेन्यस्य न क्वचित् ॥ अतस्तदेव मंतव्यं नान्यथा तु कथं च न ॥३३॥ मोहार्थान्यन्यशास्त्राणि कृतान्येवाज्ञया हरेः ॥ अतस्तेपूक्तमग्राह्यमसुराणां तमोगतेः ॥३४॥**

वानिपुराणान्येवप्रमाणानिनान्यानि । पुराणानामुभयरूपत्वात्नसहपाठः । पंचरात्रग्रहणेनवैष्णवपुराणानांग्रहणान्नपृथक्ग्रहणमितिभावः । तर्हिस्मृतीनामप्रामाण्यंकिमित्यतआह । मन्वाद्याइति । अनुकूलतःअनुकूलत्वादेवप्रमाणानीतिज्ञेयाःनत्वननुकूलाः ॥ ३२ ॥ ननु वेदादिषुकोर्थःप्रतिपाद्यतेयदानुकूल्येनप्रामाण्यमित्यतस्तदर्थमाह । एतेष्विति । ननु वेदादिषुरुद्रादेरेकोरुद्रोनद्वितीयइत्यादिनाधिक्यस्योक्तेस्तत्कथंविष्णोराधिक्यमुच्यतेइत्यतआह । अन्यस्येति । अन्यस्यरुद्रादेःक्वचित्कुत्रचित् । रुद्रादिशब्दानांविष्णौसमन्वयात् ततश्चकिमित्यतआहअतइति । यतःवेदादिषुविष्णोराधिक्यमुच्यतेततस्तदेवहर्याधिक्यमेव । कथंचनकेनाप्युपायेनान्यथापाशुपताद्युक्तंपशुपत्याद्युत्तमत्वंनमंतव्यं ॥ ३३ ॥ पाशुपताद्युक्तंअग्राह्यमित्युक्तंतत्कस्यहेतोरित्यतआह । मोहार्थानीति । अन्यशास्त्राणिपाशुपतादीनिमोहार्थानिमोहोऽज्ञानंतेनतज्जननमुपलक्ष्यते । अर्थःप्रयोजनंयेषांतानिअज्ञानोत्पादकानि । मोहकशास्त्रकरणात्पापंस्यादित्यतआह । कृतानीति । हरेराज्ञयैवकृतानीतियतोतस्तदुक्तंअग्राह्यमित्यर्थः । एतत्प्रयोजनंकिमित्यतआह । असुराणामिति । तमोगतेस्तमःप्राप्त्यर्थंकर्तुरनुक्तेस्तदनुवादपूर्वकमुक्तमेवाह । यस्मादिति । विष्णुनोक्तैःशिवादिभिःइहभूलोकेतानिपाशुपतादीनि

यस्मात्कृतानिअतस्तदुक्तमग्राह्यमित्यर्थः । यद्वाहरेराज्ञयाकृतान्यन्यशास्त्राणिमोहार्थान्येव तदेवप्रयोजनपूर्वकमुपपादयति । अतइति । विष्णुनोक्तैःशिवादिभिःअसुराणां तमःप्राप्त्यर्थंयस्मात्कृतानिअतस्तेषूक्तमग्राह्यमित्यर्थः । अग्राह्यमित्यस्यापवादमाह । एषामिति । एषांवेदादीनांयन्मोहशास्त्रोक्तंविरोधिनस्यात्तत्पाशुपतादावुक्तमविरोधार्थं जातंनवार्यते ननिषिध्यते । यद्वा यस्मात्इत्यग्रिमेणसंबध्यते । यतःविष्णूक्तैःकृतमतःतत्रोक्तंनवार्यतइतिसंबंधः । तेनबौद्धोदिताहिंसावदग्राह्यत्वंविष्णूदितादेवकृतत्वान्नेति भावः ॥३४ ॥ ३५ ॥ ननु वेदादौजननादिदोषाः'जनितोतविष्णो'रित्यादिनाधिक्यविरोधिनःउच्यंतेऽतः कथमाधिक्यमुच्यतइत्यतआह । विष्ण्वाधिक्येति । विष्ण्वाधिक्य स्यानुकूल्यात् सर्वशःसर्वाणितानिवाक्यानियोज्यानीतिसंबंधः ॥ ३६ ॥ ननु सर्वावतारेषुदोषदर्शनात् कथमन्यथायोज्यानिवाक्यानीत्यतआह । अवतारेष्विति । यत्किंचि

**यस्मात्कृतानि तानीह विष्णुनोक्तैः शिवादिभिः ॥ एषां यन्न विरोधि स्यात्तत्रोक्तं तन्न वार्यते ॥ ३५ ॥ विष्ण्वाधिक्यवि रोधीनि यानि वेदवचांस्यपि ॥ तानि योज्यान्यानुकूल्याद्विष्ण्वाधिक्यस्य सर्वशः ॥ ३६ ॥ अवतारेषु यत्किंचिद्दर्शयेन्न रवद्धरिः ॥ तच्चासुराणां मोहाय दोषा विष्णोर्नहि क्वचित् ॥ ३७ ॥ अज्ञत्वं पारवश्यं वा वेधभेदादिकं तथा ॥ तथा प्राकृतदेहत्वं देहत्यागादिकं तथा ॥ ३८ ॥ अनीशत्वं च दुःखित्वं साम्यमन्यैश्च हीनतां ॥ प्रदर्शयति मोहाय दैत्या दीनां हरिः स्वयं ॥ ३९ ॥ न तस्य कश्चिद्दोषोस्ति पूर्णाखिलगुणो ह्यसौ ॥ सर्वदेहस्थरूपेषु प्रादुर्भावेषु चेश्वरः ॥४०॥ ब्रह्माद्यभेदः साम्यं वा कुतस्तस्य महात्मनः ॥ यदेवं वाचकं शास्त्रं तद्धि शास्त्रं परं मतं ॥ ४१ ॥ निर्णयायैव यत्प्रोक्तं ब्रह्मसूत्रं तु विष्णुना ॥ व्यासरूपेण तद्ग्राह्यं तत्रोक्ताः सर्वनिर्णयाः ॥ ४२ ॥ ॥ ॥**

त्स्त्रीवियोगादिकंचित्कस्मिंश्चित् अप्यवतारे ॥ ३७ ॥ किंचिदित्युक्तंदर्शयति । अज्ञत्वमिति । परवशस्यभावःपारवश्यं । प्राकृतःदेहोयस्यसःतस्यभावःप्राकृतदेहत्वं ॥३८॥ अन्यैःसमस्यभावःसाम्यं अन्यैश्चहीनता ॥ ३९॥ मोहायदर्शयतीतिकुतःसत्यमेवकुतोनस्यादित्यतआह । नतस्येति । सर्वजीवस्थरूपेषुअंतर्यामिरूपेषु तथा सर्वावतारेषु तस्यविष्णोःकश्चिद्दोषोनास्तीत्यर्थः । दोषाभावेहेतुः । हियतः असौपूर्णादेशतःकालतश्चव्याप्ताअखिलाःसमग्रागुणायस्येति।हेत्वंतरमाह ईश्वरश्चेति॥४०॥ सर्वदेहस्थरूपाणांब्रह्मादिभिरभेदेपुनरपिदोषित्वं तुल्यमित्यतआह । ब्रह्मादीति । वाशब्दःसमुच्चये कुतःनकुतोपीत्यर्थः । तत्रहेतुर्महात्मनइति । इतोपिहरेरज्ञत्वादिकं मोहनार्थमितिज्ञेयमित्याह । यदिति । यच्छास्त्रमेवंवाचकमज्ञत्वादिमोहार्थमितिवाचकंतच्छास्त्रंपरंमतं । हियतअतःअज्ञत्वादिमोहार्थमित्यर्थः । यद्वोपसंहरति यदिति। तत्परमितिमतंसंमतं ॥ ४१ ॥ येनसर्वनिर्णयाःज्ञेयाःतत्परंनिर्णायकंकिमित्यतआह । निर्णयायैवेति ॥ ४२ ॥ ॥ ॥

निर्णयकरणेसंशयप्राप्तिर्हेतुः तदभावेनकथंनिर्णयायेत्युक्तमित्यतआह । यथार्थेति । यथार्थवचनानांचमोहार्थानांचाविप्रतिपत्त्याजातंसंशयं ॥ ४३॥ निर्णयायैवेत्यादिनोक्तमर्थमुपसंहरति । तस्मादिति । कोसौसूत्रार्थःयदनुसारेणसर्वनिर्णयःकार्यइत्यतआह । सर्वदोषेति । सर्वदोषविहीनत्वमित्यादि । विमुक्तिर्विषयेत्यंतानिप्रमेयानिसूत्रेषूक्तानीत्यन्वयः । 'सामान्येनपुंसकमि'तिनपुंसकता सर्वदोषविहीनत्वंद्वितीयाध्यायेप्रतिपादितं। अतएवअणुभाष्ये'सर्वदोषोज्झितस्तस्माद्भगवान्पुरुषोत्तम'इत्युपसंहारः कृतः । गुणैःसर्वैरुदीर्णताप्रथमाध्यायेप्रतिपादिता । अतएवअणुभाष्ये'शब्दैरतोनंतगुणोयच्छब्दायोगरत्तय'इत्युक्तम् ॥ ४४ ॥ सर्वरूपेष्वभेदःनस्थानतोपिपरस्योभयलिंगंसर्वत्रहीत्यनेनोक्तं। सदैवजीवभेदःहिबहुषूक्तः। तथाहि 'भेदव्यपदेशाच्चान्यः शारीरश्चोभयेपिहि भेदेनैनमधीयत'इत्यादिषुप्रसिद्धः। तथाशब्दःसमुच्चये सर्ववेदैरीड्यताप्रतिपाद्यता"शास्त्रयोनित्वात् तत्तुसमन्वयादि"त्यादौ॥४५॥मुक्तानांतारतम्यंच'इयदामननात् तन्ननःप्राणउत्तरादि'त्यादौ । विषयाद्विमुक्तिः'विषयैवतुनिर्धारणादि'त्यादौनिरूपितं ।

यथार्थवचनानां च मोहार्थानां च संशयं॥ अपनेतुं हि भगवान् ब्रह्मसूत्रमचीक्लृपत् ॥ ४३ ॥ तस्मात्सूत्रार्थमागृह्य कर्तव्यः सर्वनिर्णयः॥ सर्वदोषविहीनत्वं गुणैः सर्वैरुदीर्णता ॥ ४४ ॥ अभेदः सर्वरूपेषु जीवभेदः सदैव हि ॥ विष्णोरुक्तानि सूत्रेषु सर्ववेदेड्यता तथा ॥ ४५ ॥ तारतम्यं च मुक्तानां विमुक्तिर्विषयात् तथा ॥ तस्मादेतद्विरुद्धं यन्मोहार्थं तदुदाहृतं ॥ ४६ ॥ तस्माद्ये ये गुणा विष्णोर्ग्राह्यास्ते सर्व एव तु ॥ इत्याद्युक्तं भगवता भविष्यत्पर्वणि स्फुटं ॥४७॥ एष मोहं सृजाम्याशु यो जनान्मोहयिष्यति ॥ त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ॥ ४८ ॥ अतथ्यानि वितथ्यानि दर्शयस्व महाभुज ॥ प्रकाशं कुरु चात्मान मप्रकाशं च मां कुरु ॥ ४९ ॥ ॥ ॥

यस्मात्तस्मादेतेषांसूत्राणांविरुद्धंयत्तन्मोहनार्थंतदाहृतमितिज्ञेयम् ॥ ४६ ॥ ब्रह्मादयइत्यादौफलितंवदन्नुपसंहरति । तस्मादिति । येयेगुणाःअणुत्वमहत्त्वादयउक्तास्तेसर्वएवग्राह्याः नतुविरोधादेकोपित्याज्यः ॥४७॥ मोहार्थान्यन्यशास्त्राणीत्यस्मिन्नर्थेविष्णोःसर्वोत्तमत्वार्थेचप्रमाणांतरमाह। एषइति । विष्णुवचनमिदं एषविष्णुरहंमोहंमुच्यतेनेनेतिमोहोनटनंवंचनंवा। अविद्यमानाकारप्रदर्शनंनटनंविद्यमानाकाराच्छादनंवंचनं। योमोहःदधीच्यादिभिःकारय त्वंचकुरु ॥४८॥ अतथ्यानिकुत्राप्यविद्यमानानिलिंगमूलमार्गणसरुद्रस्मालिंगधारणादिनाकैलासप्राप्त्यादीनिवितथ्यानिव्याधिकरणतयाविद्यमानानि । अथवा विष्णौतथ्यानिसर्वज्ञत्वादीनित्वयिदर्शयस्व । आत्मानंप्रतिप्रकाशंप्रसिद्धिंकुरु। मांप्रत्यप्रकाशमप्रसिद्धिंकुरु । आत्मानंप्रसिद्धंमामप्रसिद्धंकुर्वितिवा । 'प्रकाशोतिप्रसिद्धेपी'त्यभिधानं । ननु यथान्येषांसर्वोत्तमत्वादिगु

णामोहार्थमुक्तास्तथाविष्णोरपिगुणाःकिंनस्युरित्यतःप्रमाणेनतंनिराकरोति । ब्रह्मांडेति । तथापूर्वोक्तार्थप्रतिपादकंपरमुत्तमार्थप्रतिपादकत्वेनोत्तमंवचनमस्ति । परमन्य
थाशब्दःअन्यशास्त्रस्यमोहार्थत्वविष्णूत्कर्षादिप्रतिपादकत्वरूपार्थसमुच्चयेवा । तदुदाहरति । अमोहायेति । विष्णोर्गुणाआकारःसहस्रशीर्षेत्याकारः चिच्छरीरताशरीर
ज्ञानात्मताच । निर्दोषत्वंमुक्तानांतारतम्यंचेति । अमोहायमोहनाशायज्ञानायचोच्यते । एतस्यपूर्वोक्तस्यविरुद्धंयत्तत्सर्वंमोहायाज्ञानायेतिनिश्चयः ॥५१॥ एषांयन्नेत्य
नोक्तमर्थंप्रमाणांतरेणोपपादयति । स्कांदइति । स्कंदपुराणस्यतामसत्वात्कथंतदुदाहरणमित्यतआह । शिवेनैवेति । पित्रापुत्रस्योक्तत्वात् तदुदाहरणम् । एवकारस्तु
रिअज्ञानादिदोषंवक्तव्यांशेनिवारयति श्रोतरिअयोग्यतांचनिवारयति । अतएवांतेपिपुत्रेतिसंबोधनं सादरमितितदर्थेतात्पर्यमाह । ननु शैवतामसपुराणोक्तस्य पुत्रे

इति वाराहवचनं ब्रह्मांडोक्तं तथा परं ॥ अमोहाय गुणा विष्णोराकारश्चिच्छरीरता ॥५०॥ निर्दोषत्वं तारतम्यं मुक्तानामपि चोच्यते ॥ एतद्विरुद्धं यत्सर्वं तन्मोहायेति निर्णयः ॥५१॥ स्कांदेप्युक्तं शिवेनैव षण्मुखायैव सादरं ॥ शिवशास्त्रेपि तद्ग्राह्यं भगवच्छास्त्रयोगि यत् ॥५२॥ परमो विष्णुरेवैकस्तज्ज्ञानं मुक्तिसाधनं ॥ शास्त्राणां निर्णयस्त्वेषस्तदन्यन्मोहनाय हि ॥५३॥ ज्ञानं विना तु या मुक्तिः साम्यं च मम विष्णुना ॥ तीर्थादिमात्रतो ज्ञानं ममाधिक्यं च विष्णुतः ॥५४॥ अभेदश्चास्मदादीनां मुक्तानां हरिणा तथा ॥ इत्यादि सर्वं मोहाय कथ्यते पुत्र नान्यथा ॥५५॥ उक्तं पद्मपुराणे च शैव एव शिवेन तु ॥ यदुक्तं हरिणा पूर्वमुमायै प्राह तद्धरः ॥ ५६ ॥ त्वामाराध्य तथा शंभो गृहीष्यामि वरं सदा ॥ द्वापरादौ युगे भूत्वा कलया मानुषादिषु ॥५७॥ ॥ ॥ ॥

क्तत्वेपि कथंग्राह्यत्वमित्यतआह । शिवशास्त्रइति । भगवच्छास्त्रानुकूलत्वाद्ग्राह्यमितिभावः ॥ ५२ ॥ विष्णुरेकएवपरमः ॥ ५३ ॥ ज्ञानंविनाकाशीमरणादिनामुक्त
तीर्थादिमात्रतस्तीर्थगमनवासादिनैवज्ञानंभवति ममशिवस्यविष्णुतःविष्णोः ॥५४॥ अस्मदादीनांसंसारिणांहरिणाऽभेदश्च तथाशब्दःसमुच्चये । मुक्तानां अस्मदादी
हरिणाऽभेदश्चेत्यादिसर्वं ॥५५॥ वराहपुराणोक्तं पद्मपुराणवचनेनाप्युपपादयति । उक्तमिति । पद्मपुराणेकांडद्वयंतत्रपूर्वभागेशिवोत्कर्षप्रतिपादकत्वात् शैवेपाद्मेपुराणे
शिवेनपूर्वोक्तमर्थंजातमुक्तमस्ति । ननु तर्हितत्रशंभोइतिसंबोधनंकथमित्यतआह । यदिति । हरःयद्धरिणापूर्वंस्वस्योक्तं तदुमायैप्राहेतिसंबंधः । तेनहरिवाक्यत्वात् शंभो
इतिसंबोधनंघटतइतिभावः ॥५६॥ तद्वाक्यमुदाहरति । त्वामिति । द्वापरादौद्वापरःआदिःव्युत्क्रमेणयस्यतद्द्वापरादि सामान्येनपुंसकं तेनकलौनावतारः कृतादावित्यु

कलावपिप्राप्तेस्तथानोक्तं । युगेमानुषादिषुकळ्यास्वरूपांशेन भूत्वाऽवतीर्यसदाऽव्युच्छिन्नद्वादशाब्दादिनाकालेनत्वामाराध्य तथाआराधनानुकूलंवरंगृहीष्यामीतिसंबंधः। यद्वा सदाप्रतिब्रह्मादिनंवरंगृहीष्यामीति ॥५७॥ कल्पितैरयथार्थैःस्वागमैःस्वोत्तमत्वप्रतिपादकैः येनगोपनेनोत्तराकृतादौसदाचारेणोर्ध्वलोकगमनोन्मुखीअधरानरकाद्यधोलोकगमनोन्मुखीस्यात्तथाकुर्वितिसंबंधः॥५८॥वैष्णवेषुविष्णोः शिवस्यापिपरत्वंशैवेचशिवस्याविष्णोश्चोत्तमत्वमुच्यते । एवंसतिनिर्णयःकथमित्यतआह। नचेति। तथाच शैवशास्त्रंस्ववचनविरोधादेवाप्रमाणमितिभावः ॥५९॥ प्रकारांतरेणापिविष्णोःपरत्वमुपपादयति। निर्दोषत्वादिति। निर्दोषत्वादपौरुषेयत्वेनवक्त्रादिनिबंधनदोषरहितत्वात्। वेदेषुकिमुक्तमित्यतआह । वेदेष्विति ॥६०॥ कोसौवेदइत्यतस्तमुदाहरति। अस्येति। देवस्यक्रीडादिगुणविशिष्टस्यमीळ्हुषःभक्तेभ्यःसेचकस्याभीष्टदातुः। एषस्यासमंतादिष्टस्वभावस्यइच्छारूपस्यवा । अस्यविष्णोःहविर्भिःप्रभृथेप्रभरणेपूजायांकृतायामहंकाररूपेणबंधकत्वाद्वयाःबंधकोरुद्रःरुद्रियंरुद्रसंबंधिमहित्वंमाहिमानं विदेहिलेभे

**स्वागमैः कल्पितैस्त्वं च जनान्मद्विमुखान् कुरु ॥ मां च गोपय येन स्यात्सृष्टिरेषोत्तराधरा ॥५८॥ न च वैष्णवशास्त्रेषु वेदेष्वपि हरेः परः ॥ क्वचिदुक्तोन्यशास्त्रेषु परमो विष्णुरीरितः ॥ ५९ ॥ निर्दोषत्वाच्च वेदानां वेदोक्तं ग्राह्यमेव हि ॥ वेदेष्वपि परो विष्णुः सर्वस्मादुच्यते सदा ॥६०॥ अस्य देवस्य मीळ्हुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः ॥ विदेहि रुद्रो रुद्रियं महित्वं यासिष्टं वर्तिरश्विनाविरावत् ॥६१ ॥ स्तुहि श्रुतं गर्तसदं युवानं मृगंनभीममुपहन्तुमुग्रं ॥ यं कामये तंतमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधां ॥ ६२॥ एको नारायण आसीन्न ब्रह्मा न च शंकरः ॥ वासुदेवो वा इदमग्रआसीन्न ब्रह्मा न च शंकरः ॥ ६३ ॥ ॥ ॥ ॥ ॥**

हि । हेअश्विनौयुवामपिइरावदन्नवद्वर्तिर्वर्तनंयासिष्टंमयासिष्टंप्राप्तौ । अनेनरुद्रादिभ्यःउत्तमत्वमुक्तंभवति ॥६१ ॥ हेमृडहेरुद्रश्रुतंप्रसिद्धंगर्तसदंहृदयगुहागतं। युवानंतरुणमृगंन सिंहमिवभीमंभयंकरमुपहन्तुंसर्वसंहारकमुग्रंनृसिंहंस्तुहि । अत्ररुद्रस्तुत्यत्वकथनात्रुद्रोत्तमत्वमुक्तंभवति। यंउग्रंरुद्रंकर्तुंकामयेतंतमुग्रंकृणोमिकरोमि। एवंब्रह्माणमित्यादौयोज्यं। अत्रब्रह्मादीनांहर्यधीनलक्ष्म्यधीनत्वकथनात्सर्वस्यहर्यधीनत्वमुक्तंभवति ॥ ६२ ॥ एकइति । हरेःप्रलयकालवर्तित्वंब्रह्मादीनांतत्कालेऽभावश्चोच्यते। वासुदेवइति । अग्रेइत्यव्ययं । तेनप्रथमांततापिज्ञेया । इदंरमाब्रह्मादिकमपेक्ष्याग्रेअग्र्यःगुणश्रेष्ठःआसीत् । इदमस्यस्मादिजगतःअग्रेआदौआसीत्। इतिवा ।'इदंसर्वमपेक्ष्यासौकालतोगुणतस्तथा । अग्र्यएवसमस्तेश'इतिवचनात् । अग्र्यशब्दोगुणाधिक्यवाचीतिऐतरेयभाष्योक्तेश्च । अत्रगुणकालाधिक्यमुक्तंभवति ॥ ६३ ॥

यदापश्यःपश्यतीतिपश्योजीवः रुक्मवर्णंसुवर्णवर्णं । सर्वस्यकर्तारमीशंसर्वैश्वर्यंपुरुषंपूर्णषड्गुणं । ब्रह्मणश्चतुर्मुखस्य योनिंकारणंपश्यते । तदाविद्वानपरोक्षज्ञानीअप्रारब्धपुण्यपापेविधूयनिरंजनःनिर्लेपःपरमंसाम्यंनिर्दुःखत्वादिनासाम्यमुपैति ॥ ६४ ॥ यःगुहायांहृदयगुहायांपरमेव्योमन् व्योम्निआकाशेनिहितंस्थितं परमात्मानंवेदअपरोक्षतयाजानातिसःविपश्चिताब्रह्मणाचतुर्मुखेनपरब्रह्मणावा सर्वान्कामानश्नुतेभुङ्क्तेश्रुतिद्वयेविष्णवपरोक्षज्ञानान्मुक्तिरुक्ताभवति । अपरोक्षज्ञानेविशेषउक्तोहरिवंशे । "विद्युद्वन्मानुषाविद्युःसूर्यमंडलवत्सुराः। प्रतिबिंबवच्चगिरिशोत्रह्मैनंपश्यतिस्फुट'मिति। तथान्योपिविशेषोवोद्धव्यः। 'मध्येवयसिचेत्सिद्धामुक्तौमध्यंप्रपश्यति। वार्धक्येचेद्द्विजानातिमुक्तःपादौप्रपश्यति । तेजोमंडलमेवान्यदंगंविष्णोःप्रपश्यति । पूर्ववयसिवोद्धव्यआमुखात्सर्वदृष्टय'इति ॥ ६५ ॥ महतःसर्वोत्तमस्यसत्यस्यसत्यवचसःअस्यविष्णोःमहानिमहांतिकरणानिकर्माणिसत्यासत्यानितु इदानींप्रवोचंचप्रवोचमेव। 'अवधारणेघशब्दस्यात्सारमात्रंतुसारघ'मितिशब्दनिर्णये। गृणतःस्तुवतःदेवस्यमघोनःइंद्रस्यरातिंअ

यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं ॥ तदा विद्वान्पुण्यपापे विधूय निरंजनः परमं साम्यमुपैति ॥ ६४ ॥ यो वेद निहितं गुहायां परमेव्योमन् ॥ सोश्नुते सर्वान् कामान्सह ब्रह्मणा विपश्चिता ॥ ६५ ॥ प्र घान्वस्य महतो महानि सत्यासत्यस्य करणानि वोचं ॥ सत्यमेनमनुविश्वे मदंति रातिं देवस्य गृणतो मघोनः ॥ ६६ ॥ यच्चिकेत सत्यमित्तन्न मोघं वसु स्पार्हमुत जेतोत दाता ॥ सत्यः सोः अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये॥६७॥ सत्या विष्णोर्गुणाः सर्वे सत्या जीवेशयोर्भिदा ॥ सत्यो मिथो जीवभेदः सत्यं च जगदीदृशं ॥ ६८ ॥ असत्यः स्वगतो भेदो विष्णोर्नान्यदसत्यकं ॥ जगत्प्रवाहः सत्योयं पंचभेदसमन्वितः ॥ ६९ ॥ ॥

भीष्टदातारमेनमनुविश्वेदेवाःमदंतिहर्षंप्राप्नुवंतीत्येतत्सत्यं । सत्यमित्येतदेनमित्यस्याविशेषणंवा । अत्रविष्णुकृतसर्जनादेःसत्यत्वमुक्तंभवति ॥ ६६ ॥ हरिःयच्चिकेतचकारतत्सत्यमित्येव मोघंनमृषान उत स्पार्हंस्पृहणीयंवसु जेताबल्यादिभ्यः उतजयानंतरं दातेंद्रादिभ्यः अस्य सःश्रुत्यायुक्तःजगत्सर्जनादिलक्षणःमहिमासत्यःतंविप्रराज्येषुविप्रप्रधानेषुयज्ञेषुशवःसुखमुद्दिश्यगृणेस्तौमि । इयंमहिमादीनांसत्यत्वोपपादिका ॥ ६७ ॥ इदानींविष्णुगुणादीनांसत्यत्वेश्रुतिमाह । सत्याइति । भिदाभेदःमिथःपरस्परंजीवानांभेदःईदृशमभिवचनाद्यर्थक्रियाकारिजगत्सत्यं ॥ ६८ ॥ विष्णोःस्वगतस्वावतारस्वावयवगतभेदःअसत्यः । इदानींतनंजगदनाद्यनंतकालीनसकलजगत्यपिसत्यानीत्याह । जगदिति । भेदानामनंतत्वेपिराश्यपेक्षयापंचभेदसमन्वितइत्युक्तं ॥ ६९ ॥ ॥ ॥ ॥ ॥

केतेपंचभेदाइत्यतआह । जीवेति । जीवेशयोश्चभिदैवभेदएव नतुभेदाभेदः। एवकारःसर्वत्रान्वेतव्यः। चशब्दस्तथाशब्दःसमुच्चये। परस्परंभेदश्चजडेशयोर्भिदेत्यनुवर्तनात् भिदाभेदएव। जडानांचपरस्परंभेदःजडानांजीवानांचभेदएव॥७०॥इमेपंचभेदाःनित्यगताःसर्वावस्थासुसंसारेमुक्तौचनित्याःआनंदादयइत्यपिग्राह्यं। 'सोयंसत्योह्यना दिश्चे'तिश्रुतेः। ब्रह्मणःसायुज्यकथनान्मुक्तब्रह्मणैक्यंस्यादित्यतआह। सर्वेशइति। सर्वेशःसर्वेषांमुक्तानांभेदानहीयंतेतेननश्यंतीत्यर्थः। यद्वा। इमेपंचभेदाःसर्वावस्थासुसृष्टि प्रलयपालनाद्यवस्थासुसर्वेशःसर्वेनित्याःनित्यगताःनित्याः। आनंदादयश्चमुक्तानांकथमित्यतआह। मुक्तानामिति। 'भेदस्तुसर्ववस्तूनांस्वरूपंनैजमव्ययं। नष्टानामपिवस्तूनां भेदोनैवविनश्यती'त्युक्तेः। सर्वदासंसारेमुक्तौचतारतम्यंचनहीयतइत्यर्थः॥७१॥ तारतम्यंदर्शयति। क्षितिपाइति। क्षितिपानृपाः मनुष्यगंधर्वाःपरमुखेनदेवप्रेष्याःमनुष्यगंध र्वाः देवाः देवगंधर्वाःस्वमुखेनदेवप्रेष्याः। चिराःपितरःआजानजाःदेवकुलेजाताःअनाख्याताःदेवाःआजानदेवाः। कर्मजाःकर्मणादेवत्वंप्राप्ताःकर्मदेवाःबल्याद्याः। देवाःतात्वि कादेवाः। इंद्रःदक्षः। पुरंदरःइंद्रः। यद्वा। पुरंदरइंद्रइतिविशेषणविशेष्यभावेनान्वयः। अत्रक्षितिपेभ्योप्यवरामनुष्योत्तमाज्ञेयाः। 'भूपामनुष्यगंधर्वादेवाःपितरएवच। आजाने

**जीवेशयोर्भिदा चैव जीवभेदः परस्परं ॥ जडेशयोर्जडानां च जडजीवभिदा तथा ॥ ७० ॥ पंचभेदा इमे नित्याः सर्वावस्थासु सर्वेशः ॥ मुक्तानां च न हीयंते तारतम्यं च सर्वदा ॥ ७१ ॥ क्षितिपा मनुष्यगंधर्वाः देवाश्च पितरश्चिराः ॥ आजानजाः कर्मजाश्च देवा इंद्र पुरंदरः ॥ ७२ ॥ रुद्रः सरस्वती वायुर्मुक्ताः शतगुणोत्तराः ॥ एको ब्रह्मा च वायुश्च वींद्रो रुद्रसमस्तथा ॥ ७३ ॥ ॥ ॥ ॥**

याःकर्मदेवास्तत्त्वरूपाःपुरंदरः। शिवोविरिंचइत्येतेक्रमाच्छतगुणोत्तराः। मुक्तावपितदन्येये भूपाच्छतगुणावरा' इतिगीतातात्पर्योक्तेः। 'देवऋषिपितृपनराइतिमुक्तास्तुपंचधे' तितत्त्वसंख्यानोक्तेश्च। एतच्छब्दार्थःयजुःसंहितायां। 'तस्माच्छतगुणानंदागंधर्वामानुषात्मकाः। मुक्त्याश्रुतिफलंप्राप्तास्ततःकामाहतास्तथा। तेभ्यःशतगुणानंदादेवप्रेष्यास्तु मुख्यतः। एतेहिदेवगंधर्वामुक्तेभ्यस्तेभ्यएवच। शताधिकाहिपितरस्तेभ्यआजानदेवताः। अनाख्यातादेवतास्तुजातादेवकुलेचयाः। आजानदेवतास्ताहितेभ्योग्र्याःकर्मदेव ताः। बल्याद्याअंतराप्राप्तदेवताःकर्मदेवताः। ताभ्यश्चतात्त्विकादेवाःसृष्ट्यादौदेवतांगताः। तेभ्योदक्षस्त्विंद्रनामासहिंदुशवयत्पुरा। तस्माद्बृहस्पतिर्नामामहेंद्रत्वात्पुरंदरः तस्मात्प्रजापतिर्मुक्तोरुद्रःप्रजननेशिते'ति। अत्रदेवगंधर्वेषुअष्टोत्तरशतंविनापितृभ्यःशतावराः। तत्राष्टगंधर्वाःकर्मदेवसमाःशतमाजानदेवसमास्तदुक्तंबृहद्भाष्ये। 'कर्मदे वगणांअष्टगंधर्वास्तत्परेशतं। आजानदेवास्तेभ्योन्येपितृभ्यश्चशतावराइति। तथापितृषुअष्टौविनापितरःआजानदेवेभ्यःशतावराःतदुक्तं। 'आजानेभ्यस्तुपितरोह्यष्टभ्योन्ये

ज्ञातारा' इतिबृहद्भाष्ये । तत्रसप्तपितरःकर्मदेवसमाः । एकस्तुब्रह्मपुत्रसमः । तदुक्तं । 'पितॄणांसप्तकंयत्तत्कर्मदेवसमंमतं । विश्वामित्रोब्रह्मपुत्रसमोमुनिरुदाहृतः'। आचार्यः पितॄणांचासौपितृभिःसहपठ्यत इतिबृहद्भाष्ये । ननु ब्रह्मवीन्द्रशेषाःकुतोनोक्ताइत्यतआह । एकइति । ब्रह्मावायुश्चैकःवायोरेवभविष्यद्ब्रह्मत्वात्पूर्ववायोर्वाइदानींतनब्रह्मत्वाद्वैकइत्युक्तिः रुद्रःशेषस्तथैकः यथाब्रह्मवायूतथैकः मुक्तेषुकश्चिद्वायुनानसमः । श्रीर्वायोःसकाशाद्गुणैःसहस्रगुणितातदेतत्सहस्रंतत्सर्वमितिश्रुत्यासहस्रशब्दस्यबहुत्ववाचित्वादत्रकोटिपरः। तदुक्तंबृहद्भाष्येः । 'तेभ्य स्तुश्रीर्विमुक्तेभ्योगुणैःकोटिगुणोत्तरे'ति॥७२॥७३॥७४॥ततःलक्ष्म्याःसदामुक्तौसंसारावस्थायांचइत्यादिएवमादिउच्चैस्तात्पर्यपूर्वकमुत्कर्षंसर्वोत्तमत्वंवक्ति वदति ॥ ७५ ॥ उदाहृतवाक्यानांस्वोक्तार्थेतात्पर्याभावेनैतत्सिध्यतीत्यतःतत्रतात्पर्यसद्भ प्रमाणंसूचयन्नाह । तात्पर्यमिति । तेनविष्णुनास्वयंस्वेनकृष्णरूपेणाऽत्रविष्णोर्गुणोत्कर्षेमहातात्पर्यं योमामिति ।'योमामेवमसंमूढोजानातिपुरुषोत्तमं । ससर्वविद्भजतिमांस ावेनभारते'त्यनेनोक्तं । यएवंक्षराक्षरातीतत्वेनपुरुषोत्तमंमांजानातिससर्ववित्सर्वज्ञः। सर्वज्ञत्वंचनेश्वरवत्सर्वज्ञानेनपुरुषोत्तमत्वस्यासर्वात्मकत्वात् । किंतु ऋगादिसर्वशास्त्रार्थ नपुरुषोत्तमत्वस्य तथाच पुरुषोत्तमत्वंसर्वशास्त्रप्रतिपाद्यंतेनपुरुषोत्तमत्वज्ञानेनसर्वशास्त्रज्ञत्वंभवतीतिभावः । ननु क्षराक्षरातीतत्वेनपुरुषोत्तमइतिनकोपिजानाति । अपितु अश्वकर्णादिवत्संज्ञात्वेनैवजानातीत्यतआह ।

**एको रुद्रस्तथा शेषो न कश्चिद्वायुना समः ॥ मुक्तेषु श्रीस्तथा वायोः सहस्रगुणिता गुणैः ॥ ७४ ॥ ततोनंतगुणो विष्णुर्न कश्चित्तत्समः सदा ॥ इत्यादि वेदवाक्यं विष्णोरुत्कर्षमेव वक्त्युच्चैः ॥७५॥ तात्पर्यं महदत्रेत्युक्तं यो मामिति स्वयं तेन ॥ भूम्नो ज्यायस्त्वमित्युक्तं सूत्रेषु निर्णयात्तेन ॥७६॥ तत्प्रीत्यैव च मोक्षः प्राप्यस्तेनैव नान्येन ॥७७॥**

असंमूढइति । मूर्खश्चेन्नजानातिमाजानातुमोहरहितस्तुवेत्स्यतीत्यर्थः । सर्वभावेनसर्वप्रकारेणमांभजतिचगुणोत्कर्षवेत्तुःफलकथनेनसर्वागमानांगुणोत्कर्षेतात्पर्यंसूचितंभवति । तेनवेदव्यासेननिर्णयान्निर्णयंकृत्वा सूत्रेषुबहुसूत्रात्मकेशास्त्रेभूम्नोज्यायस्त्वमिति गुणोत्कर्षेतात्पर्यमुक्तं । इदंव्याख्यातंजयतीर्थार्यैर्मायावादखंडने । सर्वगुणेषुभूमगुणस्यज्यायस्त्वंमुख्यतोवेदप्रतिपाद्यत्वमितिसूत्रार्थोत्राभिप्रेतइत्यनेन । यद्यपिभाष्येभूमगुणस्योपास्यत्वेइदंसूत्रं । तथापिव्याख्यानांतरंज्ञेयं । अतएवजयतीर्थार्यैरत्रेत्युक्तं । समस्तसूत्रार्थस्तुसर्वगुणेषुभूम्नःज्यायस्त्वंवेदमुख्यप्रतिपाद्यत्वं । क्रतुवद्दीक्षाप्रापणीयोदयनीयसवनत्रयावभृथयुक्ताग्निष्टोमस्येव । तथाहिदर्शयति । सर्वोत्कर्षेदेवदेवस्यविष्णोर्महातात्पर्यंनैवचान्यत्रसत्यं । अवांतरंतत्परत्वंतदन्यत्सर्वागमानांपुरुषार्थस्ततोहीति ॥ ७६ ॥ यस्यप्रसादात्परमार्तिरूपादस्मात्संसारान्मुच्यतेनापरेणेतिश्रुत्यर्थंसूचयन्सर्वोत्कर्षेतात्पर्यमित्यत्रयुक्तिमाह । तत्प्रीत्येति । तेनैवहरिणैवतस्यहरेःप्रीत्यैवमोक्षःप्राप्यः । अन्येनहरेरन्येनस्वतंत्रेणान्येनप्रीतिरन्येनप्रवचनादिनाचनप्राप्यः । मोक्षःसर्वप्राप्यःपुरुषार्थस्तस्यचसिद्धौहरिःसाधनंसिद्धंचसाधनंप्रीत्याख्यव्यापारवत्कार्यं प्रीतिर्हिगुणोत्कर्षज्ञानसाध्यातदर्थंचश्रवणंशास्त्रस्य । यदि शास्त्रतात्पर्यंगुणोत्कर्षेनस्यात्तदा

शास्त्रजिज्ञासाविधीयमानाव्यर्थास्यात्तदार्थानुपपत्त्याशास्त्रस्यगुणोत्कर्षेतात्पर्यंज्ञेयं । तथाचश्रुतिः । नतादृशीप्रीतिरिड्यस्यविष्णोर्गुणोत्कर्षज्ञातरियादृशीस्यात् । तत्प्रीणनान्मोक्षमाप्नोतिसर्वस्ततोवेदास्तत्पराः सर्वएवे ति ॥ ७७ ॥ नान्येनेत्यस्यव्यावर्त्यंप्रदर्शयन्प्रीतहरेर्मोक्षसाधनत्वंप्रतिपादयच्छ्रुतिमुदाहरति । नायमिति । प्रवचनंव्याख्यानंश्रुतंश्रवणंअयमात्माप्रवचनादिनानलभ्यः किंतु यंपुरुषमेषपरमात्मागुणोत्कर्षज्ञानात्स्नेहरूपयाप्रीत्यामदीयोयमितिवृणुतेस्वीकरोतितेनपुरुषेणैवलभ्यस्तस्यपुरुषस्यैवपरमात्मास्वांतनूंकेवलसच्चिदानंदात्मिकांजीवतनुंबिंबभूतांस्वमूर्तिंचविवृणुते प्रकटीकरोत्यतोगुणोत्कर्षज्ञानात्स्नेहरूपयाप्रीत्याविष्णोर्मोक्षदातृत्वात् सर्वागमानांश्रीविष्णोर्गुणोत्कर्षएवमहातात्पर्यमस्तीत्यर्थः ॥७८॥ विष्णुर्मोक्षदातेत्याद्यर्थेभविष्यत्पर्ववचनमाह । विष्णुर्हीति । चशब्दात्रमापिदात्री । उक्तमोक्षादीनांसमुच्चयेएकश्चकारः। द्वितीयोमुक्तभ

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ॥ यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वां ॥७८॥ विष्णुर्हि दाता मोक्षस्य वायुश्च तदनुज्ञया ॥ मोक्षो ज्ञानं च क्रमशो मुक्तिगो भोग एव च ॥७९॥ उत्तरेषां प्रसादेन नीचानां नान्यथा भवेत् ॥ सर्वेषां च हरिर्नित्यं नियंता तद्वशाः परे ॥८०॥ तारतम्यं ततो ज्ञेयं सर्वोच्चत्वं हरेस्तथा ॥ एतद्विना न कस्यापि विमुक्तिः स्यात्कथंचन ॥८१॥ पंचभेदांश्च विज्ञाय विष्णोः स्वाभेदमेव च ॥ निर्दोषत्वं गुणोद्रेकं ज्ञात्वा भक्तिर्न चान्यथा ॥८२॥ अवतारान् हरेर्ज्ञात्वा नावतारा हरेश्च ये ॥ तदावेशांस्तथा सम्यग् ज्ञात्वा मुक्तिर्न चान्यथा ॥८३॥ सृष्टिरक्षाहृतिज्ञाननियत्यज्ञानबंधनात् ॥ मोक्षं च विष्णुतस्त्वेव ज्ञात्वा मुक्तिर्न चान्यथा ॥ ८४ ॥ ॥ ॥ ॥ ॥

क्तिवैराग्यादीनां । क्रमशःक्रमेणउत्तरेषांश्रेष्ठानांसर्वेषांप्रसादेनैवमोक्षादिर्भवति । एवशब्दव्यावर्त्यमाह । अन्यथातदभावेनभवेदितिअत्रापिस्वांतर्यामिप्रेरणयेतिग्राह्यंतदेवाह । सर्वेषामिति ॥७९॥८०॥ ततःउत्तरोत्तरज्ञानार्थं । तथाशब्दसमुच्चये । यद्वा ततस्तदर्थमुत्तयर्थं । विपक्षेबाधकमाह । एतदिति ॥८१॥ नकेवलंविरिंचरमादीनां तारतम्यज्ञानात् विष्णोःसर्वोत्तमत्वज्ञानाच्चमुक्तिःस्यात् । किंतु पंचभेदादिज्ञानंभक्तिश्चापेक्षितेत्याह । पंचेति । स्वाभेदंस्वावयवानांस्वावताराणांअभेदमेवज्ञात्वानतुभेदाभेदांस्थितस्येतिशेषः ॥ ८२ ॥ येहरेर्नावताराअवताराभिन्नास्तांश्चज्ञात्वेतिसंबंधः । चशब्देनदेवावतारानवतारांश्चज्ञात्वेतिग्राह्यं ॥ ८३ ॥ रक्षापालनं बंधनंबंधः । यद्वा । बंधनंबंधोयैस्तेकामक्रोधादयः । कारणैः कार्यमुपलक्ष्यते । विष्णुतएवस्वातंत्र्येणतुअन्येभ्यस्तदाज्ञयातत्प्रेरणयाच ॥ ८४ ॥ ॥ ॥ ॥

इतिहासशब्देनमहाभारतंरामायणंचग्राह्यं । कुरुपांडवन्यायेन । विष्णुपरानेवमुख्यतःविष्णुपरान् ॥ ८५ ॥ माहात्म्यज्ञानपूर्वः । माहात्म्यं जगत्सर्जनादिसुषुप्त्यादिदातृत्वंतज्ज्ञानपूर्वःसुदृढःमरणेप्यचाल्यःसर्वतःस्त्रीपुत्रादिभ्यः ॥ ८६ ॥ तत्रयःकोप्येतत्ज्ञानान्मुच्यते किमित्याशंकायांतद्योग्याएवमुच्यंते नेतरइत्युत्तरमभिसंधाय । अथवा योग्यानामेवसाधनंभवतीतिवक्तुंतद्योग्यानयोग्यान्वक्तुंजीवविभागमाह । त्रिविधाइति । धाप्रत्ययेनावांतरभेदोप्यस्तीतिज्ञापयति । देवमानुषदानवाइति । त्रैविध्यकथनंमानुषेष्वपित्रैविध्यंज्ञेयं । मुक्तियोग्याःकेइत्यतोमुक्तियोग्यानाह । तत्रेति । तत्रतेपुत्रिविधेषुसृतियोग्यानाह । मध्यमाइति ॥८७॥ सदैवसृतियोग्याःसंसारयोग्याहि निरयतमोयोग्यानाह । अधमाइति । अधमामानुषानिरयायैव तामिस्राख्यनरकायैवगच्छंति दानवाःअसुराःतमस्येवलीयंतेलीनाभवंतीतितमोलयाः । तमअंधतामिस्रंलयाआलयोयेषामितिवा ॥ ८८ ॥ ननु मुक्तितमसोर्नाशानंतरमेतेषांकुत्रावस्थानमित्यतआह । मुक्तिरिति । तमश्चनियमेव एतयोर्मुक्तितमसोःसकाशात्पुनरावृत्तिर्न 'नसपुनरावर्तते

वेदांश्च पंचरात्राणि सेतिहासपुराणकान् ॥ ज्ञात्वा विष्णुपरानेव मुच्यते नान्यथा क्वचित् ॥ ८५ ॥ माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोधिकः ॥ स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा ॥ ८६ ॥ त्रिविधा जीवसंघास्तु देवमानुषदानवाः ॥ तत्र देवा मुक्तियोग्या मानुषेषूत्तमास्तथा ॥८७॥ मध्यमा मानुषा ये तु सृतियोग्याः सदैव हि ॥ अधमा निरयायैव दानवास्तु तमोलयाः ॥ ८८ ॥ मुक्तिर्नित्या तमश्चैव नावृत्तिः पुनरेतयोः ॥ देवानां निरयो नास्ति तमश्चापि कथं च न ॥ ८९ ॥ नासुराणां तथा मुक्तिः कदाचित्केनचित्क्वचित् ॥ मानुषाणां मध्यमानां नैवैतद्द्वयमाप्यते ॥ ९० ॥ असुराणां तमःप्राप्तिस्तदा नियमतो भवेत् ॥ यदा तु ज्ञानिसद्भावे नैव गृण्हंति तत्परं ॥ ९१ ॥

वब्रमनंतमि'तिश्रुतेः । देवानांपापकर्मणानिरयादिभवतिकिमित्यतआह । देवानामिति । कथंचनमहतापातकेनापि ॥ ८९ ॥ दैत्यानांपुण्येनकर्मणास्वर्गवन्मुक्तिर्भविष्यतीत्यतआह । नेति । देवानांयथानरकादिनास्ति तथादैत्यानांमुक्तिर्नास्तीतिदृष्टांतेतथाशब्दः । अथवा मुक्त्यभावतमःप्राप्त्योःसमुच्चये कदाचित्कस्मिंश्चित्कालेकेनचिदुपायेनक्वचिद्देशेनभवति । ननु तर्हिमध्यमानांकागतिरित्यतआह । मानुषाणामिति । एतद्द्वयंमुक्तिस्तमइतिद्वयं मानुषाणामितिषष्ठी तृतीयार्थे स्वर्गनिरयभूगोचराइत्यर्थः ॥ ९० ॥ ननूक्तनियमएवास्तु तथाप्यसुराणांतमःप्राप्तिनियमःकदास्यादित्यतआह । असुराणामिति । ज्ञानिसद्भावेद्वात्रिंशल्लक्षणादिलक्षणलक्षितज्ञानिनः । उपदेशकस्यसद्भावेपरंसर्वोत्तमं तद्ब्रह्मनगृण्हंतितदातेषां असुराणांतमप्राप्तिर्नियमेनभवेत् । तदनंतरंसंचितकर्माकरणं तद्भोगःप्रारब्धस्यैवभोगइतिज्ञेयं । ननु देवादियोग्यानां सद्गुरूपदेशग्रहणानंतरंमुक्तिर्नियमःकिमित्यतआह । तदेति । देवानांतुस्वस्ययोग्योपासनयातद्योग्ययापरोक्षज्ञानयोग्यया । तन्वास्वस्यबिंबमूर्त्याप्रत्यक्षगोहारिभेव

शमदमादयःप्रकाशंतेतस्यविशेषणं । महानात्माज्ञानंयस्येति ॥१०५॥ दानादयःभक्तिकारणानिभक्तिरेवमुक्तिसाधनमित्यत्रश्रुतिमुदाहरति । भक्त्यर्थानीति । भक्त्यर्था न्येवेत्यन्वयः । ननु फलप्राप्तिपर्यंतंभक्तिस्तदनंतरंसानिवर्ततइत्यतआह । मुक्तानामिति । मुक्तानामपिभक्तिरस्तिहि । साकथंतिष्ठतीत्यत्राह । नित्येति ॥ १०६॥ भक्ति लक्षणमाह । ज्ञानेति । माहात्म्यज्ञानपूर्वःस्त्रीपुत्रादिभ्यःपरःश्रेष्ठःस्नेहःसुदृढः तमेवमित्यादिवेदवाक्यंसाधनप्रविधायकंभवतीतिशेषः॥१०७॥ इदानींपूर्वोक्तार्थेष्वेवपुराणवा क्यान्युदाहरति । निःशेषेति । हेहरेतेभक्तःनिःशेषधर्मकर्तापिब्रह्महापिभक्तश्चेत् ॥१०८॥अच्युत तवभक्तैःकृतअधर्मोपिअधर्मवत्प्रतीयमानःब्रह्महत्यादिःधर्मःधर्मसाध्य फलसाधनंभवति । नभक्तैःअभक्तैःभक्तविरोधिभिर्वाकृतःधर्मोपियज्ञादिःपापंपापफलसाधनंभवति ॥१०९॥ एवंविधःविश्वरूपअहमनन्ययारमाब्रह्मादिषुक्रियमाणाया भक्तेरतिशयितयाभक्त्यातत्वेनयथावत्परोक्षेणज्ञातुं अपरोक्षेणद्रष्टुंमुक्तौप्रवेष्टुंशक्यः । इदंप्रमाणत्रयंभक्तेर्मोक्षसाधनत्वे ॥ ११० ॥ मोक्षसाधनमुक्त्वातमःसाधनमा

**भक्त्यर्थान्यखिलान्येव भक्तिर्मोक्षाय केवला ॥ मुक्तानामपि भक्तिर्हि नित्यानंदस्वरूपिणी ॥ १०६ ॥ ज्ञानपूर्वः परः स्नेहो नित्यो भक्तिरितीर्यते ॥ इत्यादि वेदवचनं साधनप्रविधायकं ॥१०७॥ निःशेषधर्मकर्ताप्यभक्तस्ते नरके हरे ॥ सदा तिष्ठति भक्तश्चेद्ब्रह्महापि विमुच्यते ॥ १०८॥ धर्मो भवत्यधर्मोपि कृतो भक्तैस्तवाच्युत ॥ पापं भवति धर्मोपि यो नभक्तैः कृतो हरे ॥ १०९ ॥ भक्त्या त्वनन्यया शक्य अहमेवंविधोर्जुन ॥ ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥ ११० ॥ अनादिद्वेषिणो दैत्या विष्णौ द्वेषो विवर्धितः ॥ तमस्यंधे पातयति दैत्यानंते विनिश्चयात् ॥१११॥**

ह । अनादीति । दैत्याअनादिद्वेषिणइतितेषांस्वरूपकथनं । तेनमोक्षोपितादृशोज्ञेयः । विष्णौविवर्धितःसम्यगेधितोद्वेषःदैत्यानंतेद्वेषसमृध्यनंतरं विनिश्चयादंधेतमसि पातयति । यद्वा अंतेब्रह्मदिनप्रलयांते । 'आभूतसंप्लवाज्जन्मजीवेशत्वंविजानतः। ततःपतत्यधोयस्मादुत्थानंनैवतुक्वचिदि' तिएकादशस्कंधतात्पर्यादस्यार्थः । जीवेशत्वं विजानतःद्वेषपूर्त्यनंतरमारब्धभोगार्थयज्जन्मतदाभूतसंप्लवाद्दिनप्रलयपर्यंतांदिनप्रलयादर्वाक्यथायोग्यंकेषांचिदुक्तोक्तकालेकेषांचित्कलिपातकाले । नतुतदूर्ध्वमारब्धभोगः यथासतांसर्वेषांशतब्रह्मकालादर्वाक् । ततःप्रारब्धभोगानंतरंसंयमनीभोगानंतरं । तमःपातइति । येदैत्येषुनीचाःतएवकलिनासहतमःगच्छंति । नतुश्रेष्ठाःइदमुक्तंस्कांदे। 'दैत्यानामेवसर्वेषांयदाकलियुगात्ययः॥ कलिनासहगच्छंतिनीचायेनिरयालयाः' इति । कलियुगात्ययः। कलेःपूर्वकलेःयुगेनकालविशेषेणाभिमानलक्षणसंबंधस्यात्ययो अभावोयदा । यद्वा कलिनायुक्तकालेनयोगःसंबंधस्तस्यात्ययोसम्यक्नाशःब्रह्मरात्र्यंते अथवा दिनांतेब्रह्मरात्रौकलेःसुप्तत्वात् । कालाभिमानिनःकालेनसंबंधाभावात्

इदमप्युक्तं । 'सुप्ताःसृतिस्थाःसर्वेंपितमोगाअपिसर्वेश' इति तदासर्वेषांदैत्यानांमध्येयेनीचाः प्रारब्धभोगार्थंनिरयगास्तेकलिनासहतमःगच्छंति । स्वांगतिंनिरयालया
इतिपाठंकल्पयंति । तत्रषष्ठ्याअनन्वयः । अतएवोक्तमाचार्यैः 'द्वेषात्ससर्वजगदेकगुरोस्स्वकीयैःपूर्वप्रमापितजनैःसाहितःसमस्तैः । धान्यादिभिःप्रतिययौकुमतिस्तमोंधम
न्येपिचैवमुपयांतिहरावभक्ता' इति । तथा 'समांत्रिभिर्मंत्रिपुत्रैःसमेतोजगामकृष्णाविज्ञयांधंतमश्च' तथा 'सचब्रह्माहंवासुदेवोस्मिनित्यमितिज्ञानादगमत्तत्तमोंधं । साहाय्यकृ
च्चास्यचकाशिराजोयथैवाकिर्मीराहिडिंबसाल्वाः । अन्येचदैत्याअपतंस्तमोंधंतथैवसोप्यपतत्पापबुद्धिरि' त्यादिना एतस्यनिश्चयपरत्वेनव्याख्यानेशेषायास्यंतिइत्यादिप्रयो
गविशेषानस्युः भूतसंप्लवस्तुदिनप्रलयइत्युक्तंविष्णुपुराणे । तथाहि । 'आभूतसंप्लवंस्थानममृतत्वंविभाव्यते । त्रैलोक्यस्थितिकालोयमपुनर्मारउच्यते १ब्रह्महत्याश्वमेधा
भ्यांपुण्यपापकृतोविधिः । आभूतसंप्लवात्तत्तुफलमुक्तंतयोर्द्विज २ यावन्मात्रप्रदेशेतुमैत्रेयावस्थितोध्रुवः । क्षयमायातितावत्तभूमेराभूतसंप्लव' इति ३ अस्यार्थः आभूतसंप्लवं
आसम्यक्भूतानांसंप्लवोवस्थानंयस्मिन्तत्स्वस्थानंममृतमत्वममृतामितिविभाव्यतेउपचर्यते । चिरकालस्थायित्वात् । उपचारेबीजमाह । त्रैलोक्येति । भूम्यादिलोकत्रय
स्यस्थितिकालोयंब्रह्मणःदिवसअपुनर्मारःपौनःपुन्येनभृशंवामृत्युशून्यउच्यते । तस्माल्लोकत्रयनाशाभावात् उपचारादमृतत्वमित्यर्थः । प्रसंगादस्यैवपुण्यपापभोगावधित्वमा
ह । ब्रह्महत्येति । अत्रयथायोग्यंसंबंधःअश्वमेधब्रह्महत्याभ्यांपुण्यपापकृतःपुरुषस्यत्रैलोक्यावस्थितिः कालः विधिर्विधीयतेऽवधित्वेनेतिविधिःपुण्यपापकृतोःफलभोगाव
धिरित्यर्थः । तदेवस्पष्टयति । आभूतेति । तत्तस्मात्तयोःपुण्यपापयोःफलंआभूतसंप्लवाद्दिनप्रलयपर्यंतं । तदुक्तं एकादशस्कंधतात्पर्ये । 'महापातकजन्यंचकल्पावधि
समीरितमि' ति । दिनप्रलयेजलप्रलयावधिमाह । यावदिति । भूमिमारभ्यध्रुवोपलक्षितस्वर्गांतंलोकत्रयंनश्यतीत्यर्थः । एतस्यमहाप्रलयपरत्वेत्रैलोक्यस्थितिकालइति ।
तथाध्रुवपर्यंतंलोकनाशकथनं । महापातकजन्यमितितात्पर्यंचविरुध्येत यत्तु 'आभूतसंप्लवंह्येतदहोरात्रंप्रभोःस्मृतं । त्रैलोक्येशानिसत्वानिस्थावराणिचराणिच । आभू
तेभ्यःप्रलीयंतेतस्मादाभूतसंप्लवः । अग्रेभूतःसभूतानांतस्माद्भूतःप्रजापतिः । आभूतात्प्लवंतेवैतस्मादाभूतसंप्लवः' । इतिवचनादाभूतसंप्लवशब्दोमहाप्रलयवाचीतिचेत्
न नात्रप्रभूशब्देनहरिरभिधीयते अपितु चतुर्मुखएवोच्यते । येनमहाप्रलयवाचीस्यात्तथाचास्यार्थः । एवंब्रह्मणःएतदहोरात्रमाभूतसंप्लवइतिस्मृतंहि । आभूतशब्दंनि
र्वक्ति त्रैलोक्येशानीति । यस्मात्स्थावराणिचराणिसत्वानिभूतेभ्यःआभूतपर्यंतंपंचभूतानिविनाप्रलीयंतेतस्मादाभूतसंप्लवइत्युच्यते । प्रकारांतरेणआभूतशब्दंनिर्वक्ति ।
अग्रेइति । सप्रजापतिःभूतानामग्रेआदौभूतोजातःतस्मात्प्रजापतिर्भूतःआदौजातत्वमत्रभूतशब्दप्रवृत्तिनिमित्तमित्यर्थः । भूतात्प्रजापतेःसत्वानिआप्लवंतेनश्यंतिवै ।
यद्वा आभूतादित्यत्रआ भूतादितिपदच्छेदः । आपदंउभयत्रसंबध्यतेआभूतःआभूतादिति तेनअग्रइतिभूतोजातइतिआभूतपदंव्याख्यातंभवति । आभूताद्ब्रह्म
णइतितस्मादाभूतसंप्लवशब्देन दैनंदिननाशउच्यते । चशब्दःनिरुक्तिसमुच्चये अस्तुवाप्रभुशब्दःहरिपरः तथाप्यत्रत्यस्यशतवर्षपरत्वेपिनसर्वत्रविद्यमानआभूतशब्दःश
तवर्षपरः तथाच । व्याख्यानमस्यआभूतसंप्लवः प्रभोर्हरेःअहोरात्रंस्मृतमित्यन्वयः । पूर्वोक्तप्रकारेणाभूतसंप्लवशब्दानिर्वचनेन ब्रह्मदिनेआभूतसंप्लवशब्दवृत्तेःसत्वा'न्नित्य

स्यापिहरेःकालोहिपरार्धात्मकस्त्वयं अहश्चासौनिमेषश्चेत्यप्रवृत्योपचर्यते' । इत्येतन्मानविरोधात्कथंहरिदिनत्वंआभूतसंप्लवशब्दस्येत्याशंकायां त्रैलोक्येशानीत्यादिना
योगकथनंतेनाभूतसंप्लवशब्दस्यब्रह्मदिनेरूढेःसत्वेपिशतवर्षयोगस्यसत्वात् । शतवर्षपरत्वंनतुसर्वत्रशतवर्षपरत्वमिति यदुक्तं 'वृषभद्रावहःपुमान् आभूतसंप्लवात्स्वर्गप्रल
यावच्छ्रुतेवश'इत्युक्ता । धातूपप्लवआसन्नइत्यादिना । तत्त्वल्पयोक्तेराभूतसंप्लवशब्दस्यमहाप्रलयपरत्वमिति तन्न राज्ञापरस्यविष्णोरित्यादिना सृष्टिप्रलयविषयेप्रश्नेकृते ।
अंतरिक्षएभिर्भूतानीत्यादिनासृष्टिमुक्ता । प्रसंगाज्जीवस्यईश्वरत्वज्ञानिनः मन्यमानइत्यनेनतमःप्राप्तिमुक्ता । तदेवकर्माणीत्यनेनउपपाद्य तमःप्राप्तिकालावधिमाभूत
संप्लवादित्यनेनोक्ता । सृष्टिकथनानंतरं धातूपप्लवइत्यादिनामहाप्रलयमुक्तवान्नतु आभूतशब्दार्थयेनतदर्थस्यात् । यत्पुनरुक्तं । वैवस्वतकालीनपौंड्रकवासुदेवस्यपंचमता
त्पर्यं । अर्हतरूपेणस्वायंभुवमन्वंतरे अवस्थानकथनाद्दिनद्वयावस्थानप्राप्तेर्दिनमात्रावधिकथनस्यभग्नत्वाच्छतवर्षस्यैवावधित्वं । तथाचतात्पर्यंब्राह्मं ।"ज्ञानानंदात्मकोदेहो
ऋषभस्यमहात्मनः । तादृशेनैवमनसाचरंश्चकुटिलाचले । दावाग्निमनुविश्याथतत्रस्थःप्रादहज्जगत् । एवमग्नेरभिव्यक्तःतथाविष्णुःसनातनः । ऋषभत्वेनसंगोप्यधर्मान
द्यापितत्रगः। आस्तेसवासुदेवात्मावासुदेवोहमित्यजः । सदास्थितःस्थितंतांतुश्रुत्वाहंदुरात्मवान् । पूर्वंतुपौंड्रकोनामवासुदेवःसदुर्मतिः । जातिस्मरोहियाशास्त्रंपाषंडं
निर्ममेतुयः । एकंतुवासुदेवाख्यंवासुदेवोहमित्यपि । कुत्सितंवासुदेवत्वप्रतिपादकमात्मनः । लोकार्थंचापरमपिचकाराहंतनामकं । तत्प्रशिष्यःकमुर्नामनजानंस्तन्मतं
परं । वासुदेवात्मतांसर्वजीवानामवदत्कुधीः । कर्माख्यंशास्त्रमकरोदभेदप्रतिपादकं । कुशास्त्रंसर्ववेदानांविरुद्धंतामसालयं । तंदृष्ट्वाद्यापिवर्तंतेवर्तिष्यंतिकलौयुगे । अ
शौचाअव्रताचारावासुदेवोहमित्यपि'इति । नतुदिनमात्रस्येतिचेन्नअर्थानवबोधात्तथाहि । ऋषभकथायाःस्वायंभुवकालीनत्वेपिनार्हतस्यतत्कालीनत्वं । किंतु वासुदेवमृत्य
नंतरंद्वापरएववासंधौवार्हतोजन्मतस्यऋषभोपास्तिकथाश्रवणमद्याप्यास्तइत्युक्तेरन्यद्वारावासाक्षाद्वासंभवति । तंदृष्ट्वाद्यापिवर्तंतेवर्तिष्यंतिकलौयुगे । इत्यपिद्वापरसं
धौवाजननात्संगच्छते । तथाच । समग्रतात्पर्यार्थः । इदंचतस्यहवाइत्यारभ्यप्रायेणभविष्यतीत्येतस्यतात्पर्यं । योगमायायाःप्रकृतेःअवसानंसमाप्तिर्यस्मिन्नप्राकृतइत्यर्थः ।
योगसामर्थ्यस्यावसानंकालोत्कर्षोयस्येतिअस्येदंतात्पर्यं । ज्ञानानंदात्मकइति । मुक्तलिंगस्यभगवतइत्येतयोर्महात्मनइति । अभितोमानंज्ञानंतस्यावभासः प्रकाशोयस्ये
त्यस्यतात्पर्यं । तादृशेनज्ञानानंदात्मकेनैवमनसेतिसहतेनददाहेत्यस्यतात्पर्यं । दावाग्निरित्यादितत्रस्थःअग्निस्थःएतेनतेनऋषभेणसहसहितइतिव्याख्यातं । जगदितिक
र्माध्याहारः । ननु कालांतरभाविनःजगन्नाशस्येदानीमेवसमापितावतारस्यऋषभस्यकथंकारणत्वंकथंवाएतस्मात्कलौदुर्मतप्रवृत्तिरित्यतस्तदुपपत्तिप्रकारमाह । एवमग्ने
रिति । एवंदावाग्निप्रवेशेनतत्स्थअग्निस्थःसनातनःनित्यःविष्णुःव्याप्तःअग्नेःसकाशात्पृथगभिव्यक्तोभूदित्यन्वयः । तेनजगन्नाशनिमित्तत्वमुपपादितंभवति । यःअजः
जन्मरहितःऋषभत्वेनधर्मान्संगोप्यतत्रगःअग्निगःअद्याप्यास्ते । सवासुदेवात्मावासुदेवाभिन्नःवासुदेवोहमिति । उपास्तिंसदास्थितःअनेनेदानीमपिसत्वादुपास्तिश्रव
णंसंगच्छतइतिभावः तत्रगइति । क्वचित्तत्रतन्नाम्नावपि अद्याप्यास्तइत्यर्थः । दुरात्मवान्दुष्टज्ञानवान् तस्यपूर्वस्वरूपमाह । पूर्वमिति । उपास्तिश्रवणानंतरंकिंचकारे

स्यतआह । जातीति । जातौजन्मनित्वत्कृतोपास्तिंवासुदेवोहमिति ब्रह्माहमितिउपास्तिंस्मरतीति जातिस्मरः । आत्मनःस्वस्यैवतन्मतं । स्वस्यैववासुदेवत्वप्रतिपाद
कंमतंपरंऋषभमतंच । यद्वा परंतन्मतंप्रथमत्वेनोत्तमंतन्मतंवासुदेवोहमिति । अद्यापिद्वापरांतेसंधौवा । ननु 'स्वयंवेनश्चतुर्थस्तु महातमासिपातित'इति । अहंब्रह्मेतिवेन
स्तुध्यायन्नायाधरंतमइत्यादिनावेनस्य तमःप्राप्तिमुक्का । पुनःपौंड्रकत्वेनजननमुक्का । सचब्रह्माहंवासुदेवोस्मिनित्यमितिज्ञानादगमत्तत्तमोंधमितितमःप्राप्तेरुक्तत्वात् ।
कथंपौंड्रकस्यार्हतत्वेननजननमितिचेत्सत्यं । आयाधरंतमइतिअगमत्तमइत्यादिनातमसःगमनारंभउच्यते । यथालोकेद्वारकादिगंमनारंभेद्वारकादिगतइत्यादिव्यवहा
रस्तद्वदुपपत्तेः । ननु तदानीमेवसंयमनीमननुभूयप्रारब्धमभुक्त्वातमोगमनंनसंभवति । तस्मादगमदित्यादिसाधनपूर्तिवाचकंऊर्ध्वंतुप्रारब्धभोगइतिभावः । पापिनांसर्वेषां
तमोगमनंनियतमित्युक्तं । सूत्रादौतथाहि । संयमनेत्वनुभूयेतरेषामारोहावरोहौ'तद्गतिदर्शनात्'। इतिसूत्रं तेषामनिष्टकारिणामेवंविधगतेःश्रुतिसिद्धत्वादित्यर्थः । श्रुतिश्च ।
'सर्वेवाएतेअशुभकृतःसंयमनेप्रपतंतितत्रहियेपराद्वेषोगुरुद्विषःश्रुतिद्विषस्तदवमंतारःशठामूर्खाइतितेवैततोवरुद्ध्यतमसिप्रपतंतिनैवैतेउत्तिष्ठंतेपिकर्हिचिद्व्रंवाएतदित्याहुः।
अथयेन्येब्रह्मद्विषस्तेनासुरापाइतितेवैतदनुभूयेमंलोकमनुव्रजंतीति' । स्मृतिश्च । 'गच्छंतिपापिनःसर्वेनरकंनात्रसंशयः । तत्रभुक्त्वापतंत्येव येद्विषंतिजनार्दनं । महातमसि
मग्नानां नतेषांमुत्थितिःक्वचित् । इतरेषांतुपापानां व्युत्थानंविद्यतेपिच । सुखस्यानंतरंदुःखंदुःखस्यानंतरंसुखं । इतिसर्वत्रनियमःपंचकष्टेतुतत्सदे'ति । आरब्धभोगस्यदि
नकल्पावधेरुक्तत्वात् । तन्मध्येयस्ययावत्प्रारब्धभोगकालस्तन्मध्येउक्तजन्मादिसंभवान्नकाचिदनुपपत्तिः । यदिसंयमनीभोगकालएवजन्मादिकथनंतर्हिअंशेनभोगों
शेनजन्मेतिज्ञेयं । नन्वेवंतेषांदैत्यानांइंद्रियाद्यभिमानिनांतमःप्राप्तौपुनरिंद्रियादिव्यापारःकथमितिचेदित्थंतत्समानानांअन्येषांतत्तद्व्यापारकर्तां सत्वात्तदुपपद्यतेतदुक्तं
स्कांदे । 'तेषांचराशिसंस्थाये तन्नामानोपरेपिच । जायंतेकर्मणास्थानेतत्तत्कर्मविधायका'इति । 'कृष्णेननिहतश्चैव नरकःकर्णमास्थित'इतिवचनेनैवगतार्थं ।'अंशेनयोभुव
मगान्मणिमानितिस्मसक्रोधवंशकगणेष्वधिपोनिषाद'इति ।निषादत्वेनोक्तस्य 'सचापपापस्तमएवघोरं कृष्णद्वेषान्नित्यदुःखात्मकंतादि'त्येकलव्यस्यतमःप्राप्तिमुक्का । मणि
मांश्चपुनःकलौ जातोमिथ्यामतिंसस्यगास्तीर्थापततोधिकमिति उक्तमप्यनेनैवान्यथयितुंशक्यंयद्यपितथात्रविशेषोस्तिनिषादस्त्वंशःअंशीतुमणिमान् अंशिनिस्थिते
शस्यतमःप्राप्तिर्नसंभवति । अतएवतमःशब्दोमूलेनित्यदुःखात्मकत्वेन व्याख्यातःध्यानादौकदाचित् । स्वरूपसुखाविर्भाववत्स्वरूपदुःखस्याप्याविर्भावःसंभवति । न
च 'ततोभोगेनपुण्यंचक्षपयित्वेतरत्तथा । ब्रह्मद्विट्ब्रह्मदर्शीच तमोमोक्षमवापतुः । ब्रह्मणांशतकालात्तु पूर्वमारब्धसंक्षयः । ब्रह्मणस्त्वेवतावत्वं पंचाशद्ब्रह्मणस्तथा ।
रुद्रस्यविंशदेवस्यादिंद्रस्यार्कादिकेदश । अन्येषांब्रह्ममात्रस्यत्वंतआरब्धसंक्षयः । ब्रह्मणैवसहांतश्चपरंनारायणंव्रजेदि'त्यनेनोपपाद्योपसंहृतं। तत्रानुक्तकालविशेषाणांब्रह्म
मात्रस्योक्तेः ब्रह्मकल्पस्यावधित्वमर्थादेवसिद्धमितिवाच्यं । अत्रोपक्रमेद्वयोर्ग्रहणेपिअंतिमस्यैवप्रपंचनार्थोयंग्रंथइतिज्ञापयितुं नारायणंव्रजेदित्युपसंहृतं । तेनेदंज्ञानिपरं
नतुदैत्यपरमिति । इदंव्याख्यातंजयतीर्थार्यैः । तथाहि । ब्रह्मणांशतमित्यलुकृतस्यकालोब्रह्मणांशतकालःतस्मात्तत्समाप्तेःपूर्वमेवसर्वेषांज्ञानिनांप्रारब्धसंक्षयोभवति । अ

स्यैवविवरणंब्रह्मणस्तावत्त्वमेवब्रह्मकल्पानांशतेनैवकर्मक्षयवत्वं । ब्रह्मणइतिजातावेकवचनं । पंचाशतांब्रह्मणांकालात्पूर्वंरुद्रस्यारब्धकर्मसंक्षयः । तथाशब्दःसमुच्चये । विंशत्यब्दपर्यायोविंशच्छब्दःब्रह्मणांविंशतिरेवतदवच्छिन्नएवेंद्रस्यप्रारब्धकर्मसंक्षयकालः । अर्कादिकेदशअर्कादीनां दशब्रह्मणस्तदवच्छिन्नः कर्मक्षयकालःब्रह्ममात्रस्यैकस्यैवब्रह्मणः । अतःपरंचप्रारब्धकर्मसंक्षयानंतरमपि ब्रह्मणासहैवनारायणंव्रजेदिति । ननु ब्रह्मणःकाम्यकर्माभावात्कथंप्रारब्धकर्मवत्त्वंसत्यं वाह्यार्थविषयकामाभावेपिनित्यानंदोपयोगिकाम्यस्यसत्वात् । तद्विषयस्यभोक्तुमारब्धस्यकर्मणःप्रारब्धकर्मत्वात्तत्त्वंसंभवति । तथाचोक्तंशक्तिविवेके । ‘नित्यानंदोपयोग्यन्यकामस्योज्झितितस्तदा । बहिरर्थविनिर्मुक्त’इति । ननु नारायणतंत्रे ।‘प्रारब्धपुण्यपापस्यभोगेनक्षपणादनु । प्राप्नोत्येवनमोघोरंब्रह्मवानात्रसंशय’इत्युक्तस्य ।‘ब्रह्मणांशतकालात्तुपूर्वमारब्धसंक्षयः । नियमेनभवेन्नात्रकार्याकाचिद्विचारणे’ति । सामान्येनावधेरुक्तत्वादनेनावधिर्ब्रह्मकल्पोभविष्यतीतिचेन्न । एतस्यापिविशेषवाक्यबलाज्ज्ञानिपरत्वमेव । अथवा एतस्यसामान्यत्वाद्दैत्यविषयेआभूतसंप्लवादिति । विशेषस्यसत्वादेतज्ज्ञानिपरं । ननु ‘ऋजवोनामयेदेवाःयोग्याब्रह्मपदस्यतु । तएवशतजन्मानिविशेषोपासकाहरेः । प्राप्यब्रह्मपदंपश्चा च्छ्रियंप्राप्यानुमोदिताः । तयाततोहरिंयांतिवसंतिहरिसंन्निधौ । अनादिकालतोभक्त्याज्ञानिनस्तेनसंशयः । विशिष्टाज्ञानभक्त्यादौसर्वजीवनिकायतः । सर्वदापिविशेषेणशतजन्मप्रयत्नतः । स्वपदप्राप्तिरुद्दिष्टा ततोमुक्तिरवाप्यते । तथैवचत्वारिंशद्भिःपदंशैवंचजन्मभिः । विंशद्भिरैंद्रंदशभिरन्येषामप्युदीरिताम्’ति । षाड्गुण्यवचनेरुद्रस्यचत्वारिंशद्ब्रह्मणःकालमात्रकथनात् विरोधइतिचेत् अल्पांतरत्वादत्रापिदशाधिक्यंपूरणीयं । अथवा सत्तत्ववचनं प्रारब्धभोगपरंषाड्गुण्यवचनंतुरुद्रपदप्रापकविशेषोपास्तिपरमितिनविरोधः । दशकल्पंमोक्षविशेषतपःपरमितिपृथक्कथितं । इंद्रादीनांवर्षाणामेवकथनात्कल्पपूर्तेरभावाद्ब्रह्मणस्तुपदप्राप्तितपसःमोक्षविशेषतपसश्चैकत्वात् नपृथक्कथनंतथाचन्यायविरोधः । ‘शतंपरानभिपश्यैवदेवब्रह्माचरद्दुश्चरंयत्तपोग्र्यं । विहायरागंमनसश्चोपरिष्टात्ततोभवत्परमेष्ठीसमुक्त्वा’ति । अस्यार्थः यःब्रह्माभाविब्रह्मत्वेन ऋजुःब्रह्मादेवंविष्णुमभिपश्यैव । शतंपरान् ब्रह्मकल्पान् मनसोरागंविहाय यद्यस्माद्दुश्चरंतपोग्र्यमाचरत्तत्तपसासतपःकर्ताऋजुःपरमेष्ठीभूत्वामुक्तौउपरिष्ठउत्तमअभवत् । यद्वा मनसइतिअत्रापिसंबंधनीयंततश्चायंमनसःमनोभिमानिनोरुद्रादुत्तमअभवदित्यर्थःविशेषेणशतजन्मप्रयत्नतः स्वपदप्राप्तिरुद्दिष्टाततोमुक्तिरवाप्यतइतिसंवादात् । दशकल्पस्यमोक्षविशेषार्थतपःपरत्वमुक्तं । ‘दशकल्पंतपश्चीर्णंरुद्रेणलवणार्णवे । त्यक्त्वासुखानिसर्वाणि क्लिष्टेनलवणांभसा । शक्रेणवर्षकोटीश्चधूमःपीतोतिदुःखतः । वर्षायुतंचसूर्येण तपोर्वाक्शिरसाकृतं । सुदुःखेनसुखंत्यक्त्वा धर्मेणाकाशशायिना । पीतामरीचयेवर्षसाहस्रमतिसादरं । अतिकृच्छ्रेणकुर्वंति यत्नंब्रह्मविदोपिच । इत्येतदखिलंमोक्षविशेषाभावतःकथम्’इति । अनुव्याख्याने ।‘यत्तु लिंगाद्धातव्यतःपूर्वमृजोब्रह्मत्वतःशतात् । शुश्रावोग्रतपानामयोग्योरुद्रपदस्यगः । सार्धपरार्धविष्णोस्तुगुणान्भक्त्यासदोयतः । तन्निभागमुपासांचचक्रेसंभृतमानसः । दशमन्वंतरंशक्र पदयोग्योगरुत्मतः । पदयोग्यात्सुमनसःसुनंदोनामचाश्रृणोत् । उपासांचक्रउयुक्तोमन्वंतरचतुष्टयं । सूर्यचंद्रमसोश्चैवपदयोग्यौसुतेजसौ । सुरूपःशांतरूपश्चमन्वंतरचतुष्टयं । अश्रृण्वतांसुमनसोमन्वंतरमुपासतां । ततःप्रोक्तास्तुतेसर्वेभ

स्योग्रतपआदयः' । इत्युक्ततपःकालस्याधिकस्यविद्यमानत्वात्कथमितिचेत् । 'अपश्यन्परमंविष्णुंतत्प्रसादैधिताःसदे'ति । वाक्यशेषेऽपरोक्षज्ञानसाधनत्वेनोक्तत्वात्तदेत
द्विलंपूर्वभाविच । स्फुटमेतत्स्कांदे । 'हरेर्द्वेषःसुपूर्णश्चकलेरप्यतिशीघ्रतः । ततःपश्चात्तमोयोग्याःक्रमाद्दीर्घेणपूर्तितः । अंधंतमोनिगच्छंतिसंप्राप्तेब्रह्मणोनिशि । कल्पादी
नांतमोगानांकृत्स्नदुःखंहिभुंजतां । कलिरेकःस्वदेहेनभुङ्क्तेप्राकृतमिश्रितः । अदंत्यन्येस्वदेहेनदुःखंदैत्याधमाःकलेरि'त्यादि तथा दीर्घभक्तिस्तुदेवानांतस्माद्दीर्घेणमुक्ति
गाइति । द्वात्रिंशाध्यायेऽयमर्थःसूचितोस्ति । तथाहि 'द्वेषात्तमोंधंत्वरयासमाप्नुयुर्दैत्याःस्वकालेनिजयोग्यमुक्तिमि'ति ॥११॥ ननु द्वेषस्यसाधनत्वात्फलपर्यंतमवस्थितिः त
त्प्राप्तौसत्यांनास्तीत्यतआह । पूर्णेति । पूर्णयद्दुःखंतदात्मकःअनंतःनित्यःईषदपिसुखसंबंधवर्जितेअंधेतमसि ॥ १२ ॥ द्वेषानाह । जीवाभेदइति । जीवैरभेदस्तेनतज्ज्ञान
मुपलक्ष्यते । अग्रेपिज्ञानोपलक्षकताज्ञेया तस्यहरेरन्येषांब्रह्मादीनांसाम्यंचाधिक्यंच । नीचस्यसमस्यवाधिकत्वेनज्ञानंअन्येषांहरेःसकाशादाधिक्यंवा । तद्गतस्तदवयवग

**पूर्णदुःखात्मको द्वेषः सोनंतो ह्यवतिष्ठते ॥ पतितानां तमस्यंधे निःशेषसुखवर्जिते ॥११२॥ जीवाभेदो निर्गुणत्वमपू र्णगुणता तथा ॥ साम्याधिक्ये तदन्येषां भेदस्तद्गत एव च ॥ १३ ॥ प्रादुर्भावविपर्यासस्तद्भक्तद्वेष एव च ॥ तत्प्रमा णस्य निंदा च द्वेषा एतेखिलामताः ॥ १४ ॥ एतैर्विहीना या भक्तिः सा भक्तिरिति निश्चिता ॥ अनादिभक्तिर्देवानां क्रमाद्वृद्धिं गतैव सा ॥ १५ ॥ अपरोक्षदृशेर्हेतुर्मुक्तिहेतुश्च सा पुनः ॥ सेवानंदस्वरूपेण नित्या मुक्तेपु निष्ठति ॥१६॥ यथा शौक्ल्यादिकं रूपं गोर्भवत्येव सर्वदा ॥ सुखज्ञानादिकं रूपमेवं भक्तेर्न चान्यथा ॥१७॥ भक्त्यैव तुष्टिमभ्येति विष्णुर्नान्येन केन चित् ॥ स एव मुक्तिदाता च भक्तिस्तत्रैव कारणं ॥ १८ ॥ ब्रह्मादीनां च मुक्तानां तारतम्ये तु कार णं ॥ तारतम्यस्थितानादिनित्या भक्तिर्न चेतरत् ॥ १९ ॥ ॥ ॥ ॥**

तस्तदवतारगतोवाभेदः । भेदज्ञानंच । प्रादुर्भावविपर्यासअवतारस्यानवतारत्वज्ञानं । अनवतारस्यावतारत्वज्ञानं तद्भक्तानांहरिभक्तानांद्वेषोविरोधएव । द्वेषनिंदनयोःस्वरूपे
णैवद्वेषत्वंनत्वेतज्ज्ञानस्येति । एवकारेणज्ञापयति । तस्यविष्णोःसर्वोत्तमत्वगुणपूर्णत्वादिप्रतिपादकप्रमाणस्यनिंदा । कल्पितविषयत्वकल्पनं । एतेजीवाभेदादयोअखिलाः
नवविधद्वेषाः । मताःसंमताः । प्रामाणिकानामित्यर्थः ॥ १३ ॥ १४ ॥ भक्तेर्विशेषमाह । एतैरिति । एतैःपूर्वोक्तैःद्वेषैः । तांविविच्यदर्शयति । अनादीति । क्रमाद्वृद्धिंग
तासाभक्तिरपरोक्षज्ञानहेतुः । पुनर्वृद्धिंगतामोक्षहेतुश्चसाभक्तिः ॥ १५ ॥ १६ ॥ भक्तिरानंदस्वरूपेणातिष्ठतीत्यनेनप्राप्तांभेदशंकांदृष्टांतेनपरिब्रह्मादीनामिति । तारतम्येन
स्थिताअनादिश्चासौनित्याच भक्तिःइतरत्कर्मादिनतारतम्यकारणंनेत्यर्थः ॥ १७ ॥ १८ ॥ १९ ॥

ततः द्वेषयुतत्वात्तेमानुषाधमाअपि ॥१२० ॥ मध्यमामानुषमध्यमाःमिश्रभूतत्वात्विष्णोरुत्कर्षेसंदेहवत्वात् । संदेहस्यकोटिद्वयत्वेनमिश्रत्वं । यद्वा माहात्म्यज्ञानेसंदेहवत्वेनभक्तेर्मिश्रत्वंतद्वत्वेनमिश्रभूतत्वं । अन्याधिक्यस्याभावज्ञानसहितविष्णोःसर्वात्मनाधिक्यज्ञानेसंदेहवत्वेनवा । मिश्रभूतत्वं नतु द्वेषभक्तिमिश्रत्वं अज्ञस्यराजसतामसस्यापिद्वेषहीनत्वोक्तेः । तदुक्तंगीतातात्पर्ये । 'त्रैविध्यमात्राविष्णोर्थैसर्वाधिक्येससंशयाः । अन्याधिक्यंनमन्यंतेश्रीशाद्राजसराजसाः । अज्ञाविष्णोर्द्वेषहीनासर्वेराजसतामसाः' । इतिमिश्रफलाःस्वर्गनरकभूप्राप्तिरूपफलाः । उत्तमामनुष्योत्तमाःनित्यंभक्तियुतास्तेमोक्षिणः ॥२१॥ ततःसर्वेभ्यःपरमभक्तिमत्वात् । सर्वेभ्यःपरमइत्यादीनिउदाहृतवाक्यान्येवादिभूतानिएषांतानिएवमादीन्यन्यानिचपुराणेषुपृथक्पृथक्संति ॥२२॥ तथागुराविवतिप्रसक्तगुरोर्लक्षणमाह । षण्णवत्यंगुलइति । षण्णवत्यंगुलपरिमित:न्यग्रोधपरिमंडलः। व्यामपरिमितः। 'व्यामोबाह्वोःसकरयोस्ततयोस्तिर्यगंतरं । व्यामोवटश्चन्यग्रोधावि'त्यभिधानात् । मनीषिभिःएतादृशःगुरुरुक्तोयतस्तस्मान्मुख्योगुरुर्ब्रह्मैव ॥ २३ ॥ २४ ॥ ब्रह्मागुरुर्मुख्यइत्यनेनसूचितमर्थमाह । अन्येइति । स्वात्मनःस्वस्मान्मुख्याःश्रेष्ठाअन्येपिक्रमात्तारतम्यक्रमेणगुरवश्चईरिताःक्रमाद्गुरुत्वेनिमित्तमाह । क्रमादिति । क्रमाल्लक्षणैर्हीनाश्चलक्षणहीनत्वमुक्तंबृहद्भाष्ये । 'द्वात्रिंशल्लक्षणैःसम्यक्युक्तावायुस्वयोग्यकाः नियमेनैवविष्णोस्तुप्रादुर्भावाविशेषतः । सहस्रारेणचक्रेणचिन्हितादक्षिणेकरे । गदयाष्टासयाचैवशतावर्तेनकंबुना । वामेकरेतथाब्जेनसहस्रदलशोभिना । अष्टाविंशल्लक्षणैश्चगिरीशपदयोगिनः । चतुर्विंशतिमारभ्यषोडशादौसुरामताः । अष्टकादृषयःप्रोक्तास्तदूनाश्चक्रवर्तिन' इति । दुर्लक्षणयुताश्चेत्यापिज्ञेयं । अर्जुनादेर्दुर्लक्षणयुतत्वेनकथनात् । ननु मनुष्योत्तमेभ्योर्वाक्तनानांमोक्षाभावेकिंकारणमित्याशंक्याह । लक्षणालक्षणैरिति । मध्यमाःमानुषाःलक्षणैरलक्षणैःसमाःसमानाः लक्षणदुर्लक्षणयुक्तास्तेनद्वेषभक्तिभ्यांसमत्वात्तेषांमोक्षोनास्तीतिभावः । सम्यक्

मानुषेष्वधमाः किंचिद्द्वेषयुक्ताः सदा हरौ ॥ दुःखनिष्ठास्ततस्तेपि नित्यमेव न संशयः ॥ १२० ॥ मध्यमा मिश्रभूतत्वान्नित्यं मिश्रफलाः स्मृताः ॥ किंचिद्भक्तियुता नित्यमुत्तमास्ते न मोक्षिणः ॥ २१ ॥ ब्रह्मणः परमा भक्तिः सर्वेभ्यः परमस्ततः ॥ इत्यादीनि च वाक्यानि पुराणेषु पृथक् पृथक् ॥ २२ ॥ षण्णवत्यंगुलो यस्तु न्यग्रोधपरिमंडलः ॥ सप्तपादश्चतुर्हस्तो द्वात्रिंशल्लक्षणैर्युतः ॥ २३ ॥ असंशयः संशयच्छिद्गुरुरुक्तो मनीषिभिः ॥ तस्माद्ब्रह्मा गुरुर्मुख्यः सर्वेषामेव सर्वदा ॥ २४ ॥ अन्येपि स्वात्मनो मुख्याः क्रमाद्गुरव ईरिताः ॥ क्रमाल्लक्षणहीनाश्च लक्षणालक्षणैःसमाः ॥ मानुषा मध्यमाः सम्यक् दुर्लक्षणयुतः कलिः ॥ २६ ॥ ॥ ॥ ॥ ॥

दुर्लक्षणयुतत्वंनामलक्षणाभावविशिष्टसर्वदुर्लक्षणवत्त्वंतेनहरौसम्यक्द्वेषयुतत्वात् कलेरंधंतमःप्राप्तिरितिभावः । यद्वा देवानामुक्त्वामनुष्यमध्यमानामाह । लक्षणालक्षणैरिति । कलेराह । सम्यगिति ॥ १२५ ॥ २६ ॥ गुरुलक्षणमुक्त्वातत्साध्यंप्रयोजनमाह । सम्यगिति । तत्सर्वमित्युक्तंतथाच । मोक्षदानेतदपिसत्यंभवेत् । तथात्वेतस्मैवचमोक्षःप्राप्यस्तेनैवनान्येनेत्यनेनविरोधस्यादित्यतआह । अगम्यत्वादिति । तद्दत्तमुत्तयाद्यपिहरिदत्तमितिभावः ॥ २७ ॥ गुरौसम्यक्लक्षणवत्त्वविशेषणेनालं । किंसुप्रसन्नधीरितिविशेषणेनेत्यतआह । नातीति । गुरुरपिहितोपदेष्टापि । अतिप्रसादनेकारणमाह । अर्चनीयइति ॥ २८ ॥ स्वावरस्यकारणात्गुरुत्वेसतिस्वोत्तमगुरुवदर्चनीयःकिमित्यतआह । स्वेति । तुशब्दोप्यर्थःस्वावराणामपीतिसंबंधइति अनेनप्रकारेणैतत्प्रतिपादितमर्थजातं पंचरात्रेप्युक्तमस्तिपुराणेष्वनुमोदितं संमतीकृतं चास्ति ॥ २९ ॥ हरेरापरोक्ष्यान्मुक्तिरित्युक्तंतदयुक्तं दैत्यादीनांरामाद्यपरोक्षेपिमोक्षादर्शनात्पापानांप्रतिबंधकानांसत्वाच्चेत्यतआह । यदेति । मुक्तिप्रदानायमुक्तिंप्रदातुंस्वयोग्यंबिंबमूर्त्यादिहरेःरूपंपश्यतितदातस्यद्रष्टुःपूर्वाणिसर्वपापानिसंचितानिसर्वपापानिध्रुवंभस्मसाद्भवंतिपापानीत्युपलक्षणं । राजसंमिश्रंआनिष्टंपुण्यंचग्राह्यं । तदपिन

**सम्यग्लक्षणसंपन्नो यद्यद्यात्सुप्रसन्नधीः ॥ शिष्याय सत्यं भवति तत्सर्वं नात्र संशयः ॥ अगम्यत्वाद्धरिस्तस्मिन्नाविष्टो मुक्तिदो भवेत् ॥ २७ ॥ नातिप्रसन्नहृदयो यद्यद्याद्गुरुरप्यसौ ॥ नतत्सत्यं भवेत्तस्मादर्चनीयो गुरुः सदा ॥२८॥ स्वावराणां गुरुत्वं तु भवेत्कारणतः क्वचित् ॥ मर्यादार्थं तेपि पूज्या न तु यद्वत्परो गुरुः ॥ २९ ॥ इत्येतत्पंचरात्रोक्तं पुराणेष्वनुमोदितं ॥ यदा मुक्तिप्रदानाय स्वयोग्यं पश्यति ध्रुवं ॥ १३० ॥ ॥ ॥**

श्यति इष्टमपिद्विविधं । काम्यमकाम्यंच । अत्रकाम्यमनारब्धं सुहृदःपुत्रादयउपयंति । राजसंतूदासीनाःउपयंति । अकाम्यंचाग्निहोत्राद्यपरोक्षज्ञानसाधनत्वान्ननश्यतीष्टनाशस्यापुरुषार्थत्वात् । उत्तराणिअपरोक्षज्ञानोत्तरंकृतानिकानिचित्पापानिश्लेषंनयांति स्वफलनरकादिसंबंधवत्त्वंकर्तुंनसमर्थानिभवंति । कानिचित्स्वोत्तमद्रोहादीनिसंबंधवंत्यपिअशुचित्वासंभाव्यत्वापाङ्क्तेयत्वनरकदुःखरूपफलप्रदानिनभवंति । पापानीत्युपलक्षणं । पुण्यान्यकाम्यानिसुखाधिक्यहेतुभूतानिसुखाभिव्यक्तिजनकानितानिश्लेषमायांति । काम्यानियानितानि पुत्रादयःदायमुपयंति । प्रारब्धस्यचभोगादेवनाशः कस्यचित्किंचिद्भुक्तस्यप्रारब्धस्योपमर्दश्च । एवंहीनंब्रह्मपश्यतांदैत्यानांअनुतथा नपातेप्रत्यासन्नेपातार्थं पूर्वस्यपुण्यस्यनाशोभवति । उत्तरस्याश्लेषश्चभवति । उक्तार्थेप्रमाणानि । अनुव्याख्याने । 'तथोपास्यांजसादृष्टंब्रह्मपापंचभस्मसात् । करोति निखिलंपूर्वंपाश्चात्यस्याप्यसंगतं । करोतितद्द्विषश्चैवपुण्यनाशोप्यसंगतोऽति । अशुचित्वादिकंचास्यनभवेदितितत्फलमिति । 'अनभीष्टमनारब्धंपुण्यंतस्यविनश्यति । किमु पापंपरंब्रह्मज्ञानिनोनास्तिसंशय'इतिपाद्मे । नारायणतंत्रेच । 'यत्वनारब्धपापंस्यात्तद्धिनश्यतिनिश्चयात् । पश्यतोब्रह्मनिर्दुष्टंहीनंचब्रह्मपश्यतः। द्विषतोवाभवेत्पुण्यना

शोनास्त्यत्रसंशयः । तस्याप्यारब्धकार्यस्यनविनाशोस्तिकुत्रचित् । आरब्धयोश्चनाशस्याःदल्पयोःपुण्यपापयोरि'ति । 'यथाश्लेषोविनाशश्चमुक्तस्यतुविकर्मणः । एवंसुकर्मण श्चापिपततस्तमसिध्रुवमि'त्याग्नेये । तस्यपुत्रादायमुपयंति । सुहृदःसाधुकृत्यांद्विषंतःपापकृत्यामिति । अत्रसाधुकृत्याशब्देनकाम्यमप्रारब्धंपुण्यमुच्यतेइतिटीका 'कृष्णोपास्तिमकुर्वतः ज्ञानिनोपियतोन्हास'इति ।'शुभकर्मभिराधिक्यंविपरीतेविपर्यय'इति । नाभुक्तंक्षीयतेकर्मेति ।'नवैजनोजातुकथंचनाव्रजेन्मुकुंदसेव्यन्यवदंगसंसृतिमि'तिच । तेनदैत्यादीनांस्वयोग्यहरिदर्शनाभावान्नतेषांमुक्तिरितिभावः । 'पुण्यंपापंमिश्रमित्येवपाशाधथायोग्यश्लथयान्येषुदत्वे'तिऋग्भाष्ये । हेवरुणउत्तमंपाशंपुण्यंअस्मत्उछ्थय अस्मत्सुहृद्भ्योदत्वाअस्मत्तोवियोजय अधमपाशंपापंतअवश्रपयाद्विषद्भ्योदत्वाअस्माद्वियोजय मध्यमंपाशंमिश्रंपुण्येनमिश्रंपापंच विश्रपयउदासीनेभ्योदत्वावियोजय । एवशब्देनास्यमुख्यार्थतामाहेतिटीका 'सत्वंत्रिगुणपाशान्नोमुमुग्धिछिंधिवांजसे'तिच । इदमपिएवमेवव्याख्यातंटीकाकारैः ॥ १३०॥ ३१ ॥ उपसंहरति । मोक्ष इति । इत्येतत्पूर्वोक्तंनकेवलभविष्यत्पर्वमपितुसूत्रमप्यस्तीत्याह । सूत्रगमिति । तथातदर्थप्रतिपादकंसूत्रगंवचनंचास्ति । 'तदधिगमउत्तरपूर्वाघयोरश्लेषविनाशौतद्व्यप

रूपं हरेस्तदा तस्य सर्वपापानि भस्मसात् ॥ यांति पूर्वाण्युत्तराणि नश्लेषं यांतिकानि चित् ॥ ३१॥ मोक्षश्च नियतस्तस्मात्स्वयोग्यहरिदर्शने ॥ भविष्यत्पर्ववचनमित्येतत्सूत्रगं तथा ॥३२॥ श्रुतिश्च तत्परा तद्वत्तद्यथेत्यवदत्स्फुटं ॥३३॥ मुक्तास्तु मानुषा देवान्देवा इंद्रं सशंकरं ॥ स ब्रह्माणं क्रमेणैव तेन यांत्यखिला हरिं ॥ उत्तरोत्तरवश्याश्च मुक्ता रुद्रपुरःसराः ॥३४ ॥ निर्दोषा नित्यसुखिनः पुनरावृत्तिवर्जिताः ॥ स्वेच्छयैव रमंतेत्र नानिष्टं तेषु किंचन ॥ ३५ ॥

देशादि'तिसूत्रमस्यार्थः । तस्यब्रह्मणोधिगमेदर्शनेउत्तराघस्याश्लेषःपूर्वस्यविनाशश्चश्रुतौ तयोरश्लेषविनाशयोर्व्यपदेशात्कथनादिति । अत्रोत्तराश्लेषस्य पूर्वकथनंश्रुत्यनुसारेण ॥ ३२ ॥ अत्रश्रुतिमप्याह । श्रुतिश्चेति । तत्परातत्रतात्पर्यवतीतद्यथेति । 'तद्यथापुष्करपलाशआपोनश्लिष्यंतएवमेवंविदिपापंकर्मनश्लिष्यते तद्यथेषिकातूलमग्नौप्रोतंप्रदूयतैवंहैवास्यसर्वेपाप्मनःप्रदूयंत'इतिश्रुतिरपितद्वत्सूत्रवत्स्फुटमवदत् ॥३३॥ इदानींमुक्तानांमुक्तिप्रकारमाह । मुक्तइति । मानुषाःमुक्ताःआदौधर्मंप्राप्यतद्द्वारादेवान्द्वारदेवान्यांति । 'वर्णाश्रमाचाररतामनुष्याधर्मंमनुंसोपिसमेत्यकाले' । इत्यनुव्याख्यानोक्तेः । सइंद्रःशंकरंगरुडंशेषंगरुडमार्गौद्वौतत्रयदेंद्रप्रवेशस्तदारुद्रशब्देनगरुडः यदाकामप्रवेशस्तदारुद्रशब्देनशेषोग्राह्यः । तदुक्तं । 'इंद्रप्रवेशस्तुयदोच्यतेत्रतदात्युमेत्येवसुपर्णपत्नी । उक्तासुपर्णश्चगिरिशनाम्ने'तितथा । 'सूर्योग्नियुक्तोगुरुमाप्यतेन शक्रंसहैतेनसुपर्णपत्नीं । तयासुपर्णंसहतेनवाणींब्रह्माणमेतद्गत एवयाती'ति । एवंगतानांमुक्तावस्थानप्रकारमाह । उत्तरेति । रुद्रपुरःसराःशेषाद्याःमुक्ताउत्तरोत्तरवश्याश्रेष्ठश्रेष्ठाधीनाः ॥ ३४ ॥ अत्रमुक्तौतेषुमुक्तेषुअनिष्टंदुःखंनविद्यते ॥ १३५ ॥ ॥ ॥ ॥ ॥

सुराणामुक्त्वादैत्यानामाह । असुराइति । मनुष्याधममारभ्यकलिःपर्यंतेसर्वेतिएषांतेअसुराः एवंयथादेवाःसुखाधिकास्तथादुःखोत्तरोत्तराः । दुःखेनोत्तराःकेचित्तेभ्योन्येउत्तरा अधिकाःतेषुदैत्येषुकलिर्दुःखाधिकः। इदानींतनस्यनरकपातेअग्रेकथमित्यतआह । तइति । तेपिभाविकलयःतत्पदयोग्याः ब्रह्मपदयोग्यऋजुवद्गणाःसमूहाःसंति ॥ ३६॥ कलेरुक्त्वान्येषामाह । तथेति । यथारुद्रादिगणाःअन्येकलेरन्येद्वापरादयःसर्वेसुरायोग्यतयागणाबहवःसदासंति । पूर्वशेषपर्यंतमेवरुद्रपुरःसराइत्यनेनोक्तत्वात् ब्रह्म णआह । ब्रह्मेति ॥ ३७ ॥ सर्वमुक्ताधिपतित्वेब्रह्मणउक्तेअस्याधिपतिरन्योनास्तीतिप्राप्तमतआह । आश्रयइति । तस्यब्रह्मणः ॥३८॥ अर्थोयमित्यादिनाप्रतिज्ञातमर्थ मुपपाद्योपसंहरति। इतीति । विष्ण्वाज्ञयैवनिर्णयःकृतःतस्यविष्णोस्तत्प्रसादएवबलंतस्योन्नतिरुत्कर्षः। तस्माद्विदुषामानंदकरशास्त्रकारित्वाज्ज्ञानित्वाच्चसिद्धमाश्रमदाने

असुराः कलिपर्यंता एवं दुःखोत्तरोत्तराः ॥ कलिर्दुःखाधिकस्तेषु तेप्येवं ब्रह्मवद्गणाः ॥ ३६ ॥ तथान्येप्यसुराः सर्वे गणा योग्यतया सदा ॥ ब्रह्मैव सर्वजीवेभ्यः सदा सर्वगुणाधिकः ॥ ३७॥ मुक्तोपि सर्वमुक्तानां आधिपत्ये स्थितः स दा ॥ आश्रयस्तस्य भगवान् सदा नारायणः प्रभुः ॥ ३८॥ इत्यृग्यजुःसामाथर्वपंचरात्रेतिहासतः ॥ पुराणेभ्यस्त थान्येभ्यः शास्त्रेभ्यो निर्णयः कृतः ॥ ३९ ॥ विष्ण्वाज्ञयैव विदुषा तत्प्रसादबलोन्नतेः ॥ आनंदतीर्थमुनिना पूर्णप्रज्ञा भिधा युजा ॥ १४० ॥ तात्पर्यं शास्त्राणां सर्वेषामुत्तमं मया प्रोक्तं ॥ प्राप्यानुज्ञां विष्णोरेतज्ज्ञात्वैव विष्णुराप्योसौ ॥ ४१ ॥ ॥ इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये सर्वशास्त्रार्थनिर्णयो नाम प्रथमोध्यायः ॥ १ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥छ॥ ॥ ॥छ॥ ॥

पददानेचगुरुदत्तंवा नामद्वयमाह । आनंदेति । पूर्वोक्तार्थमनुवदन्नेतज्ज्ञानफलमाह । तात्पर्यमिति । विष्णोरनुज्ञांप्राप्यमयासर्वेषांशास्त्राणांउत्तमंतात्पर्यंप्रोक्तं । अधिका रिणासौविष्णुरेतत्तात्पर्यंज्ञात्वैवाप्यः ॥ १३९ ॥ १४० ॥ १४१ ॥ ॥ यंगंगाजमदग्निजान्वयभवाद्विद्धिरण्याभिधात्पुत्रंप्रापजनार्दनंशमदमः स्वाध्यायसंपद्युता त् ॥ आद्यस्तस्यकृतौसतांसुखकरोध्यायःसमाप्तिंशुभः श्रीमद्भारतभावनिर्णयपदार्थोद्दीपिकायामगात् ॥ १ ॥ ॥ इति श्रीमन्महाभारततात्पर्यनिर्णयटीकायां पदा र्थदीपिकायां जनार्दनभट्टविरचितायां प्रथमोऽध्यायः ॥ १ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥



॥ श्रीगुरुभ्योनमः ॥ ॐ विष्णोःसर्वोत्तमत्वादिकं सर्वंसदागमप्रतिपाद्यमित्येतत् भारतव्यपदेशेनआम्नायार्थःप्रदर्शित इतिवचनात् । भारतस्यवेदार्थरूपत्वाद्भारतवाक्यैः प्रतिपादयन् भारताद्यपद्योक्तगुणत्वेनाद्यपद्येनस्तौति । जयतीति । असौजयतिउत्कृष्टोवर्तते । अनेनवंदइत्येतदुक्तार्थंभवति । अयंमत्तोधिकोहमनुत्कृष्टइतिबुद्धिर्हिवंदनमिति । विभुमितस्यार्थैहरिरिति । निखिलात्मकत्वात् । तत्राखिलामरवरोहरिरासीदित्युक्तत्वात् ईशमित्यस्याचिंत्यइति । सकललोकेत्यस्यामरेत्यस्यचसर्वदेवैकवंद्यइति । सर्वलोकैर्देवैश्च । यद्वा सर्वैर्देवैर्मुक्तामुक्तैर्मुख्यतयावंद्यइति । ब्राह्मणपरिव्राजकन्यायेन पूर्वव्याख्यानं । सुरगुरुमित्यस्यपरमगुरुरिति सुराणांपरमत्वात् । भक्तप्रियमित्यस्यभवघ्नमित्यस्यचसज्जनानांअभीष्टावाप्तिदइति । भक्तानांमुक्तियोग्यानांचसत्त्वात् मुक्तेःइष्टत्वात् अभीष्टदातुःप्रियत्वात् । नारायणमित्यस्यनिखिलेति । त्रैगुण्यवर्जितमित्यस्यनित्यनिर्मुक्तदोषइति । त्रिगुणवतएवदोषित्वात् । अजमित्यस्यसरसिजनयनइति । सर्वदोत्फुल्लारविंदनयनस्य जननरहितस्यैवसंभवात् । जगदेकनाथमित्यस्यश्रीपतिरिति । श्रियःसर्वोत्कृष्टत्वात्तन्नाथस्यसर्वनाथत्वं । आद्यमित्यस्यनःमानदइति । जन्माद्यबह्मणःज्ञानदत्वादाद्यत्वमितिज्ञेयं । यद्वा प्रकरणभेदात्प्रकरणादौस्तुतिरूपंमंगलमाचरति । जयतीति । असौहरिःहरतिपापमितिप्रतिबंधकपापनाशकोजयति उत्कृष्टोवर्तते । उत्कृष्टार्थजयेरकर्मकत्वात्कर्माकथनं । उत्कर्षबोधकानिसर्वाणिविशेषणानि । सर्वैर्देवैर्मुख्यतयावंद्यः । परमस्यब्रह्मणःगुरुरुपदेष्टा । निखिलाःपूर्णाश्चतेगुणाश्चतेषांगुणाःसमूहा. तैरर्णःसमुद्रइवसमुद्रः अर्णइत्युदकनाम । ततौमत्वर्थेतद्धिताइतिडप्रत्ययइतिऋग्भाष्यटीकोक्तेः । सरसिजनयनइतिप्रसादोन्मुखइतिध्वनयति । मानंसच्छास्त्रंतद्ददात्युपदिशतीतिमानदः । अथवा निखिलेति नित्येति परमेति अभीष्टेति अध्यायचतुष्टयार्थं । सर्वेतिविशिष्टत्वं । सरसिजेत्यादित्रिभिर्हरिरिति द्वाभ्यामिष्टत्वंप्रतिपाद्यत्वंचाह । यद्वा पूर्वार्धस्थविशेषणानामुत्तरार्धस्थविशेषणानिउपपादकानि । बहुगुणवदचिंत्यत्वातदोषरहितस्यैवपरदोषहारित्वात्शुभदृष्टित्वतःवंद्यत्वात्ज्ञानदस्यैवगुरुत्वात्लक्ष्मीपतेरभीष्टदत्वादिति ॥ १ ॥ इदानींपूर्वाध्यायार्थानुवादपूर्वकमुत्तराध्यायस्य संगतिमाह । उक्तइति । परःसर्वोत्कर्षप्रतिपादकःदिव्यः देवयोग्यः एतैरेवभारतवाक्यैरेवान्यवाक्यानामल्पत्वात् । एतेषांबहुत्वादेतैरेवेत्युक्तं । अध्यवस्यंतेनिर्णीयंते ॥२॥ ननु भारतवाक्यानांनिर्णयःकिमर्थंक्रियते तत्रकेषामपिविप्रतिपत्त्यभावादित्यतस्तत्रविप्रतिपत्तिकारणमाह । क्वचिदित्यादिना । अनुत्सन्नाःपठ्यमानाअपिसर्वशःसर्वग्रंथाःइत्यनेनप्रकारेणव्याकुलाःव्यत्यस्ताः । व्यत्यासप्रकारमाह । क्वचिदिति । ग्रंथान् श्लोकान्कुत्वाक्वचित्प्रदेशेप्रक्षिपंति क्वचित्प्रदेशादंतरितान्निष्कासितानग्रंथान्कुर्युःक्वचिद्व्यत्यासं

श्रीः ॥ जयति हरिरचिंत्यः सर्वदेवैकवंद्यः परमगुरुरभीष्टावाप्तिदः सज्जनानां ॥ निखिलगुणगणार्णो नित्यनिर्मुक्तदोषः सरसिजनयनोसौ श्रीपतिर्मानदो नः ॥१॥ उक्तः पूर्वाध्याये शास्त्राणां निर्णयः परो दिव्यः ॥ अथ भारतवाक्यान्येतैरेवाध्यवस्यंते ॥२॥ क्वचिद् ग्रंथान्प्रक्षिपंति क्वचिदंतरितानपि॥ कुर्युः क्वचिच्च व्यत्यासं प्रमादात्क्वचिदन्यथा॥३॥

पूर्वोक्तस्योत्तरत्रप्रक्षेपमुत्तरोक्तस्यपूर्वत्रप्रक्षेपंकुर्युः। क्वचित्प्रमादादनवधानात्भ्रांत्यावान्यथापाठान्कुर्युरित्यर्थः॥३॥४॥ एतादृशामपिपरामर्शादर्थनिर्णयःस्यादित्यतआह । उत्सन्नाइति । सर्वेशतकोटिविस्तरमूलरामायणपंचाशत्कोटिविस्तरपंचरात्रषष्टिलक्षविस्तृतभारतचतुर्लक्षविस्तृतपुराणादिकाःग्रंथाःप्रायशःप्रायेण अपपाठादिनोच्छिन्नाः । तन्मध्येकोप्यंशोपिनविद्यते केमुतन्यायेनार्थव्यत्यासमुपपादयति । ग्रंथइति । देवानांदुर्गमःअर्थःविलुलितइति । किमुवक्तव्यंकिमपिवक्तव्यंनास्तीत्यर्थः॥५॥व्याकुलितश्चकदाजातास्ततःकेनप्रेरितेनकेननिर्णयःकृतइत्यतआह । कलाविति । कलौकलिकालेएवंप्रक्षेपणादिनानिर्णयायनिर्णयार्थंप्रचोदितः निर्णयान्वच्मि । उक्तव्यत्यासकालेतत्रापिज्ञानंकथमित्यतआह । विजानन्निति । तस्यहरेःप्रसादतःविजानन्निर्णयानित्यस्यानुषंगः॥ ६ ॥ नकेवलंनिर्णयमात्रंजानाम्यपितूत्सन्नग्रंथानपीत्याह । शास्त्रेति । अस्यप्रसादतःशास्त्रांतराणिउत्सन्नशास्त्राणिवेदान्सर्ववेदांश्चजानन् नकेवलंज्ञानदृष्ट्यैवशास्त्रदर्शनमपितुप्रत्यक्षतोपिनिर्णायकशास्त्रज्ञानमस्तीत्याह । देशइति । किंकृत्वादेशेदेशेचपृथ

अनुत्सन्ना अपि ग्रंथा व्याकुला इति सर्वशः ॥ उत्सन्नाः प्रायशः सर्वे कोट्यंशोपि न वर्तते ॥ ४ ॥ ग्रंथोप्येवं विलुलितः किम्वर्थो देवदुर्गमः ॥ ५ ॥ कलावेवं व्याकुलिते निर्णयाय प्रचोदितः ॥ हरिणा निर्णयान्वच्मि विजानंस्तत्प्रसादतः ॥ ६ ॥ शास्त्रांतराणि संजानन्वेदांश्चास्य प्रसादतः ॥ देशे देशे तथा ग्रंथान्दृष्ट्वा चैव पृथग्विधान् ॥ ७ ॥ यथा स भगवान् व्यासः साक्षान्नारायणः प्रभुः ॥ जगाद भारताद्येषु तथा वक्ष्ये तदीक्षया ॥ ८ ॥ संक्षेपात्सर्वशास्त्रार्थं भारतार्थानुसारतः ॥ निर्णयः सर्वशास्त्राणां भारतं परिकीर्तितं ॥ ९ ॥ भारतं सर्ववेदाश्च तुलामारोपिताः पुरा ॥ देवैर्ब्रह्मादिभिःसर्वैर्ऋषिभिश्च समन्वितैः ॥ व्यासस्यैवाज्ञया तत्र त्वत्यरिच्यत भारतं ॥ १० ॥ ॥

क्पृथक्देशेपृथग्विधाननानाविधनिर्णयप्रतिपादकान्ग्रंथान् तथातत्प्रसादतःदृष्ट्वैव ॥ ७ ॥ मयाक्रियमाणोनिर्णयऔपदेशिकइत्याह । यथेति । तदीक्षयातद्दत्तज्ञानेनतत्प्रेरणयावा । भारताद्येषुग्रंथेषुव्यासःमांप्रतियथार्थंजगाद तथासर्वेषांशास्त्राणांअर्थंवक्ष्ये विरोधेतत्रनिर्णायकंकिमित्यतआह । भारतेति । बहुत्वेऽनुपादेयंस्यादित्यतआह । संक्षेपादिति ॥ ८ ॥ यद्वा मयाक्रियमाणोनिर्णयोवेदव्याससंमतइतिवदन्नादौभारतार्थानुसारेणसंक्षेपेणसर्वशास्त्रार्थंवक्ष्यइतिप्रतिज्ञांतरंकरोति । यथेति । सर्वश्चासौशास्त्राणामर्थस्तमितिवा । ननु विशेषतः भारतार्थानुसारेणसर्वशास्त्रस्यार्थनिर्णयकरणेकोहेतुरित्यतआह । निर्णयइति । निर्णीयतेऽनेनेतिनिर्णयःनिर्णायकमितिपुराणेप्युक्तं ॥ ९ ॥ सदृष्टांततदुत्तमत्वप्रतिपादकं विष्णुसर्वोत्तमत्वादिप्रतिपादकं ब्रह्मांडपुराणवाक्यंपठति । भारतमिति । तुलारोपणंप्रतिनिधिमण्याद्यारोपणेन । सर्ववेदाःवेदयंतीतिवेदाः शा

स्त्राणिचसमन्वितैर्युक्तैः तुलारोपणेन । शास्त्रपरीक्षणेशास्त्रकर्तुःक्षोभःस्यादित्यतआह । व्यासस्येति । आज्ञयेत्येत्यन्वयः । तत्रतयोर्मध्येभारतमेवात्यरिच्यत अतिशयेनाधिकमभूत् । ननु गीतातात्पर्यभाष्ययोरत्र'अत्यरिच्यतभारतमि'ति भारतस्योत्तमत्वमनुव्याख्याने 'अतोनैतादृशंकिंचित्प्रमाणतममिष्यत' इत्यनेनसूत्रस्योत्तमत्वमुच्यते । तत्कथमुत्तमत्वमुभयोरितिचेदित्थंनिर्णायकेषुसूत्रस्यनिर्णेयेषुभारतस्येति । इदमुक्तंजयतीर्थार्यैः'विचार्येषुशास्त्रेषु'तं'दितीति । नचात्रभारतस्यापिनिर्णायकत्वमुक्तमतःकथंसूत्रस्यनिर्णायकोत्तमत्वमितिवाच्यं । सूत्रेणनिर्णीतं भारतमन्येषांनिर्णायकमितिसंभवात् । अतएवभाष्ये । 'शब्दजातस्यसर्वस्य यत्प्रमाणश्चनिर्णयः' । इतिविशेषणात् अत्रचनिर्णयःसर्वशास्त्राणामितिसामान्यतउक्तं भारतस्यसर्वशास्त्रनिर्णायकत्वे स्वयंस्वस्यनिर्णायकमितिभवेदितिचोदित्थमेतदतएवोक्तं 'अथभारतवाक्यान्येतैरेवाध्यवस्यंत'इति । अतएवानिर्णेयतानिर्णायकताच ॥ १० ॥ प्रकारांतरेणाप्युत्तमत्वमाह । महत्वादिति । महत्त्वात्पूज्यार्थप्रतिपादकत्वात्महद्भारवत्त्वात् । प्रतिनिधिमणिहाराभारवत्त्वात्भारतं । तद्वत्त्वार्थेतप्रत्ययः पर्वतशब्दवदुपसंख्यानात् । यद्वा भारेणततत्वाद्भारततमित्येकदेशग्रहणं समानेलोपइत्येकलोपेनवा । भारतंमहच्चभारतंचेतिमहाभारतमुच्यते । निरुक्तंनितरामुक्तं

**महत्त्वाद्भारवत्त्वाच्च महाभारतमुच्यते ॥ निरुक्तमस्य यो वेद सर्व पापैः प्रमुच्यते ॥ ११ ॥ निर्णयः सर्वशास्त्राणां स दृष्टांतो हि भारते ॥ कृतो विष्णुवशत्वं हि ब्रह्मादीनां प्रकाशितं ॥१२॥ यतः कृष्णवशे सर्वे भीमाद्याः सम्यगीरिताः ॥ सर्वेषां ज्ञानदो विष्णुर्यशोदातेति चोदितः ॥१३॥ यस्माद्व्यासात्मना तेषां भारते यश ऊचिवान् ॥ ज्ञानदश्च शुकादीनां ब्रह्मरुद्रादिरूपिणां॥१४॥ब्रह्माधिकश्च देवेभ्यःशेषाद्रुद्रादपीरितः॥प्रियश्च विष्णोःसर्वेभ्य इति भीमनिदर्शनात्॥१५॥**

वचनंव्याख्यानमित्यर्थः । अस्यभारतस्यनिर्वचनज्ञानमात्रेण सर्वपापक्षयकथनादुत्तमत्वंज्ञेयं ॥ ११ ॥ इतोप्युत्तममित्याह । निर्णयइति । भारतेसर्वशास्त्राणांनिर्णयःनिर्णीतिःसदृष्टांतःदृष्टांतोनिदर्शनंतेनसहितःवर्ततेहि तेनतस्योत्तमत्वमिति । सदृष्टांतःनिर्णयःकथंकृतइत्यतआह । विष्ण्विति । यतःसर्वेभीमाद्याःसम्यक्कृष्णवशेईरिताः अतःब्रह्मादीनांविष्णुवशत्वंप्रकाशितंकथितंहि । कृष्णस्यविष्णुत्वाद्भीमस्यब्रह्मत्वादितिभावः ॥ १२ ॥ अन्योपिशास्त्रार्थःसदृष्टांतउक्तइत्याह । सर्वेषामिति ॥ १३ ॥ तदेवोपपादयति । यस्मादिति । तेषांभीमादीनांयशःऊचिवान् । अतःयशोदातेतिभावः । ज्ञानदत्वंदृष्टांतेनोपपादयति । ज्ञानदइति । ब्रह्मरुद्रादीनांरूपाणियेषुतेषां वैशंपायनंब्रह्माशुकंवायुः पैलंशेषः सुमंतंगरुडः जैमिनिंशक्रः विवेशइत्यादेःवक्ष्यमाणत्वात् शुकस्यचरुद्रत्वात् ॥ १४ ॥ तारतम्यमपिसदृष्टांतमुक्तमित्याह । ब्रह्मेति । ब्रह्मादेवेभ्यःशेषाद्रुद्राद्प्यधिकइतीरितः विष्णोःसर्वेभ्यःपूर्वोक्तेभ्यःप्रियश्चेतिइतीरितः । भीमनिदर्शनान्निदर्शनंप्राप्य । भीमदृष्टांतेनेत्यर्थः । भीमस्यसर्वाधिकाऽतिप्रियत्वकथनादितिभावः । अत्रशेषाद्रुद्रादितिकथनंमनुष्येषुगरुडावताराभावात् ॥ १५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ननु भीमस्यप्रियत्वंकुतइत्यआह । भूभारेति । मारुतिर्भीमः । प्रधानांगंयोयस्यकार्येप्रधानांगंसतस्यप्रियइतिसासिद्धं प्रथमसाधनत्वातप्रियोभवतुबलाधिकश्चकुतइत्यतआह । मागधेति । आदिपदात्कीचकादीनांग्रहणं। तेनभीमस्यबलाधिक्यंबलाधिकमागधादिवधात्सिद्धमितिभावः॥ १६॥बलाधिकत्वेप्युत्तमत्वंकुतइत्यतःअनुमानेनसमर्थयितुंव्याप्ति माह । यइति । वेनादिव्यावृत्यर्थमंगमिति । दुर्योधनादीनामप्यंगत्वंस्यादित्यआह । तदिति । तदंगत्वंभक्त्यैवान्यथाविष्णुभक्त्यभावेनभवति ॥ १७ ॥ एवंचेद्द्रौणेरर्जुनस्यवरत्व प्राप्तमित्यतःविशेषणांतरमाह । बलमिति । नैसर्गिकंस्वाभाविकं तद्व्यावर्त्यमाह । वरेति । तद्बलंवरास्त्रादेश्चेदन्यथोत्तमत्वसाधकंनभवति । बलमन्यावेशनिमित्तंचेदुत्तमत्वम न्यात्मकंयदावेशनिमित्तंबलंतदात्मकंतत्स्वरूपंहिप्रसिद्धं । तेनार्जुनस्याधिक्यासिद्धिरितिभावः ॥१८ ॥ नानेनब्राह्मणआधिक्यसिद्धिःक्षत्रियेष्वितिव्याप्तेःसंकोचनाद्ब्राह्मण श्चदेवत्वादित्यतआह। देवेष्विति। देवेषुबालिनामेवप्रधानेभक्तिज्ञाने। अन्यथाबलाभावेभक्तिज्ञाने न। भक्तिज्ञानेअतिप्रियत्वेप्रयोजकेइत्याह। सइति। सएवभक्तिज्ञानवानेव ।

**भूभारहरणे विष्णोः प्रधानांगं हि मारुतिः ॥ मागधादिवधादेव दुर्योधनवधादपि ॥ १६ ॥ यो य एव बलज्येष्ठः क्ष त्रियेषु स उत्तमः ॥ अंगं चेद्विष्णुकार्येषु तद्भक्त्यैव च नान्यथा ॥ १७॥ बलं नैसर्गिकं तच्चेद्वरास्त्रादेस्तदन्यथा ॥ अ न्यावेशनिमित्तं चेद्बलमन्यात्मकं हि तत् ॥ १८॥ देवेषु बलिनामेव भक्तिज्ञानेन चान्यथा ॥ स एव च प्रियो विष्णोर्ना न्यथा तु कथं च न ॥ १९ ॥ तस्माद्यो यो बलज्येष्ठः स गुणज्येष्ठ एव च ॥ बलं हि क्षत्रिये व्यक्तं ज्ञायते स्थूलदृष्टि भिः ॥ २० ॥ ज्ञानादयो गुणा यस्माज्ज्ञायंते सूक्ष्मदृष्टिभिः ॥ तस्माद्यत्र बलं तत्र विज्ञातव्या गुणाः परे ॥२१॥**

अत्रभक्तिशब्देनस्नेहमात्रंग्राह्यं । अथवा ज्ञानशब्देनजगज्ज्ञानंग्राह्यं । अन्यथाभक्तिभावे कथंचनकेनापिप्रकारेण नतुप्रियोनैव ॥ १९ ॥ क्षत्रियेष्वित्यादिनासिद्धांव्याप्ति मनुवदति । तस्मादिति । योयएवसत्क्षत्रियत्वेसतिस्वाभाविकबलज्येष्ठःसगुणज्येष्ठइति । ननु क्षत्रियेष्वितिकिमर्थमुच्यते । सामान्येनयोयःसन्बलज्येष्ठःसगुणज्येष्ठइ तिकुतोनोच्यते तेनदेवग्रहणमपिस्यादित्यतःसत्यं । स्थूलदृष्टिभिःक्षत्रियेव्यक्तंस्फुटंबलंज्ञायते। ततःक्षत्रियइत्युक्तमित्याह। बलमिति॥२०॥अन्यगुणसत्वेकिंमानमित्यत आहज्ञानादयइति । उक्तांव्याप्तिमुपसंहरति ।तस्मादिति। भक्त्याविष्णुकार्यांगमितिविशेषणात्सिद्धमर्थमाह। देवेष्विति। देवपदंसत्क्षत्रियस्याप्युपलक्षकं विशेषणव्याव र्त्यानाह । नचेति । तत्रोक्तमेवहेतुमाह । वासुदेवेति । यद्वा ज्ञानबलयोःसमव्याप्तत्वात्क्षत्रियेबलपूर्वकव्याप्तिग्रहणेकिंकारणमित्यतआह । बलमिति। तर्हि अन्यगु णसत्वेकिंमानमित्यतआह । स्थूलेति । सूचितमानंवदन्फलितांव्याप्तिमाह । ज्ञानेति । देवेष्वेवसत्स्वेवेयंव्याप्तिःएवकारव्यावर्त्यमाह । नचेति । अन्येष्वसत्सुइयंव्याप्तिर्न

च नैवेत्यर्थः ।ननु बलंप्रमाणंक्षत्रियेषुचेत्तर्हि द्रोणद्रौण्यादीनांबलमुत्तमत्वसाधकंनस्यादित्यतआह । क्षत्रादिति । यत्रयस्मिन्देशेकालेचकेशवःदुष्टनिधनेप्रवृत्तः । तदा तत्रचक्षत्रादन्येष्वपिबलंप्रमाणंज्ञापकं । प्रसंगादन्यदप्याह । ज्ञानेति । तथैवयदाज्ञानकार्येप्रवृत्तस्तदाक्षत्रियादौज्ञानमपिप्रमाणंज्ञापकंभवतिहि ॥ २१॥ २२ ॥ २३॥ ननु तर्हिब्राह्मणेषुज्ञानाधिकःक्षत्रियेषुबलाधिकोगुणाधिकइतिव्यवस्थायाःकागतिरित्यतआह । अन्यत्रेति । अन्यत्रदुष्टहननाख्यकार्यादन्यत्रज्ञानमेवप्रमाणंज्ञापकं । अन्यत्रज्ञानकार्यादन्यत्रक्षत्रियाणांबलंप्रमाणंज्ञापकंभवति । सर्वेषांब्राह्मणादीनांबलज्ञानादीनांच विष्णुकार्यताविष्णोःकार्येभ्यस्तस्यभावः ज्ञेया॥२४॥बलज्ञानकार्यताकेन रूपेणेत्यतआह । कृष्णेति ॥ २५॥ कृष्णादीनांविष्ण्ववतारत्वेइदंभवेदित्यत स्तदुपपादयति । मत्स्येति ॥२६॥ रुचेःसुतःयज्ञः ॥२७॥ स्त्रीरूपःनारायणीरूपः । वडवावक्त्रः

देवेष्वेव न चान्येषु वासुदेवप्रतीपतः ॥ क्षत्रादन्येष्वपि बलं प्रमाणं यत्र केशवः ॥ २२ ॥ प्रवृत्तो दुष्टनिधने ज्ञानकार्ये तथैव च ॥ २३ ॥ अन्यत्र ब्राह्मणानां तु प्रमाणं ज्ञानमेव हि ॥ क्षत्रियाणां बलं चैव सर्वेषां विष्णुकार्यता॥२४॥ कृष्णरामादिरूपेषु बलकार्यो जनार्दनः ॥ दत्तव्यासादिरूपेषु ज्ञानकर्यास्तथा प्रभुः ॥ २५॥ मत्स्यकूर्मवराहाश्च सिंहवामनभार्गवाः ॥ राघवः कृष्णबुद्धौ च कृष्णद्वैपायनस्तथा ॥२६॥ कपिलो दत्तऋषभौ शिंशुमारो रुचेः सुतः ॥ नारायणो हरिः कृष्णस्तापसो मनुरेव च ॥ २७ ॥ महिदासस्तथा हंसः स्त्रीरूपो हयशीर्षवान् ॥ तथैव वडवावक्त्रः कल्की धन्वंतरिः प्रभुः॥२८॥ इत्याद्याः केवलो विष्णुर्नैषां भेदः कथं चन ॥ न विशेषो गुणैः सर्वैर्बलज्ञानादिभिः क्वचित ॥ २९ ॥ श्रीब्रह्मरुद्रशेषाश्च वींद्रेंद्रौ कामएव च ॥ कामपुत्रोनिरुद्धश्च सूर्यचंद्रौ बृहस्पतिः ॥ ३० ॥ धर्म एषां तथा भार्या दक्षाद्या मनवस्तथा ॥ मनुपुत्राश्च ऋषयो नारदः पर्वतस्तथा ॥ ३१ ॥ ॥ ॥

वडवाग्निः समुद्रांतर्वासी । 'भूतादिभूतांबुनिधानमध्येभूत्वाहरिःसर्वहरोतिधाम्ना । अगाधमंभोविदधातिभस्मयोवाडवाग्निर्नृहरिर्विचिंत्य' इतिध्यानचक्रे । केवलःभेदरहितः। अभेदेपिनेंद्रार्जुनादिवत्विशेषोस्तीत्याह । नेति । एषांमत्स्यादीनांकथंचनभेदःसविशेषभेदःभेदाभेदोवानेत्यर्थःस्वाभेदेपिगुणैर्भेदस्यादित्यतआह । नेति । क्वचित्कस्मिंश्चिदवतारे ॥ २९ ॥ श्रीब्रह्मादीनांअवतारत्वेनश्रवणात्तेकिमर्थंनोक्ताइत्यतआह । श्रीति । कृष्णपौत्रानिरुद्धव्यावृत्त्यर्थंभगवद्रूपव्यावृत्त्यर्थंचकामपुत्रइति ॥ ३० ॥ एषांब्रह्मादीनांभार्याश्च । मनवःस्वायंभुवादयः ॥ ३१ ॥ ॥ ॥ ॥ ॥ ॥

वैन्यःपृथुः लक्ष्मणाद्यास्त्रयःतद्गुणसंविज्ञानोबहुव्रीहिः लक्ष्मणभरतशत्रुघ्नाः । रौक्मिणेयःरुग्मिणीपुत्रःप्रद्युम्नः इत्याद्याःहरेर्विशेषावेशिनः । विशेषावेशित्वात्तथाव्यवहारः ॥३२॥३३॥ विशेषावेशिनइत्यत्रविशेषपदव्यावृत्यमाह । वालीति । प्रधानांगंहिमारुतिरित्युक्तमर्थमुपसंहरन् उपपादयति । तस्मादिति । बलकार्यप्रवृत्तस्यहनुमान्भीमश्चांतरंगंयथाभवतितथातस्यहरेःकार्यसाधकः ॥३४॥३५॥ वायोरंतरंगत्वेसिद्धेपि ब्रह्माधिकश्चदेवेभ्यःइत्यस्यकथंसिद्धिरित्यतआह । ब्रह्मेति । वायुर्ब्रह्मात्मकःब्रह्माभिन्नइतिप्रतिज्ञातत्रहेतुकथनंयतइति । पुरापूर्वकल्पे । वायुःपश्चाद्द्वितीयकल्पेब्राह्मपदंअगात् । तेनवायोराधिक्येउपादितेब्रह्मणएवाधिक्यमुपपादितंभवति । नन्वन्यस्यापि ब्रह्मपदप्राप्तिर्भवत्वित्यतआह । वायोरिति । वायोरेवेतिनियमान्नान्यस्यतत्पदप्राप्तिरितिभावः । निगमयति तस्मादिति । सएववायुरेव । सःब्रह्मा ॥३६ ॥ ननु स्त्रीषुगुणवै

कश्यपः सनकाद्याश्च वन्ह्याद्याश्चैव देवताः ॥ भरतः कार्तवीर्यश्च वैन्याद्याश्चक्रवर्तिनः ॥ ३२ ॥ गयश्च लक्ष्मणाद्याश्च त्रयो रोहिणिनंदनः ॥ प्रद्युम्नो रौक्मिणेयश्च तत्पुत्रश्चानिरुद्धकः ॥ ३३ ॥ नरःफाल्गुन इत्याद्या विशेषावेशिनो हरः ॥ वालिसांबादयश्चैव किंचिदावेशिनो हरेः ॥ ३४ ॥ तस्माद्बलप्रवृत्तस्य रामकृष्णात्मनो हरेः ॥ अंतरंगं हनूमांश्च भीमस्तत्कार्यसाधकः ॥३५॥ ब्रह्मात्मको यतो वायुः पदं ब्राह्ममगात्पुरा ॥ वायोरन्यस्य न ब्राह्मपदं तस्मात्स एव सः ॥ ३६ ॥ यत्र रूपं तत्र गुणा भक्त्याद्याः स्त्रीषु नित्यशः ॥ रूपं हि स्थूलदृष्टीनां दृश्यं व्यक्तं ततो हि तत् ॥ ३७॥ प्रायो वेत्तुं न शक्यंते भक्त्याद्याः स्त्रीषु यत्नतः ॥ यासां रूपं गुणास्तासां भक्त्याद्या इति निश्चयः ॥ ३८ ॥ तच्च नैसर्गिकं रूपं द्वात्रिंशल्लक्षणैर्युतं ॥ नालक्षणं वपुर्मात्रं गुणहेतुः कथं च न ॥ ३९ ॥ ॥ ॥

शिष्टयज्ञापकंकिंज्ञानंबलंवानोभयमपिज्ञातुंशक्यतेप्रायेणतज्ज्ञानोपायस्यव्याख्यानस्ययुद्धस्यचाभावादित्यतआह । यत्रेति । रूपस्यहेतुत्वकथनेनिमित्तमाह । रूपमिति । यतःस्थूलदृष्टीनामितिषष्ठी तृतीयार्थेरूपंव्यक्तंस्फुटंयथाभवतितथादृश्यंज्ञेयं । ततःस्फुटज्ञेयत्वात्तद्रूपंनिमित्तमुक्तंहि ॥ ३७ ॥ तदेवोपपादयति । प्रायइति । यत्नतःप्रयत्नेनद्रौपद्याःधर्मकथनेनज्ञानस्यसत्यभामायाश्चयुद्धकरणेनबलस्याभिव्यक्तत्वात् प्रायइत्युक्तं । उपसंहरति । यासामिति ॥ ३८ ॥ व्यभिचाराद्धेतौविशेषणमाह । तच्चेति । तद्रूपंनैसर्गिकंस्वाभाविकं यथायोग्यंद्वात्रिंशल्लक्षणोपेतंस्वाभाविकंयद्रूपंतदेवभक्त्यादिज्ञापकमित्यर्थः । विशेषणव्यावर्त्यमाह । नालक्षणमिति । अलक्षणंद्वात्रिंशल्लक्षणारहितं । वपुर्मात्रंकथंचनकेनापिप्रकारेणगुणज्ञापनस्यहेतुःकारणंन ॥ ३९ ॥ ॥ ॥ ॥

अनेनसिद्धमर्थमाह । आसुरीणामिति । वरावेशादेःसकाशाल्लक्षणानिनभविष्यंति । अतःलक्षणाभावाद्भक्तिःकथंचनन ॥ ४० ॥ द्वात्रिंशल्लक्षणोपेतनैसर्गिकरूपत्वात्भक्त्यादियुताःकाइत्यतस्तामुदाहरति । तस्मादिति । श्रीरूपगुणोदारारूपगुणैरुत्कृष्टायतस्तस्मात्सर्वपरमासर्वाभ्यःश्रेष्ठोत्तमामता ॥ ४१ ॥ परमेत्यनेनसूचितपरापरभावमाह । ततइति । तस्याअंगत्वमाह । भूभारेति । ईशितुःहरेःभीमवद्भूभारस्यक्षपणेनिरसनेनाशनइतियावत् । साक्षादंगंभवति ॥ ४२ ॥ साक्षादंगमितिप्राप्तभीमसाम्यंनिवारयति । हंतेति । भीमस्यवैरहननयोःकारणत्वाच्छ्रैष्ठ्यं । द्रौपद्यास्तुवैरमात्रहेतुत्वात्तदानंतर्यमित्यर्थः ॥ ४३ ॥ तदनंतरमंगभूतमाह । बलेति । ततःद्रौपद्याःपश्चाद्बलदेवः। ततःपश्चाद्बलदेवानंतरंफाल्गुनः फाल्गुनस्याश्वत्थाम्नःसकाशाच्छ्रैष्ठ्येकारणंनरावेशादिति । अन्यथानरावेशाभावेद्रौणिःबलभद्रानंतरमश्वत्थामा।यद्यपि भरतवालिनाविवद्रौणिबलदेवावितिवक्तव्यंसमत्वात् ।तथापिद्रौण्यपेक्षयाबलदेवेविशेषावेशात्ततःपश्चादित्युक्तंतुविशेषतःद्रौण्यनंतरमर्जुनइतिततः पश्चाद्रौण्यर्जुनानंतरंपरे

आसुरीणां वरादेस्तु वपुर्मात्रं भविष्यति ॥ न लक्षणान्यतस्तासां नैव भक्तिः कथंचन ॥४०॥ तस्माद्रूपगुणोदारा जानकी रुक्मिणी तथा ॥ सत्यभामेत्यादिरूपा श्रीः सर्वपरमा मता ॥ ४१ ॥ ततः पश्चाद्द्रौपदी च सर्वाभ्यो रूपतो वरा ॥ भूभारक्षपणे साक्षादंगं भीमवदीशितुः ॥ ४२ ॥ हंता च वैरहेतुश्च भीमः पापजनस्य तु ॥ द्रौपदी वैरहेतुः सा तस्माद्भीमादनंतरा ॥४३॥ बलदेवस्ततः पश्चात्ततः पश्चाच्च फाल्गुनः॥ नरावेशादन्यथा तु द्रौणिः पश्चात्ततो परे॥४४॥ रामवज्जांबवत्याद्याः षट् ततो रेवती तथा॥ लक्ष्मणो हनुमत्पश्चात्ततो भरतवालिनौ ॥ शत्रुघ्नश्च ततः पश्चात्सुग्रीवाद्यास्ततो वराः॥४५॥ रामकार्यं तु यैः सम्यक् स्वयोग्यं न कृतं पुरा ॥ तैः पूरितं तु कृष्णाय बीभत्स्वाद्यैःसमंततः॥४६॥

प्रद्युम्नानिरुद्धादयः ॥ ४४ ॥ पुरुषेषूक्त्वास्त्रीष्वप्याह । रामवदिति । जांबवत्याद्याःषण्महिष्यःजांबवत्याःसाक्षाद्ग्रहणाज्जांबवतीरामवदंगमन्यास्तुकिंचिदून्यूनाइतिज्ञातव्यं । ततःषण्महिष्यनंतरंरेवतीबलदेवभार्यातथांगमित्यर्थः एवंवायुभारतीशेषरुद्रादीनांतारतम्यं । कृष्णावतारेवतीर्णभीमद्रौपदीबलदेवद्रौणिपार्थादिभिरुपपाद्येदानीं रामावतारस्थितहनुमदादिभिःतमेवतारतम्यक्रममाह । लक्ष्मणइति । हनुमत्पश्चाल्लक्ष्मणःततःलक्ष्मणानंतरं भरतवालिनौसमत्वाद्द्विवचनेननिर्देशःकृतः ततस्तयोस्ततःशत्रुघ्नात्सुग्रीवाद्याअवराः ॥ ४५॥ ननु अवतारेषुहरेर्दुष्टवधादिनांगत्वेवाल्यादीनांरामावतारेसेवाकरणादनुत्तमत्वंसुग्रीवादेःसेवाधिक्येनाधिक्यं तथाकर्णादीनांअधमत्वंविविदादीनामुत्तमत्वंस्यात्तथाचनस्वरूपनिर्णयःस्यादित्यतआह । रामकार्यमिति । समंततःसर्वात्मना ॥ ४६ ॥ ॥ ॥ ॥ ॥

तत्ररामावतारेअत्रकृष्णावतारेऊनंन्यूनंकृतंयैःमैंदविविदाद्यैः प्रादुर्भावद्वयेधिकंकृतंतैर्मैदविविदाद्यैःविप्रतीपंविरोधः अस्मिनरामकृष्णाख्येसर्वेषांब्रह्मादीनांनिर्णयउत्तमत्वनीचत्वनिर्णयःकृतः॥४७ ॥ ४८॥ ननु रामावतारेधिकंयैःकृतंतैःकृष्णावतारेन्यूनंकृतंयथा तथावराहाद्यवतारेषुसेवादिनापिस्वरूपनिर्णयःस्यादित्यतआह। नेति । एतयोःरामकृष्णावतारयोःर्किंचिच्छुभंयदिवाथवाशुभमन्यत्रवराहाद्यवतारेषुक्वापिकुत्रापिनपूर्यतेपूर्णनक्रियते तस्मादवतारद्वयएवनिर्णयोभवति ॥४९॥ तत्रापिविशेषमाह। पश्चात्तनत्वादिति । कृष्णस्यपश्चात्तनत्वाच्चरमत्वात्तत्रकृष्णावतारेवैशेष्यात्विशेषेणनिर्णयःभवति । ननु कृष्णावतारस्यनिर्णायकत्वेभारतस्यकिमायातमित्यतआह । प्रादुर्भावमिति । इमंप्रादुर्भावंकृष्णावतारं रामकथाभावात्पुनःकथंनिर्णयइत्यतआह । उक्तेति । यद्वा नन्ववतारद्वयेसर्वनिर्णयश्चेद्भारतस्यसर्वनिर्णायकत्वंकथमित्यतआह । प्रादुर्भावमिति ।

अधिकं यैः कृतं तत्र तैरूनं कृतमत्र तु ॥ कर्णाद्यैरधिकं यैस्तु प्रादुर्भावद्वये कृतं ॥४७॥ विविदाद्यैर्हि तैः पश्चाद्धि प्रतीपं कृतं हरेः ॥ प्रादुर्भावद्वये ह्यस्मिन् सर्वेषां निर्णयः कृतः ॥४८॥ नैतयोरकृतं किंचिच्छुभं वा यदि वाशुभं ॥ अन्यत्र पूर्यते क्वापि तस्मादत्रैव निर्णयः ॥ ४९ ॥ पश्चात्तनत्वात्कृष्णस्य वैशेष्यात्तत्र निर्णयः ॥ प्रादुर्भावमिमं तस्माद्गृहीत्वा भारतं कृतं ॥ उक्ता रामकथा ह्यस्मिन्मार्कंडेयसमाख्यया ॥५०॥ तस्माद्यद्भारते नोक्तं तद्धि नैवास्ति कुत्रचित् ॥ अत्रोक्तं सर्वशास्त्रेषु न हि सम्यगुदाहृतं ॥५१॥ इत्यादि कथितं सर्वं ब्रह्मांडे हरिणा स्वयं ॥ मार्कंडेयेपि कथितं भारतस्य प्रशंसनं ॥५२॥ देवतानां यथा व्यासो द्विपदां ब्राह्मणो वरः ॥ आयुधानां यथा वज्रमौषधीनां यथा यवाः ॥५३॥ तथैव सर्वशास्त्राणां महाभारतमुत्तमम् ॥ ५४ ॥ ॥ ॥ ॥

इमंप्रकृतंप्रादुर्भावमवतारद्वयंतस्मादेतदवतारद्वयप्रतिपादकत्वेनसर्वार्थनिर्णायकत्वमितिभावः । भारतेपांडवप्रसंगेनहरिवंशेचकृष्णकथैवोक्तारामकथाकुत्रोक्तेत्यतआह । उक्तेति ॥५०॥ भारतस्यसर्वशास्त्रार्थत्वंउपसंहरति । तस्मादिति । नोक्तंनप्रतिपादितंतत्प्रमेयंकुत्रचित्कस्मिंश्चित्पुराणेनैवास्तिइतोपिविशेषमाह । अत्रेति । अत्रभारतेउक्तंप्रतिपादितंसर्वशास्त्रेष्वन्यशास्त्रेषुसम्यक्स्फुटंविस्तृत्यनोदाहृतंनकथितं ॥५१॥ स्वयंहरिणाव्यासेनब्रह्मांडपुराणेइत्यादिभारतस्योत्तमत्वादिकंसर्वंकथितं । अतःभारतस्यसर्वनिर्णयात्मकत्वादुत्तमत्वमित्यर्थः॥५२॥भारतस्योत्तमत्वेप्रमाणांतरमुदाहरति । मार्कंडेयइति । मार्कंडेयपुराणेपितदुदाहरति । देवतानामिति । द्विपदांब्राह्मणक्षत्रियवैश्यशूद्रेति वर्णानांब्राह्मणोगुरुरितिवचनात् । इदंवर्णसाजात्यपक्षेमानुषसाजात्यपक्षे । मनुष्याणामिति॥५३॥वज्रमुत्तमंचक्रंविनोत्तमंपरिकीर्तितंइतिशेषः । कथितमित्यस्यानुषंगोवा ५४

पुराणांतरेणाप्युत्तमत्वमुपपादयति । वायुप्रोक्तइति । तत्प्रसिद्धं व्यासमित्यनूद्यनारायणमितिनारायणत्वंविधीयते । तत्रहेत्वाकांक्षायांपुंडरीकाक्षान्नारायणान्महाभारतकृत् कोहिभवेन्नकोपीत्यर्थः । साक्षान्नारायणकृतत्वाच्छ्रैष्ठ्यं । भारतस्यव्यासकृतत्वेनव्यासस्यनारायणत्वोपपादनाच्च । नहिपुराणत्रितयएवउत्तमत्वंकथितमपितुसर्वत्रेत्याह । एवंहीति । एवंभारतस्यउत्तमत्वमितिशेषः । नकेवलंसर्वशास्त्रेषुभारतोत्तमत्वमुच्यतेपितुमदुक्तनिर्णयोप्युच्यतइत्याह । उक्तइति । माहात्म्यक्रमपूर्वकःसर्वएवायमर्थः । स र्वशास्त्रेषूक्तः प्रोक्तोस्ति । नकेवलमयमर्थःसर्वशास्त्रेषूक्तःअपितुभारतेपिकथितइत्याह । भारतेपीति । उक्तोर्थइत्यावर्त्यान्वेतव्यं भारतेपिसर्वोप्ययमर्थउक्तइत्यन्वयः सकलशास्त्रार्थंपुराणवाक्यैरभिहितमित्यनूद्यभारतेअयमर्थउक्तइत्युक्तंसोर्थःकथंज्ञायतइत्याशंकांपरिहरन्भारतवाक्यानिसंदिग्धानिभारतवाक्यैरेवनिर्णीयंतइत्युक्तप्रतिज्ञां व्यवहितत्वात्स्मारयति । यथेति । उक्तइतिअर्थमनुवृत्त्यान्वेतव्यं योयंमाहात्म्यक्रमपूर्वकःमाहात्म्यंमहिमाक्रमस्तारतम्यक्रमस्तौपूर्वौयस्यसःसर्वोर्थःमयाउक्तःसोयंनिर्णयः

वायुप्रोक्तेपि तत्प्रोक्तं भारतस्य प्रशंसनं ॥ कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुं ॥ ५५ ॥ को ह्यन्यः पुंडरीकाक्षा न्महाभारतकृद्भवेत् ॥ एवं हि सर्वशास्त्रेषु पृथक् पृथगुदीरितं ॥ ५६ ॥ उक्तोर्थः सर्व एवायं माहात्म्यक्रमपूर्वकः ॥ भा रतेपि यथा प्रोक्तो निर्णयोयं क्रमेण तु ॥ तथा प्रदर्शयिष्यामस्तद्वाक्यैरेव सर्वशः ॥ ५७ ॥ नारायणं सुरगुरुं जगदेक नाथं भक्तप्रियं सकललोकनमस्कृतं च ॥ त्रैगुण्यवर्जितमजं विभुमाद्यमीशं वंदे भवघ्नममरासुरसिद्धवंद्यं ॥ ५८ ॥ ज्ञानप्रदः स भगवान् कमलाविरिंचिशर्वादिपूर्वजगतो निखिलाद्वरिष्ठः ॥ भक्त्यैव तुष्यति हरिः प्रवणत्वमेव सर्वस्य धर्म इति पूर्वविभागसंस्थः ॥ ५९ ॥ ॥ ॥ ॥

भारतेपियथायेनप्रकारेणप्रोक्तस्तथासर्वशस्तंप्रकारंतद्वाक्यैःभारतवाक्यैरेवप्रदर्शयिष्यामइति । यद्वासर्वएवायंमाहात्म्यक्रमपूर्वकःमाहात्म्यंमहिमाशास्त्रेप्रोक्तस्तथाभारतेपि यथाक्रमेणायंनिर्णयःप्रोक्तस्तथातद्वाक्यैःशास्त्रभारतवाक्यैःप्रदर्शयिष्यामइति ॥ ५५ ॥ ५६ ॥ ५७ ॥ तत्रविष्णोःसर्वोत्तमस्त्वप्रतिपादकवाक्यमुदाहरति । नारायणमिति ॥ ५८ ॥ तंश्लोकंव्याख्याति । ज्ञानेति । नारायणशब्दार्थमाह । सइति । नरैःप्रार्थ्यमैश्वर्यादितस्यस्वातंत्र्येणाश्रयइत्यस्यतात्पर्यकथनंसभगवानितिवंद्यत्वेहेतुः । सुरगुरु मित्यस्यतात्पर्यकथनंकमलेति सुष्ठुरमंतिरमयंतीतिवासुरास्तेषां तस्यार्थाःकमलाविरिंचशर्वादिपूर्वजगतइति । नज्येष्ठत्वमात्रेणगुरुत्वमपितुज्ञानप्रदत्वादिति । गुरुरित्यस्य व्याख्यानंज्ञानप्रदइति । अत्रलक्ष्म्याज्ञानदत्वंनामतत्स्फूर्तेस्तदधीनत्वंतदुक्तमीशावास्यभाष्ये ।'यस्मादृब्रह्मेंद्ररुद्रादिदेवतानांश्रियोपिच । ज्ञानस्फूर्तिःसदातस्मैहरयेगुरवेन

म इति । ज्ञानस्फूर्तिःज्ञातव्यार्थप्रतिभाविशेषप्राप्तिरप्युक्तैतरेयभाष्ये । जानंत्याअपिदेव्यालोकानुग्रहार्थंविशेषज्ञानार्थंच कोयमात्मेतिपृष्टःसभगवान्आह ।"कतरःसआत्मे तिकतरआनंदतम इति । सुरगुरुत्वेहेतुकथनपरंजगदेकनाथमिति । तत्तात्पर्यतोव्याचष्टे निखिलादिति । जगतइत्यस्यनिखिलादिति एकनाथःमुख्यस्वामीति । नेदंगुरुत्वो पपादकंराजादिवत्इत्यतोतिशयेनवरोवरिष्ठइति । यद्वा कमलाविरिंचीत्यादिअत्रापिसंबंधनीयं । ननु एकादृशस्यप्राप्तिरेवदुर्लभेत्यतस्तत्प्राप्तिसाधनमाह । भक्तेति । त त्तात्पर्यमाह । भक्त्यैवेति । भक्तिमान्भक्तइति । भक्तविशेषणभताभक्तिर्लभ्यतइत्याभिप्रेत्योक्तंभक्त्यैवेति । वंद्यत्वेहेत्वंतरंसकललोकनमस्कृतामिति । तस्यतात्पर्यकथनंहरी ति । णमुप्रह्वत्वेशब्देचेतिधातुव्याख्यानात्प्रवणत्वमित्युक्तं । किंसंबंधीत्यतःहरीतिनमस्कृतमितिनासिद्धानुवादअपितुविधिबोधकमित्याह । सर्वस्यधर्मइति । हरिप्रवणत्वं नश्रवणादिवत्नियताधिकारिकमपितुस्त्रीशूद्रादिसर्वसाधारणमितिभावः । इत्यनेनप्रकारेणपूर्वविभागेपूर्वार्धसंस्थस्तात्पर्यार्थउक्तः ॥ ५९ ॥ क्रोधादियुक्तस्यवंदनमशक्य मित्यतःवंद्यत्वोपयोगिक्रोधाद्यभावमाह । त्रैगुण्येति । तत्तात्पर्यार्थमाह । निर्दोषकइति । तेनत्रिगुणानामिवदोषकारणत्वात्कारणाभावादेवक्रोधादिकार्याभावेसिद्धेवंद्यत्वं सिद्धमितिभावः । दोषाभावमुपपादयति । अजमिति । नजायतइत्यजइतीदंजीवसाधारणमित्यतः नजायतेदेहोयस्येत्यजस्तेनदेहस्याप्यप्राकृतत्वात्नित्यमुक्तइत्यर्थः ।

**निर्दोषकः सृतिविहीन उदारपूर्णसंविद्गुणः प्रथमकृत्सकलात्मशक्तिः ॥**
**मोक्षैकहेतुरसुरूपसुरैश्च मुक्तैर्वंद्यः स एक इति चोक्तमथोत्तरार्धे ॥ ६० ॥**

तत्तात्पर्यमाह । सृतिविहीनइति । तेनरमासाम्यंप्राप्तमित्यतआह । विभुमिति । तत्तात्पर्यमाह । उदारेति । संविज्ज्ञानंगुणाआनंदादयश्चसंविदाख्याःगुणाःसंविद्गुणाःवहुव चनंआद्यर्थेइतिवा । उदाराउत्कृष्टाःपूर्णाःप्रत्येकंपूर्णाःसंविद्गुणाःयस्यसइतिलक्ष्म्याःपूर्णगुणाभावात्नसाम्यं । अजत्वेहेत्वंतरमाह । आद्यमिति । तदर्थमाह । प्रथमकृदिति । आदौ गापयतिस्वोदराद्बहिर्जगदितिआद्यःतेनास्यप्रथमकर्तृत्वादेतस्मादादौकर्त्रंतरस्याभावात्नजन्मेतिभावः । अन्यत्रादृष्टंप्रलयवर्तित्वंकथमित्यतईशमित्युक्तंतत्तात्पर्यार्थमा ह । सकलेति । सकलासर्वकार्यविषयात्मास्वरूपभताशक्तिर्यस्येति । वंद्यत्वप्रयोजकनिष्ठप्रदत्वमाह । भवघ्नमिति । इदमपितात्पर्यतोव्याख्याति । मोक्षैकहेतुरिति । अत्रमो क्षपदेनलिंगभंगस्वरूपभूतदुःखानंदानुभवंचाह । मुख्यमुख्यहेतुरित्यर्थः । वंद्यत्वेहेत्वंतरमाह । अमरेति । अथवा पूर्ववंद्यत्वेभवघ्नमितिप्रयोजकमुक्तं । तथाच प्राप्तफलैःनवं द्यइतिप्राप्तेआह । अमरेति वंद्यत्वंनामस्वनीचत्वज्ञानपूर्वकंतयोत्तमत्वज्ञानपूर्वंतस्मिन्स्नेहविशेषः । अयमेवभक्तिःभक्त्याचमोक्षस्तथात्वेनासुराणांतथामुक्तिरितिवाक्यविरो धइत्यतस्तदर्थमाह । असुरूपेति । नविद्यतेसुष्ठुरूपंवपुर्येषांनिर्ऋतिप्रह्लादादयः येसुशोभनेरमंतितेसुरास्तैश्चवंद्यइत्यर्थः । तथाचामराःब्रह्माद्याश्चासुराःप्रह्लादाद्याश्चतेचते सिद्धामुक्ताश्चतैर्वंद्यइत्यर्थः । यद्वा । अमराःसामान्यतोदेवाश्चासुराअसूनीन्द्रियाणिरमयंतितेअसुरास्तत्त्वमानिनोदेवाश्चतेचतेसिद्धामुक्ताश्चतैर्वंद्यइत्यर्थः । अतएवअसुरूप

सुरैरित्युक्तं असवः रूपंप्रतिमायेषांतेऽसुरूपाइति अथवासवःरूपंस्वरूपंयेषांतेअसुरूपास्वरूपभूताचिन्मात्रेंद्रियाइत्यर्थः। असुरूपाश्चतेसुराश्च तेनामरासुरेत्यत्र'कडाराःक र्मधारय'इतिपरनिपातः।इदंचमुक्तस्वरूपकथनपरं। तेचतेसिद्धाश्चमुक्ताश्चेति। केचित्तुअसुरूपाःचिन्मात्रेंद्रियाःसिद्धाइति असुरूपेतिसिद्धविशेषणं। तेनामराश्चतेअसुर सिद्धाश्चेतिसमासइत्याहुः। इदमसुरूपसुरैश्चेत्यनुवादाननुरूपमिवाभाति। एकवचनाभिप्रायमाह ; सएकइति। तेनमोक्षप्रदसृष्टिकर्त्रादिमूर्तीनांभेदइतिप्राप्तेअभेदप्रतिपाद कमेकवचनंतस्यार्थः सःसृष्ट्यादिकर्तानारायणएकएवस्वगतभेदरहितइति। उत्तरार्धइतिचापिउक्तं। अथतस्माद्विष्णोःसर्वोत्तमत्वमुक्तंमंगलं ॥ ६० ॥ अमरासुरसिद्धवं द्यमित्यस्यैवंव्याख्यानेकिंबीजमित्यतःपुनरुक्तिपरिहारार्थमेवंव्याख्यानमित्याह। नम्यत्वमिति। उभयत्रपूर्वार्धेउत्तरार्धेचयतःनम्यत्वमुक्तंततःउभयत्रनम्यत्वोक्तेः अस्यहरेः मुक्तैरमुक्तकगणैश्चविनम्यतोक्ताभवति। तेनपुनरुक्तिपरिहारइत्यर्थः। फलितमाह इत्थंहीति। प्रथमतःप्रथमवाक्यएव। इत्थमनेनप्रकारेणामुष्यविष्णोःसर्वगुणपूर्तिः प्रस्ताविताउपक्रांताव्यासेनेतिशेषः। ननु मंगलाचरणवाक्यंनार्थनिश्चायकं तस्येष्टदेवतास्तुत्यर्थस्यप्रतिपाद्यार्थानिश्चायकत्वादित्यत उक्तं प्रतिजानतेतिप्रतिज्ञांकुर्वताभारत

**नम्यत्वमुक्तमुभयत्र यतस्ततोऽस्य मुक्तैरमुक्तकगणैश्च विनम्यतोक्ता ॥ इत्थं हि सर्वगुणपूर्तिरमुष्य विष्णोः प्रस्ताविता प्रथमतः प्रतिजानतैव ॥ ६१ ॥ कृष्णो यज्ञैरिज्यते सोमपूतैः कृष्णो वीरैरिज्यते विक्रमद्भिः ॥ कृष्णो वन्यैरिज्यते संमृशानैः कृष्णो मुक्तैरिज्यते वीतमोहैः ॥ ६२ ॥ सृष्टा ब्रह्मादयो देवा निहता येन दानवाः ॥ तस्मै देवाधिदेवाय नमस्ते शार्ङ्गधारिणे ॥ ६३ ॥** ॥ ॥ ॥ ॥ ॥

स्यशास्त्रत्वातशास्त्रस्यप्रतिज्ञातार्थप्रतिपादकत्वादन्यस्यप्रतिज्ञावाक्यस्याभावादिदमेवमंगलप्रतिपादकंप्रतिज्ञावाक्यंचेत्तस्मादुक्तंयुक्तमित्यर्थः ॥ ६१ ॥ भारतवाक्यानिभारत वाक्यैर्निर्णीयंतइत्युक्तं। तद्दर्शयितुमत्रोक्तमुक्तामुक्तबंधस्वरूपमर्थंस्फुटंप्रतिपादयद्वाक्यंपठति। कृष्णइति। कृष्णःनारायणःसोमपूतैःसोमपानेनपूतास्तैःसोमपानेनशुद्धिमि च्छुभिर्वायज्ञैर्यजंति। तेयज्ञायजमानास्तैःतेनन्नप्रायपाठविरोधः। अत्रयज्ञःकरणं सोमपानेच्छवःकर्तारइत्यर्थात्सिध्यति। इज्यतेपूज्यतेविक्रमंतिपराक्रमंकुर्वंतीतिविक्रमंतस्तैः विक्रमःसाधनं वीराःकर्तारः। वन्यैर्वानप्रस्थैर्यतिभिर्वा। संमृशानैःसम्यग्विष्णुविचारशीलैः। अत्रविचारःकरणं। वीतमोहैःगतहरिज्ञानप्रतिबंधकाज्ञानैःलक्षणयाप्रतिबंधक निवृत्तौस्वतएवाविर्भूतज्ञानवत्त्वाद्वाज्ञानवंतउच्यंते तेनज्ञानंकरणं पूर्वोक्ताश्चयःअमुक्ताःतथाचमुक्तामुक्तपूज्यत्वस्योपसंहारेउक्तत्वादुपक्रमेचतदेवज्ञेयमितिभावः॥६२॥भवन्नमि त्येतद्द्विविधमोक्षदत्वेनव्याख्यातंतद्भारतवाक्येनद्रढयति। सृष्टाइत्यनेनउत्तरार्धेनजगदेकनाथमित्येतदुपपादयति। देवाधिदेवायेत्यनेन ॥ ६३ ॥ ॥

अत्रस्रष्टृत्वंहंतृत्वंनदेहयोगवियोगपरमपितु विशेषार्थपरमिति । तंश्लोकंव्याख्याति । श्लोकद्वयेनस्रष्टृत्वमितिदेवानांस्रष्टृत्वंनामदेवानांमुक्तिप्रदत्वमुच्यते । अन्यद्देहोत्पत्ति नंकुतोनेत्यतउक्तं । उत्पत्तिरिति । दैत्यानामप्युत्पत्तिःसंमितासम्मतातस्मादयंविशेषःमोक्षदत्वरूपःकथितइत्यर्थः । यद्वा अविशेषोयमितिपदच्छेदः । यस्माद्दैत्यानामपिउ त्पत्तिःसंमितासमानातस्मादत्रमुक्तिरेवसृष्टिःउत्पत्तिःसंमितासमानायस्माद्ब्रह्मादयःसृष्टाइतिविशेषोक्तिर्नस्यात्तस्मादपूर्वार्थोलभ्यतइत्यर्थः ॥ ६४ ॥ दैत्यहतिशब्दार्थ माह । अथेति । अथचतस्माद्देवदैत्यहतिर्दैत्यहननंनामतमसिस्थिरानित्यानियतासंस्थितिःनियमेनावस्थानमेवअन्यथादेहवियोगेन कुतोनेत्यतउक्तं । तन्विति । इयमित्य स्यैवव्याख्यानंतनुविभागकृतिःदेहवियोगकरणं । सकलेषुदेवमनुष्यदैत्येषुवर्ततेहि । इयमित्यग्रेवासंबध्यतेसुरदैत्यगेयंहतिः । विशेषकृताप्रीतिःद्वेषरूपविशेषनिमित्तानभवति अतःसृतिहतिशब्दार्थौउक्तावेवग्राह्यौ ॥ ६५ ॥ नकेवलमस्मद्व्याख्यानमुपपत्तिसिद्धमित्यतःसृष्टिहतिशब्दार्थःमुक्तितमःप्रदानार्थकः । अपितु भारतकथापर्यालोचनेनापि

स्रष्टृत्वं देवानां मुक्तिस्रष्टृत्वमुच्यते नान्यत् ॥ उत्पत्तिर्दैत्यानामपि यस्मात्संमिता विशेषोयं ॥ ६४ ॥ अथ च दैत्यह तिस्तमसि स्थिरा नियतसंस्थितिरेव न चान्यथा ॥ तनुविभागकृतिः सकलेष्वियं न हि विशेषकृता सुरदैत्यगा ॥ ॥ ६५ ॥ तमिममेव सुरासुरसंचये हरिकृतं प्रविशेषमुदीक्षितुं ॥ प्रतिविभज्य च भीमसुयोधनौ स्वपरपक्षभिदा क थिता कथा ॥ ६६ ॥ नमो भगवते तस्मै व्यासायामिततेजसे ॥ यस्य प्रसादाद्वक्ष्यामि नारायणकथामिमां ॥६७॥ वासुदेवस्तु भगवान् कीर्त्यतेत्र सनातनः ॥ प्रतिबिंबमिवादर्शे यं पश्यंत्यात्मनि स्थितं ॥ ६८ ॥

देवेष्टसाधकअसुरानिष्टसाधकइतिसिद्धेर्थोदेवायमर्थःसिद्धइत्याह । तमिति । सुरासुरसंचयेहरिकृतंतमिमंपूर्वोक्तंप्रविशेषमुदीक्षितुंउदीक्षयितुमंतर्णीतोणिच् । स्वश्चपरश्चस्वपरौ तौचतौपक्षौचस्वपरपक्षावितिभिदास्वपक्षःपरपक्षइतिभेदेनभीमसुयोधनौविभज्यभारतेप्रतिस्थिताकथाकथिता । अतःपूर्वोक्तएवसृतिहतिशब्दार्थइतिभावः ॥६६ ॥ सुरगु रुंविभुमीशमित्येतद्वैशंपायनकृताद्यपद्येनोपपादयति । नमइति । भगवतइतिउत्कृष्टगुणवत्त्वममिततेजसइतिसकलात्मशक्तित्वमुक्तंभवति । यस्यप्रसादादिमांनारायणकथां वक्ष्यामीत्यनेनसुरगुरुमित्येतत्प्रतिपादितंभवति ॥ ६७ ॥ विष्णोःसर्वभारतप्रतिपाद्यत्वेभारतवाक्यमुदाहरति । वासुदेवइति । सः सनातनःभगवान्वासुदेवःअत्रभारतेकी र्त्यते । सकइत्यतःदृष्टांतपूर्वकंतमाह । प्रतीति । ऋषयआत्मनिजीवेस्थितंयंआदर्शेप्रतिबिंबमिवपश्यंतिइदमुक्तंकाठकभाष्ये ।'जीवेस्थितस्तुभगवान्दृश्यतेज्ञानदृष्टिभिः । आदर्शेमुखवत्सम्यक्'इति । ज्ञानदृष्टिभिःऋषिभिः 'ऋषयोंतःप्रकाशाइतिश्रुते'रितिव्याख्यानात् ॥ ६८ ॥ ॥ ॥ ॥

विष्णुसर्वोत्तमत्वेआद्यंतयोर्विद्यमानंपद्यंपठति । नास्तीति । अहंव्यासः। नारायणस्यसमंनास्तिवर्तमानकाले भूतंपूर्वंजातंन अग्रेपिनभविष्यतीत्येतेनसत्यवाक्येनयथावस्थितार्थप्रतिपादकेनसर्वार्थान्विष्णुसर्वोत्तमत्वाद्यर्थान्साधयामि । यद्वा एतेनएतदानुकूल्येनसर्वार्थान्सर्वेषुशास्त्रेषुसर्वस्यशास्त्रजातस्यवार्थान्साधयामिप्रतिपादयामि । विष्णुसर्वोत्तमत्वस्यैवसर्वशास्त्रार्थत्वात्एतज्ज्ञानेनसकलपुरुषार्थप्राप्तेर्वासाधयामि ॥ ६९ ॥ अनेनहरेर्भारतप्रतिपाद्यत्वंस्फुटंसिद्धमित्याह । आद्यंतयोरिति । आद्यंतयोरादावंतेचोदारशक्तिः सःव्यासात्मकोविष्णुरितीमंश्लोकमवदद्यस्मात्तस्मादेषासमस्ताभारतगाकथाहरिसद्गुणानांप्रतिपादकेतिनिर्णीयतेनिर्णयःक्रियते व्यासेनेतिशेषः । यद्वा हरिसद्गुणानामेषासमस्ताकथानित्यत्वापरिच्छिन्नत्वादिप्रबंधरूपाभारतगाभारतगताप्रतिपादकत्वेनेतिनिर्णीयते । क्वचित्तु निर्णीतयइतिपाठस्तत्रनिर्णयायभवतीतिसुगमः। विष्णुसर्वोत्तमत्वेभारतमध्यगतवाक्यमुदाहरति । सत्यमिति । भुजमुद्धृत्यसत्यंसत्यंपुनःसत्यमुच्यते । शपथदार्ढ्यार्थंत्रिःसत्यमितिभुजमुद्धृत्येतिचोक्तं । किमुच्यतइत्यतउक्तं । वेदे

**नास्ति नारायणसमं न भूतं न भविष्यति ॥ एतेन सत्यवाक्येन सर्वार्थान् साधयाम्यहं ॥ ६९ ॥ आद्यंतयोरित्यवदत्स यस्माद्व्यासात्मको विष्णुरुदारशक्तिः ॥ तस्मात्समस्ता हरिसद्गुणानां निर्णीयते भारतगा कथैषा ॥ ७० ॥ सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ॥ वेदशास्त्रात्परं नास्ति न दैवं केशवात्परं ॥ ७१ ॥ आलोड्य सर्वशास्त्राणि विचार्य च पुनःपुनः ॥ इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥ ७२ ॥ स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातु चित् ॥ सर्वे विधिनिषेधास्युरेतयोरेव किंकराः ॥ ७३ ॥**

ति । वेदाःऋगाद्याः शास्त्रंमीमांसाशास्त्रं ततःद्वंद्वैकवद्भावः । वेदरूपंशास्त्रंचप्रतिपादकेषुवेदशास्त्रात्परंनास्ति । प्रतिपाद्येषुकेशवात्परंदैवंप्रतिपाद्यंनास्ति ॥ ७० ॥ ७१ ॥ तत्रैवान्यद्वाक्यमुदाहरति । आलोड्येति । सर्वशास्त्राणीत्युभयत्रसंबध्यते । आलोड्यसामान्यतोदृष्ट्वोपक्रमोपसंहाराद्यैर्लिंगैर्विचार्यच । यद्वा आलोड्यमथित्वा तदेवस्पष्टयति । पुनःपुनःसर्वशास्त्राणिविचार्यैवं । मयासदानारयणोध्येयइतीदमेकंमुख्यंसुनिष्पन्नंसुनिष्पादितंनिश्चितमित्यर्थः । यद्वा विचार्यस्थितस्येति ॥ ७२ ॥ विष्णुस्मरणास्मरणाभ्यामपिसर्वविधिनिषेधसिद्धेर्विष्णुसर्वोत्तमइत्यर्थंप्रतिपादकंवचनंपठति । विष्णुःसततंस्मर्तव्यःजातुचित्कदाचिदपिविष्णुर्नविस्मर्तव्यइति । एतयोरेवविधानंकुतइत्यतआह । सर्वेति । एतयोःस्मरणविस्मरणयोःसर्वेविधिनिषेधाःस्नानसंध्यावंदनादिविषयःपलांडुभक्षणादिनिषेधाः किंकराइव । किंकराअंगान्येव नसाक्षाद्विष्णुप्रीत्यप्रीतिजनकानि । यस्यस्मरणमपिपुरुषार्थजनकंविस्मरणमनर्थापादकंसउत्तमइतिकिमुवक्तव्यमित्यर्थः ॥ ७३ ॥ ॥ ॥ ॥

साकल्येनान्याज्ञेयत्वेभारतवाक्यद्वयमुदाहरति । कोहीति । यःअपरःब्रह्मादिस्तद्विधस्तत्सदृशस्तत्समइतियावत् नस्यात्सकःतंवेदितुंज्ञातुंशक्तःनकोपीत्यर्थः । ब्रह्मादिषुतत्समाभावेप्यन्यःकश्चित्स्यादित्यतआह । तद्विधइति । अपरःअन्यःतद्विधश्चतत्सदृशोपिनास्ति । अन्यउत्तमोनास्तीतिकिमुवक्तव्यमितिभावः । सर्वैःसर्वथावेद्यस्यावस्तुत्वंस्यादित्यतआह । तस्मादिति । तस्मादन्यस्यवेत्तुरभावात्सस्वयंतंनारायणंवेद ॥ ७४ ॥ अनामयंनिर्दोषंतंनारायणंवेदितुंज्ञातुंकःशक्तोहिनकोपीत्यर्थः । सत्यवतीसूनोःकृष्णाद्देवकीसुतात्कृष्णाद्वाऋतेइतिसंबंधः ॥ ७५ ॥ स्वातंत्र्यायर्थेवाक्यंपठति । अप्रमेयइति । अप्रमेयःसाकल्येनाज्ञेयः। अनियोज्यःअन्याप्रेर्यः स्वयंस्वतंत्रःकामगमःस्वेच्छागामी । वशीइंद्रियनिग्रहवान् । भूतैर्निमित्तैःभूतसर्जनविनाशादिकुर्वन्नित्यर्थः । सदामोदतिनकदाचिदेवेत्यर्थः । सर्जनादौक्लेशाभावेदृष्टांतमाह । बालइति । क्रीडनकैःक्रीडासाधनैः ॥७६॥ अज्ञेयत्वेसर्वोत्तमत्वेचप्रमाणंपठति । नेति । प्रमातुंज्ञातुंएतस्माद्विश्वरूपात्परंनविद्यते ॥७७॥ जननादिदोषदर्शनात्कथंनिर्दोषत्वमित्यतआह । वसुदेवेति ॥७८॥ जननमरणवेधाद्यभावे वाक्यंपठति । जायतइति । कुत्रापिदेवक्यादौकुतःशरादिकारणान्नैवम्रियते । शरादिनावेध्योनतुनैव अयंमुह्यतेमोहंप्राप्नोतीतिन केनचित्पुरुषेणबध्यतेनैव ॥७९ ॥ अत्रहेतुमाह । कुतइति । नित्यानंदैकरूपिणःस्वतंत्रस्यदुःखंकुतःनकुतोपीत्यर्थः ॥ ८० ॥ दोषदर्शनस्यान्यथासिद्धिमाह । ईशन्निति । कुलकमिदंदेवेशःसर्वस्यजगतईशन्नपिईश्वरोपिहरिःदुर्बलः । कीनाशःकर्षकइवक्षुद्रोवाकर्माणिनित्यंकुरुते । "कीनाशोकर्षकेक्षुद्रे" इत्यभिधानात्॥८१॥ मुग्धःमोहयुक्तःआत्मानंनवेद अयंदुःखीसीतांचमार्गतेविचारयति शक्रजितावद्धःएषाइत्यादिर्लीलाऽसुरमोहिनी ॥ ८२ ॥

को हितं वेदितुं शक्तो यो न स्यात्तद्विधो परः ॥ तद्विधश्चापरो नास्ति तस्मात्तं वेद स स्वयं ॥७४॥ को हि तं वेदितुं शक्तो नारायणमनामयं ॥ ऋते सत्यवतीसूनोः कृष्णाद्वा देवकीसुतात् ॥७५॥ अप्रमेयो नियोज्यश्च स्वयं कामगमो वशी ॥ मोदत्येष सदा भूतैर्बालः क्रीडनकैरिव ॥ ७६ ॥ न प्रमातुं महाबाहुः शक्योयं मधुसूदनः ॥ परमात्परमेतस्माद्विश्वरूपान्न विद्यते ॥७७॥ वसुदेवसुतो नायं नायं गर्भेवसत्प्रभुः ॥ नायं दशरथाज्जातो न चापि जमदग्नितः ॥ ७८ ॥ जायते नैव कुत्रापि म्रीयते कुत एव तत् ॥ न वध्यो मुह्यते नायं बध्यते नैव केनचित्॥७९॥कुतो दुःखं स्वतंत्रस्य नित्यानंदैकरूपिणः ॥ ८० ॥ ईशन्नपि हि देवेशः सर्वस्य जगतो हरिः ॥ कर्माणि कुरुते नित्यं कीनाश इव दुर्बलः ॥ ८१ ॥ नात्मानं वेद मुग्धोयं दुःखी सीतां च मार्गते ॥ बद्धः शक्रजितेत्यादि लीलैषाऽसुरमोहिनी ॥ ८२ ॥

शस्त्रपातेनशस्त्रप्रहारेणभिन्नात्वक्‌यस्येति। रुधिरस्यस्रवःस्रवणंयस्येति । मुह्यतेमोहंप्राप्नोति । स्वयमजानन्नन्यान्‌पृच्छतिस्म । तनुंदेहंदिवंस्वर्गं इत्यादि एतदादिकमविद्य मानमेवनाट्यवत्‌ नटनवान्‌नाट्यस्तद्वन्नाट्यवदीशःदर्शयामास सुरास्तत्पूर्वोक्तंकुहकंकपटमितिविदुः॥ ८३ ॥ ८४ ॥ सर्वेहरेःप्रादुर्भावाअवताराः प्राकृतःप्रकृतिजन्यः देहोयेषांतेनैवनभवंति निर्दोषगुणसंपूर्णाश्चभवंति । अन्यथाप्राकृतदेहवत्त्वेनदोषित्वेनापूर्णगुणवत्त्वेनदर्शयति । दर्शनफलमाह । दुष्टानामिति । सतामपिकुत्रचित्‌ मोहनाय दुष्टानांमोहनंतमःप्राप्त्यैसतांमोहनंकिमर्थमित्यतआह । यथेति । स्वयोग्यतायाअधिककृतसुकृतक्षयेन यथायोग्यफलप्राप्त्यैएषापरमात्मनःलीला ॥ ८५ ॥ ॥ ८६ ॥ इदानींभारतेगीतायाःवरत्वात्‌गीतागतानिवाक्यानिसर्वोत्तमत्वादिविषयेउदाहरति। ज्ञानमिति । अहंइदंभजतेयोमामिति प्रकृतमत्संबंधित्वेनप्रकृतमिदंज्ञानंसामान्यज्ञा

मुह्यते शस्त्रपातेन भिन्नत्वग्रुधिरस्रवः ॥ अजानन्‌ पृच्छति स्मान्यां तनुं त्यक्त्वा दिवं गतः ॥ ८३ ॥ इत्याद्यसुरमोहाय दर्शयामास नाट्यवत्‌ ॥ अविद्यमानमेवेशः कुहकं तद्विदुः सुराः ॥ ८४ ॥ प्रादुर्भावा हरेः सर्वे नैव प्राकृतदेहिनः ॥ निर्दोषगुणसंपूर्णा दर्शयत्यन्यथैव तु ॥ ८५ ॥ दुष्टानां मोहनार्थाय सतामपि च कुत्रचित्‌ ॥ यथायोग्यफलप्राप्त्यै लीलैषा परमात्मनः ॥ ८६ ॥ ज्ञानं तेहं सविज्ञानमिदं वक्ष्याम्यशेषतः ॥ यज्ज्ञात्वा नेह भूयोन्यज्ज्ञातव्यमवशिष्यते ॥८७॥ अहंकृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ मत्तः परतरं नान्यत्किंचिदस्ति धनंजय ॥८८॥ अवजानंति मां मूढा मानुषीं तनुमाश्रितं ॥ परं भावमजानंतो मम भूतमहेश्वरं ॥ मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ॥ राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ ८९ ॥ ॥ ॥ ॥

नंज्ञेयं । विज्ञानेनसहितंसविज्ञानं विशेषज्ञानंमुक्तियोग्यंविज्ञानंविज्ञेयं । अशेषतःसमग्रंवक्ष्यामि । यज्ज्ञात्वाइहभूयःपुनःअन्यज्ज्ञातव्यंनावशिष्यते ॥ ८७ ॥ प्रतिज्ञातंविज्ञानमाह । अहमिति । अहंकृत्स्नस्यजगतःप्रभवउत्पत्तिः। सत्ताप्रतीत्यादिकारणत्वात्तद्भोकृत्वाच्चप्रभवः । एवंप्रलयःप्रभवादिभोक्तृत्वंच । यथापुत्रादिप्रभवोरिपुप्रलयश्चोपलब्धःसुखहेतुरित्युपलब्धःपित्रादेस्तद्भोक्तृत्वंतथान्यत्किंचिज्ज्ञेयं । धनंजय मत्तोन्यत्परतरंनास्ति परतरस्तुअहमेवेत्यर्थः। इदंचसर्वोत्तमत्वेप्रमाणं ॥ ८८ ॥ यदित्वमेवंविधःजगतःसृष्टिस्थितिसंहाराणांकर्तातर्हि कथंकेचित्‌त्वामवजानंतिकाचतेषांगतिरित्यतआह । अवजानंतीति । मूढाःमानुषींतनुंमानुषवत्प्रतीतामाश्रितंअनन्यभूततनुरपि स्वाधीनत्वेनाश्रितमित्युच्यते । तदुक्तं । 'तन्वाविष्णुरनन्योपिस्वाधीनत्वात्तदाश्रित' इति । मामवजानंतिअधमतयाजानंति । नैतावदेव । 'ब्रह्मरुद्ररमादीनांसाम्यदृष्टिरनन्य

ता। प्रादुर्भावगतस्यापिदोषदृष्टिरपूर्णता। धर्मदेहावतारादेर्भेददृष्टिश्चसंकरः। अवतारेष्वितिज्ञेयमवज्ञानंजनार्दन इत्येतत्सर्वंज्ञेयं। तत्रकारणांतरमाह। परमिति। भूतः अनाद्यनंतःकालानंत्यमांश्चासौमहान्परिपूर्णरूपश्चासौईश्वरःत्वराणांब्रह्मादीनांईशश्चेतिभूतमहेश्वरः। षष्ठ्याःपरनिपाततः। तंपरंभावंयाथार्थ्यस्वरूपमजानंतइति। तेषांफलमाह। मोघाशाइति। मोघाशाभगवद्द्वेषिभिराशंसितमामुष्मिकंनाकिंचिदाप्यतइतिवृथाशाः। मोघकर्माणःयुद्धादिकर्मणःसाफल्योपितेषांयज्ञादिकर्माणिवृथैवेतिव्यर्थकर्माणः। मोघज्ञानाब्रह्मरुद्रादिभक्त्याद्युपायेननकश्चित्पुरुषार्थःआमुष्मिकस्तैराप्यतइतिव्यर्थज्ञानाः विचेतसःविरुद्धमिथ्याज्ञानिनः द्वेषमूलकारणमाह। राक्षसीमिति। मोहिनींमोहजनकांराक्षसींप्रकृतिंस्वभावमासुरींप्रकृतिमाश्रिताः॥८९॥ भगवतोदोषित्वादेवावजानंतीतिकिंनस्यादित्यतआह। महात्मानइति। दैवींदेवतासंबंधिनींप्रकृतिंस्वभावमाश्रिताअनन्यमनसः महात्मानःभूतादिंसर्वजनकमव्ययंमांज्ञात्वाभजंतीत्यन्वयः। तथात्वेदैवप्रकृतयोप्यवज्ञांकुर्युः नचतदस्तीत्यतःतएवदुष्टाइतिभावः। सर्वो

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ॥ भजंत्यनन्यमनसो ज्ञात्वा भूतादिमव्ययं ॥ १० ॥ पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् ॥ न त्वत्समोस्त्यभ्यधिकः कुतोन्यो लोकत्रयेप्यप्रतिमप्रभावः ॥ ११ ॥ परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमं ॥ यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः॥१२॥मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहं ॥ संभवः सर्वभूतानां ततो भवति भारत ॥ १३ ॥ द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ॥ क्षरः सर्वाणि भूतानि कूटस्थोक्षर उच्यते ॥ १४ ॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥ यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १५ ॥ ॥ ॥ ॥

त्तमत्वएवप्रमाणांतरमाह। पितेति। चराचरस्यास्यलोकस्यत्वंपितापूज्यश्चगरीयान्गुरुर्हितोपदेष्टासि। हेअप्रतिमप्रभावअप्रतिमःअसदृशःप्रभावःसामर्थ्यंयस्यतस्यसंबोधनं। हेतुगर्भंलोकत्रयेपित्वत्समोन्योनास्ति। अभ्यधिकःकुतःनकुतोपीत्यर्थः॥१०॥११॥प्रकृत्युत्तमत्वेप्रमाणमाह। परमिति। ज्ञानानांज्ञेयानांपरमुत्तममतिशयेनोत्तमंज्ञानंज्ञेयंवक्ष्यामि। सर्वेमुनयःयज्ज्ञात्वाइतःसंसाराज्ज्ञानाद्वापरांसिद्धिंगताः॥१२॥प्रतिज्ञातंज्ञेयमाह। ममेति। महद्ब्रह्मप्रकृतिःममगर्भाधानार्थायोनिर्भार्यातथास्थानंयोनिःकारणमेवचेतिशब्दनिर्णये। अहंतस्मिन्गर्भंदधामि। ततःप्रकृतेः॥ १३ ॥ आदरात्तत्रैवप्रमाणमाह। द्वाविति। इमौप्रसिद्धौपुरुषौचेतनौक्षरश्चाक्षरश्चेतिलोकेईशितव्यवर्गेद्वावेव सर्वाणिभूतानिब्रह्मादयोजीवाःक्षरःशरीरक्षरणात् कूटस्थःपुरुषोमहालक्ष्मीअक्षरःशरीरक्षरणाभावात् ॥ १४ ॥ तदनेनोत्तमपुरुषनिरूपणस्यापेक्षितंपुरुषनिरू

पर्णकृत्वाप्रकृतमाह । उत्तमइति । क्षराक्षराभ्यांअन्यस्तुअन्यएवपुरुषउत्तमः । नत्वनयोरेवैकः पुरुषोत्तमः कथ्यतइतिभावः । अन्यस्यपुरुषोत्तमत्वेश्रुत्यादिसंमतिमाह । प
रमात्मेति । परमात्माव्यवस्थितःआत्मानारायणःपरःइत्यादिश्रुतिषुअयंपुरुषोत्तमः। परमात्मेत्युदाहृतःउक्तः। युक्तिंचाह । यइति । यःलोकत्रयमाविश्यबिभर्तिधारणंपो
षणंचकरोति । योहियस्यधारणपोषणकर्तासतस्मादुत्तमइतिसुप्रसिद्धः। आविष्टस्यतन्नाशेनाशप्रसंगइत्यतआह । अव्ययइति । तत्कथमित्यतऐश्वर्यादित्याह । ईश्वरइति
॥१५॥ सचकइत्यतःअहमेवेतिसप्रमाणमाह । यस्मादिति । यस्मादहंक्षरंचातीतःअक्षरादप्युत्तमअतस्तस्माल्लोके पौरुषेयागमेवेदेऽपौरुषेयागमेचपुरुषोत्तमइतिप्रथितः
॥ १६ ॥ तात्पर्यद्योतनायवेत्तुःफलमाह । योमामिति । यएवंक्षराक्षरातीतत्वेनपुरुषोत्तमंमांजानातिससर्वविद्भवति । अस्यैवसर्वशास्त्रार्थत्वात् । हेभारतसर्वभावेनसर्वप्रकारे
णमांभजतिच । ननु क्षराक्षरातीतत्वरूपेणोक्तेनप्रकारेणनपुरुषोत्तमत्वं । क्षराक्षरातीतत्वेमानाभावात् । नचपुरुषोत्तमशब्दावयवशक्तिपर्यालोचनयातत्सिद्धिरितिवाच्यं
तस्याश्वकर्णादिशब्दवत्संज्ञात्वेनाप्युपपत्तेः । तस्मादेवमित्येतन्नोपपद्यतइत्यतआह । असंमूढइति । अश्वकर्णादिशब्दवन्नसंज्ञामात्रमपितु । 'ब्रह्माशिवःसुरेशाद्याःशरी

यस्मात्क्षरमतीतोहमक्षरादपि चोत्तमः ॥ अतोस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १६ ॥ यो मामेवमसंमूढो
जानाति पुरुषोत्तमं ॥ स सर्वविद्भजति मां सर्वभावेन भारत ॥ १७॥ इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ॥
एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ॥ १८ ॥ द्वौ भूतसर्गौ लोकेस्मिन् दैव आसुर एव च ॥ दैवो विस्तरशः
प्रोक्त आसुरं पार्थ मे शृणु ॥ १९ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

रक्षरणात्क्षराः लक्ष्मीरक्षरदेहत्वादक्षरात्तत्परोहरि'रितिश्रुतिसिद्धयोगमसंमूढोजानातिज्ञास्यतीतिभावः ॥ १७ ॥ एतच्चयस्मैकस्मैनवाच्यमित्याशयेनाह । इतीति । हेअन
घइतीदंशास्त्रंगुह्यतमंमयोक्तंतस्मादयोग्यायनाख्येयमित्यर्थः । ससर्वविदित्याद्युक्तंततःकिमित्यतआह । एतदिति । एतत्पूर्वोक्तंबुद्ध्वापरोक्षतोज्ञात्वाबुद्धिमानपरोक्षज्ञानीयास
त् । ततःकृतकृत्यःमुक्तश्चस्यादित्यन्वयः ॥१८॥ द्वेषस्यनरकहेतुत्वेप्रमाणमाह । द्वाविति । अस्मिन्लोकेभूतसर्गौप्राणिस्वभावौद्वौतौनिर्दिशति । दैवइति । दैवःदेवतास्व
भावःविस्तरशःविस्तरेणप्रोक्तः। हेपार्थ । आसुरंअसुरस्वभावंमेमत्तःशृणु । ननु भूतस्वभावानामतिबहुत्वात्द्वौभूतसर्गावितिकथमित्याशंका 'सर्गाणांसुबहुत्वेपिशुभाशुभफ
लाधिकौ देवासुराख्यौद्वावेवगंधर्वाद्यास्तदंतराः मुक्तिगाएवविज्ञेया देवाएवविमुक्तिगा' इत्येनेनपरिहर्तव्या । इदंव्याख्यातंजयतीर्थार्यैः । सर्गाणांसुबहुत्वेपिशुभाशुभफला
धिक्यविवक्षयाद्वावित्युक्तमितिभावः। गंधर्वमनुष्याधमादीनामपिशुभाशुभफलाधिकत्वातकोविशेषोदेवादीनामित्यतआह । गंधर्वेति । उभयफलांतर्वर्तमानाइत्यर्थः। तद्विवृणो
ति। मुक्तिगाइति । एवंतमोगाएवेतिद्रष्टव्यं । तर्हि देवानामपिमुक्त्यादिमत्त्वादेतेभ्यःकोविशेषइत्यतआह । देवाइति । एवमसुराएवातिदारुणतमोगाइतिद्रष्टव्यमिति ॥१९॥

प्रतिज्ञातमासुरमतमाह । असत्यमिति । तेअसुराजगदसत्यंमिथ्याअसत्यत्वादप्रतिष्ठंज्ञानबाध्यंततएवानीश्वरंईश्वरःस्वामीतद्रहितं नचयस्माज्जातंसएवेश्वरः तथाचेश्वरत्वादनीश्वरंकथमित्यतउक्तं । अपरस्परसंभूतमिति । एकस्मादेकस्यनोत्पत्तिरितियावत् । किमितिशंकतेसत्यंनचेत्किमसदेवापरस्परसंभूतंनचेत्किंनित्यंस्वतोवाजातमिति । तत्राद्यस्योत्तरमाह । अन्यदिति । सदसद्भ्यामितिशेषः । सदसद्विलक्षणमित्यर्थः । द्वितीयस्योत्तरमाह । कामहैतुकमिति । कामइतितत्कारणमविद्योपलक्ष्यतेअविद्याहेतुकमित्यर्थः । जगदसत्यतावादिनामासुरत्वायुक्त्याविश्वसत्यताप्रतिपादकं । "मिथ्याजगदिदंसर्वंभ्रमजत्वान्नतिष्ठति । मिथ्यात्वान्नेश्वरोप्यस्तिपरेभ्योनचजायते"तिब्रह्मवैवर्तवचनाद्धेतुहेतुमद्भावोज्ञेयः । यद्वा जगतःअसत्यंअप्रतिष्ठंईश्वरश्चविष्णुःतद्विपरीत्येनाहुः । नविद्यतेसत्यनस्येत्यादिसमासोज्ञेयः । अनेननकेवलंजगतोमिथ्यात्वादिवदतामसुरत्वमपितु जगज्जन्मादिकारणंविष्णुंनमन्यंतेतेषामपिअसुरत्वमितिभावः ॥ १०० ॥ एतांदृष्टिंइदंज्ञानमवष्टभ्याश्रित्यनष्टात्मानःनष्टज्ञाना अल्पेषुविषयेषुबुद्धिर्येषांते

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरं ॥ अपरस्परसंभूतं किमन्यत्कामहैतुकं ॥ १०० ॥ एतां दृष्टिमवष्टभ्य नष्टात्मानोल्पबुद्धयः ॥ प्रभवंत्युग्रकर्माणः क्षयाय जगतोहिताः ॥१०१॥ ईश्वरोहमहं भोगी सिद्धोहं बलवान् सुखी ॥ आढ्योभिजनवानस्मि कोन्योस्ति सदृशो मया ॥१०२॥मामात्मपरदेहेषु प्रद्विषंतोभ्यसूयकाः ॥ तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ॥१०३॥ क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ आसुरीं योनिमापन्ना मूढा जन्मनिजन्मनि ॥ मामप्राप्यैव कौंतेय ततो यांत्यधमां गतिं ॥१०४॥ सर्वभूतेषु येनैकं भावमव्ययमीक्षते ॥ अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्विकं ॥ १०५ ॥

उग्रंक्रूरंकर्मभस्मधारणादियेषांते । अतएवजगतःअहिताःमोहकाःजगतःक्षयायनाशायप्रभवंतिसमर्थाःभवंति ॥ १०१ ॥ पुनःआसुरंभावमाह । ईश्वरइति । अहमित्यस्यबलवानित्यत्रापिसंबंधोज्ञेयः मयासदृशःअन्यःकोस्तिनकोपीत्यन्वयः ॥ १०२ ॥ द्वेषिस्वभावानुवादपूर्वकंद्वेषिणांगतिमाह । मामिति । आत्मपरदेहेषुविद्यमानंमांप्रद्विषंतःअभ्यसूयकाश्चयो द्वेषप्रकारश्चायं विष्णुर्नकारयितायदि । कारयितास्यात्तर्हि इदानीमकुर्वाणमपिकारयितुंकुर्वाणमभिवारयत्वितिद्विषंतःक्रूरान्तान्नराधमानशुभान्संसारेष्वजस्रंक्षिपामि । संसारेपिविशेषमाह । आसुरीष्विति । आसुरीषुयोनिषुक्षिपामि ॥१०३॥ तद्गतिमाह । आसुरीमिति । अधमांगतिंनित्यनरकंयांति ॥ १०४ ॥ स्वगतभेदराहित्येजडजीवभेदेचप्रमाणमुदाहरति । सर्वभूतेष्विति । येनज्ञानेनविभक्तेषुपरस्परंजडेभ्यश्चभिन्नेषु । अविभक्तंव्याप्तं प्रादुर्भावांतर्यामिरूपेषु । अविभक्तंभेदशून्यंसर्वभूतेषुजीवेषुजडेषुच । भावंविद्यमानमेकंसर्वोत्तममीक्षतेपश्यतितज्ज्ञानंसात्विकंविद्धि॥१०५॥

विष्णोःसर्वोत्तमत्वात्सर्वकर्मविष्णुप्रीत्यैएवकार्यमित्यत्रगीतावाक्यामुदाहरति । सर्वेतिमेसर्वगुह्यतमंपरमंवचःभूयःशृणु । 'मन्मनाभवमद्भक्तोमद्याजीमांनमस्कुरु । मामेवै ष्यसियुक्त्वैव मात्मानंमत्परायण' इत्यनेनोक्तत्वात्भूयइत्युक्तं दृढंयथाभवतितथामेइष्टोसिइति । ततएवतस्मात्कारणात्तेहितंवक्ष्यामि ॥१०६॥ वक्तव्यमह । मन्मनाइति । मामु द्दिश्ययजतीतिमद्याजी । एष्यसिप्राप्स्यसि । यतःमेप्रियोसि । ततस्तेत्वद्विषयेसत्यंप्रतिजाने ॥ १०७ ॥ इदानींविष्णोरुत्कर्षेमोक्षधर्मवाक्यंपठति । पंचरात्रेति । जनमेज येन 'सांख्यंयोगः पाशुपतंवेदारण्यकमेवच । ज्ञानान्येतानिभिन्नानिउताहोनेतिवाच्यता'मितिपृष्टे वैशंपायनेनोक्तं । 'सांख्यंयोगःपाशुपतंवेदारण्यकमेवच । ज्ञानान्येतानिभि न्नानिनात्रकार्याविचारणे'ति । शास्त्राणांपरस्परविरुद्धतार्थमुक्तावेदारण्यकपंचरात्रादीन्येकार्थप्रतिपादकत्वेनैकपद्येनानूयपंचरात्रस्याधिक्येउक्तेऽर्थादुक्तशास्त्रेभ्यः वेदादिशा स्त्रस्योत्तमत्वंसेत्स्यतीत्यभिप्रेत्यवेदारण्यकांतर्गतपंचरात्रस्यवैशिष्ट्यंपंचरात्रस्यकृत्स्नस्यइत्यनेनाह । यतःस्वयंनारायणःकृत्स्नस्यपंचरात्रस्यवक्तातःएतेषुपूर्वोक्तेषुसर्वेषुज्ञानेषु ज्ञानसाधनेषुशास्त्रेषुएतत्पंचरात्रंविशिष्यते । अनेनवेदारण्यकपदेनपंचरात्रग्रहणंसूचितं । पूर्वमकथनेएतेष्विति । एतदित्यपि । असंगतंस्यात्अनेननारायणाख्यातोक्तत्वे

**सर्वगुह्यतमं भूयः शृणु मे परमं वचः ॥ इष्टोसि मे दृढमिति ततो वक्ष्यामि ते हितं ॥ १०६ ॥ मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ॥ मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोसि मे ॥ १०७ ॥ पंचरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयं ॥ सर्वेष्वेतेषु राजेंद्र ज्ञानेष्वेतद्विशिष्यते ॥१०८॥ ज्ञानेष्वेतेषु राजेंद्र सांख्यपाशुपतादिषु ॥ यथायोगं यथान्यायं निष्ठा नारायणः परः॥१०९॥पंचरात्रविदो मुख्याः यथाक्रमपरा नृप ॥ एकांतभावोपगता वासुदेवं विशंति ते ॥११०॥ जनमेजय उवाच ॥ बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु ॥ को ह्यत्र पुरुषश्रेष्ठस्तं भवान्वक्तुमर्हति ॥ १११ ॥**

नपंचरात्रप्रामाण्यकथनेतस्यसर्वोत्कर्षःसिध्यतीतिभावः ॥ १०८ ॥ तर्हि तानिसर्वदानुपादेयानिकिमि यतआह । ज्ञानेष्विति । आदिपदेनयोगोग्राह्यः । तद्गुणसंविज्ञानब हुव्रीहिणाबहुवचनं । अक्षपादोक्ततर्कपूर्वमीमांसाशाक्तसौरगाणपत्याद्यनुवादपूर्वकंवादिपदं । एतेषुज्ञानेषुशास्त्रेषुयथायोगंयोगमनतिक्रम्ययोगेनयथान्यायमुपक्रमादि न्यायैरपिनारायणःपरउत्कृष्टइतिनिष्ठाव्यवस्थाभवति । 'निष्ठोत्कर्षेव्यवस्थाया'मित्यभिधानं । न्यायैर्योगेनचतेषामपिविष्णुपरताज्ञेयेतिभावः ॥ १०९ ॥ इदानींपंचरात्रवि दांमोक्षकथनात्तस्योत्तमत्वमित्याह । पंचरात्रेति । यथाक्रमपराःदेवतातारतम्यासक्ताःएकएवांतःसर्वोत्तमइतिभावंभक्तिमुपगताःप्राप्ताःएकांतोऽव्यभिचरितःभावोभक्तिस्तमुप गताइतिवा । अतःमुख्याःश्रेष्ठास्तेपंचरात्रविदःवासुदेवंविशंतिमुक्तिंप्राप्नुवंतीत्यर्थः ॥११०॥ उत्तमत्वेप्रमाणांतरमाह । जनमेजयइति । ब्रह्मन्किंपुरुषाःबहवःउतएकएव च अत्रबहुत्वेश्रेष्ठःपुरुषःकस्तंभवान्वक्तुमर्हति ॥ १११ ॥

॥ ॥ ॥ ॥

इतिजनमेजयेनपृष्टःवैशंपायनोवदति। नैतदिति। द्वितीयपक्षंदूषयति। वैशंपायनइति। एकंपुरुषमित्येतन्नेच्छंतिप्रथमपक्षेपृष्टस्योत्तरमाह। बहूनामिति। योनिरुत्पत्तिकारणंयदर्थकोच्यते। तथातंसर्वोत्पत्तिकारणंविश्वंपूर्णंगुणाधिकंपुरुषंविष्णुमाख्यास्यामि। अत्रप्रश्नपूर्वकंपृष्टत्वादुक्तं। जगत्कारणत्वंपूर्णत्वंसर्वोत्तमत्वंयथार्थमितिभावः॥११३॥ ब्रह्मरुद्रयोरितिहासेनाप्युत्तमत्वंहरेःसाधयति। आहेति। एकस्यतस्यममत्वंमदीयामितिबुद्धिर्हिसवैकःपुरुषःविराट्विशेषेणराजतइतिविराट्सर्वोत्तमः॥ १४ ॥ ब्रह्माब्रह्मनामकःप्रजानामाद्यःईशश्चाहंतस्माद्धरेर्जातःमत्तश्चत्वंप्रसूतउत्पन्नः। मत्तःस्थावरजंगमंजगच्चप्रसूतं। हेपुत्रसरहस्याःसोपनिषदःसर्वेवेदाश्चोत्पन्नाः॥ १५ ॥ ब्रह्माद्यश्रयत्वेतदाश्रयत्वेचवचनंपठति। तथेति। सर्वदाव्याचक्षाणैर्व्याख्यानंकुर्वद्भिः समेतैर्युक्तैःब्रह्मेशानादिभिर्देवैः यस्यहरेर्गुणांशकःगुणैकदेशःअवसाययितुंसमापयितुंनशक्यः॥ १६ ॥ यद्गुणलेशंव्याख्यातुंअशक्ताःसएवभगवान् कृष्णःकेवलंमनुष्योनशुद्धमनुष्योनापितुमनुष्यसदृशः पुनःसकःयस्यप्रसादतःब्रह्मा रुद्रश्चक्रोधात्संभवोयस्येति॥ १७ ॥ ब्रह्मादिसर्वमुक्ताश्रयत्वेवचनंपठति। वचनमिति। कुंतीसुतंप्रतिअस्तीतिशेषः॥ १८ ॥ कंचित्पुरुषं॥ १९ ॥ संसारिषुअभावेपिमुक्तेषुस्यादाश्रयइत्यतआहयथेति॥१२०॥ भारतस्यसर्वनिर्णायकत्वेभविष्यत्पर्ववचनस्योदाहृतत्वेपिपुनरादरार्थंस्थानांतरस्थंव्यासवाक्यमनुवदति। भविष्यदिति। सादरंसतात्पर्यंयथाभवतितथास्ति। मयानिर्णयेनउदितःप्रोक्तः॥२१॥

वैशंपायनउवाच॥ नैतदिच्छंति पुरुषमेकं कुरुकुलोद्वह॥बहूनां पुरुषाणां च यथैका योनिरुच्यते॥११२॥तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकं॥ आह ब्रह्मैतमेवार्थं महादेवाय पृच्छते॥११३॥तस्यैकस्य ममत्वं हि स वै कः पुरुषो विराट्॥१४॥ अहं ब्रह्मा वाद्य ईशः प्रजानां तस्माज्जातस्त्वं च मत्तः प्रसूतः॥ मत्तो जगत्स्थावरजंगमं च सर्वे वेदाः सरहस्याश्च पुत्र॥१५॥ तथैव भीमवचनं धर्मजं प्रत्यदीरितं॥ ब्रह्मेशानादिभिर्देवैः समेतैर्यद्गुणांशकः॥नावसाययितुं शक्यो व्याचक्षाणैश्च सर्वदा॥१६॥स एव भगवान् कृष्णो नैव केवलमानुषः॥यस्य प्रसादजो ब्रह्मा रुद्रश्च क्रोधसंभवः॥१७॥ वचनं चैव कृष्णस्य ज्येष्ठं कुंतीसुतं प्रति॥१८॥ रुद्रं समाश्रिता देवाःरुद्रो ब्रह्माणमाश्रितः॥ ब्रह्मा मामाश्रितो नित्यं नाहं कंचिदुपाश्रितः॥१९॥ यथाश्रितानि ज्योतींषि ज्योतिश्रेष्ठं दिवाकरं॥ एवं मुक्तगणाः सर्वे वासुदेवमुपाश्रिताः॥१२०॥ भविष्यत्पर्वगं चापि वचो व्यासस्य सादरं॥ वासुदेवस्य महिमा भारते निर्णयोदितः॥१२१॥

॥ ॥ ॥

ननु तर्ह्यन्यविषयाःकथाःकिमर्थमुच्यंतइत्यतआह । तदर्थाइति । सर्वाःकथाःपांडवादिकथास्तुअपितदर्थाःसउत्कर्षःएवार्थःप्रयोजनंयासांताः । एवंविष्णूत्कर्षकथनमपिअन्योत्कर्षार्थंकिंनस्यादित्यतआह । नेति । साक्षाद्विरोधदर्शनात्कथमित्यतआह । तदिति । तस्यविष्णूत्कर्षस्यप्रतीपंविरुद्धंयद्दृश्येत्तन्ममममनीषितंसंमतंन ॥ २२ ॥ तवसंमतंनचेत्तर्हि कथंकथितमित्यतःभाषात्रयेणभारतकथनान्नसोर्थइत्याह । भाषाइति । मयाव्यासेनत्रिभाषाभिःकथनेपिरफुटमुक्तस्यकागतिरित्यतः भाषाविवेचनेनतद्गतिमाह । उक्तइति । विष्णोर्योमहिमोक्तःसतुसमाधिनासमाधिभाषयोक्तः ॥ २३ ॥ शैवीशिवसंबंधिनीतदुत्कर्षप्रतिपादिनीसादर्शनभाषेतिकाथितेतिशेषः । दर्शनादिभाषोक्तस्यग्राह्याग्राह्यत्वादिनातद्गतिमाह । समाधीति । समाधिभाषयायत्प्रोक्तंतत्सर्वंग्राह्यमेवहि ॥ २४ ॥ समाधेःसमाधिभाषयोक्तस्याविरुद्धंदर्शनोक्तंदर्शनभाषयोक्तंचगृह्यते इदमेवोक्तंद्वाविंशेध्याये 'परदर्शनभाषासुज्ञेयंतद्दर्शनंतथा ग्राह्योनार्थोवैदिकंतुदर्शनंग्राह्यमेवचे'ति । वैदिकंवेदानुकूलं । 'लोकदर्शनमाश्रित्यदेवाश्चमुनयस्तथा । ब्रूयुःकथास्तत्रशिक्षाःग्राह्योनार्थःकथंचने'तिवक्ष्यमाणत्वाल्लोकदर्शनभाषापिज्ञेया दर्शनभाषालक्षणमाह । आद्यंतयोरिति । आद्यंतयोरुपक्रमेविष्णूत्तमत्वमंतेशिवोत्तमत्वमथवादौशिवोत्तमत्वमंतेवि

तदर्थास्तु कथाः सर्वाः नान्यर्थं वैष्णवं यशः ॥ तत्प्रतीपं तु यद्दृश्येन्नतन्मम मनीषितं ॥१२२॥ भाषास्तु त्रिविधास्तत्र मया वै संप्रदर्शिताः ॥ उक्तो यो महिमा विष्णोः स तूक्तो हि समाधिना ॥२३॥ शैवदर्शनमालंब्य क्वचिच्छैवी कथोदिता ॥ समाधिभाषयोक्तं यत्तत्सर्वं ग्राह्यमेव हि ॥ २४ ॥ अविरुद्धं समाधेस्तु दर्शनोक्तं च गृह्यते ॥ आद्यंतयोर्विरुद्धं यद्दर्शनं तदुदाहृतं ॥२५॥ दर्शनांतरसिद्धं च गुह्यभाषान्यथा भवेत् ॥ तस्माद्विष्णोर्हि महिमा भारतोक्तो यथार्थतः ॥२६॥

ष्णूत्तमत्वंवायत्रोक्तंतद्दर्शनभाषेत्युक्तं तेनआद्यंतयोर्विरुद्धार्थप्रतिपादकंदर्शनमित्येकंलक्षणं ॥१२५॥ द्वितीयलक्षणमाह । दर्शनेति । दर्शनांतरेषुशैवादिशास्त्रेषुसिद्धंप्रतिपादितंयद्दर्शनंतेनदर्शनांतरसिद्धंदर्शनमिति । गुह्यभाषालक्षणमाह । गुह्येति । अन्यथाप्रदृश्यमानादर्थादन्यार्थप्रतिपादिकागुह्यभाषेति । उपसंहरतितस्मादिति । तस्माद्विष्णोर्महिमाभारतेप्रोक्तइतियत्तद्यथार्थतःयथार्थंसत्यमित्यर्थः । उक्तमेतद्भाषाविवेके । 'गुह्यदर्शनभाषेचभाषाचैवसमाधिका । तिस्रस्तुमूलभाषाःस्युरेकैकातुत्रिधापुनः । गुह्यदर्शनसंज्ञातुगुह्यगुह्यातथापरा । एवमादिक्रमेणैवत्वेकाशीतिविभेदिताः । भाषास्तत्रचगुह्याचप्रसिद्धार्थेष्वनन्विता । गुह्यार्थतत्परैवांधोमणिमित्यादिकाचसा । दर्शनान्यवलंब्यैवपशुपत्यादिनानुया । बहुश्रुतिविरुद्धंतुवदेत्सादर्शनात्मिका । अंतेनिषेधसंयुक्ताभस्मस्नानादिकाचसा । यथाप्रदृश्यमानार्थासमाधिःसाप्रकीर्तिता । विष्णुःपरमइत्याद्यासाचविद्वद्भिरीरिते'तिभस्मस्नानशब्देनतद्विधानंग्राह्यं । 'भस्मस्नानविधानंतुश्रुत्युक्तंदर्शनानुगं । भस्मस्नानंततोग्राह्यंविधानंतुनृसिंहगामि'तिस्कांदवचनात् ॥ १२६ ॥

वाय्वादयःविष्णोरंगभूताइत्यर्थेभविष्यत्पर्वपुराणवचनमाह । तस्येति । तस्यहरेःप्रादुर्भावत्रयान्वितोवायुःप्रथममंगं अवतारत्रयमाह । प्रथमइति । अंगत्वविवरणार्थमुक्तंभगवत्कार्यसाधकइति । भगवत्कार्यसाधकःवायुःत्रेताद्येषुयुगेषुएकैकशएकैकेनरूपेणपृथक्नाम्नासमुद्भूतः । सरस्वतीद्वितीयांगंप्रकीर्तिता ॥ १२७ ॥ १२८ ॥ ननु श्रीर्द्वितीयांगमितिश्रूयतेतत्कथंसरस्वतीद्वितीयांगमित्यतआह । शमिति । सुखस्वरूपेवायौरतेःरमणात्सैवसरस्वत्यैवश्रीरितिकीर्त्यते सैवश्रीरेव ॥२९ ॥ तृतीयांगमाह । तृतीयांगमिति । अवतारानाह । प्रादुर्भावाइति ॥ १३० ॥ अन्यावतारानाह । रुद्रेति । शेषस्यातीतरुद्रात्मकत्वाच्छेषस्यशुकोद्रौणिश्चतत्तनूतदवतारौ अन्यंविशेषमाह । इंद्र

तस्यांगं प्रथमो वायुः प्रादुर्भावत्रयान्वितः ॥ प्रथमो हनुमान्नाम द्वितीयो भीम एव च ॥ पूर्णप्रज्ञस्तृतीयस्तु भगवत्कार्यसाधकः ॥२७॥ त्रेताद्येषु युगेष्वेव संभूतः केशवाज्ञया ॥ एकैकशस्त्रिषु पृथक् द्वितीयांगं सरस्वती॥२८॥शं रूपे तु रते वायौ श्रीरित्येव च कीर्त्यते ॥ सैव च द्रौपदी नाम काली चंद्रेति चोच्यते ॥२९॥ तृतीयांगं हरेः शेषः प्रादुर्भावसमन्वितः ॥ प्रादुर्भावा नरश्चैव लक्ष्मणो बल एव च ॥ १३० ॥ रुद्रात्मकत्वाच्छेषस्य शुको द्रौणिश्च तत्तनुः ॥ इंद्रो नरांशसंपत्या पार्थोपीषत्तदात्मकः ॥ ३१ ॥ प्रद्युम्नाद्यास्ततो विष्णोरंगभूताः क्रमेण तु ॥ चरितं वैष्णवानां च विष्णूद्रेकाय कथ्यते ॥ ३२ ॥ तथा भागवतेप्युक्तं हनूमद्वचनं परं ॥ मर्त्यावतारस्त्विह मर्त्यशिक्षणं रक्षोवधायैव न केवलं विभोः॥ कुतोस्य हि स्यू रमतः स्व आत्मन् सीताकृतानि व्यसनानीश्वरस्य ॥ ३३ ॥ न वै स आत्मात्मवतामधीश्वरो भुङ्क्ते हि दुःखं भगवान्वासुदेवः ॥ न स्त्रीकृतं कश्मलमश्नुवीत न लक्ष्मणं चापि जहाति कर्हिचित् ॥ १३४ ॥ ॥

इति । इंद्रःइंद्राभिन्नइंद्रावतारोपिपार्थःअर्जुनईषत्तदात्मकःतस्यशेषस्यआत्मकःस्वरूपस्तेनतृतीयांगामितिभावः ॥ ३१ ॥ ततस्तदनंतरंप्रद्युम्नाद्याःप्रद्युम्नानिरुद्धाद्याःक्रमेण विष्णोरंगभूताः । ननु भारतेकृष्णकथामेवानुक्त्वा पांडवकथाकथनेनकिमित्यतआह । चरितमिति ॥३२॥ दुःखाद्यभावेभागवतमुदाहरति । तथेति । तथाशब्दःसमुच्चये । इहलोकेमर्त्यावतारःमर्त्येषुअवतारःअवतरणंकेवलंरक्षोवधायैवनकृतः किंतुमर्त्यशिक्षणंचकर्तुंकृतः स्वेआत्मनिरमतईश्वरस्यास्यसीताकृतानिसीतानिमित्तानिव्यसनानिकुतः स्युःनकुतोपीत्यर्थः । स्त्रीसंगिनामेतादृशंदुःखंभवतीतिसंगःत्याज्यइतिएतत्प्रदर्शितमितिभावः ॥ ३३ ॥ सआत्मापरमात्मादुःखंनभुङ्क्तेवैहि आत्मवतांज्ञानिनांअधीश्वरइत्यादिविशेषणत्रयंहेतुगर्भं तदेवस्फुटयति । नेति ॥ १३४ ॥ ॥ ॥ ॥ ॥ ॥

पूर्वोक्तमर्थंहेतुपूर्वकमाह । यदिति । यत्पादसेवकानांदुःखानिनश्यंति । ब्रह्मवंद्यचरणःसरामःजनमोहनायस्त्रीसंगिनांरतिमित्यनेनप्रकारेणेति प्रथयन्चचार ॥ १३५ ॥ क्वचिच्छिवमिति भारतवाक्यं । वरानर्थयतेप्रार्थयतेशिवादिभ्यः असुरतःअसुराभ्यांमधुकैटभाभ्यांयुद्धेनतुष्टाभ्यांवरान्युवयोर्जेताहंताभवामीत्यादिवरानवृणोदितिचमार्कंडेयपौराणिकीकथानुसंधेया। तदुक्तंदेवीमाहात्म्ये 'तदाद्वावसुरौघोरौविख्यातौमधुकैटभौ। विष्णुकर्णमलोद्भूतौहंतुंब्रह्माणमुद्यतौ। तथातावप्यतिबलोन्मत्तौमायाविमोहितौ। उक्तवंतौवरोन्मत्तौव्रीयतामितिकेशव'मिति। तथा 'भवतामद्यमेतुष्टौममवध्यावुभावपि। किमन्येनवरेणात्रएतावद्धिवृतंमया'। तथा"प्रीतौस्वस्तवयुद्धेनश्लाघ्यस्त्वन्मृत्युरावयोः। आवांजहिनयत्रोर्वीसलिलेनपरिप्लुतेति'। भारतेअरण्यपर्वणिच। 'प्रतिगृह्णेवरंवीरावीप्सितंचवरोमम। युवांचवीर्यसंपन्नौनवामस्तिसमःपुमान्। वध्यत्वमुपगच्छेता

यत्पादपंकजपरागनिषेवकाणां दुःखानि सर्वाणि लयं प्रयांति ॥ स ब्रह्मवंद्यचरणो जनमोहनाय स्त्रीसंगिनामिति रतिं प्रथयंश्चचार॥ १३५ ॥ क्वचिच्छिवं क्वचिदृषीन् क्वचिद्देवान् क्वचिन्नरान् ॥ नमत्यर्चयति स्तौति वरानर्थयतेपि च ॥ लिंगं प्रतिष्ठापयति वृणोत्यसुरतो वरान् ॥ ३६ ॥ सर्वेश्वरः स्वतंत्रोपि सर्वशक्तिश्च सर्वदा ॥ सर्वज्ञोपि विमोहाय जनानां पुरुषोत्तमः ॥ ३७ ॥ तस्माद्यो महिमा विष्णोः सर्वशास्त्रोदितः स हि ॥ नान्यादित्येष शास्त्राणां निर्णयः समुदाहृतः ॥ ३८ ॥ भारतार्थस्त्रिधा प्रोक्तः स्वयं भगवतैव हि ॥ मन्वादि केचिद्ब्रुवते ह्यास्तिकादि तथा परे ॥ ॥ ३९ ॥ तथोपरिचराद्यन्ये भारतं परिचक्षते ॥ १४० ॥ सकृष्णान् पांडवान् गृह्य योयमर्थः प्रवर्तते ॥ प्रातिलोम्यादिवैचित्र्यात्तमास्तीकं प्रचक्षते ॥ ४१ ॥

ममसत्यपराक्रमावि'ति ॥ ३६ ॥ अशक्तत्वादिदंकरोतीत्याशंक्यसर्वैश्वर्यादिगुणयुक्तत्वान्नाशक्ततेत्युत्तरमभिप्रेत्यतदनुवादपूर्वकंनमनादिप्रयोजनमाह । सर्वेश्वरइति । जनानांविमोहनायनमनादिकंकरोतीतिशेषः ॥ ३७ ॥ उपसंहरति । तस्मादिति । यतएवंतस्माद्यःविष्णोर्यौमहिमासहि सएवसर्वशास्त्रोदितअन्यद्दोषादिनइत्येषःशास्त्राणांनिर्णयःनिश्चयःसम्यगुक्तः ॥३८॥ ननु भारतंविष्णुपरंचेत्तत्रैवमन्वादिपरत्वेन कथमुच्यतेइत्यतस्तद्वाक्यार्थंवक्तुमनुवदति । भारतार्थइति । यद्वा भारतंविष्णुपरंचेत्कथंधर्मादिपांडवादिप्रतिपादकमित्यतआह । भारतार्थइति । अन्येउपरिचरादिभारतंपरिचक्षतेइतिस्वयंभगवताव्यासेनत्रिधाप्रोक्तः अधिकारिभेदेनत्रिविधार्थवत्वमित्यर्थः । भारतंननुदशार्थमितिअन्यत्रदशार्थस्यकथनात् ॥३९॥१४०॥ तदर्थमाह सकृष्णानिति । प्रातिलोम्यंपश्चात्कथनीयस्यपूर्वंकथनंप्रातिलोम्यंभीमेनहताइतिवक्तव्येर्जुनेनहताइतिपुरुषव्यत्यासइत्यादिविचित्रप्रकारेणयोयमर्थःप्रवर्तते तमास्तीकंप्रचक्षते १४१॥

भक्त्यादिदशकः भक्तिज्ञानवैराग्यमित्यादि श्रुतादिः श्रवणमननिदिध्यासनादयः शीलःस्वभावःवैनयःविनयता यत्रभारतेयस्मिन्प्रदेशेप्रतिपाद्यंते तंमन्वादिंविदुः ॥१४२॥ तत्सामर्थ्याभिदायीनिवचनानियत्रयस्मिन्भारतप्रदेशेप्रतिपाद्यंते तमौपरिचरंविदुः ॥ ४३ ॥ मन्वादिशब्दव्याख्यानेधर्मइत्यायुक्तं । धर्मादीनांविशेषतःप्रतिपादनाभावात्कथंमन्वादिमितिव्याख्यातामित्यतः धर्मादिशब्दैर्युधिष्ठिराद्यावाच्यास्तत्प्रतिपादकंभारतमितिप्रसिद्धमितिसमाधानंमनसिनिधाययुधिष्ठिरस्यधर्माभिमानित्वंस्फुटमितितदनभिधायभक्त्यादीनामभिमानिनआह । भक्तिमिति । वैराग्येनसहितंज्ञानंप्रज्ञांशीघ्रग्रहणसामर्थ्यं । मेधाश्रुतधारणंएतद्दशकंवृकोदरःभीमइतिस्मृतः ॥ ४४॥ एतच्छब्दवाच्यत्वंभीमस्यकुतइत्यतआह । एतदिति । यस्माद्वायुःभक्त्यादिदशकस्वरूपस्तस्माद्वायुस्वरूपत्वाद्भीमः । भक्त्याद्यात्मकःश्रुतादिगुणप्राचुर्याल्लोकेतच्छब्दवाच्यः श्रुताद्यभिमानीअर्जुनःनकुलसहदेवौशीलविनयाभिमानिनावित्यनेनाभिधायश्रवणंचविद्यायाः विद्याचकेत्यतआहसर्वेति । यस्मात्साद्रौपदीएवसरस्वतीतस्माद्द्रौपदीसर्वविद्याभिमानिनीप्रोक्ता ॥ ४५ ॥ प्रसंगादन्याभिमानिनआह । अज्ञानेति । आदिपदेनभ्रमप्रमादादियाह्यं । विपरीतंविद्यमानप्रकारात् ॥ ४६ ॥ धार्तराष्ट्राःधृतराष्ट्रपुत्राः । परेदुर्योधनदुःशासनव्यतिरिक्ताः । सर्वदोषाभिमानिनः यतरुद्रात्मकःअश्वत्थामातस्मादहंकारःअहंकाराभिमानी ॥ ४७ ॥ द्रोणाद्याआदिपदेनकर्णाभिमन्युभीष्मादयउच्यंते इंद्रियाद्यभिमानिनः बहुवचनमाद्यर्थेदुर्योधनस्यान्येसैनिकाःपापानिपापाभिमानिनःपांडवेयाःपांडवसंबंधिनःसैनिकाःपुण्यानिपुण्याभिमानिनः । तेषांपांडवेयानां ॥ ४८ ॥ भारतार्थस्यदुर्ज्ञेयत्वमुपसंहरति । एवमिति । एवमित्यादिप्रकारेणाध्यात्मनिष्ठमात्मानंदेहमधिकृत्यवर्तमानंदेहाद्यंतर्यामिप्रतिपादकंसर्वंभारतमुच्यते हियतः । अतःसर्वैर्मनुष्यादिभिःसुरैर्देवैरपि ॥ १४९ ॥

धर्मो भक्त्यादिदशकः श्रुतादिः शीलवैनयौ ॥ सब्रह्मकास्तु ते यत्र मन्वादिं तं विदुर्बुधाः ॥ १४२ ॥ नारायणस्य नामानि सर्वाणि वचनानि तु ॥ तत्सामर्थ्याभिधायीनि तमौपरिचरं विदुः ॥ ४३ ॥ भक्तिज्ञानं सवैराग्यं प्रज्ञा मेधा धृतिस्थितिः ॥ योगः प्राणो बलं चैव वृकोदर इति स्मृतः ॥ ४४ ॥ एतद्दशात्मको वायुस्तस्माद्भीमस्तदात्मकः ॥ सर्वविद्या द्रौपदी तु यस्मात्सैव सरस्वती ॥ ४५ ॥ अज्ञानादिस्वरूपस्तु कलिर्दुर्योधनः स्मृतः ॥ विपरीतं तु यज्ज्ञानं दुःशासन इतीरितः ॥ ४६ ॥ नास्तिक्यं शकुनिर्नाम सर्वदोषात्मकाः परे ॥ धार्तराष्ट्रास्त्वहंकारो द्रौणी रुद्रात्मको यतः ॥ ४७ ॥ द्रोणाद्या इंद्रियाण्येव पापान्यन्ये तु सैनिकाः ॥ पांडवेयानि पुण्यानि तेषां विष्णुर्नियामकः ॥ ४८ ॥ एवमध्यात्मनिष्ठं हि भारतं सर्वमुच्यते ॥ दुर्विज्ञेयमतः सर्वैर्भारतं तु सुरैरपि ॥ ४९ ॥

तदेवप्रकटयति । स्वयमिति । ब्रह्मावाब्रह्मापिब्रह्मणस्तुतत्प्रसादतइत्यधिकं सर्वैर्दुर्ज्ञेयंचेन्मनुष्याणांभारताध्ययनंव्यर्थमित्यतआह । तथापीति । यद्यपिदुर्ज्ञेयंतथापि मनुष्यैरपिभारतेविष्णुपरतायासःसारस्यार्थसारस्यसंग्रहएकीकरणं ॥ १५० ॥ उक्तंविष्णूत्कर्षमुपसंहरति । इतीति । वक्तव्यमाह । वाय्विति । तद्वाक्यैःव्यासवाक्यैःक्रमस्तारतम्यक्रमः ॥ ५१ ॥ मुक्तिसाधारणत्वादब्रह्मादिक्रमइतिवक्तव्यंवाय्वादीनामितिकथमुक्तमतआह । वायुरिति । सःवायुःतंक्रममाह । नेति । कथंचनज्ञानभक्त्यादिना ॥ ५२ ॥ ब्रह्मणःवाय्वात्मकत्वाद्वायोश्चहनुमदात्मकत्वाद्धनुमतउत्तमत्वेसिद्धेब्रह्मणःसुतरांसेत्स्यतीतिहनूमतउत्तमत्वेप्रमाणमुदाहरति । ज्ञानइति । विषयसप्तमीयंविरागेवैराग्येहरिभक्तिभावे । हरिभक्तिवत्वेअन्यःवायोरवतारादन्यःरुद्रादिःकश्चनपुमान्कदाचित्कस्मिंश्चित्कालेक्वचकुत्रापिदेशे ॥ ५३ ॥ हनूमान्वायोरवतारइत्यत्रश्रुतिमुदाहरति । बळित्थेति । यतोयस्मान्नारायणाज्जनिजातं तेननारायणेनसहसःबलरूपस्यद्रविणंरेतः'सहोबलमि'तिनिघंटात् । देवस्यक्रीडादिगुणयुक्तस्यवायोस्तन्मूलरूपंइ

**स्वयं व्यासो हि तद्वेद ब्रह्मा वा तत्प्रसादतः ॥ तथापि विष्णुपरता भारते सारसंग्रहः ॥ १५० ॥ इत्यादि व्यासवाक्यैस्तु विष्णूत्कर्षोवगम्यते ॥ वाय्वादीनां क्रमश्चैव तद्वाक्यैरेव चिंत्यते ॥ ५१ ॥ वायुर्हि ब्रह्मतामेति तस्माद्ब्रह्मैव सः स्मृतः ॥ न ब्रह्मसदृशः कश्चिच्छिवादिषु कथं च न ॥ ५२ ॥ ज्ञाने विरागे हरिभक्तिभावे धृतिस्थितिप्राणबलेषु योगे ॥ बुद्धौ च नान्यो हनुमत्समानः पुमान्कदाचित्क्वच कश्च नैव ॥ ५३ ॥ बळित्था तद्वपुषे धायि दर्शतं देवस्य भर्गः सहसो यतो जनि ॥ यदीमुपह्वरते साधते मतिर्ऋतस्य धेना अनयंत सस्रुतः ॥ १५४ ॥ ॥**

त्थाएवंप्रकारेण । यथामूलरूपंबलाद्युपेतं तथाबलाद्युपेतत्वेनवपुषेअवतारायधायिअधायि कथंभूतंतन्मूलरूपं बट्बलात्मकंदर्शतं । ज्ञानपूर्णंभर्गःपोषणगमनकर्ता अथवा सहसोदेवस्यतन्मूलरूपंबट्दर्शतंभर्गःइत्थावपुषेधायि यतोमूलरूपाज्जनिजातंच । यद्वा सहसादेवस्यवायोःयद्रूपंतत्बट्बलात्मकंज्ञानेनततंव्याप्तं । इत्थावक्ष्यमाणप्रकारेणवपुषेमत्स्यावतारायधायिअधायि यतोयस्मादवतारत्रयाद्भर्गःभातिप्रकाशतइतिगच्छतिजानातीतिप्रकाशज्ञानरूपंब्रह्मजनिअभिव्यक्तमभवत् । तत्रप्रथमावतारं निरूपयति । यदिति । यत्प्रथमंरूपंमतिर्हनूमन्नामकं । हनुशब्दस्यज्ञानवाचित्वात् । ऋतस्यज्ञानरूपस्यरामस्यउपह्वरतेसमीपेवर्तते । ईइत्थंईएकएवऋतस्यकार्याणि साधयते । तच्छेशतोदर्शयति । ऋतस्यतद्विषयाःधनाःवाचःरामायणरूपाःअयनंताच्छिष्यान्प्रतीतिशेषः । सस्रुतः अमृतस्राविणीःमोक्षदाइत्यर्थः । अथवा रामोक्तासुखदा वाचःसीतांप्रतिअनयतेति ॥ १५४ ॥ ॥ ॥ ॥ ॥

द्वितीयंरूपमाह । पृक्षइति । पृतनायकारित्वात्पृक्षःपितुमान्बह्वन्नभोक्ता । 'पितुरित्यन्ननामे'तिश्रुतेः । द्वितीयंवपुःनित्यःप्रलयेप्यविलुप्तज्ञानः । भीमःसप्तशिवासुऋगाद्याश्च त्वारइतिहासःपुराणंपंचरात्रकमिति सप्तसंख्याकासुनिर्दोषत्वाच्छिवासुमंगलरूपासुमंगलाख्यविष्णुप्रतिपादकासुवानित्यःनित्यासुइतिवा । अत्रकेषांचिदर्थतःनित्यत्वंज्ञेयं मातृषुमापयंतिज्ञापयंतिअर्थानिति मातरस्तासुप्रमाणरूपासुआसमंतादास्यकशयेसुप्तोयथावाह्यज्ञानेनांतएवासक्तोभवतितथातासुआसक्तोभवतीत्यर्थः । नित्यःनित्यंशयेइतिवा । तृतीयमवतारमाह । तृतीयमिति । अस्यवृषभस्यदेवश्रेष्ठस्यवायोरतृतीयंवपुःदशप्रमतिं'शतंदशसहस्रमित्यपरिमितनामानी'तिश्रुतेः । पूर्णप्रज्ञंपूर्णप्रज्ञावस्थानभूतदेहं । योषणःगुरुत्वाद्बहुवचनं । निष्कासयनपरमसौभगवान्विवेशेतिवचनात् । दोहसेज्ञानदोहनायजनयंताजनयंत । अथवा योषणःयोषितांसप्तमातृऋणांदोहसेज्ञानप्रकटनायजनयंतजातामितिविद्यात् । यद्वा योषणःविद्याभिमानिन्योश्रीभूदुर्गाख्याइति ॥ १५५ ॥ तत्प्रयोजनमाह । निरिति । यद्यस्मात्बुध्नात्बोधरूपात्तृतीयावतारात् । ईएवमहिषस्यपूज्यगुणस्यविष्णोर्वर्णीयत्वेनपेयत्वाद्वपसस्तन्नामकान् ज्ञानबलादीन्गुणान् । सूरयःज्ञानिनःईशानासःरुद्राद्याःमनुष्योत्तमपर्यंताःलोकेशानावा शवसासुखेन

**पृक्षो वपुः पितुमान्नित्य आशये द्वितीयमा सप्तशिवासु मातृषु ॥ तृतीयमस्य वृषभस्य दोहसे दशप्रमतिं जनयंत योषणः ॥१५५॥ निर्यदीं बुध्नान्महिषस्य वर्पस ईशानासः शवसाक्रंत सूरयः ॥ यदीमनुप्रदिवो मध्व आधवे गुहासंतं मातरिश्वामथायति ॥ ५६ ॥ प्रयत्पितुः परमान्नीयते पर्या पृक्षुधो वीरुधोदंसु रोहति ॥ उभा यदस्य जनुषं यदिन्वत आदिद्यविष्ठो अभवद् घृणा शुचिः ॥ ५७ ॥ ॥ ॥ ॥ ॥**

निःनितरांक्रंतआक्रमितवंतःज्ञातवंतः बुध्नाज्ज्ञानोपदेशेमूलभूतादाचार्याद्वा यद्वा बुध्नात्मूलभूतप्रमाणाद्ब्रह्मसूत्रभाष्यादिति । अथवा बुध्नात्मूलरूपनारायणप्रसादादितिवायुप्रसादाद्वा । 'मूलंबुध्नोंघ्रिनामक'इत्यभिधानेबुध्नशब्दस्यमूलेप्रयोगादेतदर्थाःज्ञेयाः मातरिश्वावाय्ववतारः प्रदिवःप्रकृष्टज्ञानवान्मध्वःयदीमयमेवपरमात्मानंगुहासंतंगूहितंआधवेआसमंतात्धवेभावप्रधानोनिर्देशः । विषयसप्तमीपतित्वार्थेअनुअनुकूलेनमथायतिऋगादिशास्त्रैर्विचारयति ॥ ५६ ॥ यद्रूपंपरमात्पितुःहेतौपंचमी । सर्वोत्तमेनपित्राप्रनीयतेप्रेर्यते । तद्रूपंपृक्षुधःप्रश्नरूपाःवीरुधःलताःदंसुदंतेषुपर्यारोहति । वल्लीखंडनवत्खंडयतीत्यर्थः । यद्यस्मादुभौलक्ष्मीनारायणौ । अस्यवायोःजनुषंजन्मावतारं । यद्वत्यर्थस्यज्ञानार्थत्वाज्ज्ञानंप्रतिइन्वतः प्रेरयतः । आदस्मात्कारणात् । आदितआभ्यामेवसकाशाद्यविष्ठःकनिष्ठःअभवत् । कथंभूतःविष्णुभक्तेषुघृणादयावान् शुचिःगर्भवासादिदोषरहितः ॥ १५७ ॥ ॥ ॥ ॥ ॥ ॥ ॥

यस्मादादिदस्मान्नारायणादेवतत्प्रेरणयैवमातृश्रीभूदुर्गाजयाशांत्याद्यंजनादिमातृक्रंश्चा।विशदस्मादेवयासुमातृषुआसमंताच्छुचिरुर्वैयाळुष्टशक्त्याऽहिंस्यमानः विवावृधेवि
शेषेणववृधे यद्यासुमातृषुपूर्वाश्रीआद्याअनुअनुक्रमेणरुहत्जातः। तासुज्येष्ठाद्यनुक्रमेणजातः। रुहजन्मानिप्रादुर्भावेतिधातोः। स्वयंभुप्राणात्मशेषेत्युक्तत्वात्। कथंभूता
सनाजुवःविष्णुसेवारताः। नव्यसीषुनूतनदेहवत्वान्नूतनासु अवतारासुस्वतःनीचासु निधावतेव्युत्क्रमेणधर्मानंतरंशीघ्रंजननंप्राप्नोति। संस्पर्शमात्रादभवदित्युक्तत्वात्। यद्वा
आदिन्मातृःऋगादिसतमातृआविशद्विचारयामास उर्व्याउत्कृष्टज्ञानादिमच्छक्त्याहिंस्यमानःअज्ञानादिदोषैरस्पृष्टः। आसमंताच्छुचिर्यथावास्तितज्ज्ञानत्वाच्छुचिर्विवावृ
धे रुद्रादिभ्योधिकंज्ञातवान्। ज्ञानसंपादनप्रकारमाह। अन्विति। यद्यासुमध्येपूर्वाऋगाद्याश्चतस्रःताअनुरूपक्रमाद्यनुकूलेनारुहत्ज्ञातवान् कथंभूताःसनंपुराणंसनात
नंविष्णुंजुषंतिप्रतिपादयंतीति। सनंपुरातनंकालंजुषंतीति। अपौरुषेयाइतिवानव्यसीषुपौरुषेयत्वेननूतनासु अवतारासुवेदादनंतरभूतासु इतिहासपुराणपंचरात्राख्यासु नित
रांधावतेवेदार्थज्ञानेनैतदर्थस्यजातत्वाच्छीघ्रंजानाति ॥ १५८॥ वायोरुत्तमत्वेभारतवाक्यंपठति। अश्वमेधइति। तुशब्दएवार्थः॥ ५९॥ इंद्रादितारतम्येप्रमाणंपठति। ब

आदिन्मातृराविशद्यास्वाशुचिरहिंस्यमान उर्विया विवावृधे ॥ अनु यत्पूर्वा अरुहत्सनाजुवो नि नव्यसीष्ववरासु
धावते ॥१५८॥ अश्वमेधः क्रतुः श्रेष्ठो ज्योतिःश्रेष्ठो दिवाकरः ॥ ब्राह्मणो द्विपदां श्रेष्ठो देवश्रेष्ठस्तु मारुतः॥ ५९॥
बलमिंद्रस्य गिरिशो गिरिशस्य बलं मरुत् ॥ बलं तस्य हरेः साक्षान्न हरेर्बलमन्यतः ॥ ६१ ॥ वायुर्भीमोभीमनादो
महौजाः सर्वेषां च प्राणिनां प्राणभूतः ॥ अनावृत्तिर्देहिनां देहपाते तस्माद्वायुर्देवदेवो विशिष्टः ॥ ६२ ॥ ॥

लमिति। हरेरिंद्रादेरपिबलत्वात्। साक्षादित्युक्तंअन्यतअन्यस्माद्बलंनभवतिअन्यामितिवा॥ ६१॥ पुनरपिवायोरुत्तमत्वेमानंपठति। वायुरिति। भीमःभयंकरःप्राणभूतः
प्राणानांइंद्रियाणांसत्त्वेकारणभूतः। यद्वा प्राणिनांजीवानांप्राणभूतःजीवनकारणभूतः। देहिनांदेहपातेसति। अनावृत्तिर्नविद्यतेआसमंताद्वृत्तिर्वर्तनंयस्येति। अनतीत्यनो
जीवःतस्यासमंताद्वृत्तिरवस्थानंयस्मिन्निितिवा। 'देहाद्देहांतरगतौप्रविशेत्प्राणमेवतु। जीवःप्राणःपरात्मानमेवंसुतावपिस्फुट'मितिहरिवंशवचनात्। अनेचेष्टकेहरौआवृत्तिर्यं
स्येतिवा। अथवा देहिनांचरमदेहपातेनविद्यतेआवृत्तिर्देहांतरस्ययस्मात्सः।यद्वा मृतौअनस्यप्राणस्यावृत्तिःकारणंयस्मात्कस्मिन्वहमुत्क्रांतेउत्क्रांतोभविष्यामि।'कस्मिन्वहंप्र
तिष्ठितेप्रतिष्ठास्यामी'तिश्रुतेः। मृतजीवानुगमनेविशेषःऐतरेयभाष्ये। भारते। 'म्रियमाणमिमंजीवंवासुदेवादिदेवतः। त्यक्त्वाभागेनगच्छंतिभागतोनुव्रजंतितं। गतैर्भोगैर
पिपुनःविशेषुभोगसिद्धये। भोग्यलोकमनुप्राप्तंतस्मात्स्वप्रवदंतरेति'। तस्माद्देवदेवस्तत्त्वदेवानांदेवःअधिपतिःअतएवविशिष्टःश्रेष्ठः॥ ६२॥

वायोरवतारभूतभीमोत्कर्षप्रतिपादकवाक्यैर्वायूत्कर्षभारतवाक्यैः प्रतिपादयति । तत्वज्ञानइति । विषयसन्नमीधैर्येमनोचांचल्येस्थैर्येदेहस्याचांचल्येप्रलापस्यानर्थवचनस्यवर्जनेचपरित्यागे । 'प्रलापोनर्थकंवच' इत्यभिधानं । उभयोःकुरुपांडवयोः ॥१६३॥ तथासर्वोत्कर्षप्रतिपादकवचआस्तितदुदाहरति । धर्मइति । यशइतीदंसर्वंत्वयिआततंव्याप्तंत्वदधीनमित्यर्थः । त्वय्यायत्तमितिक्वाचित् । आयत्तंस्वाधीनंकृतं ॥ ६४ ॥ दुर्योधनस्यचवचोप्यस्तिहिप्रसिद्धं ॥ १६५ ॥ वीराणांशूराणांशास्त्रविदुषांतत्त्वशास्त्रविदुषांकृतीनांकुशलानांप्राणिनांमध्येसत्त्वेज्ञानबलयोःप्राणेप्रकृष्टचेष्टायांसांप्रतमिदानींचत्वारः श्रेष्ठाःबाहुबलेप्राणइत्यनेनबलपौरुषयोरुत्कर्षत्वेपिसंपूर्णबलपौरुषाइति । पुनर्बलपौरुषयोःकथनंकीचकस्यतत्त्वनिर्णयज्ञानयोरभावात् ॥ ६६ ॥ ६७॥ तानुदाहरति । भीमइति । पंचमस्याप्रसिद्धिंसूचयितुंतेषांपंचमंपंचसंख्यापूरकंनानुशुश्रुमइति॥६८॥

तत्त्वज्ञाने विष्णुभक्तौ धैर्ये स्थैर्ये पराक्रमे ॥ वेगे च लाघवे चैव प्रलापस्य च वर्जने ॥ भीमसेनसमो नास्ति सेनयोरुभयोरपि ॥ १६३ ॥ पांडित्ये च पटुत्वे च शूरत्वे च बलेपि च ॥ तथा युधिष्ठिरेणैव भीमं प्रति समीरितं ॥ ६४ ॥ धर्मश्चार्थश्च कामश्च मोक्षश्चैव यशोध्रुवं ॥ त्वय्याततमिदं सर्वं सर्वलोकस्य पश्यतः ॥ विराटपर्वगं चापि वचो दुर्योधनस्य हि ॥ ६५ ॥ वीराणां शास्त्रविदुषां कृतीनां तत्वनिर्णये ॥ सत्वे बाहुबले धैर्ये प्राणे शारीरसंभवे ॥ ६६ ॥ सांप्रतं मानुषे लोके सदैत्यनरराक्षसे ॥ चत्वारः प्राणिनां श्रेष्ठाः संपूर्णबलपौरुषाः ॥ ६७ ॥ भीमश्च बलभद्रश्च मद्रराजश्च वीर्यवान् ॥ चतुर्थः कीचकस्तेषां पंचमं नानुशुश्रुमः ॥ ६८ ॥ अन्योन्यानंतरबलाः क्रमादेव प्रकीर्तिताः ॥ वचनं वासुदेवस्य तथोद्योगगतं परं ॥ ६९ ॥ यत्किंचात्मनि कल्याणं संभावयसि पांडव ॥ सहस्रगुणमप्येतत्त्वयि संभावयाम्यहं ॥ १७० ॥ यादृशे च कुले जातः सर्वराजाभिपूजिते ॥ यादृशानि च कर्माणि भीम त्वमसि तादृशः ॥ १७१ ॥ ॥ ॥

एतेपिसमाःकिंनेत्याह । अन्योन्येति । एतेचत्वारःअन्योन्यंपरस्परंअनंतरंतारतम्योपेतंबलंयेषांतेक्रमादेवभीमादिक्रमेणैवप्रकीर्तिताःशेषादप्युत्तमत्वेइदंप्रमाणंज्ञेयं । तथाभीमोत्कर्षप्रतिपादकंएकवचनंजात्यभिप्रायेण ॥६९ ॥ तान्युदाहरति । यदिति । पांडवभीमआत्मनियत्किंचित् । कल्याणंज्ञानभक्तिबलादिकंसंभावयसिअहंत्वयियज्ज्ञानादिकंसहस्रगुणमपिततोप्यधिकंसंभावयामि ॥ १७० ॥ हेभीमसर्वराजाभिपूजितेयादृशेसर्वोत्कृष्टेकुलेजातः । यादृशानिसर्वोत्कृष्टानिकर्माणिकरोषित्वमपितादृशः सर्वोत्कृष्टःअसि ॥ १७१ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

हेभीमसेनत्वयिभारःसमाहितःअर्जुनेस्थितेकिंमांवदसीत्यतआह । धूरिति । धूर्युगंधरःत्वयाइतरैजनाःवोढव्याःअनेनरथिकस्त्वंत्वदंगभूतोर्जुनः यथायुगंधरःवाहकाश्वःतथे त्युक्तंभवति ॥१७२॥ द्रौपद्याभारतीत्वेशेषाद्युत्तमत्वेचप्रमाणमाह । उक्तमिति । तदुदाहरति । यस्याइति । परमंपरमात्मानंइत्येतेवदंतिजानंतियेषांशेषादीनांप्रथमामातैववि नतादिषुपश्चाज्जननमितिज्ञेयं । साभारतीभूमौद्रौपदीतिनामप्रसिद्धाबभूव । नामनामवतीवा ॥ १७३ ॥ तमेवार्थंस्फुटंप्रमाणेनोपपादयति । चतुर्मुखेति । चतुर्मुखाभान् भाविसंज्ञयावायुश्चतुर्मुखस्तस्यपुत्रत्वेआभानयोग्यान् ॥१७४॥ शेषस्येंद्राधिक्येभारतमुदाहरति । यस्येति । विज्ञानेसामान्यज्ञानेच ॥ १७५ ॥ अन्विष्यापिअन्वेषणेकृ

अस्मिन्युद्धे भीमसेन त्वयि भारः समाहितः॥ धूरर्जुनेन वोढव्या वोढव्या इतरे जनाः॥१७२॥उक्तं पुराणे ब्रह्मांडे ब्र ह्मणा नारदस्य च॥ यस्याः प्रसादात्परमं विदंति शेषः सुपर्णो गिरिशः सुरेंद्रः॥ माता च येषां प्रथमेव भारती सा द्रौप दी नाम बभूव भूमौ ॥ या मारुताद्गर्भमधत्त पूर्वं शेषं सुपर्णं गिरिशं सुरेंद्रं ॥१७३॥ चतुर्मुखाभांश्चतुरः कुमारान् सा द्रौपदी नाम बभूव भूमौ ॥१७४॥ यस्याधिको बले नास्ति भीममेकमृते क्वचित् ॥ न विज्ञाने न च ज्ञाने एष रामः स लांगली ॥१७५॥ यस्य न प्रतियोद्धास्ति भीममेकमृते क्वचित् ॥ अन्विष्यापि त्रिलोकेषु स एष मुसलायुधः ॥१७६॥ तथा युधिष्ठिरेणैव भीमाय समुदीरितं ॥ अनुज्ञातो रौहिणेय त्वया चैवापराजितः ॥ १७७॥ सर्वविद्यासु बीभत्सुः कृष्णेन च महात्मना ॥ अन्वेषु रौहिणेयं च त्वां च भीमापराजितः ॥१७८ ॥ वीर्ये शौर्ये बले नान्यस्तृतीयः फाल्गु नादृते ॥ तथैव द्रौपदीवाक्यं वासुदेवं प्रतीरितं ॥ १७९ ॥ अधिज्य मयि यत्कर्तुं शक्यते नैव गांडिवं ॥ अन्यत्र भीमपार्थाभ्यां भवतश्च जनार्दन ॥१८०॥ तथैवान्यत्र वचनं कृष्णद्वैपायनेरितं ॥ द्वाविमौ पुरुषौ लोके वासुदेवादनं तरौ ॥ भीमस्तु प्रथमस्तत्र द्वितीयो द्रौणिरेव च ॥ १८१ ॥

॥ तेपिअन्विष्यस्थितस्ययस्येतिवा ॥ १७६ ॥ अनिरुद्धादिभ्यःअर्जुनस्यश्रे ष्ठ्येभारतवाक्यमुदाहरति । तथेति । महात्मनाकृष्णेनबीभत्सुरर्जुनः । रौहिणेयंबलभद्रं त्वयात्वांचानु । अनंतरंसर्वविद्यासुअपराजितइतिज्ञातः ॥ १७७ ॥ हेभीमरौहि णेयंत्वांचानुवीर्येशौर्येबलेचएषअर्जुन अपराजितः ॥१७८ ॥ तदेवंव्यक्तमाह । नेति । अर्जुनादृतेतृतीयःत्रित्वसंख्यापूरकअन्योन ॥ १७९ ॥ ज्यामधिवर्तमान मधिज्यं ज्यासहितमित्यर्थः ॥१८०॥ द्रौणेःतृतीयस्यसत्वात्कथंनान्यस्तृतीयइत्युक्तमित्यतःद्रौणिर्द्वितीयएवनतृतीयइत्यत्रभारतगतंव्यासवाक्यमुदाहरति । तथेति ॥१८१॥

ननु द्रौणेरर्जुनोवरइत्युच्यतेतत्कथमेतदित्यतआह । अक्षयाविति । इषुधिशब्दःउभयलिंगइतिज्ञापनार्थंतादृशंविशेषणद्वयमुक्तं । इषुधिर्द्वयोरित्यमरः । औपाधिकंश्रेष्ठत्वम र्जुनस्यनस्वाभाविकमित्यर्थः॥१८२॥ एवंविष्णुसर्वोत्तमत्वं देवतातारतम्यंचोपपाद्योपसंहर्तुंकारणमाह । इतीति । अनंतत्वादुपरम्यतइतिभावः । तर्हि एतावद्वाक्योदाह रणंकिमर्थंकृतमित्यतआह । कानिचिदिति । अत्रतात्पर्यनिर्णयाख्येग्रंथेदिङ्मात्रप्रतिपत्तये । दिक्एवदिङ्मात्रंतस्यप्रतिपत्तयेज्ञानायमार्गप्रदर्शनार्थं कानिचिद्वाक्यानिद र्शितानि ॥१८३॥ उपपादितंपुरुषोत्तमत्वमुपसंहरति । तस्मादिति । उपक्रमेणोक्ततारतम्यक्रमेण । पुरुषोत्तमताब्रह्मतागुणपूर्णताच॥१८४॥ एवंप्रतिपादितमर्थंसंक्षेपे णाह । पूर्णप्रज्ञेति । विष्णोःपूर्णत्वनिर्णयायैव । श्रीमद्भारतगानांवाक्यानां । संक्षेपादुद्धृतिरुद्धारःपूर्णप्रज्ञेनकृता ॥ १८५ ॥ यंनत्वा.यंनिर्णयःकृतस्तस्यैवप्रीतिमाशास्ते । सइति । यस्यसर्वोत्तमत्वंप्रतिपादितंसःपरमादुत्तमाद्रमाब्रह्मादेर्जगतःपरमःअतिशयेनोत्तमःप्रीयतां । एतत्प्रीत्याकिमित्यतआह । संतारकइति । सततःअनादिःसंसृतिः

अक्षयाविषुधा दिव्ये ध्वजो वानरलक्षणः ॥ गांडीवं धनुषां श्रेष्ठं तेन द्रौणेर्वरोर्जुनः ॥ १८२ ॥ इत्याद्यनंतवाक्यानि संत्येवार्थो विवक्षिते ॥ कानिचिद्दर्शितान्यत्र दिङ्मात्रप्रतिपत्तये ॥ १८३ ॥ तस्मादुक्तक्रमेणैव पुरुषोत्तमता हरेः ॥ अनौपचारिकी सिद्धा ब्रह्मता च विनिर्णयात् ॥ १८४ ॥ पूर्णप्रज्ञकृतेयं संक्षेपादुद्धृतिः सुवाक्यानां ॥ श्रीमद्भारतगानां विष्णोः पूर्णत्वनिर्णयायैव ॥ १८५ ॥ स प्रीयतां परतमः परमादनंतः संतारकः सततसंसृतिदुस्तरार्णात् ॥ यत्पादपद्ममकरंदजुषो हि पार्थाः स्वाराज्यमापुरुभयत्र सदा विनोदात् ॥ १८६ ॥ ॥ इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये सुवाक्योद्धरणंनाम द्वितीयोध्यायः ॥ २ ॥ श्रीकृष्णार्पणमस्तु ॥

संसारः सएवदुस्तरः अर्णःसमुद्रस्तस्मात् । जलवाच्यर्णशब्दान्मत्वर्थेडप्रत्ययेकृतेअर्णःसमुद्रइतिसिध्यति । किमत्रज्ञापकमित्यतआह । यदिति । उभयत्रइहलोकेप रलोकेचस्वर्गराज्यतुल्यत्वादिहस्वाराज्यं मुक्तौतुस्वरूपानंदाविर्भावात्स्वाराज्यमापुः । वनवासादिदुःखस्यानुभूतत्वात्कथमिहस्वाराज्यमित्युक्तमित्यतआह । सदेति । स दासर्वदाविनोदात् तेनवनवासादिकंतीर्थाटनदैत्यहननादिनासुखकरमेवेतिभावः ॥१८६॥ यंगंगाजमदग्निजान्वयभवद्विद्वद्धिरण्याभिधात्पुत्रंप्रापजन.दंनंशमदमस्वाध्या यसंपद्युतात् । पूर्तितस्यकृतौसतांसुखकरोध्यायोद्वितीयःशुभः श्रीमद्भारतभावनिर्णयपदार्थोद्दीपिकायामगात् ॥ २ ॥ ॥ इति श्रीमत्तात्पर्यनिर्णयस्य टीकायां जनार्दन भट्ट विरचितायां पदार्थदीपिकायां द्वितीयोध्यायः ॥ २ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥ ॥

श्रीः ॥ एवंसर्वशास्त्रनिर्णयंतदर्थंभारतनिर्णयंअध्यायाभ्यांविधायोत्तरैरध्यायैःकथाव्यत्यासादिपरिहारायहरिकथांवक्तुंतत्रविशेषेणव्यासरामकृष्णकथाःक्रमेणविस्तरेणवदन्नता नमति । जयतीति । आत्मनास्वेनैवान्यप्रेरणंविनाभासंकरोतीतिआत्मनःपरमात्मनइतिवात्मभास्करःव्यासाख्योअवतारोयस्यसहरिर्नारायणः । जयतिउत्कृष्टोवर्तते । अयं प्रसिद्धभास्करःपराधीनप्रकाशःव्यासस्तुस्वतंत्रप्रकाशइतिप्रसिद्धाद्वैलक्षण्यंज्ञातव्यं । अन्यंविशेषमाह । अजइति । नजायतइत्यजः। सूर्यस्तुकश्यपादेर्जायते । अखंडाअ भिन्नाःगुणाएवोरुउत्कृष्टंमंडलमिवमंडलंविग्रहोयस्येति । अखंडगुणानामुरुःविस्तृतःमंडलःसमूहोयस्येतिवा । प्रसिद्धस्यखंडतेजोगुणाल्पमंडलवत्त्वाद्वैलक्षण्यं हरिःसदोदि तः । ज्ञानमेवमरीचयस्तैःमालतेशोभतेइतितेषांमालाविद्यतइतिवा । कदाचिदेवोदितत्वात्प्राकृतमरीचिमालित्वाच्चभास्करस्यवैलक्षण्यं स्वभक्तानांहार्दंहृदिभवमुच्चमुत्कृष्टंय त्तमस्तस्यहंताबाह्याकल्पतमोहंतृत्वाद्वैलक्षण्यं । व्यासस्यपूर्वंनमनंरामावतारात्पूर्वमपिव्यासावतारोस्तीतिज्ञापनार्थं । रामावतारकथाकथनानंतरंव्यासावतारकथाकथनंप श्चादपिव्यासावतारोस्तीतिज्ञापयितुं । तदुक्तंभागवततात्पर्ये । 'तृतीयेसप्तमेचैवषोडशेपंचविंशके । अष्टाविंशयुगेकृष्णःसत्यवत्यामजायतेति । रामावतारस्तु । चतुर्विंशेयुगे चापिविश्वामित्रपुरःसरः । जज्ञेदशरथस्याथपुत्रःपद्मायतेक्षणइतिहरिवंशे । सप्तमस्यचतुर्विंशेराजंस्त्रेतायुगेतदा । यदारामेणसमरेसगणोरावणोहतः । रामेणैवतदाराजन्कुं

ॐ जयत्यजोखंडगुणोरुमंडलः सदोदितो ज्ञानमरीचिमाली ॥ स्वभक्तहार्दोच्चतमोनिहंता व्यासावतारो हरि रात्मभास्करः ॥ १ ॥ जयत्यजोक्षीणसुखात्मबिंबः स्वैश्वर्यकांतिः प्रततः सदोदितः ॥ स्वभक्तसंतापदुरिष्टहंता रा मावतारो हरिरीशचंद्रमाः ॥ २ ॥ ॥ ॥ ॥ ॥

भकर्णोनिपातितः । वर्तमानंतुयद्वृत्तंकल्पेकल्पेयदूद्वह । रामस्यचरितंवृत्तंतदावाल्मीकिनाशुभमिति । विष्णुधर्मोत्तरवचनाच्चतुर्विंशेयुगेरामइतिवा । ब्रह्मवैवर्तवचनाच्चतुर्वि शोज्ञेयः । यत्तु । त्रेतायुगेपंचमेतुराजादशरथोभवदिति । तदिदानींतनयुगाद्युत्क्रमेणपंचमइतिव्याख्येयं । चकारापिरदयोःसत्त्वादेकस्मिन्कल्पेअनेकवारंरामावतारोज्ञेयः। अथवा शास्त्रकर्तृत्वतत्प्रतिपाद्यत्वरूपोपाधिद्वयसमावेशात्पूर्वंव्यासस्तवनंविस्तरेणप्रतिपाद्यत्वरूपकोपाधिमत्त्वाद्रामकृष्णयोःपश्चात्तत्रापिपश्चात्तनत्वात्कृष्णस्यपश्चात्स्तवनंकृ तमितिज्ञेयं । अज्ञाननाशनायज्ञानोपदेशार्थावतारत्वात्सूर्यदृष्टांतेनव्यासस्तवनंकृतमितिभावः ॥ १ ॥ रामंस्तौति । जयतीति । हरिःरामावतारःईशचंद्रमाः ईशश्चासौचं द्रमाश्च । जयति । अक्षीणःक्षयरहितः । सुखात्मासुखस्वरूपः । बिंबोदेहोयस्येति । अस्यक्षीणदुःखवृद्धिवत्त्वाद्वैलक्षण्यंस्वरूपभूतैश्वर्यात्मयाकांतिःस्वरूपभूतमैश्वर्यमेववा कांतिःतयाप्रततःव्याप्तः अत्रवैलक्षण्यंस्फुटं । स्वभक्तानांसंतापाआधिभौतिकादयःतेभ्यःदुरिष्टंदुःखंहंतीति । संतापान्दुरिष्टंसंसारंचेतिवा । अत्रबाह्यतापहंतृत्वाद्वैलक्ष ण्यं लोकदुःखशांत्यर्थमवतीर्णत्वाच्चंद्रदृष्टांतेनस्तवनम् ॥ २ ॥ ॥ ॥ ॥ ॥ ॥

कृष्णंस्तौति । जयतीति । कृष्णावतारोहरिःएकःमुख्यःकेवलःशुद्धोविलक्षणोवा । सागरःसमुद्रःजयति । असंख्यातानिउरूणिपूर्णानिबलान्येवांबूनितैःपूरःपूरणंयस्मिन्सं ख्यावदंबुपूरत्वाद्वैलक्षण्यं गुणएवोच्चरत्नानितेषांआकरःआत्मवैभवःस्वरूपभूतैश्वर्यवान् । सदासंतःयेआत्मज्ञाःपरमात्मज्ञानिनस्तेएवनद्यस्ताभिःप्राप्यःकदाचिन्नदीप्राप्य त्वाद्वैलक्षण्यं बलकार्याद्यनेकचरित्रप्रदर्शनज्ञानप्रदानरूपविचित्रार्थयाप्यवतीर्णत्वात्समुद्रदृष्टांतेनस्तवनम् ॥३॥ एवंमंगलंविधायैतदध्येतृभिःएतेवंद्याःएतत्प्रवर्तकैर्नतत्वादेत त्प्रतिपाद्यत्वाच्चेतिकुमेतत्प्रवर्तककृतंमंगलाचरणपद्यमेवपठति । नारायणमिति ॥ ४ ॥ दुर्गमार्थत्वाद्व्याख्याति जयेति । भारवत्त्वेनजितत्वाज्जयतीतिजयः ॥५॥ नारा यणस्यैवव्यासत्वात्पुनरुक्तमित्यतआह । नारायणइति । एकएवसभगवानूवाच्यवक्तृस्वरूपःनारायणःव्यासइत्युक्तः । उपाधिभेदान्नपुनरुक्तिः । नरोत्तमनमनंकिमर्थमित्य तआह । साधकेशइति । नरनमनेनिमित्तमाह । उपेति । देवीनमनेहेतुमाह । देवीति । सरस्वतीवाक्यरूपाप्रतिपादकविद्याभिमानिनी । उपसंहरति । तस्मादिति ॥ ६ ॥

**जयत्यसंख्योरुबलांबुपूरो गुणोच्चरत्नाकरआत्मवैभवः ॥ सदा सदात्मज्ञनदीभिराप्यः कृष्णावतारो हरिरेकसागरः ॥ ३ ॥ नारायणं नमस्कृत्य नरं चैव नरोत्तमं ॥ देवीं सरस्वतीं व्यासं ततो जयमुदीरये ॥ ४ ॥ जयोनामेतिहासोयं कृष्णद्वैपायनेरितः ॥ वायुर्नरोत्तमो नाम देवीति श्रीरुदीरिता ॥ ५ ॥ नारायणो व्यास इति वाच्यवक्तृस्वरूपतः ॥ एकःस भगवानुक्तः साधकेशो नरोत्तमः ॥ उपसाधको नरश्चोक्तो देवी भाग्यात्मिका नृणां ॥ सरस्वती वाक्यरूपा त स्मान्नम्या हि तेखिलाः ॥६॥ कृष्णो सत्या भीमपार्थौ कृष्णेत्युक्ता हि भारते ॥७॥ सर्वस्य निर्णयसुवाक्यसमुद्धृतीनु स्वाध्याययोर्हरिपदस्मरणेन कृत्वा ॥ आनंदतीर्थवरनामवती तृतीया भैमी तनुर्मरुत आह कथा परस्य ॥ ८ ॥**

प्रतिपाद्यत्वादेतेनम्याइत्याह । कृष्णाविति । भारतेकृष्णौवासिष्ठयादवेशौकृष्णावित्युक्तौ देवीसत्येति नरोत्तमोभीमइतिनरःपार्थःतदावेशवत्वात् ।सरस्वतीकृष्णद्रौपदीत्येतेउ क्ताः। तस्मात्प्रतिपाद्यत्वान्नम्याइतिभावः॥७॥संगतिपूर्वकंवक्तव्यमाह । सर्वस्येति । स्वाध्याययोःशोभनाध्याययोःसर्वशास्त्रार्थस्यनिर्णयःप्रथमे द्वितीयेसुवाक्यसमुद्धारःयद्वा उभयत्रोभयंप्रथमेपिनारायणस्येतिप्रमाणोद्धारस्य। द्वितीयेपिशास्त्रार्थस्योक्तत्वात् । भैमीभीमावतारभूता । जन्मासभीमस्ययदुक्तमत्रेति ।तथाविप्रतनुःसभीमोदैत्यैर्निगूढंहरित त्त्वमाहेत्यत्रैवकथनात् । यत्तुतृतीयमस्येति ।अत्रापिमरुतःतृतीयातनुरितितदवतारत्वेनगणनंतत् ।यथामहाभिषगाख्यस्यैवशंतुनत्वेपिमहाभिषक्शंतनुश्चेति अवतारत्वेपि चि त्रांगदायास्ताराचित्रांगदेत्यादिवयुज्यते। अतएवभगवत्पादैरंशद्वयमेवोक्तं ।वायुत्वमाप्तःसहनूमदंशइति । ब्राम्ह्यंपदंप्राप्यवृकोदरश्चेति। भौमीभूमौविद्यमानेतिकेचित॥८॥

प्रथमाध्यायेसूक्ष्मतयासृष्टानांस्थूलतयासृष्टिंवक्तुंपूर्वोक्तसृष्ट्यनुवादपूर्वकमनुक्तांत्रिभ्यःसृष्टिंचाह । व्यूढइत्यादिना । सभगवान्ऐश्वर्यादिगुणसमुद्रएकःअवतारादिषुभेदर हितःसनारायणश्चतुर्धाव्यूढःव्यूहंप्राप्तअवतीर्णइतियावत् । पूर्वसृष्ट्यनुवादपूर्वायां अनुक्तांसृष्टिंकथयति । सइति । सनारायणःसृष्टिविधित्सयासृष्टिविधानेच्छया वासुदेवना म्नापूर्वेणरूपेण पूर्वावतारेणमायाभिधांश्रियमारप्राप । सामायाअतोवासुदेवात्विरिंचंसुपुवेचेतिप्रारब्धंसिद्धंचेत्याह ॥ ९ ॥ बलसंविदात्मासःसाक्षाद्वायुर्मुख्यवायुःसंकर्षणाज्ज यासुतोबभूव । यएवाथवायुपदप्राप्त्यनंतरं । आद्यःभविष्यद्ब्रह्मसुप्रथमोभविष्यःविरिंचोनाम ततःवायोःपरःअन्यःनब्रह्मपदभोक्तानहि कुत्रचिद्बलंज्ञानंजातमित्युक्तस्या भिप्रायउक्तोभवति ॥ १० ॥ वासुदेवात्पुरुषःसंकर्षणात्सूत्रनामाजातइत्युक्तेरभिप्रायमाह । सूत्रमिति । सवायुःसूत्रंसूत्रनामाविरिंचःपुरुषःप्रकीर्तितः । इदानींप्रद्युम्नात्सृष्टि माह । प्रद्युम्नतइति । अथब्रह्मवायूत्पत्त्यनंतरं । प्रद्युम्नतःकृतौयमलेद्वेस्त्रियौप्रजज्ञतुः । तत्रतयोर्मध्येपूर्वाप्रधानसंज्ञाशिवादीनांजनित्री । अतएवप्रकृतिः ॥ ११ ॥ द्वितीयाश्र

**व्यूढश्चतुर्धा भगवान्स एको मायां श्रियं सृष्टिविधित्सयार ॥ रूपेण पूर्वेण स वासुदेवनाम्ना विरिंचिं सुपुवे च सातः ॥ ९ ॥ संकर्षणाच्चापि जयातनूजो बभूव साक्षाद्बलसंविदात्मा ॥ वायुर्य एवाथ विरिंचनामा भविष्य आद्यो न पर स्ततो हि ॥ १० ॥ सूत्रं स वायुः पुरुषो विरिंचः प्रद्युम्नतश्चाथ कृतौ स्त्रियौ द्वे ॥ प्रजज्ञतुर्यमले तत्र पूर्वा प्रधानसंज्ञा प्रकृतिर्जनित्री ॥ ११ ॥ श्रद्धा द्वितीयाथ तयोस्तु योगो बभूव पुंसैव च सूत्रनाम्ना ॥ हरेर्नियोगादथ संप्रसूतौ शेषः सुपर्णश्च तयोः सहैव ॥ १२ ॥ ॥ ॥ ॥ ॥**

द्धाअथोत्पत्यनंतरं हरेर्नियोगात्तयोःश्रद्धाप्रधानयोः पुंसासूत्रनाम्नाचयोगोबभूव । पुरुषेणप्रधानायाःसूत्रेणश्रद्धायाःयोगोजातः तयोःपुरुषसूत्रयोःसहैवैकस्मिन्कालेशेषः सुपर्णश्चजातः । तदुक्तमनुव्याख्याने । 'ततोजातःपुमान्नामाब्रह्मासीद्वासुदेवतः । सूत्रात्माप्राणनामाच देव्यौप्रकृतिमानिनी'ति । तद्व्याख्यातंजयतीर्थैः । प्राणनामा संकर्षणाद्देव्यौसरस्वतीभारत्यौ प्रकृतिमानिनीप्रकृतिमानिन्यौ । 'सुपांसुलुक्पूर्वसवर्णेतिपूर्वसवर्णं' इतिबृहद्भाष्येआधारे 'सदासर्वगुणापानादापोनारायणःस्मृतः । द्वितीयरूप मसृजद्वासुदेवंसआत्मनः । ब्रह्मसत्यमितिप्राहुर्वासुदेवाभिधंप्रभुं । तस्माद्ब्रह्माजनिततोदेवाःसर्वेपिजज्ञिरे' । इतिचोक्तं । आथर्वणभाष्येच । 'वासुदेवःपुमान्नामपूर्णत्वा त्सःस्वयोषिति । रमायांगर्भमादध्यात्प्रजास्तस्मात्प्रजज्ञिरे' इति । छांदोग्येच । 'प्रथमावताररूपत्वाद्वासुदेवःपरःपुमान्' । प्रस्तावइति । ननु 'नारायणाख्यःपुरुषःशेतेल क्ष्म्यान्वितोलये । सएवपुरुषाख्यंतुद्वितीयंरूपमात्मनः । कृत्वारमायांपुरुषनामानंतुचतुर्मुखं । प्रधानाख्यांचगायत्रींससर्जपुरुषात्मकः । चतुर्मुखःसपुरुषोमहत्तत्वाभिधंपुनः ।

प्रधानाम्न्यांगायत्र्यांससर्जात्मानमेवतु । श्रद्धाभिधांचगायत्रींताभ्यांशेषोन्वजायतेतिअनेनविरोधः प्रमाणेषु। पुरुषाद्ब्रह्मप्रधानयोःपुरुषनामकब्रह्मणएवमहत्तत्वाभिधस्य। ब्रह्मणश्चसृष्टिकथनान्मूलेचवासुदेवाद्ब्रह्मणःप्रद्युम्नात्प्रधानायाःअनिरुद्धान्महत्तत्वाभिधस्यकथनादितिचेन्न । अत्रपुरुषशब्देनपुरुसूतइतिस्रष्टृरूपमेवोच्यते । तेनवासुदेवादिचतुर्णामपिपुरुषपदवाच्यत्वं सृष्टिकर्तृत्वात् 'यत्तस्यव्यापकंरूपंपरंनारायणाभिधं शून्यंब्रह्मेतितंप्राहुर्द्वितीयंस्रष्टृयत्ततः । परमःपुरुषोनामनितंतद्देशतोविभोरि'तिब्रह्मतर्कवचनेस्रष्टृरूपस्यैवपुरुषसंज्ञाकारणात् । अतएवतज्ज्ञापनार्थंपरमःसतुवासुदेवनामाबभूवेति । परमपदेनविशेषितः । यद्वा तृतीयतात्पर्येकापिले । 'प्रकृतेःक्षोभकंरूपंदेवंनारायणाभिधं । प्रकृतौमहतःस्रष्टापरमःपुरुषोत्तमः । तदेववासुदेवाख्यंमहत्तत्वनियामकमि'ति । तस्यैववासुदेवत्वमहत्तत्वनियामकत्वकथनाच्च । बृहद्भाष्ये । 'प्रद्युम्न पुरुषेत्युक्तः पूरयेत्स्वजगद्यत'इति । अथवा पूरुषव्यूहस्थाःसर्वेपिछत्रिन्यायेनपुरुषपदवाच्याः । यद्वा रूपद्वयंज्ञेयं तयोरैक्यंचतदुक्तंस्कांदे । 'सृष्टिभेदाद्विरूपंतुकथापंचोत्तरंशतं । वैरूप्यमन्यद्विज्ञेयंतात्पर्यान्मोहनायचेति । आद्योवतारोविष्णोस्तुपुरुषोनामकीर्तितः । असृजत्समहत्तत्वंसएवांडंसमाविशदि'तिपुरुषादपिमहत्तत्वोत्पत्तिकथनाद्विरोधइतिचेत् महत्तत्वोत्पत्तेर्द्विवारंविद्यमानत्वात् । तदुक्तंव्योमसंहितायां । 'यःशेतेप्रलयेविष्णुःशून्यनामामहाकृतिः । सतुनारायणोनामनराणामयनत्वतः । रूपंद्वितीयं

**शेषस्तयोरेव हि जीवनामा कालात्मकः सोथ सुपर्ण आसीत् ॥**
**तौ वाहनं शयनं चैव विष्णोः काला जयाद्याश्च ततः प्रसूताः ॥ १३ ॥**

भवतिदीपाद्दीपांतरंयथा । सिसृक्षोस्तच्चपुरुषइत्याहुस्तद्विदोजनाः । सरमायाद्वितीयेतुरूपेप्रकृतिसंज्ञिते । वीर्यमाधत्तपुरुषोमहांस्तस्मादजायत । योसौहिरण्यगर्भाख्यःपुरुषःसोपिभाष्यते । श्रद्धेत्युक्ताहितत्पत्नीसापिप्रकृतिरुच्यते । प्रलयेत्वशरीरौतौविभागेनव्यवस्थितौ । शरीरंप्राप्यपुरुषात्संयोगंतौप्रचक्रतुः । ततःपुनर्महत्तत्वंप्रजातंजगदंकुरं । स्वस्यैवपुत्रतांयातमहंकारस्ततोजनी'ति । सूत्रात्मनामहांश्चापिसहजातश्चतुर्मुख'इतिवचनंनविरुद्धं । हिरण्यगर्भाख्यपुरुषादुत्पन्नमहत्तत्वेसूत्रसहभावमात्रकथनात् । महत्तत्त्वयोर्युगुलंप्रातमितिचेन्न । नीलादेहयोरिवविदुरधर्मदेहयोरिवोत्पन्नयोर्महत्तत्त्वयोरैक्यान्नयुगलंउत्पन्नयोर्द्वयोरैक्यामुक्तमन्यपुत्रत्वमपरित्यज्यापिशरीरंतद्भवतीतिगीताभाष्यव्याख्यानावसरे । द्वितीयशरीरेजातेतत्पूर्वशरीरेणैक्यमापद्यतइतिसंप्रदायविदइतिजयतीर्थार्यैः॥१२॥ कुत्रचित्पुरुषसूत्रयोर्जीवकालौजातौइत्युक्तिस्तांघटयन्नाह । शेषइति । तयोःपूर्वजातयोर्मध्येशेषएवजीवनामा । अथसःसुपर्णःगरुडःकालात्मकःआसीत् । तौगरुडशेषौवाहनं शयनमास्तरणंविष्णोर्बभूवतुः । ततस्तदनंतरं ततस्तयोर्गरुडशेषयोःकालाःकालनामकाःजयाद्याःजयविजयाद्याः गरुडात्कालाःशेषाज्जयाद्याइतिज्ञेयं । यद्वा मरुतआदित्याइवकालाः तेकेइत्यतः जयाद्याइति ॥ १३ ॥

एषाशेषानतंरंसृष्ट्युक्त्याप्राप्तांदेवोत्तमत्वप्रतीतिंनिवारयति । कालाइति । अंडात्परतःबहिःप्रसूताःततएवांडाद्बहिःप्रसूतत्वादेवतेअखिलाकालाद्याःसुरेभ्यइंद्रादिभ्योनीचाः। वासुदेवादित्रितयजातसूक्ष्मसृष्टौइंद्रादेरनुत्पन्नत्वात्तेभ्यउत्तमत्वप्राप्तिरेवनेत्यर्थः । परावरेतथैवारादुभयार्थाभिधायिनइतितात्पर्यात् । तत्रापवादमाह । विष्वक्सेनइति । तेषां मध्यस्थःविष्वक्सेनःवायुजःशेषगरुडयोर्नस्वरूपतारतम्यमाह । खेनेति । खेनगणेशेनतुल्यःसमानःअनेनेदमुक्तंभवति । ब्रह्मांडाद्बहिस्तत्त्वसृष्टिः अंडांतःपाद्मसृष्टिश्चेतिद्वे तारतम्यज्ञापिके । प्रथमाध्यायेनिरुद्धादुक्तांसूक्ष्मसृष्टिंविहाय अन्यासूक्ष्मसृष्टयन्याश्चस्थूलसृष्टयःनतारतम्यज्ञापिकाः । अतएवप्रथमाध्यायेक्रमशइत्युक्तं । एतेषांचसूक्ष्मसृष्टौजातत्वान्नश्रैष्ठ्यमितिभावः । तदुक्तंवाराहे । 'मरुतोब्रह्मवायूचतद्भार्येचाभिमानिनः । अहमःशेषवींद्रौचरुद्रेंद्रौकामतस्त्रियः। मनसस्त्वनिरुद्धश्चचंद्रश्चान्येयथोदितं। एवंक्रमोव्यत्ययरतुसूक्ष्मस्थूलादिभेदतः । सृष्टौगुणेचज्ञानादौमुक्तेष्वेवाप्ययंक्रमः । नियमेनान्यथोक्तिस्तुमोहायासुरजन्मनामिं'ति । तत्त्वसृष्टिस्तारतम्यज्ञापिकेत्यत्र । 'ततोरूपंमहन्नामब्रह्मणोहंकृतिःशिवः । ब्रह्मणोबुद्धिनाम्नोमाततइंद्रोमनोभिधः । स्कंदश्चततएवान्येसर्वेदेवाःप्रजज्ञिरे । तत्रपूर्वतनःश्रेयान्गुणैःसर्वैःसमस्तशः । तेभ्यस्तुभग

काला जयाद्या अपि विष्णुपार्षदावस्मादंडात्परतस्संप्रसूताः ॥ नीचा सुरेभ्यस्तत एव तेखिला विष्वक्सेनो वायुजः खेन तुल्यः ॥ १४ ॥ व्यूहात्तृतीयात्पुनरेव विष्णोर्देवांश्चतुर्वर्णगतान्समस्तान् ॥ संगृह्य बीजात्मतयानिरुद्धो न्यधत्त शांत्यां त्रिगुणात्मिकायाम् ॥ १५ ॥ ततोमहत्तत्त्वतनुर्विरिंचः स्थूलात्मनैवाजनि वाक् च देवी ॥ तस्यामहंकारतनुं सरुद्रं ससर्ज बुद्धिं च तदर्धदेहां ॥ १६ ॥ ॥ ॥ ॥ ॥

वान्विष्णुस्तदधीनाइमेसदे'त्यनुव्याख्यानंमानं । पद्मसृष्टिस्तारतम्यज्ञापिकेत्यत्र 'उक्तक्रमात्पूर्वभवस्तुयोयःश्रेष्ठःससब्रह्मासुरकानृतेचे'दमेवमानं सृष्टिद्वयंचतारतम्यज्ञापकमित्यत्रेत्यादिकल्पोत्थितइत्यनेन सृष्टिद्वयमनूद्यात्रपूर्वोयोयोगुणैर्नित्यमसौवरोहीतिमानं । यत्तु 'आदिसृष्टौपूर्वजायेतेधिकाःसर्वदागुणैः । अनाद्यनंतकालेषुमुक्तावपियथाक्रममिं'तिवचनंपाद्मसृष्टेरेवतारतम्यज्ञापकं । 'रुद्रमिंद्रंकुमारंचविनैवान्याग्रजोमनुः । ब्रह्मपुत्रेष्वादिसृष्टौअन्यथात्वंपुनर्जनिरिं'तिवचनसाहचर्यात् । इदंचमनवेपूर्वजायचेत्यत्रतात्पर्यमनुःपद्मकल्पेप्रथमउत्पन्नः । तस्मात्पाद्मसृष्टेरेवतारतम्यज्ञापकं । अथवानिरुद्धाज्जातसूक्ष्मसृष्टेरादौजातत्वात्तस्यतारतम्यज्ञापकं ॥ १४ ॥ अनिरुद्धात्स्थूलसृष्टिमाह । व्यूहादिति । अनिरुद्धःविष्णोस्तृतीयात्व्यूहात्प्रद्युम्नादेवसमस्तांश्चतुर्वर्णगतान् । देवांश्चतुर्वर्णगतान्संगृह्यत्रिगुणात्मिकायांशांत्यांबीजात्मतयाबीजरूपेणन्यधत्त ॥ १५ ॥ ततःशांतेःवाग्देवीसरस्वतीचाजनि । तस्यांवागदेव्यांसब्रह्मातदर्धदेहांरुद्रंस्त्रियंबुद्धिमुमांससर्ज ॥ १६ ॥ ॥ ॥

सशिवस्त्रिरूपः त्रीणिरूपाणिविशेषप्रमाणोक्तानिज्ञेयानि । तथाहि । प्राथम्ये । 'ज्ञानाभिमानीपुरुषःसब्रह्मासमुदाहृतः । अर्थाभिमानिप्रकृतिर्गायत्रीसाप्रकीर्तिता । तयोर्नि यामकोविष्णुःश्रीश्चानुग्राहिकास्मृता । वायुस्तुब्रह्मणःपुत्रःप्रकृतौसमजायत । त्रिगुणात्मासमुद्दिष्टःप्रायःसत्त्वात्मकस्तथा । गायत्रीचैवसावित्रीतथैवचसरस्वती । एवंत्रिरूपा प्रकृतिरेकासत्वादिभेदतः । तासुवीर्यंसमुत्सृष्टंब्रह्मणैकत्वमागतं । ससूत्रात्मासमुद्दिष्टोवायुर्लोकप्रणायकः । तस्यापिसूत्रंभगवान्धारणाद्विष्णुरव्ययः । सूत्रपुत्रस्त्वहंकारः सरुद्रःसमुदाहृतः । सूत्रात्मनामहांश्चापिसहजातश्चतुर्मुखः । तस्यापिपुत्रोहंकारःसचानंतउदाहृतः । अनंतादपिरुद्रोभूद्ब्रह्मणश्चेतिसत्रिधा । वैकारिकोब्रह्मजस्तुतैज सोवायुजःस्मृतः । तामसोनंतजश्चैवसएकोगुणभेदतः' इति । बुद्ध्याभिमानिन्यामुमायांमनःवैकारिकदेवसंघान्वैकारिकाहंकारजातान् तैजसानितैजसाहंकारजातानिइंद्रि याणि तामसाहंकारजान् । विषयैःशब्दादिभिःसार्धंसह खादीन् आकाशवाय्वादीन् । क्रमेणतामसाहंकाराच्छब्दंशब्दादाकाशंआकाशात्स्पर्शंस्पर्शाद्वायुंवायोःरूपंरू पात्तेजःतेजसःरसंरसाज्जलंजलाद्गंधंगंधात्पृथिवीमितिक्रमेणससर्ज । तदुक्तंतृतीये । 'तामसाच्चविकुर्वाणाद्भगवद्वीर्यचोदितात् । शब्दमात्रमभूत्तस्मान्नभःश्रोत्रंतुशब्दगमि

बुद्ध्यामुमायां स शिवस्त्रिरूपो मनश्च वैकारिकदेवसंघान् ॥ दशेंद्रियाण्येव च तैजसानि क्रमेण खादीन् विषयैश्च सार्धं ॥१७॥ पुंसः प्रकृत्यां च पुनर्विरिंचाच्छिवोथ तस्मादखिलाः सुरेशाः ॥ जाताः सशक्राः पुनरेव सूत्राच्छ्रद्धा सुतानाप सुरप्रवीरान् ॥१८॥ शेषं शिवं चेंद्रमथेंद्रतश्च सर्वे सुरा यज्ञगणाश्च जाताः ॥१९॥ पुनश्च माया त्रिविधा बभूव सत्त्वादिरूपैरथ वासुदेवात् ॥ सत्वात्मिकायां स बभूव तस्मात्स विष्णुनामैव निरंतरोपि ॥२०॥ रजस्तनौ चैव विरिंच आसीत्तमस्तनौ शर्व इति त्रयोस्मात् ॥ एते हि देवाः पुनरंडसृष्टावशक्नुवंतो हरिमेत्य तुष्टुवुः ॥ २१ ॥

ति । तथा । 'नभसःशब्दतन्मात्रात्कालगत्याविकुर्वतः । स्पर्शोभवत्ततोवायुस्त्वक्स्पर्शस्यचसंग्रहः' । तथा । वायोश्चस्पर्शतन्मात्राद्रूपंदैवेरितादभूदित्यादि ॥ १७ ॥ पुरु षात्पुनःसृष्टिमाह । पुंसइति । प्रकृत्यांप्रधाननाम्न्यांपुंसःपुरुषनामकाद्विरिंचाच्छिवोजज्ञे । अथतस्माच्छिवात्सशक्राअखिलाःसुरेशाःजाताः । सूत्रात्पुनःसृष्टिमाह । पुन रिति । श्रद्धासूत्रात्पुनरेवसुरप्रवीरान्सुतानाप ॥ १८ ॥ तान्विशेषतोनिर्दिशति । शेषंशिवंचेंद्रमिति । इंद्रात्सृष्टिमाह । अथेति । अथइंद्रतःसर्वेसुराःयज्ञगणाःयज्ञाभिमा निनोदेवाश्चजाताउत्पन्नाः ॥१९॥ अथवासुदेवात्पुनः सृष्टिमाह । पुनश्चेति । पुनश्चपुनरपिसृष्टिंकर्तुंमायासत्त्वादिरूपैस्त्रिविधाबभूव । अथसत्वात्मिकायांसत्वाभिमानिन्यां श्रीसंज्ञायांवासुदेवात्सःनारायणःबभूव । सकिंनामकइत्यतआह । सइति । सजातोऽवतारःविष्णुनामैव जन्यजनकत्वेनप्राप्तंभेदंनिवारयति । निरंतरःभेदरहितोपीति ॥२०॥ वासुदेवाद्रजस्तनौरजोभिमानिन्यांभूसंज्ञायांविरिंचिनामाआसीत् । वासुदेवात्तमस्तनौतमोभिमानिन्यांदुर्गासंज्ञायांशर्वनामासआसीत् । इत्यनेनप्रकारेणास्माद्वासुदेवाच्च

यःविष्णुविरिंचशर्वाजाता इतिपूर्वोक्तस्योपसंहारः । इदानींब्रह्मांडोत्पत्तिंबकुंतत्वदेवस्तुतिमाह । एतइति । एतेदेवाःतत्त्वाभिमानिनोदेवाः अंडसृष्टौपुनरपिअशक्नुवंत पुनःशब्द एवार्थोवा । अशक्नुवंतएवेतिसंबंधः हरिमेत्यप्राप्य तुष्टुवुः ॥ २१ ॥ स्तुतिंप्रदर्शयति । त्वमिति । त्वन्नःअस्माकंसन्निकेतनंसमीचीनगृहंकुरु । कथंभूतस्त्वं । जगतश्चित्रा आश्चर्यरूपाविचित्रानानाप्रकारायासृष्टिःसर्जनंतस्यांनिःसीमाऽपरिमिताशक्तिरस्येति । तैर्देवैरिति स्तुतःसोसौशुभ्रंवीर्यंहिरण्यात्मकमंडमंबुमध्येसुषाव । तस्मिन्ब्रह्मांडेहरिणा सार्धंसहैवसर्वेसुराःप्रविष्टाः ॥ २२ ॥ अंडांतःसृष्टिमाह । तस्येति । तस्यहरेर्नाभेर्लोकात्मकंलोकाधारंपद्मंबभूव । अमुष्यपद्मस्यमध्येपुनःसद्गुणानामात्मास्वामीविरिंचोज नि ॥ २३ ॥ तस्माद्ब्रह्मणःपुनर्ब्रह्मांडांतःसर्वेसुराःप्रसूताः इदानींतंप्रपदाभ्यामित्युक्तप्रकारंदर्शयति । तइति । वायोःश्रैष्ठ्यंजानमाना अपिमारुतांतास्तेदेवालोकस्यनिर्ण

त्वन्नो जगच्चित्रविचित्रसर्गनिःसीमशक्तिः कुरु सन्निकेतनम् ॥ इति स्तुतस्तैः पुरुषोत्तमोसौ स विष्णुनामा श्रियमाप सृष्टये ॥ २२ ॥ सुषाव सैवांडमधोक्षजस्य शुभ्रं हिरण्यात्मकमंबुमध्ये ॥ तस्मिन्प्रविष्टा हरिणैव सार्धं सर्वे सुरास्तस्य बभूव नाभेः ॥ लोकात्मकं पद्ममुष्य मध्ये पुनर्विरिंचोजनि सद्गुणात्मा ॥२३॥ तस्मात्पुनः सर्वसुराः प्रसूतास्ते जानमाना अपि निर्णयाय ॥ निःसृत्य कायादथ पद्मयोनेः संप्राविशन् क्रमशो मारुतांताः ॥ २४ ॥ पपात वायोर्गमनाच्छरीरं तस्यैव चावेशत उत्थितं पुनः ॥ तस्मात्स एको विबुधप्रधान इत्याश्रिता देवगणास्तमेव ॥२५॥ हरेर्विरिंचस्य च मध्यसंस्थितेरुस्तदन्यदेवाधिपतिः स मारुतः ॥ ततो विरिंचो भुवनानि सप्त ससप्तकान्याशु चकार सोब्जात् ॥ २६ ॥

यायपद्मयोनेः पद्मादुत्पन्नस्यकायात् क्रमशःवागादिक्रमेणनिःसृत्य उतानंतरं तेनैवक्रमेणसंप्राविशन् ॥ २४ ॥ ततःकिंनभूदित्यतआह । पपातेति । तस्यैवचवायोरेवावेशतःप्रवेशात्पुनरुत्थितं तस्मात्पातनोत्थानकर्तृत्वात्सवायुः एकःमुख्यःविबुधेषुप्रधानइति देवगणास्तमेवाश्रिताः ॥ २५ ॥ हरिविरिंचादेर्देहेसत्त्वेपियदि वायोर्गमनागमनाभ्यांदेहपातोत्थानेभवतस्तदा तयोरप्यधिपतिरित्यायातमित्यतआह । हरेरिति । समारुतःवायुः हरेर्विरिंचस्यचमध्यसंस्थितेर्मध्यस्थत्वेनसंस्थितत्वेनसंस्थितेःपरीक्षार्थमुदासीनत्वेनास्थितेरितियावत् । अतस्ताभ्यामन्येषांदेवानामधिपतिःस्वामी । उदासीनतयास्थितत्वंस्फुटमुक्तमैतरेयभाष्ये । ‘उदासीनौचतावास्तांकेशवश्चाब्जसंभवः । तेषांबलपरीक्षार्थमि’ति । तृतीयतात्पर्यंच । ‘यज्ञांतस्थःस्वयंपादौविशन्नोत्थापयद्धरिः । शक्तोपिब्रह्मवाय्वोस्तुबलज्ञप्त्यैजनार्दनः । तत्स्यउत्थापयामासब्रह्मदेहंविशन्विभुरि’ति तत्स्थःब्रह्मवायुस्थः ननु

'अन्नाभिमानीब्रह्मैवप्राणोवायुरुदाहृतः । अन्योन्यानुप्रविष्टौतौसर्वदेवेषुसंस्थितौ । वायुंविनाब्रह्मणोपिशरीरंपूतिमेष्यति । वायुश्चशोषमायातिविनाब्रह्माणमंजसेति । प्राणउच्चक्रामिषतिस्थातुंनाशक्नुवन्परे । प्राणंविनानचब्रह्मातंविनाप्राणएवतु । अन्योन्यापाश्रयाच्छक्तौस्थातुमन्येकुतस्ततः' इत्यनेनचसहवासनियमकथनाद्देहेपीतिवच नाच्चकथंवायोर्बहिर्गमनंहरिब्रह्मणोश्चमध्यस्थतयावस्थानमितिचेत्सत्यं । अन्नाभिमानीतिशरीराभिमानिब्रह्मप्राणरूपयोःसहवासनियमःकथ्यते । बेनरूपेणोदासीनत्व कथनंइंद्रियगणगतचित्तस्वरूपेणत्रयाणामपिगमनप्रवेशावंशेनज्ञेयौ । तदुक्तं । 'चित्तेनहृदयंचैत्यःक्षेत्रज्ञःप्राविशद्यदा । विराट्तदैवपुरुषःसलिलादुदतिष्ठते' त्यस्यतात्पर्ये कापिले । 'अंशेनसुप्तोब्रह्मातुअंशेननिरगात्तथा । स्वदेहाद्वायुसहितोविष्णुनाचजगत्प्रभुः । तमुत्थापयितुंदेवास्तानृतेत्रीन्महाबलाः । नाशक्नुवन्नेकसंस्थास्ततस्तेत्वविशंस्त्र यः । उदतिष्ठद्ब्रह्मदेहस्तदातेषांप्रभावतः । विशेषेणहरेरेवप्रभावेनाश्रियःपतेः । चित्ताभिमानीब्रह्मैवक्षेत्रज्ञस्तद्रतोहरिरि' तिएवकारेणहरेरेवनिषेधःक्रियतेनतुवायोः । अथरूपां तरेणोदासीनत्वज्ञापितंछांदोग्यभाष्ये । 'उदासीनवदास्तांतौकेशवश्चाब्जसंभव' इति । अत्रसुप्तिशब्देनमुद्रितनेत्रत्वमथवास्वप्नतुल्यावस्थावत्वंवा । ब्रह्मवाय्वोःस्वप्न तुल्यत्वंचबाह्याज्ञानवत्त्वेसतिअंतरेवज्ञानवत्वेनसुप्तिशब्दस्यस्वप्नवाचकत्वं । 'सुषुप्तिस्वप्नयोश्चैवस्वर्गिण्योर्नास्तथैवच । अन्योन्यनामताज्ञेयामनोबुध्योस्तथैवचे' तिशब्द

**तस्माच्च देवा ऋषयः पुनश्च वैकारिकाद्याः सशिवा बभूवुः ॥ २७ ॥ अग्रे शिवोहंभव एव बुद्धेरुमामनोजौ सह शक्रकामौ ॥ गुरुर्मनुर्दक्ष उतानिरुद्धः सहैव शच्या मनसः प्रसूताः ॥ २८ ॥ ॥ ॥**

निर्णयाज्ज्ञेयं । तस्मात्पुनःसर्वसुराःप्रसूताइत्युक्तांसृष्टिंप्रपंचयंति । ततइति । ततःपरीक्षानंतरंनसःविरिंचःब्रह्मा सप्तकैःसहितानिसप्तभुवनानिचतुर्दशभुवनानि । आशुअप्र यत्नेनाब्जाच्चकार । इतःपूर्वमपिलोकसृष्टिरस्ति । तदुक्तमैतरेयभाष्ये । ब्रह्मवैवर्ते । 'भूतेभ्योनंतरंत्वंडंसृष्ट्वाविष्णुःपुराप्रभुः । लोकभेदांश्चचक्रेत्रपश्चाद्ब्रह्माविशेषतः । सम्यक्चकारलोकांस्तांल्लोककर्तातत:सचे' ति । ऐतरेयशाखायांच । 'सऐच्छद्भगवान्विष्णुःस्रष्टुंलोकाभिमानिनः । लोकाभिधानवद्देवान्जडलोकांश्चशाश्वतः । स लोकेभ्यःपूर्वतनानवाख्यान्महदादिकान् । ब्रह्मशर्वादिकान्सृष्ट्वाजडैःसहजनार्दनः । दिवमाकाशमूर्तिंचससृजेथद्विसप्तकान् । इतिसृष्ट्वासलोकांस्तुपुनस्तानेवलो कपान् । अडांतःप्रस्रष्टुमैच्छत्तेषांपूज्यत्वसिद्धय' इति ॥२६॥ तस्माद्ब्रह्मणश्चवैकारिकाःवैकारिकाहंकारादुत्पन्नाइंद्रियाभिमानिनोदेवाआद्यशब्देनतैजसाः प्राणा द्यास्तामसाः गणेशाद्याःसशिवाःशिवेनसहिताःऋषयश्चपुनर्बभूवुः ॥ २७ ॥ उक्तामेवसृष्टिंस्थानकथनपूर्वकंकथयति । अग्रइति । अंतःकरणमहंकारबुद्धिमनश्चेतना चित्तमित्यनेकभेदाभिन्नं । तत्राग्रेआदौअहंकाराद्भवतीत्यहंभवःशिवः । रुद्रोअहंकाराज्जातइत्यर्थः । बुद्धेरुमाजाताअग्रेगुर्वादिभ्यः आदौशक्रकामौसहयमलौमनोजौ मनसःजातौ उततत:मनसःगुर्वादयःपंचसहैवएकदैवप्रसूताः ॥ २८ ॥ ॥ ॥ ॥ ॥ ॥

चक्षुःश्रुतिभ्यांस्पर्शात्क्रमेणरविःशशीधर्मइतीमेसहैवएकस्मिन्कालएवप्रसूताः । चक्षुषःरविरित्यादिज्ञेयं । वारिपतिर्वरुणःजिह्वायाःभवतीतिजिह्वाभवः । नसोर्नासत्यदस्रौ एकोनासत्यःअपरोदस्रः । ननुचैतयोर्नामभेदःक्वचिद्दृष्टोतितयोर्विशेषनामाप्यविशेषितमितिचकथंवक्ष्यतीतिचेत्समाहितमिदंजयतीर्थार्यैः । अश्विनोरेकोनासत्यःसाहचर्यादुभावपिनासत्यावित्युच्यते । अतएवान्यत्रनासत्यदस्रावित्याचार्यइति । तेननामभेदेपिसाहचर्याल्लक्षणयोभयोर्वाचकत्वाच्छब्दभेदोनचेति । तयोर्विशेषनामापिविशेषतयावाचकमपिनामाविशेषितंसाहचर्यादुभयोर्वाचकमित्युक्तंभवति । इत्येतेदेवाक्रमशस्तारतम्यक्रमोपेताःप्रसूताःउत्पन्नाः अनुक्तांनाह ततइति । ततस्तस्मात्ततस्तदनंतरं । सनाद्याःसनकाद्यास्त्रयः । मरीच्याद्यावसुपुत्राःसूर्यरश्मिसंस्थामरीच्याद्यादेवाःसर्वेअन्येप्राणिनःक्रमशःक्रमेणप्रसूताः । मरीच्याद्याउक्ताःछांदोग्यभाष्ये । ‘ तत्पुत्रास्तुमरीच्याद्याःसूर्यरश्मिषुसंस्थिता’इति । नन्वत्रैतैःसहपठिताःसनकाद्यास्तेसनकाद्यास्तृतीयतात्पर्येइंद्रादिभिःसहपठिताः । बृहद्भाष्येचनारदादिभिःसहपठिताः । अतस्तारतम्यभंगइतिचेन्नानोभयत्रसमताकथनार्थःग्रंथःप्रवृत्तः । अपितुतात्पर्ये उमावरत्वकथनार्थंबृहद्भाष्येच इंद्रावरत्वकथनार्थंप्रवृत्तः । तथाहि तात्पर्ये । ‘इंद्राद्याःसनका

**चक्षुःश्रुतिभ्यां स्पर्शात्सहैव रविः शशी धर्म इमे प्रसूताः ॥ जिह्वाभवो वारिपतिर्नसोश्च नासत्यदस्रौ क्रमशः प्रसूताः ॥ ततः सनाद्याश्च मरीचमुख्या देवाश्च सर्वे क्रमशः प्रसूताः ॥ २९ ॥ ततो सुराद्या ऋषयो मनुष्या जगद्विचित्रं च विरिंचतोभूत् ॥३०॥ उक्तक्रमात्पूर्वभवश्च यो यः श्रेष्ठः स सद्मासुरकान्तते च ॥ पूर्वश्च पश्चात्पुनरेव जातो नाश्रेष्ठतामेति कथंचिदस्य ॥ गुणास्तु कालात्पितृमातृदोषात्स्वकर्मतो वाभिभवं प्रयांति ॥ ३१ ॥ ॥**

द्याश्चदक्षाद्यायेपिचापरे । ऋषयोमनवोदेवास्तद्दृश्यायेचकेचन । उमायाअवरासर्वगुणैःसर्वैर्नसंशय’इति । बृहद्भाष्यंच । ‘सनत्कुमारस्तुयदापुरंदरसमोमतः । सनकाद्यानारदश्चदक्षभृग्वादयोपिच । देवावरायथातद्वन्मनवोपिप्रकीर्तिता’इति । अत्रपुरंदरस्यप्रकृतत्वाद्देवावराइंद्रावराइतिज्ञेयम् ॥ २९ ॥ ततअसुराद्याःअसुरराक्षसाद्याः ऋषयःमनुष्याःजाताःविचित्रंगोगजाश्वपक्षिवृक्षादिनानाभेदयुतं । जगद्विरिंचतोभूत् ॥ ३० ॥ तारतम्येनइयमेवसृष्टिज्ञापिकेत्याह । उक्तेति । उक्तक्रमात्पूर्वभवःपाद्मसृष्टौयोयःपूर्वोत्पन्नःसःश्रेष्ठः । अस्यापवादमाह । असुरकानिति । पाद्मसृष्टौयःपूर्वजातःसकस्यांचित्सृष्टौपश्चाद्यदिजायेत तदाकथमित्यतआह । पूर्वइति । पूर्वःपाद्मसृष्टौपूर्वजातःपुनरवांतरसृष्टौपश्चाज्जातः । उक्तक्रमादन्यथाजातःकथंचिदश्रेष्ठतांपूर्वजातावरतोऽनुत्तमतांनैतीत्यन्वयः । ननु पूर्वजातावरतःपश्चाज्जातःश्रेष्ठस्याविशेषगुणादर्शनादश्रेष्ठःकिंनस्यादतआह । अस्येति । अस्यावांतरसृष्टौपश्चाज्जातस्यगुणाःज्ञानानंदादयःकालात्द्वापरकलियुगादिकालबलात् । पितृमातृदोषात् । मनुष्यान्नपरिणतरेतो योनिसंबंधादिदोषात् । स्वकर्मतोवास्वार्जितप्रारब्धकर्मसंबंधाद्वाभिभवमनभिव्यक्तिंप्रयांतिगच्छंतीत्यर्थः । तस्मान्नाश्रेष्ठतेतिभावः ॥ ३१ ॥ ॥

लयक्रमएवोत्पत्तिक्रमः कुतोनस्यादित्यतआह । लयइति । तस्यव्युत्क्रमतःसिद्धत्वान्नासौक्रमनियामकइतिभावः । यद्वा व्युत्क्रमेणलयस्यसिद्धत्वादुत्पत्तिक्रमएवश्रैष्ठ्य क्रमनियामकइत्याह । लयइति । हियतःयेषांदेवानांलयःसंहारः व्युत्क्रमतःनीचमारभ्यस्यादतउत्पत्तिक्रमएवतारतम्यक्रमनियामकइतिभावः । उक्तमेतत्पाद्मेपि । 'पूर्वैपूर्वेयतोविष्णुसन्निधानक्रमाधिकाः । सामर्थ्याधिक्यमेतेषांपश्चादेवलयस्तथा । व्याप्तिश्चाभ्यधिकातेषामतएवनसंशय' इति । लयकथनप्रसंगाद्धरेःप्रलयेऽवस्थानप्रकारमाह । शेतइति । हरेःशमनंनामचक्षुर्निमीलनं । लक्ष्म्याश्चान्यत्रानास्था । तदुक्तंव्योमसंहितायां । 'सुप्तिस्तुप्रकृतेःप्रोक्ताअतीवभगवद्रतिः । अनास्थान्यत्रचप्रोक्ता विष्णोचक्षुर्निमीलनमि'ति । शेतइत्युत्तयाप्राप्ताज्ञानसंबंधंनिवारयति । निजेति । अमंदःपूर्णःसांद्रःनिबिडःसंदोहःसमुदायरूपस्तन्निजानंदंस्वरूपानंदमनुभवन् । ननु प्रलयेकथमस्यसत्त्वमित्यतआह । अनंतइति । कालतोपिपरिच्छेदशून्यःपूर्वंलक्ष्मीसहायेत्युक्तमिदानीमेकइत्युक्तत्वात् । 'हेररत्यंतसामीप्यंलयोलक्ष्म्याःप्रकीर्तित'इत्येतद्व्र

**लयो भवेद्व्युत्क्रमतो हि तेषां ततो हरिः प्रलये श्रीसहायः ॥ शेते निजानंदममंदसांद्रसंदोहमेकोनुभवन्ननंतः ॥ ३२ ॥ अनंतशीर्षास्यकरोरुपादः सोनंतमूर्तिः स्वगुणाननंतान् ॥ अनंतशक्तिः परिपूर्णभोगो भुंजन्नजस्रं निजरूप आस्ते ॥ ३३ ॥ एवं पुनः सृजते सर्वमेतदनाद्यनंतो हि जगत्प्रवाहः ॥ नित्या हि जीवाः प्रकृतिश्च नित्या कालश्च नित्यः किमु देवदेवः ॥ ३४ ॥ यथा समुद्रात्सरितः प्रजाताः पुनस्तमेव प्रविशंति शश्वत् ॥ एवं हरेर्नित्यजगत्प्रवाहस्तमेव चासौ प्रविशत्यजस्रम् ॥ ३५ ॥ ॥ ॥ ॥**

पोलयोज्ञेयः ॥ ३२ ॥ प्रलयेकस्याप्यभावादानंदानुभवीअन्यदातुनेत्याकांक्षायामाह । अनंतेति । अनंतानिशीर्षाणिआस्यानिमुखानिअनंतकराउरवःपादायस्येति । अनंताःमूर्तयअवताराःयस्येति । अनंताशक्तिर्यस्येति । परिपूर्णःभोगोयस्यसनारायणःअनंतान्सगुणान्सुखज्ञानादीन्भुंजन्नजस्रंनिजरूपेणस्वाश्रयेणास्ते ॥ ३३ ॥ नन्वेवंप्रलयकालेसर्वेषुलीनेषुपुनःसृष्टिरस्तिनवेत्याकांक्षायामाह । एवमिति । एवंपूर्ववत्सर्वमेतज्जगत्तत्रहेतुमाह । अनादीति । जगत्प्रवाहःअनाद्यनंतोहियःअतःसृजतइत्यन्वयः । उपादाननिमित्तकारणयोरुत्पाद्यमानस्यजीवस्यचाभावात्कथंपुनःसृष्टिरित्यतआह । नित्येति । कैमुत्यन्यायेनकर्तुर्नित्यत्वमाह । किमिति ॥ ३४ ॥ सृष्टिलयौदृष्टांतेनोपपादयति । यथेति । तमेवसमुद्रमेवशश्वत्प्रविशंति । एवमसौनित्यःजगत्प्रवाहःनित्यश्चासौजगतःप्रवाहःप्रवाहरूपेणनित्योलोकःहरेर्निःसृत्यतमेवहरिमेवाजस्रंप्रविशंति ॥ ३५ ॥ ॥ ॥ ॥ ॥

सृष्टिप्रलययोरवश्यज्ञेयत्वंज्ञापयितुंज्ञानफलमाह । एवमिति । अजस्यपुरुषोत्तमस्यपरमामनंतांशक्तिमेवसृष्टिलयादिक र्तृत्वेनयेविदुस्ते । अथवैराग्यभक्त्यपरोक्षज्ञानानंतरं । तस्यहरेःप्रसादाद्दग्धदोषाआशुतमाप्नुवंति । आदौदेवान्प्राप्यांतेतमाप्नोतीत्येतज्ज्ञापयति । सुरेशमिति । एतत्कुतइत्यतउक्तं । परमिति ॥ ३६ ॥ देवानांमुक्त्यनंतरंपुनस्तत्तत्पदाधिपत्यंकथंकेनेत्यतआह । देवानिमिति । तदन्यान्मुक्तेभ्योन्यान् तत्तद्गणान्ऋज्वादिगणान् तत्रापिअधिकारयोग्यान् । वायुरुद्रादीन् एवपदेब्रह्मशेषादिपदे नियुङ्क्ते ॥ ३७ ॥ इदानींकश्यपादनुसर्गमाह । पुनश्चेति । मारीचतःमरीचिपुत्रात्कश्यपाददित्यांदेवाः । तस्मादेवदित्यामसुराः । दाक्षायिणीषुविनतादिषु एवकारउक्तयोर्दित्यादित्ययोरपिदक्षकन्यात्वंसूचयति । समस्तशःसर्वेसत्वाःप्राणिनः 'सत्वमस्त्रीषुजंतुषु'इत्यभिधानं ॥३८॥ इदानींवराहावतारमाह । ततइति । ततःअलयःप्रलयर

एवं विदुर्ये परमामनंतामजस्य शक्तिं पुरुषोत्तमस्य ॥ तस्य प्रसादादथ दग्धदोषास्त माप्नुवंत्याशु परं सुरेशं ॥३६॥ देवानिमान् मुक्तसमस्तदोषान् स्वसन्निधाने विनिवेश्य देवः ॥ पुनस्तदन्यानधिकारयोग्यांस्तत्तद्गुणानेव पदे नियुङ्क्ते ॥ ३७ ॥ पुनश्च मारीचत एव देवा जाता अदित्यामसुराश्च दित्यां ॥ गावो मृगाः पक्ष्युरगादिसत्त्वा दाक्षायणीष्वेव समस्तशोपि ॥ ३८ ॥ ततः स मग्नामलयो लयोदधौ महीं विलोक्याशु हरिर्वराहः ॥ भूत्वा विरिंचार्थमिमां सशैलामुद्धृत्य वारामुपरि न्यधात्स्थिरं ॥ ३९ ॥ अथाब्जनाभप्रतिहारपालौ शापात्त्रिशो भूमितले प्रजातौ ॥ दित्यां हिरण्यावथ राक्षसौ च पैतृष्वसेयौ च हरेः परस्तात् ॥ ४० ॥ ॥ ॥

हितः । लयरहितत्वादेवलयकालेवर्तमानःसहरिर्वराहोभूत्वालयोदधौप्रलयसमुद्रमग्नांस्वतएवमग्नांमहींविलोक्येमांसशैलांपर्वतैःसहितामुद्धृत्य । स्थिरंयथाभवतितथावारांजलानांउपरि । विरिंचार्थंब्रह्मणोर्थेन्यधात्स्थापयामास । अनेनब्रह्मणासृष्टिंकुर्वितिआज्ञप्तःस्वायंभुवोमनुःभूम्यभावात्कथंस्रक्ष्येइत्युक्तेब्रह्मणिचिंतयतितन्नासापुटादंगुष्ठमात्राभिव्यक्तइतिकथांसूचयति । इदानीमपिहिरण्याक्षोहतइतिज्ञेयमिदंप्रथमंप्रयोजनं ॥ ३९ ॥ द्वितीयंप्रयोजनंवक्तुंकथामाह । अथेति । अथप्रयोजनांतरमस्यावतारस्योच्यते । अब्जनाभस्यद्वारपालौजयविजयौशापाल्लक्ष्मीसनकादिर्विशापाद्भूमितलेत्रिशःप्रजातौ । तिस्रोविधाःदर्शयति । दित्यामिति । दित्यांहिरण्यौहिरण्याक्षहिरण्यकशिपाख्यौजातौ । अथराक्षसौरावणकुंभकर्णौ । परस्तादनंतरं । कृष्णावतारेहरेःकृष्णस्यपैतृष्वसेयौचदंतवक्रशिशुपालौजातौ ॥ ४० ॥ ॥

ततस्तयोर्मध्येदित्यामुत्पत्त्यनंतरंवा । उदारउत्कृष्टःविक्रमःपराक्रमोयस्यसः दितेःसुतअवरजःहिरण्याक्षः धात्रार्थितेनवराहरूपिणैवधरोद्धृतौहिरण्याक्षमाज्जितभूम्युद्धरण काले हतइतिशेषः । हतइतिक्वचित्पाठः । इदंद्वितीयंप्रयोजनं । ननु एकस्यद्विवारहननंकथमित्यतउक्तं । पूर्वेति । अब्जजोद्भवःब्रह्मपुत्रःपूर्वंहतः । तेनैकस्यनद्विवार हननं । तदुक्तंब्रह्मांडे । 'ब्रह्मजस्तुहिरण्याक्षःप्रथमंदंष्ट्रयाहतः । सएवपार्षदाविष्टोद्वितीयःकर्णताडनात् । पूर्वंलयोदधौमग्नांद्वितीयांतेनमाज्जितां । भुवमुद्धरतैवासौहरिणा क्रोडमूर्तिनेति । अतएवान्यत्रधरोद्धृतावितिसामान्योक्त्यादेवतानयनंतदुद्धारशब्देनज्ञायते । पूर्वंतुसशैलमित्युक्तं । स्वतोमग्नामभिप्रेत्य अतएवान्यत्र 'सगिरिवरधरातल वहसुसूकरे'ति । वाराहेच । 'दंष्ट्राग्रेणोद्धरत्पृथ्वींसपर्वतवनार्णवामि'ति ॥४१॥ मत्स्यावतारमाह । अथोइति । हयास्यःहयग्रीवःअसुरेंद्रःदैत्यश्रेष्ठःविधातुर्मुखतःविनिः

ततो हिरण्याक्ष उदारविक्रमो दितेः सुतो योवरजः सुरार्थे ॥ धात्रार्थितेनैव वराहरूपिणा धरोद्धृतौ पूर्वहतोब्जजोद्भवः ॥ ४१ ॥ अथो विधातुर्मुखतो विनिःसृतान् वेदान्हयास्यो जगृहे सुरेंद्रः ॥ निहत्य तं मत्स्यवपुर्जुगोप मनुं मुनींस्तांश्च ददौ विधातुः ॥४२॥ मन्वंतरेप्रलये मत्स्यरूपो विद्यामदान्मनवे देवदेवः ॥ वैवस्वतायोत्तमसंविदात्मा विष्णोः स्वरूपप्रतिपत्तिरूपां ॥ ४३ ॥ अथोदितेर्ज्येष्ठसुतेन शश्वत्प्रपीडिता ब्रह्मवरात्सुरेशाः ॥ हरिं विरिंचेन सहोपजग्मुर्दौरात्म्यमस्यापि शशंसुरस्मै ॥ ४४॥ अभिष्टुतस्तैर्हरिरुग्रवीर्यो नृसिंहरूपेण स आविरासीत् ॥ हत्वा हिरण्यं च सुताय तस्य दत्वाभयं देवगणानतोषयत् ॥ ४५ ॥ ॥ ॥

सृतान्वेदान् । देहधारिणोवेदान्जगृहे । अत्रप्रमाणंचवक्ष्यते । मत्स्यवपुस्तंहयास्यंनिहत्यमनुंमुनीन्सप्तऋषीन्जुगोप तान्वेदान्विधातुर्ददौ ॥ ४२ ॥ मन्वादिगोपनं विशदयति । मन्वंतरेति । मन्वंतरप्रलयेदेवदेवः उत्तमसंविदात्माउत्तमासर्वोत्कृष्टासंविज्ञानमेवात्मादेहःस्वरूपंवायस्येत्यनेनज्ञानदानसामर्थ्यंसूचितं । मत्स्यरूपःवैवस्वतायमनवेविष्णोःस्वरूपस्यप्रतिपत्तिरूपां । नित्यसाकांक्षत्वात्समासः । प्रतिपत्तिर्यथार्थज्ञानंतज्जनकांविद्यामदात् । अत्रापिवेददानंविद्यादानमितिप्रयोजनद्वयंज्ञेयं॥४३॥ नरसिंहावतारमाह । अथोइति । दितेः ज्येष्ठसुतेनब्रह्मवराच्छश्वत्प्रपीडिताःसुरेशाःविरिंचेनसहहरिंशरणंउपजग्मुः अस्यहिरण्यकशिपोर्दौरात्म्यंदुष्टतामस्मैहरयेशशंसुः ॥४४॥ तैरभिष्टुतउग्रवीर्यःसहरिःनृसिंहरूपेणाविःप्रादुर्भूतः आसीत् । हिरण्यंहिरण्यकशिपुंहत्वा । तस्यसुतायप्रह्लादायाभयंदत्वा । देवगणानतोषयदितिसंबंधः ॥४५॥

कूर्मावतारमाह । सुरेति । बृहदंडवोढाब्रह्मांडधारकःसकूर्मःहरस्यवरादपरैरधार्यंमंदरंमंदरगिरिंदधार । सुरासुरगणानामुदधिंमथ्नतांसतां ॥४६॥ वामनावतारमाह । वरादिति । दैत्यराट्बलिश्चतुर्मुखस्यवरादजेयत्वंयदातदाब्रह्मादिस्तुतःअजोपिअदितेःसुतोमहान्श्रेष्ठोपींद्रावरजःअजायत ॥४७॥ सवामनस्वरूपःपदेपदेगांसंनमयन्नसुरभूभृतःबलेरध्वरंयज्ञंजगाम अस्माद्बलेस्त्रिभिःपदैःछलतःत्रिविष्टपंस्वर्गंजहार । तत्त्रिविष्टपंनिजाग्रजेइंद्राय ॥४८ ॥ छलतोग्रहणेकारणमाह । पितामहेनेतिअस्यबलेःपितामहेनप्रल्हादेन पुरानृसिंहावतारेबलेःकृतेबलिरक्षणार्थंयाचितः केशवोयद्यस्माद्वचआह । वाक्यंवक्ति । नेति । हेशुभाननाहंतंबलिमयाच्ञ्ययायाच्ञांविनानप्रतिहन्मीतियस्माद्वचआह

सुरासुराणामुदधिं विमथ्नतां दधार पृष्ठेन गिरिं स मंदरम् ॥ वरप्रदानादपरैरधार्यं हरस्य कूर्मो बृहदंडवोढा ॥४६॥ वरादजेयत्वमवाप दैत्यराट् चतुर्मुखस्यैव बलिर्यदा तदा॥ अजायतेंद्रावरजोदितेः सुतो महानजोप्यब्जभवादिसंस्तुतः ॥ ४७ ॥ स वामनात्मासुरभूभृतोध्वरं जगाम गां संनमयन् पदेपदे ॥ जहार चास्माच्छलतास्त्रिविष्टपं त्रिभिः क्रमैस्तच्च ददौ निजाग्रजे ॥ ४८ ॥ पितामहेनास्य पुराभियाचितो बलेः कृते केशव आह यद्वचः ॥ नयाच्ञ्ययाहं प्रतिहन्मि तं बलिं शुभाननेत्येव ततोभ्ययाचत ॥ ४९ ॥ बभूविरे चंद्रललामतो वरात्पुरा ह्यजेया असुरा धरातले ॥ तैरर्दिता वासवनायकाः सुराः पुरो निधायाब्जजमस्तुवन्हरिं ॥ ५० ॥ विरिंचसृष्टौ नितरामवध्यौ वराद्विधातुर्दितिजौ हिरण्यकौ ॥ तथा हयग्रीव उदारविक्रमस्त्वया हता ब्रह्मपुरातनेन ॥ ५१ ॥ स चासुरान् रुद्रवरादवध्यानिमान्समस्तैरपि देवदेव ॥ निःसीमशक्त्यैव निहत्य सर्वान् हृदंबुजे नो निवसाथ शश्वत् ॥ ५२ ॥

ततःअभ्ययाचत ॥ ४९ ॥ परशुरामावतारमाह । बभूविरइति । चंद्रललामतःचंद्रोललामंभूषणंयस्य शिवस्यवरात् । अजेयाअसुराःधरातलेबभूविरे । तैःपीडिताःवासवइंद्रोधिपतिर्येषांतेसुराअब्जजंब्रह्माणं पुरोनिधायहरिमस्तुवन् ॥ ५० ॥ स्तुतिमाह विरिंचेति । विरिंचेनसृष्टाउत्पादितास्तैर्देवमनुष्यासुरैर्बभूवतुरितिशेषः तथाहयग्रीवउदारविक्रमः बभूव । ब्रह्मणःपुरातनःपितातेनब्रह्माचासौपुरातनश्चेतिवा । तेनत्वयातेहताः ॥ ५१ ॥ हेदेवदेव येनहताःसत्वंरुद्रवरात्समस्तैरवध्यान्सर्वानिमानसुरान्निहत्य नः हृदम्बुजेशश्वन्निवस ॥ ५२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

त्रिदशैर्देवैरित्यनेनप्रकारेणादरेणभक्त्याउक्तःअजेयःसशार्ङ्गधन्वानारायणःभृगूद्वहःभृगूणांरक्षकःअभूत् । अनादिःशमःपर्शुरामः उग्रंक्रूरमसुराणांपूगंसमूहंहत्वा । असृजैवरक्तेनैव । ह्रदान्पंचविदधे चकार ॥ ५३ ॥ रामावतारकथांवक्तुंतत्प्रसक्तिमाह । ततइति । तावादिदैत्यौहिरण्याक्षहिरण्यकशिपुनामानौआद्यौभवौदितेःपुत्रौपुराशापकालेहरेर्वरतः मयैववध्यावितिवरतःपरैःहरेरन्यैरवध्यौ । विधातुर्वरात्सुरैरजेयौ । पुलस्त्यस्यकुलेविश्रवसःप्रसूतौ ॥ ५४ ॥ विधातुर्वरादित्युक्तंविशदयति । सर्वैरिति । पुरातनेजन्मनिहिरण्याक्षजन्मनि । धातुरेववरात्कुंभकर्णजन्मन्यजेयोभवेतिवरात् । सकुंभकर्णःसर्वैरजेयःरावणस्तदातनात्रावणजन्मनिभवाद्वरान्नरवानरादीन्नृतेसर्वैरजेयः । तौरावणकुंभकर्णौत्रिदशान्देवानबाधतां । यत्तु'नदेवानांप्रजापानांविजेतावरतोविना । बलेनविद्ययावापिनसमस्तरपतीन्विना । वरोपितादशोयावच्छरीरंनान्यदेहग'इतिवाक्यं । तत्र्यावच्छरीरंयद्देहमुद्दिश्यदत्तस्तद्देहपातपर्यंतमितिव्याख्येयं । तदाबाधनकालेक्षीरसमुद्रेभोगिपःशेषस्तस्यभोगःशरीरंतत्रशायिनंहरिंसमेत्य योग्यांभगवद्योग्यांप्रसंगानुगु

इत्यादरोक्तस्त्रिदशैरजेयः स शार्ङ्गधन्वाथ भृगूद्वहोभूत् ॥ रामो निहत्यासुरपूगमुग्रं ह्रदाननादिर्विदधे सृजैव ॥५३॥
ततः पुलस्त्यस्य कुले प्रजातौ तावादिदैत्यौ जगदेकशत्रू ॥ परैरवध्यौ वरतः पुरा हरेः सुरैरजेयौ च वराद्विधातुः
॥ ५४ ॥ सर्वैरजेयः स च कुंभकर्णः पुरातने जन्मनि धातुरेव ॥ वरान्नरादीनृत एव रावणस्तदातनात्तौ त्रिदशानबाधतां ॥ ५५ ॥ तदाब्जजं शूलिनमेव चाग्रतो निधाय देवाः पुरुहूतपूर्वकाः ॥ पयोंबुधौ भोगिपभोगशायिनं समेत्य
योग्यां स्तुतिमभ्ययोजयन् ॥ ५६ ॥ त्वमेक ईशः परमः स्वतंत्रस्त्वमादिरंतो जगतां नियोक्ता ॥ त्वदाज्ञयैवाखिलमंबुजोद्भवा वितेनिरेग्र्याश्चरमाश्च येन्ये ॥ ५७ ॥ मनुष्यमानात्रिशतं सषष्टिकं दिवौकसामेकमुशंति वत्सरं ॥
द्विषट्सहस्रैरपि तैश्चतुर्युगं त्रेतादिभिः पादश एव हीनैः ॥ ५८ ॥ ॥ ॥ ॥ ॥

णांवा । स्तुतिमभ्ययोजयन्कुर्वन् ॥ ५५ ॥ ५६ ॥ स्तुतिमेवदर्शयति । त्वमिति । त्वमेकईशःमुख्यस्वामीजगतामादिरुत्पादकः । अंतःनाशकःनियोक्तानियामकः । अग्र्याअग्रेभवाःपुरातनाः । अंबुजोद्भवाःब्रह्माणःवितेनिरेनिर्मितवंतः । चशब्दादद्यतनोब्रह्मावितनुतेचरमाःभविष्यंतःब्रह्माणःवितरिष्यंति ॥ ५७ ॥ स्रष्टृणांब्रह्मणांकियदायुरायुषंतेकिंकुर्वंतीत्यतआयुःपरिमाणंवक्तुं देवमानमाह । मनुष्यमानादिति । मनुष्यमानाद्वर्षाणांत्रिशतंषष्टिकंदेवानामेकंवत्सरमुशंतिइच्छंति । तैर्देववर्षैर्द्विषट्सहस्रैश्चतुर्युगंभवति । चतुर्युगानांसंख्याकिंसमेत्यतआह । चतुर्युगमिति । चतुर्युगमित्येतदत्रापिसंबध्यते पादशःएकैकपादेनहीनैःत्रेतादिभिर्युतंकृतंचतुर्युगंभवति । तदेवचतुःसहस्रमष्टौशतानि कृतेत्रिसहस्रंषट्शतानि त्रेतायांसहस्रद्वयंचतुःशतानि द्वापरेएकंसहस्रंशतद्वयं कलावेकमेवंद्वादशसहस्राणिभवंति ॥ ५८ ॥

तद्युगचतुष्टयंसहस्रवारमावर्तितंस्वयंभुवोब्रह्मणःअहःदिनंभवति। निशाचरात्रिरपितावती। तन्मानेनपूर्वोक्ताहोरात्रिमानेनमितंपरिमितं। शरच्छतमत्यंतसंयोगेद्वितीया। त्वदाज्ञयास्वान्भोगान् अनुभूयत्वरितःसब्रह्मात्वदंतिकमुपैति ॥५९॥ प्रसंगानुगुणांस्तुतिमाह। त्वयेति। पुरादेवसर्गात्पूर्वं। त्वयाकर्णपुटान्महासुरौयौविनिर्मितौतौमधुकैटभाख्यौतवाज्ञयातयोःप्रवेशःकार्यइत्याज्ञया। प्रभंजनोवायुस्तदावेशवलाद्बलोद्धतौ आशुजलेप्रलयजलेऽभ्यवर्धतामित्यन्वयः ॥६०॥ चिक्रीडिषासंभवयाक्रीडितुमिच्छयासंभवउत्पत्तिर्यस्यास्तया ताभ्यांक्रीडेच्छयादत्तयातवाज्ञयाब्रह्मवरादवध्यौतौ। स्वयंभुवःमुखाद्बहिरागतान् वेदगणान् । देहधारिणःवेदावांतराभिमानिदेवान्नहर्षतां। तदाईश्वरोपित्वंहयशीर्षोऽभवः। एतदुक्तंहयशीर्षपंचरात्रेहयग्रीववचनं। 'उपासांचक्रिरेमह्यंवेदादेहभृतस्तदा। वेदाभ्यासरतस्तत्र घर्मबिंदुरजायत। सपद्मपत्रमासाद्य द्विधाभू

सहस्रवृत्तं तदहः स्वयंभुवो निशा च तन्मानमितं शरच्छतं ॥ त्वदाज्ञया स्वाननुभूय भोगानुपैति सोपि त्वरितस्त्वदंतिकं ॥ ५९ ॥ त्वया पुरा कर्णपुटाद्विनिर्मितौ महासुरौ तौ मधुकैटभाख्यौ ॥ प्रभंजनावेशवशात्त्वदाज्ञया बलोद्धतावाशु जलेऽभ्यवर्धतां ॥ ६० ॥ त्वदाज्ञया ब्रह्मवरादवध्यौ चिक्रीडिषासंभवया मुखोद्गतान् ॥ स्वयंभुवो वेदगणान्नहर्षतां तदाभवस्त्वं हयशीर्ष ईश्वरः ॥ ६१ ॥ आहृत्य वेदानखिलान्प्रदाय स्वयंभुवे तौ च जघंथ दस्यू ॥ निष्पीड्य तावूरुतले कराभ्यां तन्मेदसैवाशु चकर्थ मेदिनीं ॥ ६२ ॥ एवं सुराणां च निसर्गजं बलं तथा सुराणां वरदानसंभवं ॥ वशे तवैतद्द्वयमप्यतो वयं निवेदयामः पितुरेव तेखिलम् ॥ ६३ ॥ ॥ ॥

तोयतत्तदा। रजस्तमोमयौतस्माज्जातौदिव्यौबलोत्कटौ। मधुकैटभनामानौमहाबलपराक्रमौ। ततस्तौममवेदान्वैजहर्तुःपापनिश्चयाविति। तथा। 'ततश्चाश्वशिरागत्वावेदानादायशाश्वतानि'ति। मूलेकर्णपुटादिति। मार्कंडेयेकर्णमलादिति। पंचरात्रेघर्मबिंदुरितित्रयाणामेकवाक्यतायां कर्णसंबंधमलरूपजलबिंदोर्जाताविस्यर्थः ॥ ६१ ॥ त्वमखिलान्वेदानाहृत्यस्वायंभुवेवेदान्प्रदाय। दस्यूतौमधुकैटभौजघंथहतवान्। हननप्रकारमेवविशदयति। ऊरुतलेप्रदेशेकराभ्यांनिष्पीडितावितितेनान्यदपिसिद्धमित्याहुः तदिति। तयोर्मेदसैवतन्नामकधातुविशेषेणमेदिनींभूमिमाशुचकर्थकृतवानसि ॥ ६२ ॥ एवंसुराणांनिसर्गजंस्वाभाविकंबलं। तथाऽसुराणांवरदानेनसंभवंउत्पत्तिर्यस्यतद्बलंइत्येतद्बलद्वयंतववशेयतोऽतःवयंपितुस्तेऽखिलंनिवेदयामः ॥ ६३ ॥ ॥ ॥ ॥

प्रकृतमूचुः इमाविति । नृपुप्रजातः स्ववीर्येणजहि तैरखिलैः सुरेश्वरैरितीरितेयतःजगतीपतिःप्रभुश्चातोरामोबभूव रामत्वेनावततार ॥ ६४ ॥ अवतरणमेवविशदयति । सइति । सरामःकश्यपस्यसकाशाददितिगर्भाज्जन्मयस्यतस्यविवस्वतःसूर्यस्यतंतौवंशेभवस्यजातस्यदशस्यंदननाम्निःदशरथस्यभूभृतःराज्ञःकौसल्यकानाम्निगृहेभार्यायामभूदाविर्भूतः । कथंभूतस्तदर्थिनापुत्रार्थिनाइष्टःयागेनपूजितः । दशरथंवैवस्वतमनुमित्याहुः । तदुक्तंवामनपुराणे । 'भविष्यदंतरेभूत्वामनुर्वैवस्वतोभवान् । तद्वंशेभवान्यंगरामोदाशरथिःस्वयं । पुनर्दशरथोभूत्वात्वमेवासिपितामम । मद्दत्तपिंडदानेनुमुक्तिस्तेभविताध्रुव'मिति । यदुत्तरकांडेपद्मपुराणवचनं । तद्वसु[illegible]वसाहचर्याद्विशेपरमित्यप्याहुः । पाद्मवचनंच । 'तस्याभूत्प्रथमंजन्ममनोःस्वायंभुवस्यच । रघूणामन्वयेपूर्वंराजादशरथोऽभूत् । द्वितीयेवसुदेवोभूद्वृष्णीनामन्वयेपुनरि'ति ॥६५॥ जातसृष्टिमाह । तदाज्ञयेति । तस्यभूम्नःरामस्यपुरैवकेचनपूर्वंकेचनपश्चादपिवानरेष्वथोनरेषुबभूविरे । रामेणैवकार्यसिद्धेर्देवानामवतरणंकिमर्थमित्यतआह ।उरुगुणस्यरामस्यनि

इमौ च रक्षोधिपती वरोद्धतौ जहि स्ववीर्येण नृपु प्रजातः ॥ इतीरिते तैरखिलैः सुरेश्वरैर्बभूव रामो जगतीपतिः प्रभुः ॥ ६४ ॥ स कश्यपस्यादितिगर्भजन्मनो विवस्वतस्तंतुभवस्य भूभृतः ॥ गृहे दशस्यंदननाम्निनोभूत्कौसल्यकानाम्नि तदर्थिनेष्टः ॥ ६५ ॥ तदाज्ञया देवगणा बभूविरे पुरैव पश्चादपि तस्य भूम्नः ॥ निषेवणायोरुगुणस्य वानरेष्वथो नरेष्वेव च पश्चिमोद्भवाः ॥ ६६ ॥ स देवतानां प्रथमो गुणाधिको बभूव नाम्ना हनुमान्प्रभंजनः ॥ स्वयंभुवः केसरिणो गृहे प्रभुर्बभूव वाली स्वत एव वासवः ॥ ६७ ॥ सुग्रीव आसीत्परमेष्ठितेजसा युतो रविः स्वात्मत एव जांबवान् ॥ य एव पूर्वं परमेष्ठिवक्षसस्त्वगुद्भवो धर्म इहास्यतोभवत् ॥ ६८ ॥ ॥ ॥

षेवणायेति । कुत्रपूर्वंकुत्रपश्चाज्जाताइत्याशंकायामाह । वानरेष्विति । नरेषुइत्यनुवर्ततेयेपश्चिमोद्भवास्तेनरेष्वेवेतितेनवानरेषुपूर्वोद्भवाइत्यर्थात्सिद्धं ॥६६॥ केकुत्रजाताइत्यतआह । सइति । देवानांप्रथमआद्यःगुणाधिकःप्रभुःसःप्रभंजनोवायुः केसरिणःमरुत्प्रवरावतारभूतकपेर्गृहेभार्यायामंजनायां ।स्वस्माद्वायोरेवसंभवोयस्यसःहनुमानितिनाम्नाबभूव । अंजनाप्सराइत्युक्तंसंग्रहरामायणे । 'अंजनात्वेनसंजातामंजुलापुंजकस्थली'ति । स्वतएवस्वस्मादेववासवःवालीबभूव॥६७॥ रविःपरमेष्ठिनःब्रह्मणस्तेजसावेशेनयुतःस्वात्मतःस्वस्मादेवसुग्रीवआसीत् । जांबवानासीत् । अत्रापिपरमेष्ठितेजसायुतइत्येतदन्वेतव्यमित्याहुः । जांबवान्पूर्वंकःकस्मात्कुत्रजातइत्यतआह । यएवेति । यःपूर्वंपरमेष्ठिवक्षसस्त्वगुद्भवःधर्मःसइहजांबवदवतारे आस्यतोमुखतोऽभवत् ॥ ६८ ॥ ॥ ॥ ॥

उक्तमेवार्थंविवरणपूर्वकमाह । यइति । यःसूर्यात्संज्ञायांपुनर्जातः ब्रह्मणोजातत्वात्पुनरित्युक्तंनाम्नायमः । दक्षिणदिक्पालकआसीत् । सजांववान्देवताकार्यदर्शिनास्वयंभुवामुखतःपुरैवसृष्टः ॥ ६९ ॥ ब्रह्मोद्भवउतानंतरमस्यब्रह्मणःसूनोरत्रेरभूत्सः सोमएवांगदोजातः । बृहस्पतिस्तारःजातः । उतशक्रस्यभार्यैवशचीताराबभूव ॥ ७०॥ तयोःपूर्वोत्पत्तिकथनपूर्वकमिदानींतनोत्पत्तिमाह । बृहस्पतिरिति । ब्रह्मसुतोपिबृहस्पतिःब्रह्मोद्भवस्यांगिरसऋषेःसुतोऽभवत् । ब्रह्मसुतत्वमेतस्यकथमित्यतआह । पूर्वमिति । पूर्वंशच्यासहैवब्रह्ममनसोभिजातःअतस्तत्सुतइतिभावः । मरीचिजःकश्यपस्तस्यपुलोम्नःपुत्रीजाता ॥ ७१ ॥ सएवदेवगुरुर्बृहस्पतिःस्वसंभवः । स्वस्मादेवसंभवोयस्यसःशच्यासहवानरोभूत् । वरुणःसुषेणअभूत् । ताविश्विनौमैंदश्चविविदश्चबभूवतुः ॥ ७२ ॥ तयोःपूर्वजन्मकथनपूर्वकंविशेषमाह । ब्रह्मेति । ब्रह्मोद्भवौपुनरेवसूर्याद्बभूवतुः । तत्रतयोर्मध्येकनीयसःवरदानतऐंद्रआवेशअभूत् । ततआवेशात्कारणात्मैंदाद्विविदोवलवान्हि ॥ ७३ ॥ कमलोद्भवोब्रह्मातस्मादुत्थःअग्निःनीलअसीत् । कामादतारंतत्पूर्वोत्पत्तिकथनपूर्वकमाह । कामइत्यादिना । कमलोद्भवोत्थइत्येतदावर्तनीयं । कमलोद्भवोत्थःकामःपुनःश्रीरमणात्कृष्णाद्रमायांरुक्मिण्यांप्रद्युम्ननामाभवत् । एवमीशात्रुद्रात्सःकामःस्कंदतामाप । सःकामश्चक्रतां चक्राभिमानित्वंचक्रशब्दवाच्यत्वमाप ॥ ७४ ॥ चक्राभिमानिप्रसंगादायुधाभिमानिनआह । पूर्वमिति । तमस्थितातमोभिमानिनीदुर्गापूर्वंहरेश्चक्रमभूत् । चक्राभिमानिनीचक्रनाम्नीचाभूत् । एवंसर्वत्रज्ञेयं । यांश्रीरितिवदंतिसासत्वात्मिकाशंखमभवत् । अथोरजस्थारजोभिमानिनीभूर्नामिकाहरेःपद्ममभूद्धि ॥ ७५ ॥

**य एव सूर्यात्पुनरेव संज्ञया नाम्ना यमो दक्षिणदिक्प आसीत् ॥ स जांबवान्दैवतकार्यदर्शिना पुरैव सृष्टो मुखतःस्वयंभुवा ॥ ६९ ॥ ब्रह्मोद्भवः सोम उतास्य सूनोरत्रेरभूत्सोंगद एव जातः ॥ बृहस्पतिस्तार उतो शची च शक्रस्य भार्यैव बभूव तारा ॥ ७० ॥ बृहस्पतिर्ब्रह्मसुतोपि पूर्वं सहैव शच्या मनसोभिजातः ॥ ब्रह्मोद्भवस्यांगिरसः सुतोभून्मरीचजस्यैव शची पुलोम्नः ॥ ७१ ॥ स एव शच्या सह वानरोभूत्स्वयंभुवो देवगुरुर्बृहस्पतिः ॥ अभूत्सुषेणो वरुणोऽश्विनौ च बभूवतुस्तौ विविदश्च मैंदः ॥ ७२ ॥ ब्रह्मोद्भवौ तौ पुनरेव सूर्याद्बभूवतुस्तत्र कनीयसस्तु ॥ आवेश ऐंद्रो वरदानतोभूत्ततो बलीयान्विविदो हि मैंदात् ॥ ७३ ॥ नीलोग्निरासीत्कमलोद्भवोत्थः कामः पुनः श्रीरमणाद्रमायां ॥ प्रद्युम्ननामाभवदेवमीशात्स स्कंदतामाप स चक्रतां च ॥ ७४ ॥ पूर्वं हरेश्चक्रमभूद्धि दुर्गा तमस्थिता श्रीरिति यां वदंती ॥ सत्वात्मिका शंखमथो रजस्था भूनामिका पद्ममभूद्धरेर्हि ॥ ७५ ॥**

बलसंविदात्माबलज्ञानात्मावायुःगदाभूत् । शार्ङ्गश्चवायुरभूत् । याविद्येतिविद्याभिमानिनीतिप्रसिद्धायारमासैवखड्गःखड्गशब्दवाच्यातदभिमानिनीतिच । यद्वा विद्यासरस्वतीशार्ङ्गश्च रमाखड्गःदुर्गास्वरूपिणीसैवरमाचर्माभूत् । पंचात्मकःप्राणोपानव्यानोदानसमानात्मकःमारुतःवायुर्बाणः ।। ७६ ।। एवंपूर्वोक्तप्रकारेणपुरातनेषुअभिमानिषुस्थितेषुएवकामोवराद्यत्वंतच्छब्दवाच्यत्वंतदभिमानित्वंचाप । ब्रह्मोद्भवःसोनिरुद्धस्ततत्सूनुतांतस्यकृष्णपुत्रस्यप्रद्युम्नस्यसूनुतामाप । पुमात्मापुरुषजीवाभिमानिअनिरुद्धःशंखतनुः । शंखाभिमानीशंखनामाचजातः ।। ७७ ।। तावेवप्रद्युम्नानिरुद्धावेवनाम्नाभरतइतिनाम्नाशत्रुघ्नइतिनामतोनुजातौ । सःशेषःरघूत्तमादनुअनंतरं पूर्वंभरतशत्रुघ्नाभ्यांपूर्वंसुमित्रातनयःलक्ष्मणःबभूव । लक्ष्मणस्यभरतोत्तमत्वमुक्तंसंग्रहे । 'सीतयालक्ष्मणस्यापिवंदेचरणावसावि'ति । तथोत्तरकांडे । 'शत्रुघ्नःप्रांजलिःप्रोचेप्रसीदपुरुषोत्तम । आर्योमेमध्यमोधन्यस्त्वच्छुश्रूषांवनेकरोत् । भरतेनममार्येणह्यविजीवितिकिंकरे । चतुर्दशसमास्तसंवत्सरोऽत्यैभूमिशायिना । ब्रह्मघ्नंलवणंहत्वात्वत्प्रसादेनकेवलं ।

**गदा तु वायुर्बलसंविदात्मा शार्ङ्गश्च विद्येति रमैव खड्गः ॥ दुर्गात्मिका सैव च चर्मनाम्नी पंचात्मको मारुत एव बाणः ॥ ७६ ॥ एवं स्थितेष्वेव पुरातनेषु वराद्यर्थांगत्वमवाप कामः ॥ तत्सूनुतामाप च सोनिरुद्धो ब्रह्मोद्भवः शंखतनुः पुमात्मा ॥ ७७ ॥ तावेव जातौ भरतश्च नाम्ना शत्रुघ्न इत्येव च रामतोनु ॥ पूर्वं सुमित्रातनयश्च शेषः स लक्ष्मणो नाम रघूत्तमादनु ॥ ७८ ॥ कौसल्यकापुत्र उरुक्रमोसावेकस्तथैको भरतस्य मातुः ॥ उभौ सुमित्रातनयौ नृपस्य चत्वार एते ह्यमरोत्तमाः सुताः ॥ ७९ ॥**

सार्धाःशत्रुघ्नतास्यान्मेप्रोच्येतिप्रणनामस'इति । तथार्षेलंकाकांडे । 'ततोलक्ष्मणमासाद्यवैदेहीचपरंतप । अभ्यवंदतसुप्रीताभरतोनामचात्रवीदि'ति ।केचित्पूर्वंयःशेषःसःलक्ष्मणःसन् । रघूत्तमादनुसुमित्रातनयोबभूव तदुक्तंआर्षेबालकांडे । 'भरतोनामकैकेय्यांजातःसत्यपराक्रमः । अथलक्ष्मणशत्रुघ्नौसुमित्रासुषुवेयमावि'तिवचनादित्याहुःकचित्सुषुवेशुभावितिपाठः ॥ ७८ ॥ सामान्यतश्चतुर्णामुत्पत्तिमुक्त्वामातृविवेकमाह । कौसल्यकापुत्रइति । असौउरुक्रमःरामःएकःकौसल्यापुत्रः । तथाभरतस्यमातुःकैकेय्याएकोभरतइति । सुमित्रातनयौउभौलक्ष्मणशत्रुघ्नौसुतौ । मातृविवेकएवामुक्तः पितर्यपिकश्चनविशेषः किमस्तीत्यतःनेत्याह । नृपस्येति । एतेअमरोत्तमाःदेवोत्तमाःनृपस्यचत्वारःसुताः ॥ ७९ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

चतुर्मूर्तिर्हरिरेवजातइति । 'दुष्टानांनिग्रहार्थाय चतुर्मूर्तिर्जनार्दनः । जातोरघुकुलेराजन्पुत्रोदशरथस्यतु । अंशेनवासुदेवस्य जातोरामोमहायशाः । संकर्षणस्यचांशेनलक्ष्मणःपरवीरहा । प्रद्युम्नस्यतथांशेनभरतोधर्मवत्सलः । अनिरुद्धस्य चांशेनशत्रुघ्नस्तुमहाबलः' । इत्यनेनचतुर्मूर्तिर्हरीरामादिर्जातइतिविष्णुधर्मोत्तरोक्तेरभिप्रायमाह संकर्षणेति । तेषुलक्ष्मणभरतशत्रुघ्नेषुआवेशमादायतदुक्तिर्घटतइतिभावः । आवेशप्रसंगादनुक्तमावेशमाह । इंद्रइति । इंद्रअंगदेआविष्टःततःइंद्रावेशात्सोंगदःशश्वन्नितांतं बलीबभूव ॥ ८० ॥ आवेशप्रसंगादेकोक्त्याविशेषावेशिनआह । यइति येन्येसहस्रशःबलाधिकाःधर्मप्रधानाःगुणप्रधानाःकृतवीर्यजाद्याःसहस्रार्जुनाद्याःसंति । तेसर्वेहरेःसंनिधिभावःसंनिधानंतेनयुक्ताः ॥ ८१ ॥ रमावतारमाह । स्वयमिति । अनूपमाअसदृशायारमासाविदेहराजस्यजनकस्ययज्ञभूमौसीरतएवरामार्थंसीतेतिजाता । ततःसासीतातस्यैव

**संकर्षणाद्यैस्त्रिभिरेव रूपैराविष्टआसीत्त्रिषु तेषु विष्णुः ॥ इंद्रोंगदे चैव ततोंगदो हि बली नितांतं स बभूव शश्वत् ॥ ८० ॥ येन्ये च भूपाः कृतवीर्यजाद्या बलाधिकाः संति सहस्रशोपि ॥ सर्वे हरेः सन्निधिभावयुक्ताः धर्मप्रधानाश्च गुणप्रधानाः ॥ ८१ ॥ स्वयं रमा सीरत एव जाता सीतेति रामार्थमनूपमा या ॥ विदेहराजस्य हि यज्ञभूमौ सुतेति तस्यैव ततस्तु साभूत् ॥ ८२ ॥ इत्यादिकल्पोत्थित एष सर्गो मया समस्तागमनिर्णयेन ॥ महानुसर्गः कथितोत्र पूर्वो यो यो गुणैर्नित्यमसौ वरो हि ॥ ८३ ॥ पाश्चात्यकल्पेष्वपि सर्गभेदाः श्रुतौ पुराणेष्वपि चान्यथोक्ताः ॥ नोत्कर्षहेतुः प्रथमत्वमेषु विशेषवाक्यैरवगम्यते तत् ॥ ८४ ॥ इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये सर्गानुसर्गप्रादुर्भावनिर्णयो नाम तृतीयोध्यायः ॥ ३ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥**

जनकस्यैवसुतेतिप्रसिद्धाभूत् ॥ ८२ ॥ उपसंहारव्याजेनेयंसृष्टिस्तारतम्यज्ञापिकेत्याह । इत्यादीति । आदिकल्पेउत्थितःजातःसमस्तागमानांनिर्णयेननिर्णयहेतुनानिर्णयकरणार्थमितिभावः। निर्णयात्मकइतिक्वचित् । तत्रनचैकेनछंदोभंगः निर्णयात्मकःनिर्णयजनकः । सर्गस्तत्वसर्गःब्रह्मांडांतर्गतःअनुसर्गोंडांतःसृष्ट्यासहितः। मयाइत्येवंकथितःअत्रतत्वसृष्टिपाद्मसृष्ट्योर्योयःपूर्वःपूर्वोत्पन्नः । असावसौगुणैः नित्यंवरोहि । अंडांतसर्गोनुसर्गइत्यत्र'महदाद्यंडएवांतसर्गाडब्रह्मणस्तुयः । अनुसर्गइतिप्रोक्त'इति वचनंचात्रमानं ॥८३ ॥ पूर्वश्चपश्चादित्यादिनायदुक्तंतदप्युपसंहरति । पाश्चात्येति । पाश्चात्यकल्पेषुपाद्मकल्पोतिरिक्तावांतरकल्पेषु । श्रुतौश्रुतिपुराणष्वापसर्गभेदाः।

अन्यथाआदिकल्पोदितत्रिसर्गवैपरीत्येनउक्ताःकथिताः । एषुपाश्चात्यकल्पेषुप्रथमत्वंआदौजननमुत्कर्षहेतुरुत्तमत्वकारणं नन्वेवंचेन्निर्णयःकथमित्यतआह । विशेषेति । विशेषवाक्यैःविशेषप्रमाणैरेतत्प्रमेयंतारतम्यादि । अवगम्यतेज्ञायते ॥ ८४ ॥ ॥ यंगंगाजमदग्निजान्वयभवाद्विद्वद्धिरण्याभिधात्पुत्रंप्रापजनार्दनंशमदमःस्वाध्याय संपद्युतात् ॥ पूर्तितस्यकृतौसतांसुखकरोध्यायस्तृतीयःशुभःश्रीमद्भारतभावनिर्णयपदार्थोद्दीपिकायामगात् ॥ ३ ॥ ॥ इति श्रीमन्महाभारततात्पर्यनिर्णयस्य टीकायां जनार्दनभट्टविरचितायां पदार्थदीपिकायां तृतीयोध्यायः ॥ ३ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥

श्रीगुरुभ्योनमः ॐ नारायणंपूर्णगुणैकदेहंजन्मादिसज्ज्ञानविमुक्तिहेतुं ॥ विश्वस्यभक्तेतरसौख्यदुःखसद्धेतुमीशंवितनंनमामि ॥ १ ॥ नमामिनीलांबुदकांतिकांतंव्यास निरस्ताखिलदोषपुंजं ॥ ज्ञानादिदंब्रह्मशिवादिकेभ्यःसत्तर्कमुद्राभययुक्तहस्तं ॥ २॥ जयतिश्रीमदानंदतीर्थमार्तंडचंडगौः ॥ यत्संपर्कःसतांमोहशर्वरींसमदीदलत् ॥३॥ गुरून्नत्वाभारतार्थनिर्णयस्यप्रदीपिका ॥ वेदांगतीर्थसद्व्याख्यामाश्रित्यक्रियतेमया ॥ ४ ॥ महाभारततात्पर्यनिर्णयस्यप्रदीपिकां ॥ कर्तुमुद्योगिनःसंतःक्षाम्यंतुमम दुर्नयं ॥ ५॥ क्वश्रीमध्वगुरोरुक्तिःक्वतदर्थेमदाग्रहः ॥ खद्योतरोचिषाकोपिविभातंकर्तुमीहते ॥ ६ ॥ श्रीमद्भगवानाचार्यःअवतीर्णस्यहरेर्भक्ताभक्तज्ञानमोहदामद्भुत लीलांसमासतोवक्तुंबालकांडकथामाह । अथेत्यादिना । अथावताराऽनंतरं चतुराःकुशलाःकुमाराःअभ्यवर्धन्अभ्यवर्धंत वृधुवृद्धावित्यस्यचक्षिङ्धातोःङित्करणादनुदा त्तप्रयुक्तात्मनेपदस्यानित्यत्वात्‘स्फायन्निर्मोकसंधी’तिप्रयोगाच्चोभयपदत्वेपियोयोत्रपरस्मैपदप्रयोगःसनरामगामिफलंकिंत्वन्यगामीतिसूचयति। ननु शश्वदेकप्रकारस्यरा

ॐ अथाभ्यवर्धंश्चतुराः कुमारा नृपस्य गेहे पुरुषोत्तमाद्याः ॥ नित्यप्रवृद्धस्य च तस्य वृद्धिरपेक्ष्यलोकस्य हि मंद दृष्टिं ॥ १ ॥ निरीक्ष्य नित्यं चतुरः कुमारान् पिता मुदं संततमाप चोच्चं ॥ विशेषतो राममुखेंदुबिंबमवेक्ष्य राजा कृतकृत्य आसीत् ॥ २ ॥ तन्मातरः पौरजना आमात्या अंतःपुरा वैषयिकाश्च सर्वे ॥ अवेक्षमाणाः परमं पुमांसं स्वानंदतृप्ता इव संबभूवुः ॥ ३ ॥ ततः सुवंशे शशिनः प्रसूतो गाधीति शक्रस्तनुजोस्य चासीत् ॥ वरेण विप्रत्व मवाप योसौ विश्वस्य मित्रं स इहाजगाम ॥ ४॥ तेनार्थितो यज्ञरिरक्षयैव कृच्छ्रेण पित्रास्य भयाद्विसृष्टः ॥ जगाम रामः सह लक्ष्मणेन सिद्धाश्रमं सिद्धजनाभिवंद्यः ॥ ५ ॥

मस्यवृद्धिःकथमुक्तेत्यतआह नित्येति तस्यरामस्यवृ द्धिःलोकस्यमंददृष्टिंअल्पज्ञानमपेक्ष्यउक्तेतिशेषः । मंदेत्यस्यभाषितपुंस्त्वाध्द्रस्वता ॥१॥ पितादशरथःचतुरःचतुःसंख्याकान्नित्यंनिरीक्ष्य संततमविच्छिन्नमित्यर्थः । मुदं उच्चंयथास्यात्तथाआप कृतंकृत्यंभगवत्प्रीतिकृद्धर्मोयेनसतथा ॥ २ ॥ तेषांरामादीनांमातरःपौरजनाःपुरसंबंधिनःअंतःपुराःअंतःपुरेवर्तमानाःस्त्र्यादयःविषयेभवाःवैषयि काःराष्ट्रस्थाःस्वानंदेनस्वरूपानंदेनतृप्ताइवमुक्ताइवेत्यर्थः ॥ ३ ॥ शशिनःसुवंशेयःशक्रःगाधीतिगाधिनामाराजासन्प्रसूतःजज्ञे । अस्यगाधिराजस्ययःतनुजःपुत्रःआसी त्योसौगाधिनस्तनुजःक्षत्रत्वेपिवरेणब्रह्मवरेण ‘सतुवव्रेवरंराजन्स्यामहंब्राह्मणस्त्विति । तथेतिचाब्रवीद्ब्रह्मासर्वलोकपितामह’इतिगदापर्ववचनात् । विप्रत्वंअवाप वि श्वस्यमित्रंविश्वमित्रभूतोविश्वामित्रः ततःश्रीरामप्रादुर्भावानंतरं इहदशरथगृहंप्रत्याजगामेत्यन्वयः ॥ ४ ॥ तेनविश्वामित्रेणयज्ञस्यस्वयज्ञस्यरिरक्षारक्षितुमिच्छातयादश रथःअर्थितोयाचितः अस्यविश्वामित्रस्यभयात्क्षोभभयात् अस्यरामस्यपित्राकृच्छ्रेणरामवियोगोभवतीतिकष्टेनविसृष्टःप्रेषितोरामः सिद्धानांयोगिनाम् ॥ ५ ॥

अन्यथा आदिकल्पोदितत्रिसर्गवैपरीत्येन उक्ताः कथिताः । एषु पाश्चात्यकल्पेषु प्रथमत्वं आदौ जननमुत्कर्षहेतुरुत्तमत्वकारणं नन्वेवं चेन्निर्णयः कथमित्यत आह । विशेषेति । विशेषवाक्यैः विशेषप्रमाणैरेतत्प्रमेयं तारतम्यादि । अवगम्यते ज्ञायते ॥ ८४ ॥ ॥ यं गंगाजमदग्निजान्वयभवाद्विद्विरण्याभिधात्पुत्रं प्रापजनार्दनं शमदमः स्वाध्यायसंपद्युतात् ॥ पूर्तेतस्य कृतौ सतां सुखकरोध्यायस्तृतीयः शुभः श्रीमद्भारतभावनिर्णयपदार्थो दीपिकायामगात् ॥ ३ ॥ ॥ इति श्रीमन्महाभारततात्पर्यनिर्णयस्य टीकायां जनार्दनभट्टविरचितायां पदार्थदीपिकायां तृतीयोध्यायः ॥ ३ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥



श्रीगुरुभ्योनमः ॐ नारायणंपूर्णगुणैकदेहंजन्मादिसज्ज्ञानविमुक्तिहेतुं ॥ विश्वस्यभक्तेतरसौख्यदुःखसद्धेतुमीशंविततंनमामि ॥ १ ॥ नमामिनीलांबुदकांतिकांतंव्यास निरस्ताखिलदोषपुंजं ॥ ज्ञानादिदंब्रह्मशिवादिकेभ्यःसत्तर्कमुद्राभययुक्तहस्तं ॥ २॥ जयतिश्रीमदानंदतीर्थमार्तंडचंडगौः ॥ यत्संपर्कःसतांमोहशर्वरीसमदीदलत् ॥३॥ गुरून्नत्वाभारतार्थनिर्णयस्यप्रदीपिका ॥ वेदांगतीर्थसद्व्याख्यामाश्रित्यक्रियतेमया ॥ ४ ॥ महाभारततात्पर्यनिर्णयस्यप्रदीपिकां ॥ कर्तुमुद्योगिनःसंतःक्षाम्यंतुमम दुर्नयं ॥ ५॥ क्वश्रीमध्वगुरोरुक्तिःक्वतदर्थेमदाग्रहः ॥ खद्योतरोचिषाकोपिविभातंकर्तुमीहते ॥ ६ ॥ श्रीमद्भगवानाचार्यःअवतीर्णस्यहरेर्भक्ताभक्तज्ञानमोहदामद्भुत लीलांसमासतोवक्तुंबालकांडकथामाह । अथेत्यादिना । अथावतारानंतरं चतुराःकुशलाःकुमाराःअभ्यवर्धन्अभ्यवर्धंत वृधुवृद्धावित्यस्यचक्षिङ्धातोःङित्करणादनुदा त्तप्रयुक्तात्मनेपदस्यानित्यत्वात्'स्फायन्निर्मोकसंधौ' तिप्रयोगाच्चोभयपदत्वेपियोत्रपरस्मैपदप्रयोगःसनरामगामिफलंकिंत्वन्यगामीतिसूचयति। ननु शश्वदेकप्रकारस्यरा

ॐ अथाभ्यवर्धंश्चतुराः कुमारा नृपस्य गेहे पुरुषोत्तमाद्याः ॥ नित्यप्रवृद्धस्य च तस्य वृद्धिरपेक्ष्यलोकस्य हि मंद दृष्टिं ॥ १ ॥ निरीक्ष्य नित्यं चतुरः कुमारान् पिता मुदं संततमाप चोच्चं ॥ विशेषतो राममुखेंदुबिंबमवेक्ष्य राजा कृतकृत्य आसीत् ॥ २ ॥ तन्मातरः पौरजना आमात्या अंतःपुरा वैषयिकाश्च सर्वे ॥ अवेक्षमाणाः परमं पुमांसं स्वानंदतृप्ता इव संबभूवुः ॥ ३ ॥ ततः सुवंशे शशिनः प्रसूतो गाधीति शक्रस्तनुजोस्य चासीत् ॥ वरेण विप्रत्व मवाप योसौ विश्वस्य मित्रं स इहाजगाम ॥ ४॥ तेनार्थितो यज्ञरिरक्षयैव कृच्छ्रेण पित्रास्य भयाद्विसृष्टः ॥ जगाम रामः सह लक्ष्मणेन सिद्धाश्रमं सिद्धजनाभिवंद्यः ॥ ५ ॥

मस्यवृद्धिःकथमुक्तेत्यतआह नित्येति तस्यरामस्यवृ द्धिःलोकस्यमंददृष्टिंअल्पज्ञानमपेक्ष्यउक्तेतिशेषः । मंदेत्यस्यभाषितपुंस्त्वाध्द्रस्वता ॥१॥ पितादशरथःचतुरःचतुःसंख्याकान्नित्यंनिरीक्ष्य संततमविच्छिन्नमित्यर्थः । मुदं उच्चंयथास्यात्तथाआप कृतकृत्यंभगवत्प्रीतिकृद्धर्मोयेनसतथा ॥ २ ॥ तेषांरामादीनांमातरःपौरजनाःपुरसंबंधिनःअंतःपुराःअंतःपुरेवर्तमानाःस्त्र्यादयःविषयेभवाःवैषयि काःराष्ट्रस्थाःस्वानंदेनस्वरूपानंदेनतृप्ताइवमुक्ताइवेत्यर्थः ॥ ३ ॥ शशिनःसुवंशेयःशक्रःगाधीतिगाधिनामाराजासन्प्रसूतःजज्ञे । अस्यगाधिराजस्ययःतनुजःपुत्रःआसी त्योसौगाधिनस्तनुजःक्षत्रत्वेपिवरेणब्रह्मवरेण 'सतुवव्रेवरंराजन्स्यामहंब्राह्मणस्त्विति । तथेतिचाब्रवीद्ब्रह्मासर्वलोकपितामह'इतिगदापर्ववचनात् । विप्रत्वंअवाप वि श्वस्यमित्रंविश्वमित्रभूतोविश्वामित्रः ततःश्रीरामप्रादुर्भावानंतरं इहदशरथगृहंप्रत्याजगामेत्यन्वयः ॥ ४ ॥ तेनविश्वामित्रेणयज्ञस्यस्वयज्ञस्यरिरक्षारक्षितुमिच्छातयादश रथःअर्थितोयाचितः अस्यविश्वामित्रस्यभयात्क्षोभभयात् अस्यरामस्यपित्राकृच्छ्रेणरामवियोगोभवतीतिकष्टेनविसृष्टःप्रेषितोरामः सिद्धानांयोगिनाम् ॥ ५ ॥

सलक्ष्मणःसरामःऋषेःविश्वामित्रस्यकेवलमनुग्रहार्थंमुनितःविश्वामित्रात्अस्त्रंअस्त्राणिअवाप । अस्त्रमितिजातावेकवचनं अस्त्ररूपाःमंत्रदेवताःब्रह्ममुखाःप्रकटाःप्रत्यक्षीभूताःसंततंरामंसमेत्यववंदिरे ॥६॥ ननु रामःजुगुप्सितंस्त्रीवधरूपंकर्मकुतश्चकारेत्यतआह । वरादिति । नअन्यःअनन्यस्तस्माद्रामादनन्यःअभिन्नःरामादनन्योरामएवेत्यर्थः । तस्यैववध्यांवधार्हां यद्वा अन्यैर्वध्याअन्यवध्यानअन्यवध्याअनन्यवध्या । तस्माद्रामादनन्यवध्यातांतथा तदन्येनावध्यामितिभावः । तदितिभिन्नंवापदं लोकोपद्रवत्वेनप्रसिद्धांताटकामिति । ईशानस्यशिवस्यगिरावाक्येनवरेणेत्यर्थः । विमृत्युंअवध्यंसुबाहुंसुबाहुनामकंराक्षसंनिहत्यमुनेर्यज्ञंररक्ष ॥७॥ विरिंचस्यवचोमानयानोरामःशरेणमारीचंअर्णवेआक्षिपत्प्रास्यत् मानयानइत्युक्तंस्पष्टयति । अवध्यतेति तेनविरिंचेनतस्यमारीचस्यरजन्यांरात्र्यांचरंतितेतथातान्राक्षसान् ॥८॥ तदाविश्वामित्रयज्ञसमाप्तिसमये विदेहेनजनकेन सर्वशःसर्वासुदिक्षुविदिक्षुचसुतायाःसीतायाःस्वयंवरोविघोषितःश्रावितइत्यर्थः । दूतैरितिशेषः भेरीताडनेनवा स्वनगरेभेरीताडनेकृतेसातितत्रत्याः

अनुग्रहार्थं स ऋषेरवाप सलक्ष्मणोस्त्रं मुनितो हि केवलं ॥ ववंदिरे ब्रह्ममुखाः सुरेशाः तमस्त्ररूपाः प्रकटाः समेत्य ॥ ६ ॥ अथो जघानाशु शरेण ताटकां वराद्विधातुस्तदनन्यवध्यां ॥ ररक्ष यज्ञं च मुनेर्निहत्य सुबाहुमीशानागिरा विमृत्युं ॥ ७ ॥ शरेण मारीचमथार्णवे क्षिपद्वचो विरिंचस्य तु मानयानः ॥ अवध्यता तेन हि तस्य दत्ता जघान चान्यान्रजनीचरानथ ॥ ८ ॥ तदा विदेहेन सुतास्वयंवरो विघोषितो दिक्षु विदिक्षु सर्वशः ॥ निधार्य तद्गाधिसुतानुयायी ययौ विदेहाननुजानुयातः ॥ ९ ॥ अथो अहल्यां पतिनाभिशप्तां प्रधर्षणादिंद्रकृताच्छिलीकृतां ॥ स्वदर्शनान्मानुषतामुपेतां सुयोजयामास स गौतमेन ॥ १० ॥

अन्यदेशभूपानांगूढपुरुषाःस्वस्वभूपेभ्योवार्तांप्रेषयंतीतिभावः । तद्विघोषणंनिधार्यअवधार्य । गाधिसुतंविश्वामित्रंअनुयात्यनुगच्छतीतिगाधिसुतानुयायी । अनुजेनलक्ष्मणेनअनुयातः । अनुगतोरामःविदेहान्विदेहविषयान्ययौ ॥ ९ ॥ अथोआश्रमान्निर्गमनानंतरं सरामःइंद्रेणकृतात्प्रधर्षणात्संपर्कात्कारणात् पतिनाभिशप्तांगौतमेनशप्तांशिलीकृतांपाषाणत्वंप्रापितां स्वदर्शनात्मानुषतांमनुष्यस्वरूपतांउपेतांप्राप्तांअहल्यांअहल्यानाम्नींगौतमपत्नींगौतमेनसुयोजयामास । पतिनाभिशप्तामित्यत्र 'सर्वोविधयःछंदसिविकल्प्यंत' इत्यनेनसमासाभावेपिघिसंज्ञा इदमेवोक्तं 'पतिःसमासएवे'त्यत्रपदमंजरीकारेण अथकथनं 'नष्टेमृतेप्रव्रजितेक्लीबेथपतितेपतौ । पंचस्वापत्सुनारीणांपतिरन्योविधीयते' । छंदोवत्ऋषयःकुर्वंतीतिकेचित्पतिशब्दस्यसंबंधिशब्दत्वात्तेनसांधिं प्रापितेनअहल्यापदेनयोजनीयं पतिशब्दस्यषष्ठीयुक्तत्वात् । 'षष्ठीयुक्तःछंदसिवे' तिवाघिसंज्ञेत्याहुः । अत्रेदंचिंत्यं 'षष्ठीयुक्तःछंदसिवे' तिसूत्रेश्रूयमाणेषष्ठीयोगएवघिसंज्ञात

पितं काशिकाकारेण‘षष्ठीयुक्तश्छंदसिवे’तिसूत्रे‘मयापत्याजरदाष्टिर्यथास’ इतिप्रत्युदाहरणं अन्यथातत्रापिअर्थद्वाराषष्ठीयोगस्यविद्यमानत्वान्मयापत्येतिप्रत्युदाहरणम संगतंस्यात् । छंदस्त्वंचास्यग्रंथस्य‘इतिहासपुराणःपंचमोवेदानांवेद’इतिवेदत्वेनपरिगृहीतेतिहासपुराणाद्यशेषसदागमार्थनिर्णायकत्वेनछंदस्तुल्यत्वात्सिद्धं ॥ १० ॥ ननु शिलीकृतांकिमर्थंयोजितवानित्यतआह । बलमिति । रामइत्यध्याहारः । सइत्यनुवर्ततेवा । स्वभक्तेरधिकं प्रायश्चित्तादधिकंबलंसामर्थ्यंमद्भक्तिःपुंसांप्रमादेनकृतमपराधंविना शयतीतिप्रकाशयन् अन्यस्मिन्भक्तिर्यस्याःसाअन्यभक्तानअन्यभक्ताअनन्यभक्तातांतथेति । नारीकरणत्वेहेतुगर्भविशेषणमेतत् । त्रिदशेषुदेवेषुअतुल्यमनुग्रहंप्रकाशयन्नि त्यनेनअन्योपिहेतुःसूचितः । सुरेशेति । सुरेशस्येंद्रस्याकांक्षयामत्संबंधाच्छिलीभूतायाःमानुषत्वंस्यादितिसुरेशेच्छाहेतुनाच देवानांमनोभीष्टकर्तृत्वात् देवेष्वतुल्यानुग्रहःप्रका शितः । नारींविधायअहल्यामितिशेषः । तयाअहल्यया ॥ ११ ॥ श्यामःश्यामवर्णश्चासाववदातोनिर्मलश्चतस्मिन् । ‘अवदातःसिते गौरे’इतियादवः । यद्वा श्यामेष्वव

बलं स्वभक्तेरधिकं प्रकाशयन्ननुग्रहं च त्रिदशेष्वतुल्यम् ॥ अनन्यभक्तां च सुरेशकांक्षया विधाय नारीं प्रययौ तया चितः ॥ ११ ॥ श्यामावदाते जगदेकसारे स्वनंतचंद्राधिककांतिकांते ॥ सहानुजे कार्मुकबाणपाणौ पुरीं प्रविष्टे ततु षुर्विदेहजाः ॥ १२ ॥ पपुर्नितांतं सरसाक्षिभृंगैर्वराननाब्जं पुरुषोत्तमस्य ॥ विदेहनारीनरवर्यसंघा यथा महापौ रुषिकास्तदंघ्रिं ॥ १३ ॥ तदा विदेहः प्रतिलभ्य रामं सहस्रनेत्रावरजं गविष्ठं ॥ समर्चयामास सहानुजं तं ऋषिं च साक्षाज्ज्वलनप्रकाशम् ॥ १४ ॥

दातःशुद्धइंद्रनीलमणिस्तद्वर्णइत्यर्थः । ‘दशदोषविनिर्मुक्तःश्यामइंद्रमणिः स्मृत’इत्यभिधानात् । जगतिएकसारेबलादिनामुख्यश्रेष्ठे शोभमानेभ्यःअनंतचंद्रेभ्यः अधिककांत्याकांतमनोहरे कार्मुकबाणौपाण्योर्य स्येतिव्यधिकरणबहुव्रीहिः ॥१२॥ विदेहाःविदेहनगरस्थाःतेचतेनारीनराश्चतेषुवर्याउत्तमाःमनुष्योत्तमाइत्यर्थः।तेषांसंघाःसरसैःस्नेहसहितैः। यद्वा बाह्यार्थविषयकमनोविका रोत्कर्षोरसः‘बाह्यार्थलंबनोयस्तुविकारोमानसोभवेत् । सभावःकथ्यतेसद्भिस्तस्योत्कर्षोरसःस्मृत’इत्यभिधानात् । अक्षिभृंगैःपुरुषस्यइमेपौरुषिकाःमहांतश्चतेपौरुषिकाश्चेतिवि ग्रहः। हरिभक्ताःतदंघ्रिंहरिचरणाब्जंसरसैःस्नेहसहितैःभृंगैःअब्जंयथातथापपुः सादरमवलोकितवंतइतिसंबंधः॥१३॥ तदापुरप्रवेशसमयेविदेहोजनकः गविष्ठमित्यलुक्गवि तिष्ठतीतिविग्रहः। भुव्यवतीर्णमित्यर्थः। सहानुजंसहस्रनेत्रस्येंद्रस्यावरजं वामनस्वरूपंतंरामंप्रतिलभ्यसमर्चयामास । पुत्रार्थंपयोव्रतादिनातोषितोवामनःस्वयंरामोभूदितिभावः। बलिःसहस्रनेत्रावरजंवामनमिवेत्यध्याहारेणदृष्टांतंवायोज्यं अत्रोपमालुक् साक्षात्केवलंज्वलनवदग्निवत्प्रकाशोयस्यसतथा । तंऋषिंचसहागतंविश्वामित्रंसमर्चयामास ॥१४॥

रूपेणनवावतारोयस्यसतथा तंअसदृशरूपमितियावत् । जामातरंमेने अवेत्अस्मैजनकाय ॥ १५ ॥ सजनकः एनंविश्वामित्रंअत्ररामार्थंकन्याप्रदानविषयेअथापिएवमपि पुरस्तात्पूर्वमेवमेमयासुताप्रदानाययथायादृशीप्रतिज्ञाकृता तथातादृशीप्रतिज्ञांशृणुष्वेत्याहेतिसंबंधः ॥ १६ ॥ वरयुधस्यावाप्तौधृतंतेनतथाचेतसाअंतःकरणेनतपश्चीर्णं सरुद्रःपि नाकिनंरुतेरुद्रंविनाअचाल्यंइदंपुरःस्थितंधनुः॥१७॥ वासवेनेंद्रेणसहितादेवादयःधनुश्चालयितुंनालंनसमर्थाः। नराःकुतः नसमर्थाइत्यर्थः। तर्हि तवकिंकराःकथंचालयंतीत्य तआह । तद्धरतइति । किंकराःमद्भृत्याःतस्यरुद्रस्यवरतःधनुश्चालनसामर्थ्यदानरूपवरतःसहएकत्रसंभूयअनसैवशकटेनैवअत्रमद्गृहेकृच्छ्रतःप्रयासेनकर्षंतिकर्षंति ॥१८॥ शंकराद्धनुराप्यनृणांवीर्यपरीक्षणेपराक्रमपरीक्षणार्थंधृतःस्थितः'धृङ्अवस्थाने'इतिधातुः। नतुदेवेनस्थापितइत्यर्थः। ल्यप्प्रत्ययानुपपत्तेः। अहंयःपुमानिदंधनुःपूरयेत्सज्जी

मेने च जामातरमात्मकन्यागुणोचितं रूपनवावतारं ॥ उवाच चास्मा ऋषिरुग्रतेजाः कुरुष्व जामातरमेनमाश्विति ॥ १५ ॥ स आह चैनं परमं वचस्ते करोमि नात्रास्ति विचारणा मे ॥ शृणुष्व मेथापि यथा प्रतिज्ञा सुताप्रदानाय कृता पुरस्तात् ॥१६॥ तपो मया चीर्णमुमापतेः पुरा वरायुधावाप्तिधृतेन चेतसा ॥ स मे ददौ दिव्यमिदं धनुस्तदा कथं चनाचाल्यमृते पिनाकिनं ॥ १७ ॥ न देवदैत्योरगदेवगायका अलं धनुश्चालयितुं सवासवाः ॥ कुतो नरास्तद्वरतो हि किंकराः सहानसैवात्र कृषंति कृच्छ्रतः ॥१८॥ अधार्यमेतद्धनुराप्य शंकरादहं नृणां वीर्यपरीक्षणे धृतः ॥ सुतार्थमेतां चकर प्रतिज्ञां ददामि कन्यां य इदं हि पूरयेत् ॥ १९ ॥ इतीरितां ये गिरमभ्यवेत्य दितेः सुता दानवयक्षराक्षसाः ॥ समेत्य भूपाश्च समीपमाशु प्रगृह्य तच्चालयितुं न शेकुः ॥ २० ॥ संस्विन्नगात्राः परिवृत्तनेत्रा दशाननाद्याः पतिता विमूर्छिताः ॥ तथापि मां धर्षयितुं न शेकुः सुताकृते ते वचनात्स्वयंभुवः ॥ २१ ॥

कुर्यात्तस्मैकन्यांददामीति एतांउक्तांप्रतिज्ञांसुतार्थंसुताप्रदानार्थंचकरकृतवानस्मि देवेनधृतःस्थापितोहंधनुःप्राप्य प्रतिज्ञांचकारेतिवा । चकरेति लिट्युत्तमपुरुषैकवचनं । 'णलुत्तमोवेति'णित्वाभावपक्षेवृद्ध्यभावः ॥ १९ ॥ गिरंप्रतिज्ञारूपांवाचंअभ्यवेत्यज्ञात्वा समीपं धनुःसमीपंएत्य तद्धनुःप्रगृह्यचालयितुंनशेकुःशक्तानबभूवुः ॥ २० ॥ तर्हि किमभूदित्यतआहसंस्विन्नेति । संस्विन्नानिस्वेदयुक्तानिगात्राणियेषांतेतथा । परिवृत्तनेत्राः । परिभ्रमणलोचनाः । दशआननानिमुखानियस्यसतथारावणः तथापिपतिताअपि तेदशाननाद्याःसुताकृतेस्वयंभुवःब्रह्मणोवचनाद्धररूपवाक्यात्मांधर्षयितुंनिग्रहणार्थंनशेकुःसमर्थानबभूवुः ॥ २१ ॥ ॥ ॥ ॥

वचनादित्युक्तंविवृणोति । पुरेति । प्रसादितःप्रसन्नीकृतःअब्जजोब्रह्माकश्चित्पुमान्तेतवकन्यकांबलान्नोपैतिनप्राप्नोति । तदिच्छुभिःकन्यार्थिभिःतेतवधर्षणानिग्रहोनच नस्यादितिवरमदात् ॥२२॥ ततःपतनानंतरं नष्टःपरिहृतःमदःगर्वोयेषांतेतथा । तेसर्वशःसर्वेपार्थिवाःभूपाःइतःस्वयंवरात् । ह्यस्तनेपूर्वदिवसे । यतोमेएतादृशीप्रतिज्ञात तःकारणातअयंरामःममम्मानसं ददामिकन्यांयइदंहिपूरयेदिति मनोभीष्टंपरिपूर्यपूर्णंकृत्वाकन्यांवृणोतुस्वीकरोतु प्राप्तकालेलोट् कन्यावरणंप्राप्तकालमित्यर्थः । मेमयाअ यमेवरामएवअर्थितः सीताप्रदानार्थमिष्टः ॥ २३ ॥ तथेति त्वदुक्तंकरिष्यतीतिमुनिनोक्तःसजनकःअनंतःशेषःतस्यभोगोदेहः तेनोपमंसदृशंधनुःतद्धनुःअपूरयत्आ रोपयामास ॥ २४ ॥ अनंतराधसाअनंताभीष्टसिद्धिमताराम्मेणविकृष्यमाणंतद्धनुःअभज्यतभग्नमभूत् । तद्धनुरमुष्यरामस्यतत्प्रसिद्धंबलंप्रसोढुंईशंसमर्थंकुतःकार

पुरा हि मेऽदात्प्रभुरब्जजो वरं प्रसादितो मे तपसा कथंचन ॥ बलान्न ते कश्चिदुपैति कन्यकां तदिच्छुभिस्तेन च धर्षणेति ॥ २२ ॥ ततस्तु ते नष्टमदा इतो गताः समस्तशो ह्यस्तन एव पार्थिवाः ॥ ततो ममायं परिपूर्य मानसं वृणोतु कन्याम‌यमेव मेऽर्थितः ॥ २३ ॥ तथेति चोक्तो मुनिना स किंकरैरनंतभोगोपममाश्वथानयत् ॥ समीक्ष्य तद्वामकरेण राघवः सलीलमुद्धृत्य ह सन्नपूरयत् ॥ २४ ॥ विकृष्यमाणं तदनंतराधसा परेण निःसीमबलेन लीलया ॥ अभज्य तामह्यममुष्य तद्बलं प्रसोढुमीशं कुत एव तद्भवेत् ॥ २५ ॥ स मध्यतस्तत्प्रविभज्य लीलया यथेक्षुदंडं शतमन्युकुंजरः ॥ विलोकयन्वक्त्रमृषेरवस्थितः सलक्ष्मणः पूर्णतनुर्यथा शशी ॥२६॥ तमब्जनेत्रं पृथुतुंगवक्षसं श्यामावदातं चलकुंडलोज्ज्वलं ॥ शशक्षतोत्थोपमचंदनोक्षितं ददर्श विद्युद्वसनं नृपात्मजा ॥ २७ ॥ अथो कराभ्यां प्रतिगृह्य मालामम्लानपद्मां जलजायताक्षी ॥ उपेत्य मंदं ललितैः पदैस्तां तदंस आसज्य च पार्श्वतोऽभवत् ॥ २८ ॥

णाद्भवेत् नभवेदित्यर्थः ॥ २५ ॥ शतमन्युःशतक्रतुःतस्यकुंजरःऐरावताख्योगजःइक्षुदंडंयथातथेत्यर्थः । 'क्रतौक्रोधेतथादैत्येमन्युशब्दःप्रवक्ष्यत' इत्यनेकार्थध्वनिप दमंजर्यां । ऋषेर्वक्त्रंमुखंविलोकयन् पूर्णतनुःषोडशकलापूर्णःशशीयथातथाअवस्थितः ॥ २६ ॥ पृथुविशालंउत्तुंगंउच्चंवक्षोयस्येतिविग्रहः । शशस्यमृगविशेषस्यक्षताच्छ स्त्रादिच्छेदात्उत्थस्यउत्पन्नस्यरक्तस्येतियावत् । 'रुधिरेसृग्लोहितास्त्ररक्तक्षतजशोणितामि' त्यभिधानात् । उपमेनसदृशेनचंदनेनउक्षितंचर्चितं ॥ २७ ॥ अम्लानानि अशुष्यंतिनूतनानीत्यर्थःपद्मानियस्याःसातथा मालांप्रतिगृह्यललितैर्मनोहरैःपदैःपादविक्षेपैर्मंदंशनैःउपेत्यरामामितिशेषः । तांमालांतदंसेरामस्कंधेआसज्यसंस्थाप्यपार्श्व तःरामस्यवामपार्श्वेअभवत्तस्थावित्यर्थः ॥ २८ ॥ ॥ ॥ ॥ ॥ ॥ ॥

आनंदनिधिंआनंदसमुद्रंसुखस्वरूपमित्यर्थः । रामंसमालोक्यस्थितानामितिशेषः तेनसमानकर्तृकत्वोपपत्तिः प्रमोदःसंतोषः ॥ २९ ॥ रमेशेप्रकटंमनुष्यप्रत्यक्षंयथास्यात्त था लक्ष्म्यासीतयासमेतेसति पित्रेरामस्यपित्रेदशदिक्षुरथोयस्येतिविग्रहःदशरथायेत्यर्थः । संप्रेषयामासदूतमितिशेषः । भूमिपःदशरथःतंवृत्तांतंश्रुत्वादूतमुखात्सर्वंविदि त्वाचसपार्थिवइतिनारसिंहे ॥ ३० ॥ आत्मजाभ्यांभरतशत्रुघ्नाभ्यां गजाश्वस्यंदनानिचपत्तयःपदातयश्चगजस्यंदनपत्ति 'द्वंद्वश्चे'तिएकवद्भावः । गजादियुक्तयास्वसेनयास हितःसराजाधातृजंब्रह्मपुत्रंवसिष्ठंअग्रेप्रणिधायपुरस्कृत्य यत्रमैथिलोजनकःतत्रययौ ॥ ३१ ॥ मुदंबिभर्तीतिमुदंभरःमोदनंमुदःघञर्थेकःसंज्ञायां'भृतॄवृजी'त्यत्रसंज्ञायामि त्यस्यप्रायिकत्वादसंज्ञायामपिबिभ्रतेःखच् तदंतेअरुर्द्विषदजंतस्ये'तिमुम् संतोषधरःसंतोषपोषकोवा । सदशरथःसुतंविवाहयामासविवाहवंतंचकार । गाधिसुतेनअनुमो

ततः प्रमोदो नितरां जनानां विदेहपुर्यामभवत्समंतात् ॥ रामं समालोक्य नरेंद्रपुत्र्या समेतमानंदनिधिं परेशं ॥२९॥ लक्ष्म्या समेते प्रकटं रमेशे संप्रेषयामास तदाशु पित्रे ॥ विदेहराजो दशदिग्रथाय स तं निशम्याशु तुतोष भूमिपः ॥ ३० ॥ अथात्मजाभ्यां सहितः सभार्यो ययौ गजस्यंदनपत्तियुक्तया ॥ स्वसेनयाग्रे प्रणिधाय धातृजं वसिष्ठमाश्वेव स यत्र मैथिलः ॥ ३१ ॥ समैथिलेनातितरां समर्चितो विवाहयामास सुतं मुदंभरः ॥ पुरोहितो गाधिसुतानुमोदितो जुहाव वह्निं विधिना वसिष्ठः ॥ ३२ ॥ तदा विमानावलिभिर्नभस्तलं दिदृक्षतां संकुलमास नाकिनां ॥ सुरानका दुंदुभयो विनेदिरे जगुश्च गंधर्ववराः सहस्रशः ॥ ३३ ॥ विजानमाना जगतां हि मातरं पुरार्थितुं नाययुरत्र देवताः ॥ तदा तु रामं रमया युतं प्रभुं दिदृक्षवश्चक्ररलं नभस्तलम् ॥ ३४ ॥

दितःसंमतःपुरोहितोवसिष्ठः। विधिनाविवाहहोमविधिना वह्निमित्यत्र'देशकालाध्वगंतव्याःकर्मसंज्ञाह्यकर्मणामि'त्यनेनकर्मसंज्ञा । जुहावलाजादिहोमंकारयामास । अथवा वह्निशब्देनदेवताविवक्ष्यतेवह्निंअग्न्याख्यंदेवंजुहावप्रीणयामासेत्यर्थः ॥ ३२ ॥ तदाविवाहहोमसमयेदिदृक्षतांद्रष्टुमिच्छतांनाकिनांदेवानांविमानानांआवलिभिःपंक्तिभिः नभस्थलंआकाशस्थलंसंकुलंआस । सुराणांआनकाःपटहाख्याः दुंदुभयःभेर्यः ।'भेरीपटहमानकावि'त्यभिधानं । विनेदिरेशब्दंचक्रुःजगुश्चगानंचक्रुः॥ ३३ ॥ जगतांमा तरंसीतांविशेषेणजानमानाःहियस्मात्तस्माद्देवताःपुरास्वयंवरविघोषणकालेअर्थितुंसीतायाचनार्थंअत्रस्वयंवरंप्रतिनाययुः तदाविवाहकालेदिदृक्षवःद्रष्टुमिच्छवःनभस्तलंअलं पूर्णंचक्रुः । अलंचक्रुःअलंकृतंचक्रुरितिवा ॥ ३४ ॥ ॥ ॥ ॥ ॥ ॥ ॥

पुरासागरजायाःसमुद्रकन्यकायाःलक्ष्म्याःस्वयंवरे । सुमानसानांशोभनंमानसंयेषांतेतथातेषांसुमनसामित्यर्थः । तेषांवासमागमःयथाअभवत् तथातदारामस्यविवाह कालेसर्वदिवौकसांदेवानांसमागमोभूत् दिवीतिशेषः । तथामुनीनांभूभृतांसहएकदाभुविसमागमोभूत् । यद्वा सर्वदिवौकसांलक्ष्मणादिरूपैःअवतीर्णानांदेवानांतथाभूभृद्भिःसहितानांमुनीनां वसिष्ठविश्वामित्रादीनांच समागमोभुव्यभूत् ॥३५॥ राजीवसमाननेत्रःकमलसदृशनयनः। पाणिंप्रगृह्यविवाहंकृत्वा । 'पाणिग्रहोविवाहःस्यादि'ति हलायुधः । रराजबभौ । तत्रतुल्यदृष्टांतमाह । यथेति । अमृतार्थेअमृतप्राप्त्यैअब्धेःक्षीरसमुद्रस्यमंथनेमंथनकाले ॥ ३६ ॥ नृपःरमयासीतयासमेतंविलोक्य मुदारामायधनंददौ ॥ ३७ ॥ सजनकःपराध्यांणिउत्तमानि ईशितुरित्यत्रसंप्रदानमविवक्षितंसंबंधमात्रविवक्षयाषष्ठी तदावस्त्रादिदानकालेमुदैवसःजनकः । अवरजेभ्यः

यथा पुरा सागरजास्वयंवरे सुमानसानामभवत्समागमः ॥ तथा ह्यभूत्सर्वदिवौकसां तदा तथा मुनीनां सह भूभृतां भुवि ॥ ३५ ॥ प्रगृह्य पाणिं च नृपात्मजाया रराज राजीवसमाननेत्रः ॥ यथा पुरा सागरजासमेतः सुराऽसुराणाममृताब्धिमंथने ॥ ३६ ॥ स्वलंकृतास्तत्र विचेरुरंगना विदेहराजस्य हि याश्च योषितः ॥ मुदा समेतं रमया रमापतिं विलोक्य रामाय ददौ धनं नृपः ॥३७॥ प्रियाणि वस्त्राणि रथान्सकुंजरान्पराध्यरत्नान्यखिलस्य चेशितुः ॥ ददौ च कन्यात्रयमुत्तमं मुदा तदा स रामावरजेभ्य एव ॥ ३८ ॥ महोत्सवं तं त्वनुभूय देवता नराश्च सर्वे प्रययुर्यथागतं ॥ पिता च रामस्य सतैः समन्वितो ययावयोध्यां स्वपुरीं मुदा ततः ॥ ३९ ॥ तदंतरे सोथ ददर्श भार्गवं सहस्रलक्षामितभानुदीधितिं ॥ विभासमानं निजरश्मिमंडले धनुर्धरं दीप्तपरश्वधायुधं ॥ ४० ॥ ॥

लक्ष्मणादित्रिभ्यःकन्यानांत्रयंचददौ ॥ ३८ ॥ यथासंतोषेणआगतंतथाप्रययुः । ततःपितायर्यौ ॥ ३९ ॥ सःदशरथःतदंतरेविदेहायोध्ययोर्मध्येसहस्राणिचलक्षाणिच अमिताश्चसहस्रलक्षामिताःतेचतेभानवश्चतथातेषां दीधितिरिवदीधितिर्यस्यसतथातं । निजंस्वाभाविकंतच्चतद्रश्मिमंडलंचाकिरणमंडलंचस्वाभाविकज्ञानमरीचिमंडलमित्यर्थः । तस्मिन्विभासमानंप्रकाशमानंधनुःशार्ङ्गधनुःदीप्तश्चासौपरश्वधश्चकुठारश्चसएवआयुधंयस्यसतथा । तंभार्गवंभृगुकुलोत्पन्नंश्रीपरशुरामंददर्श । सहस्रलक्षामितेति नीचमध्योत्तमाधिकारियोग्यतामपेक्ष्योक्तामितिज्ञातव्यं ॥ ४० ॥ ॥ ॥ ॥

नृपःभीतःसन् आदिपुरुषंराघवंअजानतांराघवोहरिरितिज्ञानरहितानांसतांनिदर्शनैःदृष्टांतैर्ज्ञापयितुं समागतंरघुपंरघुपंस्पर्धयेवसमाहूयंतंयोद्धुमितिशेषः । प्रणिपत्यन त्वाययाचे ॥ ४१ ॥ किमिति । हेप्रभोसमर्थइहअस्मिन्समयेवयोगतस्यवृद्धस्यमेसुतंहंतुंनार्हसि । वयोगतस्येत्युक्त्यास्वस्याशक्तत्वंसूचितं । सुतमित्यनेनरामस्यबाल त्वंसूचितं । प्रभोइत्युक्त्यापरशुरामस्यवीरत्वंसूचितं । वीरस्याशक्तस्यबालस्यवधोनयोग्यइतिभावः । इतिभार्गवोदितोभूदितिशेषः । तेसुतत्रयंलक्ष्मणादिसुतत्रयंरणेस्थितं स्थिरंपलायनरहितमित्यर्थः । राघवंद्रष्टुंइहअहंआगतोस्मि ॥ ४२ ॥ इत्थंसहरिःभृगूत्तमःनृपतिंप्रत्युक्त्वाअहंएषोपिरामोपिपुरातनोहरिरितिअज्ञेषुरामोहरिरित्यजानन् । सुजनेषुपरंइंद्रार्जुनवद्विशेषरहितमभेदंस्वस्यरामस्यावतारेणाभेदंदर्शयन्ज्ञापयन्निजांतनुंस्वस्वरूपंरघूत्तमंप्राह ॥४३॥ प्राहेत्युक्तंविवृणोति । शृणुष्वेत्यादिना । ततःउमाप

अजानतां राघवमादिपूरुषं समागतं ज्ञापयितुं निदर्शनैः ॥ समाह्वयंतं रघुपं स्पर्धेव नृपो ययाचे प्राणिपत्य भीतः ॥ ४१ ॥ न मे सुतं हंतुमिहार्हसि प्रभो वयोगतस्येत्युदितः स भार्गवः ॥ सुतत्रयं ते प्रददामि राघवं रणे स्थितं द्रष्टु मिहागतोस्म्यहं ॥ ४२ ॥ स इत्थमुक्त्वा नृपतिं रघूत्तमं भृगूत्तमः प्राह निजां तनुं हरिं ॥ अभेदमज्ञेष्वपि दर्शयन् परं पुरातनोहं हरिरेष इत्यपि ॥ ४३ ॥ शृणुष्व राम त्वमिहोदितं मया धनुर्द्वयं पूर्वमभून्महाद्भुतं ॥ उमापतिस्त्वे कमधारयत्ततो रमापतिश्चापरमुत्तमोत्तमं ॥ ४४ ॥ तदा तु लोकस्य निदर्शनार्थिभिः समर्थितौ तौ हरिशंकरौ सुरैः ॥ रणे स्थितौ वां प्रसमीक्षितुं वयं समर्थयामोत्र निदर्शनार्थिनः ॥ ४५ ॥ ततो हि युद्धाय रमेशशंकरौ व्यवस्थितौ ते धनुषी प्रगृह्य ॥ यतोंतरस्यैष नियामको हरिस्ततो हरोग्रेस्य शिलोपमोभूत् ॥ ४६ ॥ शशाक नैवाथ यदाभिवीक्षि तं प्रस्पंदितुं वा कुत एव योद्धुं ॥ शिवस्तदा देवगणाः समस्ताः शशंसुरुच्चैर्जगतो हरेर्बलं ॥ ४७ ॥

तिधृतधनुषः अपरमन्यत्ततउत्तमोत्तमंअपरंद्वितीयमितिवा ॥४४॥ तदाधनुषःसंग्रहणकालेलोकस्यसत्समूहस्यनिदर्शनंपरतत्त्वज्ञानं । अर्थिभिःसुरैःतौहरिशंकरौसमर्थि तौ । किमिति । अत्रेदानीं निदर्शनार्थिनः।परतत्त्वज्ञानार्थिनःवयं रणेस्थितौवांयुवांप्रसमीक्षितुंप्रसमीक्षयितुंसमर्थयामःसंप्रार्थयामहे ।'प्रार्थयंतिशयनोत्थितुंप्रिया'इत्यादिवदंत 'तत्करोती'तिणिचिनेयइतिवृत्तिकृत् ॥४५॥ ततःप्रार्थनानंतरं तेपिनाकशार्ङ्गसंज्ञेएषोहरिःअस्यहरस्यअंतःहृत्कमलेनियामकःप्रेरकोयतःततःहरःअस्यहरेरग्रेशिलयापा षाणेन उपमःसदृशोभूत् । व्यापाराभावाज्जडवदभूदितिभावः ॥ ४६ ॥ अथजडत्वप्राप्त्यनंतरं शिवःअभिवीक्षितुंद्रष्टुंप्रस्पंदितुंसंचालितुंआभ्यांज्ञानकर्मेंद्रियव्यापा रःउपलक्ष्यते यदानैवशशाकसमर्थोनास । योद्धुंकुतएवसमर्थः नकुतएवेत्यर्थः । तदातस्मिन्समयेजगतःरमादेःसकाशातहरेर्बलंउत्तममितिउच्चैःशशंसुः ॥ ४७ ॥

शंसनंस्पष्टयति । यदिति । एषशंकरःयदीरणेनयस्यहरेःप्रेरणया विनैवप्रश्वसितुंचश्वासमोक्षणार्थमपिनशशाक यतःअतःअत्रअस्यामवस्थायांसत्यांहरेर्बलंहरात्परमुत्कृष्ट
मिति किंवक्तव्यं नवक्तव्यमित्यर्थः । प्रत्यक्षंदृष्टत्वादितिभावः । सर्वतश्चरमाब्रह्मादीनांबलादपिएवपरमेवेतिशशंसुरितिपूर्वेणसंबंधः ॥ ४८ ॥ अमुष्यरुद्रस्यतद्धनुःलोक
सन्निधौजनकसभायामित्यर्थःत्वयाप्रभग्नंकिल प्रभग्नमितिश्रूयते ॥ ४९ ॥ तस्यरुद्रस्यकार्मुकाद्धनुषःकोटिगुणंकोटिसंख्याकाधिकगुणवदित्यर्थः । पुनश्चकोटिगुणादपिवरं
उत्तमंअन्यद्धनुःशार्ङ्गसंज्ञंहरिहस्तयोग्यंयद्यस्मात्तस्मात् इदंमयाहरिणामयाहस्तेगृहीतंहियस्मादेतद्धनुर्वैष्णवंअतस्त्वंगृहाणस्वीकुरु ॥ ५० ॥ इदंशार्ङ्गंधनुस्तदातर्हित्वंहरिः

यदीरणेनैव विनैष शंकरः शशाक न प्रश्वसितुं च केवलं ॥ किमत्र वक्तव्यमतो हरेर्बलं हरात्परं सर्वत एव चेति॥४८॥
ततः प्रणम्याशु जनार्दनं हरः प्रसन्नदृष्ट्या हरिणाभिवीक्षितः ॥ जगाम कैलासममुष्य तद्धनुस्त्वया प्रभग्नं किल
लोकसन्निधौ ॥ ४९ ॥ धनुर्यदन्यद्धरिहस्तयोग्यं तत्कार्मुकात्कोटिगुणं पुनश्च ॥ वरं हि हस्ते तदिदं गृहीतं मया गृ
हाणैतदतो हि वैष्णवं ॥ ५० ॥ यदीदमागृह्य विकर्षसि त्वं तदा हरिर्नात्र विचार्यमस्ति ॥ इति ब्रुवाणः प्रददौ धनुर्वरं
प्रदर्शयन्विष्णुबलं हराद्वरं ॥ ५१ ॥ प्रगृह्य तच्चापवरं स राघवश्चकार सज्यं निमिषेण लीलया ॥ चकर्ष संधाय शरं
च पश्यतः समस्तलोकस्य च संशयंनुदन् ॥५२॥ प्रदर्शिते विष्णुबले समस्तशो हराच्च निःसंख्यतया महाधिके ॥
जगाद मेघौघगभीरया गिरा स राघवं भार्गव आदिपूरुषः ॥ ५३ ॥ अलं बलं ते जगतोखिलाद्वरं परोसि नारायण
एव नान्यथा ॥ विसर्जयस्वेह शरं तपोमये महासुरे लोकमये वराद्विभोः ॥ ५४ ॥

अत्रतवहरित्वविषयेहराद्वरबलादित्यर्थः ॥ ५१ ॥ सज्यंज्ययासहितंआरोपितंपश्यतीतिपश्यन्तस्यतथा समस्तलोकस्यसंशयंरामस्यहरित्वविषयेसंशयंनुदन्परिहरन्स
मस्तलोकस्यपश्यतःसतःशरंसंधायचापइतिशेषःचकर्षच ॥ ५२ ॥ समस्तशःस्मादिभ्यःहराच्चनिःसंख्यतया अनंतत्वेनमहाधिकेअत्युत्कृष्टेविष्णुबलेप्रदर्शितेसतिरामेणे
तिशेषः । भार्गवःमेघानांओघवत्गभीरयागंभीरयागिरावचसारावबंजगाद॥५३॥किमिति । अखिलाज्जगतःवरंउत्तमंतेबलंअलंपूर्णअतएवपरःसर्वोत्कृष्टःअतएवनारायणो
सिअन्यथाजीवसंघोनभवसि। इहममोदरस्यतपोमयेतपःप्रधानेविभोःब्रह्मणोवरात्लोकमयेलोकव्याप्तेसर्वत्रविद्यमानइत्यर्थः। अतएवमहासुरेशरंविसर्जयस्व मुंच ॥५४॥

विभ्रोर्वरादित्युक्तं विशदयति । पुरेति । लोकतां लोकव्याप्तत्वं जगद्गुरुर्ब्रह्मा तं असुरं जितः पराजितः स्यात्तदैव वध्यसे वधं प्रयास्यसीति पुनः प्राह यतः ॥५५॥ अतः जगतः अंतक स्य वैरेण जितवत्पराजितवद्व्यवस्थितोस्मि ॥ ५६ ॥ ननु हरिद्वेषिणो विष्णुतनुप्रवेशः कथमित्यत आह । पुरावरइति । अनेनासुरेण मुमुक्षया मोक्षेच्छया विष्णुतनुप्रवेशनमे स्यादितीतिशेषः । वरः शिवादुपलंभितः प्राप्तः तेन वरेण रामस्य परशुरामस्य उदरे नाभिदेशे गच्छतीति तिष्ठतीति रामोदरगः सोसुरः तदाज्ञया भार्गवाज्ञया बहिर्गतः भार्गवदेहान्निर्गतः सन् भस्मसाद्भस्माधीनो बभूव । ' तस्य नाभिप्रदेशे तु तपः कृत्वा सुदारुणं । तिष्ठत्येव सदा दैत्यस्तं ज्ञात्वा राघवोवदीत् । तं तु भस्मीचकारार्थे' ति पाद्मे ॥ ५७ ॥ इति हेतोर्दैत्यनिध नार्थं स राघवः रामाय भार्गवायैव विकृष्यमाणः सन् असुरं तपोमयनामानं असुरं निहत्य अतुलाख्यासुरस्य तपःप्रधानत्वात्तपोमय इति नाम । लोकव्याप्तत्वाल्लोकमय इति नाम ।

पुरा तुलो नाम महासुरो भवद्वरात्स तु ब्रह्मण आप लोकतां ॥ पुनश्च तं प्राह जगद्गुरुर्यदा हरिर्जितः स्याद्धि तदैव वध्यसे ॥५५॥ अतो वधार्थं जगदंतकस्य सर्वाजितोहं जितवद्व्यवस्थितः ॥ इतीरिते लोकमये स राघवो मुमोच बाणं जगदंतके सुरे ॥५६॥ पुरा वरेणेन शिवोपलंभितो मुमुक्षया विष्णुतनुप्रवेशनं ॥ स तेन रामोदरगो बहिर्गत स्तदाज्ञयैवाशु बभूव भस्मसात् ॥५७॥ इतीव रामाय स राघवः शरं विकर्षमाणो विनिहत्य चासुरं ॥ तपस्त दीयं प्रवदन्मुमोद तदीयमेव ह्यभवत्समस्तं ॥ ५८ ॥ निरंतरानंदविबोधसारः स जानमानोखिलमादिपूरुषः ॥ वदन् शृणोतीव विनोदतो हरिः स एक एव द्वितनुर्मुमोद ॥५९॥ ॥ ॥

असुरमोहनार्थं तदीयं भार्गवसंबंधि तपस्त्वदीयमिति क्वचित्पाठः । मयानाशितमिति प्रवदन्मुमोद । नन्वसुरं निहत्य भार्गवसंबंधितपः नाशितमिति कथं मुमोदेत्यत आह तदीयमेवेति । समस्तं सर्वं जगत्तदीयं भार्गवसंबंधि अभवद्धि जगति स्थितस्तपोसुरस्तदीय एवेत्यर्थः ॥ ५८ ॥ निरंतराभ्यां भेदरहिताभ्यां स्वरूपभूताभ्यामिति यावत् । आनंद विबोधाभ्यां सुखचिद्भ्यां सारः श्रेष्ठः अखिलं सर्वं जानमानः वेत्ता आदिपुरुषः स हरिः विनोदतो लीलया वदन्निव सन् परशुरामरूपेण वदन्निव शृणोतीव राघवरूपेण शृणोतीति हि तनुर्वक्ता श्रोता चेति द्विस्वरूपः एक एव स हरिः मुमोदेति योजना । एकत्वादेव वदन्निव शृणोतीवेत्युक्तमिति भावः ॥ ५९ ॥ ॥ ॥

ननु एकश्चेत्तर्हि अन्यवद्विडंबनं किमर्थमित्याशंकायां विडंबनेकारणद्वयमाह । सचेष्टितमिति । सहारिर्निजाश्रयस्यनिजःस्वकीयःआश्रयोयस्यसतथातस्यस्वाश्रयस्य । 'नि
जमात्मीयनित्ययो'रित्यभिधानात् । जनस्यसत्तत्त्वविबोधस्यसमीचीनज्ञानस्यकारणंजनकंकुर्वन्अतिशयेन अन्यःअन्यतमः । अन्योमनुष्याधमःजातावेकवचनं अन्यतमः
अतिशयेनाभक्तइत्यर्थःअसुरसंघइतियावत् । तस्यविमोहकंहयग्रीवतारादिभेदभ्रांतिजनकंकुर्वन् एकोपिभार्गवराघवरूपेणकोपिनरांतरेअन्यपुरुषेयथातथाचिक्रीडेक्रीडितवान्
॥ ६० ॥ ततःज्ञानाज्ञानप्रापकक्रीडानंतरं । कारुण्यनिधिःकृपासमुद्रःसहरिःनिजेजनेविश्येनितांतंइंद्रार्जुनवद्विशेषरहितमैक्यं गुणादिनैक्यं धनुःकर्षणाद्बलैक्यंदर्शितमि

स चेष्टितं चैव निजाश्रयस्य जनस्य सत्तत्त्वविबोधकारणं ॥ विमोहकं चान्यतमस्य कुर्वंश्चिक्रीड एकोपि नरांतरे यथा ॥ ६० ॥ ततः स कारुण्यनिधिर्निजे जने नितांतमैक्यं स्वगतं प्रकाशयन् ॥ द्विधेव भूत्वा भृगुवर्य आत्मना रघूत्तमेनैक्यमगात्समक्षं ॥ ६१ ॥ समेत्य चैक्यं जगतोभिपश्यतः प्रणुद्य शंकामखिलां जनस्य ॥ प्रदाय रामाय धनुर्वरं तदा जगाम रामानुमतो रमापतिः ॥ ६२ ॥ ततो नृपोत्यर्थमुदाभिपूरितः सुतैः समस्तैः स्वपुरीमवाप ह ॥ रेमेथ रामोपि रमास्वरूपया तयैव राजात्मजया हि सीतया ॥ ६३ ॥ यथा पुरा श्रीरमणः श्रिया तया रतो नितांतं हि पयोधिमध्ये ॥ तथा त्वयोध्यापुरिगो रघूत्तमोप्युवास कालं सुचिरं रतस्तया ॥ ६४ ॥

तिभावः । तदेवबलंप्रकाशयन्द्विधेवभूत्वाआदावितिशेषः । भृगुवर्यआत्मनास्वस्वरूपेणरघूत्तमेनसमक्षंप्रत्यक्षंऐक्यंअगात्प्राप ॥ ६१ ॥ जगतःअभिपश्यतःसतःजनस्य
भक्तजनस्यअखिलांशंकांप्रादुर्भावादिभेदशंकांप्रणुद्यपरिहृत्यरमापतिःभार्गवःरामायधनुर्वरंप्रदायरामेणानुमतःसंमतःसन्जगाम ॥ ६२ ॥ अत्यर्थंअत्यंतंअभिपूरितःपूर्णः
अथपुरप्रवेशानंतरं राज्ञःजनकस्यआत्मजयाकन्यकयारमास्वरूपयातयैवसीतयातयैवेत्युक्त्याअन्यथानैवेत्यर्थः । रेमेअपिशब्देननृपोपिरेमइत्यर्थः ॥ ६३ ॥ रमणंदृष्टां
तेनाह । यथेति । तयासीतास्वरूपयातथारघूत्तमोपितयारमास्वरूपयासीतयारतःरमन्सन्उवास ॥ ६४ ॥ ॥ ॥ ॥

इमानिशरेणमारीचमथार्णवेक्षिपदित्यादीनि विचित्राण्यपिब्रह्मादीनामाश्चर्यकराण्यपिकर्माणिकृत्यानिरघूत्तमस्यरामावतारस्यहरेरद्भुतानिन कुतःदुरंतशक्तेरितिहेतुगर्भविशेषणं । अपरिमितशक्तित्वादित्यर्थः । तर्हि कुतोवर्णितानीत्यतआह । अथचेति । अथचअथापियद्यप्यद्भुतानिनैवतथेत्यर्थः। अस्यहरेवैभवंगुणकर्मसामर्थ्यंस्वकीयंचतत्कर्तव्यंचतस्यभावःकर्तव्यता तया उत्तमश्लोकगुणकर्मानुवर्णनकर्तव्यविधिनेत्यर्थः । अनुवर्ण्यतेअनुवादःक्रियते ॥ ६५ ॥ यंगंगाजमदग्निजान्वयभवाद्विद्विरण्याभि

**इमानि कर्माणि रघूत्तमस्य हरेर्विचित्राण्यपि नाद्भुतानि ॥ दुरंतशक्तेरथ चास्य वैभवं स्वकीयकर्तव्यतयानुवर्ण्यते ॥ ६५ ॥ इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये श्रीरामचरिते बालकांडकथानिरूपणं नाम चतुर्थोऽध्यायः ॥ ४ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥**

धात्पुत्रंप्रापजनार्दनंशमदमस्वाध्यायसंपद्युतात् । तुर्यस्तस्यकृतौसतांसुखकरोध्यायःसमाप्तिंशुभःश्रीमद्भारतभावनिर्णयपदार्थोद्दीपिकायामगात् ॥ ४ ॥ इति श्रीमत्तात्पर्यनिर्णये पदार्थदीपिकाटीकायां चतुर्थोऽध्यायः ॥ ४ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥ ॥



श्रीगुरुभ्योनमः ॥ ॐ पूर्वाध्याये बालकांडकथामुक्त्वा अयोध्याकांडकथामाह । इत्थमित्यादिना । सर्वेलोकाःइत्थंअनेनप्रकारेणभूमिष्ठेभूमौवर्तमानेसीतासहायेस्मिन्रामाख्येविश्वेश्वरेअनुदिनंप्रतिदिनंनितांतंवृद्धभक्त्यानिमित्तेननिखिलजगदवस्थाप्यसमर्पयित्वा । 'दारान्सुतान्प्रियान्प्राणान्परस्मैसंनिवेदयेदि'तिस्मरणात्समर्प्य तुतुषुरितियोजना । विषयसप्तमीअधिकरणसप्तमीतंत्रेणोपात्ते । यद्वा सीतासहायोयस्यसतथा । तस्मिन्अस्मिन्रामाख्येविश्वस्यजगतःईश्वरेइत्थंपूर्वोक्तप्रकारेणनिखिलजगवस्थाप्यभगवद्भक्ताविितिशेषः। भूमिष्ठेसतिभूमौवर्तमानेसतिसर्वलोकाःअनुदिनंप्रतिदिनंवृद्धयाभक्त्यानितांतंतुतुषुरिति। राजादशरथःआत्मनःस्वस्यअर्थ्यंअपेक्षणीयंराज्याभिषेकेरामस्यसाम्राज्याभिषेकविषयेप्रकृतिजनैःमंत्रिपुरुषैःउक्तंवचःमानयन्सन्दध्रे प्रकृतिजनवचःकर्तव्यमितिमनसिदधार तद्वचःभूमिगायाःभुवंप्राप्तायाः अलक्ष्म्याः पूर्वजन्मनिदारिद्र्याभिमानित्वादलक्ष्मीः नाम्नामंथरायाःकैकेयीदासीत्वेमंथरानाम्न्याःश्रुतेःश्रवणेंद्रियस्यपथंमार्गंअगमत्वाक्यमशृणोदितिभावः॥१॥ ननु असुरश्रेष्ठकलिभार्यायाःदासीत्वंकिमर्थंप्राप्तमित्यतआह । पूर्वमिति । पूर्वंदेवासुराणांसमुद्रमथनकालेक्षीराब्धेःसकाशाज्जातातस्याःअलक्ष्म्याःकथमपिमहाप्रयत्नेनैवअप्सरस्त्वंअप्सरःस्त्रीत्वंतपसैवतपोबलेन एवकारस्तुयोग्यताभावसूचकः। प्रयाताअवाप्ताभूदितिशेषः।यद्यस्मात्तत्तस्मात्कमलजनिःब्रह्मातांअप्सरस्त्वंप्राप्तामलक्ष्मींअंधंतमोनेतुंउवाच किमिति। दासीभूत्वाकैकेय्याइतिशेषः। रामस्यअभिषेकंराज्याभिषेकंआशुअविलंबेनविलुंपविनाशय त्वंततस्तेनहरिद्रोहात्मकेनकर्मणास्वगतिंस्वरूपयोग्यांगतिंप्राप्स्यसेयास्यसि । इत्युक्त्वासाअलक्ष्मीस्वरूपाप्सराःमंथरामंथरेतिनामवतीआसीत् । तस्यमंथराजन्मनःअनुअनंतरं एतद्रामराज्याभिषेकविलुंपनरूपंकुकर्मनिंद्यकर्मकृतवत्येवाकरोदित्यर्थः॥२॥तद्वाक्यात्राज्ञापूर्वंप्रतिज्ञातंवरद्वयंयाचस्वेत्येवंरूपात्मंथरावाक्यात्सापूर्वंयुद्धसमयेस्वविधया पतिंप्रसन्नंकृतवती कैकेयीदशरथभार्यापतिगयोर्भर्तारिविय

ॐ इत्थं विश्वेश्वरेस्मिन्निखिलजगदवस्थाप्य सीतासहाये भूमिष्ठे सर्वलोकास्तुतुषुरनुदिनं वृद्धभक्त्या नितांतं ॥
राजा राज्याभिषेके प्रकृतिजनवचो मानयन्नात्मनोर्थ्यं दध्रे तन्मंथरायाः श्रुतिपथमगमद्भूमिगाया अलक्ष्म्याः ॥१॥
पूर्वं क्षीराब्धिजाता कथमपि तपसैवाप्सरस्त्वं प्रयाता तान्नेतुं तत्तमोंधं कमलजनिरुवाचाशु रामाभिषेकं ॥ भूत्वा
दासी विलुंप स्वगतिमपि ततः कर्मणा प्राप्स्यसे त्वं सेत्युक्त्वा मंथरासीत्तदनु कृतवतीत्येव चैतत्कुकर्म ॥२॥ तद्वा
क्यात्कैकयी सा पतिगवरबलादाजहारैव राज्यं रामस्तद्गौरवेण त्रिदशमुनिकृतेरण्यमेवाविवेश ॥ सीतायुक्तोनुजेन
प्रातिदिनसुविवृद्धोरुभक्त्या समेतः संस्थाप्याशेषजंतून् स्वविरहजशुचा त्यक्तसर्वेषणार्थान् ॥ ३ ॥ ॥

मानयोर्वरयोर्बलात्राज्यंआजहार भरतार्थमितिशेषः।सीतयायुक्तःअनुजेनलक्ष्मणेनसमेतःरामःप्रतिदिनंसुसम्यक्तारतम्यज्ञानेनेत्यर्थः।विवृद्धयाविशेषेणऋद्धयाउरोःउत्कृष्टस्यहरेर्भक्त्या।निमित्तेनस्वस्यविरहात्वियोगाज्जातयाशुचाशोकेनत्यक्ताःसर्वैषणार्थाःइच्छाविषयसर्वपदार्थाःयैस्तेतथा तानशेषजंतून्संस्थाप्यनिवर्त्यतस्यदशरथस्यगौरवेणवचनगौरवेणनिमित्तमात्रेणत्रिदशानांदेवानांमुनीनामर्थेइतित्रिदशमुनिकृतेतानुपकर्तुमेवेतियावत् ।अरण्यंआविवेश। कैकेयीभरतार्थराज्यग्रहणंवनायरामस्यप्रेषणमेवंरूपंवरद्वयंपत्युरवापेतिभावः॥३॥अशेषजंतवःकेइत्यतआह। वृक्षानिति। वृक्षजीवाःमनसागताइत्यर्थः। वृक्षादीन्विसृज्यविहायविवेशेतिसंबंधः।अथगुहेनस्कंदेनहरइवरुद्रइवगुहेनएतन्नामकनाविकेनअर्चितःसरामःस्वपदात्प्रोत्थांगंगाशब्दवाच्यामन्यनदीव्यावृत्त्यर्थंस्वपदात्प्रोत्थामित्युक्तं। गंगांभागीरथींतीर्त्वागुहेनेत्यावृत्त्ययोज्यं। नाविकस्यापिगुहनामत्वात् । तथाहि । 'जनान्निवृत्यरामोसौजगामचगुहाश्रमं ॥ गुहश्चरामभक्तोसौस्वभावादेववैष्णवः । कृतांजलिपुटोभूत्वाकिंकर्तव्यमितिस्थितः । गुहोपनीतनावंतुतांगंगांसमपद्यत । उत्तीर्यगतवान्रामोभारद्वाजाश्रमंप्रति' । इतिनरसिंहपुराणे । 'तत्रराजानिषादानांरामस्यदयितःसखा । धार्मिकःसत्यसंधश्चगुहोनाममहाबलः' । इत्यार्षेरामायणे । ऋषिगणसहितात्देवानांअर्च्यस्यपूज्यस्यबृहस्पतेःपुत्रादपिभरद्वाजादपिपूजांप्राप्य । प्रयागक्षेत्रेइतिशेषः । प्रयागान्नैऋत्यदिशिविद्यमानंशैलेशंचित्रकूटपर्वतंप्रयातःसन्तत्रपर्वतेकतिपयानिकानिचिद्दिवसानिमोदन्संतुष्यन्नुवासउषितवान् ।'क्लीबेदिवसवासराविं'त्यमरः ॥४॥ एतस्मिन्नेवकालेचित्रकूटेअवस्थितिकालेरामस्यवियोगादेववियोगनिमित्तादेवस्वःपरलोकंगतोभून्मृतः । 'स्मृतौवृत्तनिषेधेस्मस्वःस्वर्गपरलोकयोरि'त्यभिधानात् । अथमृत्यनंतरं विधिसुतेनवसिष्ठेनसहितौपुत्रौभरतशत्रुघ्नौकेकयेभ्यःकेकयविषयेभ्यः आनीतौअयोध्यांप्रतीतिशेषः । विप्रशापाद्दशरथस्यपुत्राणांवियोगकालेमृतिरभूदितिभावः । तस्यापितुःश्रुतिगणेषुविहितानिचतानिप्रेतकार्याणिप्रेतसंस्कारकर्माणिकृत्वा सद्यःप्रेतकार्यसमाप्त्यनंतरमेवशोचंतौदुःखितौभरतशत्रुघ्नौरामेणगतमार्गमनुजग्मतुः ॥ ५ ॥ ॥ ॥

वृक्षान्पक्षीभकीटान् पितरमथ सर्वान् मातृपूर्वान्विसृज्य प्रोत्थां गंगां स्वपादाद्धर इव च गुहेनार्चितः सोथ तीर्त्वा ॥ देवार्च्यस्यापि पुत्रादृषिगणसहितात्प्राप्य पूजां प्रयातः शैलेशं चित्रकूटं कतिपयदिवसान् यत्र मोदन्नुवास ॥ ४ ॥ एतस्मिन्नेव काले दशरथनृपतिः स्वर्गतोभूद्वियोगाद्रामस्यैवाथ पुत्रौ विधिसुतसहितौ मंत्रिभिः केकयेभ्यः॥ आनीतौ तस्य कृत्वा श्रुतिगणविहितप्रेतकार्याणि सद्यः शोचंतौ रामभागं पुरजनसहितौ जग्मतुर्मातृभिश्च ॥ ५ ॥

सकलदुरितगांविष्णुवैष्णवद्वेषादिसर्वपापाश्रयां मंथरांनितांतंधिक्कुर्वंतौधिक्कारंकुर्वंतौ सकलदुरितानियस्यांसातथातस्याः सर्वदोषरूपायाःनिकृत्याख्यायाः आसुर्याःगां आश्रयांआसुर्याआविष्टामितिभावः । कैकयींचतदुक्तिकरणाद्धिक्कुर्वंतौरामस्यपादौप्राप्तौप्रापतुरित्यर्थः । तत्रचित्रकूटेतयोर्मध्येवाभरतःराजीवनेत्रंपंकजनयनं राजीवनेत्र मित्यनेनअरण्यवासशोकराहित्यंसूचयति । रामंनत्वोवाच । किमिति हेईशइहइतोरण्यात्पुनःनिवृत्येत्यर्थः । अवरजसहितःसन्स्वांस्वकीयामयोध्यां आशुअविचार्यप्रा प्य अस्माकंप्रीतयेइमांधरित्रींपृथिवींपालय ॥ ६ ॥ इत्युक्तोरामदेवःसकलसुरगणस्यआप्यायनंराक्षसेभ्योरक्षणंकर्तुं ईशइतिहेतुगर्भविशेषणं समर्थत्वादित्यर्थः । वा णींदेवान्प्रतिराक्षसान्हन्मीतिस्ववाचंसत्यांकर्तुं यद्वा ईशोरामदेवःसकलसुरगणाप्यायनंकर्तुं वाणींवनवासंकरिष्यामीतिस्वप्रतिज्ञारूपांवाचंसत्यांकर्तुं सद्भक्त्याअन्यत्रस र्वोत्तमत्वेनभक्त्यभावात्समीचीनयाभक्त्यानम्रंनम्रीभूतंभरतं नेतिअयोध्यांप्रत्यागमनंनस्यादितिअवदत् भूयःभूयःवारंवारंअर्थयंतंप्रत्यवददितिशेषः । किमिति शरदांसप्त

धिक्कुर्वंतौ नितांतं सकलदुरितगां मंथरां कैकयीं च प्राप्तौ रामस्य पादौ मुनिगणसहितौ तत्र चोवाच नत्वा ॥ रामं राजीवनेत्रं भरत इह पुनः प्रीतयेस्माकमीश प्राप्याशु स्वामयोध्यामवरजसहितः पालयेमां धरित्रीम् ॥६॥ इत्युक्तः कर्तुमीशः सकलसुरगणाप्यायनं रामदेवः सत्यां कर्तुं च वाणीमवददतितरां नेति सद्भक्तिनम्रं ॥ भूयो भूयोर्थयंतं द्वि गुणितशरदां सप्तके व्यत्ययतीते कर्तैतत्ते वचोहं सुदृढमृतमिदं नेव चो नात्र शंका ॥७॥ श्रुत्वैतद्रामवाक्यं हुतभु जि पतने स प्रतिज्ञां च कृत्वा रामोक्तस्यान्यथात्वे न तु पुरमभिवेक्ष्येहमित्येव तावत् ॥ कृत्वान्यां स प्रतिज्ञामवसद थ बहिर्ग्रामके नंदिनाम्नि श्रीशस्यैवास्य कृत्वा शिरसि परमकं पौरटं पादपीठं ॥ ८ ॥

कइत्यलुक्द्विगुणितशरदांसप्तकइत्येकंपदं । द्विगुणितंचततत्शरदांसप्तकंचतथातस्मिन्नत्यतीतेसति चतुर्दशाब्देषुगतेषुसत्स्वित्यर्थः । अहंतेएतद्वचःपुरंप्रत्येहीतिप्रार्थनारू पंवचःकर्तास्मीतिशेषः करिष्यामीत्यर्थः । इदंतेवचःकर्तास्मीतिमेवचःसुदृढंयथास्यात्तथानिश्चितमित्यर्थः । ऋतंसत्यंअत्रवचःसत्यमित्युक्तेविषयेशंकानतेशंकामास्त्वित्यर्थः ॥ ७ ॥ सभरतःएतत्पूर्वोक्तंरामवाक्यंश्रुत्वा रामोक्तस्यान्यथात्वेवैपरीत्येसति हुतभुजिवह्नौपतनेप्रवेशविषयेप्रतिज्ञांकृत्वा यावद्रामस्यागमनं तावदहंपुरंअयोध्यांतुसर्वथाना भिवेक्ष्यइति एवंविधांअन्यांद्वितीयांप्रतिज्ञांकृत्वा कथंभूतांअन्यांप्रतिज्ञांसप्रतिज्ञांअधःशयनब्रह्मचर्यादिप्रतिज्ञांतरसहितां । अथ कृतप्रतिज्ञाद्वयानंतरं श्रीशस्यश्रीपतेर स्यरामस्यपरममेवपरमकंउत्तमंपौरटंसौवर्णंपादपीठंपादुका द्वयमित्यर्थः । शिरसिकृत्वानिधायबहिःअयोध्याबहिःस्थितेनंदिनाम्निग्रामकेआभीरादिनीचजनसेवितकु

त्सितग्रामेअवसत् । सप्रतिज्ञामित्यत्रपूर्वार्धेभिन्नंपदंउत्तरार्धेएकंपदं । 'सकुर्वन्भ्रातुरादेशंनंदिग्रामेस्थितोवशी । तपस्वीनियताहारःशाकमूलफलाशन' इतिनरसिंहपुराणात् । 'तपश्चरणयुक्तेनतस्मिन्तस्थौनृपोत्तम'इतिपाद्मवाक्यात् । प्रतिज्ञांतरंज्ञायते सप्रकृतःभरतः हुतभुजिपतनेप्रतिज्ञांकृत्वास्थितः सोहंहुतभुजिपतनप्रतिज्ञावान्इतिपूर्वोक्तांप्रतिज्ञांकृत्वा तावत्पुरंनाभिवेक्ष्यइत्यन्यांप्रतिज्ञांचकृत्वा अवसदितियोजना । प्रक्रांतप्रसिद्धानुभूतविषयस्तच्छब्दोयच्छब्दंनापेक्षते ॥ ८ ॥ समस्तपौरैःअयोध्यावासिभिः अनुगतेयुक्तेअनुजेभरते । आत्मगेनस्वाविष्टेनइंद्रसुतोपिजयंतःवायसःकाकःसन् ॥ ९ ॥ सकाकात्माजयंतःरमायाःसीतायाःस्तनेकुचोपरितुंडंचचुंचदाव्धात् तदाजनार्दनेनाभिवीक्षितःदृष्टोभवदितिशेषः । जनार्दनेनाशुतृणेप्रयोजितेप्रक्षिप्तेसति ज्वलताअग्निवद्दीप्यमानेनतृणेनानुयातः अनुगतःचचार । लोकांतरेष्वपीतिशेषः

समस्तपौरानुगतेनुजे गते स चित्रकूटे भगवानुवास ह ॥ अथाजगामेंद्रसुतोपि वायसो महासुरेणात्मगतेन चोदितः ॥ ९ ॥ स चासुरावेशवशाद्रमास्तने यदा व्यधात्तुंडमथाभिवीक्षितः ॥ जनार्दनेनाशु तृणे प्रयोजिते चचार तेन ज्वलतानुयातः ॥१०॥ स्वयंभुशर्वेंद्रमुखाइछरेश्वरान् जिजीविषुस्ताँच्छरणं गतोपि ॥ बहिष्कृतस्तैर्हरिभक्तिभावतो ह्यलंघ्यशक्त्या परमस्य चाक्षमैः ॥ ११ ॥ पुनः प्रयातः शरणं रघूत्तमं विसर्जितस्तेन निहत्य चासुरं ॥ तदाक्षिगं साक्षिकमप्यवध्यं प्रसादतश्चंद्रविभूषणस्य ॥ १२ ॥ सवायसानामसुरोखिलानां वरादुमेशस्य बभूव चाक्षिगः ॥ निपातितोसौ सह वायसाक्षिभिस्तृणेन रामस्य बभूव भस्मसात् ॥ १३ ॥

॥ १० ॥ तान्हरिभक्त्यादिसद्गुणैःप्रसिद्धान्शरणंगतोपिप्राप्तोपि हरिभक्तेर्भावतःसद्भावात्परमस्यसर्वोत्तमस्यरामस्य अलंघ्यशक्त्याअनतिक्रमशक्त्याअक्षमैरसमर्थैश्च तैःस्वयंभुपूर्वैःबहिष्कृतःनिरस्तःदूरीकृतइत्यर्थः ॥ ११ ॥ पुनःरघूत्तमंशरणंप्रयाताभूदितिशेषः । तेनतृणेनरामेणवा चंद्रविभूषणस्यचंद्रालंकारभूतस्यहरस्यप्रसादतःवरलक्षणप्रसादात् अवध्यमपितदक्षिणिवायसनेत्रेवर्तमानंअक्षेवाक्षिकंअक्षिकेणनेत्रेणसहितं नेत्रमेवहतं वायसोनहतइतिभावः । असुरंकुरंगनामकंदैत्यंनिहत्यविसर्जितःअसुरावेशाद्विमोचितः जयंतइतिशेषः ॥ १२ ॥ नन्वपराधिनोवधोयोग्यएववायसस्यआक्षिपातःकिमर्थंकृतइत्यतआह । सवायसानामिति रामस्यसंबंधिना तृणेनवायसानांआक्षिभिःसहनिपातितोसौ । रामस्यतृणेनभस्मसाद्भस्माधीनंबभूव ॥ १३ ॥ ॥ ॥ ॥ ॥

तर्हि अक्षिस्थोहंतव्यःवायसानांकोवापराधइत्यतआह । ददुरिति । तस्मैकुरंगासुरायविवरंअवकाशंस्थानमित्यर्थः । यद्यस्माद्दुस्तेनकारणेनतदक्षिपातंवायसानांनेत्रभंगः तत्तस्मात्कृतंतदातद्दिनमारभ्यएकस्यअक्षिपातेकृतेसर्वेषांएकनेत्रत्वमभूदितिहरिसामर्थ्यसूचकस्तुशब्दः ॥ १४ ॥ ननु तात्कालीनानांकाकानांविवरदानापराधादेकनेत्रत्वंभवतु उत्पत्स्यमानानांएकनेत्रत्वंकुतइत्यतआह । भविष्यतामिति । अथवर्तमानकालानंतरं भविष्यताउत्पस्यमानानांकाककुलेउद्भवोयेषांतेतथातेषांकाकानामितिशेषः । नतुकाकेभ्योन्येषामित्यर्थः । द्विनेत्रतायावत् तावत्तदक्ष्यस्यआक्षिणिभवःअक्ष्यःतेषांवायसानामक्ष्यःतस्यअक्षयंअवध्यत्वंदत्तंयतः ॥१५॥ अतःअमुष्यकुरंगस्यपुनर्भावंपुनर्जन्महिन्वन्परिहरन् भविष्यतःउत्तरत्रभाविनोवायसान्एकादृक्दृष्टिर्येषांतेएकदृशःतान् तदाज्ञयारामाज्ञया ॥ १६ ॥ अयोध्याकांडकथासमासेनोक्ता अरण्यकांड

ददुर्हि तस्मै विवरं बलार्थिनो यद्वायसास्तेन तदक्षिपातनं ॥ कृतं रमेशेन तदैकनेत्रा बभूवुरन्येपि च वायसास्तदा ॥ १४ ॥ भविष्यतामप्यथ यावदेव द्विनेत्रता काककुलोद्भवानां ॥ तावत्तदक्ष्यस्य कुरंगनाम्ना शिवेन दत्तं दितिजस्य चाक्षयं ॥ १५ ॥ अतः पुनर्भावममुष्य हिन्वन् भविष्यतश्चैकदृशश्चकार ॥ स वायसान् राघव आदिपूरुषस्ततो ययौ शक्रसुतस्तदाज्ञया ॥ १६ ॥ रामोथ दंडकवनं मुनिवर्यनीतो लोकाननेकश उदारबलैर्निरस्तान् ॥ श्रुत्वा खरप्रभृतिभिर्वरतो हरस्य सर्वैरवध्यतनुभिः प्रययौ सभार्यः ॥ १७ ॥ आसीच्च तत्र शरभंग इति स्म जीर्णो लोकं हरेर्जिगमिषुर्मुनिरुग्रतेजाः ॥ तेनादरोपहृतसार्घ्यसपर्यया सः प्रीतो ददौ निजपदं परमं रमेशः ॥ १८ ॥ धर्मो यतोस्य वनगस्य नितांतशक्तिः ह्रासेस्वधर्मकरणस्य हुताशनादौ ॥ देहात्ययः सतत एव तनुं निजाग्नौ संत्यज्य रामपुरतः प्रययौ रमेशम् ॥ १९ ॥ ॥ ॥ ॥ ॥

कथांआरभते । रामोथेत्यादिना । अथकुरंगवधानंतरं । मुनिवर्यैःदंडकारण्यस्थमुनिश्रेष्ठैः नीतःप्रापितोरामः अनेकशःबहून्निरस्तान्बाधितान्श्रुत्वा दंडकवनंदंडकारण्यंप्रति ॥१७॥ तत्रदंडकारण्येजिगमिषुःगंतुमिच्छुःजीर्णःजरयाकर्मकरणाशक्तःशरभंगइतिशरभंगाख्यःआसीत् तेनशरभंगमुनिना आदरेणप्रीत्याउपहृतयाआनीतयासार्घ्ययाअर्घ्याद्युपचारैःसहितयासपर्यया पूजया ॥ १८ ॥ ननु जानतामुनिना आत्मघातःकथंकृतःआत्मघातंकृतवतोरामःकथंनिजपदंददावित्यतआह । धर्मइति । अस्यसर्वस्यस्वधर्मकरणस्य स्वस्वाश्रमोचितधर्माचरणविषये नितांतशक्तिह्रासेसति सर्वात्मनाशक्तिनाशेसति हुताशनादौआदिपदेनजलादिकंग्राह्यं देहस्यअत्ययःत्यागः

सततः नित्योधर्मोयतःअतोवनगस्य वानप्रस्थाश्रमिणोस्य शरभंगस्य धर्मएवेत्यस्यांदिशवृत्तिः एवं अतएवनिजाग्नौआहिताग्नौ रामस्यपुरतः तनुंसंत्यज्यहरिःस्मरणपूर्वकंस मीचीनज्ञानेनत्यक्त्वेत्यर्थः। परेशंश्रीहरिंप्रययौप्राप 'दुश्चिकित्स्यैर्महारोगैःपीडितस्तुपुमानपि । असाध्यव्याधिनायुक्तःस्वव्यापाराक्षमःपुमान् । प्रविशेत्ज्वलनंदीप्तंकरोत्यन शनंतथा । अगाधतोयराशिंचभृगोःपतनमेववा । गच्छेन्महापथंवापितुषारगिरिकंधरात् । प्रयागवटशाखाग्राद्देहत्यागंकरोतिवा । उत्तमान्प्राप्नुयाल्लोकान्नात्मघातीभवेत्क चित् । महापापक्षयात्स्वर्गेदिव्यान्भोगान्समश्नुते । एतेषामधिकारोस्तिसर्वेषामेषुसर्वथा । नराणामथनारीणांसर्ववर्णेषुसर्वदे'तिवाराहे । आपदिसर्ववर्णाश्रमिणांदेहत्यागोध र्मइतिपुराणगतवाक्यानिबहूनिसंति । तथातस्मिन्नर्थेयाज्ञवल्क्यादिस्मृतिषुप्रमाणानिसंति । यद्वा वनगस्यस्वधर्मकरणस्यतद्विषयइत्यर्थः । नितांतशक्तिह्रासेसति हुताश नादौदेहात्ययःसततोधर्मोयतःअतःअस्यवनगस्यशरभंगस्यधर्मइत्यर्थः कुतःवनगत्वादितिशेषः । शेषंपूर्ववत् । यद्वा वनगस्यास्यशरभंगस्यनितांतशक्तेर्ह्रासोयस्मिन्सतथा तस्मिन्कालएवेत्यर्थः । देहात्ययोधर्मोयतस्ततःशरभंगःतनुंसंत्यज्यपरेशंप्रययौ जीर्णस्येतिचहेतुगर्भविशेषणमेतत् । अस्मिन्नर्थेसततइत्यत्राभिन्नंपदं । 'यदासौनियमेक

**रामोपि तत्र ददृशे धनदस्य शापाद्गंधर्वं उर्वशिरतेरथ यातुधानीम् ॥ प्राप्तां दशां सपदि तुंबरुनामधेयं नाम्ना विरा धमपि शर्ववरादवध्यम् ॥ २० ॥ भंक्त्वास्य बाहुयुगलं बिलगं चकार संमानयन्वचनमंबुजजन्मनोसौ ॥ प्रादाच्च तस्य सुगतिं निजगायकस्य भक्षार्थमंसकमितोपि सहानुजेन ॥ २१ ॥ प्रीतिं विधित्सुरगमद्भवनं निजस्य कुंभो द्भवस्य परमादरतोमुना च ॥ संपूजितो धनुरनेन गृहीतमिंद्राच्छार्ङ्गं तदादिपुरुषो निजमाजहार ॥ २२ ॥**

ल्पेजरयाजातवेपथुः आत्मन्यग्निंसमारोप्यमच्चित्ताग्नौसमाविशेदि'त्येकादशस्कंधे 'अनुष्ठानासमर्थस्यवानप्रस्थस्यजीर्यतः। जलानशनभृग्वग्निमहाप्रस्थानमिष्यते' इतिवा राहे ॥ १९ ॥ रामोपितत्रदंडकारण्ये उर्वश्याःरतेःरमणनिमित्तात्धनदस्यकुबेरस्यशापात्सपदिशीघ्रंयातुधानींराक्षससंबंधिनींदशामवस्थांप्राप्तं तुंबरुनामधेयंगंधर्वं । अ थराक्षसजन्मप्राप्त्यनंतरं शर्ववरादवध्यंनाम्नाविराधमपिददृशे ॥ २० ॥ असौरामःअस्यविराधस्यबाहुयुगलंभंक्त्वाछित्त्वाबिलगंबिलस्थंविराधंचकार । कथंभूतः । अं बुजजन्मनःब्रह्मणःवचनंसंमानयन् । भक्षार्थंअंतकंस्कंधंइतोपिप्रापितोपिनिजगायकस्यगंधर्वस्यतस्यतुंबरोः ॥ २१ ॥ निजस्यस्वभक्तस्यकुंभोद्भवस्यागस्त्यस्यप्री तिंविधित्सुर्विधातुमिच्छुःरामःकुंभोद्भवस्यभवनंगृहंअगमत् । अमुनाअगस्त्येनपरमादरतःउत्तमभक्त्यापूजितःसन् अनेनअगस्त्येनइंद्राद्गृहीतंअंगीकृतंनिजंस्वीयंशार्ङ्गं । शार्ङ्गाख्यंधनुःप्रजहारजग्राह ॥ २२ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ननुनिजंचेदिंद्रस्यधनुःप्राप्तिःकथंतस्मादृषिणाकिमर्थंलब्धमित्यतआह । आत्मार्थमिति । आत्मार्थंमदर्थंरामावतारेदेहीतिदत्तं इंद्रःरामकरार्थंरामेणकरेधर्तुमेवतद्धनुःअग
स्त्यमुनयेप्रादात् । दंडकेषुदंडकारण्येषु ॥ २३ ॥ रक्षसःरावणस्यस्वसाभगिनी दशाननेनरावणेननिजपतौप्रामादिकेनपरकीयोयमितिभ्रांतिजनितेनविधिनाकर्मणाव्या
पादितेमारितेसतिपत्युःनिमार्गणंअन्वेषणंतस्मिन्तत्पराआसक्ताआसीत् तदुक्तमार्षे'नावगच्छामियुद्धेपुत्वान्परानपिशोभने । तथा । तेनायंनिहतःसंख्येमयाभर्ताप्रभुस्त
वे'ति ॥ २४ ॥ रजनीचरभर्तुःरावणस्यस्वसाशूर्पनखीभ्रात्रोःखरदूषणयोर्द्वयेन एकःसहोदरःदूषणस्तुमातृष्वसुःपुत्रःतदुक्तमारण्यके ।'राकायांमिथुनंजज्ञेखरःशूर्पनखीत
थे'ति । आर्षेच ।'तत्रमातृष्वसुःपुत्रोभ्रातातवसुखप्रदः। भविष्यतिसतेकर्तायत्त्वंवक्ष्यसितद्द'ति । वनंदंडकारण्यंआवसंतीवासंकुर्वतीसतीसुयोगकामंसंयोगकांक्षमाणंतमः
अंधकारःभानुंयथातथारामंसमेत्येत्यर्थः । अचेतनेचेतनवदुपचारः यद्वा तमःराहुःसुयोगकामंसर्वदासंबंधकामः 'सैंहिकेयस्तमस्तमावि'तिविश्वः ॥ २५ ॥ सरामःजन

आत्मार्थमेव हि पुरा हरिणा प्रदत्तमिंद्रे तदिंद्र उत रामकरार्थमेव ॥ प्रादादगस्त्यमुनये तदवाप्य रामो रक्षभ्रूषी
नवसदेव स दंडकेषु ॥२३॥ काले तदैव खरदूषणयोर्बलेन रक्षःस्वसा पतिनिमार्गणतत्परासीत् ॥ व्यापादिते निज
पतौ हि दशाननेन प्रामादिकेन विधिनाभिससार रामं ॥२४॥ सानुज्ञयैव रजनीचरभर्तुरुग्रा भ्रातृद्वयेन सहिता
वनमावसंती ॥ रामं समेत्य भव मे पतिरित्यवोचद्भानुं यथा तम उपेत्य सुयोगकामं ॥ २५ ॥ तां तत्र हास्यक
थया जनकासुताग्रे गच्छानुजं म इह नेति वचः स उक्त्वा ॥ तेनैव दुष्टचरितां हि विकर्णनासां चक्रे समस्तरजनी
चरनाशहेतोः ॥ २६ ॥ तत्प्रेरितान्सपदि भीमबलान् प्रयातांस्तस्याः खरत्रिशिरदूषणमुख्यबंधून् ॥ जघ्ने चतुर्द
शसहस्रमवारणीयकोदंडपाणिरखिलस्य सुखं विधातुम् ॥ २७ ॥ ॥ ॥

कस्यआसुताअयोनिजाकन्यासीतातस्याः अग्रे ।'अयोनिजातुयानारीसासुतेत्यभिधीयत' इत्यभिधानात् । हास्यकथयापरिहासरूपकथयामेअनुजंलक्ष्मणंप्रतिगच्छ । इ
हमद्विषयेनकांक्षामास्त्वित्यर्थः । इत्युक्त्वारजनीचरनाशहेतोःनाशार्थंतेनैवलक्ष्मणेनैव दुष्टंचरितंकर्मयस्याःसातांशूर्पनखींविगतकर्णनासांचक्रे कारयामासेत्यर्थः ॥ २६ ॥
अवारणीयंअनिवार्यंकोदंडंधनुःपाणौहस्तेयस्यसतथा । रामःअखिलस्यसर्वभक्तसमूहस्यतयाशूर्पनख्याप्रेरितान्रामंहंतुंप्रेरितानित्यर्थः । सपदितत्कालएवभीमबलात् भयं
करशारीरबलात् भयंकरसेनासमूहनिमिताद्वा । भीमबलानितिक्वचित्पाठः । प्रयातानागतानयोद्धुमितिशेषः। चतुर्दशसहस्रसंख्याकानित्यर्थः । तस्याःशूर्पणखायाःखरत्रि
शिरदूषणाःमुख्यायेषांतेतथा तेचतेबंधवश्चतान्जघ्ने ॥ २७ ॥ ॥ ॥ ॥ ॥ ॥

रघुवरेणरामेण महामुनीनांअभयेदत्तेसतिच तथारजनीचरमंडलस्यराक्षससमूहस्यभयेदत्तेसति रक्षःपतिःरावणःस्वसाभगिनीशूर्पनखीतस्याःमुखात् अविकंपनाच्चअवि कंपनाख्यराक्षसात् रघुपतेःपरमुत्कृष्टंबलंस्वाभाविकशक्तिम् ॥ २८ ॥ श्रुत्वारावणो रामबलमितिशेषः आशुकार्यंअवमृश्यविचार्य नद्यश्चनदाश्चनदीनदाःतेषांपत्युःस्वा मिनःसमुद्रस्यतीरेतटाकेधरित्र्याःभूम्याःश्रवणंक्षेत्रंगोकर्णक्षेत्रंप्रतिजगामेत्यर्थः। रघुपतेःशरान्नितरांभीतंपूर्वमितिशेषः।'शरेणमारीचमथार्णवेक्षिपदि'तिपूर्वाध्यायेउक्तं। अतएवात्रगोकर्णेतपसिप्रतिवर्तमानंविद्यमानंतपःकुर्वाणमित्यर्थः। मारीचंमारीचाख्यराक्षसंददर्श ॥२९॥ तेनरावणेनराघवस्यवंचनार्थंवंचितुंसपदिआर्थितःप्रार्थितः अ मुष्यराघवस्यशरवेगंजानन्मारीचआह किमिति। तेरघुवरेणविग्रहःविरोधःशक्योन अहमस्यरामस्यशरस्यसंस्पर्शसंतापं। स्पृशउपतापइतिधातोः। पूर्वंजानामिज्ञातवान्

दत्तेऽभये रघुवरेण महामुनीनां दत्ते भये च रजनीचरमंडलस्य ॥ रक्षःपतिः स्वसृमुखादविकंपनाच्च श्रुत्वा बलं रघुपतेः परमाप चिंताम् ॥२८॥ श्रुत्वाशुकार्यमवमृश्य जगाम तीरे क्षेत्रं नदीनदपतेः श्रवणं धरित्र्याः ॥ मारीचि मत्र तपसि प्रतिवर्तमानं भीतं शराद्रघुपतेर्नितरां ददर्श ॥ २९ ॥ तेनार्थितः सपदि राघववंचनार्थं मारीच आह शरवेगममुष्य जानन् ॥ शक्यो न ते रघुवरेण हि विग्रहोत्र जानामि संस्पर्शमस्य शरस्य पूर्वम् ॥३०॥ इत्युक्तवं तमथ रावण आह खड्गं निष्कृष्य हन्मि यदि मे न करोषि वाक्यं ॥ तच्छ्रुश्रुवान्भययुतोथ निसर्गतश्च पापो जगा म रघुवर्यसकाशमाशु ॥ ३१ ॥ संप्राप्य हैममृगतां बहुरत्नचित्रः सीतासमीप उरुधा विचचार शीघ्रम् ॥ निर्दोषनि त्यवरसंविदपि स्म देवी रक्षोवधाय जनमोहकृते तथाह ॥ ३२ ॥ ॥ ॥ ॥

हियस्मात्तस्मात्अत्रअत्रस्थइत्यर्थः। इत्याहेतिसंबंधः ॥३०॥ निष्कृष्यकोशान्निःसार्यआहेत्यन्वयः। अथतद्रावणवाक्यंअश्रौषीदितिशुश्रुवान् 'भाषायांसदवसश्रुव' इति क्वसुः। भूतसामान्येलिट्। श्रुतवान्। भययुतःस्वभावात्पापःदोषरूपोमारीचः ॥३१॥ वचनप्रकारंदर्शयति। संप्राप्येति। हैममृगतांसुवर्णसंबंधिवर्णमृगत्वंसंप्राप्यभूत्वा बहुरत्नवाच्चित्रःअनेकवर्णःमृगरूपोमारीचःउरुधाबहुप्रकारेण। निर्दोषाअज्ञानसंबंधरहिता। नित्याआदिविनाशरहितावराश्रेष्ठासंविद्ज्ञानंयस्याःसातथा एतादृशापिदेवी सीतारक्षसांवधायजनानांदुष्टजनानांमोहकृतेअज्ञानोत्पादनार्थं यथारक्षोवधोभवेत्यथाजनमोहोभवेत् तथाआहेत्यर्थः ॥ ३२ ॥ ॥ ॥

आहेत्युक्तंविशदयति । देवेति । स्त्रीवशादिदोषंपरिहर्तुंदेवेतिसंबोधनं । इमंदृश्यमानंक्रीडामृगं क्रीडायोग्यमृगंअन्वक्पश्चात्ससारअगात् । माययाछन्नामृगंमृगभूतंनि शिचरंराक्षसंमारीचंजानन् ॥ ३३ ॥ तेनरामेणशरेणभृशंगाढंआहतःपापःपापरूपःसमारीचःउरुव्यथयातीव्रवेदनयालक्ष्मणंविक्रुश्य अहोलक्ष्मणेतिशब्दंकृत्वेत्यर्थः । ममारमरणंप्राप श्रुत्वासीताअहोलक्ष्मणेतिशब्दमितिशेषः । उग्रवाक्यैःमामिच्छसीत्येवंरूपंनिष्ठुरवाक्यैःअचूचुदत्प्रेरयामास । चापश्चधनुःबाणश्चताभ्यांसहितःसलक्ष्म णःरामपथंरामगतमार्गंआप ॥ ३४ ॥ अत्रसीतारामयोःप्राप्तमज्ञानंपरिहरति । यांयामिति । परेशोहरिःउरुधाबहुप्रकारेणयांयांलीलांकरोति । रमापिदेवीअनुहरिमनुतां तांहरिलीलासदृशींलीलांतथैवहरिवदेवकरोत्येवएतावताविडंबकरणेनअस्यपरमस्यतथारमायाअणुरपिईषदपिदोषःअज्ञानदुःखादिदोषःनैवानुविचिंत्यःनैवचिंतनीयः । कु तःयद्यस्मादुरुप्रभूउरूणांब्रह्मादीनांप्रभूईश्वरौअतएवेत्यर्थः ॥ ३५ ॥ उरुप्रभुत्वंस्पष्टयति । क्वेति । मंदकटाक्षमात्रेणईषन्नयनांतावलोकमात्रेणसर्गःउत्पत्तिःस्थितिःपा

देवेममाशु परिगृह्य च देहि मे त्वं क्रीडामृगं त्विति तयोदित एव रामः ॥ अन्वक् ससार ह शरासनबाणपाणिर्मा यामृगं निशिचरं निजघान जानन् ॥ ३३ ॥ तेनाहतः शरवरेण भृशं ममार विक्रुश्य लक्ष्मणमुरुव्यथया स पापः ॥ श्रुत्वैव लक्ष्मणमचूचुददुग्रवाक्यैः सोप्यापरामपथमेव सचापबाणः ॥३४॥ यां यां परेश उरुधैव करोति लीलां तां तां करोत्यनु तथैव रमापि देवी ॥ नैतावतास्य परमस्य तथा रमाया दोषोणुरप्यनु विचिंत्य उरुप्रभू यत् ॥ ३५ ॥ क्वाज्ञानमापदपि मंदकटाक्षमात्रात्सर्गस्थितिप्रलयसंसृतिमोक्षहेतोः ॥ देव्या हरेः किमु विडंबनमात्रमेतद्विक्रीड तोः सुरनरादिवदेव तस्मात् ॥ ३६ ॥ देव्याः समीपमथ रावण आससाद सादृश्यतामगमदप्यविषह्यशक्तिः ॥ सृष्ट्वात्मनः प्रतिकृतिं प्रययौ च शीघ्रं कैलासमर्चितपदान्यवसच्छिवाभ्याम् ॥ ३७ ॥ ॥

लनंप्रलयोनाशः संसृतिःसंसारःमोक्षःसायुज्यादिमुक्तिःसंसारान्मोक्षोवा एषांहेतोःकारणभूतायाःदेव्याःप्रकृतेःअज्ञानंआपच्चक्वनास्तीत्यर्थः । देव्यःसकाशादपिहरेरुत्तम स्येतिशेषः । अज्ञानादिकंकिमुकथंस्याद्यद्यस्मात्तस्मात्सुरनरादिवत्विक्रीडतोःक्रीडांकुर्वतोःदेव्याःहरेःएतत्सुरनरादिवत्कृतंकर्मविडंबनमात्रमेव असुराणांस्वयोग्यताधि कारकृतकर्मणांदेवानामपीतिशेषः ॥ ३६ ॥ अविषह्यासोढुमशक्याशक्तिर्यस्याःसातथा सासीताआत्मनःस्वस्यप्रतिकृतिंप्रतिमांसृष्ट्वाउत्पादयित्वाअग्निनेतिशेषः । उ क्तंकौर्मे । 'तमाहदेवोलोकानांदाहकोहव्यवाहनः । यानीताराक्षसेंद्रेणसीताभगवतीहृता । मयामायामयीसृष्टारावणस्यवधेप्सया' । अदृश्यतांअगमत्कैलासंप्रतिप्रययौ चात्रकैलासे शिवाभ्यांशिवाचशिवश्चतथाताभ्यांपार्वतीरुद्राभ्यांअर्चितपदापूजितपदासीतान्यवसत् ॥ ३७ ॥ ॥ ॥

ननु रावणस्यनिश्चेतनप्रतिमायांसीतेयमितिकथंबुद्धिरभूदित्यत आह । तस्याइति । शक्रःतस्याः कैलासंप्रतिगतायाःदेव्याःसीतायाःसन्निधियुतां संनिधानयुक्तांतांआश्रमे निर्मितांप्रतिकृतिंप्रतिमांव्यवहारसिद्ध्यैगत्यादिव्यापारसिद्ध्यर्थंप्रविवेश । अथेंद्रप्रवेशानानंतरं रजनीचरेंद्रःतांप्रतिकृतिंआदाययथौ । आश्रमादितिशेषः। किंकृत्वाउरुश्रमतः उरुशिक्षयाअतिप्रयासेनवा निरुद्धःरोधितःसन्जटायुषेतिशेषः। जटायुषंत्वापोथयित्वेत्यर्थः ॥ ३८ ॥ ततःजटायुषोयुद्धानंतरं हनुमान्मार्गेव्रजंतंगच्छंतंरावणंअभियायअभिगम्य एनंरावणंनाहनत्नजघान । यद्वा अभियायअभिइयायनजघानचशकंध्वादित्वात्पररूपं । ननु जटायुषोप्यतिसमर्थोभक्तश्चहनुमान्कुतोनाहनदित्यपेक्षायांहेतुचतुष्टयंदर्शयति । संवारितइति । रविसुतेनसुग्रीवेणसंवारितःमाजहीतिनिवारितः । दैवंदेवतासंबंधिकार्यंसर्वराक्षसवधरूपंकार्यंजानमानः । इदानींरावणेहतेसर्वराक्षसवधोनभवेदितिजानन्नितिभावः। रामस्यकीर्तिंअभीप्समानः रावणवधेनाद्येषुरामबलप्रकाशःस्यादितीच्छन्नितिभावः हरेर्वचनात् मयैववध्यौभवंतंत्रिजन्मस्विति पूर्वजय

**तस्यास्तु तां प्रतिकृतिं प्रविवेश शक्रो देव्याश्च सन्निधियुतां व्यवहारसिद्ध्यै ॥ आदाय तामथ ययौ रजनीचरेंद्रो हत्वा जटायुषमुरुश्रमतोनिरुद्धः ॥ ३८ ॥ मार्गे व्रजंतमभियाय ततो हनूमान्संवारितो रविसुतेन च जानमानः ॥ दैवं तु कार्यमथ कीर्तिमभीप्समानो रामस्य नैनमहनद्वचनाद्धरेश्च ॥ ३९ ॥ प्राप्यैव राक्षस उतात्मपुरीं स तत्र सीताकृतिं प्रतिनिधाय ररक्ष चाथ ॥ रामोपि तत्र विनिहत्य सुदुष्टरक्षः प्राप्याश्रमं स्वदयितां न हि पश्यतीव ॥ ४० ॥ अन्वेषमाण इव तं च ददर्श गृध्रं सीतां रिरक्षिषुमथो रिपुणा विशस्तं ॥ मंदात्मचेष्टममुनोक्तमरेश्च कर्म श्रुत्वा मृतं तमदहत्स्वगतिं तथादात् ॥ ४१ ॥ ॥ ॥ ॥**

विजयौप्रत्युक्तवचनान्नाहनादित्यर्थः। अत्रपूर्वपूर्वहेतुतःउत्तरोत्तरहेतुर्बलीयानितिद्रष्टव्यं॥३९॥ सराक्षसोरावणः आत्मपुरींप्राप्य उततत्रपुर्यांसीताकृतिंप्रतिनिधायररक्षचररक्षैवअन्यत्रगमनविषयेनिरोधमकरोदित्यर्थः । तत्सुदुष्टरक्षःमृगरूपंमारीचाख्यंरक्षःनिहत्य स्वदयितांसीतांनपश्यतीवेतिहि प्रतिद्धिरभूदितिशेषः ॥४०॥ अन्वेषमाणइवसीतान्वेषणंकुर्वन्निव इतस्ततःपरिभ्रमन्रामइतिवाक्यशेषः । सीतांरिरक्षिषुःरक्षितुमिच्छतिरिरक्षिषतिरिरक्षिषतीतिरिरक्षिषुःतं तथारिपुणावैरिणारावणेन। विशस्तंहतप्रायंमंदात्मनःजीवस्यदेहस्यवाचेष्टाव्यापारोयस्येतिविग्रहः। तंगृध्रंगृध्रपक्षिस्वरूपंजटायुषंददर्श । अमुनाजटायुषाउक्तंअरेः वैरिणोरावणस्यकर्मसीताप्रतिकृतिहरणादिकर्म श्रुत्वामृतंतंजटायुषंअदहत् तथा । स्वकृतसंस्कारानुसारिणींस्वगतिंस्वलोकगतिंअदात् ॥ ४१ ॥ ॥ ॥ ॥

अनुजेनसहितःसरामोन्यत्रवनांतरेविचरन्सन् । सहसाअकस्माद्धातुर्वरात् अखिलंविश्वंजेतुंशीलमस्यास्तीत्यखिलजायी तस्य 'सुप्यजातौणिनिस्ताच्छील्य'इत्यनेनाणि निः । णित्वाद्वृद्धिः मृत्योर्मरणात्उज्झितस्यमुक्तस्यवज्रपतनादिंद्रेणमुक्तवज्रपतनादित्यर्थः । अत्यंतंकुंचितस्यउदरेशिरःसक्थिप्रवेशातसंकोचंप्राप्तस्यकबंधनाम्नोराक्षसस्य करौप्राप्तोभूदितिशेषः ॥ ४२ ॥ अनुजेनसहितःरामःअस्यकबंधस्यबाहुयुगुलंछित्त्वा अनुजेनसहितइत्यनेनलक्ष्मणोप्येकंबाहुंचिच्छेदेत्यर्थः । तंदेहंपूर्ववतविराधवत्प्रति विधाय । अंतर्णीतणिच् । बिलगंकारयित्वा तदुक्तंसंग्रहे'रामाज्ञयाथसौमित्रिस्तद्देहमदधाद्बिल'इति गंधर्वविश्वावस्वाख्यंगंधर्वंत्रिजटानाम्न्याराक्षस्या अभिजातंस्थूलशि रोनाम ब्राह्मणशापेनेतिशेषः । पुराइंद्रस्पर्धायाःपूर्वंनाम्नादनुंसुरेंद्रभृत्यंगंधर्वं प्रतिविधायेतिदेहलीदीपवत्अत्रापिसंबध्यते । प्रतिविधाय कृत्वा प्रतिनिधायेत्यपिपाठः । तत्रपू र्ववत्प्रतिनिधायेत्यंतर्णीतणिच् बिलमितिशेषः सुरेंद्रभृत्यंकृत्वेतिशेषः। ततःतस्माद्देशात्तेनविश्वावसुनार्चितोगादितियोजना। विश्वावसुःशापेनदनुनामाराक्षसोभूत्वा इंद्रकृत कुक्षिगास्यत्वात्कबंधनामाभूदित्यर्थः। अयंपूर्वंविश्वावसुगंधर्वइतिआरण्यपर्वण्युक्तं। यथा तस्यावचक्षेगंधर्वोविश्वावसुरहंनृप। प्राप्तोब्राह्मणशापेनयोनिंराक्षससेवितामिति ।

**अन्यत्र चैव विचरन् सहितोनुजेन प्राप्तः करौ स सहसाथ कबंधनाम्नः ॥ धातुर्वरादखिलजायिन उज्झितस्य मृत्योश्च वज्रपतनादतिकुंचितस्य ॥ ४२ ॥ छित्त्वास्य बाहुयुगुलं सहितोनुजेन तं पूर्ववत्प्रतिविधाय सुरेंद्रभृत्यं ॥ नाम्ना दनुं त्रिजटयैव पुराभिजातं गंधर्वमाशु च ततोपि तदर्चितोगात् ॥ ४३ ॥ दृष्ट्वा तमेव शबरी परमं हरिं च ज्ञात्वा विवेश दहनं पुरतोस्य तस्यै ॥ प्रादात्स्वलोकमिममेव हि सा प्रतीक्ष्य पूर्वं मतंगवचनेन वनेत्र साभूत् ॥ ४४ ॥**

दनुरितिनाम्नादानवइत्युक्तं । आर्षरामायणे तथा ।'दनुर्नाम्नाचदानवं । इंद्रकोपादिदंरूपंप्राप्तवंतमवैहिचेति । तस्यबाहुप्रयुक्तेनवज्रेणशतपर्वणा । सक्थिनीमेशिरश्चैवशरीर त्रीण्यवेशयदि'ति । अपिउक्तं । राक्षसत्वेदनुर्नामवानित्याचार्यैरपिसप्तदशेऽध्यायेजरासंधराजसंवादेउक्तं यथा ।'अतोन्यथादनुर्यथावरादमृत्युकोपिसन् । सुरेंद्रवज्रताडना द्बभूवकुक्षिगास्ययुक्' । इति । पुरापूर्वंनाम्नादनुगंधर्वंअत्रत्रिजटानाम्न्यांराक्षस्यामभिजातंउत्पन्नंपूर्ववत् । कृत्वेतिसंबंधइतिकेचिदाहुः । तदुक्तंविष्णुभट्टीयतारतम्यस्तोत्रे तथा ।'दमघोषःकबंधश्चदनुगंधर्वउच्यते'ति । यत्तु संग्रहे ।'दनुनामास्मिगंधर्वःशापाद्रक्षस्त्वमागत'इत्येतस्यगंधर्वोविश्वावसुगंधर्वःशापात्स्थूलशिरःशापाद्रक्षस्त्वमागतः। दनुनामास्मीत्यर्थः । दनुस्वरूपीप्रोवाचेत्यत्र दनुःस्वरूपीगंधर्वःविश्वावसुरूपीसन्प्रोवाचेत्यर्थः । दनुर्दनुजसूदनःदनुनोक्तेनवर्त्मनेत्येतत्पूर्वंदनुत्वात् । ग्रंथकारेणतथोक्तामि ति ॥ ४३ ॥ शबरींशबरकुलोत्पन्नत्वात्शबरीतिनामवतीतमेवतदृषिप्रोक्तलक्षणवंतमेवदृष्ट्वा । परमंहरिंश्रीरामंज्ञात्वा अस्यरामस्यपुरतःअग्रेदहनमग्निंविवेश । रामस्तस्यै शबर्यैस्वलोकंप्रादात् । साशबरीपूर्वंरामस्यचित्रकूटपर्वतगमनकालेमतंगवचनेन एतद्वनंप्रतिरामआगमिष्यतीतिमतंगऋषिवाक्येनवनेमतंगवने । 'मतंगवनमित्येतद्धिश्रुतंभु

विराघवे'त्यार्षरामायणे । इममेवराममेवप्रतीक्ष्यअपेक्ष्येतियावत् । अत्रसा त्रस्यतीतित्रसा नत्रसाअत्रसाउद्वेगरहिताअभूत् । त्रसीउद्वेगइतिधातुः। 'आगमिष्यतिकाकुत्स्थः सुपुण्यंतवचाश्रमं । सतेप्रतिगृहीतव्योरामःसौमित्रिणासह । तमर्चित्वाध्रुवंस्वर्गोभविष्यतितवाक्षयं' इत्यार्षेरामायणे ॥ ४४ ॥ शबरीपूर्वकेत्यतआह । शापादिति । रामः पत्युःस्वस्यपत्युःइंद्रस्यपुरःअग्रेअतिदर्पहेतोर्निमित्तात्अप्सरसःस्त्रियाकृतगर्वहेतुनिमित्तात् । शच्याकृताच्छापात्शबरकुलेजन्मभवेदित्येवंरूपशापात् । सकाशात्तांनीच योनिंप्राप्तांवराप्सरसंउत्तमाप्सरसस्त्रियंविमोच्य । गत्वाशबर्याश्रमात्हनुमदनुग्रहार्थमितिशेषः । पवनात्मजंश्रीहनुमंतंऋश्यमूकेऋश्यमूकनाम्निगिरौददर्श । 'स्त्रियांबहुष्व प्सरसःस्यादेकात्वप्सराअपी'तिशब्दार्णवे । ननु हनुमत्यनुग्रहःकिमर्थमित्यतआह । सहीति । एकःसहिएकोहनूमानेवईशंएनंरामंसम्यक्अवगच्छतिजानाति सर्वेश्वरो यमितिसाकल्येनजानाति यस्मात्तस्मादनुग्रहार्थमगमदित्यर्थः ॥ ४५ ॥ ननु सुग्रीवादिषुसत्सुहनुमत्येवानुग्रहःकिमर्थमित्याशंकायां वायुर्हरिप्रियस्तदवतारत्वान्हनुमान पिप्रियइतिवक्तुंवायुप्रियत्वेप्रमाणंतावदाह । देहेपीति । केवलंमूलरूपेप्रियइतिन किंतुदेहादावपिप्रियइत्यर्थः । यत्रयस्मिन्देहेपवनःअत्रअस्मिन्देहेहरिः । यतोयत्रअसौ

**शापाद्वराप्सरसमेव हि तां विमोच्य शच्याकृतात्पतिपुरस्त्विति दर्पहेतोः ॥ गत्वा ददर्श पवनात्मजमृश्यमूके सह्ये क एनमवगच्छति सम्यगीशं ॥ ४५ ॥ देहेपि यत्र पवनोत्र हरिर्यतोसौ तत्रैव वायुरिति वेदवचः प्रसिद्धं ॥ कस्मिन्व हंत्विति तथैव हि सोवतारे तस्मात्स मारुतिकृते रविजं ररक्ष ॥ ४६ ॥ एवं स कृष्णतनुरर्जुनमप्यरक्षद्भीमार्थमेव तद रिं रविजां निहत्य ॥ पूर्वं हि मारुतिमवाप रवेः सुतोयं तेनास्य वालिनमहन् रघुपः प्रतीपं ॥ ४७ ॥**

हरिःतत्रैववायुःएतदर्थप्रतिपादकंप्रसिद्धंउपनिषत्स्वितिशेषः । 'वेदवचोरिततत्प्रतीकेनगृह्णाति कस्मिन्वहमिति कस्मिन्वहमुत्क्रांतेउत्क्रांतोभविष्यामिकस्मिन्वाप्रतिष्ठितेप्र तिष्ठास्यामी'त्यादिवेदवचःप्रसिद्धं । सवायुःअवतारेरामकृष्णाद्यवतारेतथैवमूलरूपवदेवप्रियइत्यर्थः । अवतारप्रियत्वंलेशतोदर्शयति । तस्मादिति । यस्माद्धनुमान्रामप्रियः तस्मात्कारणात्सरामःमारुतिकृतेहनुमत्प्रियार्थंरविजंसुग्रीवंररक्ष । अथवा वेदवचःइत्यनेन'इंद्रस्ययुज्यःसखे'त्येतदभिप्रेति । अत्रचेंद्रशब्दोमुख्यप्राणइतिऋग्भाष्यएवाचा र्यैःसप्रमाणमुक्तं । तथैवेतिसमुच्चये । तुशब्दोविशेषार्थः । कस्मिन्वहमित्यत्रप्राणशब्दश्रवणात्तस्मात्सअवतारेरामावतारे हनुमदर्थंसुग्रीवंररक्ष ॥ ४६ ॥ ननु स्वप्रयोजना र्थमेवारक्षदितिकिंनस्यादित्याशंक्यउदाहरणांतरमाह । एवमिति । भीमार्थंभीमप्रियार्थंतदरिंअर्जुनारिंरविजंकर्णं । हनुमानपिश्रेष्ठंवालिनंविहायसुग्रीवपरिग्रहणंकिमर्थमक रोदित्यतआह । पूर्वमिति । हियेनकारणेनअयंरवेःसुतःसुग्रीवःपूर्वंआदौमारुतिंअवापशरणमितिशेषः । तेनकारणेनअस्यसुग्रीवस्यप्रतीपंअहनजघान ॥ ४७ ॥

पवनस्यप्रियत्वेनकेवलंरामप्रियत्वेप्रयोजकमपितुसर्वदेवप्रियत्वेपीत्याह । एवमिति । एवंमारुतिप्रियत्वविषयेहेत्वंतरमस्तीत्यर्थः । सुराःशेषादयोदेवाः । मूलरूपेणपवनस्य वशेयतः । अतःसर्वदेवावताराःवानराः अत्ररामावतारे सुग्रीवंश्रिताःआश्रिताःमारुतिप्रियत्वादितिशेषः । परत्रकृष्णावतारे शक्रसूनुमर्जुनमाश्रिताःभीमप्रियत्वादितिशेषः । मूलरूपेअवतार रूपेचसर्वसुराश्रयत्वाद्वायोःहरिप्रियत्वंसिद्धं । उक्तार्थमुपसंहरति । हनूमतइति । यतोहनूमान्प्रियः तत्तस्मात्कारणात् तत्रऋश्यमूकंप्रतिहनूमतोनुग्रहाया गमदितियोजना ॥ ४८ ॥ ननु स्वसहायार्थमगमदितिकिंनस्यादित्यतआह । यत्पादेति । सर्वशक्तेःसर्वविषयेशक्तिमतःसहायाःकिंनैवेत्यर्थः ॥ ४९ ॥ विपुप्लुवुःदुद्रुवुरि

एवं सुराश्च पवनस्य वशे यतोतः सुग्रीवमत्र तु परत्र च शक्रसूनुं ॥ सर्वे श्रिता हनुमतस्तदनुग्रहाय तत्रागमद्रघुप तिः सह लक्ष्मणेन ॥ ४८ ॥ यत्पादपंकजरजः शिरसा बिभर्ति श्रीरब्जजश्च गिरिशः सह लोकपालैः ॥ सर्वेश्वर स्य परमस्य हि सर्वशक्तेः किं तस्य शत्रुहनने कपयः सहायाः ॥ ४९ ॥ समागते तु राघवे प्लवंगमाः ससूर्यजाः ॥ विपुप्लुवुर्भयार्दिता न्यवारयच्च मारुतिः ॥ ५० ॥ संस्थाप्याशु हरींद्रान् जानन्विष्णोर्गुणाननंतान् सः ॥ साक्षाद्ब्रह्म पिता सावित्र्येतेनास्य पादयोःपेते ॥ ५१ ॥ इति श्रीमदा० विरचिते श्रीमन्महाभा० श्रीरामचरिते हनूमद्दर्शनंनाम पंचमोऽध्यायः ॥ ५ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥ ॥

त्यर्थः । भयेनइमौवालिसंबंधिनौइतिभयेनार्दितान् पीडितान्न्यवारयत् ॥ ५० ॥ सत्रेकएनमवगच्छतिसर्वगीशमित्युक्तार्थंविशदयति । जानन्निति । विष्णोरनंतानूगु णान्वेदोक्ताननंतान्गुणानित्यर्थः जानन्सहनुमान्संस्थाप्यकिंचिद्दूरइतिशेषः । असौरामःसाक्षाद्ब्रह्मपितानतपचारेणेत्यर्थः । इतिएतेनब्रह्मपितेतिज्ञानेन अस्यरामस्यपादयोःपेतेननामेत्यर्थः । एतेनहनूमतायेनपतितमितिभावेलिडितिकेचित् ॥ ५१ ॥ यंगंगाजमद० ॥ इतिश्रीतात्प० पदार्थदी० पंचमोऽध्यायः ॥ ५ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥



श्रीगुरुभ्योनमः ॥ ॐ किष्किंधाकांडकथांनिरूपयति । उत्थाप्येत्यादिना । चक्रांकितेनचक्रचिन्हितेनएनंउत्थाप्य अनेनहनूमतानुतःस्तुतःसरामःअनेनहनूमतासहसंविदं देवकार्यसाधनरूपंविचारंकृत्वा हसन्अस्यहनूमतःअंसंस्कंधं ॥ १ ॥ कपींद्रंसुग्रीवंप्रतिहुतभुजःअग्नेःप्रमुखेअभिमुखेसान्निधावित्यर्थः । शीघ्रंस्वस्मृतिमात्रादेवेत्यर्थः । शाश्वतांसर्वकल्पेषुविद्यमानांनिजानांभक्तानां आर्तिंदुःखंहरतीतितथा तेनरामेणसहअस्यसुग्रीवस्यसख्यंचकारअकारयत् ॥ २ ॥ सरामःअस्यसुग्रीवस्यदुःखंवालिकृतदुःखंहरीश्वरोपि सीतानुमार्गणकृतेसीतान्वेषणार्थं । अथप्रतिज्ञानंतरं ससुग्रीवःवालिनाक्षिप्तांनिरस्तांदुंदुभितनुंदुंदुभिनामराक्षसदेहंसमदर्शयत् । वालिनादूरेक्षिप्तांदुंदुभितनुंयदिततोतिदूरेक्षिपसितर्हि त्वंवालिवधेसमर्थइतिभावेन समदर्शयदित्यर्थः ॥ ३ ॥ तांदुंदुभितनुंवीक्ष्यअंगुष्ठमात्रचलनात् अंगुष्ठक्षेपणमात्रादित्यर्थः । योजनशतेसंप्रास्यगाढंक्षिप्त्वा

ॐ उत्थाप्य चैनमरविंददलायताक्षश्चक्रांकितेन वरदेन करांबुजेन ॥ कृत्वा च संविदमनेन नुतोस्य चांसं प्रीत्या रुरोह स हसन्सह लक्ष्मणेन ॥ १ ॥ आरोप्य चांसयुगुलं भगवंतमेनं तस्यानुजं च हनुमान् प्रययौ कपींद्रं ॥ सख्यं चकार हुतभुक्प्रमुखे च तस्य रामेण शाश्वतनिजार्तिहरेण शीघ्रं ॥ २ ॥ श्रुत्वास्य दुःखमथ देववरः प्रतिज्ञां चक्रे स वालिनिधनाय हरीश्वरोपि ॥ सीतानुमार्गणकृतेथ स वालिनैव क्षिप्तां हि दुंदुभितनुं समदर्शयच्च ॥ ३ ॥ वीक्ष्यैव तां निपतितामथ रामदेवः सोंगुष्ठमात्रचलनादतिलीलयैव ॥ संप्रास्य योजनशतेन तयैव चोर्वीं सर्वान्विदार्य दितिजानहनद्रसास्थान् ॥ ४ ॥ शर्वप्रसादजबलाद्दितिजानवध्यान्सर्वान्निहत्य कुणपेन पुनश्च सख्या ॥ भीतेन वालिबलतः कथितः स्म सप्त तालान् प्रदर्श्य दितिजान्सुदृढांश्च वज्रात् ॥५॥ एकैकमेषु स विकंपयितुं समर्थः पत्राणि लोप्तुमपि तूत्सहते न शक्तः ॥ विष्वक्स्थितान्यदि भवान् प्रतिभेत्स्यतीमानेकेषुणा तर्हि वालिवधे समर्थः ॥ ६ ॥

अथ क्षेपणानंतरं तयातन्वाउर्वींविदार्यरसास्थान्रसातलेस्थितान्सर्वान्दितिजान्अहनत्अहन् ॥४॥ कुणपेनशवेननिहत्यास्थितोरामःतेनसमानकर्तृत्वोपपत्तिः । पुनश्चशवक्षेपणानंतरमपिवालिबलतःभीतेनसख्यासुग्रीवेणवज्रात्सुदृढान्अतिकठिनान्दितिजान्दैत्यस्वरूपानसप्ततालान्सप्तसंख्याकान्तालवृक्षान्प्रदर्श्यकथितःस्मउदितोभूत् ॥५॥ रामंप्रतिसुग्रीवेणोक्तंदर्शयति । एकैकमित्यादिना । सःवालीएषुसप्ततालेषुमध्येएकैकंएकमेकंतालंकंपयितुंचालयितुंसमर्थःशक्तः पत्राणितालपत्राणिलोप्तुंछेत्तुंउत्सहतेउद्योगंकरोति अपितु तथापिनशक्तःभवान्विष्वक्स्थितान्वक्रस्थानिमानतालान्एकेषुणाएकेनशरेणयदिप्रतिभेत्स्यतिछिंद्यात्तर्हि ॥ ६ ॥ ॥ ॥

ननुसुग्रीवः अरिबलात्बहुगुणाधिकंबलंकिमर्थमैच्छदित्याशंकायांनीतिरूपप्रमाणमाह । जेतुमिति । अरिबलाच्चतुर्गुणबलाधिकः पुमान्जेतुंअरिमितिशेषः । प्रभुःसमर्थः स्यात्शताधिकबलः अतिशयबलत्वेनहंतुंसुशक्तः स्याद्धियस्मात्तस्माद्धरिहयः इंद्रः तस्यात्मजोवालीतस्यबाहुभ्यांआलोप्यानिछेत्तुमशक्यानिपत्राणियेषांतेतथातानुइमान् तालान्विभिद्यछित्त्वा ममसंशयंवालिवधसामर्थ्यविषयेविद्यमानंसंशयंआशुभिंधिछिंधि ॥ ७ ॥ रामःअस्यसख्युर्वाक्यंश्रुत्वा धातुर्वरादखिलपुंभिःसर्वपुरुषैरभेद्यंरूपंयेषांतेत थातान् । ब्रह्मत्वंचतुर्मुखत्वंआप्तुंअचलंयथास्यात्तथातपसिप्रवृत्तान्दितेःसुतान्दैत्यात्मकान्तानतालान्अवमृश्यज्ञात्वा एकेषुणासपदिशीघ्रंतान्तालान्प्रबिभेदविददार

जेतुं चतुर्गुणबलो हि पुमान् प्रभुः स्याद्धंतुं शताधिकबलोतिबलं सुशक्तः ॥ तस्मादिमान्हरिहयात्मजबाहुलोप्य पत्रान्विभिद्य मम संशयमाशु भिंधि ॥ ७ ॥ श्रुत्वास्य वाक्यमवमृश्य दितेः सुतांस्तान्धातुर्वरादखिलपुंभिरभेद्यरूपान् ॥ ब्रह्मत्वमाप्तुमचलं तपसि प्रवृत्तानेकेषुणा सपदि तान् प्रबिभेद रामः ॥ ८ ॥ संधाय कार्मुकवरे निशिते तु बाणेथाकृष्य दक्षिणभुजेन तदा प्रमुक्ते ॥ रामेण सत्वरमनंतबलेन सर्वे चूर्णीकृताः सपदि ते तरवो रवेण ॥ ९ ॥ भित्त्वा च तान्स गिरिकुं भगवत्प्रमुक्तः पातालसप्तकमथात्र च ये त्ववध्याः ॥ नाम्ना सुराः कुमुदिनोब्जजवाक्यरक्षाः सर्वांश्च तानदहदाशु शरः स एकः ॥ १० ॥ ॥ ॥ ॥ ॥

॥८॥ छेदनप्रकारंविविच्याह । संधायेति । तदातालच्छेदनसमयेअनंतबलेनरामेणकार्मुकवरेचापोत्तमेबाणंसंधायसंयोज्य । अथसंधानानंतरं दक्षिणभुजेनाकृष्यसत्वरंजवेनसहितंयथास्यात्तथानिशितेक्रूरेबाणेप्रमुक्तेसति तेसर्वेतरवःसप्ततालवृक्षाःरवेणशब्देनचूर्णीकृताः ॥९॥ राममुक्तशरप्रभावंवर्णयति । भित्त्वेति । भगवताप्रमुक्तःसएकःशरः तानसप्ततालान्भित्त्वाविदार्य गिरिभिःसहितासगिरिःसाचसाकुश्चभूमिश्चतथातां पर्वतसहितांपृथ्वीमित्यर्थःभित्त्वापातालसप्तकंचभित्त्वा अथपातालसप्तकभेदनानंतरं अत्रपातालसप्तकेषुअब्जजस्यवाक्यमेवरक्षायेषांतेतथा अतएववध्याः नाम्नाकुमुदिनःकुमुदिनामानइत्यर्थः । येअसुराअभूवन्निति शेषः । तान्सर्वान्अदहतददाह ॥ १० ॥

एतत्पूर्वोक्तंकर्मनचित्रंकुतइत्यतआह । यदिति । यस्यविष्णोःप्रेरणात्सपवनस्यसप्रकृतिकस्यलक्ष्मीसाहितस्य रुद्रेणकालेनकालाभिमानिनासुपर्णेनकर्मणाकर्माभिमानिनें द्रेण आदिपदेनकामाद्याविवक्ष्यंते । एतैःसहितस्यलोकस्यप्रवृत्तिःप्रवर्तनंभवेत् । ननु रामकृतंकर्मअन्यसाध्यंभवेत्किमित्यतआह । तदपीति । तदपितथापिइदंसप्तत लच्छेदनादिकर्मनअन्यसाध्यंअनन्यसाध्यं । तदपियद्यपिअनन्यसाध्यंतथापिअभितोरुबलस्येतिहेतुगर्भविशेषणत्वात्तथालोकप्रवृत्तिकर्तृत्वाद्विष्णोश्चित्रंन तदपीतिआ वर्त्यायोज्यं । कालाभिमानीत्यत्र 'कालात्मकःसोथसुपर्णआसीदि'तिमानं कर्माभिमानीत्यत्र क्रियात्मापाकशासनइतिमानं ॥ ११ ॥ तंरामंअग्रेसःवालीअनुजस्यरा वंसिंहनादंआश्रुत्यश्रुत्वा दयितयावालिभार्ययातारयामायाहीतिप्रतिवारितःसन्नपि बिलात्बिलसदृशपुरात्निर्गत्येतिशेषः । एनमपिसुग्रीवमपिअभ्यगात्अभिमुखोगा

**नैतद्विचित्रममितोरुबलस्य विष्णोर्यत्प्रेरणात्सपवनस्य भवेत्प्रवृत्तिः॥ लोकस्य सप्रकृतिकस्य सरुद्रकालकर्मादि कस्य तदपीदमनन्यसाध्यं ॥ ११ ॥ दृष्ट्वा बलं भगवतोथ हरीश्वरोसावग्रे निधाय तमगात्पुरमग्रजस्य ॥ आश्रु त्य रावमनुजस्य बिलात्स चागादभ्येनमाशु दयिताप्रतिवारितोपि ॥ १२ ॥ तन्मुष्टिभिः प्रतिहतः प्रययावशक्तः सुग्रीव आशु रघुपोपि हि धर्ममीक्षन् ॥ नैनं जघान विदिताखिललोकचेष्टोप्येनं स आह युधि वां न मया विविक्तौ ॥ १३ ॥ सौभ्रात्रमेष यदि वांछति वालिनैव नाहं निरागसमथाग्रजनिं हनिष्ये ॥ दीर्घः सहोदरगतो न भवेद्धि कोपदीर्घोपि कारणमृते विनिवर्तते च ॥ १४ ॥ ॥ ॥ ॥**

दित्यर्थः ॥ १२ ॥ तस्यवालिनःमुष्टिभिःप्रययौ युद्धस्थानात्प्रदुद्रावेत्यर्थः । रघुपोपिसमर्थोपिरामःधर्मईक्षन्दर्शयन्नितियावत् । एनंवालिनंनजघान विदिताज्ञाताअखि ललोकस्यचेष्टाव्यापारोयेनसतथासर्वज्ञोपीत्यर्थः । सरामःएनंसुग्रीवमाहकिमिति । युधियुद्धेमयावांयुवांप्रथमाद्विवचनार्थेव्ययमेतत्वांयुवयोर्युधीतिवा । अत्रविभक्ति'पारि णयेनयोज्यं विविक्तौविविच्य नज्ञातावित्यर्थः ॥ १३ ॥ प्रकृतधर्मंविशदयति । सौभ्रात्रमित्यादिना। एषःसुग्रीवःवालिनैवसौभ्रात्रंस्नेहंयदिवांछतिवांछेतइच्छेत् अथतर्हि अहंनिरागसंनिरपराधिनं अग्रजनिं वालिनंनहनिष्ये । परस्परंवधमिच्छतोःकथंस्नेहंस्यादित्यतआह । दीर्घइति । सहोदरेषुसमानोदरभ्रातृषुगतोविद्यमानःकोपःदीर्घः बहुकालस्थोनभवेत् । दीर्घोपिबहुकालीनोपिकारणंऋतेद्वेषनिवृत्तिहेतुंविना विनिवर्ततेनिवृत्तिंयाति ॥ १४ ॥ ॥ ॥

उक्तार्थंविशेषेणस्पष्टयति । कोपइति । सहोदरजनेस्थितःकोपःपुनःअंतकालेमरणसमयेनिवृत्तिंउपगच्छति । वालिसुग्रीवकर्णादिव्यावृत्त्यर्थंप्रायइत्युक्तं उभयोर्मध्यइति वाक्यशेषः । एकस्यभ्रातुर्भंगेसतितापयतीतितापकः । तापकारीत्यर्थः । भवतीतिशेषः । इतिकारणात्अपास्तःनिरस्तःदोषःअनपराधिहननादिदोषोयस्यसतथा । रामः इहप्रथमयुद्धेअपास्तदोषःविरोधत्यागादनपराधीवालीनिहंतुंनयोग्यइतिमेनेज्ञातवानित्यर्थः ॥ १५ ॥ रवेःसुतस्यसुग्रीवस्य भावीतापः वालिवधेनभविष्यद्दुःखंनभवेत्इतिवि त्जानन्रामःतस्मान्निवृत्तिंउपगच्छतितापकश्चभवति । यस्मात्तस्मादित्यर्थः । बंधुजनगेसहोदरजनस्थेविरोधेजनितेसतितस्यएकतमस्य भ्रातुःअनुबंधुभिःअनुकूलमित्रैः आशुसंधानमनपेक्ष्येत्यर्थः वधःअन्यतमस्यवधोनकार्यइति इहवालिसुग्रीवयुद्धेधर्मंप्रदर्शयितुमेव तंवालिनं नजघान ॥ १६ ॥ ननु नमयाविविक्ताविवित्युक्तमेवसत्यंकिं

**कोपः सहोदरजने पुनरंतकाले प्रायो निवृत्तिमुपगच्छति तापकश्च ॥ एकस्य भंग इति नैव झटित्यपास्तदोषो निहंतुमिह योग्य इति स्म मेने ॥ १५ ॥ तस्मान्न बंधुजनगे जनिते विरोधे कार्यो वधस्तदनुबंधुभिराश्वितीह ॥ धर्मं प्रदर्शयितुमेव रवेः सुतस्य भावी न ताप इतिविद्व न तं जघान ॥ १६ ॥ यः प्रेरकः सकलशेमुषिसंततेश्च तस्याज्ञता कुत इहेशवरस्य विष्णोः ॥ तेनोदितोथ सुदृढं पुनरागतेन वज्रोपमं शरममूमुचदिंद्रसूनौ ॥ १७ ॥ रामाज्ञयैव लतया रविजे विभक्ते वायोः सुतेन रघुपेण शरे प्रमुक्ते ॥ श्रुत्वास्य शब्दमतुलं हृदि तेन विद्ध इंद्रात्मजो गिरिरिवापतदाशु सन्नः ॥ १८ ॥ भक्तो ममैव यदि मामभिपश्यतीह पादौ ध्रुवं मम समेष्यति निर्विचारः ॥ योग्यो वधो न हि जनस्य पदानतस्य राज्यार्थिना रविसुतेन वधोर्थितश्च ॥ १९ ॥**

नस्यादित्यतआह । यइति । सकलानांशेमुषिसंततेर्बुद्धिसमूहस्यबुद्धिर्मनश्चित्तमित्यवांतरभेदवत्त्वात् शेमुषिसंततेरित्युक्तं यःप्रेरकःतस्यरामस्वरूपस्यईशात्मनोभिमानी रुद्रादरस्यश्रेष्ठस्यविष्णोःइहअयंवालीअयंसुग्रीवइतिविवेकविषयेअज्ञताकुतःनैवेत्यर्थः । प्रकृतमनुसरति । तेनेति । आगतेनयुद्धान्निवृत्तेनतेनसुग्रीवेणपुनःवालीहंतव्यइ तिपूर्वमुक्तत्वात्पुनरित्युक्तं सुदृढंनिश्चयंयथास्यात्तथोदितःवालीहंतव्यइत्युदितोरामः अथवधनिश्चयोक्त्यनंतरं ॥ १७ ॥ यःप्रेरकइत्यनेनयद्यप्यज्ञानंपरिहृतंतथापिनमया विविक्ताविविरामोक्तेर्निर्वाहकंदर्शयति । रामेति । वायोःसुतेनेतिकर्त्रालतयापुष्पमालयारविजेविभक्तेसति समानरूपाद्वालिनः विलक्षणेकृतेसति अस्यबाणस्यशब्दं श्रुत्वातेनबाणेनविद्धःसन्मूर्छितःसन् ॥ १८ ॥ रामोवालिभीत्याअदृश्यतयाजघानेतिग्रंथांतरोक्तविरोधंश्लोकद्वयेनपरिहरति । भक्तइत्यादिना । एषोवालीयदि

अभिपश्यतितर्हि इहशत्रुपक्षस्थेमयीत्यर्थः । निर्विचारः शत्रुपक्षस्थःप्राप्योवानवेतिविचाररहितःसन्ममपादौध्रुवंनिश्चयेनसमेष्यति तर्हिपादौप्राप्तस्यवधःशक्किंनाक्रियत इत्यतआह । योग्यइति । पादयोरानतस्यप्रणतस्येत्यर्थः । जनस्यवधःयोग्योनेतिहिप्रसिद्धिः । धर्मशास्त्रेष्वितिशेषः । ननु वालिवधकरणेकिंनिमित्तमित्यतआह । राज्येति । अर्थितःप्रार्थितःवालिनइतिशेषः ॥ १९ ॥ तत्तस्मात्पूर्वं आदौप्रणतस्यअभीष्टंकार्यं प्रणतस्यवधःशस्तोश्लाघ्योनैव हियस्मात्तस्मात्कारणादिहयुद्धेनिहन्मीतिविचार्यतंवालिनंजघान ॥ २० ॥ दृष्टिगोचरप्रतिभटस्यबलंत्वामेवयास्यतीतिरुद्रदत्तवरस्यवालिनोभयेनादृश्यतनुःरामोवालिनंजघानेति पुराणगतविरोधंप्रमाणेनतावत्परिहरन्नाह । यइति । बलस्यप्रेरकःनित्यमितिसर्वत्रसंबध्यते । प्रेरकत्वेहेतुगर्भविशेषणमाह । पूर्णेति । पूर्णेअव्ययेनाशरहितेउच्चेउत्कृष्टेबलवीर्येतनुर्यस्यसतथा । अतएवस्वतंत्रोयोरामःतस्यरामस्यअयंवानरःवालीकिंकर्ताकिंकरिष्यतीत्यर्थः । कथंभूतस्य दृष्टेःपंथाइतिदृष्टिपथःदृष्टिपथंगच्छतीतितथातस्यदृष्टिगोचरस्येत्यर्थः । रुद्रवराज्जेष्यतीत्यतआह ।

कार्यं ह्यभीष्टमपि तत्प्रणतस्य पूर्वं शस्तो वधो न पदयोः प्रणतस्य चैव ॥ तस्माददृश्यतनुरेव निहन्मि शक्रपुत्रं त्विति स्म तमदृश्यतया जघान ॥ २० ॥ यः प्रेरकः सकललोकबलस्य नित्यं पूर्णाव्ययोच्चबलवीर्यतनुः स्वतंत्रः ॥ किं तस्य दृष्टिपथगस्य च वानरोयं कर्तेशचापमपि येन पुरा विभग्नं ॥ २१ ॥ सन्नेथ वालिनि जगाम च तस्य पार्श्वं प्राहैनमार्द्रवचसा यदि वांछसि त्वं ॥ उज्जीवयिष्य इति नैच्छदसौ त्वदग्रे को नाम नेच्छति मृतिं पुरुषोत्तमेति॥२२॥ कार्याणि तस्य चरमाणि विधाय पुत्रं त्वग्रे निधाय रविजः कपिराज्य आसीत् ॥ रामोपि तद्गिरिवरे चतुरोथ मासान् दृष्ट्वा घनागममुवास सलक्ष्मणोसौ ॥ २३ ॥ ॥ ॥ ॥ ॥

ईशेति । येनरामेणईशचापंजनकेनलब्धंरुद्रधनुःपुरास्वयंवरकालेभग्नंतथाचतद्रस्त्वकिंचित्करइतिभावः ॥ २१ ॥ रामइत्यध्याहारः वालिनिसन्नेसतिमूर्छितेसति अथतस्यवालिनःपार्श्वंसमीपंएनंवालिनंस्नेहामृतेनआर्द्रवचसावाक्यामृतेनआर्द्रीकृतत्वाद्विमूर्छितंवालिनंप्राहेतिभावः । हेवालिन् जीवनमितिशेषः यदिवांछसितर्हि । उज्जीवयिष्यइतिपूर्वेणसंबंधः । असौवालीइतिब्रुवन्नैच्छत् जीवनमितिशेषः । इतीतिकिंहेपुरुषोत्तमत्वदग्रेकोनामकःप्रसिद्धःपुरुषःज्ञानीत्यर्थः । मृतिंनेच्छतिसर्वोपीच्छतीत्यर्थः । असौविश्वकर्तेत्यर्थः । कश्चतुर्मुखःस्वनियतकालेइच्छतीतिनामश्रुत्यादौप्रसिद्धिः । यःनेच्छेत्सकःकुत्सितःपुरुषइतिनामप्रसिद्धिः । एवंसतिममजीवनंकथंयुक्तमितिब्रुवन्नैच्छादितिसंबंधः ॥ २२ ॥ रविजःतस्यपुत्रंअंगदंअग्रेनिधायेत्यनेन पितृकर्माणिपुत्रएवमुख्याधिकारीत्युक्तं । चरमाणिकार्याणिप्रेतसंस्कारकर्माणिविधाय आसीद्राजेतिशेषः । अथसुग्रीवस्यराज्यप्राप्त्यनंतरं । रामोपिघनानांमेघानांआगमंआगमनंवर्षर्तुमित्यर्थः दृष्ट्वा सचासौगिरिवरश्चतथातस्मिन्माल्यवति ॥ २३ ॥ ॥

अथराज्यप्राप्त्यनंतरं । रामेणकृतःउपकारोयस्यतस्मिन्स्त्रीराज्यादिविषयेषुअतिसक्तेकपीनांक्षितिपेराज्ञिप्रविस्मृतेसति रामोपकारमितिशेषः । हनुमानप्रसह्यतंविनिंद्येत्यर्थः उवाच ॥ २४ ॥ किमिति तेत्वयाकार्येसीतानुमार्गणरूपकार्येविस्मृतिर्विस्मरणंनकार्यानकर्तव्यंकुतइत्यतआह । सइति । हियस्मात्तस्मादितिसंबंधः । तेत्वयास्वयंहिस्वेनैवकर्तुंअभीष्टंनचेत्अभीष्टंचेन्नभवतितर्हि ध्रुवंनिश्चयेनतेहित्वयैवबलेनापिबलादपिअद्येदानींकारयामीतिहीत्युभयत्रसंबध्यते ॥ २५ ॥ सहनुमानसंन्निधौसमीपेएवंपूर्वोक्तप्रकारेणउक्त्वा सप्तसुद्वीपेषुजंबुप्लक्षादिद्वीपेष्वपिस्थितान्वानरान्प्रति संमेलनाय वानराणामितिशेषः । आशुगतीन्शीघ्रगतिमतःवानरान्सुग्रीवसमीपस्थवानरान्प्रस्थापयामास प्रेषयामासेत्यर्थः । ननु कपीश्वरेसुग्रीवेसतिहनुमतःप्रेषणेकाशक्तिरित्यतआह । समस्तशइति । समस्तशःसर्वेषांप्रभुःईश्वरः । ननु ताराद्यपेक्षया असमर्थानांविनतादिकपीनांलवणादिसप्तसमुद्रतरणेशक्तिरस्तीत्युक्तंशतयोजनयामलवणसमुद्रैकदेशप्लवनेताराद्याःनसमर्थाइतिचवक्ष्यते । इदमुभयविरुद्धमितिचेन्न भाविकार्यानु

अथातिसक्ते क्षितिपे कपीनां प्रविस्मृते रामकृतोपकारे ॥ प्रसह्य तं बुद्धिमतां वरिष्ठो रामांघ्रिभक्तो हनुमानुवाच ॥ २४ ॥ न विस्मृतिस्ते रघुवर्य कार्ये कार्या कथंचित्स हि नोऽभिपूज्यः ॥ न चेत्स्वयं कर्तुमभीष्टमद्य ते ध्रुवं बलेनापि हि कारयामि ॥ २५ ॥ स एवमुक्त्वा हरिराजसंनिधौ द्वीपेषु सप्तस्वपि वानरान् प्रति ॥ संमेलनायाशु गतीन् स्म वानरान् प्रस्थापयामास समस्तशः प्रभुः ॥ २६ ॥ हरीश्वराज्ञाप्रणिधानपूर्वकं हनूमता ते प्रहिता हि वानराः ॥ समस्तशैलद्रुमखंडसंस्थितान् हरीन्समादाय तदाभिजग्मुः ॥ २७ ॥ तदैव रामोपि हि भोगसक्तं प्रमत्तमालक्ष्य कपीश्वरं प्रभुः ॥ जगाद सौमित्रिमिदं वचो मे प्लवंगमेशाय वदाशु याहि ॥ २८ ॥ ॥ ॥ ॥

सारेणविनतादीनांतादृशीशक्तिःरामेणदत्ता तारादीनांचहनुमद्बलप्रकाशनार्थंशक्तिर्नदत्तेत्यवगंतव्यं । अयमेवार्थोक्तःस्कांदेतथाहि । 'विनतस्यसुपर्णस्यतथाशतवलेरपि । तथातत्परिवाराणांकपीनांरामसेविनां । अत्यायामसमुद्राणांतरणेशक्तिरूर्जिता । इच्छयारामदेवस्यतदासीत्करुणात्मनः । हनूमतश्चसामर्थ्यप्राकट्यार्थंमहात्मनः । अंगदादिकपींद्राणांलवणांबुधितारणे । नैवासीत्तादृशीशक्तीरामस्यैवाज्ञयातदा । अतःसर्वकपींद्राणांलवणांबुधितारणे । असामर्थ्यज्ञापनार्थंरामःसेतुंबबंधहेति ॥ २६ ॥ हनुमताप्रहितास्तेविनतादयोवानराःहरीश्वरस्यआज्ञयाप्रणिधानंअंगीकारपूर्वकंयथास्यात्तथाशैलाःपर्वताःद्रुमाणांवृक्षाणांखंडःसमूहोयेषुतेतथा । वनानीत्यर्थः । समस्ताश्चतेशैलाश्चद्रुमखंडाश्चतथोक्ताःतेषुसंस्थितान्हरीन्समादायतदातत्रसुग्रीवराजधानींप्रतीत्यर्थः । अभिजग्मुः ॥ २७ ॥ तदैवद्वीपस्थवानरागमनकालेभोगसक्तंविषयेष्वासक्तंहरीश्वरंआलक्ष्य । सौमित्रिंलक्ष्मणंजगाद किमिति । मेइदवक्ष्यमाणंवचःप्लवंगमानांकपीनांईशायवद आशुयाहिसुग्रीवंप्रतीतिशेषः ॥ २८ ॥ ॥ ॥

इदमुक्तंविशदयति । यदीति । इंद्रसुतस्यवालिनोमार्गंत्वांनयामिप्रापयामिहनिष्यइतिभावः । प्रतिपादितेसंपादितेसति मदेनउद्धताःप्रमत्ताःप्रतिकर्तुंप्रत्युपकारंकर्तुंनेशतेसमर्थानभवंति । ईशऐश्वर्यइत्यस्यधातोः लडात्मनेपदिप्रथमपुरुषबहुवचनं नेच्छंतीत्यर्थः ॥ २९ ॥ ईड्येनपूज्येनरामेणइतिपूर्वोक्तप्रकारेणसमीरितेसति तदातत्रसुग्रीवपुरींप्रति तपनःसूर्यःतत्पुत्रस्तापनिःसुग्रीवःतंलक्ष्मणंदृष्ट्वा तेनलक्ष्मणेनसहैवत्वरन्जवेनअंतिकंसमीपं ॥ ३० ॥ साधुवचोभिःशिक्षारूपसद्वाग्भिः आश्वित्यनेनसुग्रीवस्यभक्त्याधिकारित्वंसूचितंप्रसन्नंरामेभक्तिमदित्यर्थःचेतोंतःकरणंयस्यसतथातस्मिन्तंसुग्रीवं ननंदतुतोप ॥ ३१ ॥ प्रभुःरामःसंभ्रमेणसंतोषेणसहितंसचसुग्रीवः

**यदि प्रमत्तोसि मदीयकार्ये नयाम्यहं त्वेंद्रसुतस्य मार्गं ॥ प्रायः स्वकार्ये प्रतिपादिते हि मदोद्धतानप्रतिकर्तुमीशते ॥ २९ ॥ इतीड्यरामेण समीरिते तदा ययौ सबाणः सधनुः स लक्ष्मणः ॥ दृष्ट्वैव तं तेन सहैव तापनिर्भयाद्ययौ रामपदांतिकं त्वरन् ॥ ३० ॥ हनूमतः साधुवचोभिराशु प्रसन्नचेतस्यधिपे कपीनां ॥ समागते सर्वहरिप्रवीरैः सहैव तं वीक्ष्य ननंद राघवः ॥ ३१ ॥ ससंभ्रमं तं पतितं पदाब्जयोस्त्वरन्समुत्थाप्य समाश्लिषत्प्रभुः ॥ स चोपविष्टो जगदीशसन्निधौ तदाज्ञयैवादिशदाशु वानरान् ॥ ३२ ॥ समस्तदिक्षु प्रहितेषु तेन प्रभुर्हनूमंतमिदं बभाषे ॥ न कश्चिदीशस्त्वदृतेस्ति साधने समस्तकार्यप्रवरस्य मेस्य ॥ ३३ ॥ अतस्त्वमेव प्रतियाहि दक्षिणां दिशं समादाय मदंगुलीयकं ॥ इतीरितोसौ पुरुषोत्तमेन ययौ दिशं तां युवराजयुक्तः ॥ ३४ ॥ समस्तदिक्षु प्रतियापिता हि ते कपीश्वराज्ञामुपधार्य मासतः ॥ समाययुस्तेंगदजांबवन्मुखाः सुतेन वायोः सहिता न चाययुः ॥ ३५ ॥**

तदाज्ञयारामाज्ञयासन्निधौउपविष्टःआसीनःसन् तदाज्ञयैववानरान्आदिशत्दिदेश सीतानुमार्गणार्थमितिशेषः तदाज्ञयेत्युभयत्रसंबध्यते ॥ ३२ ॥ तेनसुग्रीवेणप्रहितेषुप्रेषितेषुसत्सुप्रभुःरामःबभाषे किमिति । मेसमस्तकार्येषुप्रवरस्यमुख्यस्य अस्यसीतान्वेषणव्याजात्मकदेवकार्यस्यसाधनेसंपादनेत्वत्तत्वत्तःऋतेकश्चित्पुरुषःईशःसमर्थोनास्ति यतः ॥ ३३ ॥ अतःकारणात्ममअंगुलीयकमंगुलीयभूषणंमुद्रिकामितियावत् । याहीतिईरितोसौहनूमान्युवराजेनअंगदेनतांदाक्षिणां ॥ ३४ ॥ प्रतियापिताःप्रेषिताःतेवानराःआज्ञामुपधार्यउपगृह्यमासतःमासमात्रेणसमाययुः । वायोःसुतेनसहिताःयुक्तास्तेप्रसिद्धाःकपिश्रेष्ठाइत्यर्थः । अंगदादयःनचाययुःमासतइतिशेषः ॥३५॥

समस्तदुर्गेषुसर्वागम्यस्थानेषुप्रवरंअतएवदुरासदंदुष्प्राप्यंविंध्यगिरिंविमार्गतां अत्रापिसीतान्वेषणंकुर्वतांमहात्मनांउत्तमानांअंगदादीनांहरिषुराजतेअसौहरिराट् हरिराज्ञासुग्रीवेणउदीरितःसकालःमासमात्रावधिकःकालःगतःअतिक्रांतः अथमासानंतरं महाद्भुतंअत्याश्चर्यकरंविलंगुहांसमासदन्नापुः ॥ ३६॥ महाद्भुतत्वेनिमित्तमाह । कृतमिति । मयेनमयनाम्नादैत्यवर्धकिनाकृतं । अतएवातिविचित्रंअतएवउत्तमंएतादृशंतत्विलंतारःवालिभार्यातारायाःभ्रातानाम्नातारःसंनिधिंसमीपंनयामःनयास्यामः । कुतःअस्यसुग्रीवस्यसमयःमासमात्रावधिकालइत्यर्थः । नोस्माभिर्विलंघितः ॥ ३७ ॥ नयामइत्युक्तकारणंदर्शयति । दुरासदइति । दुरासदःदुष्प्राप्यःनसेव्यइत्यर्थः । अतिचंडंअतिक्रूरंशासनंआज्ञायस्यसतथा त्वामपियुवराजमपिअहंआदिर्येषांतेमदादयःस्वार्थेकप्रत्ययः । तान्किंकिम्वितिकैमुत्यन्यायेनाह । यतोहनिष्यतितत्तस्माद्बिलंआप्यसुखंयथास्यात्तथा इहसर्वेवसामः असौसुग्रीवःइहकिंआचरेत । किंकिंकरिष्यतीत्यर्थः ॥ ३८ ॥ ननु दुरासदत्वात्सोस्तु रामःकथंत्याज्यइत्यतआह । नचेति । सदावनचारिणांवनस्थफलादिभक्षकानां यद्वा वनेचरंतितेवनचारिणःतेषांअटतामित्यर्थः । नःरामेणप्रयोजनंनःस्वकार्यकरणाद्रामःप्रतिकूलमाचरेदित्यतआह । नचेति । सरामःनक्षमःनसमर्थः । ततःकारणात्ममइयंईदृशीमतिःबुद्धिःसुविनिश्चिता ॥ ३९ ॥ इतिपूर्वोक्तप्रकारेणईरितंउक्तंमातुलवाक्यंआशुअविचार्य सादरंप्रीतिसहितंयथास्यात्तथा आददेअंगीचकार वाक्यंउवाच किमिति । लंघितशासनानांआज्ञाभंगंकुर्वतामित्यर्थः । नोस्माकंक्षमीक्षमावान्नचनैवभवेत् ॥ ४० ॥ क्षमीनभवेदित्युक्तेःकारणंस्पष्टयति । राज्येति । येनसुग्रीवेणघातितःहिंसितः कथंभूतेनसुनृशंसकेन समीचीनहिंसकेन दाराःअग्रजभार्याःहृताःबलेस्थितःरामाश्रयाद्बलीत्यर्थः । ससुग्रीवःशासनंआज्ञां अतिगानतिक्रांतान् निराश्रयान्दुर्बलकान्निर्बलान्नःकथंरक्षति नकथंचदित्यर्थः ॥ ४१ ॥

समस्तदुर्गप्रवरं दुरासदं विमार्गतां विंध्यगिरिं महात्मनां ॥ गतः स कालो हरिराडुदीरितः समासदंश्चाथ बिलं महाद्भुतं ॥ ३६ ॥ कृतं मयेनातिविचित्रमुत्तमं समीक्ष्य तत्तार उवाच चांगदं ॥ वयं न यामो हरिराजसन्निधिं विलंघितो नः समयो यतोस्य ॥३७॥ दुरासदोसावतिचंडशासनो हनिष्यतित्वामपि किं मदादिकान् ॥ अगम्यमेतद्बिलमाप्य तत्सुखं वसाम सर्वे किमसाविहाचरेत् ॥ ३८॥ नचैव रामेण सलक्ष्मणेन प्रयोजनं नो वनचारिणां सदा ॥ न चेह नः पीडयितुं स च क्षमः ततो मयेयं सुविनिश्चिता मतिः ॥ ३९ ॥ इतीरितं मातुलवाक्यमाशु स आददे वालिसुतोपि सादरं ॥ उवाच वाक्यं च न नो हरीश्वरः क्षमी भवेल्लंघितशासनानां ॥ ४० ॥ राज्यार्थिना येन हि घातितोग्रजो हृताश्च दाराः सुनृशंसकेन ॥ स नः कथं रक्षति शासनातिगान्निराश्रयान् दुर्बलकान् बलेस्थितः ॥ ४१ ॥

॥ ॥

तथेतित्वयायथोक्तंतथाकर्तव्यमितिजांबवन्मुखाःसर्वेपिसहसंभूयऊचुःउक्तवतामिदंकष्टमित्यर्थः । अथकपिविचारानंतरं हनूमान्तेषांअंगदादीनांऐकमत्यंएककार्यविषये बुद्धिंमत्वा ॥ ४२ ॥ मयाअंगदस्यराज्यायसाम्राज्यार्थंतारेणअभिहितंउदितंएतद्वाक्यंविज्ञातंहि एतच्चतारोक्तंसाध्यंन कुतःवायुसूनुःस्वनामोच्चारणंनकर्तव्यमितिस्मरणा द्वायुसूनुरित्युक्तं हनूमान्रामस्यप्रतीपंप्रतिकूलवचनंनसहेत हियस्मात्तस्मादितिसंबंधः ॥ ४३ ॥ ननु उपायेनत्वामपिअस्मदनुकूलबुद्धिंकरिष्यामीत्यतआह । नचेति । अहंसमेतैःमिलितैःसकलैर्नीत्यादिकलाभिःसहितैर्भवद्भिःउपायतोपिसामाद्युपायेनापि सन्मार्गतःरामानुकूलमार्गात् आकृष्टुंभवद्बुद्ध्यनुसारिणंकर्तुमित्यर्थः । कथंचि च्छक्योन नचेहनःपीडयितुंसचक्षमइत्युक्तस्योत्तरमाह । नैवेति । अप्रधृष्यंअगम्यमित्यर्थः ॥ ४४ ॥ यदि आदरेणस्नेहेनग्राह्यंअंगीकारयोग्यंभवेत्तर्हि मेअतिप्रियंअस्यं

इतीरिते शक्रसुतात्मजेन तथेति चोचुः सह जांबवन्मुखाः ॥ सर्वेपि तेषामथ चैकमत्यं दृष्ट्वा हनूमानिदमाबभाषे ॥ ४२ ॥ विज्ञातमेतद्धि मयांगदस्य राज्याय ताराभिहितं हि वाक्यं ॥ साध्यं न चैतन्न हि वायुसूनू रामप्रतीपं वचनं सहेत ॥ ४३ ॥ न चाहमाक्रष्टुमुपायतोपि शक्यः कथंचित्सकलैः समेतैः ॥ सन्मार्गतो नैव हि राघवस्य दुरं तशक्तेर्बिलमप्रधृष्यं ॥ ४४ ॥ वचो ममैतद्यदि चादरेण ग्राह्यं भवेद्धस्तदतिप्रियं मे ॥ नचेद्बलादप्यनये प्रवृत्तान् प्र शास्य सन्मार्गगतान् करोमि ॥ ४५ ॥ इतीरितं तत्पवनात्मजस्य श्रुत्वातिभीता धृतमूकभावाः ॥ सर्वे तु जग्मुस्त मथाद्रिमुख्यं माहेंद्रमासेदुरगाधबोधाः ॥ ४६ ॥ निरीक्ष्य ते सागरमप्रधृष्यं अपारमेयं सहसाविषण्णाः ॥ दृढं नि राशाश्च मतिं हि दध्रुः प्रायोपवेशाय तथा च चक्रुः ॥ ४७ ॥ ॥ ॥ ॥ ॥

तदर्थः नचेद्ग्राह्यंनचेत्तर्हि अनयेअनीत्यांप्रवृत्तान्प्रशास्यशिक्षयित्वा बलात्सन्मार्गगतान्स्थितान्करोमि ॥ ४५ ॥ तद्वाक्यंश्रुत्वाधृतःमूकभावःमूकस्वभावोयैस्तेतथातंहनु मंतंअनुजग्मुः अथविंध्यत्यागानंतरं नाम्नामाहेंद्रंआद्रिमुख्यंआसेदुःप्रापुःअगाधबोधाःगंभीरज्ञानिनोयतइतिशेषः । अतोजग्मुरितिसंबंधः ॥ ४६ ॥ तेकपयःसहसाबले न अप्रधृष्यंपारगमनायोग्यंअपरमेयंअज्ञेयपरकूलंसागरंनिरीक्ष्य विषण्णाःश्रांताःदृढंनिराशाःजीवनाशारहिताःसंतःआज्ञाउल्लंघितावहुकालेनापिकार्यंनकृतं तस्मात्सु ग्रीवोहनिष्यत्येवेतिनिश्चयंचक्रुरितिभावः । प्रायोपवेशायनिरशनव्रतायनिरशनेनमृतिप्रायः । तदर्थमवस्थानंप्रायोपवेशस्तस्मैमतिंदध्रुः । 'प्रायश्चानशनेमृत्यौप्राये बाहुल्य तुल्ययोरि'तिविश्वः । 'संन्यासवत्यनशनेपुमान्प्रायः'इत्यमरः । 'प्रायोभूम्न्यंतगाशन'इतिच । तथाययामनसिधृतंतथानिरशनपूर्वकंमृत्यर्थंउपविष्टाःसंतःचक्रुः ॥ ४७ ॥

प्रायोपविष्टाः निरशनव्रतस्थाः कपयः संसारात् विमुक्तिं मोक्षं दातुः रामस्य कथां वदंतः परस्परं कथयंतः संतः। जटायुषः पातनं पतनं मरणमितियावत्। ऊचिरे तत्पातनं संपातिनः गृध्रस्य श्रवणं श्रोत्रेंद्रियं जगाम संपातिः जटायुषः मरणं शुश्रावेतिभावः॥४८॥ संपातिस्वरूपमाह। तस्येति। असौ संपातिस्तस्य जटायुषः अग्रजः अरुणः सूर्यसारथिः तस्य सूनुः पुत्रः।'सूनुः पुत्रेनुजे रवा'वितिविश्वः जवं गतिवेगं परीक्षन् तेन जटायुषा सह सूर्यस्य बिंबं यातः गतः अथ सूर्यमंडलप्राप्त्यनंतरं। सुतरां तप्तं जटायुषं गुप्त्वा संरक्ष्य स्वयं जटायुषः उपरिभूत्वा स्वपक्षच्छायया गुप्त्वेतिभावः। पतत्रक्षयं पक्षनाशं आप्य प्राप्य अपतत् माहेंद्रपर्वतस्थे वृक्षइतिशेषः॥४९॥ सवितुः सूर्यस्य प्रतापात् प्रकृष्टतेजसः दग्धपक्षः संपातिः श्रुत्वा पुनः पक्षाभ्यां सहितो भूत्वा कपीन् पृष्ट्वा आपृच्छ्य सम्यगेव भक्त्यैवेत्यर्थः। पुनरपि पक्षप्राप्त्यनंतरमपि जटायुषः मृतिं शुश्राव अशृणोत् पक्षप्राप्त्यनंतरं भक्त्या शुश्रावेतिभावः॥५०॥

प्रायोपविष्टाश्च कथां वदंतो रामस्य संसारविमुक्तिदातुः ॥ जटायुषः पातनमूचिरे तत्संपातिनाम्नः श्रवणं जगाम ॥४८॥ तस्याग्रजोसावरुणस्य सूनुः सूर्यस्य बिंबं सह तेन यातः ॥ जवं परीक्षन्नथ तं सुतप्तं गुप्त्वा पतत्रक्षयमाप्य चापतत् ॥ ४९ ॥ स दग्धपक्षः सवितृप्रतापाच्छ्रुत्वैव रामस्य कथां सपक्षः ॥ भूत्वा पुनश्चाशु मृतिं जटायुषः शुश्राव पृष्ट्वा पुनरेव सम्यक् ॥५०॥ स रावणस्याथ गतिं सुतोक्तां निवेद्य दृष्ट्वा जनकात्मजाकृतिं ॥ स्वयं तथा शोकवने निषण्णामवोचदेभ्यो हरिपुंगवेभ्यः ॥५१॥ ततस्तु ते ब्रह्मसुतेन पृष्टा न्यवेदयन्नात्मबलं पृथक् पृथक् ॥ दशैव चारभ्य दशोत्तरस्य क्रमात्पथो योजनतोतियाने ॥५२॥

अथ श्रीरामकथाश्रवणानंतरं ससंपातिः सुतेन स्वसुतेन सुपार्श्वेन उक्तां रावणस्य गतिं गमनं निवेद्य उक्त्वा रावणः सीतां गृहीत्वा अनेन पथा गत इति सुतोक्तां रावणस्य गतिं निवेद्येतिभावः। तथा स्वयं च निषण्णां उपविष्टां दृष्ट्वा माहेंद्रपर्वतादितिशेषः। एभ्यो हरिपुंगवेभ्यः अंगदादिभ्यः इतः मयापि सीता दृश्यत इत्यवोचत् ॥५१॥ ततः संपातिवाक्यश्रवणानंतरम् ब्रह्मसुतेन ब्रह्मोद्भवेन जांबवता पृष्टाः लंकां प्रतिगमनविषये बलं पृष्टास्ते कपयः दशयोजनतः दशयोजनान्यारभ्य क्रमात् दशोत्तरस्य दश दश उत्तराणि अधिकानि यस्य स तथा तस्य पथः मार्गस्य अतियाने अतिक्रम्य गमने प्लवन इतियावत् आत्मबलं स्वस्य बलं पृथक् पृथक् प्रत्येकं प्रत्येकं न्यवेदयन् ॥५२॥ ॥ ॥

नीलाद्यैः सहिताः तारेणसहिताः सर्वेऽपयोपिअशीत्याः अशीतियोजनेभ्यइत्यर्थः परतः उत्तरत्रगंतुंप्लवनार्थंयदाशक्ताःनबभूवुः। अथतदासःपूर्वंयःबलंपृष्टवान्सजांबवान्तस्मा दशीतियोजनपरिमाणात् पुनःउत्तरंअष्टमांशं दशयोजनाधिकंआत्मबलंजगाद नवतियोजनगमनशक्तिंजगादेतिभावः। 'सांप्रतंप्लवनेशक्तिंनवतिंप्रतितर्कय' इत्यार्षे ॥५३॥ इदानींममपूर्वसंमितंबलंनास्तीतिवक्तुंतत्कारणमाह। यदेत्यादिना। विष्णुर्वामनात्मावलेःप्रन्हादपौत्रात्बलिनाम्नःलोकान्भूरादिलोकान्त्रिभिःक्रमैःपदविक्षेपैःयदाअवाप। तदानंदिरवंसंतोषध्वनिंप्रकुर्वतामयाइदंजगत्त्रयंभ्रांतं इतस्ततःपरिभ्रमणंकृतमित्यर्थः। मेरुतःमेरुपर्वतघातादित्यर्थः ममजानुऊरुपर्वसंवेदनंव्यथासहितंआस यतः ॥ ५४ ॥ अतःकारणात्पूर्वसम्मितःपूर्वतनवेगसदृशोजवोनहि। अहंपुराषण्णवतिप्लवःषड्भिरधिकनवतियोजनप्लवोस्मि ततःजांबवदनंतरं कुमारःयुवराजःअंगदआह। किमिति। अहं

सनीलमैंदविविदाः सताराः सर्वेऽप्यशीत्याः परतो न शक्ताः ॥ गंतुं यदाथात्मबलं स जांबवान् जगाद तस्मात्पुनर ष्टमांशम् ॥५३॥ बलेर्यदा विष्णुरवाप लोकांस्त्रिभिः क्रमैर्नंदिरवं प्रकुर्वता ॥ तदा मया भ्रांतमिदं जगत्त्रयं सवे दनं जानु ममास मेरुतः ॥ ५४ ॥ अतो जवो मे नहि पूर्वसम्मितः पुरा त्वहं षण्णवतिप्लवोस्मि ॥ ततः कुमारोंगद आह चास्माच्छतं प्लवेयं न ततोभिजाने ॥ ५५ ॥ आपूरिते तैः सकलैः शतस्य गमागमे शत्रुबलं च वीक्ष्य ॥ सु दुर्गमत्वं च निशाचरेशपुर्याः स धातुः सुत आवभाषे ॥ ५६ ॥ अयं हि गृध्रः शतयोजनं गिरिं त्रिकूटमाहेत उ तात्र विघ्नाः ॥ भवेयुरन्येपि ततो हनूमानेकः समर्थो न परोस्ति कश्चित् ॥ ५७ ॥

अस्मान्माहेंद्रपर्वतात् शतंशतयोजनानिप्लवेयं ततःउल्लंघनानंतरंनाभिजानेसीतान्वेषणादिकृत्वा प्रत्यागंतुंशक्तिर्भविष्यतिनवेतिनवेद्मि तदुक्तंसंग्रहे। 'योजनानांशतंगंतुंशक्तिं मेनिश्चिनोम्यहं। ननिश्चिनोमिविक्रम्यप्रत्यायातुंप्लवंगमा' इति॥५५॥ तैःशतस्यशतयोजनात्मकस्यगमागमे गमसहितआगमःगमागमस्तस्मिनआपूरितेईषत्पूरितेसति अं गदेनशतस्यपूरितत्वादन्यैश्चन्यूनस्यपूरितत्वात्गमनागमनंचापूरितमितिभावः। सधातुःसुतःजांबवान्शत्रुबलंरावणबलं चशब्दात् गमसहित आगमस्तस्मिन् गमनागमन योःशत्रुवदंतराभावविघ्नंचग्राह्यं 'प्लवनंकुर्वतोपिस्युरंतरायाःकिलांतर' इतिसंग्रहात्। वीक्ष्यपुर्याःलंकायाःसुदुर्गमत्वमत्यगम्यत्वंचवीक्ष्य आवभाषे ॥ ५६ ॥ किमिति अयं गृध्रःसंपातीशतयोजनंशतयोजनव्यवधानेस्थितं त्रिकूटंगिरिंलंकायाःपरिवेषतयास्थितंत्रिकूटंनामगिरिंआह। उतअत्रगमनेअन्येपिविघ्नाःभवेयुःयस्मात्तत्तस्मात् ॥५७॥

सजांबवानित्थंउक्काप्राणस्यवायोःनिःसीमवलंयस्यसतथा तंप्राणस्यसूनुंप्रकाशयन्यशसाभिपूरयन्नित्यर्थः । आह अत्रसीतान्वेषणकार्येपरंसमर्थःअतिसमर्थःएतत्कार्यम्
॥ ५८ ॥ निजेप्सितंस्वाभिलषितंप्रतिएतत्कुरुष्वेति इतीरितोसौहनुमान् तेषांकपीनां रामंप्रविचिंत्य तस्यरामस्याज्ञांचरितोःकर्तुंअवर्धतववृधे चरितोरितितुमर्थेतोसुन्प्रत्ययः

उक्का स इत्थं पुनराहसूनुं प्रणस्य निःसीमबलं प्रकाशयन् ॥ त्वमेक एवात्र परं समर्थः कुरुष्व चैतत्परिपा हि वा नरान् ॥५८॥ इतीरितोसौ हनुमान्निजेप्सितं तेषामशक्तिं प्रकटां विधाय ॥ अवर्धताशु प्रविचिंत्य रामं सुपूर्णशक्तिं चरितोस्तदाज्ञाम् ॥५९॥ ॥ इति श्रीमदानंद०विरचिते श्रीमन्महाभारत०श्रीरामचरिते समुद्रतरणनिश्चयो नाम षष्ठोध्यायः ॥ ६ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥

॥५९॥ यंगंगाज०पूर्तितस्यकृतौसतांसुखकरोध्यायःसुषष्ठःशुभः श्रीमद्भारत०॥ इति श्रीमत्तात्पर्यनिर्णये पदार्थदीपिकायां षष्ठोऽध्यायः ॥६॥ ॥ श्रीकृष्णार्पणमस्तु ॥



श्रीगुरुभ्योनमः ॐ सुंदरकांडकथांनिरूपयति। रामायेति । अर्णवंलिलंघयिषुःलंघितुमिच्छुःपवनस्यसूनुःशाश्वताःशश्वदेकप्रकाराःसुविस्तृताःसर्वदेशकालेषुपारिच्छेदशून्याःषड्गुणाःऐश्वर्यादिविज्ञानांताःयस्यसतथा। तस्मैवीर्यपराक्रमःरामायनत्वा तंगिरिवरंमाहेंद्रंनिष्पीड्य पदाभ्यामितिशेषः। उत्पपातपुप्लुवे॥१॥ तदीयबलेनहनुमत्संबंधिबलेन अभिकृष्टःआकृष्टोवारिधिःसमुद्रःचुक्षोभक्षोभंप्रापहनुमदुल्लंघनवेगेनसमुद्रजलमितस्ततोभूदितिभावः । यादसांगणैःजलचरसमूहैःसह अनुहनुमदनुप्रययौ । पर्वतेमाहेंद्रेगताःस्थिताःवृक्षाश्च अनुययुरित्यर्थः। पुनरपिहनुमत्प्रभाववर्णयति । पवनेति । गिरिःमैनाकपर्वतःअस्यहनुमतःहेतोःश्रमपरिहारहेतोः यद्वा 'षष्ठीहेतुप्रयोग'इति षष्ठीपंचम्यर्थे। अस्यहेतोःहनुमदर्थंउदागमत्जलादुपरिगतोभूत्॥२॥ ननु पर्वतःकिमर्थंसमुद्रेक्षिप्तःक्षिप्तोपिहनुमद्विश्रमणार्थंकुतःउदागमदित्यत आह । शालइति। हर

ॐ रामाय शाश्वतसुविस्तृतषड्गुणाय सर्वेश्वराय बलवीर्यमहार्णवाय ॥ नत्वा लिलंघयिषुरर्णवमुत्पपात निष्पीड्य तं गिरिवरं पवनस्य सूनुः ॥ १ ॥ चुक्षोभ वारिधिरनुप्रययौ च शीघ्रं यादोगणैः सह तदीयबलाभिकृष्टः ॥ वृक्षाश्च पर्वतगताः पवनेन पूर्वं क्षिप्तोर्णवे गिरिरुदागमदस्य हेतोः ॥ २ ॥ शालो हरस्य गिरिपक्षविनाशकाले क्षिप्तोर्णवे समरुतोर्वरितात्मपक्षः ॥ हैमो गिरिः पवनजस्य तु विश्रमार्थमुद्भिद्य वारिधिमवर्धदनेकसानुः ॥ ३ ॥ नैवात्र विश्रमणमैच्छदविश्रमोसौ निःसीमपौरुषबलस्य कुतः श्रमोस्य ॥ आश्लिष्य पर्वतवरं स ददर्श गच्छन् देवैस्तु नागजननीं प्रहितां वरेण ॥ ४ ॥ जिज्ञासुभिर्निजबलं तव भक्ष्यमेतु यद्यत्त्वमिच्छसि तदित्थमरोदितायाः ॥ आस्यं प्रविश्य सपदि प्रविनिःसृतोस्माद्देवाननंदयदुतः स्मृतमेषु रक्षन् ॥ ५ ॥ ॥ ॥

स्यशालःहिमाचलपुत्रीपार्वतीतद्भ्रातृत्वादितिभावः। गिरिपक्षविनाशकालेइंद्रकृतपर्वतपक्षच्छेदनकालेमरुतावायुनाअर्णवेक्षिप्तः अतएवउर्वरितौरक्षितावित्यर्थः। आत्मपक्षौयस्यसतथा । अनेकाःसानवःशृंगाणियस्यहैमःहिमाचलपुत्रःसुवर्णमयोवागिरिःसमैनाकपर्वतःपवनजस्यवायुपुत्रस्यविश्रमार्थंविश्रमणार्थं वारिधिंउद्भिद्यविदार्यअवर्धतववृधेमरुतारक्षितपक्षःतत्पुत्रस्यउपकर्तुंअवर्धतेतिभावः॥३॥असौहनूमान्अत्रगिरौनैच्छत् यतःअविश्रमःश्रमरहितःअतइतिसंबंधः। अविश्रमत्वेहेतुमाह । निःसीमेति । अस्यहनूमतः सहनुमान् देवैर्वरेणवरंदत्त्वेत्यर्थः । प्रहितांप्रेषितांनागजननींसुरसाख्यां ॥४॥ वरेणेत्युक्तंविवृणोति । जिज्ञासुभिरिति । निजबलंस्वबलंहनुमद्बलमित्यर्थः जिज्ञासुभिःज्ञातुमिच्छुभिःदेवैर्यद्यत्त्वंइच्छसि भक्षितुमितिशेषः । तत्तत्तवभक्ष्यंभक्ष्यतेनेतिभक्ष्यमास्यमेतुप्रविशत्वितिवरेणप्रहितांददर्शेतिसंबंधः। तदुक्तंसंग्रहे । 'यद्यदि

च्छसितत्तत्तेवक्रमेतुवरेणवइति । यद्वा भक्ष्यतेतद्भक्ष्यंअयंअग्रत्वमेतुप्राप्नोतु तदुक्तमार्षे । 'ममभक्ष्यःप्रदिष्टस्त्वंसेंद्रैःसुरगणैःकपे' इति । उतदर्शनानंतरं । एषुदेवेपुस्मृतंत यद्यत्त्वमिच्छसिइत्येवंरूपवाक्यकरणेन सुसत्यंरक्षन्अमरैःदेवैःउदितायाःदत्तवरायाइत्यर्थः । नागजनन्याआस्यंप्रविश्य अस्मादास्यात्सपदिक्षणमात्रादेवप्रतिनिःसृतः बहिर्निर्गतःसन् देवाननंदयत्नंदयामास ॥ ५ ॥ देवाःअस्यश्रीहनूमतःसुरेषुप्रणायितांस्ववचनसत्यकरणरूपस्नेहवत्वंदृष्ट्वा अस्यउग्रबलंदृष्ट्वेत्यर्थः । अमुंहनुमंतंतैर्देवैराद्दतःपूजितोसौवियताआकाशेनपुनर्गच्छन् सिंह्निकेतिआख्यायस्यसतथातंछायाग्रहंछाययाग्रहणेनछायावंतंपुरुषंगृह्णातीतिछायाग्रहःतं तथाददर्शछायाग्रहांसिंह्निकाख्यां राक्षसींददर्शेतिभावः ॥ ६ ॥ लंकापुर्याःअवनायरक्षणार्थंसकलस्यसर्ववीरसमूहस्येत्यर्थः । निग्रहेनिरोधविषयेअप्रतिहतंप्रतिहतिरहितंअविनाश्यमितियावत् । अस्याःसिंह्निकायाअसौसिंह्निकाराक्षसीपवनात्मजस्यछायांअवाक्षिपतजग्राह संचकर्षेत्यर्थः । सहनुमानस्याःराक्षस्याःशरीरंउदरमित्यर्थः । अनुविश्यबिभेद । विददारहृदयंनखै

**दृष्ट्वा सुरप्रणयितां बलमस्य चोग्रं देवाः प्रतुष्टुवुरमुं सुमनोभिवृष्ट्या ॥ तैरादृतः पुनरसौ वियतैव गच्छन् छायाग्रहं प्रति ददर्श च सिंह्निकाख्यं ॥ ६ ॥ लंकावनाय सकलस्य च निग्रहेस्याः सामर्थ्यमप्रतिहतं प्रददौ विधाता ॥ छायामवाक्षिपदसौ पवनात्मजस्य सोस्याः शरीरमनुविश्य बिभेद चाशु ॥७॥ निःसीममात्मबलमित्यनुदर्शयानो हत्वैव तामपि विधातृवराभिगुप्तां ॥ लंबे सलंबशिखरे निपपात लंकाप्राकाररूपकगिरावथ संचुकोच ॥ ८ ॥ भूत्वा बिडालसमितो निशितां पुरीं च प्राप्स्यन् ददर्श निजरूपवतीं स लंकां ॥ रुद्धोनयाथ विजित्य च तां स्वमुष्टिपिष्टां तयानुमतयैव विवेश लंकाम् ॥ ९ ॥ ॥ ॥ ॥**

रितिशेषः । तदुक्तंसंग्रहे । 'हृदयंनिर्दयंतस्याविभेदनखरैःखरै'रिति आर्षेच 'ततस्तस्यानखैस्तीक्ष्णैर्मर्माण्युत्कृत्यवानरः उत्पपाते'ति ॥ ७ ॥ आत्मबलंनिःसीमबलं अपरिमितमितिदर्शयानःसगुप्तामपिहत्वा लंबानिदीर्घाणिशिखराणियस्मिन्नसौतथातस्मिन् अतएवलंबेलंबनाम्निलंकायाःप्राकारस्यरूपमिवरूपंयस्यसतथा स्वार्थेकप्रत्ययः । सचासौगिरिश्चतस्मिन्त्रिकूटगिरावित्यर्थः । निपपात माहेंद्रपर्वतात्त्रिकूटपर्वतेउत्पपातेत्यर्थः । 'तुरंगस्यशकुलंत्वंलंकाप्राकारएवचे'त्यभिधानात् । त्रिकूटस्यलंबनामत्वंबोध्यं । अथत्रिकूटप्राप्त्यनंतरं संचुकोचसूक्ष्मरूपोबभूव प्रवृद्धंरूपंसंकोचयामासेत्यर्थः ॥ ८ ॥ सहनुमान्विडालस्यमार्जारस्यसमितःपरिमाणेनसदृशःभूत्वा तांपुरींलंकापुरींप्राप्स्यन्प्राप्तुमिच्छन् निजरूपवतींस्वस्वरूपंप्राप्तांलंकांलंकाभिमानित्वात्नाम्नालंकांददर्श मूर्तिमतींलंकाभिमानिनींददर्शेतिभावः । अनयालंकयारुद्धःमागच्छेतिनिरुद्धःअथनिरोधानंतरं । स्वमुष्टिभिःपिष्टांचूर्णवत्कृतांलंकांआशुविजित्य तयालंकयाअनुमतएवसंमतएवलंकांलंकापुरींविवेश ॥ ९ ॥

बहिश्चांत:लंकायाइतिशेषः । मार्गमाण:सीताप्रतिकृतिमितिशेषः । सहनूमान्अशोकवनिकातलेअशोकवनस्थले शिंशपावृक्षस्यशिंशपाख्यवृक्षविशेषस्यमूलेअधःस्थितां उपविष्टां रमायाःसीतायाःआकृतिंप्रतिमांददर्श॥१०॥नरलोकंविडंबयतीतिनरलोकविडंबःतस्यरामस्यहृद्गतंमनोभिप्रायंजानन् ।हनूमान्तस्यरामस्यअसुरमोहनरूपचेष्टानुसारेणचेष्टाविडंबकर्माणिकृत्वा संविदंविचारंकृत्वा ततःतादृक्चेष्टाभिःरामचेष्टासदृशचेष्टाभिःसमेतायैयुक्तायैअंगुलीयंमुद्रिकामदात्॥११॥ ननु रामस्यविश्वासार्थंआकृतिःसीतायाःचूडामणिंददावितिवक्ष्यतेतर्हि आकृतेःसीताभूषणप्राप्तिःकथमित्यतआह । सीतायाइति । सीतायाःयानिभूषणानिआसन्सर्वशःसर्वाणितानिचूडामण्यादिभूषणानिआकृतेःआसन् ननु सीतायाःकिंनसंतीत्यतआह । द्विधेति । तान्येवभूषणानिसीताभूषणानितथैवएकप्रकारेणैवद्विधाभूत्वा आकृतेरासन्नित्यन्वयः ॥ १२ ॥ अथसं

**मार्गमाणो बहिश्चांतः सोशोकवनिकातले ॥ ददर्श शिंशपावृक्षमूलास्थितरमाकृतिम् ॥१०॥ नरलोकाविडंबस्य जानन् रामस्य हृद्गतं ॥ तस्य चेष्टानुसारेण कृत्वा चेष्टाश्च संविदम् ॥११॥ तादृक्चेष्टासमेतायै अंगुलीयमदात्ततः॥ सीताया यानि चैवासन्नाकृतेस्तानि सर्वशः ॥ भूषणानि द्विधा भूत्वा तान्येवासंस्तथैव च १२ ॥ अथ चूडामणिं दिव्यं दातुं रामाय सा ददौ ॥ १३ ॥ यद्यप्येते न पश्यंति निशाचरगणास्तु ते ॥ द्युलोकचारिणः सर्वे पश्यंत्यृषय एव च ॥ १४ ॥ तेषां विडंबनायैव दैत्यानां वंचनाय च ॥ पश्यतां कलिमुख्यानां विडंबोयं कृतो भवेत् ॥ १५ ॥ कृत्वा कार्यमिदं सर्वं विशंकः पवनात्मजः ॥ आत्माविष्करणे चित्तं चक्रे मतिमतां वरः ॥ १६ ॥**

विदानंतरं ॥ १३ ॥ रात्रौरामविडंबानुसारेणसीताकृतिहनुमत्कृतविडंबनंव्यर्थं राक्षसैरदृष्टत्वादित्याशंक्यसार्थक्यमुपपादयति । यद्यपीति । तेनिशाचरगणाःयद्यपिएतद्विडंबनंनपश्यंति सुप्तत्वादितिशेषः । तथापिद्युलोकःअंतरिक्षलोकःऋषयोज्ञानिनोदेवायाः 'ऋषज्ञान' इतिधातुः ॥ १४ ॥ कृतोयंविडंबःतेषांऋषीणांविडंबनोयेन इदंविडंबनमेवेतिज्ञानायेत्यर्थः । पश्यतांकलिमुख्यानांदैत्यानांवंचनायअसत्येसत्यमितिज्ञानार्थं मिथ्याज्ञानार्थमितियावत् ॥ १५ ॥ मतिमतांबुद्धिमतांमध्येवरःविशंकःराक्षसबाधाशंकारहितः इदंलंकायांकृतंसर्वंकार्यंमुद्रिकादानादिकर्मकृत्वा । आत्मनःस्वस्याविष्करणेप्रकटीकरणविषये चित्तंबुद्धिंचक्रे ॥ १६ ॥ ॥ ॥

अथवरिःअतएवरजनीचराणां विनाशंकांक्षमाणःहनूमान् इमंएकंक्षितिरुहंसीताकृत्याश्रितमेकंशिंशपावृक्षंवर्जयित्वा । रावणस्यअखिलंसंपूर्णतद्वनंअशोकवनंअवलुंप्यछित्वा उत्पाट्येत्यर्थः । अतिवेलंअत्यर्थंमुहुःपुनःपुनारित्यर्थः अतिरवंउत्कृष्टशब्दंयथास्यात्तथानदतीतिनादी सिंहनादीतोरणंगृहप्राकारद्वारं आरुरोह ॥ १७ ॥ परंविरूपचेष्टितं अशोकवनविलुंपनादिकर्म । निगृह्यतांबध्यतां ॥ १८ ॥ समस्तशःसर्वैसुराणांदेवानांअंतरात्मनःअंतर्यामिणोवायोः । अंगजंपुत्रंअतएवमहाबलं समासदन्नापुः ॥१९॥ अशीतिश्चताः कोटयश्च अशीतिकोटयः अशीतिकोटयोयूथपाःसेनापतयोयस्मिनतथोक्तं । अयुतानामष्टकमित्यष्टकायुतं पुरःसराणांअग्रेसराणांअष्टकायुतंयस्मिन्तथोक्तं अष्टकंचतत्अयुतंचेतिवाविग्रहः अशीतिसहस्रसंख्याकैःपुरःसरैर्युक्तमित्यर्थः । अनेकाश्चताःहेतयश्चनानाप्रकारायुधानि ताभिःसंकुलंसांद्रंबलंकपींद्रंआवृणोत् स्वकोष्टेचकारेतिभावः ॥ २० ॥ तैःकिंकरैःसमावृतःतथाभृशंआयुधैःताडितःसहनूमान्समस्तशःसर्वान्तान्तलःहस्ततलःतस्यप्रहारेणआघातेन चूर्णितान्चकार ॥ २१ ॥ पर्वतप्रभान्पर्वतसदृशान्वरेणरुद्रवरेणअभिरक्षितान्बलस्यरावणबलस्यअग्रगामिनः अग्रेसरान् तथाशर्ववाचारुद्रवरेणेत्यर्थः । सुगर्वितानतिगर्वितान् सप्तसप्तसंख्याकान् मंत्रिपुत्रकान्निहत्यममर्द पादतलेनेतिशेषः ॥ २२ ॥ सर्वरक्षसांबलं लंकास्थितसर्वराक्षसानांतृतीयभागंअक्षिणोत् व्यनाशयदित्यर्थः ॥ २३ ॥ अनौपमं अतुलं हरेःकपेःबलंनिशम्यश्रुत्वा आत्मनःस्वस्यसमंबलेनेतिशेषः । सुतंस्वपुत्रंअक्षकुमारं न्ययोजयत् योद्धुमितिशेषः ॥ २४ ॥

अथ वनमखिलं तद्रावणस्यावलुंप्य क्षितिरुहमिममेकं वर्जयित्वाशु वीरः ॥ रजनिचरविनाशं कांक्षमाणोतिवेलं मुहुरतिरवनादी तोरणं चारुरोह ॥ १७ ॥ अथाशृणोद्दशाननः कपींद्रचेष्टितं परं ॥ दिदेश किंकरान्बहून् कपिर्निगृह्यतामिति ॥ १८ ॥ समस्तशो विमृत्यवो वराद्धरस्य किंकराः ॥ समासदन्महाबलं सुरांतरात्मनोंगजम् ॥ १९ ॥ अशीतिकोटियूथपं पुरः सराष्टकायुतं ॥ अनेकहेतिसंकुलं कपींद्रमावृणोद्बलं ॥ २० ॥ समावृतस्ततथायुधैः स ताडितश्च तैर्भृशं ॥ चकार तान् समस्तशस्तलप्रहारचूर्णितान् ॥ २१ ॥ पुनश्च मंत्रिपुत्रकान् स रावणप्रचोदितान् ॥ ममर्द सप्तपर्वतप्रभान् वराभिरक्षितान् ॥ २२ ॥ बलाग्रगामिनस्तथा स शर्ववाक्सुगर्वितान् ॥ निहत्य सर्वरक्षसां तृतीयभागमक्षिणोत् ॥२३॥ अनौपमं हरेर्बलं निशम्य राक्षसाधिपः कुमारमक्षमात्मनः समं सुतं न्ययोजयत् ॥२४॥

मोक्षःसर्वलोकानां अंतर्यामित्वेनसाक्षिणःवायोःसुतांशितैःतीक्ष्णैःवरास्त्रैःउत्तमास्त्रमंत्रैःमंत्रितैरभिमंत्रितैःएनंहनूमंतं ॥२५॥ सहनूमान्मंडमध्यकायाःमंडोदर्याःसुतंरावणोप मंबलेनेतिशेषः। समीक्ष्यएषोक्षःबलस्यरावणबलस्य तृतीयांशकोहि तृतीयभागएवेत्यचिंतयत् ॥२६॥ निवार्यएवस्थापनीयः यदिहतश्चेत्तर्हि अस्येंद्रजितःशक्तिःशस्त्रास्त्र शारीरबलं नेक्ष्यतेनद्रक्ष्यते अस्मदीयैरितिशेषः ॥२७॥ तयोःरावणेंद्रजितोःतमक्षंपदोःपादयोःप्रगृह्यपुप्लुवे ॥२८॥ मारुतीतनुः मरुत्संबंधिनीतनुःस्वरूपंयस्यसतथा। 'वृ द्धिनिमित्तस्यचतद्धितस्यारक्तविकारे' इतिपुंवद्भावनिषेधः। सहनूमान्चक्रवत् कुलालचक्रवदित्यर्थः। भ्रमातुरंभ्रमणेनव्याकुलंविधाय अपोथयत् ॥२९॥ शोकेनपुत्रशोके नतापितःतापंप्रापितोरावणःतस्याक्षस्य अग्रजंइंद्रजितं ॥३०॥ वरास्त्रैर्दिव्यमंत्रैःसंप्रयोजितैःअभिमंत्रितैःअतएवमहाशरैः ततश्चतताड विचालनेनाशकत्नशशाक वान

स सर्वलोकसाक्षिणः सुतं शरैर्ववर्ष ह ॥ शितैर्वरास्त्रमंत्रितैर्नचैनमभ्यचालयत् ॥२५॥ स मंडमध्यकासुतं समीक्ष्य रावणोपमं ॥ तृतीय एष चांसको बलस्य हीत्यचिंतयत् ॥ २६ ॥ निवार्य एव रावणः स राघवायनान्यथा ॥ यदींद्र जिन्मया हतो न चास्य शक्तिरीक्ष्यते ॥ २७ ॥ अतस्तयोः समो मया तृतीय एष हन्यते ॥ विचार्य चैवमाशु तं प दोः प्रगृह्य पुप्लुवे ॥ २८ ॥ स चक्रवद्भ्रमातुरं विधाय रावणात्मजं ॥ अपोथयद्धरातले क्षणेन मारुतीतनुः ॥ २९ ॥ विचूर्णिते धरातले निजे सुते स रावणः ॥ निशम्य शोकतापितस्तदग्रजं समादिशत् ॥ ३० ॥ अथेंद्रजिन्महाशरै र्वरास्त्रसंप्रयोजितैः ॥ ततक्ष वानरोत्तमं न चाशकद्विचालने ॥ ३१ ॥ अथास्त्रमुत्तमं विधिर्युयोज सर्वदुःसहं ॥ स तेन ताडितो हरिर्व्यचिंतयन्निराकुलः ॥ ३२ ॥ मया वरा विलंघिता ह्यनेकशः स्वयंभुवः ॥ स माननीय एव मे ततोत्र मान याम्यहं ॥ ३३ ॥ इमे च कुर्युरत्र किं प्रहृष्टरक्षसां गणाः ॥ इतीह लक्ष्यमेव मे स रावणश्च दृश्यते ॥ ३४ ॥ ॥

रोत्तममित्युभयत्रसंबध्यते ॥३१॥ सर्वैःशिवाद्यैर्दुःसहंसोढुमशक्यं विधिरस्त्रंब्रह्मास्त्रंयुयोजअमुंचत्। तेनब्रह्मास्त्रेणनिराकुलः निर्मोहःसहरिःहनूमान्व्यचिंतयत् ॥ ३२ ॥ किमिति मयास्वयंभुवःब्रह्मणःअनेकशःबहवोवराःविलंघिताःविनाशिताःअवध्यान्राक्षसान्हत्वेतिशेषः। मेमयासब्रह्मामाननीयोहि यस्मात्ततःकारणात्अहंअत्रइंद्र जिन्मुक्तब्रह्मास्त्रेमानयामिब्रह्माणम् ॥३३॥ अत्रअस्त्रेसन्मानकरणेप्रहृष्टानांहर्षयुक्तानांराक्षसांराक्षसानांइमेगणाःइहमेकिंकुर्युरितिलक्ष्यंद्रष्टव्यं अन्यदपिप्रयोजनमाह सइति। दृश्यतेअवलोक्यते ॥ ३४ ॥

इदंकार्यद्वयंसमीक्ष्यविचार्य अन्यैःब्रह्मास्त्रादन्यैःपाशकैःअस्यइंद्रजितःतदस्त्रंब्रह्मास्त्रंब्रह्मलोकंप्रतिजगाम ॥३५॥ तंहनूमंतंप्रपृष्टवान्पप्रच्छ ॥३६॥ किमितिहेकपेत्वं कुतःकस्मात्द्वीपात्आगतोसि । कस्यवादूतोसि ईदृशंवनभंगराक्षसनाशरूपंकर्मकिमर्थंकृतं । इतीरितःसहनूमान्अवदत् ॥३७॥ अवेहीति दुरंतःअवधिरहितःविक्रमः पराक्रमोयस्यसतथा तस्यदूतंआगतंमारुतिंतवकुलक्षयेईश्वरंसमर्थंमां अवेहिजानीहि ॥ ३८ ॥ प्रियांदयितांसीतांत्वरन्अविचारयन् यदिनप्रदास्यसिचेत्तदातर्हि पुत्राद्यैःसहितस्त्वं ॥ ३९ ॥ नक्षमाःनसमर्थाःअल्पसारकःअल्पवीर्यस्त्वंकिमु ॥ ४० ॥ प्रकोपितस्यकोपयुक्तस्यअचिंत्यमतर्क्यंकर्मयस्यसतथा । तस्यरामस्यपुरःअग्रेस्थितोस्था

इदं समीक्ष्य बद्धवत्स्थितं कपींद्रमाशु ते ॥ बबंधुरन्यपाशकैर्जगाम चास्त्रमस्य तत् ॥ ३५ ॥ अथ प्रगृह्य तं कपिं समीपमानयंश्च ते ॥ निशाचरेश्वरस्य तं प्रपृष्टवान्स रावणः ॥ ३६ ॥ कपे कुतोसि कस्य वा किमर्थमीदृशं कृतं ॥ इतीरितः स चावदत्प्रणम्य रामभीश्वरं ॥ ३७ ॥ अवेहि दूतमागतं दुरंतविक्रमस्य मां ॥ रघूत्तमस्य मारुतिं कुलक्षये तवेश्वरं ॥ ३८ नचेत्प्रदास्यसि त्वरन् रघुत्तमप्रियां तदा ॥ सपुत्रमित्रबांधवो विनाशमाशु यास्यसि ॥ ३९ ॥ न रामबाणधारणे क्षमाः सुरेश्वरा अपि ॥ विरिंचशर्वपूर्वकाः किमु त्वमल्पसारकः ॥ ४० ॥ प्रकोपितस्य तस्य कः पुरस्थितो क्षमो भवेत् ॥ सुरासुरोरुगादिके जगत्यचिंत्यकर्मणः ॥ ४१ ॥ इतीरिते वधोद्यतं निवारयद्विभीषणः ॥ स पुच्छदाहकर्मणि न्ययोजयन्निशाचरान् ॥ ४२ ॥ अथास्य वस्त्रसंचयैः पिधाय पुच्छमग्नये ॥ ददुर्ददाह नास्य तन्मरुत्सखो हुताशनः ॥ ४३ ॥ ममर्ष सर्वचेष्टितं स रक्षसां निरामयः ॥ बलोद्धतश्च कौतुकात्प्रदग्धुमेव तां पुरीं ॥ ४४ ॥

तुं सुराश्चअसुराश्चउरगाःसर्पाश्चएतेआदयोयस्यसतथातस्मिन् आदिशब्देनप्रमथसिद्धाद्याः जगतिकःक्षमोभवेत् नकोपीत्यर्थः ॥ ४१ ॥ वधायहनुमद्वधायउद्यतंउद्युक्तं रावणं सःरावणःपुच्छस्यवालस्यदाहकर्मणिभस्मीकरणकर्मणि न्ययोजयत्आज्ञापयामास ॥ ४२ ॥ अस्यहनूमतःपुच्छंसंचयैःसमूहैःपिधायआच्छाद्यवेष्टयित्वेत्यर्थः । अस्यतत्पुच्छंनददाह कुतः । यतइतिशेषः हुताशनोग्निःमरुत्सखःवायोःसखा अतइतिसंबंधः ॥ ४३ ॥ बलेनउद्धतःउत्कृष्टःअतएवनिरामयःछेदभेदादिदुःखरहितःसहनुमान्कौतुकात्संतोषात् तांपुरींलंकांप्रदग्धुमेव रक्षसांसर्वचेष्टितंताडनपुच्छवेष्टनादिकं ममर्षप्रसेहे ॥ ४४ ॥ ॥ ॥ ॥

विश्वकर्मणः देववर्धकिविश्वकर्मनाम्नः कृतिरपिनिर्माणमपिअस्यहनूमतःतेजसाअदह्यत नतुअग्निप्रभावेनेत्यर्थः ॥ ४५ ॥ जगर्जसिंहनादंचकार ॥ ४६ ॥ तयोःरावणेंद्रजितोःप्रपश्यतोःसतोः भस्मसात्भस्माधीनं ॥ ४७ ॥ अर्णवंपुनःविलंघ्यस्वजातिभिःकपिभिःप्रपूजितःसन् वानरेशितुःसुग्रीवस्य मधुमधुवनंप्रभक्ष्य प्रभुंश्रीरामंसमेयिवान्प्राप ॥ ४८ ॥ अस्यरामस्यपादयोःचूडामणिंकचभूषणंनिधायभक्त्यासर्वांगकैः । 'उरसाशिरसादृष्ट्यामनसावचसातथा । पद्भ्यांकराभ्यांजानुभ्यांप्रणामोष्टांगईरित'इतिस्मरणात्सर्वावयवैःप्रणतिंप्रणामंचकार ॥ ४९ ॥ रामोपिअत्यंतभक्त्यास्त्रीपुत्राद्यपेक्षया अधिकस्नेहेनभरितस्यपूर्णस्यामुष्यहनूमतःदातुं अनु नमस्कारानंतरं

ददाह चाखिलां पुरीं स्वपुच्छगेन वह्निना ॥ कृतिस्तु विश्वकर्मणोप्यदह्यतास्य तेजसा ॥ ४५ ॥ सुवर्णरत्नकारितां स राक्षसोत्तमैः सह ॥ प्रदह्य सर्वतः पुरीं मुदान्वितो जगर्ज च ॥ ४६ ॥ सरावणं सपुत्रकं तृणोपमं विधाय च ॥ तयोः प्रपश्यतोः पुरीं विधाय भस्मसाद्ययौ ॥ ४७ ॥ विलंघ्य चार्णवं पुनः स्वजातिभिः प्रपूजितः ॥ प्रभक्ष्य वानरेशितुर्मधु प्रभुं समेयिवान् ॥ ४८ ॥ रामं सुरेश्वरमगण्यगुणाभिरामं संप्राप्य सर्वकपिवीरवरैः समेतः ॥ चूडामणिं पवनजः पदयोर्निधाय सर्वांगकैः प्रणतिमस्य चकार भक्त्या ॥ ४९ ॥ रामोपि नान्यदनुदातुममुष्य योग्यमत्यंतभक्तिभरितस्य विलक्ष्य किंचित् ॥ स्वात्मप्रदानमधिकं पवनात्मजस्य कुर्वन् समाश्लिषदमुं परमाभितुष्टः ॥ ५० ॥ इति श्रीमन्महाभारतता० श्रीरामचरिते सुंदरकांडकथानिरूपणं नाम सप्तमोऽध्यायः ॥ ७ ॥ श्रीकृष्णार्पणमस्तु ॥

योग्यंकिंचित्ईषदपि अन्यत्स्वात्मप्रदानातअन्यद्वस्तुनेतिविलक्ष्य अवलोक्य पवनात्मजस्य स्वात्मप्रदानंस्वशरीरदानं आलिंगनमितियावत् । स्वात्मप्रदानमित्यनेनसायुज्यमपिलक्ष्यते अधिकंसर्वस्मादितिशेषः । कुर्वन्अमुंहनुमंतंसमाश्लिषत् कथंभूतःपरमाभितुष्टःमारुतिभक्त्येतिशेषः ॥ ५० ॥ यंगंगाजमदग्निजान्वयभ० इति श्री भारततात्पर्यनिर्णयस्य पदार्थदीपिकायां सप्तमोऽध्यायः ॥ ७ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥ ॥

श्रीगुरुभ्योनमः ॐ युद्धकांडकथामारभते । श्रुत्वेत्यादिना । सरामःहनूमदुदितंअस्यहनूमतःकृतंवनविनाशनादिसर्वंकर्मश्रुत्वा प्रीतःसन्प्रयाणंलंकायात्रामभिरोचयते प्रयाणाभिरुचिंचकारेत्यर्थः। रुचिप्रीणनइतिधातुः। अंगदगेनअंगदस्कंधमारूढेनेत्यर्थः॥१॥जगतांगुरुतमःमुख्यगुरुरितिप्रतीतःप्रसिद्धः अविषह्यासोढुमशक्याशक्तिर्यस्येतिविग्रहःअविचिंत्यशक्तिरितिवापाठः तादृशोपिसदेवोरामःदक्षिणंदक्षिणदिक्स्थंअपांनिधिंजलनिधिमित्यर्थः समुद्रमितियावत् संप्राप्य अत्रतीरेअग्रेआदौमार्दवंमृदुत्वंधर्मंअनुप्रथयन्ख्यापयन्सन् अपांजलानांपतितःसमुद्रात्पंथानंअर्थितुंशिश्येसुष्वाप। समर्थस्यआदौमृदुधर्मप्रदर्शयन्धर्मइतिख्यापयन्मार्गयाचितुंशिश्ये । नत्वशक्तत्वादितिभावः ॥ २ ॥ अथस्त्रापानंतरं । रक्षःपतेःरावणस्यावरजोपिरघुपतौअधिकंयथास्यात्तथाभक्तः अतिधर्मनिष्ठश्चेतिरावणेनत्यक्तःबहिष्कृतः ॥ ३ ॥ ब्रह्मात्मजेनजांबवता बल

ॐ श्रुत्वा हनूमदुदितं कृतमस्य सर्वं प्रीतः प्रयाणमभिरोचयते स रामः ॥ आरुह्य वायुसुतमंगदगेन युक्तः सौमित्रिणा स रविजः सहसेनयागात् ॥ १ ॥ संप्राप्य दक्षिणमपांनिधिमत्र देवः शिश्ये जगद्गुरुतमोप्यविषह्यशक्तिः ॥ अग्रे हि मार्दवमनुप्रथयन्स धर्मं पंथानमर्थितुमपांपतितः प्रतीतः॥२॥तत्राजगाम स विभीषणनामधेयो रक्षःपतेरवरजोप्यथ रावणेन ॥ भक्तोधिकं रघुपतावतिधर्मनिष्ठस्त्यक्तो जगाम शरणं च रघूत्तमं तं ॥३ ॥ ब्रह्मात्मजेन रविजेन बलप्रणेत्रा नीलेन मैंदविविदांगदतारपूर्वैः ॥ सर्वैश्च शत्रु सदनादुपयात एष भ्रातास्य न ग्रहणयोग्य इति स्थिरोक्तः ॥ ४ ॥ अत्राहरूपमपरं बलदेवताया ग्राह्यः सएव नितरां शरणं प्रपन्नः ॥ भक्तस्य रामपदयोर्विनशिष्णु रक्षो विज्ञाय राज्यमुपभोक्तुमिहाभियातः ॥ ५ ॥ ॥ ॥

स्यकपिबलस्यप्रणेत्राप्रेरकेणसेनापतिनानीलेनेत्यर्थः । शत्रुःअरिःतस्यरावणस्यसदनाद्गृहादुपयातःआगतःएषोविभीषणःअस्यरावणस्यभ्राता अतएवग्रहणायअंगीकाराययोग्योनेति स्थिरतयाउक्तोभूदितिशेषः ॥ ४ ॥ बलदेवतायाःअपरंद्वितीयंरूपंहनुमानित्यर्थः । अत्रविभीषणविषयेआह । किमिति । सएषोविभीषणःशरणंप्रपन्नःप्राप्तःरामपदयोःनितरांअत्यंतंभक्तश्च विनशिष्णुआशुतरविनाशीरक्षःरावणमित्यर्थः । विज्ञायइहलंकायांराज्यंउपभोक्तुंपालनार्थंसाम्राज्यंकर्तुमितिभावः । इहरामसमीपंअभियातः अतएवग्राह्यः स्वीकर्तुंयोग्यइत्याहेतिसंबंधः ॥ ५ ॥ ॥ ॥ ॥ ॥

अथहनुमद्वाक्यानंतरं देवानांदेवोरामःयथापूर्वंसुग्रीवहेतुतःसुग्रीवार्थंतस्यहनूमद्वचनंअग्रहीदितिशेषः । तथैवतद्देवतद्वचनंहनूमद्वचनंविभीषणपरिग्रहणविषयेसंगृह्यआह । तद्वचनमित्युभयत्रसंबध्यते । किमिति । पादयोःप्रपन्नंशरणंप्राप्तमित्यर्थः । इमंविभीषणंस्थिरंनिश्चयेनआग्रहिष्येस्वीकरोमि । ग्रहउपादानइतिधातुः । इदमेवशरणागतपरिग्रहणमेवमेव्रतमित्याहेतिसंबंधः ॥ ६ ॥ शत्रुसदनादुपयातइत्युक्तेरुत्तरमाह । सेति । दैत्यमर्त्यैःसहिताइतिसहदैत्यमर्त्याःसर्वेब्रह्माद्याःसमेत्य संभूयमिलित्वेत्यर्थः। ममअंगुल्याःचालनेचालनविषयेपिनेशाःनैवसमर्था यतइतिशेषः । अतःअमुष्माद्रात्रिचरात्विभीषणात्ममभयंन समर्थत्वात्स्वभयंपरिहृत्यकपीनामपिभयशंकांपरिहरन्नाह । शुद्धइति । अयंशुद्धस्वभावःनिष्कपटस्वभावइत्यनेनप्रकारेणविभीषणंविजानइत्याहेतिपूर्वेणसंबंधः इतिशब्देनाभिहितेकर्मणिनकर्मविभक्तिरितिवामनः क्रमादमुंनारद इत्यबोधीतिप्रयोगाच्च ॥ ७ ॥ इतिअनेनप्रकारेणउक्तंवाक्यंयेनसतथा रामःतंविभीषणंस्वजनंस्वसेवकंविधाय उतअनंतरं राज्येसाम्राज्येरावणस्येतिशेषः । अभ्यषेचयत् नन्वग्रजेरावणेजीवतिसतिकथमभ्यषेचयदित्यतआह । अपारमपरिमितंस्वाभाविकबलमित्यर्थः । तस्यराशिःसमूहअतएवसरामःअशेषसतांअंतकंअरिंरावणंतृणोपमंमत्वाज्ञात्वा रक्षःपतेःरावणस्यावरजस्यभ्रातुः ॥ ८ ॥ अस्यविभीषणस्यनिशिचारिपतित्वंराक्षसस्वामित्वं पूर्वंयथास्यात्तथाकल्पांतंब्रह्मदिनकल्पपर्यंतंआयुःप्रदाय तदंतेआयुरंतेब्रह्मप्रलयाव्यवहितपूर्वदिनेविद्यमानविभीषणायुषोंतइतियावत् । निजलोकगतिंप्रदायरात्रित्रयेगतेसति । अनुपगामिनंस्वसमीपमनागतं । अब्धिंचुक्रोधचुकोप । रक्तश्चासौनयनांतश्चसतथातंअयुंजत्योजयामास । अत्रविभीषणःवैवस्वतमन्वंतरेरावणानुजोभूत्वा रामप्रसादात्लंकाधिपत्यंप्राप्य । ब्रह्मदिनांतेपुनःब्रह्मलोकंप्राप्स्यति एवंमहाकल्पपर्यंतं । ततोब्रह्मणासहमुक्तिमुपेष्यतीतिज्ञातव्यं । प्रमाणंचात्रब्रह्मपुराणस्थरंगमाहात्म्यवाक्यंतथाहि । 'आयुश्चपरमंदत्तमैश्वर्यममलंभुवि । उपेष्यसिब्रह्मलोकंपुनर्लंकांसमेष्यसि । द्विपरार्धावसानेत्वंमयासहविभीषण । प्रयास्यसिपरंलोकंसर्गप्रलयवर्जितमि'ति । कल्पश्चप्रलयेन्यायेशास्त्रेब्रह्मादिनेस्मृत इतिवचनात् । कल्पशब्दोब्रह्मदिनेज्ञातव्यः ॥ ९ ॥ ॥ ॥ ॥ ॥

**इत्युक्तवत्यथ हनूमति देवदेवः संगृह्य तद्वचनमाह यथैव पूर्वम् ॥ सुग्रीवहेतुत इमं स्थिरमाग्रहिष्ये पादप्रपन्नमिदमेव सदाव्रतं मे ॥ ६ ॥ सब्रह्मका सुरगणाः सहदैत्यमर्त्याः सर्वे समेत्य च मदंगुलिचालनेपि ॥ नेशा भयं न मम रात्रिचरादमुष्माच्छुद्धस्वभाव इति चैनमहं विजाने ॥७॥ इत्युक्तवाक्य उत तं स्वजनं विधाय राज्येभ्यषेचयदपारसुसत्वराशिः॥ मत्वा तृणोपममशेषसदंतकं तं रक्षःपतेस्त्ववरजस्य ददौ सलंकां ॥८॥ कल्पांतमस्य निशिचारिपतित्वपूर्वमायुः प्रदाय निजलोकगतिं तदंते ॥ रात्रित्रयेप्यनुपगामिनमीक्ष्य सोब्धिं चुक्रोध रक्तनयनांतमयुंजदब्धौ ॥ ९ ॥ ॥**

परस्यरामस्यक्रोधेनदीप्तश्चासौनयनांतःकटाक्षःतेनहतःससिंधुःसमुद्रःदनुजाःदानवाःतएवादीनियेषांतानितथातानिचतानिसत्त्वानिजलचरादिप्राणिनःतैःसहशोषंनिशार्द्रत्वं क्षणादुपगतःप्राप्तःसन् रूपीरूपवान्वरुणरूपंप्राप्येत्यर्थः । शिरसिअर्हणंपूजासाधनंपरिगृह्यधृत्वा उपगम्यराममितिशेषः ॥ १० ॥ हेभूमन् देशादितःपूर्णजडधियःजड सदृशबुद्धयोवयंकूटस्थंनिर्विकारंतंप्रसिद्धंत्वात्वांनविदामनजानीम । प्रसिद्धत्वंदर्शयति । त्वमिति । त्वंसत्वतःसत्वगुणात्सुरगणान्अस्राक्षीः तथारजसःरजोगुणात्मनु ष्यान् । तार्तीयतःतृतीयगुणात्तमोगुणादित्यर्थः । असुरगणान् अभितःसर्वकल्पेषु अस्राइतिसर्वत्रानुषंगः ॥ ११ ॥ कामंयथेष्टंप्रयाहि लंकांप्रतीतिशेषः । हेवीरत्रैलो क्यंत्रिलोकींरावणं क्रोशकंरोदनकारकमित्यर्थः । विश्रवसःतदाख्यऋषेःअवमेहंरेतोविकारंपुत्रंरावणमित्यर्थः । जहिहन । पत्नींसीताक्वतिंअवाप्नुहितेतवयशसःवितत्यै

सक्रोधदीप्तनयनांतहतः परस्य शोषं क्षणादुपगतो दनुजादिसत्त्वैः॥ सिंधुः शिरस्यर्हणं परिगृह्य रूपी पादारविंदमुपगम्य बभाष एतत् ॥ १० ॥ तं त्वा वयं जडधियो न विदाम भूमन् कूटस्थमादिपुरुषं जगतामधीशं ॥ त्वं सत्वतः सुरगणान् रजसो मनुष्यांस्तार्तीयतोसुरगणानभितस्तथास्राः ॥ ११ ॥ कामं प्रयाहि जहि विश्रवसोवमेहं त्रैलोक्यरावणमवाप्नुहि वीरपत्नीं ॥ बध्नीहि सेतुमिह ते यशसो वितत्यै गायंति दिग्विजयिनोयमुपेत्य भूपाः॥१२॥ इत्युक्तवंतममुमाश्वनुगृह्य बाणं तस्मै धृतं दितिसुतात्मसु चांत्यजेषु॥ शार्वाद्वराद्विगतमृत्युषु दुर्जयेषु निःसंख्यकेष्वमुचदाशु ददाह सर्वान् ॥१३॥ कृत्वेरणं तदथ मूलफलानि चात्र सम्यग्विधाय भवशत्रुरमोघचेष्टः ॥ बद्धुं दिदेश सुरवर्धकिनोवतारं तज्जं नलं हरिवरानपरांश्च सेतुम् ॥ १४ ॥ ॥ ॥ ॥

विस्ताराय इहमदधिष्ठितेसमुद्रेसेतुंबध्नीहि यंसेतुंदिग्विजयिनोदिशांविजयशीलाःभूपाउपेत्यगास्यंति सेतुकर्तुर्यशइतिशेषः इत्येतद्बभाषेइतिपूर्वेणान्वयः ॥ १२ ॥ अमुं समुद्रंअनुगृह्यतस्मैसमुद्रायसमुद्रार्थंधृतंबाणंशार्वात्वराद्रुद्रसंबंधिवरात् विगतमृत्युषुदुर्जयेषुजेतुमशक्येषुनिःसंख्यकेषुअनेकेषुदितिसुतात्मसुदैत्यात्मकेषुअंत्यजेषुचांडालेषुअमुचत् सर्वानंत्यजान् ॥ १३ ॥ भवशत्रुःस्वकृतकर्मश्रवणादिना भक्तसंसारनाशकोरामः तदीरणंप्रसिद्धमूषरस्थलंसम्यक्कृत्वासुभूमिंकृत्वा अत्रभुविमूलानिविधाय आरोपणंकृत्वा अतएवअमोघचेष्टःअन्यर्थकर्माऊषरस्थलेमूलफलारोपणादमोघचेष्टइतिभावः । सुराणांवर्धकिनः तक्षणःविश्वकर्मणःअवतारंतस्माद्विश्वकर्मणः जातं नलंनलाख्यकपिंअपरान् हरिवरान् सेतुंबद्धुंदिदेश ॥ १४ ॥ ॥ ॥ ॥ ॥ ॥

कपींद्रकरैः कंपिताः भूरुहाः वृक्षाः अंगेषु प्रदेशेष्वित्यर्थः । एषां तैः तथा तैः विविधाश्च ते अद्रिकूटाश्च पर्वतशृंगाणि तैः सेतुं बध्वा सुग्रीवाद्यैः अनेकैर्बहुविधैः कपिभिः सह विभीषणस्य दृक् दृष्टिः तया विभीषणदर्शितमार्गेणेत्यर्थः । 'दृक् स्त्रीस्याद्दर्शने बुद्धौ नेत्रे द्रष्टरि च त्रिष्वि'त्यभिधानात् । दग्धां हनूमतेतिशेषः ॥ १५ ॥ भुवने एकसारं केवलं बलस्वरूपं निःसीमं अवधिरहितं पौरुषं तेजः सेतुकर्मवा यस्य तं 'पौरुषं पुरुषस्योक्तौ भावे कर्मणि तेजसी'त्यभिधानं । अतएव परमं उत्तमं अतएव अनंतं प्राप्तं स्वसमीपमागतं रामं निशम्य श्रुत्वा त्रासाद्भयात् नितरां विषण्णं श्रांतं हृदयं मनो यस्य स तथा बभूव । कर्तव्यानि कर्तुं योग्यानि तानि च तानि कर्माणि तेषां विषये विमूढं स्मृतिरहितमित्यर्थः । चेतश्चित्तं यस्य तादृशोपि चा

बध्वोदधौ रघुपतिर्विविधाद्रिकूटैः सेतुं कपींद्रकरकंपितभूरुहांगैः ॥ सुग्रीवनीलहनुमत्प्रमुख्यैरनेकैर्लंकां विभीषणदृशाविशदाशु दग्धाम् ॥१५॥ प्राप्तं निशम्य परमं भुवनैकसारं निःसीमपौरुषमनंतमसौ दशास्यः ॥ त्रासाद्विषण्णहृदयो नितरां बभूव कर्तव्यकर्मविषये च विमूढचेताः ॥ १६ ॥ प्रस्थाप्य वालिसुतमेव च राजनीत्यै रामस्तदुक्तवचनेप्यमुना गृहीते ॥ द्वारो रुरोध स चतस्र उदीर्णसैन्यो रक्षःपतेः पुर उदारगुणः परेशः॥ १७ ॥ द्वारां निरोधसमये स दिदेश पुत्रं वारांपतेर्दिशि सुरेश्वरशत्रुमुग्रं ॥ प्राच्यां प्रहस्तमदिशाद्दिशि वज्रदंष्ट्रं प्रेताधिपस्य शशिनः स्वयमेव चागात् ॥१८॥ विज्ञाय तस्य भगवान् हनुमंतमेव देवेंद्रशत्रुविजयाय दिदेश चाशु ॥ नीलं प्रहस्तनिधनाय च वज्रदंष्ट्रं हंतुं सुरेंद्रसुतसूनुमथादिदेश ॥ १९ ॥ ॥ ॥ ॥

र्थीर्बभूव ॥ १६ ॥ उदीर्णसैन्यः उत्कृष्टसैन्यः रामः राजनीत्यर्थमेव वालिसुनं अंगदं प्रस्थाप्य प्रेषयित्वा । अमुना रावणेन तेन अंगदेन उक्तवचने अग्रहीते अनंगीकृते सति । रक्षःपतेः पुरः पुर्याः चतस्रः द्वाराः चत्वारि द्वाराणि रुरोध रोधितवान् ॥ १७ ॥ स रावणः द्वारां पुरद्वाराणां निरोधसमये सुरेश्वरशत्रुं इंद्रशत्रुं । अतएव उग्रं सोढुमशक्यमित्यर्थः । पुत्रं इंद्रजितं वारांपतेः जलपतेः वरुणस्य दिशि पश्चिमदिशि इत्यर्थः । दिदेश प्रहस्तं प्राच्यां पूर्वदिशि आदिशत् । प्रेतानां अधिपस्य यमस्य दिशि दक्षिणदिशि अदिशत् । शशिनः चंद्रस्य दिशं प्रति स्वयमेव च अगात् ॥ १८ ॥ विजयाय च विजयार्थमेव न तु हंतुमित्यर्थः सुराणां इंद्रः पुरंदरः तस्य सुनो वाली तस्य सूनुं पुत्रं अंगदम् ॥ १९ ॥ ॥

अधिज्यधनुःज्यांअधिरोपितंअधिज्यंतादृशंधनुर्यस्यसनथा । उपात्तःतूणाद्गृहीतःशरोयेनसतथा । असौरामःहरीश्वरंसुग्रीवं मध्येपूर्वदक्षिणयोर्मध्येआग्नेयदिशीत्यर्थः । नियुज्यस्वसैन्यमध्येसंस्थाप्येतिवा यस्यांदिशि उत्तरदिशिसरावणःतिष्ठतितांदिशंउद्दिश्य संस्थितःअतिष्ठत् ॥ २० ॥ हनूमता अमुष्यहनूमतःवीर्यंजाननूलंकादाहसमयदृष्टत्वात् तस्यहनूमतः हस्तंप्रपन्नइवप्राप्तइवभूत्वा । इंद्रजित्आशुविद्रावितःपलायितोभूदित्यर्थः । नीलःशिलयाविभीषणःशक्त्यागमितंप्राप्तं ॥ २१ ॥ विभीषणःसःप्रहस्तःनीलस्यवशंनैतिनप्राप्नोतीत्यभिप्रायेणसाकंनीलेनसह अमोघशक्त्याइमंप्रहस्तंप्रजहारताडितवानित्यर्थः तस्मिन्प्रहस्तेहतेसति अंगदःवज्रदंष्ट्रंउपेत्यभुविनिपात्य

मध्ये हरीश्वरमधिज्यधनुर्नियुज्य यस्यां स राक्षसपतिर्दिशमेव तां हि ॥ उद्दिश्य संस्थित उपात्तशरः सखड्गो देदीप्यमानवपुरुत्तमपूरुषोसौ ॥२०॥ विद्रावितो हनुमतेंद्रजिदाशुहस्तं तस्य प्रपन्न इव वीर्यममुष्य जानन् ॥ नीलो विभीषण उभौ शिलया च शक्त्या संचक्रतुर्यमवशंगमितं प्रहस्तम् ॥२१॥ नीलस्य नैव वशमेति स इत्यमोघशक्त्या विभीषण इमं प्रजहार साकं ॥ तस्मिन्हतेंगद उपेत्य जघान वज्रदंष्ट्रं निपात्य भुवि शीर्षममुष्य मृद्नन् ॥२२॥ सर्वेषु तेषु निहतेषु दिदेश धूम्रनेत्रं स राक्षसपतिः स च पश्चिमेन ॥ द्वारेण मारुतिसुतं समुपेत्य दग्धो गुप्तोपि शूलिवचनेन दुरंतशक्तिम् ॥२३॥ अकंपनोपि राक्षसो निशाचरेशचोदितः ॥ उमापतेर्वरोद्धतः क्षणाद्धतो हनूमता ॥२४॥ अथास्त्रसंप्रदीपितैः समस्तशो महोल्मुकैः ॥ रघुप्रवीरचोदिताः पुरं निशि स्वदाहयन् ॥२५॥ ततस्तौ निकुंभोथ कुंभश्च कोपात् प्रदिष्टौ दशास्येन कुंभश्रुतेर्हि ॥ सुतौ सुप्रहृष्टौ रणायाभियातौ कपींस्तान्बहिः सर्वशो यापयित्वा॥२६॥

अमुष्यवज्रदंष्ट्रस्यशीर्षंमृद्नन्मर्दयन्जघान ॥ २२ ॥ सचधूम्रनेत्रःपश्चिमेनद्वारेणशूलिनःरुद्रस्यवचनेनगुप्तोपिरक्षितोपिदग्धः भस्मीबभूव ॥२३॥ चोदितःप्रेरितः ॥२४॥ रात्रौप्रवृत्तांकथामाह । अथेति । अस्त्रेणअग्न्यस्त्रेण संप्रदीपितैःप्रज्वलितैःमहद्भिःस्थूलैःउल्मुकैःअलातैःसमस्तशःसर्वेहरयःपुरंलंकांस्वदाहयन् अदहन् ॥ २५ ॥ ततः दशास्येनकोपात्पुरदाहजकोपनिमित्तात् प्रदिष्टौआज्ञापितौकुंभश्रुतेःकुंभकर्णस्यसुतौसुप्रहृष्टौयुद्धंप्राप्तमितिअतिहर्षितौ निकुंभःअथकुंभश्चेतितौप्रसिद्धौ सर्वशःसर्वान् तान्कपीन्बहिःप्राकारात्बहिःयापयित्वानिःसार्यबहिःकृत्वेत्यर्थः । रणायअभियातौअभिप्राप्तौ ॥ २६ ॥ ॥ ॥ ॥

विधातुःसुतंजांबवंतंदिनेशस्यसूर्यस्यआत्मजेनसुग्रीवेणसुयुद्धंकृत्वा दिनेशात्मजेनआशुयमस्यलोकंप्रणीतःप्रापितः ॥ २७ ॥ अद्रिवरानपर्वतश्रेष्ठान्प्रदारयतिविदारय तीतितथातंमहांतंस्थूलंउग्रंदारुणंपरिघंमुसलाकारंलोहबंधरहितंपरिघाख्यायुधंप्रगृह्य सूर्यात्मजंससारप्राप । ससुग्रीवःभीतःसन्पश्चिमतःपृष्ठतःधनुःशतंशतधनुःपरिमित देशंपुप्लुवे । चतुर्हस्तैस्तुदंडकः । धनुर्द्वादशहस्तैस्तुइत्यभिधानं ॥ २८ ॥ वीरेनिकुंभेतंपरिघंभ्रामयतिसति । चंद्रसूर्याभ्यांसहिताःदिशःद्यौश्चअंतरिक्षंभ्रांताःसुराःतस्यनि कुंभस्यउरुबलंशर्वोद्भवंरुद्रसंभवंवरंचवीक्ष्य ईषत्विषेदुःविषादंप्रापुरित्यर्थः ॥ २९ ॥ मारुतिःस्वस्मादन्येनहंतुमसाध्यंतंनिकुंभंनिरीक्ष्य अस्यनिकुंभस्यपुरःसमुत्पपात

सकुंभो विधातुः सुतं तारनीलौ नलं चाश्विपुत्रौ जिगायांगदं च ॥ सुयुद्धं च कृत्वा दिनेशात्मजेन प्रणीतोयमस्याशु लोकं सुपापः ॥ २७ ॥ ततो निकुंभोद्रिवरप्रदारणं महांतमुग्रं परिघं प्रगृह्य ॥ ससार सूर्यात्मजमाशु भीतः स पुप्लुवे पश्चिमतो धनुःशतम् ॥ २८ ॥ तं भ्रामयत्याशु भुजेन वीरे भ्रांता दिशो द्यौश्च सचंद्रसूर्याः ॥ सुराश्च तस्योरुबलं वरं च शर्वोद्भवं वीक्ष्य विषेदुरीषत् ॥ २९ ॥ अनन्यसाध्यं तमथो निरीक्ष्य समुत्पपाताशु पुरोस्य मारुतिः ॥ प्रकाश्य बाह्वंतरमाह चैनं किमेभिरत्र प्रहरायुधं ते ॥ ३० ॥ इतीरितस्तेन स राक्षसोत्तमो वरादमोघं प्रजहार वक्षसि ॥ विचूर्णितोसौ तदुरस्यभेद्ये यथैव वज्रो विपतौ वृथा भवेत् ॥ ३१ ॥ विचूर्णिते निजायुधे निकुंभ एत्य मारुतिं ॥ प्रगृह्य चात्मनोंसके निधाय जग्मिवान् द्रुतं ॥ ३२ ॥ प्रगृह्य कंठमस्य सः प्रधानमारुतात्मजः ॥ स्वमाशु मोचयंस्ततो न्यपातयद्धरातले ॥ ३३ ॥ चकार तं रणात्मके मखे रमेशदैवते ॥ पशुं प्रभंजनात्मजो विनेदुरत्र देवताः ॥ ३४ ॥ ॥ ॥

बाह्वोःअंतरंमध्यंहृदयंप्रकाश्यप्रदर्श्य एनंनिकुंभंप्रत्याह । किमिति । तेतवएभिःकपिभिःकिं किंप्रयोजनमित्यर्थः । अत्रममहृदितेआयुधंप्रहरविसर्जय ॥ ३० ॥ अमोघंअव्यर्थंपरिघंवक्षसिहनुमद्धृदयेप्रजहारप्राक्षिपत् । असौपरिघःअभेद्येतस्यउरसि । तत्रदृष्टांतमाह । यथेति । विपतौगरुडे ॥ ३१ ॥ आत्मनःअंसकेस्कंधेनिधाय मारुतिमितित्रिषुसंबध्यते जग्मिवान् लंकांप्रतिजगाम ॥ ३२ ॥ अस्यनिकुंभस्यततःतस्मान्निकुंभात्स्वंमोचयन्न्यपातयत् ॥ ३३ ॥ तंनिकुंभंपशुंअत्ररणमखेदेवताः आकाशस्थदेवाःविनेदुःआश्रावयेत्यादिमंत्रध्वनिंचक्रुः । उद्गात्रादिकर्मदेवाश्चक्रुरितिभावः ॥ ३४ ॥ ॥ ॥ ॥ ॥

शुकसारणाभ्यांसंयुतःसुप्तघ्नादिषट् ॥ ३५ ॥ कपिकुंजरान्कपिश्रेष्ठान्मथ्नंतःविलोडयंतःव्याकुलंकुर्वंतइत्यर्थः सायकैःबाणैर्निहताः ॥ ३६ ॥ युद्धोन्मत्तादयःषट्निर्ययुः । निर्गताःयोद्धुमितिशेषः ॥ ३७ ॥ रावणाज्जाताःहयवर्यस्य उत्तमाश्वस्येत्यर्थः । उपरिस्थितःउपविष्टःसमरेसंग्रामेअभीःभयरहितः । प्रासेनप्रासाख्यायुधविशेषेणउद्यतःउद्युक्तःकरोयस्यसनरांतकः हरीन्ससारप्राप ॥३८॥ अनीकानिस्वसैन्यानिदहंतंनरांतकंनिरीक्ष्य तंनरांतकंप्रतिउत्पपात । उरोपिवक्षस्स्थलमपिनरांतकस्यसमदर्शयत् ॥३९॥ तस्यअंगदस्यउरसिप्रासवरंप्रासश्रेष्ठं । 'दैवाद्दृतेवरःश्रेष्ठेत्रिषुक्लीबंमनाक्प्रिय' इत्यभिधानं । प्रजहारप्रास्यत् तत्तुप्रासवरंवालिपुत्रस्यतेजसा सामर्थ्येनद्विधाद्विप्र

सुप्तघ्नो यज्ञकोपश्च शकुनिर्देवतापनिः ॥ युद्धोन्मत्तश्च मत्तश्च देवांतकनरांतकौ ॥ विद्युज्जिह्वः प्रमाथी च शुकसारणसंयुताः ॥ ३५ ॥ रावणप्रेरिताः सर्वे मथ्नंतः कपिकुंजरान् ॥ अवध्या ब्रह्मवरतो निहता रामसायकैः ॥ ३६ ॥ त्रिशिरा अतिकायश्च निर्ययू रावणाज्ञया ॥ ३७ ॥ नरांतको रावणजो हयवर्योपरिस्थितः ॥ अभीः ससार समरे प्रासोद्यतकरो हरीन् ॥ ३८ ॥ तं दहंतमनीकानि युवराजोंगदो बली ॥ उत्पपात निरीक्ष्याशु समदर्शयदप्युरः ॥ ३९ ॥ तस्योरसि प्रासवरं प्रजहार स राक्षसः ॥ द्विधासमभवत्तत्तु वालिपुत्रस्य तेजसा ॥ ४० ॥ अथास्य हयमाश्वेव निजघान मुखे कपिः॥ पेततुश्चाक्षिणी तस्य स पपात ममार च ॥४१॥ स खड्गवरमादाय प्रससार रणे कपिं ॥ आच्छिद्य चास्य खड्गं तं निहतो वालिसूनुना ॥४२॥ गंधर्वकन्यकासूते निहते रावणात्मजे ॥ आजगामाग्रजस्तस्य सोदर्यो देवतांतकः ॥ ४३ ॥ तस्यापतत एवाशु शरवर्षप्रतापिताः ॥ प्रदुद्रुवुर्भयात्सर्वे कपयो जांबवन्मुखाः ॥ ४४ ॥

कारं शकलीभूतंसमभवत् ॥ ४० ॥ अस्यनरांतकस्यहयंमुखेकपोलेनिजघान । तस्यहयस्यअक्षिणीपेततुः सहयःपपातममारच ॥ ४१ ॥ सनरांतकःवालिसूनुनातस्यनरांतकस्य तंखड्गंआच्छिद्यआकृष्यगृहीत्वानिहतः ॥ ४२ ॥ गंधर्वकन्यकायांसूतेप्रसूतेरावणात्मजे रावणाद्गंधर्वकन्यकायांजातइत्यर्थः । नरांतकेनिहतेसति तस्यनरांतकस्यसोदर्यःसमानोदरःएकमातृकःतत्राप्यग्रजःश्रेष्ठः देवांतकःदेवांतकाख्यःआजगाम ॥ ४३ ॥ आपततःआगच्छतःतस्यदेवांतकस्यशरवर्षेणप्रतापिताःसंतापंप्रापिताः ॥ ४४ ॥ ॥ ॥ ॥ ॥ ॥ ॥

सदेवांतकः तरसाजवेन रविपुत्रायुधोपमंयमदंडेनतुल्यंशरंआदाय अंगदंउरसिप्रजहारतताड । सोंगदः अपतत्मोहंचमूर्छांप्राप ॥ ४५ ॥ तिग्मांशोः उग्रकिरणस्यसूर्यस्यतन यःपुत्रःसुग्रीवः प्रचलाःपादपाःवृक्षाःयस्मिन्नसौतथातंशैलंसंगृह्य । अभिदुद्रावअभिययौ ॥ ३६ ॥ सुरांतकःदेवांतकः आपतंतंस्वंहंतुंआगच्छंतंतंशैलंआलक्ष्यअवलोक्य । दूरात्शरेणविदारितंचकारपरंअन्यशरंदधार ॥ ४७ ॥ सदेवांतकःतंशरंआकृष्य अविध्यत्विव्याध ससुग्रीवः ॥ ४८ ॥ अप्रतिमंअसदृशं ॥ ४९ ॥ मारुतिःतंदेवांतकं आलोक्यदृष्ट्वा अस्यदेवांतकस्यहयैरश्वैःसारथिनासहितंरथंचूर्णयित्वा धनुःहस्तस्थंधनुःसमाच्छिद्यआहत्यबभंजह ॥ ५० ॥ पवनात्मजोहरिःहनुमान्पुरःआपततोरि

स शरं तरसादाय रविपुत्रायुधोपमं ॥ अंगदं प्रजहारोरस्यपतत्स सुमोह च ॥ ४५ ॥ अथ तिग्मांशुतनयः शैलं प्रचलपादपं ॥ अभिदुद्राव संगृह्य चिक्षेप च निशाचरे ॥ ४६ ॥ तमापतंतमालक्ष्य दूराच्छरविदारितं ॥ सुरांतकश्चका राशु दधार च परं शरम् ॥ ४७ ॥ स तमाकर्णमाकृष्य यमदंडोपमं शरं ॥ अविध्यद्धृदये राज्ञः कपीनां स पपातह ॥ ४८ ॥ बलमप्रतिमं वीक्ष्य सुरशत्रोस्तु मारुतिः ॥ आह्वयामास युद्धाय केशवः कैटभं यथा ॥ ४९ ॥ तमापतंतमालोक्य रथं सहयसारथिं ॥ चूर्णयित्वा धनुश्चास्य समाच्छिद्य बभंज ह ॥ ५० ॥ अथ खड्गं समादाय पुरआपततो रिपोः ॥ हरिः प्रगृह्य केशेषु पातयित्वैनमाहवे ॥ ५१ ॥ शिरो ममर्द तरसा पवमानात्मजः पदा ॥ तमीशानगिरावध्यं निहत्य पवनात्मजः ॥ ५२ ॥ समीडितः सुरवरैः प्लवंगैर्वीक्षितो मुदा ॥ विद्रावितारिवलकपिं वराच्छिशिरसं विभोः ॥ भङ्क्त्वा रथं धनुः खड्गं आच्छिद्याशिरसं व्यधात् ॥ ५३ ॥ ॥ ॥ ॥

पोःकेशेषुकेशान्प्रगृह्य आहवेरणेएनंदेवांतकंपातयित्वा पदाशिरोममर्द ॥ ५१ ॥ तमीशानवराबध्यमितिक्वचित्पाठः वरदानादवध्यंतमितिक्वचित्पाठः तंदेवांतकंनिहत्य सुरवरैःसमीडितःस्तुतःप्लवंगैःकपिभिःमुदावीक्षितः ॥ ५२ ॥ पवनात्मजःविभोःब्रह्मणोवराद्द्विद्राविताःअखिलकपयोयेनसतथातं त्रीणिशिरांसियस्यासौत्रिशिराः तंतथाअत एवनामतोपित्रिशिराः तंअशिरसंशिरोहीनंव्यधात् किंकृत्वा । रथंत्रिशिरसोरथंधनुश्चभङ्क्त्वाखड्गंआच्छिद्य धनुःखड्गमितिद्वंद्वैकवद्भावः। आच्छिद्यइत्यनेनसंबध्यते ॥ ५३ ॥

मारुतेःहनुमतःमुष्टिना पार्वत्याःवरेणदर्पितौदृप्तौ कपीन्प्रमथ्नंतौव्यथयंतौ युद्धोन्मत्तःमत्तश्चेतिउभौहतौ॥५४॥ततःयुद्धोन्मत्तादिपंचानांमृतेरनंतरं गंधर्विकायांगंधर्वसंबंधिकं न्यकायां दशास्याज्जनितःउत्पन्नःकालानलेनप्रलयकालाग्निनासन्निकाशःसदृशःअतिरथः अतिकायःस्थूलदेहत्वादतिकायनामा हरीन्प्रमृद्नन्मर्दयन् स्वयंभुवादत्तेनरथेन कपिसैन्यमध्येचचार ॥५५॥ लक्ष्मणेनकुंभकर्णोहतइतिग्रंथांतरवाक्यविरोधं अतिकायस्यनिरुक्तिपूर्वकंनामद्वयकथनेनपरिहरन्नाह । बृहत्तनुरिति । यतोस्यबृहत्तनुःसस्थूलदेहः अतःअतिकायइतिनामप्रसिद्धिरित्यर्थः । यतोस्यकर्णौकुंभवत्कुंभाविववर्तेते अतोस्यैवकुंभकर्णइतिनामप्रसिद्धिश्च । तस्मादितिनामद्वयवान् रावणपुत्रोलक्ष्मणेन हतः नतु रावणानुजोकुंभकर्णइतिग्रंथांतरगतवाक्यानि आचार्योक्तयाअनुकूलेनयोज्यानीत्यर्थः । सोतिकायःअर्कात्मजःसूर्यजःसुग्रीवःतदादिकपीन्जिगायजितवान् ।

युद्धोन्मत्तश्च मत्तश्च पार्वतीवरदर्पितौ ॥ प्रमथ्नंतौ कपीन्सर्वान् हतौ मारुतिमुष्टिना ॥ ५४ ॥ ततोतिकायोतिरथो रथेन स्वयंभुदत्तेन हरीन् प्रमृद्नन् ॥ चचार कालानलसन्निकाशो गंधर्विकायां जनितो दशास्यात् ॥ ५५ ॥ बृहत्तनुः कुंभवदेव कर्णावस्येत्यतो नाम च कुंभकर्णः ॥ इत्यस्य सोर्कात्मजपूर्वकान् कपीन् जिगाय रामं सहसाभ्यधावत् ॥ ५६ ॥ तमापतंतं शरवर्षधारं महाघनाभं स्तनयित्नुघोषं ॥ निवारयामास यथा समीरः सौमित्रिरात्तेष्वसनः शरौघैः ॥ ५७ ॥ ववर्षतुस्तावतिमात्रवीर्यौ शरान्सुरेशाशनितुल्यवेगान् ॥ तमोमयं चक्रतुरंतरिक्षं सुशिक्षया क्षिप्रतरास्त्रबाणैः ॥ ५८ ॥ ॥ ॥ ॥ ॥ ॥

सएवरामंचरामंप्रतिसहसाबलेनअभ्यधावत्अभिययौ ॥ ५६ ॥ आत्तंगृहीतंइष्वसनंधनुर्येनसतथा । सौमित्रिःलक्ष्मणःशरवर्षस्यबाणवृष्टेःसंततिःधाराःयस्मादसौतथातं । 'धारासंपातआसारःधाराग्रेबुसंतत्यां सैन्याग्रेश्वगतित्रयी'त्यभिधानं । महाघनस्यमहामेघस्यआभेवआभायस्यसतथातं कृष्णवर्णमित्यर्थः । स्तनयित्नुवत् गर्जितमेघवत्घोषःशब्दोयस्यसतथातं । आपतंतंआयांतं तंअतिकायंशरौघैःनिवारयामास तत्रदृष्टांतमाह । यथेति । समीरोवायुःमेघंयथातथेत्यर्थः ॥ ५७ ॥ अतिमात्रंअतिक्रांतंपरिमाणंवीर्यंपराक्रमोययोस्तौतथा अन्यवीरवीर्यादप्यधिकवीर्यावित्यर्थः । तौलक्ष्मणातिकायौ सुरेशस्य अशनिर्वज्रःतेनतुल्यःवेगोयेषांतेतथा तान्शरान्ववर्षतुः । अस्त्राणिचबाणाश्चास्त्रबाणाः अस्त्रेणाभिमंत्रितबाणाअस्त्रबाणावा क्षिप्रतराःअतिवेगवंतः तेचतेअस्त्रबाणाश्चतैःसुशिक्षयाचतमोमयंअंधकारव्याप्तं अंतरिक्षंचक्रतुः ॥ ५८ ॥

अस्यातिकायस्यशरान्शरैःनिवार्य महास्त्रजालैःदिव्यास्त्रसमूहैःतस्यास्त्राणिनिवार्य शिरसासहैवबाहूचिच्छेद सोतिकायःपुनःबाव्होःशिरसश्छेदनानंतरं ॥ ५९ ॥ तेपुच तुर्भुजशिरस्सुछिन्नेषुसत्सु अथसोपिवीरोतिकायःपुनःपुनःआस्यानिचबाहवश्चछिन्नेभ्यःद्विगुणिताःआस्यबाहवोयस्यसतथाताद्दशोबभूव । बहुशीर्षबाहुकोबभूवेतिभावः । अथशीर्षबाहुच्छेदनानंतरं । समस्तलोकस्यसर्वजगतःअंतरात्माअंतर्नियामकःमरुत्मुख्यप्राणःविषण्णंछेदनक्रिययाश्रांतं सौमित्रिंलक्ष्मणंउवाच ॥ ६० ॥ उवाचेत्युक्तं विवृणोति । ब्रह्मेति । अदृश्यःलक्ष्मणादन्येषांदृष्टयगोचरःसमीरोवायुः रक्षसःरावणस्यसुतस्यातिकायस्यअश्रवणीयंश्रवणेंद्रियगोचरंयथानभवतितथा हेसुमुखलक्ष्मण एषो तिकायःविधातुर्वरात्अवध्यत्ववरनिमित्तात्ब्रह्मास्त्रतःब्रह्मास्त्रंविनेत्यर्थः । अन्येनवध्योन वधार्होन इत्थंअनेनप्रकारेणउक्त्वा अंतरिक्षंअरुहत्आरुरोह ॥ ६१ ॥ अथ वा

**शरैः शरानस्य निवार्य वीरः सौमित्रिरस्त्राणि महास्त्रजालैः ॥ चिच्छेद बाहू शिरसा सहैव चतुर्भुजोभूत्स पुनर्द्विशीर्षः ॥५९॥ छिन्नेषु तेषु द्विगुणास्यबाहुः पुनः पुनः सोथ बभूव वीरः ॥ उवाच सौमित्रिमथांतरात्मा समस्तलोकस्य मरुद्विषण्णं ॥६०॥ ब्रह्मास्त्रतोन्येन न वध्य एषो वराद्विधातुः सुमुखेत्यदृश्यः ॥ रक्षःसुतस्याश्रवणीयमित्थमुक्त्वा समीरोरुहदंतरिक्षम् ॥ ६१ ॥ अथानुजो देवतमस्य सोस्त्रं ब्राह्मं तनूजे दशकंधरस्य ॥ मुमोच दग्धः सरथाश्वसूतस्तेनातिकायः प्रवरोस्त्रवित्सु ॥ ६२ ॥ हतेषु पुत्रेषु स राक्षसेशः स्वयं प्रयाणं समरार्थमैच्छत् ॥ सज्जीभवत्येव निशाचरेशे खरात्मजः प्राह धनुर्धरोत्तमः ॥ ६३ ॥ नियुंक्ष्व मां मे पितरंतकस्य वधाय राजन् सहलक्ष्मणं तं ॥ कपिप्रवीरांश्च निहत्य सर्वान् प्रतोषये त्वामहमद्य सुष्ठु ॥ ६४ ॥ इतीरिते तेन नियोजितः सः जगाम वीरो मकराक्षनामा ॥ विधूय सर्वांश्च हरिप्रवीरान् सहांगदान् सूर्यसुतेन साकं ॥ ६५ ॥ ॥ ॥ ॥**

योवैचनानंतरं देवतमस्यदेवश्रेष्ठस्यरामस्यसोनुजोलक्ष्मणःब्राह्मंब्रह्मदैवतंअस्त्रं दशकंधरस्यदशग्रीवस्यतनुजेतिकायेमुमोच । अस्त्रवित्सुअस्त्रज्ञेषुप्रवरोतिकायः तेनास्त्रेणरथाश्वसूतैःसहवर्तमानःसन् दग्धःभस्मसाद्बभूवेत्यर्थः ॥ ६२ ॥ समरार्थंयुद्धार्थंसज्जीभवतिसतिउद्योगंकुर्वतिसति खरस्यात्मजोमकराक्षःप्राह ॥ ६३ ॥ किमिति । हेराजन् । मेपितुःखरस्यअंतकस्यमृत्युभूतस्यरामस्यवधायमांनियुंक्ष्वआज्ञापय अहंनिहत्यत्वांप्रतोषयेतोषयामि ॥ ६४ ॥ इतिईरितेउक्तेसति तेनरावणेननियोजितःआज्ञापितः वीरःसमकराक्षनामा ॥ ६५ ॥ ॥ ॥ ॥ ॥ ॥

सूर्यसुतेनसाकंसहसर्वान्विधूयविद्राव्य लक्ष्मणेनमुक्तबाणसंघान्अवज्ञयातिरस्कारेणआचिंतयनअगणयन्सन् राममंरणेरणाययुद्धार्थमित्यर्थः । आह्वयत् ॥ ६६ ॥ असौ राममंप्रतिउवाच । किमिति । धनुर्धराणांमध्येवरःश्रेष्ठःजनस्थानंदंडकारण्यंगतःप्राप्तःपितामत्पिताखरः । केनाप्युपायेनमंत्रौषधछद्माद्युपायबलेनैव नतुवीर्येणेत्यर्थः । त्वया हतःतस्यवधस्यफलंअद्यतेददामीत्युवाचेतिसंबंधः । इतिपूर्वोक्तप्रकारेणब्रुवाणःसरोजंपद्मंयोनिः कारणंयस्यसतथा तस्यब्रह्मणःवरादवध्यः समकराक्षःअस्त्रसंघान्अमुचत् ॥६७॥ अमेयःनमातुंसर्वप्रकारैर्ज्ञातुंयोग्योरामः प्रहस्यअस्यमकराक्षस्यनिवार्य अशनिनासन्निभेनसदृशेनशरेणखरात्मजस्यशिरःसमुन्ममाथ चिच्छेदेत्यर्थः ॥६८॥ पृथ्वीरुहाःवृक्षाःशैलाःपर्वताःतान् धरंतितेतथातैःकपिप्रवीरैःनिहतेभ्यःअवशेषिताःतस्यमकराक्षस्य येअनुयायिनःअनुचराःतेतथाप्रदुद्रुवुः । तथा कथंपूर्वंहतेषुसत्सुयथै

अचिंतयन् लक्ष्मणबाणसंघानवज्ञया राममथाह्वयद्रणे ॥ ६६ ॥ उवाच रामं रजनीचरोसौ हतो जनस्थानगतः पिता त्वया ॥ केनाप्युपायेन धनुर्धराणां वरः फलं तस्य ददामि तेद्य ॥ इति ब्रुवाणः स सरोजयोनेर्वरादवध्योमुचदस्त्रसंघान् ॥ ६७ ॥ प्रहस्य रामोस्य निवार्य चास्त्रैरस्त्राण्यमेयोशनिसंनिभेन ॥ शिरः शरेणोत्तमकुंडलोज्ज्वलं खरात्मजस्याथ समुन्ममाथ ॥ ६८ ॥ विदुद्रुवुस्तस्य तु येनुयायिनः कपिप्रवीरैर्निहतावशेषिताः ॥ यथैव धूम्राक्षमुखेषु पूर्वं हतेषु पृथ्वीरुहशैलधारिभिः ॥६९॥ ततः स सज्जीकृत आत्तधन्वा रथं समास्थाय निशाचरेश्वरः ॥ वृतः सहस्रायुतकोट्यनीकपैर्निशाचरैराशु ययौ रणाय ॥७०॥ बलैस्तु तस्याथ बलं कपीनां नैकप्रकारायुधपूगभग्नम् ॥ दिशः प्रदुद्राव हरींद्रमुख्याः समर्दयन्नाशु निशाचरांस्तदा ॥ ७१ ॥ ॥

वत्तथैवेत्यर्थः ॥ ६९ ॥ ततःतदनंतरं सज्जीकृतःयुद्धसामग्र्युपेतइत्यर्थः । आत्तंगृहीतंधनुःयेनासौतथा सहस्रसंख्याकानिचतान्ययुतानिच तथातेषांकोटिसंख्यायेषांतेतथा । तेचतेअनीकपाश्चसेनापतयःतैःतादृशैःनिशाचरैर्वृतःआवृतःसनिशाचरेश्वरोरावणःरथंसमास्थाय आरुह्य आशुजवेनरणाययया ॥ ७० ॥ तस्यरावणस्यबलैः नएकप्रकाराणिनैकप्रकाराणिवहुविधानीत्यर्थः तानिचतानिआयुधानिचतेषांपूगेनसमूहेनभग्नंपराभवंप्राप्तंकपीनांबलंदिशःप्रतिदुद्राव तदातस्मिन्समयेहरींद्रमुख्याःकपिश्रेष्ठाःनिशाचरान्समर्दयन्अर्दयामासुः समासदन्नितिवापाठः ॥ ७१ ॥ ॥ ॥ ॥ ॥

पूर्वंमरुत्सुएकोनपंचाशन्मरुत्सुप्रवीराःश्रेष्ठाःप्राणादयःप्राणादिसमानांताःपंच इदानींधनदेनजाताःरामावतारेकुबेरपुत्राइत्यर्थः। गंधमादेनसहिताःगजःगवाक्षःगवयःवृष श्चकुबेरपुत्रत्वेगजादिनामवंतइत्यर्थः। सप्रसिद्धःगजादीनांपितावित्तपतिः कुबेरःकत्थनःकत्थननामवानरःकुबेरावतारःकत्थनः प्राणादीनांअवतारभूताःगजादयःपंच एवंषट् कपिप्रवीराःसेनांरावणंचजघ्नुरितियोजना॥७२॥तान्गजादीन्षट्द्राक्आशु जांबवतासहितौतंरावणंप्रजन्हतुःततक्षतुः॥७३॥ शरैःगिरीन्विदार्य अथअन्यान्नीन्शरान्ना दायेतिशेषः। तेषुमैंदादित्रिषुएकैकंएकमेकंशरमित्यर्थः। अमुचत्एभिःरावणमुक्तत्रिशरैःतैर्मैंदादित्रयोविनिपातिताः अथतंरावणं ॥७४॥ रक्षःरावणःतंअंगदंदृढंआहतः सोंगदःधरातलंअगमत्भुविपपातेतिभावः। एनंरावणंअभिप्रजग्मिवान्अभ्याययौ ॥ ७५ ॥ तस्यसुग्रीवस्यहस्तगंकरेविद्यमानंभूरुहंवृक्षंखंडशएव खंडानीतिखंडशःकृत्वा

गजो गवाक्षो गवयो वृषश्च सगंधमादा धनदेन जाताः॥ प्राणादयः पंच मरुत्प्रवीराः सकत्थनो वित्तपतिश्च जघ्नुः ॥ ७२ ॥ शरैस्तु तान् षड्भिरमोघवेगैर्निपातयामास दशाननो द्राक् ॥ अथाश्विपुत्रौ च सजांबवंतौ प्रजह्नतुः शैलवरैस्त्रिभिस्तम् ॥७३॥ गिरीन्विदार्याशु शरैरथान्यान् छरान्दशास्योमुचदाशु तेषु ॥ एकैकमेभिर्विनिपातितास्ते ससार तं शक्रसुतात्मजोथ ॥ ७४ ॥ शिलां समादाय तमापतंतं बिभेद रक्षोहृदये शरेण ॥ दृढाहतः सोप्यगमद्धरातलं रवेः सुतोथैनमभिप्रजग्मिवान् ॥ ७५ ॥ तद्धस्तगं भूरुहमाशु बाणैर्दशाननः खंडश एव कृत्वा ॥ ग्रीवाप्रदेशस्य मुमोच बाणं भृशाहतः सोपि पपात भूमौ ॥ ७६ ॥ अथो हनूमानुरगेंद्रभोगसमं स्वबाहुं भृशमुन्नमय्य ॥ तताड वक्षस्यधिपं तु रक्षसां मुखैः स रक्तं प्रवमन्पपात ॥ ७७ ॥ स लब्धसंज्ञः प्रशशंस मारुतिं त्वया समो नास्ति पुमान्हि कश्चित् ॥ कः प्रापयेदन्य इमां दशां मामितीरितो मारुतिराह तं पुनः ॥ ७८ ॥ ॥ ॥

वृक्षस्यसूक्ष्मभागान्कृत्वेत्यर्थः। अस्यसुग्रीवस्यग्रीवाप्रदेशेकंठमूलेमुमोच। भृशंआहतःविद्धःसोपिसुग्रीवः ॥७६॥ अथहनूमान् उरसावक्षसागच्छंतीतिउरगाःसर्पाःते षांइंद्रईशःशेषःतस्यभोगोदेहःतेनसमःतुल्यः तंस्वबाहुंउन्नमय्यउद्धृत्य रक्षसांअधिपंरावणंवक्षसिहृदिभृशंतताड। सरावणःमुखैःसर्वमुखैःरक्तंप्रकर्षेणवमन्सन् पपात ॥ ७७ ॥ लब्धसंज्ञःप्राप्तसंज्ञःसरावणःमारुतिंप्रशशंसतुष्टाव किमिति त्वयासमःकश्चित्पुमान्नास्तिहियतःअन्यःत्वदन्यःकःपुमान् इमांदशांमूर्छावस्थांप्रापयेत्कोपिन प्रापयेदित्यर्थः। अतस्त्वत्समोनास्तीत्यर्थः। रावणेनइतीरितोमारुतिःपुनःरावणोक्त्यनंतरं तरावणंप्रत्याह ॥ ७८ ॥ ॥ ॥

किमिति हेरावणएतत्त्वयिप्रयोजितवलंअत्यल्पं मयाअल्पवलंप्रयोजितमितिभावः । कुतःयद्यस्मात्त्वंउपात्तंप्राप्तंजीवितंजीवनंयेनसतथाअसीतिशेषः तस्मादेतदल्पमि त्यर्थः । इत्युक्तोरावणःपुनरुवाच किमिति । मत्तोपिमत्सकाशादपिसमुद्यतंउद्युक्तंमुष्टेःप्रहारं गृहाणस्वीकुरु इत्युक्त्वातंहनूमंतंपुपोथ ॥ ७९ ॥ तस्मिन्हनूमतिप्रहारेण ताडनेनकिंचित् असंतमीषत्विह्वलांगवत्भ्रांतइवस्थितेसति इदंहनुमदवस्थानंममअंतरं गंतुंअवकाशइतिविचार्य सरावणःमारुतिनावाचापुनः युद्धंकुरुमागच्छेत्येवं रूपवाक्येन निवारितोपि अग्निसूनुंनीलंप्रतियियौ ॥ ८० ॥ नीलःतंरावणंप्रसमीक्ष्यदृष्ट्वा चंचलःसन् एकत्रअस्थिरःसन्नित्यर्थः । तस्यरावणस्य धनुश्चध्वजाग्रंचअश्वाश्च रथश्चतथा तेषुमूर्धस्वपिरावणमस्तकेष्वपिचचार । नीलःधनुरादिषुचचार परंतु एकत्रस्थिरोनवभूवेत्यर्थः । सरावणोपियुद्धशौंडोपीत्यर्थः । तेननीलेनअलंजडीकृतः । कर्त

अत्यल्पमेतद्यदुपात्तजीवितः पुनस्त्वमित्युक्त उवाच रावणः ॥ गृहाण मत्तोपि समुद्यतं त्वं मुष्टिप्रहारं त्विति तं पुपोथ ॥ ७९ ॥ किंचित्प्रहारेण तु विह्वलांगवत्स्थिते हि तस्मिन्निदमंतरं मम ॥ इत्यग्निसूनुं प्रययौ स रावणो निवारितो मारुतिनापि वाचा ॥ ८० ॥ तमापतंतं प्रसमीक्ष्य नीलो धनुर्ध्वजाग्राश्वरथेषु तस्य ॥ चचार मूर्धस्वपि चंचलोलं जडीकृतस्तेन स रावणोपि ॥ ८१ ॥ स क्षिप्रमादाय हुताशनास्त्रं मुमोच नीले रजनीचरेशः ॥ स तेन भूमौ पतितो न चैनं ददाह वह्निः स्वतनुर्यतोसौ ॥ ८२ ॥ ततो ययौ राघवमेव रावणो निवारयामास तमाशु लक्ष्मणः ॥ ततक्षतुस्तावधिकौ धनुर्भृतां शरैः शरीरावरणावदारणैः ॥ ८३ ॥ निवारितस्तेन दशाननो भृशं रुषान्वितो बाणममोघमुग्रं ॥ स्वयंभुदत्तं परिकृष्य चाशु ललाटमध्ये प्रमुमोच तस्य ॥ ८४ ॥ भृशाहतस्तेन मुमोह लक्ष्मणो रथादवप्लुत्य दशाननोपि ॥ क्षणादभिद्रुत्य बलात्प्रगृह्य स्वबाहुभिर्नेतुमिमं समैच्छत् ॥ ८५ ॥

व्यकर्माणिविवेकशून्यःकृतः ॥ ८१ ॥ हुताशनास्त्रं आग्नेयास्त्रं क्षिप्रंशीघ्रंतेनास्त्रेणसनीलःवह्निःयतोसौनीलःस्वतनुःस्वावतारः अतःएनंनीलंनददाह ॥ ८२ ॥ तंरावणं धनुर्भृतांमध्येअधिकौश्रेष्ठौलक्ष्मणरावणौ शरीरस्यआवरणंकवचंअवदारयंतिभेदयंतीतितथा तैःशरैःततक्षतुः परस्परंताडयामासतुः ॥ ८३ ॥ तेनलक्ष्मणेनभृशंनिवारितः निराकृतोदशाननः रुषाक्रोधेनअन्वितःसन् स्वयंभुवाब्रह्मणादत्तं अतएवअमोघंअतएवउग्रंक्रूरंअसह्यमित्यर्थः । बाणंआकृष्य तस्यलक्ष्मणस्यललाटमध्येप्रमुमोच ॥ ८४ ॥ तेनबाणेनभृशंगाढंआहतःविद्धःलक्ष्मणःमुमोहमूर्छामवाप । अथदशाननोपिक्षणाद्रथादवप्लुत्यअवरुह्य अभिद्रुत्य इमंलक्ष्मणंस्वबाहुभिःस्वस्यविद्यमानविंशति बाहुभिःबलात्प्रगृह्य नेतुंस्वगृहंप्रतिनेतुं ऐच्छत् ॥ ८५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

सुविह्वलोपिअतिमूर्छितोपिसलक्ष्मणःसंज्ञांसंप्राप्य । हरेःश्रीसंकर्षणस्यअंशयुतंनिजंस्वरूपंस्वमूलरूपंशेषंसस्मार । सरावणःअस्यशेषस्यचअवतारंलक्ष्मणमित्यर्थः । चालनायापिचालयितुमपिनशशाकशक्तोनाभूत् ॥ ८६ ॥ सरावणःलक्ष्मणंबलात्प्रचकर्ष यदा । तदामेरुमंदरपर्वताभ्यांसहितासहमेरुमंदरासागरैःसहितापृथ्वीचचाल लक्ष्मणोनैवचचाल ॥ ८७ ॥ सहस्रसंख्याकाःमूर्धानोशिरांसियस्यसतथातस्य । तथा । अस्यशेषस्यएकमूर्धनिएकफणेसप्तपातालैःपातालादिसप्तलोकैःगिरींद्रैःमेर्वादिपर्वतैःसागरैःसहवर्तमानाअखिलासमग्रापंचाशत्कोटिविस्तीर्णेतियावत् । इयंधराभूःसर्षपायतिसर्षपवदाचरति । बताश्चर्यं कोनाम कःपुरुषःतंशेषात्मकंएनंलक्ष्मणंप्रसह्यबलात्कारेणहरेत् अपहरेत् कोपिनहरेदित्यर्थः । तुविशेषेणबलेनेत्यर्थः ॥ ८८ ॥ रामावरजंप्रकर्षतिसति तथैवपूर्ववदेवत्वरान्वितःवेगयुक्तःसमस्तजीवानांअधिपतेःस्वामिनःवा

संप्राप्य संज्ञां स सुविह्वलोपि सस्मार रूपं निजमेव लक्ष्मणः ॥ शेषं हरेरंशयुतं न चास्य संचालनायापि शशाक रावणः ॥ ८६ ॥ बलात्स्वदोर्भिः परिगृह्य चाखिलैर्यदा स वीरं प्रचकर्ष रावणः ॥ चचाल पृथ्वी सहमेरुमंदराससागरा नैव चचाल लक्ष्मणः ॥ ८७ ॥ सहस्रमूर्ध्नोस्य बतैकमूर्धनि ससप्तपातालगिरींद्रसागरा ॥ धराखिलेयं ननु सर्षपायति प्रसह्य को नाम हरेत्तमेनं ॥ ८८ ॥ प्रकर्षति त्वेव निशाचरेश्वरे तथैव रामावरजं त्वरान्वितः ॥ समस्तजीवाधिपतेः परा तनुः समुत्पपातास्य पुरो हनूमान् ॥ ८९ ॥ समुष्टिमावृत्य च वज्रकल्पं जघान तेनैव च रावणं रुषा ॥ प्रसार्य बाहूनखिलैर्मुखैर्वमन् स रक्तमुष्णं व्यसुवत्पपात ॥ ९० ॥ निपात्य रक्षोधिपतिं स मारुतिः प्रगृह्य सौमित्रिमुरगशायिनः ॥ जगाम रामाख्यतनोः समीपं सौमित्रिमुद्धर्तुमलं ह्यसौ कपिः ॥ ९१ ॥ स रामसंस्पर्शनिवारितक्लमः समुत्थितस्तेन समुद्धृते शरे ॥ बभौ यथा राहुमुखात्प्रमुक्तः शशी सुपूर्णो विकचत्स्वरश्मिभिः ॥ ९२ ॥ ॥

योःपराद्वितीयातनुःस्वरूपंवायोर्द्वितीयरूपमित्यर्थः । हनूमान्अस्यरावणस्यपुरःअग्रेसमुत्पपात ॥ ८९ ॥ सहनुमान्वज्रेणकुलिशेनकल्पंसदृशंमुष्टिंआवृत्यपरिभ्राम्य रुषाकोपेनतेनमुष्टिनारावणंजघान । सरावणःबाहून्प्रसार्यविस्तार्यअखिलैर्मुखैःउष्णंरक्तंवमन्सन् व्यसुवत्विगतप्राणइवशववदितियावत् पपात ॥ ९० ॥ उरगशायिनःशेषशायिनःहरेःरामाख्यतनोःरामाह्वयस्वरूपस्यसमीपंजगाम । असौकपिःहनुमान्सौमित्रिंलक्ष्मणंउद्धर्तुमलंसमर्थोहि ॥ ९१ ॥ रामस्यसंस्पर्शेनप्रीतिपूर्वकहस्तस्पर्शेननिवारितःपरिहृतःक्लमःग्लानिःयस्यसतथा । सलक्ष्मणःतेनरामेणशरेसमुद्धृतेउत्पाटितेसति समुत्थितःसन् बभौशुशुभे । तत्रदृष्टांतमाह । यथेति । विकचद्भिःदीप्यमानैःस्वरश्मिभिःस्वांशुभिःसुपूर्णःकलाभिःपूर्णः ॥ ९२ ॥ ॥ ॥ ॥ ॥ ॥

शरैः सहितं शेषस्य भोगेन देहेन आभं सदृशं चापं धनुः प्रगृह्य पुनश्च सुलब्धा संप्राप्ता संज्ञा ज्ञानं येन तं प्रति हे रावण सञ्जीभव युद्धोपस्कारवान् भवेति जगाद ॥ ९३ ॥ सकार्मुकः सधनुः समार्गणः सशरः शरैः कृतः अंधकारो यासु ताः तथा ताद्दशः दिशः चकार अतः परमास्त्रवेत्ता दिव्यास्त्रज्ञः ॥ ९४ ॥ अस्मिन् रावणे रथे स्थिते उपविष्टे सति मे पतिः स्वामी भूमितले स्थितो न स्यादिति स्म इत्यभिप्रायेण पवनस्य पुत्रः ॥९५॥ अस्य रावणस्य हयान् सूतं च निहत्य ध्वजायायुधानि तानि तिलशः तिलसंमितानि कृत्वा चूर्णकृत्वेत्यर्थः छत्रं च संछिद्य छित्वा मौलिं किरीटं च कर्ता चिच्छेद ॥ ९६ ॥ कर्तव्यमूढं कर्तव्यकर्मविषये विवेकरहितं मर्तुं मरणार्थं ॥ ९७ ॥ अवाग्वदनः नतमुखो रावणः हतेभ्यः अवशेषितैः उर्वरितैः मंत्रिभिः

स शेषभोगाभमथो जनार्दनः प्रगृह्य चापं सशरं पुनश्च ॥ सुलब्धसंज्ञं रजनीचरेशं जगाद सज्जीभव रावणेति ॥९३॥ रथं समारुह्य पुनः सकार्मुकः समार्गणो रावण आशु रामं ॥ अभ्येत्य सर्वांश्च दिशश्चकार शरांधकाराः परमास्त्रवेत्ता ॥ ९४ ॥ रथे स्थितेऽस्मिन् रजनीचरेशे न मे पतिर्भूमितले स्थितः स्यात् ॥ इति स्म पुत्रः पवनस्य रामं स्कंधं समारोप्य ययौ च राक्षसं ॥ ९५ ॥ प्रहस्य रामोऽस्य हयान्निहत्य सूतं च कृत्वा तिलशो ध्वजं रथं ॥ धनूंषि खड्गान्सकलायुधानि छत्रं च संछिद्य चकर्त मौलिं ॥९६॥ कर्तव्यमूढं तमवेक्ष्य रामः पुनर्जगादाशु गृहं प्रयाहि ॥ समस्तभोगाननुभूय शीघ्रं प्रतोष्य बंधून्पुनरेहि मर्तुम् ॥ ९७॥ इतीरितोवाग्वदनो ययौ गृहं विचार्य कार्यं सह मंत्रिभिः स्वकैः ॥ हतावशेषैरथकुंभकर्णप्रबोधनायाशु मतिं चकार ॥ ९८॥ सशैलशृंगासिपरश्वधायुधैर्निशाचराणामयुतैरनेकैः ॥ तच्छ्वासवेगाभिहतैः कथंचिद्गतैः समीपं कथमप्यबोधयत् ॥ ९९॥ शैलोपमानस्य तु मांसराशीन्विधाय भक्षानपि शोणितह्रदान् ॥ सुतृप्तमेनं परमादरेण समाह्वयामास सभातलाय ॥ १००॥ ॥

सह कार्यं उत्तरकर्तव्यं विचार्य अथ कुंभकर्णस्य प्रबोधनाय मतिं बुद्धिं चकार ॥ ९८ ॥ स रावणः शैलानां पर्वतानां शृंगाणि शिखराणि असयः खड्गाः परश्वधाः कुठाराः एते आयुधानि येषां तानि तथा तैः तस्य कुंभकर्णस्य श्वासाः तेषां वेगः तेन अभिहतैः ताडितैः कथंचिन्महताप्रयासेन समीपं कुंभकर्णस्य समीपं गतैः प्राप्तैः अनेकैः बहुविधैः निशाचराणां अयुतैः दशसहस्रैः करणैः अयुतसमूहैरित्यर्थः । कथमपि प्रयासेन अबोधयत् बोधयामास ॥ ९९ ॥ किं कृत्वा अस्य कुंभकर्णस्यार्थं इति शेषः । भक्षान् शैलोपमान् शैलनिभान् मांसराशीन् विधाय शोणितानां रक्तानां ह्रदानपि विधायेत्यर्थः मांसादिना सुतृप्तं पूर्णोदरं एनं कुंभकर्णं परमादरेण संमानेन ॥ १०० ॥ ॥ ॥

एनंकुंभकर्णप्रत्युवाच किमिति । नरेणमनुष्येणपराजितोस्मिअमुंरामं ॥१०१॥ कारणंवैकारणंश्रुत्वा । अग्रजमपिरावणमपिजगर्हअभर्त्सयत् । जगर्हेत्युक्तंविशदयति । अमोघेति । चरितःकृतःबतकष्टं ॥१०२॥ कुतःबलिभिःसाकंविरोधःवैरंकथंचित्कदापिनोप्रशस्यते । नप्रशस्तंनैवयुक्तइत्यर्थः। एषोरामअतिबलःइतिममसतःसंमतःआह । किमिति । अहमपियद्यपिदुर्नयःदुष्टनीतिःतथापित्वयाअव्यःरक्ष्यः अन्यथारक्षणाभावेत्वयाकिंकिंफलं ॥१०३॥ स्वरक्षणमेवउपपादयति । चरंतीति । राजानःत्वयाउपमान्सदृशान् बलाधिकान्बंधुजनान्समीक्ष्य । क्वचित् अक्रमंउतअनीतिमपि चरंतिकुर्वंतिहि । अग्रजेनरावणेनइत्थंपूर्वोक्तप्रकारेणगदितःउदितः ॥१०४॥ शूलवरमेवआयुधंयस्यसकुंभकर्णःपंचयोजनंपंचयोजनप्रमाणप्राकारं पुर्याःप्राकाररूपकंत्रिकूटगिरिंआलंघ्यउल्लंघ्य रणंरणस्थानंप्रतियदाययौ तदासेतुंअतीत्य ॥१०५॥ तत्रतेषु

उवाच चैनं रजनीचरेंद्रः पराजितोस्म्यद्य हि जीवति त्वयि ॥ रणे नरेणैव हि रामनाम्ना कुरुष्व मे प्रीतिममुं निहत्य ॥ १०१ ॥ इतीरितः कारणमप्यशेषं श्रुत्वा जगर्हाग्रजमेव वीरः ॥ अमोघवीर्येण हि राघवेण त्वया विरोधश्चरितो बताद्य ॥ १०२ ॥ प्रशस्यते नो बलिभिर्विरोधः कथंचिदेषोतिबलो मतो मम ॥ इतीरितो रावण आह दुर्नयोप्यहं त्वयाव्यो हि किमन्यथा त्वया ॥ १०३ ॥ चरंति राजान उताक्रमं क्वचित्त्वयोपमान्बंधुजनान्बलाधिकान् ॥ समीक्ष्य हीत्थं गदितोग्रजेन स कुंभकर्णः प्रययौ रणाय ॥ १०४ ॥ प्राकारमालंघ्य स पंचयोजनं यदा ययौ शूलवरायुधोरणं ॥ कपिप्रवीरा अखिला प्रदुद्रुवुर्भयादतीत्यैव च सेतुमाशु ॥ १०५ ॥ शतवलिपनसाख्यौ तत्र वस्वंशभूतौ पवनगणवरांशौ श्वेतसंपातिनौ च ॥ निर्ऋतितनुमथोग्रं दुर्मुखं केसरीति प्रवरमथमरुत्सु प्रास्यदेतान्मुखे सः ॥ १०६ ॥ रजनिचरवरोसौ कुंभकर्णः प्रतापी कुमुदमपि जयंतं पाणिना संपिपेष ॥ नलमथ च गजादीन् पंच नीलं सतारं गिरिवरतरुहस्तान् मुष्टिना पातयच्च ॥ १०७ ॥ ॥ ॥ ॥

कपिषुमध्येवस्वोःअंशभूतौअवतारभूतौ अष्टवसुमध्येद्वावितिभावः । शतवलिश्चपनसश्चेतिआख्यानामययोस्तौतथा पवनगणेमरुद्गणेवरयोःश्रेष्ठयोःमरुतोःअंशौअवतारौ कपित्वेश्वेतसंपातिनौचतदाख्यौनिर्ऋतेःकोणाधिपतिनिर्ऋतेःतनुंस्वस्वरूपभूतंअवतारमित्यर्थः । उग्रंअसह्यंदुर्मुखंदुर्मुखाख्यं । मरुत्सुमध्येप्रवरंकपित्वेकेसरीतियःप्रसिद्धःतं केसरिणं सकुंभकर्णःएतान्पूर्वोक्तान्शतवल्यादिषट्मुखेप्रास्यत् प्राक्षिपत् ॥ १०६ ॥ प्रतापीपराक्रमीकुमुदंवानरंपाणिनासंपिपेष ममर्देत्यर्थः । जयंतमपिजयंताख्यवानरमपिसंपिपेषेत्यर्थः । जयंतकुमुदाउभावितिसंग्रहात् । नलंगजादीन्पंचसतारंनीलंचेति गिरिवरतरुहस्तान्पर्वतस्थूलवृक्षहस्तान्नलादीन् मुष्टिनाअपातयत् ॥१०७॥

इनःसूर्यःतदात्मजोवानरैःसह वृक्षसहितैःशैलैःसानुभिःपर्वतशिखरैःनिशाचरंनिजघ्निरेनिजघ्नुः ॥ १०८ ॥ बाहुभ्यांशालतेअसौतथातस्यबाहुबलवतइत्यर्थः । अस्यकुंभ कर्णस्यकाचनाकिंचिदपि ॥ १०९ ॥ अपरंअन्यंमहाचलंपर्वतंप्रगृह्य राक्षसेमुमोचचिक्षेप । अथसकुंभकर्णःतंपर्वतंप्रगृह्य तंसुग्रीवंजघान ॥ ११० ॥ सःजांबवंतंअंगदं चतलेनहस्ततलेनआहतौअंगदजांबवंतौनिपेततुः ॥ १११ ॥ भास्करिंसुग्रीवंप्रगृह्यययौ सूक्ष्ममक्षिकारूपप्रमाणेनउपमःसदृशःमारुतिःअनुसुग्रीवमनु जगाम ॥११२॥ सुग्रीवानुगच्छतोमारुतेरभिप्रायमाह । यदेति । यदाएषःकुंभकर्णःएनंसुग्रीवंबाधतेबाधयिष्यतितदा यदिअस्यसुग्रीवस्यस्वमोचनायशक्यतेस्म शक्तिश्चेत्तर्हि वरंसमीचीनं

अथांगदश्च जांबवानिनात्मजश्च वानरैः॥ निजघ्निरे निशाचरं सवृक्षशैलसानुभिः ॥१०८॥ विचूर्णिताश्च पर्वतास्तनौ निशाचरस्य ते ॥ बभूव काचन व्यथा नचास्य बाहुशालिनः ॥ १०९ ॥ अथापरं महाचलं प्रगृह्य भास्करात्मजः ॥ मुमोच राक्षसेथ तं प्रगृह्य तं जघान सः ॥ ११० ॥ तदा पपात सूर्यजस्तताड चांगदं रुषा ॥ स जांबवंतमाशु तौ निपेततुस्तलाहतौ ॥ १११ ॥ अथ प्रगृह्य भास्करिं ययौ स राक्षसो बली ॥ जगाम चानु मारुतिः सुसूक्ष्ममक्षिकोपमः ॥ ११२ ॥ यदैनमेष बाधते तदा विमोचयाम्यहं ॥ यदि स्म शक्यतेस्य तु स्वमोचनाय तद्वरम् ॥११३॥ इति व्रजत्यनु स्म तं मरुत्सुते निशाचरः ॥ पुरं विवेश चार्चितः स्वबंधुभिः समस्तशः ॥ ११४ ॥ तुहिनसलिलमाल्यैः सर्वतोभिप्रवृष्टे रजनिचरवरेस्मिन् तेन सिक्तः कपीशः ॥ विगतसकलयुद्धग्लानिरावंचयित्वा रजनिचरवरं तं तस्य नासां ददंश ॥ ११५ ॥ कराभ्यामस्य कर्णौ च नासिकां दशनैरपि ॥ संछिद्य क्षिप्रमेवासावुत्पपात हरीश्वरः ॥ ११६ ॥

नोचेत्अहंमोचयामीत्यर्थः ॥ ११३ ॥ इत्यभिप्रायेणमरुत्सुतःतंसुग्रीवमनुव्रजतिगच्छतिसति समस्तशःसमस्तैःअर्चितःपूजितः ॥ ११४ ॥ अस्मिन्कुंभकर्णेतुहिनसलिलैःशैत्योदकैःमाल्यैःपुष्पैःसर्वतःसर्वावयवेषुअभिप्रवृष्टेअभिषिक्तेसति । तेनपूजाद्रव्येणासिक्तःप्रोक्षितःकपीशःसुग्रीवः विगतापरिहृतासकलासमग्रायुद्धग्लानिःयुद्धजन्यश्रमोयस्यसतथासन् तंकुंभकर्णंआवंचयित्वात्रास्तोभयित्वा तस्यकुंभकर्णस्यनासांनासिकांददंशदष्टवान् ॥ ११५ ॥ अस्यकुंभकर्णस्य दशनैर्दंतैः ॥ ११६ ॥ ॥

एनंसुग्रीवंतलेनकरतलेनततोपितत्रापिभुव्यपिपिपेष पादतलेनममर्द । असौसुग्रीवः अंगुलीनांपदांगुलीनांविवरेंध्रात्समुद्गतःबहिर्निःसृतोभूत् । पुनःसुग्रीवंशूलेनजघान ॥ ११७ ॥ रवेःसुतस्यउपरिपतंतंप्रसिद्धंअमोघशूलंईक्ष्य । प्रगृह्यआहत्य जानौप्रणिधायबभंज तंकुंभकर्णंतंप्रेक्ष्यतन्मुखंअवलोक्येत्यर्थः । उच्चैःननादसिंहनादंचकारेत्यर्थः ॥ ११८ ॥ आवर्त्यमुष्टिंपरिभ्राम्य मुष्टिनाएनंवायुसुतंस्तनयोःअंतरेमध्येजघान जगर्जच तेनकुंभकर्णेनअभिहतोहनूमान्तत्राक्षसताडनंआचिंतयन्अगणयन्सन् । एनंकुंभकर्णमपिप्रजहारतताड ॥ ११९ ॥ हनुमतारुषाकोपेनतलेनकरतलेनवक्षसिअभिताडितःराक्षसःमोहंमूर्छां सकुंभकर्णःयत्ररघुप्रवीरोरामःतत्रैवययौ ॥ १२० ॥

तलेन चैनं निजघान राक्षसः पिपेष भूमौ पतितं ततोपि ॥ समुद्गतोसौ विवरेंगुलीनां जघान शूलेन पुनः स राक्षसः ॥ ११७ ॥ अमोघशूलं प्रपतंतमीक्ष्य रवेः सुतस्योपरि मारुतात्मजः ॥ प्रगृह्य जानौ प्रणिधाय शीघ्रं बभंज तं प्रेक्ष्य ननाद चोच्चैः ॥ ११८ ॥ अथैनमावृत्य जघान मुष्टिना स राक्षसो वायुसुतं स्तनांतरे ॥ जगर्ज तेनाभिहतो हनूमानचिंतयंस्तत्प्रजहार चैनं ॥ ११९ ॥ तलेन वक्षस्यभिताडितो रुषा हनूमता मोहमवाप राक्षसः ॥ पुनश्च संज्ञां समवाप्य शीघ्रं ययौ स यत्रैव रघुप्रवीरः ॥ १२० ॥ विचिंतयामास ततो हनूमान्मयैव हंतुं समरे हि शक्यः ॥ असौ तथाप्येनमहं न हन्मि यशो हि रामस्य दृढं प्रकाशयन् ॥ १२१ ॥ अनन्यवध्यं तमिमं निहत्य स्वयं स रामो यश आहरेत ॥ दत्तो वरो द्वारपयोः स्वयं च जनार्दनेनैव पुरातनश्च ॥ १२२ ॥ ॥ ॥

रामस्ययशःदृढंनिश्चयंयथास्यात्तथा प्रकाशयन्हनूमान्हियस्मात्ततःतस्मात्विचिंतयामास । किमिति । असौकुंभकर्णःसमरेयुद्धेमयैवहंतुंशक्योहिमसर्थोहि यद्यपिएनंकुंभकर्णंनहन्मि ॥ १२१ ॥ कुतइत्यतआह अनन्येत्यादिना । स्वयंरामःअनन्यवध्यंरामादन्यैरवध्यमित्यर्थः । तमिमंकुंभकर्णंनिहत्ययशआहरेत । ननु भीमस्यधर्मोयशश्च स्यादिति । कृष्णेनजरासंधोनहतइत्यग्रेवक्ष्यते । इदानींहनुमान्प्राप्तंहरिपूजात्मकराक्षसवधं किमर्थंनैच्छदित्याशंकायांतत्रकारणमाह । दत्तइति । स्वयंजनार्दनेनैवरामस्वरूपेणनारायणेनैव पुराद्वारपयोःद्वारपालकयोःजयविजययोः ॥ १२२ ॥ ॥ ॥ ॥ ॥ ॥

त्रीणिचतानिजन्मानिचतथातेषुप्रवृद्धवीर्यौएधितपराक्रमौयुवांमयैववध्यौभवतंस्यातामितिविरोदत्तोयस्मात्ततः तस्मान्निहत्ययशआहरेतेतिसंबंधः । यदपिइतिपूर्वोक्तप्रकारेण द्वारपौप्रतिकेशवेनउक्तं । तथापिअस्यवधेमयाकृतेसतीतिशेषः । एषःरामःममअनुग्रहंकुर्यादेवएवमपीतिशेषः । सकुंभकर्णवधःमेधर्मोनतुनैव ॥ १२३ ॥ इतिस्मउक्तरीत्यासंचिंत्यविचार्य उपाजगामसमीपंप्राप ॥ १२४ ॥ अमुष्यकुंभकर्णस्यदेहाद्बहिरित्यर्थः । स्रोतोभिःनवेंद्रियद्वारैः 'स्रोतोंबुनिर्गमद्वारइंद्रियेषुजलःसृता'वित्यमरः । रोमकूपैश्चविनिर्जग्मुःविनिःसृताः । अथनिर्गमनानंतरं यथागिरिंतथाकेचित्कपयःतमेवकुंभकर्णमेवआरुरुहुः ॥ १२५ ॥ सकुंभकर्णःमहागजःकर्णताडनेनमक्षिकायथाविधुनोति तथातान्स्वारूढान्कपीन्विधूय देहकंपनेनदूरीकृत्वेत्यर्थः । सर्वशःसर्वान्स्वान्राक्षसान्अपरांश्चकपींश्चप्रभक्षयन्समाघ्रायशोणितंरक्तंपिबन्सन् एकःसहायरहितः

मयैव वध्यौ भवतं त्रिजन्मसु प्रवृद्धवीर्याविति केशवेन ॥ उक्तं मयैवैष यदप्यनुग्रहं वधेस्य कुर्यान्न तु मे सधर्मः ॥ १२३ ॥ इति स्म संचिंत्य कपीशयुक्तो जगाम यत्रैव कपिप्रवीरः ॥ स कुंभकर्णोखिलवानरांस्तु प्रभक्षयन् राममुपाजगाम ॥ १२४ ॥ ते भक्षितास्तेन कपिप्रवीराः सर्वेपि निर्जग्मुरमुष्य देहात् ॥ स्रोतोभिरेवाथ च रोमकूपैः केचित्तमेवारुरुहुर्यथा गिरिं ॥ १२५ ॥ स तान्विधूयाशु यथा महागजो जगाम रामं समरार्थमेकः । प्रभक्षयन् स्वानपरांश्च सर्वशो मत्तः समाघ्राय च शोणितं पिबन् ॥ १२६ ॥ न्यवारयत्तं शरवर्षधारया स लक्ष्मणो नैनमचिंतयन्सः ॥ जगाम रामं गिरिशृंगधारी समाह्वयंतं समराय चाशु ॥ १२७ ॥ अथो समादाय धनुः सुघोरं शरान्सुरेशाशनितुल्यवेगान् ॥ प्रवेशयामास निशाचरे प्रभुः स राघवः पूर्वहतेषु यद्वत् ॥ १२८ ॥ यावद्बलेन न्यहनत्खरादिकान्न तावतैव न्यपतत्स राक्षसः ॥ अथ प्रहस्यात्मबलैकदेशं प्रदर्शयन्बाणवरान्मुमोच ॥ १२९ ॥ ॥

समरार्थंयुद्धार्थंरामंप्रतिजगाम अतएवमत्तःउन्मत्तः ॥ १२६ ॥ सकुंभकर्णःएनंलक्ष्मणंनाचिंतयत्नागणयत् तंरामंसमराययुद्धाय ॥ १२७ ॥ सुघोरंअनन्यधार्यत्वात्सुघोरं सुरेशाशनितुल्यःइंद्रवज्रसदृशःवेगोयेषांते तथातान् पूर्वहतेषुराक्षसेषुयद्वत् यथाशरान्अमुचत्तथानिशाचरेप्रभुःसराघवःकुंभकर्णेप्रवेशयामास ॥ १२८ ॥ खरादिकान्यावद्बलेनअभिव्यक्तेनयावताबलेनन्यहनत् सराक्षसःकुंभकर्णःतावतैवतावदभिव्यक्तेनबलेनन्यपतत् । अथप्रहस्यआत्मबलस्यस्वरूपबलस्यएकदेशंएकांशंप्रदर्शयन्प्रकटयन् बाणवरान्मुमोचेतिशेषः ॥ १२९ ॥ ॥ ॥ ॥ ॥ ॥

हरेःबलप्रदर्शनंनामरूपविशेषव्यक्तिरितिज्ञातव्यं । अनेनकुंभकर्णस्यसर्वेभ्योबलाधिक्यमुक्तमितिभावः । सरामःतस्यकुंभकर्णस्य बाहूद्वाभ्यांबाणाभ्यांनिचकर्तचिच्छेद । तथाशराभ्यांपदद्वयंपादयुग्मंच न्यकृंतत् । अथअपरेणअन्येनबाणेन अस्यशिरोनिकृत्यस्थित्वा सागरस्यसमुद्रस्यतोयेजले आशुसंप्राक्षिपत्प्रास्यत् ॥ १३० ॥ क्षणदारात्रीतस्यांचरतीतितथा तस्यराक्षसस्यमहाचलाभेमहाशैलनिभेकायेदेहेपतितेसति । अब्धिःअवर्धत अभिवृद्धोभूत् । समुद्रस्यमर्यादातिक्रमणमभूदितिभावः । रघुवर्यस्यमूर्धनिशिरसिप्रसूनैःपुष्पैःववृषुः ॥ १३१ ॥ समुद्रस्याभिवृद्धौकारणमाह । योजनानामिति । पूर्वंलंकावस्थानात्पूर्वंबाल्यावस्थायामित्यर्थः । पश्चादनंतरं लंकायांउ

द्वाभ्यां स बाहू निचकर्त तस्य पदद्वयं चैव तथा शराभ्यां ॥ अथापरेणास्य शिरो निकृत्य संप्राक्षिपत्सागरतोय आशु ॥ १३० ॥ अवर्धताब्धिः पतितेस्य काये महाचलाभे क्षणदाचरस्य ॥ सुराश्च सर्वे ववृषुः प्रसूनैर्मुदा स्तुवंतो रघुवर्यमूर्धनि ॥ १३१ ॥ योजनानां त्रिलक्षं हि कुंभकर्णोभ्यवर्धत ॥ पूर्वं पश्चात्संचुकोच लंकायामुषितुं स्वयं ॥ १३२ ॥ स तु स्वभावमापन्नो म्रियमाणोभ्यवर्धत ॥ तेनास्मिन्पतिते त्वब्धिरवर्धदधिकं तदा ॥ १३३ ॥ अथापरे ये रजनीचरास्तदा कपिप्रवीरैर्निहताश्च सर्वशः ॥ हतावशिष्टास्त्वरिताः प्रदुद्रुवुर्भ्रातुर्वधं चोचुरुपेत्य रावणं ॥ १३४ ॥ स दुःखतप्तो निपपात मूर्छितो निराशकश्चाभवदात्मजीविते ॥ तमाह पुत्रस्त्रिदशेशशत्रुर्नियुंक्ष्व मां शत्रुवधाय माचिरं ॥ १३५ ॥ मया गृहीतस्त्रिदशेश्वरः पुरा विषीदसे किं नरराज पुत्रतः ॥ स एवमुक्त्वा प्रजुहाव पावकं शिवं समभ्यर्च्य समारुहद्रथम् ॥ १३६ ॥ ॥ ॥ ॥

षितुंअवस्थातुंस्वयंस्वयमेवसंचुकोचसंकोचंप्राप ॥ १३२ ॥ म्रियमाणःसतुसएवकुंभकर्णःस्वभावंत्रिलक्षाभिवृद्धिरूपंआपन्नःप्राप्तः तेनअभ्यवर्धत तेनपूर्ववदभिवृद्धिकारणेन अस्मिन्कुंभकर्णेदेहेअधिकमितिक्रियाविशेषणं ॥ १३३ ॥ अपरेकुंभकर्णपृष्ठतःस्थिताःयेरजनीचराःत्वरिताःवेगवंतःसंतः ॥ १३४ ॥ सरावणःआत्मजीवितेस्वजीवनविषयेनिराशकश्चाशारहितश्चाभवत् । त्रिदशानांदेवानांईशस्यइंद्रस्यशत्रुःपुत्रःरावणपुत्रःइंद्रजित् शत्रुवधायमांनियुंक्ष्वआज्ञापय चिरंविलंबंमाकुर्वितितंरावणंप्रत्याह ॥ १३५ ॥ त्रिदशेश्वरःइंद्रःपुरागृहीतःत्वंनरराजस्यपुत्रतःमनुष्याद्रामादित्यर्थः । किमिति विषीदसिखिद्यसि । सइंद्रजित् एवंउक्त्वापावकंअग्निंजुहाव ॥ १३६ ॥

सइंद्रजित्‌वियत्‌आकाशंसमारुह्य अदर्शनंअन्येषांदृष्टयगोचरत्वंययौप्राप सइंद्रजित्‌नागपाशैर्बबंध ॥ १३७ ॥ पुरारामावतारार्थंब्रह्मादीनांप्रार्थनकाले यदासःवि ष्णुःअवताराय अवतारंकर्तुं त्रिदशान्‌देवान्‌दिदेशआदिशत्‌ तदैवगरुत्मान्‌गरुडःममापिसेवाभवतात्वयाप्रयोज्याआज्ञापनीयाइतिवृषाकपिं अभीष्टवर्षणात्‌वृतषड्गुणत्वा च्चवृषःअकंदुःखंपेषयतीतिअकपिः वृषश्चासौअकपिश्चेतिविग्रहः तंप्रत्यवदत्‌ ॥ १३८ ॥ विष्णुस्तंगरुडंआह किमिति । त्वंभुविप्रजातिंउत्पत्तिंनोपैहिनप्राप्नुहि । अ न्यथाभुव्युत्पत्तिंविना अहंअत्ररामावतारेयथातेयशःधर्मश्चस्यात्‌ कर्तव्यंकरोतीतितथा स्वहितंकर्मकर्ताचत्वंयथास्याःभविष्यसि तथातवसेवांआदास्यएवस्वीकरिष्ये ॥ १३९ ॥ सेवांविवृण्वन्नाहेत्याह । वरेणेत्यादिना । उरंगपाशेनसर्पात्मकपाशेन यदानिबध्नातिबध्नीयात्‌ ॥ १४० ॥ तदाअहंसमर्थःनागपाशान्मोचनेशक्तःसोपि

**स आत्तधन्वा सशरो रथेन वियत्समारुह्य ययावदर्शनं ॥ स नागपाशैर्वरतः शिवस्य बबंध सर्वान्कपिवीरसंघान्‌ ॥ १३७ ॥ पुरावताराय यदा स विष्णुर्दिदेश सर्वांस्त्रिदशांस्तदैव ॥ ममापि सेवा भवता प्रयोज्येत्येवं गरुत्मानव दद्वृषाकपिं ॥ १३८ ॥ तमाह विष्णुर्न भुवि प्रजातिमुपैहि सेवां तव चान्यथाहं ॥ आदास्य एवात्र यथा यशः स्याद्धर्मश्च कर्तव्यकृदेव च स्याः ॥ १३९ ॥ वरेण शर्वस्य हि रावणात्मजो यदा निबध्नाति कपीन्सलक्ष्मणान्‌ ॥ उरंगपाशेन तदा त्वमेव समेत्य सर्वानपि मोचयस्व ॥ १४० ॥ अहं समर्थोपि सलक्ष्मणश्च तथा हनूमान्न विमोच यामः ॥ तव प्रियार्थं गरुडैष एव कृतस्तवादेश इमं कुरुष्व ॥ १४१ ॥ तदेतदुक्तं हि पुरात्मनायत्ततो हि रामो न मुमोच कंचन ॥ सलक्ष्मणो नैव च मारुतात्मजः स एव जानाति च देवगुह्यं ॥ १४२ ॥ ॥**

नागपाशेनबद्धोपिलक्ष्मणश्चसमर्थः तथाहनूमान्समर्थः । हेगरुड समर्थौपिवयंत्रयइत्यध्याहारः । तवप्रियार्थंनविमोचयामः । एषएवअयमेवआदेशःआज्ञातवकृतःआ ज्ञापितः इमंआदेशंकुरुष्वेत्याहेतिपूर्वेणसंबंधः ॥ १४१ ॥ पुराआत्मनास्वेनैवरामेण तदेतद्वाक्यमुक्तंयद्यस्मात्ततस्माद्रामःकंचनकमपिनमुमोच । सलक्ष्मणःलक्ष्मणेनस हवर्तमानोमारुतात्मजःनैवचनैवमुमोच । पूर्वंपाशस्यकर्तृत्वविवक्षयाविमोचयामइत्युक्तमिदानींतु अवधित्वविवक्षयामुमोचेत्युक्तमितिभावः । ननु गरुडंप्रतिस्वोक्त्वा द्रामोनमुमोचेत्युक्तंघटते । सलक्ष्मणोमारुतात्मजःकिमर्थंनमुमोचेत्यतआह । सएवेति । सलक्ष्मणेनसहवर्तमानोहनुमान्‌देवगुह्यंगोप्याभिप्रायंजानात्येव तस्मान्न मुमोचेतिभावः ॥ १४२ ॥ ॥ ॥ ॥ ॥ ॥ ॥

प्रकृतमनुसरति । अथोनिबध्यति । रक्षःइंद्रजित्पिशितंमांसंअशनंअन्नंयेषांतेतथा तेषांईश्वरःअसौरावणःननंद कृतंआत्मकार्यंस्वप्रयोजनयेनतंपुत्रंशशंस ॥ १४३ ॥ सपक्षिराजोगरुडःहरेर्निदेशंआज्ञांस्मरन्त्वरावान्वेगवान्सन् इहरणस्थानंप्रत्याजगाम । केवलंतस्यगरुडस्यपक्षयोर्वातस्यवायोःस्पर्शेनयेषांकपीनांउरंगबंधःविनष्टः ध्वस्तोभूदित्यर्थः ॥ १४४ ॥ शोभनानिमाल्यानिपुष्पाणिआभरणानिकुंडलादिभूषणानि । अनुलेपनंचंदनंयस्यासौतथा गरुडःआत्मनःदैवतंतथापरंचतदात्मदैवतंचस्वस्यपरदैवतमित्यर्थः । रामंआनम्यययौ । नेदुःवीरध्वानिंचक्रुः १४५॥ निनादंवीरध्वानिं अत्रकपिजीवितेनअत्रसत्अबिभेत्भयंप्रापेत्यर्थः । किंभूतोरावणःतेवानराःअमुष्मा

अथो निबध्याशु हरीन्सलक्ष्मणान् जगाम रक्षः स्वपितुः सकाशम् ॥ ननंद चासौ पिशिताशनेश्वरः शशंस पुत्रं च कृतात्मकार्यं ॥ १४३ ॥ स पक्षिराजोथ हरेर्निदेशं स्मरंस्त्वरावानिह चाजगाम ॥ तत्पक्षवातस्पर्शेन केवलं विनष्ट एषां स उरंगबंधः ॥ १४४ ॥ स राममानम्य परात्मदैवतं ययौ सुमाल्याभरणानुलेपनः ॥ कपिप्रवीरास्तु तरूञ्छिलांश्च प्रगृह्य नेदुर्बलिनः प्रहृष्टाः ॥ १४५ ॥ श्रुत्वा निनादं प्लवगेश्वराणां पुनः सपुत्रो त्रसदत्र रावणः ॥ बंधादमुष्मात्प्रविनिःसृतास्ते किमत्र कार्यं त्विति चिंतयानः ॥ १४६ ॥ पुनश्च हुत्वा स हुताशमेव रथं समारुह्य ययावदर्शनं ॥ ववर्ष चास्त्राणि महांत्यजस्रं वरादुमेशस्य तथाब्जजस्य ॥ १४७ ॥ पुनश्च तस्यास्त्रनिपीडितास्ते निपेतुरुर्व्यां कपयः सलक्ष्मणाः ॥ स्पृशंति नास्त्राणि दुरंतशक्तिं तनुं समीरस्य हि कानिचित्क्वाचित् ॥ १४८ ॥ विज्ञातुकामः पुरिसंप्रवृत्तिं विभीषणः पूर्वगतस्तदागात् ॥ ददर्श सर्वान्पतितान् सवानरान् मरुत्सुतं त्वेकमनाकुलं च ॥ १४९ ॥

द्बंधात्नागपाशबंधात्प्रविनिःसृताःमुक्ताः। अत्रइदानींकिंकार्यमितिचिंतयानः ॥ १४६ ॥ सइंद्रजित्महांतिअगतसारत्वादुत्तमानि अजस्रंअवकाशरहितंयथास्यात्तथा ॥ १४७ ॥ तस्येंद्रजितःकानिचिदस्त्राणिसमीरस्यवायोःतनुंअवतारंहनूमंतंक्वचिन्नस्पृशंति ॥ १४८ ॥ पूर्याःलंकायाःप्रवृत्तिंपुरस्थानांप्रवर्तनमित्यर्थः । विज्ञातुकामःसन् पूर्वगतः अस्त्रबंधनात्पूर्वंगतोविभीषणः । तदाकपीनांमूर्छाकाले आगात्रणमंडलंप्रतीतिशेषः । सविभीषणःअनाकुलंआकुलरहितंमोहरहितमितियावत् । मरुत्सुतमेकं चशब्दोवधारणे ददर्श ॥ १४९ ॥ ॥ ॥ ॥ ॥ ॥

सविभीषणःतंमरुत्सुतंसमादाय हस्तंसंगृह्येत्यर्थः । विधातृजंजांबवंतंप्रतिययौ । विमूर्छितंतंजांबवंतंउदकसेकतःजलप्रोक्षणात् आश्वास्यसंज्ञांप्रापयित्वा जीवसिकिंस प्राणोसिकिं । इत्युवाचविभीषणइतिशेषः । मंदंसूक्ष्मंस्खलत्वाक्यंयस्यसतथा सजांबवान्तथेतिजीवामीतिप्राह ॥ १५० ॥ जांबवान्पुनःऊचे किमिति । हनूमान्जीवतिकिं तस्मिन्हनूमतिजीवमानेजीवतिसति सर्वेवयमपिजीवामः । तस्मिन्हतेसति सर्वेनिहताएवेत्यूचइतिसंबंधः । समारुतिःजांबवताइतिवाक्यत्रयेईरितेसति अस्मि अहमस्मीत्यवदत् ॥ १५१ ॥ अनंतरंहनुमद्वाक्यानंतरंआह । किमिति । मेरोःपर्वतस्यसमीपेतिष्ठतीतितथा गंधमादनइतिसंज्ञासंजातायस्यसतथा योसौप्रसिद्धोगिरिस्तिष्ठतीतिशेषः । तस्माद्गिरेःसकाशात्त्वयाऔषधीनांचतुष्टयंसमाहार्यंआनेतव्यं ॥ १५२ ॥ औषधीनांनामानि निरुक्तिपूर्वकमाहेत्याह । मृतेति । मृतान्संजीवयति यतःअतोनामतःमृतसंजीविनीमुख्या सर्वासांमध्येमृतसंजीविनीश्रेष्ठा । अपराद्वितीयासंधानंछिन्नावयवानांसंधिंकरोतीतिनामतःसंधानकरणी । तृतीयासवर्णान्क्षतस्थानेषु

स तं समादाय ययौ विधातृजं विमूर्छितं चोदकसेकतस्तं ॥ आश्वास्य किं जीवसि हीत्यवोचत्तथेति स प्राह च मंदवाक्यः ॥ १५० ॥ ऊचे पुनर्जीवति किं हनूमान् जीवाम सर्वेपि हि जीवमाने ॥ तस्मिन्हते निहताश्चैव सर्वे इतीरितेस्मीत्यवदत्स मारुतिः ॥ १५१ ॥ इत्युक्तो जांबवानाह हनूमंतमनंतरं ॥ योसौ मेरोः समीपस्थो गंधमादनसंज्ञकः ॥ १५२ ॥ गिरिस्तस्मात्समाहार्यं त्वयौषधिचतुष्टयं ॥ मृतसंजीवनी मुख्या संधानकरणी परा ॥ सवर्णकरणी चैव विशल्यकरणीति च ॥ १५३ ॥ इत्युक्तः स क्षणेनैव प्राप तद्गंधमादनं ॥ अवाप चांबरचरो राममुक्तः शरो यथा ॥ १५४ ॥ अंतर्हिताश्चौषधीस्तु तदा विज्ञाय मारुतिः ॥ उद्बबर्ह गिरिं क्रोधाच्छतयोजनमंडलं ॥ १५५ ॥

विपरीतवर्णान्समानवर्णान्करोतीतिनामतःसवर्णकरणीच । चतुर्थीविशल्यान्विनिःसृतशल्यान्करोतीतिनामतोपिविशल्यकरणीचेत्यौषधिचतुष्टयं समाहार्यमितिपूर्वेणान्वयः ॥ १५३ ॥ इत्युक्तःसहनूमान्क्षणेनैवसमाहार्यमितिवाक्यश्रवणमात्रादेव तत्तस्मायुद्धमंडलात् गंधमादनंप्रापउत्पपातेत्यर्थः । प्रापतदित्येकमेववापदं अंबरचरः खचरःआकाशमार्गेणगच्छन्हनूमान्रामेणमुक्तःशरःयथा निमेषमात्रेणगच्छति तथाअवापगंधमादनंप्राप शरोप्यंबरचरः ॥ १५४ ॥ मारुतिःअंतर्हिताःतिरोधानंप्राप्ताः औषधीर्विज्ञाय मारुतिःइतोस्मान्नेष्यतीति भयेनांतर्हिताइतिभावः । तदाक्रोधाच्छतयोजनमंडलंद्विसहस्रयोजनमंडलपरिमाणपर्वतस्य एकभागस्थंशतयोजनपरिमाणौषधिप्रदेशकंगिरिंगंधमादनैकभागं उद्बबर्हउत्पाटयामास । तथाचोक्तंपंचमस्कंधे । माल्यवद्गंधमादनौवानीलनिषधायतौद्विसहस्रवद्धाविति ॥ १५५ ॥ ॥

बलदेवस्यबलाभिमन्यमानदेवतायाःवायोःसूनुःसहनूमान्तंगिरिंसमुत्पाट्यकरेणप्रतोलयित्वा । अयंपर्वतःकियान्भारोस्तीतिकरेसंस्थाप्यप्रचाल्येतिभावः । अंबरंप्रतिसमुत्पपातअतएवउग्रवेगः तत्रदृष्टांतमाह यथेति । त्रिविक्रमेत्रिविक्रमावतारे ॥ १५६ ॥ सहनूमान् अक्ष्णोःनेत्रयोःनिमेषमात्रतः । निमेषावच्छिन्नकालमात्रतःयत्रकपिप्रवीराःनिपातिताःतत्रतंदेशंअवाप । वानराणांयूथंसमूहंपांतीतितेतथा कपिश्रेष्ठाःसचासौशैलश्चओषध्युपेतः पर्वतः तस्यवातस्पर्शोयस्मिन्क्षणेसतथातस्मात्क्षणात् क्षणमात्रादेव समुत्थिताः ॥१५७ ॥ अनुजनिःअनुजोलक्ष्मणः तथाअपरेकपयश्च अस्यहनुमतःप्रमोदितैःहर्षितैःविसर्जिताविसृष्टा पुष्पाणांसंततिःसमूहः ॥१५८॥ सहनूमान्देवादिभिःअभिष्टुतःसंस्तुतोभूत् । रामकराभ्यांउपगूहितःआच्छादितःआलिंगितइत्यर्थः । हनूमान्तत्रैवलंकायामेवसंस्थितःसन् पुनःतंगिरिंन्यपातयत्पातयामास ॥ १५९ ॥

स तं समुत्पाट्य गिरिं करेण प्रतोलयित्वा बलदेवसूनुः ॥ समुत्पपातांबरमुग्रवेगो यथा हरिश्चक्रधरस्त्रिविक्रमे ॥१५६॥ अवाप चाक्ष्णोः स निमेषमात्रतो निपातिता यत्र कपिप्रवीराः ॥ तच्छैलवातस्पर्शात्समुत्थिताः समस्तशो वानरयूथपाः क्षणात् ॥ १५७ ॥ अपूजयन्मारुतिमुग्रपौरुषं रघूत्तमस्यानुजनिस्तथापरे ॥ पपात मूर्ध्न्यस्य च पुष्पसंततिः प्रमोदितैर्देववरैर्विसर्जिता ॥ १५८॥ स देवगंधर्वमहर्षिसत्तमैरभिष्टुतो रामकरोपगूहितः ॥ पुनर्गिरिं तं शतयोजनोच्छ्रितं न्यपातयत्संस्थित एव तत्र ॥ १५९ ॥ स पूर्ववन्मारुतिवेगचोदितो निरंतरं श्लिष्टतरोत्र चाभवत् ॥ पुनश्च सर्वे तरुशैलहस्ता रणाय चोत्तस्थुरलं नदंतः ॥ १६० ॥ पुनश्च तान् प्रेक्ष्य समुत्थितान्कपीन् भयं महच्छक्रजितं विवेश॥ स पूर्ववद्धव्यवहे समर्च्य शिवं तथा दर्शनमेव जग्मिवान् ॥ १६१ ॥ वराश्रयेणाजगिरीशयोः पुनः संमोहनास्त्रैः स बबंध तान्कपीन् ॥ अथाह रामस्य मनोनुसारतः पुरास्त्रमेवानुसरन्स लक्ष्मणः ॥ १६२ ॥

मारुतेःउग्रवेगेनतीव्रवेगेनचोदितः प्रेरितःसगंधमादनैकभागःअत्रस्वपूर्वावस्थानेपूर्ववत्निरंतरंनष्टच्छेदांकोयथाभवतितथा श्लिष्टतरः अत्यंतंसंश्लेषणवान्अभवत् सर्वेकपयः ॥ १६० ॥ पुनश्चपुनरपितान्कपीन्प्रेक्ष्यदृष्ट्वा स्थितंशक्रजितंमहद्भयंविवेश । सइंद्रजित्हव्यवहेअग्नौहुत्वेतिशेषः ॥ १६१ ॥ अजोब्रह्मा अथकपिबंधनानंतरं पुराएतयुद्धापेक्षयापूर्वंरामस्यमनसःअनुसारतएवअनुसरणेनैव अस्त्रंअनुसरन् अस्त्रेणबद्धवत्स्थितइत्यर्थः । तस्माल्लक्ष्मणस्यनागपाशबंधजन्यदुःखंअस्त्रबंधजन्यदुःखंनमंतव्यं सबद्धवत्स्थितइतिप्रसिद्धोलक्ष्मणःरामंप्रत्याह ॥ १६२ ॥ ॥ ॥ ॥ ॥ ॥

किमिति पितामहोब्रह्मातदस्त्रेणनिहन्मीत्याहेतिसंबंधः तेनलक्ष्मणेनईरितआह किमिति । भयाददृश्येनिलीनेअस्त्रंविमोक्तुंनार्हसि । अदृश्येअस्त्रप्रयोगोयोग्योन दोषस द्भावात्तस्मान्नविमोक्तुमर्हसीत्याहेतिभावः ॥ १६३ ॥ त्वंएतत्इंद्रजिताप्रयोजितंअस्त्रंसोढुंयदिनेशोसिनसमर्थोसितदातर्हि । अहंशरमात्रकेणसाधारणबाणेन मंत्रप्रयो गरहितेनेत्यर्थः । अदृश्यमपिनिलीनमपिरसातलेभूमेरधोभागेवर्तमानरसातललोकेअपि पातालादिसप्तलोकेष्वपिसंतंस्थितं अथतथासत्यलोकेहिब्रह्मलोकेपिसंतं आ शुनिहन्मीत्याहेतिपूर्वेणान्वयः ॥ १६४ ॥ नन्वेवंसमर्थश्चेत्रामःतर्हि पूर्वमेवकिमर्थंनानिवारयामासेत्यतआह । इतीति । इतिस्मपूर्वोक्तप्रकारेणप्रभुः अतएवदुरंतशक्तिः निरवधिकबलःस्वयंरामःवींद्रस्यगरुडस्यहनूमतश्चबलप्रकाशायबलप्राकट्यार्थं पुरावरद्वयंअमुष्यंद्रजितःअस्त्रंसंमानयित्वा अथशरंआददे ॥ १६५ ॥ दुष्टःइंद्रजित्अने

पितामहास्त्रेण निहन्मि दुर्मतिं तवाज्ञया शक्रजितं सबांधवं॥ इतीरितस्तेन स चाह राघवो भयाददृश्ये न विमोक्तुमर्हसि ॥ १६३ ॥ न सोढुमीशोसि यदि त्वमेतदस्त्रं तदाहं शरमात्रकेण ॥ अदृश्यमप्याशु निहन्मि संतं रसातलेप्यापि हि सत्यलोके ॥ १६४ ॥ इति स्म वींद्रस्य हनूमतश्च बलप्रकाशाय पुरा प्रभुः स्वयं ॥ संमानयित्वास्त्रममुष्य रामो दुरंतशक्तिः शरमाददेथ ॥ १६५ ॥ अनेन दृष्टोहमिति स्म दुष्टो विज्ञाय बाह्वोर्बलमस्य चोग्रं ॥ विनिश्चयन् देवतमस्य पश्यन् प्रदुद्रुवे प्राणपरीप्सुराशु ॥ १६६ ॥ हाहाकृते प्रद्रुत इंद्रशत्रौ रघूत्तमः शत्रुविभीषणत्वात् ॥ विभीषणेत्येव सुरैरभिष्टुतो विज्ञानमस्त्रं स्वमुचत्स्वसैन्ये ॥ १६७ ॥ निशाचरास्त्रं ह्यगमत्क्षणेन रामास्त्रवीर्याद्धरयो नदंतः ॥ उत्तस्थुरुच्चोरुगिरीन् प्रगृह्य प्रशंसमाना रघुवीरमुच्चैः ॥ १६८ ॥ सुरैश्च पुष्पं च वृषाद्भिरीडितस्तस्थौ धनुष्पाणिरनंतवीर्यः ॥ स रावणस्याथ सुतो निकुंभिलां पुनः समासाद्य जुहाव पावकं ॥ १६९ ॥ ॥

नरामेणअहंदृष्टइतिस्मविज्ञाय अस्यरामस्यबाह्वोःउग्रंअसह्यंबलंविज्ञायच । देवतमस्यदेवोत्तमस्यरामस्यविनिश्चयं स्ववधविषयेकृतविनिश्चयंपश्यन्विजानन्सन् प्राणान् परीप्सुःपरिरक्षितुमिच्छन्सन् आशुप्रदुद्रुवे ॥ १६६ ॥ इंद्रशत्रौप्रद्रुतेसति तदीयैःहाहाकृतेसति कष्टमभूत्कष्टमभूदितिकोलाहलेकृतेसतीत्यर्थः । रघूत्तमःशत्रुंविभीषय तीतिशत्रुविभीषणः तस्यभावस्तत्त्वंतस्माद्धेतोःविभीषणेत्येव एतन्नाम्नैवसुरैरभिष्टुतःसन् । स्वसैन्येविज्ञानंअस्त्रंविज्ञानास्त्रंअमुचत् । इंद्रजित्विभीषणार्थंधृतशरंज्ञानास्त्रेण अभिमंत्र्य अमुचदितिभावः ॥१६७॥ रघुवीरंउच्चैःप्रशंसमानाःस्तुवंतः ॥ १६८ ॥ ईडितःस्तुतः अथनिकुंभिलानिकुंभिलाख्यंचशिवस्थानंसमासाद्यप्राप्य पुनःजुहाव अजुहोत् ॥ १६९ ॥ ॥ ॥ ॥ ॥ ॥ ॥

अथविभीषणआह । दुर्मतेःदुष्टबुद्धेःइंद्रजितःवधायनियोजयआज्ञापय । कृताअग्निपूजायेनसतथा पूर्वकृताग्निपूजापेक्षयाविशेषेणकृताग्निपूजइत्यर्थः । एषइंद्रजितवध्योन कुतःहियस्मात्अस्यइंद्रजितःतादृशःविशेषाग्निपूजानंतरं त्वंसर्वैःअवध्योभविष्यसीतिवरःप्रथितःप्रसिद्धः तस्मान्नियोजयेत्याहेतिसंबंध ॥ १७० ॥ रामःआत्मनःसमीक्षणाद्दर्शनात्पलायितस्यतस्येंद्रजितःवधंवैनिश्चयेन पुनःपलायनानंतरं नइयेषनैच्छत् नइयेषेत्यत्रकारणांतरमप्याह । सत्वेति । असौइंद्रजित्सत्वेनबलेनउज्झितोहीनः कुटेनकपटेनयुध्यतीतितथा । यतोतइतिशेषः । अयंइंद्रजित्मेवधायअर्हः योग्योन । इतिस्मइत्यभिप्रायेणापिप्रभुः । सरामःतस्यवधंनइयेषेत्यर्थः ॥ १७१ ॥ महात्मा अतिधैर्यबुद्धिःसलक्ष्मणःहनुमदाद्यैःसहैव तस्येंद्रजितोवधाय ॥ १७२ ॥ सलक्ष्मणःप्लवंगमैःकपिभिःसह जुह्वतःहोमंकुर्वतःतस्येंद्रजितः अथसइंद्रजित्योद्धुमिच्छायुयु

विभीषणोथाह रघूत्तमं प्रभुं नियोजयाद्यैव वधाय दुर्मतेः ॥ कृताग्निपुजो नहि वध्य एष वरा विधातुः प्रथितोस्य तादृशः ॥ १७० ॥ न वै वधं राम इयेष तस्य पलायितस्यात्मसमीक्षणात्पुनः ॥ सत्वोज्झितोसावतिकूटयोधी न मे वधार्होयमिति स्म स प्रभुः ॥ १७१ ॥ स आदिदेशावरजं जनार्दनो हनूमता चैव विभीषणेन ॥ सहैव सर्वैरपि वानरेंद्रैर्ययौ महात्मा स च तद्वधाय ॥ १७२ ॥ स जुह्वतस्तस्य चकार विघ्नं प्लवंगमैः सोथ युयुत्सया रथं ॥ समास्थितः कार्मुकबाणपाणिः प्रत्युद्ययौ लक्ष्मणमाशु गर्जन् ॥ १७३ ॥ उभौ च तावस्त्रविदां वरिष्ठौ शरैः शरीरांतकरैस्ततक्षतुः ॥ दिशश्च सर्वाः प्रदिशः शरोत्तमैर्विधाय शिक्षास्त्रबलैर्निरंतराः ॥ १७४ ॥ अस्त्राणि तस्यास्त्रवरैः स लक्ष्मणो निवार्य शत्रोश्चलकुंडलोज्ज्वलं ॥ शिरः शरेणाशु समुन्ममाथ सुरैः प्रसूनैरथवाभिवृष्टः ॥ १७५ ॥ निपातिते तस्मिन्नितरां निशाचरान् प्लवंगमा जघ्नुरनेककोटिशः ॥ हतावशिष्टास्तु दशाननाय शशंसुरत्याप्तसुतप्रणाशं ॥ १७६ ॥

त्सातया । लक्ष्मणंप्रत्युद्ययौ ॥ १७३ ॥ उभौइंद्रजिल्लक्ष्मणौशिक्षास्त्रयोर्बलैःसर्वापूर्वादिदिशःसर्वा ईशान्यादिप्रदिशःविदिशश्च शरोत्तमैःनिरंतराःअवकाशरहिताःविधाय शरीरस्यअंतकरैःनाशकरैःशरैःततक्षतुःपरस्परंताडयामासतुः ॥ १७४ ॥ तस्येंद्रजितःअस्त्राणि चलेचंचलेतेचतेकुंडलेचताभ्यांउज्ज्वलंदीप्यमानंशिरःसमुन्ममाथ च कर्तेत्यर्थः । अथसुरैःप्रसूनैःअभिवृष्टोभूदितिशेषः ॥ १७५ ॥ तस्मिन्निंद्रजितिलक्ष्मणेननिपातितेसति । प्लवंगमाःकपयः । अनेककोटिशःबहुकोटिसंख्याकान्इतरान् अन्यान्निशाचरान्जघ्नुः । हतावशिष्टाःराक्षसाःदशाननाय । अत्याप्तस्यपरमाप्तस्यसुतस्यप्रणाशंमरणं शशंसुःऊचुः ॥ १७६ ॥

सरावणःउग्ररूपंअविषह्यस्वरूपंअप्रियंदुःखभूतंतत्पुत्रमरणंनिशम्यश्रुत्वा । दुःखाद्भृशंउच्चंयथास्यात्तथाविनिश्वस्यश्वासान्विहाय विलप्यप्रलापंकृत्वा । पुनश्चकुंभकर्णमृत्यनंतरं । निराशकश्चाभवदात्मजीवितेइत्युक्तापेक्षयापुनरपिविनिश्चितःनिश्चयीकृतःअर्थःमरणलक्षणप्रयोजनंयेनसतथा रावणःअहंमरिष्येइत्येवंमतिंबुद्धिंसंस्थापयामास अकरोदित्यर्थः ॥ १७७ ॥ मरणायाभिमुखोरावणःरणकर्मणि सज्जीभवन्स्वयंसाधनवान्भवन् अंतरैवमध्यएवऊर्जितंसंख्ययाशस्त्रादिनाचोत्कृष्टंबलंसैन्यंदिदेश ॥ १७८ ॥ उक्तमेवार्थंविवेचयन्नाह । त्रिंशत्सहस्राणीति । रावणःमहौघकानां त्रिंशत्सहस्राणिअक्षौहिणीनां षट्सहस्रंचसहमेलयित्वाइतिदिदेश । इतीतिकिंतावत्रामंश्रमेणश्रांत्या आशुसंयोजयत्अहंसज्जीभवामिसोपस्कारोभवामीतिदिदेश ॥ १७९ ॥ स्वयंभुवोवरतःअप्रधृष्यंअसह्यमित्यर्थः । युगानांअंतकालःनाशकालःप्रलयकालइतियावत् ।

स तं निशम्याप्रियमुग्ररूपं भृशं विनिश्वस्य विलप्य दुःखात् ॥ संस्थापयामास मतिं पुनश्च मरिष्य इत्येव सुनिश्चितार्थः ॥ १७७ ॥ मरणाभिमुखः शीघ्रं रावणो रणकर्मणि ॥ सज्जीभवन्नंतरैव दिदेश बलमूर्जितं ॥ १७८ ॥ त्रिंशत्सहस्राणि महौघकानामक्षौहिणीनां सह षट्सहस्रं ॥ श्रमेण संयोजयताशु रामं सज्जीभवानीति दिदेश रावणः ॥ १७९ ॥ तदप्रधृष्यं वरतः स्वयंभुवो युगांतकालार्णवघूर्णितोपमं ॥ प्रगृह्य नानाविधमस्त्रशस्त्रं बलं कपिञ्छीघ्रतमं जगाम ॥ १८० ॥ आगच्छमानं तदपारमेयं बलं सुघोरं प्रलयार्णवोपमं ॥ भयात्समुद्वीक्ष्य विषण्णचेतसः कपिप्रवीरा नितरां प्रदुद्रुवुः ॥ १८१ ॥ वरो हि दत्तोस्य पुरा स्वयंभुवा धरातलेल्पेपि निवासशक्तिः ॥ अजेयता चेत्यतएव सार्कजाः प्लवंगमा द्रष्टुमपि स्म नाशकन् ॥ १८२ ॥ ॥ ॥ ॥

तस्मिन्विद्यमानोयःअर्णवःसमुद्रःतस्यघूर्णितंघूर्णनं उच्छलनमितियावत् । तेनोपमंसदृशं । यद्वा घूर्णितश्चासावर्णवश्चेत्यर्णवघूर्णितः युगांतकालेस्थितश्चसावर्णवघूर्णितश्चतेनोपमंघूर्णितार्णवोपममित्यर्थः । तद्रावणेनप्रेषितंबलंनानाविधंबहुप्रकारंअस्त्रशस्त्रमित्यत्रद्वंद्वैकवद्भावः प्रगृह्यशीघ्रतमंअतिशीघ्रंकपीन्जगामप्राप ॥ १८० ॥ कपिप्रवीराःआगच्छमानंअपारमेयंअज्ञेयावधिसुघोरंअस्त्रशस्त्रादिनाअभिक्रूरं प्रलयार्णवोपमंतद्बलंसमुद्वीक्ष्यविलोक्य नितरांविषण्णचेतसःश्रांतमनसःसंतः भयात्प्रदुद्रुवुः ॥ ॥ १८१ ॥ ननु एतावद्बलंअल्पविस्तारंलंकाप्रदेशेकथंस्थितं कपिप्रवीराःयुद्धमकृत्वाकिमर्थंप्रदुद्रुवुरित्यतआह । वरोहीति । पुरास्वयंभुवाअल्पेपिधरातलेभूप्रदेशेनिवासेवासविषयेशक्तिर्भवेत्अजेयताचभवेदिति । अस्यबलस्यवरोदत्तोहि यतःअतएवअर्कजेनसुग्रीवेणसहिताःप्लवंगमाःकपयःद्रष्टुमपिनाशकन्समर्थानबभूवुः ॥ १८२ ॥

रामः धनुः शरांश्च प्रगृह्य समंततोपि सर्वत्रापि तान् राक्षसान् शरौघैः शरसमूहैः स्वयमेव अवधीत् जघान स्वयमेव समंततः अवधीदित्युक्तं विवृण्वन्नाह । सएवेति । सएव राम एवेत्यर्थः । सर्वत्र सर्वासु दिक्षु विदिक्षु दृश्यमानः अनंतरामस्वरूपेण दृश्यमानः सन् सर्वशः सर्वान् राक्षसान् जघान ॥ १८३ ॥ ऋषभैः श्रेष्ठैः सम्यक् पूजितः प्रसूनानां पुष्पाणां उत्कराणि पुंजानि वर्षणशीलैः 'स्यान्निकायः पुंजराशी तूत्करः कूटमस्त्रियामि'त्यमरः । अभिष्टुतः संस्तुतोभूत् ॥ १८४ ॥ संवृतः युक्तः पुष्पकं विमानं शरीरनाशाय स्वदेहनाशार्थं अनेन 'विमानं पुष्पकं तस्य जहाराक्रम्य रावणः । शशापतं वैश्रवणो न त्वामेतद्वहिष्यति । यस्तु त्वां समरे हंता तमेवैतद्वहिष्यति । अवमन्य गुरुं मां च क्षिप्रं त्वं न भविष्यसि' । इति शापं जानन्नपि तेनैव ययावित्युच्यते । पुष्पकं विमानं पुष्पकरथं यद्यपि समरोपयोगि न भवति तथापि मदात्तेनैव ययौ । असौ पुष्परथश्चक्रयानं न समराय इत्यमरः इति यद्वा पुष्पकं पुष्टिकरत्वात् पुष्पकं

प्रगृह्य रामोपि धनुः शरांश्च समंततस्तानवधीच्छरौघैः ॥ स एव सर्वत्र च दृश्यमानो विदिक्षुदिक्षु प्रजघान सर्वशः ॥ १८३ ॥ क्षणेन सर्वांश्च निहत्य राघवः प्लवंगमानामृषभैः स पूजितः ॥ अभिष्टुतः सर्वसुरोत्तमैर्मुदा भृशं प्रसूनोत्करवर्षिभिः प्रभुः ॥ १८४ ॥ अथाययौ सर्वनिशाचरेश्वरो हतावशिष्टेन बलेन संवृतः ॥ विमानमारुह्य च पुष्पकं त्वरन् शरीरनाशाय महायुधोद्धतः ॥ १८५ ॥ विरूपनेत्रोथ च यूपनेत्रस्तथा महापार्श्वमहोदरौ च ॥ ययुस्तमावृत्य सहैव मंत्रिणो मृतिं पुरोधाय रणाय यांतं ॥ १८६ ॥ अथास्य सैन्यानि निजघ्नुरोजसा समं ततः शैलशिलाभिवृष्टिभिः ॥ प्लवंगमास्तानभिवीक्ष्य वीर्यवान् ससार वेगेन महोदरो रुषा ॥ १८७ ॥ वीक्ष्यातिकायं तमभिद्रवंतं स कुंभकर्णोयमिति ब्रुवंतः ॥ प्रदुद्रुवुर्वानरवीरसंघास्तमाससादाशु सुतोथ वालिनः ॥ १८८ ॥

पुष्टिवर्धनमितिसंग्रहोक्तेः त्वरन् वेगेन आययौ ॥ १८५ ॥ विरूपनेत्रादिमंत्रिणः मृतिं पुरः पुरतो निधाय कृत्वा रणाय यांतं गच्छंतं तं रावणं समावृत्य परिवार्य सहैव ययुः ॥ १८६ ॥ प्लवंगमाः ओजसा बलेन अस्य रावणस्य महोदरः तान् स्वबलनाशकान् प्लवंगमान् ॥ १८७ ॥ वानरवीराणां संघाः अतिकायं महादेहं अभिद्रवंतं अभियांतं तं महोदरं वीक्ष्य अयं पुरोवर्ती राक्षसः स कुंभकर्णः पूर्वं योहतः स कुंभकर्णः उत्थाय पुनरप्यागत इति ब्रुवंतः संतः प्रदुद्रुवुः अथ वीरः वालिनः सुतः सोंगदः तिष्ठध्वमिति कपीन् प्रतिवदन् सन्नाशु तं महोदरं आससाद ॥ १८८ ॥ ॥ ॥ ॥ ॥

तिष्ठध्वमित्युक्तेःकारणंविशदयति । बिभीषिकामात्रमिति । इदंप्रदश्यमानंशरीरंविभीषिकामात्रंभयजनकमात्रं अतएवनयातइतीरयन्वदन् बलीइंद्रसुतस्यवालिनःआत्मजःअंगदःमहोदरस्यअग्रतएवपुरतएव पुप्लुवे ॥ १८९ ॥ विमुंचमानंवर्षमाणंमहोदरं शिरःपरामृश्यस्पृष्ट्वा केशान्धृत्वेत्यर्थः । भूतलेनिपात्यपद्भ्यांपादाभ्याममर्द । अंगदइतिशेषः । वालिसुतेनचूर्णितःपिष्टीकृतःमहोदरःगतासुःगतप्राणःअभवत् ॥ १९० ॥ अस्यअंगदस्यउपरिप्रवर्षमाणःसोंगदःअमुष्यमहापार्श्वस्यशरांबुधाराःप्रसह्य सोढ्वा करस्थंधनुःआच्छिद्यछित्त्वा खड्गंमहापार्श्वस्यकृपाणंसमाददे ॥ १९१ ॥ अंगदःनिपात्यवामांसतःसव्यस्कंधमारभ्यऔदरंउदरसंबंधिनंपरंअन्यप्रदेशं दक्षिण

वदन्स तिष्ठध्वमिति स्म वीरो बिभीषिकामात्रमिदं न यात ॥ इतीरयन्नग्रत एव पुप्लुवे महोदरस्येंद्रसुतात्मजो बली ॥ १८९ ॥ अथो शरानाशु विमुंचमानं शिरः परामृश्य निपात्य भूतले ॥ ममर्द पद्भ्यामभवद्गतासुर्महोदरो वालिसुतेन चूर्णितः ॥ १९० ॥ अथो महापार्श्व उपाजगाम प्रवर्षमाणोस्य शरांबुधाराः ॥ प्रसह्य चाच्छिद्य धनुः करस्थं समाददे खड्गममुष्य सोंगदः ॥ १९१ ॥ निगृह्य केशेषु निपात्य भूतले चकर्त वामांसत औदरं परम् ॥ यथोपवीतं स तथा द्विधाकृतो ममार मंत्री रजनीचरेशितुः ॥ १९२ ॥ अथैनमाजग्मतुरुद्यतायुधौ विरूपनेत्रोप्यथ यूपनेत्रः ॥ यथैव मेघौ दिवि तिग्मरश्मिं तथा समाच्छादयतां शरौघैः ॥ १९३ ॥ ताभ्यां स बद्धः शरपंजरेण विचेष्टितुं नाशकदत्र वीरः ॥ हरीश्वरः शैलमतिप्रमाणमुत्पाट्य चिक्षेप तयोः शरीरे ॥ १९४ ॥ उभौ च तौ तेन विचूर्णितौ रणे रवेः सुतस्योरुबलेरितेन ॥ निशाचरेशोथ शरेण सूर्यजं बिभेद वक्षस्यपि सोपतद्भुवि ॥ १९५ ॥

कुक्षिपर्यंतमित्यर्थः । यथाउपवीतंब्राह्मणादीनांवामांसाद्दक्षिणकुक्षिंव्याप्ययज्ञोपवीतंयथातिष्ठति तथातेनप्रकारेणचकर्तन्यकृंतत् द्विधाकृतःअंगदेनेतिशेषः ममारमृतिंप्राप ॥ १९२ ॥ एनंअंगदंप्रतियथैवमेघौदिवितिग्मरश्मिंतीक्ष्णकिरणंसूर्यंआच्छादयतः तथाअंगदंशरौघैःसमाच्छादयतां ॥ १९३ ॥ ताभ्यांविरूपनेत्रयूपनेत्राभ्यां अत्ररणमंडलेबद्धःसवीरोंगदःविचेष्टितुंहस्तपादादिचलनव्यापारंकर्तुंनाशकत्समर्थोनबभूव अतिप्रमाणंअतिस्थूलमित्यर्थः । उत्पाट्यशरीरेचिक्षेप ॥ १९४ ॥ रवेःसुतस्यसुग्रीवस्यउरुबलेनउत्कृष्टबलेनईरितेनप्रेरितेनपर्वतेन अथनिशाचरेशोरावणःसोपिसुग्रीवोपिअपतत् ॥ १९५ ॥ ॥ ॥

विधूयविद्राव्यतदाएनंरावणंरुरोध ॥ १९६ ॥ तदादशास्यःअंतकोपमःतस्यदंडःतेनकल्पांसदृशींकमलोद्भवेनमयायदैत्यतक्षकमयायदत्तां विवाहकालेमयकन्यापरिणयनकालेमयाद्गृहीतांस्वेनस्वीकृतांशक्तिंप्रगृह्यलक्ष्मणे विससर्जप्राक्षिपत् ॥ १९७ ॥ तयाशक्त्यासुतरांविदारितंउरःवक्षोयस्यसतथा सुभृशंअतितरांविमूर्छितःसलक्ष्मणः पपात अतिप्रमाणंअत्युन्नतं ॥ १९८ ॥ तेनपर्वतेनअतिगाढंअतिदृढंयथाभवतितथा । व्यथितःव्यथांप्राप्तःदशाननःमुखैःशोणितस्यपूरःप्रवाहःतंवमन्उद्गिरन्नभूदितिशेषः । तदंतेरेरक्तवमनमध्येहनूमानित्यध्याहारः लक्ष्मणंशक्त्यासहप्रतिगृह्यरामस्यसंनिधिंसमीपं जगाम ॥ १९९ ॥ तांशक्तिंसमुद्बबर्हउत्पाटयामास अथशक्त्युत्पाटनानंतरं । प्रभुःऔषधीःविनैव निरोगकरणेसमर्थोरामःपुनःवरौषधीःसमानेतुंआनयितुंप्राणवरोवायुःतस्यात्मजंहनूमंतंदिदेश । सचहनूमान्तंगिरिंगंधमादनपर्वतंआशु

ततश्च सर्वांश्च कपिप्रवीरान् विधूय बाणैर्बलवान् दशाननः ॥ जगाम रामाभिमुखस्तदैनं रुरोध रामावरजः शरौघैः ॥१९६॥ तदा दशास्योंतकदंडकल्पां मयाय दत्तां कमलोद्भवेन ॥ मयाद्गृहीतां च विवाहकाले प्रगृह्य शक्तिं विससर्ज लक्ष्मणे ॥१९७॥ तदा स वीरःसुविदारितोरः पपात भूमौ सुभृशं विमूर्छितः॥ मरुत्सुतः शैलमतिप्रमाणं चिक्षेप रक्षःप्रतिवक्षसि द्रुतं॥१९८॥ तेनातिगाढं व्यथितो दशाननो मुखैर्वमञ्छोणितपूरमाशु ॥ तदंतरे च प्रतिगृह्य लक्ष्मणं जगाम शक्त्या सह रामसन्निधिं ॥१९९॥ समुद्बबर्हाथ च तां स राघवो दिदेश च प्राणवरात्मजं पुनः ॥ प्रभुः समानेतुमथो वरौषधीः सचानिनायाशु गिरिं पुनस्तं ॥ २०० ॥ तद्गंधमात्रेण समुत्थितोसौ सौमित्रिरात्तोरुबलश्च पूर्ववत् ॥ शशंस चाश्लिष्य मरुत्सुतं प्रभुः स राघवोगण्यगुणार्णवः स्मयन् ॥ २०१ ॥ प्राक्षिपत्तं गिरिवरं लंकास्थः सन्स मारुतिः ॥ अर्धलक्षे योजनानां यत्रासौ पूर्वसंस्थितः ॥ २०२ ॥ ॥ ॥ ॥

निमेषमात्रेणआनिनायआनीतवान् ॥ २०० ॥ सौमित्रिःलक्ष्मणःतासांओषधीनांगंधमात्रेणपूर्ववत् आत्तोरुबलःप्राप्तोरुबलःसन् समुत्थितश्चाभूदित्यर्थः । राघवःस्मयन्स्मितंकुर्वन्मरुत्सुतंआश्लिष्यशशंस ॥ २०१ ॥ समारुतिःलंकायांतिष्ठतीतिलंकास्थः लंकायांवर्तमानःसन्नेवयोजनानांअर्धलक्ष्येअर्धलक्षयोजनव्यवधानप्रदेशे असौपर्वतखंडःयत्रगंधमादनपर्वतस्ययास्मिन्भागेपूर्वसंस्थितःतत्रतस्मिन्प्रदेशे तंगिरिवरंप्राक्षिपत्चिक्षेप गंधमादनपर्वतावयवत्वाद्गंधमादनपर्वतइतिप्रसिद्धिरितिद्रष्टव्यं गंधमादनःमेरुसमीपस्थत्वात्लंकायाःपंचाशत्सहस्रयोजनव्यवहितत्वानितिभावः ॥ २०२ ॥ ॥ ॥

सपर्वतःतस्यहनुमतःबाहुवेगान्निमित्तात्संश्लेषंसम्यक्संबंधंपूर्ववत्प्राप येप्लवंगाःयुद्धेमृताः तेपिप्लवंगमाःतासांओषधीनांगंधात्परिमलात् जीवितास्तुजीवनंप्राप्ताएव ॥ २०३ ॥ ननुतद्गंधाद्राक्षसाः किमर्थंजीवनंनप्रापुरित्यतआह । रामज्ञयेति। रामाज्ञयाहरयः रक्षांसिमृतराक्षसान् हियतःअब्धौअवाक्षिपन्विचिक्षिपुः पूर्वमेवेतिशेषः ततःकारणात्तेराक्षसाःनोज्जीविताःवानरास्तूज्जीविताःनकेवलंउज्जीवनमात्रं किंतु निरुजःछांदसत्वाद्ध्रस्वःनिरुजःनीरोगःरोगरहिताइतियावत् अभवन् इंद्रजितःयुद्धेवानरार्थंगंधमादनानयनात्पूर्वमेववानराःमृतराक्षसानब्धौअवाक्षिपन् तदनंतरमपि मृतराक्षसान्लक्ष्मणार्थंगंधमादनानयनात्पूर्वंअब्धौअवाक्षिपन्नितिद्रष्टव्यं तस्माद्राक्षसाःजीवनंनप्रापुरितिभावः ॥२०४॥ निरुजोभवन्नित्युक्तंस्पष्टयति । छिन्नेति। सर्वेपिहरयःओषधीनांप्रभावेनसामर्थ्येनछिन्नानांअवयवानांप्ररोहःउद्भवोयेषांतेतथा विशल्याःविनिःसृतशल्याःपूर्ववद्व्रणोविद्यतेयेषांते

तद्बाहुवेगात्संश्लेषं प्राप पूर्ववदेव सः ॥ मृताश्च ये प्लवंगास्तु तद्गंधात्तेपि जीविताः ॥ २०३ ॥ रामाज्ञया हि रक्षांसि हरयोब्धाववाक्षिपन् ॥ नोज्जीवितास्ततस्ते तु वानरा निरुजोभवन् ॥ २०४ ॥ छिन्नप्ररोहिणश्चैव विशल्याः पूर्ववर्णिनः ॥ ओषधीनां प्रभावेन सर्वेपि हरयोऽभवन् ॥ २०५ ॥ अथाससादोत्तमपूरुषं प्रभुं विमानगो रावण आयुधौघान् ॥ प्रवर्षमाणो रघुवंशनाथं तमात्तधन्वाभियर्यौ स रामः ॥ २०६ ॥ संमानयन् राघवमादिपूरुषं निर्यातयामास रथं पुरंदरः ॥ सहायुधं मातलिसंगृहीतं समारुरोहाशु स लक्ष्मणाग्रजः ॥ २०७ ॥ आरुह्य तद्रथवरं जगदेकनाथो लोकाभयाय रजनीचरनाथमाशु ॥ अभ्युद्ययौ दशशतांशुरिवांधकारं लोकानशेषत इमान्निगिरंतमुद्यन् ॥ २०८ ॥

तथा । एतादृशाःअभवन् ॥ २०५ ॥ रघोःरघुनाम्नोराज्ञःवंशस्यनाथंसर्वेश्वररामंआससादप्राप । आत्तधन्वागृहीतधनुःसरामःतंरावणंप्रतिअभिययौ ॥२०६ ॥ पुरंदरःराघवंसंमानयन्प्रीणयन्नित्यर्थः । आयुधैःसहितंमातलिनामातलिनाम्नेंद्रसारथिना । संगृहीतंरथंनिर्यातयामास सरामःआशुरथंसमारुरोह ॥ २०७ ॥ सचासौरथवरश्चेतिविग्रहः यद्वा तदितिभिन्नंपदं दैवात्तेवरःश्रेष्ठेत्रिष्वित्यभिधानात् । लोकानांभक्तजनानांअभयायअशेषतःअशेषानिमान्लोकान्पातालादिस्वर्गांतान् निगिरंतंग्रसंतंरजनीचरनाथंरावणंप्रतिअभ्युद्ययौ कःकमिव उद्यन्उदयंप्राप्यन्दशशतांशुःसहस्ररश्मिःसूर्यःलोकान्निगिरंतं अंधकारमिव ॥ २०८ ॥ ॥ ॥

रामःनिजैर्महास्त्रैःतानिरावणप्रमुक्तशस्त्राणिविनिकृंत्यछित्त्वा तस्यरावणस्यउत्तमांगानांशिरसांदशकंयुगपदेकप्रयत्नेनएकबाणेन न्यकृंतत् अच्छिनत् ॥ २०९ ॥ रामःशतधृतेर्ब्रह्मणःवरान्निमित्तात् । कृंतानिछिन्नानिपुनरेवसमुत्थितानिसमुद्भूतानितानिशिरांसिदृष्ट्वा बाणेनहृदयंबिभेदविददार भिन्नहृत्कःविदारितहृदयःसरावणःन्यपतत्पपात ॥२१०॥ लोकपालैःसहब्रह्मात्रिजगतांत्रयाणांलोकानापरमप्रतीपेमुख्यद्वेषिणितस्मिन्रावणेहतेसति जगतःएकभर्तुःमुख्यस्वामिनःरामस्यपादयुगलंअभ्येत्यप्राप्य शिरसा ननाम ॥ २११ ॥ अथनमस्कारानंतरं जगतःपितामहःब्रह्माकृतःअंजलिर्येनसतथा मुकुलीकृतकरःसन्नित्यर्थः। गुणैःस्वरूपभूतज्ञानानंदादिगुणैःअभिरमतीतितथा तंपितरंस्वपितरंएनंरामंअस्तौत्तुष्टाव किमिति । हेअजित पराभवरहितजयशीलेतियावत् लोकान्भावयतिउत्पादयतीतितथातस्यसंबोधनं हेलोकभावन तेत्वया

आयांतमीक्ष्य रजनीचरलोकनाथः शस्त्राण्यथास्त्रमहितानि मुमोच रामे॥ रामस्तु तानि विनिकृंत्य निजैर्महास्त्रैस्तस्योत्तमांगदशकं युगपन्न्यकृंतत् ॥ २०९ ॥ कृंतानि तानि पुनरेव समुत्थितानि दृष्ट्वा वराच्छतधृतेर्हृदयं बिभेद ॥ बाणेन वज्रसदृशेन स भिन्नहृत्को रक्तं वमन्न्यपतदाशु महाविमानात् ॥२१०॥ तस्मिन्हते त्रिजगतां परमप्रतीपे ब्रह्मा शिवेन सहितः सहलोकपालैः ॥ अभ्येत्य पादयुगलं जगदेकभर्तू रामस्य भक्तिभरितः शिरसा ननाम ॥ २११॥ अथैनमस्तौत्पितरं कृतांजलिर्गुणाभिरामं जगतः पितामहः ॥ जितं जितं ते जितलोकभावन प्रपन्नपालाय नताः स्म ते वयं ॥ २१२ ॥ त्वमेक ईशोसि न चादिरंतस्तवेड्य कालेन तथैव देशतः ॥ गुणाह्यगण्यास्तव तेप्यनंताः प्रत्येकशश्चादिविनाशवर्जिताः ॥२१३॥ न चोद्भवो नैव तिरस्कृतिस्ते क्वचिद्गुणानां परतः स्वतो वा ॥ त्वमेक आद्यः परमः स्वतंत्रो भृत्यस्तवाहं शिवपूर्वकाश्च ये ॥ २१४ ॥ ॥ ॥

जितंजयोलब्धःआदरेद्विरुक्तिः वयंप्रपन्नान्पालयतिरक्षयतीतितथा तस्मैतेतुभ्यंनताःस्मनमस्कृतवंतःस्यामः अथवातेप्रपन्नपालायेतिसंबंधः । तदातेवयमितिसामानाधिकरण्यं अथवा तेइतिषष्ठ्यंतंतववयमित्यर्थः ॥ २१२ ॥ अस्यजगतःत्वंएकःईशःमुख्यस्वामीत्यर्थः। हेईड्यस्तुत्य तवकालेनतथैवदेशतःआदिरुत्पत्तिःअंतःविनाशः नचनैव तवगुणाःअगण्याहि आदिविनाशाभ्यांप्रागभावध्वंसाभ्यांवर्जिताःरहिताः तेप्यगण्यगुणाःप्रत्येकशःप्रत्येकंअनंताःगुणानामपिगणतःआनंत्यमस्तीतिभावः ॥ ॥ २१३ ॥ तेगुणानांपरतःस्वतोवाक्वाचिदुद्भवआविर्भावोनचनैवतिरस्कृतिश्च तिरोधानमपिनैव सदोदिताइत्यर्थः। त्वमेकआद्यःपुराणपुरुषःपरमःसर्वोत्कृष्टःस्वतंत्रश्च अतएवअहंशिवपूर्वकाश्चएतेसर्वेतवभृत्याः ॥ २१४ ॥ ॥ ॥ ॥ ॥

जीवपरमात्मनोर्वैलक्षण्यंस्पष्टयन्नाहेत्याह । यथेति । यथाअग्नेःअर्चिषःज्वालाःपवनस्यवेगाःवेगलक्षणगुणाःअर्कस्यमरीचयःनदीषुआपःगच्छंतिआयांतितद्वत् मदाद्याःअहमाद्यायेशंतेतथा । संतताःअनादिकालस्थाःशिवपूर्वकायेसुराःतेप्रलयकालेगच्छंतिसृष्टिकालेआयांति ॥ २१५ ॥ येयेचमुक्ताःअथतथायेयेबद्धाःसंसारस्थाःहेईशतेसर्वेसदामुक्तौसंसारेचतववशेतिष्ठंतीतिशेषः । सर्वेवयंसदाअनादिकालतःतवगुणानांपूगंसमूहंवदंतोपिपारंगुणानामंतंगच्छंतीतितथान गुणपारदर्शिनोनभवामइत्यर्थः ॥ २१६ ॥ हेप्रभोइतिहेतुगर्भसंबोधनं । ईदृशाःपूर्वोक्तप्रकाराःगुणायस्यतथा स्वार्थेकप्रत्ययः । तस्यतेतवरक्षसांवधःअशेषाणांसर्वेषांसुराणांप्रपालनंरक्षणंकिं किमाश्चर्यं आश्चर्यंनैवेत्यर्थः । तथापियद्यपितवआश्चर्यंनैव तथापीत्यर्थः। तद्द्वयंरक्षोवधःसुरप्रपालनंच अनन्यसाध्यंत्वदन्यैःसाध्यंनभवतीतितथा अतएवत्वयातस्यरक्षोवधसुरप्रपालना

यथार्चिषोग्नेः पवनस्य वेगाः मरीचयोर्कस्य नदीषु चापः ॥ गच्छंति चायांति च संततास्त्व तद्वन्मदाद्याः शिवपूर्वकाश्च ये ॥ २१५ ॥ ये ये च मुक्तास्त्वथ ये च बद्धाः सर्वे तवेशेश वशे सदैव ॥ वयं सदा त्वद्गुणपूगमुच्चैः सर्वे वदंतोपि न पारगामिनः ॥ २१६ ॥ किमेष ईदृग्गुणकस्य ते प्रभो रक्षोवधोशेषसुरप्रपालनं ॥ अनन्यसाध्यं हि तथापि तद्द्वयं कृतं त्वया तस्य नमो नमस्ते ॥ २१७ ॥ इतीरिते त्वब्जभवेन शूली समाह्वयद्राघवमाहवाय ॥ वरं मदीयं त्वगणय्य रक्षो हतं त्वया तेन रणाय मेहि ॥ २१८ ॥ इतीरितेस्त्वित्यभिधाय राघवो धनुः प्रगृह्याशु शरं च संदधे ॥ विकृष्यमाणे चलिता वसुंधरा पपात रुद्रोपि धराप्रकंपतः ॥२१९ ॥ अथोत्थितश्चासुरभाववर्जितः क्षमस्व देवेति ननाम पादयोः ॥ उवाच च त्वद्वशगोस्मि सर्वदा प्रसीद मे त्वद्विषयं मनः कुरु ॥ २२० ॥ अथेंद्रमुख्याश्च तमूचिरे सुरास्त्वयाविताः स्मोद्य निशाचराद्वयं ॥ तथैव सर्वापद एव नस्त्वं प्रपाहि सर्वे भवदीयकाः स्मः ॥ २२१ ॥

त्मककार्यद्वयस्यसंपादनमितिशेषः।कृतंहि एतादृशायतेतुभ्यंनमोनमः॥२१७॥शूलमस्यास्तीतिशूलीशिवःमदीयंमत्संबंधिनंवरंअगणय्यअविचिंत्य त्वयारक्षःहतंरावणोहतइत्यर्थः । येनतेनकारणेनरणायमामांप्रतिएहिआगच्छेति राघवंआहवाययुद्धार्थंसमाह्वयत् ॥२१८॥ धनुषीतिशेषः। वसुंधराभूश्चलितारुद्रोपिधरायाःप्रकंपतःकंपनात् चलनातपपात॥२१९॥अथपतनानंतरं उत्थितःअसुरभावेनवर्जितःमुक्तोरुद्रः हेदेवक्षमस्वेतिब्रुवन्पादयोर्ननामउवाचच किमिति । सर्वदात्वद्वशगःत्वदधीनोस्मिमेप्रसीद प्रसन्नोभव त्वद्विषयंत्वय्यासक्तंमनःकुरु ॥२२०॥ सुराःतंरामंप्रत्यूचिरे । किमिति । वयंअद्यत्वयानिशाचराद्रावणात्आविताःरक्षिताःस्मः असभुवीतिधातोर्लटउत्तमपुरुषबहुवचनं । तथैवयथेदानींतथोत्तरत्रापीत्यर्थः । त्वन्नोस्मान्सर्वापदःसमस्तविपदःसकाशात्प्रपाहिरक्ष यतोसर्वेवयंभवदीयकाःत्वदीयाःत्वद्भक्ताइत्यर्थःस्मःभवामः॥२२१॥

अथरामः अत्रस्वसमीपेंआगतांप्राप्तांतांरावणहृतांसीतायाःआकृतिंप्रतिमां दिव्यस्यशपथस्यछलेनव्याजेनपावकेअग्नौप्रणिधायप्रवेशयित्वा कैलासतःकैलासपर्वतादागतां हुतभुजाअग्निनासमर्पितांप्रदत्तांतांसीतांपुनरेव लोकदृष्टचनुसारेणेतिचार्थः अनुगृह्णात्स्वीकृतवान् ॥ २२२ ॥ गिरीशस्यरुद्रस्यआलयःकैलासःतस्मिन्गच्छतीति तथा तांजानन्रामःपावकसंप्रदत्तांसीतांसमग्रहीत् नतुरावणहृतांसीताकृतिमित्यर्थः । तांसीतांसादेवीसीता ॥ २२३ ॥ गिरेःआनयनात्परस्तात्गंधमादनानयनानंतरं येपीडिताःतारायाःवालिभार्यायाः तारायाःपिताभिषजांवैद्यानांमध्येवरिष्ठःश्रेष्ठः सुषेणनामवानरःतान्रावणबाणपीडितान्वानरान्निरुजः निर्गतरोगान्चकार ॥२२४॥ राघवःतदातस्मिन्कालेपर्वतानयनोत्तरकाले मृतान्वानरान्यमस्यक्षयात्सदनात्आनिनायआनयामास । सर्वशःसर्वान्देवगणान्स्तुतिंकर्तुंआगतान्ब्रह्मादिदेवगणान्

**सीताकृतिं तामथ तत्र चागतां दिव्यच्छलेन प्रणिधाय पावके ॥ कैलासतस्तां पुनरेव चागतां सीतामगृह्णाद्धुतभुक्समर्पितां ॥ २२२ ॥ जानन् गिरीशालयगां स सीतां समग्रहीत्पावकसंप्रदत्तां ॥ मुमोद संप्राप्य च तां स रामः सा चैव देवी भगवंतमाप्य ॥ २२३ ॥ अथो गिरेरानयनात्परस्ताद्ये वानरा रावणबाणपीडिताः ॥ तारापिता तान्निरुजश्चकार सुषेणनामा भिषजांवरिष्ठः ॥ २२४ ॥ तदा मृतान् राघव आनिनाय यमक्षयाद्देवगणांश्च सर्वशः ॥ समन्वजानात्पितरं च तत्र समागतं गंतुमियेष चाथ ॥ २२५ ॥ विभीषणेनार्पितमारुरोह सपुष्पकं तत्सहितः सवानरः ॥ पुरीं जगामाशु निजामयोध्यां पुरो हनूमंतमथो न्ययोजयत् ॥ २२६ ॥ ददर्श चासौ भरतं हुताशनं प्रवेष्टुकामं जगदीश्वरस्य ॥ अदर्शनात्तं विनिवार्य रामं समागतं चास्य शशंस मारुतिः ॥ २२७ ॥**

तत्रस्वसमीपंप्रतिसमागतंदेवैःसहसमागतंपितरंदशरथंचसमन्वजानात्आज्ञापयामास । सर्वशःसर्वान् । तदुक्तंसंग्रहे । संकल्पात्सत्यसंकल्पःसमानिन्येयमक्षयात् । ततोराजादशरथोमहेंद्रेणसमागतइति । तथा अनुजानात्सपितरंब्रह्मादीनपरानपिइति । अथब्रह्मादीनांगमनानंतरंच स्वयंचागंतुंअयोध्यांप्रतीतिशेषः । इयेषऐच्छत् ॥ २२५ ॥ सरामःपुष्पकंविमानंआरुरोह तेनविभीषणेनसहितःरामःअयोध्यांपुरींजगाम । अथोपुरःअग्रेहनूमंतंन्ययोजयत् । स्वागमनंभरतस्यसूचयितुंप्रेषयामासेत्यर्थः ॥ २२६ ॥ असौहनूमान्जगदीश्वरस्यरामस्यादर्शनाद्धेतोः । हुताशनंप्रवेष्टुकामंभरतंददर्श । समारुतिःतंभरतंअग्निंमाप्रविशेतिनिवार्य समागतंरामंअस्यभरतस्यशशंस समागतोरामइत्यकथयदितिभावः ॥ २२७ ॥ ॥ ॥ ॥ ॥

सभरतः श्रुत्वा समागतो राम इत्येवंरूपं हनुमद्वाक्यं श्रुत्वा प्रमोदस्य उत्कृष्टानंदस्य उरुभरः महातिशयो यस्य स तथा सन्। अतिशयो भर इत्यमरः । तेन हनूमता सहैव राघवं अभिसमेत्य संप्राप्य बाष्पैः आनंदबाष्पैः आकुले लोचने यस्मिन् तत्तथा तादृशं आननं मुखं यस्य स तथा तादृशः सन्ननाम ॥ २२८ ॥ प्रणयेन प्रीत्या अन्वितः युक्तः तं भरतं सस्वजे । समाश्लिषत् । शत्रुघ्नं च उत्थाप्य सस्वज इत्यर्थः । ताभ्यां भरतशत्रुघ्नाभ्यां अन्येषु अन्यविषयेषु मात्रादिष्वित्यर्थः । यथावयः वयोनुसारेण वयोज्येष्ठानारभ्येत्यर्थः । प्रतिपेदे मर्यादास्थितये स्वयं ननामेत्यर्थः ॥ २२९ ॥ अभिषेचितोभिषिक्तो रामः उचितमनतिक्रम्येति यथोचितं यथायोग्यमित्यर्थः संमान्य मानयित्वा इदं वक्ष्यमाणं वाक्यं सर्वान् प्रत्याह ॥ २३० ॥ सर्वैः भवद्भिः मनोवाक्सहितं देहं मदीयं विधाय मत्कार्ये समर्प्येत्यर्थः । कायश्च वाक् चित्तं च तथा तैः भवं संपादितं यन्मम अर्चनं पूजा तत्सुकृतं सुष्ठु सम्यक्कृतं भवद्भिरित्यर्थः । अखिलसद्भिः विधेयं कर्तव्यं एतावदेव इतः परं अधिकं नास्तीत्यर्थः ॥ २३१ ॥ अथो भवत्कृतसेवानंतरं । भवतां सर्वस्य भवत्कृतार्चनस्य मुक्तिप्रदानात् मे प्रतिकर्तृता प्र

**श्रुत्वा प्रमोदोरुभरः स तेन सहैव पौरैः सहितः समातृकः ॥ शत्रुघ्नयुक्तोऽभिसमेत्य राघवं ननाम बाष्पाकुललोचनाननः ॥ २२८ ॥ उत्थाप्य तं रघुपतिः सस्वजे प्रणयान्वितः ॥ शत्रुघ्नं च तदन्येषु प्रतिपेदे यथावयः ॥ २२९ ॥ पुरीं प्रविश्य मुनिभिः साम्राज्ये चाभिषेचितः ॥ यथोचितं च संमान्य सर्वानाहेदमीश्वरः ॥ २३० ॥ सर्वैर्भवद्भिः सुकृतं विधाय देहं मनोवाक्सहितं मदीयं ॥ एतावदेवाखिलसद्विधेयं यत्कायवाक्चित्तभवं मदर्चनं ॥ २३१ ॥ मुक्तिप्रदानात्प्रतिकर्तृता मे सर्वस्य चाथो भवतां भवेत ॥ हनूमतो न प्रतिकर्तृता स्यात्स्वभावभक्तस्य निरौपधं मे ॥ २३२ ॥ मद्भक्तौ ज्ञानपूर्तावनुपधिकबलप्रोन्नतौ स्थैर्यधैर्यस्वाभाव्याधिक्यतेजःसुमतिदमशमेष्वस्य तुल्यो न कश्चित् ॥ शेषो रुद्रः सुपर्णोऽप्युरुगुणसमितौ नो सहस्रांशतुल्या अस्येत्यस्मान्मदीशं पदमहममुना सार्धमेवोपभोक्ष्ये ॥ २३३ ॥**

त्युपकारकत्वं भवेत् स्यात्। निरौपधं उपाधिरौपधं । मोक्षादिप्रयोजननिरपेक्षमित्यर्थः । क्रियाविशेषणमेतत् । मे स्वभावभक्तस्य स्वभावत एव भक्तिमतः हनूमतः मुक्तिप्रदानात् प्रतिकर्तृता न स्यात् मोक्षादिपुरुषार्थानपेक्षत्वात् हनुमतः प्रतिकर्तृता न स्यादिति भावः ॥ २३२ ॥ सर्वाधिक्यमपि प्रकटयन्नाहेत्याह मद्भक्ताविति । मद्भक्तौ मद्भक्तिविषये ज्ञानस्य पूर्तिः तस्यां सर्वविषये सविशेषज्ञानपूर्णताविषये अनुपधिकं वरावेशाद्युपाधिरहितं तादृशं च तद्बलं च तस्य प्रोन्नतौ आधिक्ये स्थैर्ये स्थिरभावे धैर्ये धाष्टर्ये स्वाभाव्यं च तदाधिक्यं च अन्यावेशनिमित्तरहितश्रेष्ठत्वं तस्मिन् तेजसि सामर्थ्ये शरीरस्थकांत्या वा सुमतौ अवधारणशक्त्यां दमे इंद्रियनिग्रहे शमे हरिनिष्ठबुद्धौ एतेषु विषयेषु अस्य हनुमतः तुल्यः सदृशः कश्चिन्नास्ति अस्य हनूमतः उरूणां उत्तमानां गुणानां समितौ समूहे शेषादयोपि त्रयः सहस्रांशेन सहस्रभागेन तुल्याः नो नैव इत्यस्मात् मद्भक्तेषूत्तमत्वनिमित्ता

तूअहंअमुनाहनूमतासार्धमेवसहैव मदीशंमत्स्वामिकंपदंसत्यलोकंभोक्ष्ये ब्रह्मलोकाधिपत्यप्रदानेमेवसहभोजनमितिभावः ॥ २३३ ॥ स्वोक्तार्थप्रतिपादकमितिहासमा हेत्याह । पूर्वमित्यादिना । असौदशकंधरःदशग्रीवोरावणः भुवनंत्रैलोक्यंजिगायजितवान् कश्चित्पुरुषःकदाचित्तंरावणंनतुजिगायनजिग्येइत्यत्रहेतुपूर्वकमपवादमाह । पुरुहूतेत्यादिना । पुरुहूतसुतोवालीकपित्वात्कपिजातिनिमित्तात् रावणंजिगायेत्यर्थः । अर्जुनःकार्तवीर्यार्जुनःविष्णोर्वरादेव एनंरावणंअजयच्च ॥ २३४ ॥ कपित्वादि त्युक्तेःकारणमाह । दत्तइति । धात्राब्रह्मणाअस्यरावणस्यमनुजान्मनुष्यान्प्रतिवानरांश्चप्रतिवरःअजेयवरःनदत्तःयेनकारणेनतेनएषोरावणःविजितःपराजितः नरत्वाद्विष्णो र्वराच्चार्जुनेनापिविजितइतिद्रष्टव्यं कपित्वाद्युपाधिवशात्ताभ्यांपराजितइत्युक्त्वास्वस्यवायोश्चजयप्रकारंवक्ष्यन्नाह । अब्जोद्भवस्येत्यादिना । अहंरणमुखेबलिंप्रह्लादपौ त्रंबलिंआह्वयंतंरावणंजिग्ये । कथंभूतमाह्वयंतंरक्षःराक्षसंविशेषणविशेष्यभावस्यकामचारित्वात् रक्षःरावणमुद्दिश्यदत्तंवरंअभिभूयनिरस्यजिग्यइतिवा ॥ २३५ ॥ तत्र कारणमाह बलेरिति । पूर्वंअस्मैबलयेवरंअहंत्वद्वाररक्षकःस्यामितिवरंसंप्रदाय अहंबलेःद्वारस्थःयेनकारणेनतेनकारणेनमयारक्षःरावणःपदस्यपादस्यांगुल्याकनिष्ठांगुल्या

पूर्वं जिगाय भवनं दशकंधरोसावब्जोद्भवस्य वरतो न तु तं कदाचित् ॥ कश्चिज्जिगाय पुरुहूतसुतः कपित्वाद्विष्णो र्वैरादजयदर्जुन एव चैनं ॥ २३४ ॥ दत्तो वरो न मनुजान्प्रति वानरांश्च धात्रास्य तेन विजितो युधि वालिनैषः ॥ अब्जोद्भवस्य वरमाश्वभिभूय रक्षो जिग्ये त्वहं रणमुखे बलिमाह्वयंतं ॥ २३५ ॥ बलेर्द्वारस्थोहं वरमस्मै संप्रदा यपूर्वं तु ॥ तेन मया रक्षोस्तं योजनमयुतं पदांगुल्या ॥ २३६ ॥ पुनश्च युद्धाय समाह्वयंतं न्यपातयं रावणमेक मुष्टिना ॥ महाबलोहं कपिलाख्यरूपस्त्रिकोटिरूपः पवनश्च मे सुतः ॥ २३७ ॥

अयुतंअयुतयोजनं अयुतयोजनान्यतिक्रम्येत्यर्थः । अस्तंनिरस्तं मयारावणःक्षिप्तइत्यर्थः ॥ २३६ ॥ महाबलःकपिलाख्यरूपःकपिलावतारोहंपुनश्चपुनरपि । पुनःश्च्या वर्त्ययुद्धेयुद्धायआह्वयंतं । 'पुनरप्रथमेप्रश्नेव्यावृत्तावधारण' इतियादवः । बलिंसमाह्वयंतंरावणंएकमुष्टिनान्यपातयं महाबलइतिहेतुगर्भविशेषणं वाल्यर्जुनवन्नैवेतिभावः । महाबलइत्यावर्तनीयं त्रिकोटिरूपःत्रिकोटिसंख्याकचतुर्भुजादिरूपवान्मेकपिलाख्यस्यसुतःपवनोवायुः । अजयदितिशेषः । त्रिकोटिरूपइत्यनेनविलक्षणानेकरूप प्रदर्शनेनैवाजयदित्युक्तंभवति ॥ तदुक्तंविष्णुधर्मोत्तरे । "प्रविश्यददृशेतत्रसर्वाभरणभूषितान् । नित्योत्सवान्शांतभयान्निष्कलान्पावकप्रभान् । चतुर्भुजान्महारूपान् श्री वत्सकृतलांछनान् । एकरूपधरान्सर्वान्स्रक्माल्यानुलेपनान् । रागद्वेषविनिर्मुक्तान्सर्वशक्तान्जगत्प्रियान् । नृत्येनगीतवाद्येनसेवमानान्जनार्दनं । मानुष्यपूजनंकृत्वादेव देवस्यचक्रिणः । समीपंसमनुप्राप्तास्तस्यैवपरमेष्ठिनः । तिस्रःकोट्यस्तदातेषांदृष्ट्वाचरजनीचरः । ऊर्ध्वरोमाततस्तस्माद्देशाद्देशमपासरत्" इति । कपिलपुत्रइत्युक्तमार्षे ।

"येतुनृत्यंतिवैतत्रसुतास्तेतस्यधीमतः । तुल्यतेजःप्रभावास्तेकपिलस्यनरस्यवा" इति ॥२३७॥ इतिस्महेतोःआवांअहंवायुश्चेत्यर्थः । स्वशक्त्यास्वरूपबलेनजयिनौजयवंतौशिवोमेवरादेवएनंरावणंअजयत् एवमितिपाठेउत्तरत्रान्वयः । हरःसुरैरजेयंजेतुमशक्यंइमंरावणंज्ञात्वा अहं अमुंकैलासोत्पाटनमिच्छंतंदशाननंजयेयंपराभविष्यामि एवंअनेनप्रकारेणवव्रे वरमितिशेषः ॥२३८॥ अतःकारणात्स्वभावात्वरावेशाद्युपाधिविनैवेत्यर्थः । स्वरूपसामर्थ्याज्जयिनौजयवंतौअहंवायुश्चेतिद्वावेवेत्यर्थः । नत्वन्यइति भावः । यदर्थमेतावदुक्तंतदाह । वायुरिति । सएषोवायुर्हनुमान्तस्माद्धनूमतास्वशक्त्यारावणोजितइतिशेषः । इतिहासांतरमाहअमुष्येति । पुराहनुमदुत्पत्तिकाले अमुष्यहनूमतःहेतोःअर्थेवायुनाशिवेंद्रपूर्वादेवाअपिकाष्ठवत्कृताःजडीकृता इंद्रेणवज्रेणहनूमतिताडितेसति वायुनादेवाःकाष्ठवत्कृताइतिपौराणिकाकथाअवगंतव्या । तथाचोक्तंविष्णुधर्मोत्तरे । "तंप्रदुद्रावभक्षार्थीसशक्रंकुंजरोत्तमं । प्राहरत्त्वरयावज्रंततस्तस्यसुराधिप" इति । "क्रुद्धंचजगतांवायुंसांत्वयित्वापितामह" इतिच ॥२३९॥ अतः

**आवां स्वशक्त्या जयिनाविति स्म शिवो वरान्मेजयदेनमेव ॥ ज्ञात्वा सुराजेयमिमं हि वव्रे हरो जयेयाहममुं दशाननं ॥ २३८ ॥ अतः स्वभावाज्जयिनावहं च वायुश्च वायुर्हनुमान्स एषः ॥ अमुष्य हेतोस्तु पुराहि वायुना शिवेंद्रपूर्वा अपि काष्ठवत्कृताः ॥ २३९ ॥ अथो हनूमान्पदमेतु धातुर्मदाज्ञया सृष्ट्यवनादि कर्म ॥ मोक्षं च लोकस्य सदैव कुर्वन्मुक्तश्च मुक्तान्सुखयन् प्रवर्ततां ॥ २४० ॥ भोगाश्च ये यानि च कर्मजातान्यनाद्यनंतानि ममेह संति ॥ मदाज्ञया तान्यखिलानि संति धातुः पदे तत्सहभोगनाम ॥ २४१ ॥ एतादृशं मे सह भोजनं ते मया प्रदत्तं हनुमन्सदैव ॥ इतीरितस्तं हनुमान् प्रणम्य जगाद वाक्यं स्थिरभक्तिनम्रः ॥ २४२ ॥ ॥**

शेषायुक्तमत्वात् । हनूमान्धातुःपदंसत्यलोकाधिपत्यंएतुप्राप्नोतु । तत्रविद्यमानःसन्मदाज्ञयालोकस्यसृष्टिःउत्पत्तिःअवनंपालनंआदिपदेनसंहारः एतेयस्मिन् कर्मणि तत्तथातादृशंकर्ममोक्षंचसदैवआमुक्तेरित्यर्थः । कुर्वन्सन् मुक्तःस्वनियतकालेमुक्तःसन् मुक्तान्लोकान्सुखयन्तत्तद्योग्यस्वरूपानंदेनसुखयन् प्रवर्ततांतिष्ठतु ॥२४०॥ सहभोजनंदत्तमितिपुराणगतवाक्यविरोधंपरिहरन्नाह भोगाइति । ममयेभोगाःसंति इहजगद्विषयेअनाद्यनंतानिउत्पत्तिध्वंसरहितानियानिकर्मणांजातानिपुंजानिचसंति मदाज्ञयातानिअखिलानिभोगादिकर्मजातानिधातुःपदेसंति यद्यस्मात्तत्तस्मात्सहभोगनामधातुःपदमितिशेषः ॥ २४१ ॥ हेहनुमन्एतादृशंसत्यलोकाधिपत्यात्मकं मेसहभोजनंमयातेसदैवसर्वकल्पेषुप्रदत्तं रामेणइतीरितःस्थिरभक्त्यानिश्चलभक्त्यानम्रःप्रह्वःहनूमान्तंरामंप्रणम्य वाक्यंजगाद ॥ २४२ ॥ ॥

किमिति हेईशतेतवपादसरोजंपादकमलंभजंतितेपादसरोजभाजःतेषांतथात्वदुपासकानामित्यर्थः । इहसंसारेचतुर्ष्वपिधर्मादिचतुर्ष्वपिअर्थेषुपुरुषार्थेषुसुदुर्लभःअतिप्रयाससाध्यः कोनुकःपुरुषार्थःनकोपीत्यर्थः । हेभूमन्पूर्ण तथापिपुरुषार्थानांअप्रयासेनप्राप्तौसत्यामपि अहंभवत्पदांभोजस्यत्वत्पादसरोजस्यनिषेवणात्उपासनात्ऋते अन्यंपुरुषार्थंनप्रवृणोमिनस्वीकरोमि ॥ २४३ ॥ नन्विदंकुतइत्यतस्तन्माहिमानंनिरूपयन्नाह । त्वमेवेति । अखिलविषयेउरुशक्तिर्यस्येति सदाअशेषैःरमाविरिंचादिभिरपिअगण्यैः अनंतैःगुणैः अर्णवइवतथात्वमेवअन्योनास्तीत्यर्थः ॥ २४४ ॥ अगण्यगुणार्णवइत्युक्तंविवृणोति । समेत्येति । सर्वेमुक्तामुक्तब्रह्माद्याःसदापिनित्यमुक्तारमापीत्यर्थः । समेत्यसंभूयत्वदीयान्गुणान्अनंतकालाद्वदंतोपिवर्णयंतोपिवैनिश्चयेननसमाप्नुयुःसमाप्तिंनप्राप्नुयुःगुणांतंनपश्यंतीतिभावः । हियस्मात्तस्मात्स

कोन्वीशते पादसरोजभाजां सुदुर्लभोर्थेषु चतुर्ष्वपीह ॥ तथापि नाहं प्रवृणोमि भूमन् भवत्पदांभोजनिषेवणादृते ॥ २४३ ॥ त्वमेव साक्षात्परमः स्वतंत्रस्त्वमेव साक्षादखिलोरुशक्तिः ॥ त्वमेव चागण्यगुणार्णवः सदा रमाविरिंचादिभिरप्यशेषैः ॥ २४४ ॥ समेत्य सर्वेपि सदा वदंतोप्यनंतकालाच्च न वै समाप्नुयुः ॥ गुणांस्त्वदीयान् परिपूर्णसौख्यज्ञानात्मकस्त्वं हि सदातिशुद्धः ॥ २४५ ॥ यस्ते कथासेवक एव सर्वदा सदा रतिस्त्वय्यचलैकभक्तिः ॥ स जीवमानो न परः कथंचित्तज्जीवनं मेस्त्वधिकं समस्तात् ॥ २४६ ॥ प्रवर्धतां भक्तिरलं क्षणे क्षणे त्वयीश मे ह्रासविवर्जिता सदा ॥ अनुग्रहस्ते मयि चैवमेव निरूपधौ तौ मम सर्वकामः ॥ २४७ ॥

दात्वंपरिपूर्णसौख्यज्ञानात्मकःसंपूर्णानंदज्ञानस्वरूपकः अतिशुद्धश्चअतिपवित्रःकलंकरहितइतियावत् ॥ २४५ ॥ सर्वदातेतवकथासेवकःगुणकर्मप्रशंसनकथांशृण्वन् त्वयिसदारतिःप्रीतिर्यस्यसतथा त्वयिअचलास्थिराएकामुख्याभक्तिर्यस्यसतथा एतादृशोयःपुरुषःसपुरुषःजीवमानएवजीवनफलवानेव परःकथाश्रवणादिगुणविशिष्टपुरुषादन्यःपुरुषःकथंचित्जीवनफलवान्नैव जीवन्मृतइत्यर्थः । एतादृशंयज्जीवनंतादृशंजीवनंमेसमस्ताज्जीवसंघात्अधिकंयथास्यात्तथांअस्त्वितिशेषः ॥ २४६ ॥ हेईशह्रासैःक्षयकरकामक्रोधादिदोषैःविवर्जितारहितात्वयि विद्यमानामेभक्तिःसदाआमुक्तेःक्षणेक्षणेप्रतिक्षणमित्यर्थः । अलंमद्योग्यतापूर्तिर्यथास्यात्तथा प्रवर्धतांवृद्धिंप्राप्नोतु । एवमेवतेअनुग्रहःमयिप्रवर्धतामित्यर्थः । निरूपधौउपधःउपाधिःतद्रहितौनिरुपाधिकावित्यर्थः । तौभक्त्यनुग्रहौममसर्वकामःसमस्तपुरुषार्थः ॥ २४७ ॥

इतीरितःसरामःतस्यहनूमतः तद्द्वयंभक्त्यनुग्रहौददौ विधातुःपदंसत्यलोकाधिपत्यमित्यर्थः ददौ सकलंचशोभनंचमंगलरूपभोगादिकंचददावित्यर्थः । अथआर्द्रयास्नेहार्द्रयाधियाअंतःकरणेनएनंहनूमंतंसमाश्लिषत्सस्वजे । सर्वजनान्वानरपौरजानपदादिसर्वभक्तजनान् यथोचितंयथायोग्यंअपूजयत् । वस्त्रभूषणादिनातोषयामासेत्यर्थः

**इतीरितस्तस्य ददौ स तद्द्वयं पदं विधातुः सकलं च शोभनं ॥ समाश्लिषच्चैनमथार्द्रया धिया यथोचितं सर्वजनान पूजयत् ॥ २४८ ॥ इति श्रीमदानंदतीर्थभगवत्पादाचार्यप्रणीते श्रीमन्महाभारततात्पर्यनिर्णये श्रीरामचरिते युद्ध कांडकथानिरूपणंनामाऽष्टमोध्यायः ॥ ८ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥**

॥ २४८ ॥ यंगंगाजमद० ॥ पूर्तिंतस्यकृतौसतांसुखकरोध्यायोष्टमःपुण्यदःश्रीमद्भारत० ॥ ८ ॥ इति श्रीभारततात्पर्यनिर्णयस्य पदार्थदीपिकायामष्टमोध्यायः ॥ ८ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥ ॥ ॥



श्रीगुरुभ्योनमः। ॐ उत्तरकांडकथामाह। अथेत्यादिना। अथसर्वजनपूजनानंतरं आप्तराज्यःप्राप्तसाम्राज्योभगवान् सरामःलक्ष्मणंजगाद। तरुणोराजायुवराजोभवेति संबंधः। इतीरितःसलक्ष्मणःभवतःपदाब्जात् चरणकमलात् परंअन्यद्विषयमेवनंनवृणोमिनांगीकरोमीतिगुरुं मुख्यगुरुंश्रीराममाह। युधिष्ठिरोभीमार्जुनयोर्ज्येष्ठत्वाद्यथा गुरुस्तथानैवेतिभावः॥१॥ भवतःपादौतयोर्निषेवणंसेवातस्मिन्एकामुख्यास्पृहाइच्छायस्यसतथा। तंमांतस्मात्पादनिषेवणादन्यत्रअन्यविषयेनियोक्तुंनार्हसि। क्वचित्ईदृशःसेवाप्रदानरूपःकश्चिदनुग्रहःननास्ति ततःकारणात्सदैवसंसारमुक्तौच तदेवपादनिषेवणमेवमेदेहि॥२॥ तस्यलक्ष्मणस्यतदेवपादनिषेवणमेव। यौवराज्येयुवराज्यपदेभरतंनिधायसंस्थाप्य। स्वधर्मकान्वर्णाश्रमोचितधर्मकान्लोकान्जुगोप ररक्ष॥३॥ ईशेरामेपृथिवींशासतिसति। पृथ्वीगुणानांउन्नतौउत्कर्षविषये विरिंच

ॐ अथाप्तराज्यो भगवान्स लक्ष्मणं जगाद राजा तरुणो भवाशु ॥ इतीरितस्त्वाह स लक्ष्मणो गुरुं भवत्पदाब्जान्न परं वृणोम्यहं ॥१॥ न मां भवत्पादनिषेवणैकस्पृहं तदन्यत्र नियोक्तुमर्हसि ॥ नहीदृशः कश्चिदनुग्रहः क्वचित्तदेव मे देहि ततः सदैव ॥ २ ॥ इतीरितस्तस्य तदेव दत्वा दृढं समाश्लिष्य च राघवः प्रभुः ॥ स यौवराज्ये भरतं निधाय जुगोप लोकानखिलान्स्वधर्मकान् ॥ ३ ॥ प्रशासतीशे पृथिवी बभूव विरिंचलोकस्य समा गुणोन्नतौ ॥ जनोऽखिलो विष्णुपरो बभूव न धर्महानिश्च बभूव कस्यचित् ॥ ४ ॥ गुणैश्च सर्वैरुदिताश्च सर्वे यथा यथा योग्यतयोच्चनीचाः ॥ समस्तरोगादिभिरुज्झिताश्च सर्वे सहस्रायुष ऊर्जिता धनैः ॥ ५ ॥ सर्वे जना नित्यबलोपपन्ना यथेष्टसिद्ध्या च सदोपपन्नाः ॥ समस्तदोषैश्च सदा विहीनाः सर्वे सुरूपाश्च सदा महोत्सवाः ॥ ६ ॥ सर्वे मनोवाक्तनुभिः सदैव विष्णुं यजंते न तु कंचिदन्यं ॥ समस्तरत्नोद्भरिता च पृथ्वी यथेष्टधान्या बहुदुग्धगोमती ॥ ७ ॥ ॥

लोकस्यसमासदृशाबभूव। गुणोन्नतिप्रवृत्तिंस्पष्टयति। जनइत्यादिना। विष्णुरेवपरःउत्कृष्टोयस्यसतथा। धर्महानिःविहितधर्मत्यागः॥४॥ सर्वैःसज्जनायथायथायोग्यतास्वस्वरूपयोग्यतयाउच्चनीचाउत्तमाधमाःतथातथा। स्वस्वयोग्यानुसारेणसर्वैःगुणैःज्ञानभक्तिसंपदादिगुणैःविदिताःआविर्भूताःरोगैःआदिशब्देनमानसीपीडासहस्रं सहस्रवर्षपरिमितंआयुर्येषांते धनैःऊर्जिताःउत्कृष्टाः॥५॥ यथेष्टंयद्यदभीष्टंतस्यासिद्धिःप्राप्तिः तयाउपपन्नाःयुक्ताःसमस्तदोषैःनवविधद्वेषरूपदोषैःरागादिभिर्वा॥६॥ कंचिदन्यंलक्ष्म्यादिकंदेवगणंतुविशेषेणसर्वोत्तमत्वेनेत्यर्थः। नयजंते पृथ्वीउद्भरितासंपूर्णायथेष्टानिबहूनिधान्यानियस्याःपृथिव्यांसातथा। बहुदुग्धानियासांतातथा ताश्चताःगावश्चताःविद्यंतेयस्यांपृथिव्यांसातथा इतिपृथिव्यांगुणत्रयोत्कर्षउक्तः॥७॥ ॥ ॥ ॥ ॥

समस्तगंधाःचंदनादिद्रव्याणि ।"गंधस्तुसौरभेनृत्येगंधकेगर्वलेशयोः।सएवद्रव्यवचनोबहुत्वेपुंसिचस्मृत"इत्यभिधानं। अतिहृद्याःअतिमनोहराः। तत्ररामराज्येश्रवणें द्रियंअत्यंतंहरंतीतिविग्रहः प्रियाइत्यर्थः ॥ ८ ॥ अधर्मशीलःअधर्मबुद्धिःअप्रजःसंतानरहितः दुष्प्रजःदुष्टप्रजावान्कुत्सिताभार्यायस्यसतथा ॥ ९ ॥ पुमांसःपुरुषाःविधु राःस्त्रीरहिताः अनिष्टस्यअप्रियवस्तुनःसंबंधःइष्टस्याप्रियवस्तुनःहानिःवियोगःपूर्वमृत्युःवृद्धात्पूर्वंतरुणस्यमृत्युरित्यर्थः ॥ १० ॥ यथेष्टानिबहूनिमाल्यानिपुष्पाणिआभरणा निभूषणानिअनुलेपनानिचंदनानियेषांतेतथा । यथेष्टानिपानानिजलदुग्धादीनिअशनानिअन्नानिवासांसियेषांतेतथा।अखिलाःसर्वेलोकाबभूवुः।कस्मिन्सति जगतांसर्व लोकानांईशेस्वामिनिजनार्दनेदुष्टमर्दनेनृपेरामराजेप्रकृष्टेनउत्कृष्टेनधर्मेणप्रशासतिसति । शास्तीतिशासत् तस्मिन् तथारक्षतिसति पृथिवीमितिशेषः ॥ ११ ॥ ब्रह्मादीनांमू

समस्तगंधाश्च सदातिहृद्याः रसा मनोहारिण एव तत्र॥ शब्दाश्च सर्वे श्रवणातिहारिणः स्पर्शाश्च सर्वे स्पर्शेंद्रियप्रियाः ॥८॥ न कस्यचिद्दुःखमभूत्कथंचिन्न वित्तहानिश्च बभूव कस्यचित् ॥ नाधर्मशीलो न च कश्चनाप्रजो न दुष्प्रजो नैव कुभार्यकश्च ॥ ९ ॥ स्त्रियो न चासन्विधवाः कथंचिन्न वै पुमांसो विधुरा बभूवुः ॥ नानिष्टयोगश्च बभूव कस्यचिन्न चेष्ट हानिर्न च पूर्वमृत्युः ॥ १० ॥ यथेष्टमाल्याभरणानुलेपना यथेष्टपानाशनवाससोखिलाः ॥ बभूवुरीशे जगतांप्रशास ति प्रकृष्टधर्मेण जनार्दने नृपे ॥ ११ ॥ स ब्रह्मरुद्रमरुदश्विदिवाकरादिमूर्धन्यरत्नपरिघट्टितपादपीठः ॥ नित्यं सुरैःस ह नरैरथ वानरैश्च संपूज्यमानचरणो रमते रमेशः ॥१२॥ तस्याश्लिष्टेशितुरनानाद्यनुगैव लक्ष्मीः सीताभिधा त्वरमय त्स्वरतं रमेशं ॥ नित्याऽवियोगिपरमोच्चनिजस्वभावसौंदर्यविभ्रमसुलक्षणपूर्वभावा ॥ १३ ॥ ॥

र्धन्यानिविद्यमानानिमूर्धन्यानितानिचतानिरत्नानिचतैःपरिघट्टितेसंघर्षितेपादपीठेयस्यसतथा । सुरैःअथशब्दःसमुच्चयार्थः सहवानरैश्चनित्यंप्रत्यहंसंपूज्यमानचरणःसरमेशो रामःरमते ॥ १२ ॥ तस्यरामस्यअनादितःअनादिकालतः अनुगातेनसंयुक्तेत्यर्थः । सीताभिधासीतानाम्नीलक्ष्मीःअरमयत्रमयामास । कथंभूतालक्ष्मीः सौंदर्यविभ्रमोसौं दर्यविलासःसुलक्षणानिसल्लक्षणानिनित्यंअवियोगीनिवियोगरहितानिअत्युत्तमानिपरमोच्चानिनिजस्वभावभूतानिस्वस्वरूपभूतानिसौंदर्यविभ्रमलक्षणानिपूर्वाणियेषांतेतथा । तएवभावाःधर्माःयस्याःसातथोक्ता ॥ १३ ॥ ॥ ॥ ॥ ॥

नित्यंउन्नतप्रमदभारेणउत्कृष्टानंदसमूहेन भृतःपूर्णःस्वभावःस्वरूपंयस्यसतथा । उडूनांनक्षत्राणांराजेत्युडुराजः पूर्णोडुराजेनसुविराजितासुदीप्यमानासुसन्निशासुसुखकररात्रिषुदप्यिन्शोभमानःसुपुष्पितासुउत्तमकुसुमितासुअशोकवनिकासु तयासीतयारेमे॥ १४॥ अनुरक्ताप्रीतियुक्ताधीर्बुद्धिर्येषांतेतथा सुकंठाःसुस्वराःगायंतिसुरेशैःसहिताःमुनिगणाःअप्रमत्ताःमदरहिताःराजानःएनंरामं अनुयांति अभिप्रयांति अनुकूलेनतिष्ठंतीतिवा॥ १५॥विजिताअरयःशत्रवोयेनसतथा अमोघंसफलंवीर्यंपराक्रमोयस्यसतथा । लोकस्यआनंदंइंदुरिवचंद्रइवसंदधत्धारयन् इंदिरायाःलक्ष्म्याःईशःपतिःसांद्रेणानिरवकाशेन पूर्णेनेतियावत् । सुखेनवारिधिरिवसमुद्रइवसमुद्रःअतएवअप्रमेयःप्रमातुमशक्योसौरामःएवंपूर्वोक्तप्रकारेण त्रयोदशसहस्रसंख्याकाःसमाःसंवत्सरान् । ' कालाध्वनोरत्यंतसंयोगे ' इतिद्वितीया पृथिवींररक्ष ॥ १६ ॥ सरामःदेव्यांसी

रेमे तया स परमः स्वरतोपि नित्यं नित्योन्नतप्रमदभारभृतस्वभावः ॥ पूर्णोडुराजसुविराजितसन्निशासु दीप्यन्नशोकवनिकासु सुपुष्पितासु ॥ १४ ॥ गायंति चैनमनुरक्तधियः सुकंठाः गंधर्वचारणगणाः सह चाप्सरोभिः ॥ तं तुष्टुवुर्मुनिगणाः सहिता सुरेशैः राजान एनमनुयांति सदा प्रमत्ताः ॥ १५ ॥ एवं त्रयोदशसहस्रमसौ समास्तु पृथ्वीं ररक्ष विजितारिरमोघवीर्यः ॥ आनंदमिंदुरिव संदधदिंदिरेशो लोकस्य सांद्रसुखवारिधिरप्रमेयः ॥ १६ ॥ देव्यां स चाजनयदिंद्रहुताशनौ द्वौ पुत्रौ यमौ कुशलवौ बलिनौ गुणाढ्यौ ॥ शत्रुघ्नतो लवणमुल्बणबाणदग्धं कृत्वा चकार मधुरां पुरमुग्रवीर्यः ॥ १७ ॥ कोटित्रयं स निजघान तथासुराणां गंधर्वजन्म भरतेन सतां च धर्मं ॥ संशिक्षयन्न यजदुत्तमकल्पकैः स्वं यज्ञैर्भवाजमुखसत्सचिवाश्च यत्र ॥ १८ ॥ ॥

तादेव्यां यमौएकस्यांएकसमयोत्पन्नावित्यर्थः । नाम्नाकुशलवौद्वौपुत्रौअजनयत् । तौपूर्वंइंद्रहुताशनौ उग्रंसोढुमशक्यमित्यर्थः वीर्यंपराक्रमोयस्यसतथा रामःशत्रुघ्नतःशत्रुघ्नेनलवणंलवणासुरंउल्बणेनक्रूरेणबाणेनस्वहस्तगतबाणेनस्वलोकगमनसमयेशरंदधारतंकंइत्यग्रेवक्ष्यते । दग्धंकृत्वाकारयित्वालवणस्यमधुवनंमथुरापुरींचकारकारयामास ॥ १७ ॥ सरामःगंधर्वेषुजन्मयस्यतत्तथागंधर्वजातमित्यर्थः । महासुराणांकोटीनांत्रयंभरतेननिजघानघातयामास । सतांधर्मसंशिक्षयन्उत्तमकल्पकैःमुख्यप्रयोगवद्भिःसंपूर्णदक्षिणाद्यैःसंयुतैरित्यर्थः । यज्ञैःस्वंस्वात्मानमजयत् यत्रयज्ञेषुभवोरुद्रःअजोब्रह्माभवाजौतौमुखौआद्यौयेषांतेतथा । तएवसत्सचिवाःसमीचीनपरिचारकाःसंतःसज्जनाःसचिवाइतिवा ॥ १८ ॥ ॥ ॥ ॥

अथयज्ञानंतरं शूद्रस्यतपश्चर्यानिहतंमृतंविप्रपुत्रकंशूद्रतपश्चरणंदोषसाधनं तस्मान्मृतमितिभावः। तंशूद्रतापसंशूद्रतपस्विनंहत्वाउज्जीवयामास ॥ १९ ॥ सपूर्वंकइत्य तआह। जंघेति। यःपूर्वंजंघनामाअसुरःसगिरिजावरदानतःकल्पायुःलोकस्यजगतःक्षयोनाशःतस्यकाम्ययाइच्छयाशूद्रोबभूव। शूद्रतपश्चर्याख्यान्यायप्रवृत्त्यालोकक्षयः स्यादितिबुद्ध्याशूद्रोबभूवेतिभावः ॥२०॥ तपश्चरणेनिमित्तांतरमाह। तपइति। माहेश्वरंरुद्रसंबंधिपदंस्थानंपार्वतीभर्तृत्वमितिभावः। इच्छन्तपश्चचार। अतःदुर्बुद्धिः तस्माद्वरदानतःअनन्यवध्यंतंशूद्रंजघान तस्मादयोग्यकर्मकर्तृत्वाज्जघानेतिवा ॥ २१ ॥ अत्रतथाशब्दःक्रियांतरसमुच्चयार्थः राघवःश्वेतेनश्वेतराजेनदत्तांरामार्थंअगस्त्यहस्तेमालांअगस्त्यादाप ॥ २२ ॥ श्वेतःकिमर्थंमालामदादित्यतआह। अन्नेति। नविद्यतेअन्नंअन्नदानंयस्मिन्नसौतथा सचासौयज्ञश्चतंकरोतीतितथा श्वेतोरा

अथ शूद्रतपश्चर्यान्निहतं विप्रपुत्रकं॥ उज्जीवयामास विभुः हत्वा तं शूद्रतापसम् ॥ १९ ॥ जंघनामासुरः पूर्वं गिरिजावरदानतः ॥ बभूव शूद्रः कल्पायुः स लोकक्षयकाम्यया ॥२०॥ तपश्चचार दुर्बुद्धिरिच्छन्माहेश्वरं पदं ॥ अनन्यवध्यं तं तस्माज्जघान पुरुषोत्तमः ॥ २१ ॥ श्वेतदत्तां तथा मालामगस्त्यादाप राघवः ॥ २२ ॥ अनन्नयज्ञकृच्छ्वेतो राजा क्षुद्विनिवर्तनं ॥ कुर्वन् स्वमांसैर्धात्रोक्तो मालां रामार्थमर्पयत् ॥ २३ ॥ अगस्त्याय न साक्षात्तु रामे दद्यादयं नृपः ॥ क्षुदभावमात्रफलदं न साक्षाद्राघवेर्पितं ॥ २४ ॥ क्षुदभावमात्रमाकांक्षन् मामसौ परिपृच्छति ॥ व्यवधानतस्ततो रामे दद्याच्छ्वेत इति प्रभुः ॥ मत्वा ब्रह्मादिशन्मालां प्रदातुं कुंभयोनये ॥ २५ ॥

जास्वमांसैःक्षुधःविनिवर्तनंपरिहारंकुर्वन्सन् क्षुन्निरस्युपायंपृष्टेनेतिवाक्यशेषः। धात्राब्रह्मणारामार्थंअगस्त्यायमालांदेहीत्युक्तःश्वेतःरामार्थंमालांअगस्त्यायार्पयदित्यान्वयोज्यं ॥ २३ ॥ अगस्त्यव्यवधानाद्देहीत्युक्तस्याभिप्रायमाह नेति। अयंनृपःसाक्षात्स्वयमेवेत्यर्थः। रामेनदद्यात्कुतःसाक्षात्स्वहस्तेनैवराघवेअर्पितंमालादिकं क्षुधः अभावमात्रफलदंपरिहारमात्रमेवफलदंन किंतुसर्वपुरुषार्थफलदमित्यर्थः ॥ २४ ॥ एवंचेत्किमित्यतआह। क्षुदेति। असौश्वेतःक्षुदभावमात्रमाकांक्षन्इच्छन्मांपृच्छति उपायमितिशेषः। यतःकारणात्ततःव्यवधानतः पुरुषांतरव्यवधानेन रामेदद्यादितिप्रभुर्ब्रह्मामत्वाज्ञात्वा कुंभएवयोनिःउत्पत्तिकारणंयस्यसतथा तस्मैअगस्त्यायमालांप्रदातुंअदिशत् आज्ञापयामास ॥ २५ ॥ ॥ ॥ ॥

जनार्दनःरामःएषोगस्त्यःममभक्तःइत्यवेत्यज्ञात्वा अगस्त्यस्यकरपल्लवेनकरलक्षणकोमलदलेन अर्पितांदत्तांतांश्वेतदत्तांमालांजगृहेअंगीचकार तेनअगस्त्येनसंस्तुतः सन् पुरंअयोध्यापुरींउपागमत्उपाजगाम ॥ २६ ॥ अथशब्दःकथांतरवाची तांकथामाह । केचिदित्यादिना। पुराउरुप्रथितंअतिप्रसिद्धंपौरुषंपराक्रमोयेषांतेतथा सुराणकाःसुराणकाइतिनाम्नाप्रसिद्धाःकेचिदसुराआसुः । तेसुराणकाःसुमहत्तपआस्थिताःतपसिस्थिताइतिभावः । पद्मात्संभवोउत्पत्तिर्यस्येतिविग्रहः विभुंब्रह्माणंअवेत्य ज्ञात्वाप्राप्येतिवा प्रत्यक्षीभूतमितिशेषः । अवेक्ष्येतिवापाठः ऊचिरे ॥ २७ ॥ किमिति हेउदारवदान्यहेसद्गुण उदारसद्गुणेत्येकंवापदं उदाराउत्कृष्टाःभूरीणांमहतां पापानांकृतिःकारणमेषामस्तीतितथा । ईदृशाअपिनिश्चयात्मुक्तिंआप्नुमअजःब्रह्माइत्युदीरितंअवधार्यमनसिधृत्वाप्राह । कथंभूतःप्रहसितंहासयुक्तंआननंयस्य ॥ २८ ॥

तामगस्त्यकरपल्लवार्पितां भक्त एष मम कुंभसंभवः ॥ इत्यवेत्य जगृहे जनार्दनस्तेन संस्तुत उपागमत्पुरम् ॥२६॥ अथ केचिदासुरसुराः सुराणका इत्युरुप्रथितपौरुषाः पुरा ॥ ते तपस्सु महदास्थिता विभुं पद्मसंभवमवेत्य चोचिरे ॥ २७ भूरिपापकृतिनोपि निश्चयान्मुक्तिमाप्नुम उदारसद्गुण ॥ इत्युदीरितमजोवधार्य तत्प्राह च प्रहसिताननः प्रभुः ॥ २८ ॥ यावदेव रमया रमेश्वरं नो वियोजयथ सद्गुणार्णवं ॥ तावदुच्चमपि दुष्कृतं भवन्मोक्षमार्गपरिपंथिनो भवेत् ॥ २९ ॥ इत्युदीरितमवेत्य ते सुराः क्षिप्रमोक्षगमनोत्सुकाः क्षितौ ॥ साधनोपचयकांक्षिणो हरौ शासति क्षितिमशेषतोभवन् ॥ ३० ॥ ताननादिकृतदोषसंचयैर्मोक्षमार्गगतियोग्यतोज्झितान् ॥ मैथिलस्य तनया व्यचालयन्मायया स्वतनुवा स्वमार्गतः ॥ ३१ ॥ ॥ ॥ ॥

किमिति । यावदेवयावत्कालंरमयारमेश्वरंहरिंनोवियोजयथवियोगंनप्रापयिष्यथ । तावत्उच्चमपिस्वमातृगमनब्रह्महत्यादिमहदपिदुष्कृतंपातकं भवतांमोक्षमार्गपरिपंथिनो मुक्तिसाधनविरोधिनोभवेत् । नभविष्यतिभवंश्चासौमोक्षश्चतस्यमार्गः भक्त्यादितस्यपरिपंथिर्विरोधीतिवा । यद्वा । भवदितिभिन्नंपदंदुष्कृतविशेषणं ॥ २९ ॥ असुराःसुराणकाःअवेत्यज्ञात्वा क्षिप्रंमोक्षस्यगमनेप्राप्तौउत्सुकाःउत्कंठायुक्ताःसंतः साधनोपचयकांक्षिणःमोक्षसाधनाधिक्यंइच्छंतः अशेषतःसर्वक्षितौअभवन्जाताइत्यर्थः । कस्मिन्सति हरौक्षितिंशासतिसति ॥ ३० ॥ मैथिलस्यजनकस्यतनयादुहितासीतास्वतनुवास्वतन्वा स्वस्वरूपयामाययादुर्गयाअनादितःकृतदोषाणांसंचयैःसमूहैःकृत्वा । मोक्षमार्गस्यगतिःप्राप्तिःतस्यांयोग्यतातयाउज्झितान्सुराणकान्स्वमार्गतःस्वस्वतंत्रोविष्णुःतत्प्राप्तिनिमित्तज्ञानमार्गतः व्यचालयत् ॥ ३१ ॥ ॥

हरेःआज्ञयामायया दुर्गयामोहिताःआहृतांअपहृतांपुनःजगृहेस्वीकृतवानितिअनेकशःबहुप्रकारेणव्यानंदयन् ॥ ३२ ॥ सरामःनित्यमेवसहितोपिअग्निसाक्षिकं अग्निप्रत्यक्षंवियुक्तवत् वियोगवदभूत् । अज्ञसाक्षिकमितिपाठे अज्ञाःअज्ञानिनःसाक्षिणोयस्यामितिक्रियविशेषणं ॥ ३३ ॥ तेनसीतारामाभ्यांदर्शितवियोगेन आग्निसाक्षिकमित्युक्तंविविच्याह । यज्ञमिति । असौरामःमैथिलींसीतांयज्ञंप्रत्याहूयत् । तत्रयज्ञभूमौहनशपथस्यछलात्व्याजात् नृणांदृष्टिमार्गदृष्टिगोचरत्वमित्यर्थः । अपहायविहायसीतास्थितारामसन्निधौविशेषः । यद्यहंननिशाचरगामिनीतर्हि भूमिर्मांग्रसत्वितिशपथंचकारेतिभावः ॥ ३४ ॥ ब्रह्मवाक्यमृतमेवकारयन्नित्याद्युक्तस्यहेतुमाह । गुरुमित्यादिना । स्वयंरामरूपोविष्णुःगुरुंकृत्वा असृजत्हि यस्मात्तेनकारणेनतस्यब्रह्मणःवचनंसत्सुविषयेकचिदिहामुत्रेत्यर्थः ॥ ३५ ॥ असत्स्वपि दुष्टेष्वपिदैत्येष्वपीतियावत् । पारलौकिकंवचनंमोक्षोभवेदितिपरलोकसंबंधिवचनं असुरेष्वेवनतुसज्जनेष्वित्यर्थः । एवकाररत्नयोगव्यवच्छेदकः । ऐहिकंअवध्यादिभूलोकसंबंधिवचनं क्वचि

आज्ञयैव हि हरेस्तु मायया मोहितास्तु दितिजा व्यानदयन् ॥ राघवो निशिचराहृतां पुनः जानकीं जगृह इत्यनेकशः ॥३२॥ ब्रह्मवाक्यमृतमेव कारयन्पातयंस्तमसि चांध आसुरान् ॥ नित्यमेव सहितोपि सीतया सोग्निसाक्षिकमभूद्वियुक्तवत् ॥ ३३ ॥ तेन चांधतम ईयुरासुरा यज्ञमाहूयदसौ च मैथिलीं ॥ तत्र भूमिशपथच्छलान्नृणां दृष्टिमार्गमपहाय सा स्थिता ॥ ३४ ॥ गुरुं हि जगतो विष्णुर्ब्रह्माणमसृजत्स्वयं ॥ तेन तद्वचनं सत्सु नानृतं कुरुते क्वचित् ॥ ३५ ॥ नासत्स्वप्यनृतं कुर्याद्वचनं पारलौकिकं ॥ ऐहिकं त्वसुरेष्वेव क्वचिद्धंति जनार्दनः ॥ ३६ ॥ निजाधिक्यस्य विज्ञप्त्यै क्वचिद्वायुस्तदाज्ञया ॥ हंति ब्रह्मत्वमात्मीयमद्धा ज्ञापयितुं प्रभुः ॥ ३७ ॥ नान्यः कश्चित्तद्वराणां शापानामप्यतिक्रमी ॥ अयोग्येषु ति रुद्रादिवाक्यं तौ कुरुतो मृषा ॥ ३८ ॥ ॥

द्धंति नाशयतिकश्चिन्मानयतीत्यर्थः ॥ ३६ ॥ क्वचिदपिकुतोहंतीत्यतआह । निजेति । निजस्यस्वकीयस्यआधिक्यस्यब्रह्मणःसकाशात् उत्तमत्वस्यविज्ञप्त्यैज्ञापनार्थंसतामितिशेषः हंतीतिसंबंधः । प्रभुःवायुःतस्यहरेराज्ञयानिजस्यस्वकीयस्यआधिक्यस्यशेषादिभ्यःउत्तमत्वस्य विज्ञप्त्यै 'निजमात्मीयनित्ययोरि'त्यभिधानं । आत्मीयंस्वकीयंब्रह्मत्वंभविष्यब्रह्मत्वंअद्धा निश्चयेनज्ञापयितुंच असुरेषुऐहिकंहंतीतिसंबंधः निजाधिक्यस्येत्युभयत्रसंबध्यते ॥ ३७ ॥ अन्यःविष्णुवायुभ्यांअन्यःकश्चित्पुरुषःतस्यब्रह्मणःवराणांशापानांअतिक्रमीअतिक्रमणशीलः अपिकश्चिदपिननास्तिअयोग्येषुतुयोग्यताधिक्यंरुद्रादिवाक्यंतौविष्णुवायूमृषाकुरुतः योग्येष्वपिएकदेशेनईषदित्यर्थः । तुअधिकंयोग्यतापेक्षयाईषदधिकरुद्रादिवाक्यमित्यर्थः । कदाचनसत्यंकुरुतः ॥ ३८ ॥ ॥ ॥ ॥ ॥

विष्णोर्वचनंकस्यचित्पुरुषस्यक्वापिकस्मिंश्चिद्देशेकालेपि एतदेवस्ववररक्षणान्यवरविनाशनरूपःअर्थःप्रयोजनंयस्यसतथा विष्णोरवतारःसर्वदासर्वकालेषुभवति ॥ ३९ ॥ प्रकृतमनुसरति । प्रविश्येति । सादेवीसीताअनुसारतःअनुसारेणभूमौप्रविश्यरामेणसंयुक्तासतीरेमे । काकेनैव प्रभानित्याविवियोगिनीसूर्यकांतिःभास्करेणसूर्येण यथातथेतिसंबंधः ॥ ४० ॥ एवंअनेनप्रकारेणरमयासीतयालालितपादपल्लवोरामः । पुनश्चाश्वमेधादिभिर्यज्ञैःनृपतीन्नाविशिक्षयन्नृपतिभिर्यज्ञाःकर्तव्याइत्युपदेशंकुर्वन्नित्यर्थः । स्वंस्वात्मानमयजत्आप्तकामःप्राप्तसकलाभीष्टसिद्धिः । अभिरामःमनोहरोरामःरेमेसीतयेतिशेषः ॥ ४१ ॥ दृश्यादृष्टिविषया अदृश्यादृष्ट्यगोचरा ऊर्ध्वमनंतरंसमाः

एकदेशेन सत्यं तु योग्येष्वपि कदा च न ॥ न विष्णोर्वचनं क्वापि मृषा भवति कस्यचित् ॥ एतदर्थोवतारस्तु विष्णोर्भवति सर्वदा ॥ ३९ ॥ प्रविश्य भूमौ सा देवी लोकदृष्ट्यनुसारतः ॥ रेमे रामेणावियुक्ता भास्करेण प्रभा यथा ॥४०॥ एवं रमालालितपादपल्लवः पुनश्च यज्ञैरयजत्स्वमेव ॥ वराश्वमेधादिभिराप्तकामो रेमेभिरामो नृपतीन्विशिक्षयन् ॥ ४१ ॥ रामस्य दृश्या त्वन्येषामदृश्या जनकात्मजा ॥ भूमिप्रवेशादूर्ध्वं सा रेमे सप्तशतं समाः ॥ ४२ ॥ एवं विधान्यगणितानि जनार्दनस्य रामावतारचरितानि तदन्यपुंभिः ॥ शक्यानि नैव मनसापि हितानि कर्तुं ब्रह्मेशशेषपुरुहूतमुखैः सुरैश्च ॥ ४३ ॥ तस्यैवमब्जभवलोकसमामिमां क्ष्मां कृत्वानुशासत उदीक्ष्य गुणान् धरायाः ॥ वैशेष्यमात्मसदनस्य हि कांक्षमाणा वृंदारकाः कमलजं प्रति तच्छशंसुः ॥ ४४ ॥

वर्षाणि ॥ ४२ ॥ जनार्दनस्यहरेःएवंविधान्येतानिईदृशानिपूर्वोक्तप्रकाराणीत्यर्थः । अगणितानियानिरामावतारस्यचरितानिकर्माणिसुरैश्चसुरैरपिमनसापिकर्तुंशक्यानि नैव हियस्मात्तस्मात्तेभ्यःब्रह्मादिभ्यःअन्यपुंभिःऋष्यादिभिःतानिरामावतारचरितानिमनसापिस्मर्तुंकर्तुंशक्यानिनैवेतिकिंवक्तव्यमित्यर्थः ॥ ४३ ॥ वृंदारकाःदेवाःतस्य रामस्यअब्जभवलोकसमांसत्यलोकसमानांइमांक्ष्मांभूमिंकृत्वा अनुशासतःसतःधरायाःगुणानुदीक्ष्य । आत्मसदनस्यस्वलोकस्यअंतरिक्षादिषण्णांलोकानामित्यर्थः । वैशेष्यंउत्तमत्वंकांक्षमाणाःइच्छंतःकमलजंब्रह्माणंप्रतिशशंसुःकथयामासुः ॥ ४४ ॥ ॥ ॥

विभुर्ब्रह्माद्यैः देवैः सह आमंत्र्य विचार्य स्वीयाय सद्मने स्वकीयाय वैकुंठायेत्यर्थः । भगवतः प्रयाणं गमनं इयेष ऐच्छत् । स्वलोकं प्रति गमनाय गंतुं रघूत्तमसंप्रार्थनविषये रुद्रं दिदेश । स च रुद्रः ययाचे ॥ ४५ ॥ एतदेव स्पष्टयति । एकांतमिति । समस्तान् कालयति नाशयतीति कालः । कालनामा कल च्छेदन इति धातुः । अनेन कालः प्रार्थयामासेति ग्रंथांतरोक्तिविरोधः परिहृतः । रुद्रः रघुपेण एकांतं एत्य । जगतः विधातुः प्रसवितुः ब्रह्मणः वचनं जगाद किमिति । विधात्रा ब्रह्मणा सहिताः विबुधाः देवाः आत्मसदनस्य वैशेष्यं विशेषत्वं भूमेरिति शेषः । कांक्षमाणाः संतः त्वामर्थयंति प्रार्थयंति ॥ ४६ ॥ हे ईश कमलप्रभवः ब्रह्मा तव पुत्रः । तथाहं पौत्रस्तु पौत्र श्चेत्यर्थः । यदपि यद्यपि पौत्रकवचः

आमंत्र्य तैः सह विभुर्भगवत्प्रयाणं स्वीयाय सद्मन इयेष दिदेश चाथ ॥ रुद्रं स्वलोकगमनाय रघूत्तमस्य सं
प्रार्थने स च समेत्य विभुं ययाचे ॥ ४५ ॥ एकांतमेत्य रघुपेण समस्तकालो रुद्रो जगाद वचनं जगतो विधातुः ॥
वैशेष्यमात्मसदनस्य हि कांक्षमाणास्त्वामर्थयंति विबुधाः सहिता विधात्रा ॥ ४६ ॥ पुत्रस्तवेश कमलप्रभवस्त
थाहं पौत्रस्तु पौत्रकवचो यदपि ह्ययोग्यं ॥ संभावयंति गुणिनस्तदहं ययाचे गंतुं स्वसद्म नतिपूर्वमितो भवंतं
॥ ४७ ॥ यत्कार्यसाधनकृते विबुधार्थितस्त्वं प्रादुर्बभूविथ निजं तदशेषमेव ॥ तत्साधितं हि भवता तदितः स्वधाम
क्षिप्रं प्रयाहि हर्षं विबुधेषु कुर्वन् ॥ ४८ ॥ ओमित्युवाच भगवांस्तदशेषमेव श्रुत्वा रहस्यथ तनुस्त्वपरा हरस्य ॥
दुर्वासनामयुगिहागमदाशु रामं मां भोजय क्षुधितमित्यसकृद्ब्रुवाणा ॥ ४९ ॥

अयोग्यं तथापि गुणिनः सद्गुणवंतः संभावयंति । हि यस्मात् तस्मात् अहं इतः भूमेः सकाशात् स्वसद्म वैकुंठं प्रति गंतुं नतिपूर्वं प्रणामपूर्वं यथा स्यात्तथा भवंतं त्वां ययाचे प्रार्थयामि ॥ ४७ ॥ यत् त्वं तत्कार्यं च तथा यत्कार्यस्य साधनकृते संपादनाय तदशेषं तत् सर्वं भवता साधितमेव संपादितमेव हि यस्मात्तस्मात् विबुधेषु हर्षं कुर्वन् इतः अस्मात् लोकात् क्षिप्रं स्वधाम प्रति याहीति ययाचे । इति पूर्वेण संबंधः ॥ ४८ ॥ रहसि तदशेषं श्रुत्वा । ओमिति तथास्त्विति उवाच । अथ संवादानंतरं । क्षुधितं क्षुधायुक्तं मां भोजय इति असकृत् पुनः पुनः ब्रुवाणा ब्रुवंती दुर्वासनाम्नी मुनिरिति तया युक्तात् दुर्वासनाम्न इत्यर्थः । हरस्य अपरा तनुः अन्यद्रूपमित्यर्थः । इह एकांतस्थले आशु रामं प्रति अगमत् प्राप ॥ ४९ ॥ ॥

रामःसिद्धंनदेयंउतप्रार्थनानंतरंसाध्यमपिकरिष्यमाणमपिनदेयंइत्येवंरूपांअस्यदूर्वाससःवाचंश्रुत्वा अस्यवाक्समयेवागुच्चारणकालेजातंउरुउरुकृष्टंचतुर्गुणंभक्ष्यभोज्य लेह्यपेयगुणोपेतंअमृतेनउपमानंतुल्यमन्नंअदात् मुनिःदूर्वासाःतदन्नंआप्य ...तुष्टःसन्बुभुजे ॥ ५० ॥ मेनयाअर्थितवरंप्रार्थिताभीष्टंप्रतिदातुंकश्चित्पुरुषःईशःसमर्थो न एवंप्रतिज्ञायस्येतिविग्रहः । सऋषिःदूर्वासाःसकलान्जनान्प्रतिकोपयानःकश्चिदपिमदभीष्टंनकरोतीतिकोपंकुर्वन्सन्अतृप्तो भूत्वाययौ । सहिसएवरामःतस्यदूर्वास सःप्रतिज्ञांमोघांव्यर्थांचकार । अन्यःरामादन्यःकश्चिन्नतुनचकार ॥ ५१ ॥ उक्तार्थस्यापवादमाह । कुंतीतिति । तस्यमुनेःदूर्वाससःरामः कृष्णतनुवाकृष्णस्वरूपेणापि

**सिद्धं न देयमुत साध्यमपीति वाचं श्रुत्वास्य वाक्समयजातमुरु स्वहस्तात् ॥ अन्नं चतुर्गुणमदादमृतोपमानं राम स्तदाप्य बुभुजेथ मुनिः सुतुष्टः ॥ ५० ॥ तृप्तो ययौ च सकलान्प्रति कोपयानः कश्चिन्न मेर्थितवरं प्रति दातुमी शः ॥ एवं प्रतिज्ञकऋषिः स हि तत्प्रतिज्ञां मोघां चकार भगवान्न तु कश्चिदन्यः ॥ ५१ ॥ कुंती तु तस्य हि मुने र्वरतोजयत्तं रामः स कृष्णतनुवा स्वबलाज्जिगाय ॥ तस्मिन् शिवे प्रतिगते मुनिरूपके च याहीति लक्ष्मणमुवाच रमापतिः सः ॥ ५२ ॥ एकांते तु यदा रामश्चक्रे रुद्रेण संविदं ॥ द्वारपालं स कृतवांस्तदा लक्ष्मणमेव सः ॥५३॥ यद्यत्र प्रविशेत्कश्चिद्धन्मि त्वेति वचो ब्रुवन् ॥ तदंतरागतमृषिं दृष्ट्वामन्यत लक्ष्मणः ॥ ५४ ॥ दुर्वाससः प्रति ज्ञा तु रामं प्राप्यैव भज्यतां ॥ अन्यथा त्वयशो रामे करोत्येष मुनिर्ध्रुवं ॥ ५५ ॥ ॥**

स्वबलात्स्वरूपसामर्थ्येन दूर्वाससःवासदानतत्कृतगृहदाहादिसहनउच्छिष्टपायसादनरथवाहनादितदभीष्टकरणेनाजिगायेतिभावः । इदंचोक्तंदानधर्मे । "अवसन्मद्गृहे तातब्राह्मणोहरिपिंगल"इत्यादिना । तस्मिन्ब्रह्मप्रेषितेशिवेगतेमुनिरूपकेदुर्वासःस्वरूपकेशिवेच ॥ ५२ ॥ याहीत्युक्तौकारणमाह । एकांतइति । यदासंविदंविचारंचक्रे तदा । यदिअत्रविचारस्थलंकश्चित्पुरुषःप्रविशेत्तर्हि त्वांहन्मीतिवचःब्रुवन्वदन् सरामःलक्ष्मणंद्वारपालंकृतवान् ॥ ५३ ॥ तदंतरारामशिवविचारमध्येअमन्यतबुबोध मनसिविचारयामासेत्यर्थः ॥ ५४ ॥ किमिति । भज्यतांनश्यतुकर्मकर्तरिलोट् । अन्यथाप्रतिज्ञाभंगाभावेअयशःअपकीर्तिंकरोतिकरिष्यति ॥ ५५ ॥

मांघ्नन्नपिहंतीतिघ्नन्नपिहन्मीति । वदन्नपिराघवःइतिमत्वाज्ञात्वा ॥ ५६ ॥ हन्मीतिप्रतिज्ञायांहेतुमाह । स्वलोकेति । स्वलोकंप्रतिशेषलोकंप्रतिगमनायआकांक्षावांछाविद्यतेयस्यसतथा । लक्ष्मणस्येतिशेषः । स्वयमेवतुस्वयमेवरामश्चेत्यर्थः । स्वलोकगमनाकांक्षीवैकुंठलोकगमनापेक्षी सराघवःइयंप्रतिज्ञाहन्मीतिप्रतिज्ञाहेतुःस्यादित्यवधार्यहन्मीतिअकरोत् प्रतिज्ञामितिशेषः ॥५७॥ ननु रामःबंधुस्नेहयंत्रितःसन्प्रतिज्ञाभंगंकृतवानित्यतआह । अत्यंतेति । अत्यंतंबंधोःअतिस्नेहवद्बंधोःनिधनंत्यागएवेति ॥५८॥ इत्युक्तःसलक्ष्मणःजगतःभवभयाख्यध्वांतंअंधकारंछिनत्तिनाशयतिजगद्भवभयध्वांतच्छित् तंराघवंध्यायन्ययौ भूलोकादितिशेषः । तस्यरामस्यपदंस्थानंवैकुंठंआप दशशतैःसहस्रसंख्याकैःमुखांभोरुहैःमुखकमलैर्युक्तः मुसलभृत्परिघधारीलांगलीदिव्याकृतिःदेवस्वरूपःशेषाख्यश्चासौमहाफणीमहासर्पआसीत् जलनिधौ

राघवो घ्नन्नपि तु मां करोत्येव दयां मयि ॥ इति मत्वा ददौ मार्गं स तु दुर्वाससे तदा ॥५६॥ स्वलोकगमनाकांक्षी स्वयमेव तु राघवः ॥ इयं प्रतिज्ञाहेतुः स्यादिति हन्मीति सोकरोत् ॥ ५७ ॥ अत्यंतबंधुनिधनं त्याग एवेति चिंतयन् ॥ याहि स्वलोकमचिरादित्युवाच स लक्ष्मणं ॥ ५८ ॥ इत्युक्तः स ययौ जगद्भवभयध्वांतच्छिदं राघवं ध्यायन्नाप च तत्पदं दशशतैर्युक्तो मुखांभोरुहैः ॥ आसीच्छेषमहाफणी मुसलभृद्दिव्याकृतिर्लांगली पर्यंकत्वमवाप यो जलनिधौ विष्णोः शयानस्य च ॥ ५९ ॥ अथ राघवः स्वभवनोपगतो विदधे मतिं सह जनैरखिलैः ॥ समघोषयच्च य इहेच्छति तत्पदमक्षयं सपदि मैत्विति सः ॥६०॥ श्रुत्वा तु तद्य इह मोक्षपदेच्छवस्ते सर्वे समाययुरथातृणमापिपीलं ॥ रामाज्ञया गमनशक्तिरभूत्तृणादेर्ये तत्र दीर्घभविनो नहि ते तदैच्छन् ॥ ६१ ॥

क्षीराब्धौशयानस्यविष्णोःपर्यंकत्वंमंचत्वंयःशेषःअवापतस्यशेषस्यपदंस्वरूपंआपच लक्ष्मणःशेषोभूत्वास्वमूलरूपशेषेणऐक्यंप्रापेतिभावः । आपचतत्पदमित्युभयत्रसंबध्यते ॥ ५९ ॥ अथलक्ष्मणगमनानंतरं इहकर्मभुविअक्षयंअविनाशितत्पदंप्रसिद्धस्थानं वैकुंठमितियावत् ॥ योयोधिकारीइच्छतिसचसचसपदिशीघ्रंमामांप्रतिएतुआयातु ॥ ६० ॥ तद्विघोषणंश्रुत्वा इहअस्मिन्कालेसुताधनसंपत्तिपूर्तिविशेषबलेनयेमोक्षेच्छवःतेसर्वेआतृणंतृणादिजडजीवान्मर्यादीकृत्य आपिपीलंपिपीलिकादिचेतनंमर्यादीकृत्य समाययुः अयोध्यांप्रतीतिशेषः । ननु तृणादिस्थावराणांगमनशक्तिःकथमित्यतआह । रामाज्ञयेति । तत्रमोक्षाधिकारिषुमध्येदीर्घभविनःबहुकालोत्पत्तिमंतोयेतेतदारामगमनकालेहियस्मात्नैच्छन् तस्मात्स्वयोग्यतापूर्तिकालेमोक्षंगमिष्यंतीत्यर्थः । दीर्घभविनइत्यत्रनित्यसंसारिणोविवक्षिताः ते नमोक्षपदमैच्छन् ॥६१॥

तैर्दीर्घंभविभिःसाकंकुशंकुशाख्यपुत्रंयुवराजंलवंचलवाख्यपुत्रंसंस्थापयामासेत्यर्थः ॥ ६२ ॥ अक्ष्णोःगोचरःप्रत्यक्षः ॥ ६३ ॥ त्वयाचिरंशनैःमदवयवध्यानेनकृत्वाचिर मित्यर्थः । यत्तपःकृतंतदेवमेमहत्प्रियंअतितुष्टिदं ॥ ६४ दशास्यकुंभकर्णकौहंतुंसुशक्तिमानपिअतिसमर्थोपि त्वंमेप्रियायाप्रियार्थंयथानजघंथ तथैवमत्प्रियायैवकल्पकंक ल्पांतमवधीकृत्यजीव ॥ ६५ ॥ स्वदेहसंयुतोपिवानरस्वरूपयुक्तःसन्नपि पयोब्धिमध्येगंविद्यमानंसुसद्मश्वेतद्वीपंअन्यत्सुसद्मेववाअनंतासनंवा वैकुंठंवा यथेष्टतःस्वेच्छानु सारेणगमिष्यसियास्यसि ॥ ६६ ॥ समीड्यमानंस्तूयमानंसन्निर्दुष्टंयशोयस्यसतथा तादृशःसन्मत्परःमदग्रे ॥ ६७ ॥ तवईप्सितमभीष्टंकिंचन किंचिदपिकाचित्कस्मिंश्चि

संस्थापयामास कुशं स्वराज्ये तैः साकमेव च लवं युवराजमीशः ॥ संस्थाप्य वालितनयं कपिराज्य आशु सूर्यात्म जोपि रघुवीरसमीपमायात् ॥ ६२ ॥ अथाह वायुनंदनं स राघवः समाश्लिषन् ॥ तवाहमक्षिगोचरः सदा भवामि नान्यथा ॥ ६३ ॥ त्वया सदा महत्तपः सुकार्यमुत्तमोत्तमं ॥ तदेव मे महत्प्रियं चिरं तपस्त्वयाकृतम् ॥६४॥ दशा स्यकुंभकर्णकौ यथा सुशक्तिमानपि ॥ जघंथ न प्रियाय मे तथैव जीव कल्पकम् ॥६५॥ पयोब्धिमध्यगं च मे सु सद्म चान्यदेव वा ॥ यथेष्टतो गमिष्यसि स्वदेहसंयुतोपि सन् ॥ ६६ ॥ यथेष्टभोगसंयुतः सुरेशगायकादिभिः ॥ समीड्यमानसद्यशा रमस्व मत्परः सदा ॥ ६७ ॥ तवेप्सितं न किंचन क्वचित्कदाचिदेव वा ॥ मृषा भवेत्प्रियश्च मे पुनः पुनर्भविष्यसि ॥ ६८ ॥ इतीरितो मरुत्सुतो जगाद विश्वनायकं ॥ विधेहि पादपंकजे तवेश भक्तिमुत्तमां ॥ ६९ ॥ सदा प्रवर्धमानया तया रमेहमंजसा ॥ समस्तजीवसंचयात्सदाधिका हि मेस्तु सा ॥ ७० ॥ नमो नमो नमो नमो नतोस्मि ते सदा पदं ॥ समस्तसद्गुणोच्छ्रितं नमामि ते पदं पुनः ॥ ७१ ॥ इतीरिते तथेति तं जगाद पु ष्करेक्षणः ॥ जगाम धाम चात्मनस्तृणादिना सहैव सः ॥ ७२ ॥ ॥ ॥

त्स्थलेकदाचित्कस्मिंश्चित्कालेमृषानभवेत्पुनःपुनःकल्पेमेप्रियश्च ॥ ६८ ॥ विश्वस्यनायकंस्वामिनंहेईशतवपादपंकजेममभक्तिंउत्तमांरुद्रभारत्यादिभक्त्याधिकांकृत्वावि धेहि पोषयअभिवृद्धांकुर्वित्यर्थः ॥ ६९ ॥ सदाप्रतिक्षणंप्रवृद्धमानयाएधमानयातयाभक्त्यारेमे साभक्तिरधिकास्तु ॥ ७० ॥ समस्तसद्गुणैःउच्छ्रितंउत्तमंतेपदंनमोनमइ त्यादरात् ॥ ७१ ॥ हनुमतिइतीरितेसतिपुष्करेक्षणःअब्जनेत्रोरामः तथेतितथास्त्वितिजगाद धामवैकुंठं ॥ ७२ ॥ ॥ ॥

तदास्वर्गारोहणकालेतृणानिआदिशब्देनवल्लिवृक्षादयःउत्तमाःदिव्यदेहाःआसुः यतःकारणात्अतःनरश्चवानराश्चउत्तमाआसुरितिपुनःकिंवक्तव्यमित्यर्थः ॥ ७३ ॥ नन्वेते षांब्रह्मज्ञानाभावात्कथंमोक्षोभूदित्यतआह । सदेति । सदारामस्यभावनात्चिंतनात्सुतत्ववेदिनः यतःअभवन्ततःकारणात् तेतृणादयःतदाहरेःपदंययुः ॥ ७४ ॥ तैःखगाद्यैःउत्तरांउदीचींदिशंप्रति । विभुत्वंवर्णयति । अनंतेत्यादिना । अनंतसूर्याणांदीधितिरिवदीधितिःप्रकाशोयस्यतथा । दुरंतैःअंतरहितैःसद्गुणैःअर्णवइवार्णवः ॥ ७५ ॥ सहस्रसूर्याणांमंडलवत्समूहवत् । ज्वलद्दीप्यमानंकिरीटंमुकुटंयेषुतेतथातादृशःमूर्धजाःकेशायस्यसतथा अमितेंदूनांकांतिरिवकांतिर्यस्यसतथा सुनीलैःअतिनीलवर्णैःकुंतलैःकेशैःआवृतंपरिवेष्टितंअमितेंदुकांतिसन्निर्दुष्टंमुखंयस्यसतथा । 'कुंतलोदेशपर्यायःकुंतलःकेशवाचक' इत्यभिधानं ॥ ७६ ॥ सुरक्तपद्मवत्रक्तोत्पलवत्लोचनेयस्यसतथा । शोभमानेविद्युदाभेतडित्प्रभेकुंडलेयस्यसतथा । सुहासःशोभनहासयुक्तःविद्रुमवत्प्रवालवद्रक्तइत्यर्थः । अधरःअधरोष्ठोयस्यसतथा । समस्तवेदःवाग्रसोवचनं

**खगा मृगास्तृणादयः पिपीलिकाश्च गर्दभाः ॥ तदासुरुत्तमा यतो नृवानरास्तु किं पुनः ॥ ७३ ॥ सदैव रामभावनात्सदा सुतत्त्ववेदिनः ॥ यतोभवंस्ततस्तु ते ययुः पदं हरेस्तदा ॥ ७४ ॥ स तैः समावृतो विभुर्ययौ दिशं तदोत्तरां ॥ अनंतसूर्यदीधितिर्दुरंतसद्गुणार्णवः ॥ ७५ ॥ सहस्रसूर्यमंडलज्वलत्किरीटमूर्धजः ॥ सुनीलकुंतलावृतामितेंदुकांतिसन्मुखः ॥ ७६ ॥ सुरक्तपद्मलोचनः सुविद्युदाभकुंडलः ॥ सुहासविद्रुमाधरः समस्तवेदवाग्रसः ॥७७॥ दिवाकरौघकौस्तुभप्रभासकोरुकंधरः ॥ सुपीवरोन्नतोरुसज्जगद्धरांसयुग्मकः ॥ ७८ ॥ सुवृत्तदीर्घपीवरोल्लसद्भुजद्वयांकितः ॥ जगद्विमथ्य संभृतः शरोस्य दक्षिणे करे ॥ ७९ ॥ स्वयं स तेन निर्मितो हतो मधुश्च कैटभः ॥ शरेण येन विष्णुना ददौ च लक्ष्मणानुजे ॥ ८० ॥ ॥ ॥ ॥**

यस्यसतथा ॥ ७७ ॥ दिवाकराणांओघवत्स्थितंकौस्तुभंकौस्तुभाख्यमणिंप्रभासकप्रकाशमानःउरुउत्तमाकंधरागलोयस्यसतथासुपीवरंअतिपीनंउन्नतंउच्चंउरुउत्तमं सन्निर्दुष्टंजगद्धरंजगत्पोषकंअंसयुग्मकंस्कंधयुगलंयस्यसतथा ॥ ७८ ॥ सुवृत्तंसुष्ठुवर्तुलंदीर्घंआजानुलंबंपीवरंपीनंउल्लसत् शोभमानंयद्भुजद्वयंतेनांकितःचिह्नितःअस्य अनेन नञानिर्दिष्टमनित्यमितिवचनात्षष्ठीसाधुः दक्षिणेकरेयःशरःसंभृतःसम्यग्भृतःस्थापितइत्यर्थः ॥ ७९ ॥ सशरःस्वयंतेनरामःस्वरूपेणविष्णुनाजगद्विमथ्यमथित्वा आलोड्येतियावत् । निर्मितःजगतिसारभूतंवायुंशरंचकारेतिभावः । पंचात्मकोमारुतएवबाणइत्यत्रमानं । विष्णुनायेनशरेणकरणेनमधुःमधुनामासुरःहतः कैटभश्चकैटभाख्योसुरोहतः । रामोयंशरमितिवाक्यशेषः । लक्ष्मणस्यानुजेशत्रुघ्नेशत्रुघ्नायददौ ॥ ८० ॥ ॥ ॥

सशत्रुसूदनःशत्रुघ्नः येनशरेणमधोःमधुनाम्नोऽसुरस्य रसइतिआह्वयंयस्यसतथा । लवणनामानमित्यर्थः। सुतंअवधीत्जघान तस्मिन्स्थलेमधुरेतिअभिधानामयस्येतिविग्रहः पुरींअकरोत् ॥ ८१ ॥ समस्तेषुसारेणश्रेष्ठेनवायुनासंभवोनिर्माणंयस्येतिविग्रहः । तंशरंकरेदधारेतियोजना ॥ ८२ ॥ सरामःउदारानिउत्तमानिबाहुभूषणानियस्यसतथा । शुभंअंगदंकटकंयस्यसतथा । कंकणाख्यकरभूषणविशेषाभ्यांसहितःमहांगुलीयैःउत्तममुद्रिकाभिर्भूषितःअलंकृतः सुरक्तेअतिताम्रवर्णेसतीनिर्दुष्टेकरांबुजेकरकमलेयस्यसतथा ॥ ८३ ॥ अनर्घ्याणांअमौल्यानांउत्तमानामित्यर्थः । रत्नानांमालयावनाख्ययावैजयंत्यामालयाच विलासिनाशोभमानेनविस्तृतेनविशालेनउरसावक्षःस्थलेनश्रियंलक्ष्मींबभारदधार । चंचलांश्रियंयतोबभार अतएवप्रभुरित्यर्थः ॥ ८४ ॥ भूतिवत्सःश्रीवत्सःसएवभूषणंतेनसहितःतनूदरेअल्पोदरेवलीनांत्रयंविद्येत

स शत्रुसूदनोवधीन्मधोः सुतं रसाह्वयं ॥ शरेण येन चाकरोत्पुरीं च माधुराभिधां ॥ ८१ ॥ समस्तसारसंभवं शरं दधार तं करे ॥ ८२ ॥ स वामबाहुना धनुर्दधार शार्ङ्गसंज्ञितं ॥ उदारबाहुभूषणः शुभांगदः सकंकणः ॥ महांगुलीय भूषितः सुरक्तसत्करांबुजः ॥ ८३ ॥ अनर्घ्यरत्नमालया वनाख्यया च मालया ॥ विलासिविस्तृतोरसा बभार च श्रियं प्रभुः ॥ ८४ ॥ सभूतिवत्सभूषणस्तनूदरेवलित्रयी ॥ उदारमध्यभूषणो लसत्तडित्प्रभांबरः ॥ ८५ ॥ करींद्रसत्करोरुयुक्सुवृत्तजानुमंडलः ॥ क्रमाल्पवृत्तजंघकः सुरक्तपादपल्लवः ॥ ८६ ॥ लसद्धरिन्मणिद्युती रराज राघवोधिकं ॥ असंख्यसत्सुखार्णवः समस्तशक्तिसत्तनुः ॥ ८७ ॥

यस्यासौतथा । उदारेणउत्तमेनमध्यभूषणेनकटिभूषणेनकांच्याउल्लसत्शोभमानं तडित्प्रभंविद्युद्भासमानंअंबरंपीतवसनंयस्यसतथा ॥ ८५ ॥ करींद्रस्यसत्करःसच्छब्देनकर्कशत्वदोषरहितत्वंसूचितं । गजेंद्रस्यसत्करवत् स्थिताभ्यांऊरूभ्यांयुग्युक्तं सुवृत्तंवर्तुलंजानुमंडलंजानुप्रदेशोयस्यसतथा । क्रमेणअल्पवृत्तेकिंचिद्वर्तुलेजानुप्रदेशात्गुल्फपर्यंतंक्रमाद्वृत्तइत्यर्थः । तादृशेजंघेयस्यसतथा स्वार्थेकप्रत्ययः । सुरक्तेअतिताम्रेपादपल्लवेपादलक्षणकोमलदलेयस्यसतथा ॥८६॥ लसतोदीप्यमानस्यहरिन्मणेःइंद्रनीलमणेःद्युतिरिवद्युतिःकांतिर्यस्यसतथा । एतादृशोराघवःअधिकंक्षराक्षरेभ्यःआधिकंयथास्यात्तथा रराजशुशुभे ॥ ८७ ॥ ॥

श्रीरामस्वरूपमुक्त्वा गमनवैभवमाह । ज्ञानमित्यादिना । स्वपदस्याभिमुखः। भासुरंप्रकाशमानंआस्यंमुखंयस्यसतथा । देवाधिदेवोरामः अर्थिनांज्ञानाद्यभिष्टिमिच्छतांप्राणि नांनेत्राब्जयुग्माज्ज्ञानमादधानःदधत् मुखवरकमलात्सर्ववेदानांअर्थसारान्अर्थविशेषान्आदधानःपुष्टिंकुर्वन् । अधिकारुक्दीप्तिर्यस्याःसातथा । तयातन्वादेहकांत्येत्यर्थः। ब्रह्मांडस्यबाह्यंअवादिनवावरणस्यबहिर्देशंआंतरंअंतर्विद्यमानंप्रदेशं भासयन्दीप्यन्स्वकरवरयुगेनसर्वाभीष्टंसकलाभिष्टिंअभयंचआदधानःधारयन् यस्ययस्यार्थिनःयद्य दिष्टंतत्तत्कुर्वन्नितिभावः । विगतशोकांउत्तराशांउदीचींदिशंप्रतिप्रायात् ॥ ८८ ॥ स्रवच्चतदमृतजलंचतेनप्रचुरं । शुभ्रातपत्रशशिकेसरशीकरांबुमितितृतीयस्कंधे । पूर्णचंद्राणांअयुतस्यआभेवआभादीप्तिर्यस्यसतथा । अयुतपूर्णचंद्राणांकांतिसदृशमित्यर्थः । छत्रंप्रोद्यतःउद्यतःभास्वतःसूर्यस्यप्रभेवप्रकाशइवआभादीप्तिर्यस्याःसातथा । 'भाभूव्यलंकृतौदीतौस्त्रीभाःकिरणविद्युतावि'तिनाममहोदधौ । सकलगुणाःभक्तिज्ञानादयोगुणास्तनुःस्वरूपंयस्याःसातथा । स्वैःस्वकीयैर्भूषणैःभूषिताअलंकृताअखिला

ज्ञानं नेत्राब्जयुग्मान्मुखवरकमलात्सर्ववेदार्थसारांस्तन्वा ब्रह्मांडबाह्यांतरमधिकरुचा भासयन् भासुरास्यः ॥
सर्वाभीष्टाभये च स्वकरवरयुगेनार्थिनामादधानः प्रायाद्देवाधिदेवः स्वपदमभिमुखश्चोत्तराशां विशोकां ॥ ८८ ॥
दध्रे छत्रं हनूमान् स्रवदमृतमयं पूर्णचंद्रायुताभं सीता सैवाखिलाक्ष्णां विषयमुपगता श्रीरितिह्रीरथैका ॥ द्वेधा
भूता दुधाव व्यजनमुभयतः पूर्णचंद्रांशुगौरं प्रोद्यद्भास्वत्प्रभाभा सकलगुणतनुर्भूषिता भूषणैः स्वैः ॥ ८९ ॥ सा
क्षाच्चक्रतनुस्तथैव भरतश्चक्रं दधद्दक्षिणेनायात्सव्यत एव शंखवरभृच्छंखात्मकः शत्रुहा ॥ अग्रे ब्रह्मपुरोगमाः सुर
गणा वेदाश्च सोंकारकाः पश्चात्सर्वजगज्जगाम रघुपं यांतं निजं धाम तं ॥ ९० ॥

क्षणांसर्वेषांनेत्राणांविषयंप्रत्यक्षंउपगताप्राप्तासा पूर्वयाअदृश्यासासीता एकैवएकापिअथयुगपच्छ्रीःश्रीनाम्नी ह्रीःह्रीनाम्नीइतिद्वेधाद्विःप्रकारभूताजातासतीस्वरूपद्वयंप्राप्तेत्यर्थः । पूर्णचंद्राणांअंशुवत्किरणवत् । गौरं श्वेतंव्यजनंउभयतःउभयपार्श्वेनदुधाव धुञ्कंपनइतिधातुः । वीजयामासेत्यर्थः ॥ ८९ ॥ निजंधामयांतंरघुपमनुतथैवयथादुर्गाचक्राभिमानीतथैवेत्यर्थः । प्रलयेपि दुर्गायाश्चक्राभिमानित्वंवर्तते । नतुकामस्येतिदृष्टांतः स्थितिकालएवसाक्षाच्चक्रतनुःचक्राभिमानिभरतःचक्रंसुदर्शनंदधत्दधानःसन् दक्षिणेनरामदक्षिणपार्श्वेनआयात् । 'वराद्रथांगत्वमवापकाम' इत्यत्रमानं । शंखात्मकःशंखस्वरूपःअभिमानीत्यर्थः। श्रीःपूर्वंशंखाभिमानिनीकामपुत्रोनिरुद्धश्चशंखाभिमानित्वंप्राप । 'शंखतनुःपुमात्मे'त्यत्र मानं । अत्राप्यभिमानित्वंपूर्ववदवगंतव्यं । शत्रुहाशत्रुघ्नःशंखेषुवरंश्रेष्ठंपांचजन्यंबिभर्तीतितथासन् सव्यतएववामपार्श्वेनआयात् । अग्रेरामपुरतःपुरोगच्छतीतिपुरोगमः ब्रह्मापुरोगमोयेषामितिविग्रहः । सुरगणाःसोंकारकाःप्रणवेनसहितावेदाश्चवेदाभिमानिनोदेवाःययुरितिशेषः । पश्चात्रामस्यपृष्ठतःसर्वंजगत्तृणादिजगत् ॥ ९० ॥

तस्यविष्णोःरामजन्मनःरामावतारस्यचरितानिकर्माणि उच्चैः उच्चैःकीर्तयंतःस्तुवंतइत्यर्थः । तेवानराःतस्यरामस्यदक्षिणेनमनुजास्तुसव्यतःद्रुतंययुः ॥ ९१ ॥ अब्जात्संभूतिःसंभवोयस्यब्रह्मणःसतथा । सएवपूर्वोयेषांतेतथा । तैःविबुधानांदेवानांमुनीनांगणैःवेदानांउदारार्थाःयासुतास्तथा ताश्चताःवाचश्चताभिःसर्वदास्तूयमानःप्रणिहितानिअभिवृष्टानिसुमनांसिपुष्पाणियस्मिन्सतथा । 'स्त्रियःसुमनसःपुष्पंप्रसूनंकुसुमंसुममि' त्यमरः । भक्त्यासुअतितरांअनिमिषाणिनिमेषरहितानिनयनानियेषांतेतथा । तैःसर्वैर्भूतैःप्राणिभिःकौतुकात्हर्षात्वीक्ष्यमाणोरामः शेषादिनिजैःपार्षदैःसंसेवितंस्वंस्वकीयंपदंप्रायात् ॥ ९२ ॥ शेषःकःदक्षप्रजापतिःताभ्यांसहितैःब्रह्मादिभिःप्रोच्यमानस्तूयमानइत्यर्थः सुगुणानांउरुविस्तरःअतिविस्तारोयस्यसतथा । विभुःअंबरंआकाशंआरुरोह । तेखगाद्याःतदाआकाशारोहणकाले दिव्यवपुषःउत्तमशरीरिणःअभवन् ॥ ९३ ॥ इदंवक्ष्यमाणं ॥ ९४ ॥ इतःवर्तमानकालात् अयुताब्दादग्रतःपूर्वंमातृणामपिकौशल्यादीनांतल्लोकःदशरथलोकोदत्तइतिशेषः । मातृणांचापितल्लोकइत्युक्तस्यापवादमाह । अनर्हायाइति । एषाकैकयीभरतंसूत्वानिरयान्नगच्छेतेत्यभिप्रायेणअनर्हायाःसद्गतिंप्राप्तावयोग्यायाःकैकेय्याअपिसद्गतिःत्वयाआज्ञप्ताआज्ञापितायद्यपि ॥ ९५ ॥ तथापिसाकैकेयीयस्याःआसुर्याःआवेशात्त्वयिअशोभनंसाम्राज्याभिषेकस्यविघ्नरूपंअमंगलंचकार । सानिकृतिर्नामआसुरी शाश्वतेनित्येतमसिमयाक्षिप्तानिपातिता ॥ ९६ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तस्य सूर्यसुतपूर्ववानरा दक्षिणेन मनुजास्तु सव्यतः ॥ रामजन्मचरितानि तस्य ते कीर्तयंत उच्चयैर्द्रुतं ययुः ॥९१॥ गंधर्वैर्गीयमानो विबुधमुनिगणैरब्जसंभूतिपूर्वैर्वेदोदारार्थवाग्भिः प्राणिहितसुमनाः सर्वदा स्तूयमानः॥ सर्वैर्भूतैश्च भक्त्या स्वनिमिषनयनैः कौतुकाद्वीक्ष्यमाणः प्रायाच्छेषगरुत्मदादिकनिजैः संसेवितं स्वं पदं ॥ ९२ ॥ ब्रह्मरुद्रगरुडैः सशेषकैः प्रोच्यमानसुगुणोरुविस्तरः ॥ आरुरोह विभुरंबरं शनैस्ते च दिव्यवपुषोभवंस्तदा ॥ ९३ ॥ अथ ब्रह्मा हरिं स्तुत्वा जगादेदं वचो विभुं ॥ त्वदाज्ञया मया दत्तं स्थानं दशरथस्य हि ॥ ९४ ॥ मातृणांचापि तल्लोकस्त्वयुताब्दादितोग्रतः ॥ अनर्हायास्त्वयाज्ञप्ता कैकेय्या अपि सद्गतिः ॥ सूत्वा तु भरतं नैषा गच्छेत निरयानिति ॥९५॥ तथापि सा यदावेशाच्चकार त्वय्यशोभनं ॥ निकृतिर्नाम सा क्षिप्ता मया तमसि शाश्वते ॥ ९६ ॥ ॥

कैकेयीचलान्लोकान्प्राप्ता अचलान्कौसल्यासुमित्रावदचलान्नप्राप्तेत्यर्थः । किंतुक्वचियोग्यतापूर्तिकालेप्राप्स्यतीतिशेषः । इदमपिकुतइत्यत आह । पश्चादिति । पश्चा दासुर्यविशेनिर्गमनानंतरं । यस्मात्त्वयिभक्तिमतीतस्मात्तदचललोकगमनंयुक्तमेव यद्वा कैकयीचलान्नैवाप अपितुअचलानेवाप शेषंपूर्ववत् ॥ ९७ ॥ मंथरानाम्नीकैकेयी दासी ॥ ९८ ॥ येसुराणकाःतेयाताःप्राप्ताः राक्षसाःप्रायशःबाहुल्येनतमोयाताइतिसंबंधः । शेषाःउर्वरिताःराक्षसाःत्वयिकृष्णत्वंकृष्णस्वरूपत्वंआगतेप्राप्तेसतियास्यंति ॥ ९९ ॥ तच्छेषाःतेष्वप्युर्वरिताःराक्षसाःवैवस्वतमन्वंतरे महायुगापेक्षयाअष्टाविंशेकलौगतेप्राप्तेसतीतिशेषः । त्रिशतोत्तरेत्रिशताधिकेचतुःसहस्राब्देचतुःसहस्राब्दपरिमि

कैकयी तु चलान् लोकान् प्राप्तानैवाचलान् क्वचित् ॥ पश्चाद्भक्तिमती यस्मात्त्वयि सा युक्तमेव तत् ॥ ९७॥ मंथरा तु तमस्यंधे पातिता दुष्टचारिणी ॥ सीतार्थं ये त्वनिंदंस्त्वां ते च याता महत्तमः ॥९८॥ प्रायशो राक्षसाश्चैव त्वयि कृष्णत्वमागते॥ शेषा यास्यंति तच्छेषा अष्टाविंशे कलौ युगे॥९९॥ गते चतुःसहस्राब्दे तमोगास्त्रिशतोत्तरे॥१००॥ अथ ये त्वत्पदांभोजमकरंदैकलिप्सवः ॥ त्वया सहागतास्तेषां विधेहि स्थानमुत्तमं ॥ १०१ ॥ अहं भवः सुरेशाद्याः किंकराः स्म तवेश्वर ॥ यच्च कार्यमिहास्माभिस्तदप्याज्ञापयाशु नः ॥ १०२ ॥ इत्युदीरितमाकर्ण्य शतानंदेन राघवः ॥ जगाद भावगंभीरं सुस्मिताधरपल्लवः ॥ १०३ ॥ जगद्गुरुत्वमादिष्टं मया ते कमलोद्भव ॥ गुर्वादेशानुसारेण मया दिष्टा च सद्गतिः ॥ १०४ ॥ अतस्त्वया प्रदेया हि लोक एषां मदाज्ञया ॥ हृदि स्थितं च जानासि त्वमेवैकः सदा मम ॥ १०५ ॥ ॥ ॥ ॥ ॥ ॥

तकालेगतेअतिक्रांतेसति तमोगाःभविष्यंतीतिशेषः ॥ १०० ॥ अथत्वत्पदांभोजस्यमकरंदरसंएकतयामुख्यत्वेनलिप्संतितेलिप्सवःइच्छंतः त्वयासहआगतायेतेष स्थानंविधेहीदेहीत्यर्थः ॥ १०१ ॥ अहंब्रह्माभवोरुद्रःइहअस्मिन्समये ॥१०२॥ शतानंदोब्रह्मासुस्मितंसमीचीनमंदहासयुक्तंअधरपल्लवंअधरोष्टपल्लवंयस्यसतथा । राघवःआकर्ण्यश्रुत्वा भावैःअभिप्रायैःगंभीरंगहनंवाक्यमितिशेषः जगाद ॥ १०३ ॥ किमिति तेतवजगद्गुरुत्वंआदिष्टंआज्ञापितं गुरोरादेशानुसारेणअज्ञानुसारेणगुरुप्रसादानुसारेणेत्यर्थः ॥ १०४ ॥ आदिष्टाआज्ञापितायतः अतःममहृदिस्थितंमनोभिप्रायमित्यर्थः ॥ १०५ ॥ ॥ ॥ ॥

भावंमनोभिप्रायंविज्ञानीवित्कंजसंभवोविभुः संततत्त्वान्नित्यत्वान्नाम्नासांतानिकान्वैष्णवान्अनुत्तमान्उत्तमान्।'उत्तमेनुत्तमंचस्यादाहतेस्यादनाहतमि'तिविश्वः लोकानददौ संततत्वादितिहेतोःसंतानकर्मणाप्राप्याःसांतानिकाः लोकइतिमंतव्यमितिभावः ॥ १०६ ॥ तेरामेणसहगताजीवाःसंसारमुक्ताः उत्पत्तिरहिताइत्यर्थः। अत एवजरादिहीनाःनित्यसुखेनआविर्भूतस्वरूपानंदेनअधिकाःश्रेष्ठाःसंतः तत्रलोकेप्न्यवसन् ॥ १०७ ॥ येदेवाइहभूमौनृवानरशरीरिणःसंतः उद्भूताःजाताः तेसर्वेतौचतौमैंदविविदौचेतितच्छब्दस्तयोःप्रसिद्धिसूचकःतौक्रतेविनाअन्येअंशितांमूलरूपंआपुः ॥ १०८ ॥ तौकुतोनगताविलयतआह। असुरावेशतइत्यादिना तयोःप्रसिद्धिरप्युक्ताभवति। तयोर्मरणाभावेपिकारणमाह। पीतेति। पुरासमुद्रमथनकालेपीतंअमृतंयाभ्यांतौतथातौमैंदविविदौयस्मात्तस्मात्तस्मिन्कालेवा। तौनममृतुःनमृतौ॥१०९॥

इतीरितो हरेर्भावं विज्ञानी कंजसंभवः ॥ पिपीलिकातृणांतानां ददौ लोकाननुत्तमान् ॥ १०६ ॥ वैष्णवान् संततत्वाच्च नाम्ना सांतानिकान्विभुः ॥ ते जराव्याधिहीनाश्च सर्वदुःखविवर्जिताः ॥ संसारमुक्ता न्यवसंस्तत्र नित्यसुखाधिकाः ॥ १०७ ॥ ये तु देवा इहोद्भूता नृवानरशरीरिणः ॥ ते सर्वे स्वांशितामापुस्तन्मैंदविविदावृते ॥ १०८ ॥ असुरावेशतस्तौ तु नराममनुजग्मतुः ॥ पीतामृतौ पुरा यस्मान्ममृतुर्न च तौ तदा ॥ १०९ ॥ तयोश्च तपसा तुष्टश्चक्रे तावजरामरौ ॥ पुरा स्वयंभूस्तेनोभौ दर्पादमृतमंथने ॥ ११० ॥ प्रसह्यापिबतां देवैर्देवांशत्वादुपेक्षितौ ॥ पीतामृतेषु देवेषु युध्यमानेषु दानवैः ॥ तैर्दत्तमात्महस्ते तु रक्षार्थं पीतमाशु तत् ॥ १११ ॥ तस्माद्दोषादापतुस्तावासुरं भावमूर्जितं ॥ ११२ ॥ अंगदः कालतस्त्यक्त्वा देहमाप निजां तनुं ॥ रामाज्ञयैव कुर्वाणो राज्यं कुशसमन्वितः ॥ ११३ ॥ ॥ ॥ ॥ ॥

मरणाभावेकारणांतरमाह। तयोरिति। तेनवरप्राप्तिनिमित्तेनउभौमैंदविविदौदर्पात्मदात् अमृतार्थंसमुद्रमथनकाले॥११०॥ प्रसह्यबलात्कारेणअपिबतांअमृतमितिशेषः। देवैःइंद्राद्यैःदेवांशत्वादश्विनोरवतारत्वादुपेक्षितौनानिरोधितावित्यर्थः। तयोरमृतकलशप्राप्तिःकथमित्यतआह। पीतेति। पीतंअमृतंयैस्तेतथा। तेषुदेवेषुदानवैःयुध्यमानेषु सत्सुतैर्देवैःरक्षार्थैरक्षणार्थं आत्महस्तेस्वहस्तेमैंदविविदयोर्हस्तइत्यर्थः। दत्तंतदमृतंआशुदोषमविचार्यपीतंताभ्यामितिशेषः ॥१११॥ तस्माद्दोषात्प्रसह्यामृतपानजदोषात्। तौमैंदविविदौऊर्जितंक्रूरं ॥११२॥ रामाज्ञयैवकुशेनसमन्वितोयुक्तः राज्यंकपिराज्यंकुर्वाणःपालयन्अंगदःकालतःकालांतरेदेहंत्यक्त्वा निजांतनुंचंद्रस्वरूपंआप॥११३॥

पुरस्कृताराघवाज्ञायेनेतिविग्रहः। सेनापतिर्भूत्वाआवीत्आपात्। राघवाज्ञयासेनापतिर्भूत्वेतिभावः। राघवाज्ञयापुरस्कृतकुबेरेणेतिशेषइतिवा ॥ ११४ ॥ जांबवत्याउत्पत्त्यर्थंरामाज्ञयान्यवसत् किंकुर्वंनूतदर्थंजांबवत्युत्पत्त्यर्थंसुतपःतीव्रतपः चरन्कुर्वंन्न्यवसदित्यर्थः ॥ ११५ ॥ अथांवरारोहणानंतरं । स्वयास्वकीययाएकतन्वाएकमूर्त्यासुराणांआलयेस्वर्गेंन्यवसत् द्वितीययातन्वाद्वितीयरूपेणेत्यर्थः । सदसिसभायांतेनब्रह्मणाअर्चितोन्यवसत् । अथापरयातृतीयरूपेणनिजालयेन्यवसत् ॥ ॥ ११६ ॥ अनुगम्यसहागत्ययोग्यताक्रमात् अगम्यस्यगमनायोग्यस्थलस्यमर्यादंअवधिंउपेत्य अतिविदूरतःविलोकयंतःउच्चैरस्तुवन्तुष्टुवुः उच्चैर्भक्त्युत्कर्षेणअनुगम्ये

विभीषणश्च धर्मात्मा राघवाज्ञापुरस्कृतः ॥ सेनापतिर्धनेशस्य कल्पमावीत्स राक्षसान् ॥ ११४ ॥ रामाज्ञया जांबवांश्च न्यवसत्पृथिवीतले ॥ उत्पत्त्यर्थं जांबवत्यास्तदर्थं सुतपश्चरन् ॥ ११५ ॥ अथो रघूणां प्रवरः सुरार्चितः स्वयैकतन्वा न्यवसत्सुरालये ॥ द्वितीययाब्रह्मसदस्यधीश्वरस्तेनार्चितोथापरया निजालये ॥ ११६ ॥ तृतीयरूपेण निजं पदं प्रभुं व्रजंतमुच्चैरनुगम्य देवताः ॥ अगम्यमर्यादमुपेत्य च क्रमाद्विलोकयंतोतिविदूरतोस्तुवन् ॥ ११७ ॥ ब्रह्मा मरुन्मारुतसूनुरीशः शेषो गरुत्मान्हरिजः शक्रकाद्याः ॥ क्रमादनुव्रज्य तु राघवस्य शिरस्यथाज्ञां प्रणिधाय निर्ययुः ॥ ११८ ॥ स्वं स्वं च सर्वे सदनं सुरा ययुः पुरंदराद्याश्च विरिंचपूर्वकाः ॥ मरुत्सुतोथो बदरीमवाप्य नारायणस्यैव पदं सिषेवे ॥ ११९ ॥ समस्तशास्त्रोद्धरितं हरेर्वचो मुदा तदा श्रोत्रपुटेन संभरन् ॥ वदंश्च तत्वं विबुधर्षभाणां सदा मुनीनां च सुखं ह्युवास ॥ १२० ॥ ॥ ॥

तिवासंबंधः। देवताइत्यत्रतल्प्रत्ययस्यस्वरूपपरत्वात्प्रकृत्यर्थविशेषणं विलोकयंतइति क्वचिद्दैवताइतिपाठः दैवतानिपुंसिचेत्यमरः ॥ ११७ ॥ क्रमादित्युक्तंदर्शयति । ब्रह्मेति। मारुतसूनुःहनुमान्हरिजःविष्णुपुत्रःकामःशक्रःइंद्रःकः दक्षःआद्यशब्देनयमाद्याविवक्षिताः । क्रमात्स्वयोग्यताक्रमात् अनुव्रज्यरामंअनुगम्य प्रणिधायधृत्वा निर्ययुः निवृत्ताइत्यर्थः ॥ ११८ ॥ विरिंचःपूर्वोयेषांशेषगरुडरुद्रादीनां तेतथा पुरंदराद्याःसुराःस्वंस्वंसदनंस्ववासस्थानं अथागमनानंतरं नारायणस्यश्रीवेदव्यासस्य ॥ ११९ ॥ समस्तशास्त्रैःनिर्णयरूपसर्वशास्त्रार्थैःउद्धरितंपूर्णमित्यर्थः। श्रोत्रपुटेनकर्णलक्षणद्रोणेनसंभरन्दधन्शृण्वन्नित्यर्थः। तत्वंहरिस्वरूपंस्वयंवदन्सुखंयथास्यात्तथाउवास १२०

यथाबदर्थोउवासतथा अपरेणरूपेणद्वितीयरूपेणकिंपुरुषेषुकिंपुरुषखंडेविद्यमानराष्ट्रेषुतथातद्वत् अन्यैःरूपैःहनुमद्रूपैःविष्णोःसमस्तसद्मनीतिजातावेकवचनं । श्वेतद्वी पानंतासनवैकुंठेषुयथेष्टंस्वेच्छानुसारेणयथातथाउवास ॥ १२१ ॥ इत्थंउक्तप्रकारेणसहनूमान् शतकोटिभिःशतकोटिसंख्याकपद्यैःविस्तरःविस्तृतिःयस्यतत्तथा । रामायणंव्यासोक्तमूलरामायणं भारतपंचरात्रंचतयोःसमाहारस्तथागायन्कीर्तयन् ब्रह्मसूत्रैःसहिताइतिसहितब्रह्मसूत्राःतान्वेदान्व्याचक्षाणोव्याकुर्वाणःसन्नित्येनाविच्छिन्नेनसुखेनउद्धरःपूर्णःनित्यसुखोद्धरः सुखस्योद्धरोतिशयोयस्येतिवाविग्रहः अभत् । अतिशयोभरइत्यमरः ॥ १२२ ॥ लक्ष्मणपूर्वकैरित्यत्रलक्ष्मणाद्याःस्वमूलरूपंप्राप्ता अपि पुनःलक्ष्मणादिरूपाणिस्वेच्छयाधृत्वा । रामंसेवंतइत्यवगंतव्यम् ॥ १२३ ॥ ईशःसमर्थोहरिःकदाचिदहिपतिःशेषःकदाचित् पृथक्वासुदेवाद्यनंतरूपैःपृथक्पृथ

रामाज्ञया किंपुरुषेषु राज्यं चकार रूपेण तथा परेण ॥ रूपैस्तथान्यैश्च समस्तसद्मन्युवास विष्णोः सततं यथेष्टम् ॥ १२१ ॥ इत्थं सगायंश्छतकोटिविस्तरं रामायणं भारतपंचरात्रं ॥ वेदांश्च सर्वान्सहितब्रह्मसूत्रान् व्याचक्षाणो नित्यसुखोद्धरोभूत् ॥ १२२ ॥ रामोपि सार्द्धं पवनात्मजेन ससीतया लक्ष्मणपूर्वकैश्च ॥ तथागरुत्मत्प्रमुखैश्च पार्षदैः संसेव्यमानो न्यवसत्पयोब्धौ ॥१२३ ॥ कदाचिदीशः सकलावतारानेकं विधायाहिपतौ च शेते ॥ पृथक् च संव्यूह्य कदाचिदिच्छया रेमे रमेशोमितसद्गुणार्णवः ॥ १२४ ॥ इत्यशेषपुराणेभ्यः पंचरात्रेभ्य एव च ॥ भारताच्चैव वेदेभ्यो महारामायणादपि ॥ १२५ ॥ परस्परविरोधस्य हानान्निर्णीय तत्त्वतः ॥ युक्त्या बुद्धिबलाच्चैव विष्णोरेव प्रसादतः ॥१२६॥ बहुकल्पानुसारेण मयेयं सत्कथोदिता ॥ नैकग्रंथाश्रयात्तस्मान्नाशंक्यात्र विरुद्धता ॥ १२८ ॥ ॥

क्संव्यूह्य व्यूहंकृत्वारेमेरमतइत्यर्थः ॥ १२४ ॥ आचार्याःस्वोक्तग्रंथस्यप्रामाणिकत्वंदर्शयन्नाहुः इत्यशेषेत्यादिना ॥ १२५ ॥ परस्परविरोधस्यपुराणेषुविद्यमानपरस्परविरोधस्य हानात्परिहारेणपुराणाद्यशेषग्रंथेभ्यः युक्त्याअनुमानेनबुद्धिबलात्स्वप्रज्ञाबलात् विष्णोःप्रसादतएव तत्वतःयाथार्थ्येननिर्णीयअयमेवार्थइतिनिर्णयंकृत्वा ॥ १२६ ॥ बहुकल्पानांमहाकल्पाद्यवांतरकल्पानांअनुसारेणअनुकूल्येनइति । अनेनप्रकारेणइयंसत्कथाविरोधादिदोषरहिताकथामयाउदिता अभ्युपादेयत्वज्ञापनार्थं उक्तमेवविशदयति । नैकग्रंथाश्रयादिति । यस्मादेकग्रंथाश्रयात्कथानोदिता तस्मादत्रकथायाम् ॥ १२७ ॥ ॥ ॥ ॥

निर्णयप्रयोजनमाह । क्वचिदिति । ग्रंथेषु भारतादिषु क्वचिद्भागे व्यत्यासः कालव्यत्यासपुरुषव्यत्यासादिनानाप्रकारो व्यत्यासः उक्तइतिशेषः । प्रतिलोमता वक्तव्यार्थे अन्यार्थकथनं प्रतिलोमता उक्ता यस्मात्तस्मात् अयंएतद्ग्रंथोक्तः तस्मान्निर्णयस्य बहुग्रंथाश्रयत्वादसुरमोहनार्थं एकग्रंथोक्तो विरोधोनशंकनीयइतिभावः ॥ १२८ ॥ एवंचोक्तप्रकारेण वक्ष्यमाणेषु व्यासाद्यवतारोक्तनिर्णयेषु अयंएतद्ग्रंथोक्तः सदासर्वकालेषु पारंपर्यक्रमः सृष्ट्यादिपारंपर्यक्रमः सर्वकल्पसमः सर्वकल्पसाधारणः ब्रह्मकल्पाद्यवांतरकल्पाः अत्रोक्तक्रमानुसारिणइतिभावः ॥ १२९ ॥ क्वचिद्व्यत्यासइत्युक्तं समासेनाह । पुंव्यत्यासेनेति । क्वचित्कथांतरे पुंव्यत्यासेन पुरुषव्यत्यासेन उक्तिः स्याद्भवति अस्तीत्यर्थः । तदेवोदाहरति । कृष्णेति । कृष्णां द्रौपदीं प्रति ॥ १३० ॥ तथा किंनस्यादित्यतआह । भीमेति । तेदुर्योधनादयः बहुग्रंथवाक्येभ्यो भीमनिहताइतिज्ञायंते ॥ १३० ॥

क्वचिन्मोहायासुराणां व्यत्यासः प्रतिलोमता ॥ उक्ता ग्रंथेषु तस्माद्धि निर्णयोयं कृतो मया ॥ १२८ ॥ एवं च वक्ष्यमाणेषु नैवाशंक्या विरुद्धता ॥ सर्वकल्पसमश्चायं पारंपर्यक्रमः सदा ॥ १२९ ॥ पुंव्यत्यासेन चोक्तिः स्यात्पुराणादिषु कुत्रचित् ॥ कृष्णामाह यथा कृष्णो धनंजयशरैर्हतान् ॥ १३० ॥ शतं दुर्योधनादींस्ते दर्शयिष्य इति प्रभुः ॥ भीमसेनहतास्ते तु ज्ञायंते बहुवाक्यतः ॥ १३१ ॥ विस्तारे भीमनिहताः संक्षेपेर्जुनपातिताः ॥ उच्यंते बहवश्चान्ये पुंव्यत्याससमाश्रयात् ॥ १३२ ॥ विस्तारे कृष्णानिहता बलभद्रहता इति ॥ उच्यंते च क्वचित्काल व्यत्यासोपि क्वचिद्भवेत् ॥ १३३ ॥ यथा सुयोधनं भीमः प्राहसत्कृष्णसन्निधौ ॥ इतिवाक्येषु बहुषु ज्ञायंते निर्णयादपि ॥ १३४ ॥ अनिर्णये तु कृष्णस्य पूर्वमुक्ता गतिस्ततः ॥ व्यत्यासास्त्वेवमाद्याश्च प्रातिलोम्यादयस्तथा ॥ १३५ ॥ ॥

निश्चयार्थं उक्तमेवार्थमाह । विस्तारइति । विस्तारे बहुग्रंथेष्वित्यर्थः संक्षेपे क्वचिदेकतमे ग्रंथइत्यर्थः । तस्माद्बहूक्तेः प्रमाणत्वादल्पोक्तं व्यत्यासइत्यवगंतव्यं इतिनिर्णयः । एवमेव अन्येबहवः पुरुषाः पुंव्यत्याससमाश्रयादुच्यंते अन्येअर्थावा ॥ १३२ ॥ अन्यइत्युक्तं संक्षेपेणाह । विस्तारइति । बलभद्रहताः संक्षेपइतिशेषः । इत्यादिपुरुषव्यत्यासा उच्यंतइत्यर्थः । क्वचिद्ग्रंथे क्वचिदर्थे ॥ १३३ ॥ तदेवाह । यथेति ॥ १३४ ॥ अनिर्णये ग्रंथे कृष्णस्य गतिः गमनं पूर्वं हासात्पूर्वं उक्ता अनिर्णये इंद्रप्रस्थाद्द्वारकां प्रति साल्ववधार्थं कृष्णेगते भीमोजलेपतितं दुर्योधनं प्राहसदिति । कालव्यत्यासोस्तीतिभावः । तथा एवमाद्याः पूर्वमुक्ताः गतिरित्याद्याः व्यत्यासाः तथा प्रातिलोम्यादयश्च ॥ १३५ ॥

भारताद्येषुग्रंथेषुदृश्यंते तेव्यत्यासप्रातिलोम्यादयःलक्षणग्रंथतःव्यासोक्तलक्षणग्रंथात्तथा बहुभिर्वाक्यैःग्रंथांतरगतसद्वाक्यैः तथानिर्णयग्रंथतः निर्णयरूपब्रह्मसूत्रपंच रात्रादिनिर्णयग्रंथात्ज्ञायंते व्यत्यासप्रातिलोम्यादयइतिशेषः । यस्मादत्रव्यत्यासादयःसंतिनसंतीतिज्ञायंतइतिभावः ॥ १३६ ॥ तस्मान्निर्णयग्रंथाल्लक्षणंचाश्रित्य बहु वाक्यानामनुसारेण आनुकूल्येनअयमत्रोक्तोनिर्णयः ॥ १३७ ॥ निर्णयग्रंथादीननपेक्ष्यैवकृतोनिर्णयोनिरयप्राप्तिहेतुरित्याह । उक्तमित्यादिना । यःपुरुषःत्रिभाषांसमा धिदर्शनंगुह्येतितिसृणांभाषाणांलक्षणंस्थितप्रज्ञस्यकाभाषेतिवत् रीतीनांव्याख्यानप्रकारविशेषाणांशतानि ॥ १३८ ॥ व्यत्यासादीन्सप्तभेदान्नजानातिसपुरुषःयदीति शेषः । वेदभारतपुराणानांअर्थंतथाभाषात्रयादीनांज्ञानंविनास्वमनीषयावदेत्तर्हि अन्यथाज्ञानात्विपरीतज्ञानात्संभवंउत्पन्नंघोरंनिरयंयातीति कृष्णद्वैपायनेनव्यासेनउदि

दृश्यंते भारताद्येषु लक्षणग्रंथतश्च ते ॥ ज्ञायंते बहुभिर्वाक्यैर्निर्णयग्रंथतस्तथा ॥ १३६ ॥ तस्माद्धि निर्णयग्रंथा नाश्रित्येव च लक्षणं ॥ बहुवाक्यानुसारेण निर्णयोयं मया कृतः ॥ १३७ ॥ उक्तं लक्षणशास्त्रे च कृष्णद्वैपायनो दिते ॥ त्रिभाषां यो न जानाति रीतीनां शतमेव च ॥ १३८ ॥ व्यत्यासादीन् सप्तभेदान् वेदाद्यर्थं तु यो वदेत् ॥ स याति निरयं घोरं अन्यथाज्ञानसंभवं ॥ १३९ ॥ इत्यन्येषु च शास्त्रेषु तत्र तत्रोदितं बहु ॥ व्यत्यासः प्रातिलो म्यं च गोमूत्रीप्रघसस्तथा ॥ १४० ॥ उक्षणः सुधरः साधुः सप्तभेदाः प्रकीर्तिताः ॥ इत्यादिलक्षणान्यत्र नोच्यं तेन्यप्रसंगतः॥१४१॥ अनुसारेण तेषां तु निर्णयः क्रियते मया॥तस्मान्निर्णयशास्त्रत्वाद्ग्राह्यमेतद्बुभूषुभिः ॥१४२॥

तेलक्षणशास्त्रेउक्तंचउदितमेव ॥ १३९ ॥ इतिपूर्वोक्तार्थःलक्षणशास्त्रादन्येषुशास्त्रेषुच तत्रतत्रतत्तत्प्रसंगेबहुबहुप्रकारंयथास्यात्तथा उदितंव्यासेनोदितमस्तीत्यर्थः ॥ ॥ १४० ॥ व्यत्यासादिसप्तभेदनामान्याह । व्यत्यासइत्यादिना । इत्यादीनांव्यत्यासादीनांलक्षणानिअत्रअस्मिन्ग्रंथेअन्यप्रसंगतःश्रीहयग्रीवावतारकथानिर्णयप्रसंगात् व्य त्यासादीनांलक्षणकथनमन्यप्रसंगःतस्मान्नोच्यंते ॥ १४१ ॥ तेषांलक्षणादिशास्त्राणांअनुसारेणआनुकूल्येनक्रियते यस्मात्तस्मात्निर्णयशास्त्रत्वादेतत् श्रीमन्महाभार ततात्पर्यनिर्णयाख्यंशास्त्रं बुभूषुभिःज्ञानेच्छुभिःग्राह्यंउपादेयं ॥ १४२ ॥ ॥ ॥ ॥ ॥

श्रीहरिकथामुक्त्वा तत्पठनादिनाहरिचरणप्राप्तिरेवफलमितिवक्तुंउपसंहरति । इतीति । अनुसृतेरनुसारेणभवापहासंसारनाशिनी पराउत्तमारामस्यकथाइत्युक्तरीत्या ईरिताउदिताइमांकथांविमुक्तःबंधःसंसारबंधोयस्यसतथा । तादृशःसन् हरेश्चरणंचरणसमीपंमुक्तिमित्यर्थः तदुक्तं । स्वोत्पत्त्यंगेषुदेवानामन्येषांपादमूलतः । मुक्तिस्तु

इतीरिता रामकथा परा मया समस्तशास्त्रानुसृतेर्भवापहा ॥ पठेदिमां यः शृणुयादथापि वा विमुक्तबंधश्चरणं हरेर्व्रजेत् ॥१४३ ॥ इति श्रीमदानंदतीर्थभगवत्पादाचार्य विरचिते श्रीमन्महाभारततात्पर्यनिर्णये श्रीरामचरिते उत्तरकांडकथा निरूपणंनाम नवमोध्यायः ॥ ९ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥

विहिताविष्णोर्निर्दिष्टेषुयथावच्चइति ॥ १४३ ॥ यंगंगाजमदग्निजान्वय पूर्तिंतस्यकृतौसदैवनवमोध्यायःसतांतुष्टिदःश्रीमद्भारतभावनि॰ ॥ ९ ॥ इति श्रीमद्भगवत्पादाचार्यविरचितश्रीमद्भारततात्पर्यनिर्णयटीकायां पदार्थदीपिकानाम्न्यां नवमोध्यायः ॥ ९ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥



श्रीगुरुभ्योनमः ॐ श्रीमदाचार्याः ॥ मैत्रेय उवाच ॥ इतीतनुमरुतआहकथाःपरस्येतिप्रतिज्ञांकृत्वा व्यूढश्चतुर्धाभगवानित्यादिना वासुदेवादिचतुर्णामवताराणांसृष्ट्यादिकथामुक्त्वा ततःस मज्ञामित्यारभ्य कदाचिदीशःसकलावतारानित्येतच्छ्लोकपर्यंतं वराहादिनानावतारकथाःनिर्णयेनोक्त्वा इदानींव्यासावतारकथांवक्तुंउपोद्घातसंगतिंदर्शयति । द्वापरइत्या दिना । अत्रअथशब्दःकथांतरद्योतकःअष्टाविंशतिमेवैवस्वतमन्वंतरप्रथमद्वापरापेक्षयाअष्टाविंशतिमेद्वापरेयुगेप्राप्तेप्रकर्षेणआप्तेसमाप्तप्रायेसति। स्वयंभ्वाद्याःपुनःतीरंप्रतिआ ययुः। पूर्वंचतुर्वारंव्यासावतारार्थंकृतस्तुत्यपेक्षयापुनरित्युक्तं । तृतीयेसप्तमेचैवषोडशेपंचविंशके । अष्टाविंशयुगेकृष्णःसत्यवत्यामजायतेतिद्वितीयस्कंधतात्पर्ये॥ १ ॥ त्रिबुधेषुदे वेषुऋषभाःश्रेष्ठाःतुष्टुवुः ॥ २ ॥ तांस्तुतिंदर्शयति । नमइत्यादिना । एकधाम्नेमुख्याश्रयाय समस्तानांसर्वविषयाणांविज्ञानानिविशेषज्ञानानि मरीचयइवकिरणाइवतैः मालतेशोभतेसतथा तस्मैअनादिअनादिकालसंस्थंअविज्ञानंअज्ञानंतदेवतमःतन्निहंतीतितथा तस्मैअमृतःक्षयरहितःतादृशआनंदोयस्मिन्तत्तथा तच्चतत्पदंचमोक्षस्था

ॐ द्वापरेथ युगे प्राप्ते त्वष्टाविंशतिमे पुनः ॥ स्वयंभूशर्वशक्राद्या दुग्धाब्धेस्तीरमाययुः ॥ १ ॥ पयोब्धेरुत्तरं तीर मासाद्य विबुधर्षभाः ॥ तुष्टुवुः पुंडरीकाक्षमक्षय्यं पुरुषोत्तमं ॥ २ ॥ नमो नमोगण्यगुणैकधाम्ने समस्तविज्ञानमरी चिमालिने ॥ अनाद्यविज्ञानतमोनिहंत्रे परामृतानंदपदप्रदायिने ॥ ३ ॥ स्वदत्तमालाभुविपातकोपतो दुर्वाससःशा पत आशु हि श्रिया ॥ शक्रे विहीने दितिजैःपराजिते पुरा वयंत्वां शरणं गताःस्मः ॥ ४ ॥ ॥ ॥

नंपरेषांउत्तमानांब्रह्मादीनांअमृतानंदपदंप्रदातुंशीलंविद्यतेयस्यसतथातस्मै ॥ ३ ॥ देवाःएवंस्तुत्वास्वपरिपालनरूपांहरिलीलांस्तुतिप्रकारेणविज्ञापयन्नाहुरित्याह । स्वदत्ते त्यादिना । स्वदत्तमालेत्यत्र दुर्वाससापथिइंद्रायमालादत्ता । इंद्रोइयंअर्कपुष्पमालेत्युदासीनबुद्ध्याऐरावतकुंभेनिधायगच्छतिसति भुविपातितांमालांदृष्ट्वाशशापेतिपौ राणिकीकथानुसंधेया । आदायामरराजायचिक्षेपोन्मत्तवन्मुनिः । गृहीत्वामरराजेनस्रगैरावतमूर्धनि । न्यस्ताराराजकैलासशिखरेजान्हवीयथा । मदांधकारिताक्षोसौगंधा कृष्टेनवारणः । करेणाघ्रायचिक्षेपतांस्रजंधरणीतले । ततश्चुक्रोधभगवान्दुर्वासामुनिसत्तमः इतिविष्णुपुराणोक्तकथानुसंधेया पुराभुविपातेत्यत्र सप्तम्याअलुक् स्वेनदुर्वास सादत्तमालायाःभुविपातात्तस्माज्जातोयःकोपःतस्मादित्यर्थः । दुर्वाससःशापतःआशुतरक्षणेशक्रःश्रियासंपदाविहीनेउज्झितेसति दितिजैःपराजितेसति वयंत्वांशरणं गताःस्मः ॥ ४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

त्वदाज्ञयासमुद्रमथनार्थंबलिनासंधिःकार्येत्येवंरूपयातवाज्ञया बलिनाकर्मदेवबलिना नतुबलिनाम्नासुरेणसंदधानाःसंधिंकुर्वाणाः इमेवृंदारकादेवाःसमेताःयुक्ताःसंतःदैत्यैरितिशेषः । गिरीशस्यवरात्परैस्त्वदन्यैरचाल्यंचालयितुंअशक्यं मंदरंमंदरगिरिंएत्यबाहुभिःउद्धर्तुंभूमेः सकाशात्ऊर्ध्वंकर्तुमित्यर्थः नशेकुःशक्तानबभूवुः ॥ ५ ॥ मंदरःअनंतेनधापितइतिग्रंथांतरविरोधंपरिहरन्नाह । नित्येति । निधापितः स्थापितःसगरुडः । त्वयासहतंमंदरंअवहत् । अनंतोढोमंदरस्तुयदावैवस्वतांतरे ॥ अमृतार्थंसुपर्णोढोचाक्षुषस्यांतरेमनोरि तिब्रह्मांडपुराणवचनाविरोधः । नित्यबलत्वहेतुतोयोनंतनामागरुडइत्यनेनपरिहृतः ॥६॥ पुनःगरुडेपर्वतस्थापनानंतरं परीक्षद्भिःस्वेषांमंदरःउद्धर्तुंशक्योनवेतिपरीक्षांकुर्वद्भिः सुरैःअसुरैःसहतस्यगरुडस्य अंसतोस्कंधात्उन्नामितःउद्धृतःअसौगिरिःमंदरःपतितःसन्निति शेषः । तान्सुरासुरान्व्यचूर्णयत् हेप्रभोतेसुरासुराःत्वदीक्षयात्वत्कृपावलोकनेनपूर्ववत् पूर्वंयथादृढावयवाःतथेत्यर्थः उत्थिताः ॥ ७ ॥ अस्यगरुडस्यस्कंधगतःत्वंतंमंदरंवीनांपक्षिणांईश्वरेखगस्वामिनिगरुडेनिधाय सुरा

त्वदाज्ञया बलिना संदधाना वराद्गिरीशस्य परैरचाल्यं ॥ वृंदारका मंदरमेत्य बाहुभिर्नशेकुरुद्धर्तुमिमे समेताः ॥५॥ तदा त्वया नित्यबलत्वहेतुतो योनंतनामा गरुडस्तदंसके ॥ उत्पाद्य चैकेन करेण मंदरो निधापितस्तं स सह त्वया वहत् ॥ ६ ॥ पुनः परीक्षद्भिरसौ गिरिः सुरैः सहासुरैरुन्नामितस्तदंसतः ॥ व्यचूर्णयत्तानखिलान्पुनश्च ते त्वदीक्षया पूर्ववदुत्थिताः प्रभो ॥ ७ ॥ पुनश्च वामेन करेण वीश्वरे निधाय तं स्कंधगतस्त्वमस्य ॥ अगाः पयोब्धिं सहितः सुरासुरैर्मथ्ना च तेनाब्धिमथाप्यमथ्नाः ॥ ८ ॥ कृतश्च कद्रवास्तनयोत्र वासुकिर्नेत्रं त्वया कश्यपजः स नागराट् ॥ ममंथुरब्धिं सहितास्त्वया सुराः सहासुरा दिव्यपयोघृताधिकं ॥ ९ ॥ नैच्छंत पुच्छं दितिजा अमंगलं तदित्यथाग्रं जगृहुर्विषोल्बणं ॥ श्रांतास्तु तेतो विबुधास्तु पुच्छं त्वया समेता जगृहुस्त्वदाश्रयाः ॥ १० ॥ ॥

सुरैःइत्युभयत्रसंबध्यते । पयोब्धिंअगाःप्राप्तवानसि मथ्नामंथानरूपेणेत्यर्थः । तेनमंदरेणअब्धिमपिअमथ्नाःमथितवानसि ॥ ८ ॥ अत्रसमुद्रमथनेकश्यपकद्रवोर्जातःकद्रवाः कद्रूनाम्नीकश्यपभार्यातस्यास्तनयःपुत्रःनागेषुराजतेअसौतथा । अष्टकुलसर्पश्रेष्ठेषुअयमप्येकतमःसर्पश्रेष्ठःनाम्नावासुकिरितिप्रसिद्धः । नेत्रंपरिवर्तकरज्जुःकृतः असुरैःसहिताःसहासुराःत्वयासहिताःसंतःदिव्येनिर्विकारेपयोघृतेक्षीराज्येताभ्यांआधिकःश्रेष्ठःतंअब्धिममंथुः ।"नेत्रंवस्त्रविशेषेस्यान्नेत्रंचक्षुरुदाहृतं । परिवर्तगुणेनेत्रोनेत्रःकस्तुरिकामृग इत्यभिधानं ॥९॥ दितिजाःतत्पुच्छंअमंगलंनीचांगमितिपुच्छंसर्पपुच्छंनैच्छंतगृहीतुमितिशेषः । उत्तमांगद्योतकोथशब्दःविषेणउल्बणंक्रूरंअविषह्यमित्यर्थः । अग्रंमुखंजगृहुःतेदैत्याःतुअतिशयेनश्रांताः अथपुच्छग्रहणानंतरं त्वयासमेताःत्वदाश्रयाइत्यनेन स्वानिष्टपरिहारःसूचितः ॥ १० ॥ ॥

अथपुच्छमुखग्रहणानंतरं सुकांचनः उत्तमसुवर्णात्मासगिरिः अतिभारात् कांचनात्मकत्वात् भूरिभारोगिरिरितिभावः। कच्छपात्माकूर्मस्वरूपोभूत्वेतिशेषः । तंमंदरंअभरः धृतवानसि ॥ ११ ॥ उपरिपर्वतोपरिअधःपर्वताधः आत्मनीतिजातावेकवचनं । अस्मास्वित्यर्थः । नेत्रगोत्रयोःपरिवर्तपाशपर्वतयोःपरेणआविशताप्रविशतात्वयासम्यक् एधिताबलेनाभिवृद्धाः मदेनउत्कटाःउत्कृष्टाःसुरासुराःतरसावेगेन क्षोभितंसंजातक्षोभंनक्राणांजलचराणांचक्रंसमूहोयस्मिन्सतथा। तंअब्धिममंथुः । 'गोत्रंनामान्वयेगोत्रश्चधरणीधरः' इत्यनेकार्थध्वनिपदमंजर्याम् ॥ १२ ॥ तेषुदेवासुरेषुउरुक्रमःउत्कृष्टपराक्रमःअतएवमुदासंतोषेणइतःयुक्तोहियस्मात्तस्मात्त्वमेकःसुधैवरसः अमृतमेवरसः तस्याप्त्यैदेवानामामृतप्राप्त्यर्थमितिभावः। अमथ्नाः ग्रसतीतिग्रासिजगन्नाशकरमित्यर्थः। अधात् दधार ॥ १३ ॥ तद्विषंकलेःस्वरूपंस्वयमेवकलिःविषरूपेणोत्पन्नइत्य

अथातिभारादविशत्सुकांचनो गिरिः स पातालमथ त्वमेव ॥ तं कच्छपात्मा त्वभरः स्वपृष्ठे ह्यनन्यधार्यं पुरुलीलयैव ॥ ११ ॥ उपर्यधश्चात्मनि नेत्रगोत्रयोस्त्वया परेणाविशता समेधिताः ॥ ममंथुरब्धिं तरसा मदोत्कटाः सुरासुराः क्षोभितनक्रचक्रम् ॥१२॥ श्रांतेषु तेष्वेक उरुक्रमस्त्वं सुधारसाप्त्यै मुदितो ह्यमथ्नाः ॥ तदा जगद्ग्रासि विषं समुत्थितं त्वदाज्ञया वायुरधात्करे निजे ॥ १३ ॥ कलेः स्वरूपं तदतीव दुःसहं वराद्विधातुः सकलैश्च दुःस्पृशं ॥ करे विमथ्यास्तबलं विधाय ददौ स किंचिद्गिरिशाय वायुः ॥१४ ॥ स तत्पिबन् कंठगतेन तेन निपातितो मूर्छित आशु रुद्रः ॥ हरेः करस्पर्शबलात्स संज्ञामवाप नीलोऽस्य गलस्तदासीत् ॥ १५ ॥ अथ त्वदाज्ञां पुरतोनिधाय निधाय पात्रे तपनीयरूपे ॥ स्वयं त्वनिर्मथ्य बलोपपन्नं पपौ स वायुस्तदुतास्य जीर्णम् ॥ १६ ॥ ॥ ॥

र्थः। अतएवविधातुर्वरात् कलिनालब्धवरबलात् तद्विषंअतीवदुःसहंसोढुमशक्यंदुःस्पृशंसंस्प्रष्टुमशक्यंतदित्युभयत्रानुषंगः। सवायुःस्वकरेविमथ्यमर्दयित्वा अस्तबलंगतसारंविषं ॥ १४ ॥ तद्विषंपिबतीतितत्पिबन् रुद्रःकंठगतेनकंठेविद्यमानेनविषेणअल्पत्वात् कंठेलग्नंसत् तत्रैवस्थितंउदरंनप्राप्तमितिभावः। तेनविषेणनिपातितःसन् आशु मूर्छितोबभूवेतिशेषः। पिबदितिवापाठः। छांदसत्वान्नुमाभावः। सरुद्रःतदाविषपानकाले अस्यरुद्रस्यगलःकंठःनीलःनीलवर्णःअतएवनीलकंठनामेत्यर्थः ॥ १५ ॥ पुरतोनिधायपुरस्कृत्यतपनीयरूपेसुवर्णात्मकेपात्रेभाजनेनिधाय करस्थंविषमितिशेषः। 'स्वर्णंसुवर्णंकनकंहिरण्यंहेमहाटकं। तपनीयंशातकुंभमि'त्यमरः। स्वयंअनिर्मथ्य अमर्दयित्वा। बलोपपन्नंसारयुक्तंतद्विषंपपौ। उतपानानंतरं अस्यवायोःजीर्णंअभूदितिशेषः ॥ १६ ॥ ॥ ॥ ॥

अत्यल्पमित्यनेनअल्पमपिनिर्वीर्यमित्यर्थः । तादृशविषपानात्शर्वोभिशिरसिशूलाव्यथा । रुद्रः वायुदत्तनिर्वीर्यांल्पविषमपिपूर्णनपपावित्याह । अस्येति । अस्यरुद्रस्य करावशिष्टं उर्वरितंगलितंकलिःकल्यात्मकविषंसर्वजगत्सुपूर्णव्याप्तंअभूत् । अत्यल्पेत्यादिनाविषसामर्थ्यमुक्त्वावायुसामर्थ्यंदर्शयति । पूर्णमिति । पूर्णंअशेषंविषंपीत्वापी तंवायुनेतिशेषः । वायोर्विकारोनबभूव । यद्वा पूर्णंपीत्वावर्तमानस्यवायोःविषविकारोनबभूव॥ १७॥ सर्वजगत्सुविषात्मकस्यकलेःपूर्णत्वंस्पष्टयति । कलेरिति । कलेःशरी रात्कालिस्वरूपात्विषात्श्वापदादिकव्याघ्रादयःयातुधानाःराक्षसाःअथविषोत्पत्त्यनंतरं सुरामयंतांसुरां ॥ १८ ॥ उच्चैःश्रवाइतिनामप्रसिद्धः तुरंगमःइंद्रस्यअश्वः ऐरावत नामधेयःकरीगजः अन्येऐरावतादन्येदिक्पालानांगजाः वरंउत्तमंअप्सरसांउर्वश्याद्यप्सरःस्त्रीणांसहस्रंबहिरित्यर्थः अभूदितिशेषः ॥ १९ ॥ दिवौकसांदेवानांपारि जाताख्यःतरुःवृक्षः साक्षात्सुरभिःमुख्यकामधेनुःनंदिन्यादिव्यावृत्त्यर्थंसाक्षादित्युक्तं । निशायाःशच्याःईशश्चंद्रःलोकेषुसारंश्रेष्ठं । 'सारोबलेस्थिरांशेचन्याय्येक्लीबंवरेत्रि

अत्यल्पपानाच्च बभूव शूला शिवस्य शीर्ष्ण्यस्य करावशिष्टं ॥ अभूत्कलिः सर्वजगत्सु पूर्णं पीत्वा विकारो न बभूव वायोः ॥ १७ ॥ कलेः शरीरादभवन्कुनागाः सवृश्चिकाः श्वापदयातुधानाः ॥ अथ त्वयाब्धौ तु विमथ्यमाने सुराभ वत्तामसुरा अवापुः ॥ १८॥ उच्चैःश्रवा नाम तुरंगमोभूत्करी तथैरावतनामधेयः ॥ अन्ये च दिक्पालगजा बभूवुर्वरं तथैवाप्सरसां सहस्रं ॥ १९ ॥ तथायुधान्याभरणानि चैव दिवौकसां पारिजातस्तरुश्च ॥ तथैव साक्षात्सुरभिर्निशेशो बभूव तत्कौस्तुभं लोकसारं ॥ २० ॥ अथेंदिरा यद्यपि नित्यदेहा बभूव तत्रापरया स्वतन्वा । ततो भवान् दक्षिणबाहु ना सुधां कमंडलुं कलशं चापरेण ॥ २१ ॥ प्रगृह्य तस्मान्निरगात्समुद्राद्धन्वंतरिर्नाम हरिन्मणिद्युतिः ॥ ततोभवद्धस्त गतं दितेः सुताः सुधाभरं कलशं चोपजह्नुः ॥ मुक्तं त्वया शक्तिमतापि दैत्यान्सत्यच्युतान्कारयितुं वधाय ॥ २२ ॥

ल्लि'त्यमरः । तत्प्रसिद्धकौस्तुभंकौस्तुभमणिःबभूवेतिसर्वत्रानुषंगः ॥ २० ॥ यद्यपिइंदिरानित्यदेहा नाशरहितस्वरूपा तथापिअपरयास्वतन्वाद्वितीयरूपेणतत्रक्षीराब्धौ आविर्बभूवेत्यर्थः । ततःहरिन्मणिःइंद्रनीलमणिःतस्यद्युतिरिवद्युतिर्यस्यसतथा धन्वंतरिर्नामधन्वंतरिस्वरूपेणप्रसिद्धोभवान् अपरेणसव्यबाहुनातस्मात्समुद्रान्निरगात् । आ विर्बभूवेत्यर्थः ॥ २१ ॥ सुधाभरंअमृतपूर्णं शक्तिरस्यास्तीतिशक्तिमान् तेनत्वयाधन्वंतरिणा 'तेषांसत्याद्बालनार्थंहरिर्धन्वंतरिर्विभुः । समर्थोप्यसुराणांतुस्वहस्तादमुच त्सुधामि'तिब्रह्मांडे ॥ मुक्तंकलशमुपजह्नुरित्यन्वयः । किंकर्तुंदैत्यान्वधायवधंकर्तुमित्यर्थः । सत्यच्युतान्स्वोक्तवाक्योज्झितान्कारयितुं पूर्वंमथनकालेयथायोग्यत यामथनजंस्वीकर्तव्यमित्युक्तं तदर्थंदैत्यैःस्वयोग्यासुरालब्धाअयोग्यामृतापहरणात्सत्यच्युतान्कारयितुमितिभावः ॥ २२ ॥ ॥ ॥

ततः भवान्त्वनंतरक्षणइत्यर्थः । अनुपमं । असदृशंउत्तमंलक्ष्मीस्वरूपादुत्तममित्यर्थः । वपुःस्वरूपंबभूव नारायणीस्वरूपवान्बभूवेतिभावः । अत्यंताभेदेनसामानाधिकरण्यं कथंभूतंवपुः प्रमदायाःयोषितःआत्मादेहोयस्यतत्तथा । श्यामंयौवनमध्यस्थं 'श्यामास्त्रीमुग्धयौवने' त्यभिधानं । इच्चष्टवर्षवानीलवर्णावा नितंबेजघनेअर्पितास्थापितारत्नानांमेखलाकांचीयेनतत्तथा । जांबूनदस्यआभेवआभादीप्तिर्यस्यतच्चतदंबरंपीतवसनंतद्बिभर्तीतितथा । तादृशःसुसमीचीनमध्यमःकटिप्रदेशोयस्यतत्तथा । 'मध्यमःस्यात्स्वरेमध्येकटिदेशेचमध्यज' इतिविश्वः ॥ २३ ॥ बृहद्विस्तीर्णःनितंबोस्त्रीकटिपश्चात्भागःयस्यतत्तथा । कलशेनोपमौसदृशौकुचौयस्यतत्तथा । सत्पुंडरीकवत्कमलवत् आयतेविस्तीर्णेनेत्रेयस्यतत्तथा । उज्ज्वलंदीप्यमानंसमस्तेषुवस्तुषुसारंश्रेष्ठं परिपूर्णाःसद्गुणाःयस्यतत्तथा । सुरारयोदैत्यास्तद्वपुर्दृष्ट्वासंमुमुहुःसम्यक्मोहिताबभूवुः ॥ २४ ॥ तेअसुराःसमंयथाभवतितथा विभज्यविभागंकृत्वा अमृतमितिशेषः । अस्मान्निपाययेतिसुधायाःअमृतस्यकलशंतेकरेप्रददुःस्म तयावंचितादैत्याइतिशेषः ॥ २५ ॥ त्वयापापजनेषु धर्मच्छलंधर्माभासःधर्मइतिसतांज्ञापयितुं तदातस्मिन्समयेत्वयाउक्तं किमिति । इहअमृतविभागविषयेमेमयायद्यत्कृतंयोयोममव्यापारःतस्मिन्वोयुष्माकंयदि संवादएवसंमतिरेवतर्हि इमांसुधांउद्विभजेविभजामि ॥ २६ ॥ अहंयथेष्टतःस्वेच्छानुसारेणविभजामि यूयमपिकेनचित्प्रकारेणक्वचित्कदापिसर्वथासर्वप्रकारेणनविश्वसध्वंविश्वासंमाकुरुध्वमित्युक्तमितिसंबंधः तेदैत्याःइत्याभिहितंउक्तंनिशम्यश्रुत्वा स्त्रीभावेनस्त्रीविलासेनमुग्धामोहिताःसंतः प्रहस्यतथेतितथास्त्वित्यवदन् ॥ २७ ॥

ततो भवाननुपममुत्तमं वपुर्बभूव दिव्यप्रमदात्मकं त्वरन् ॥ श्यामं नितंबार्पितरत्नमेखलं जांबूनदाभांबरभृत्सुमध्यमं ॥ २३ ॥ बृहन्नितंबं कलशोपमस्तनं सत्पुंडरीकायतनेत्रमुज्ज्वलं ॥ समस्तसारं परिपूर्णसद्गुणं दृष्ट्वैव तत्संमुमुहुः सुरारयः ॥ २४ ॥ परस्परं तेमृतहेतुतोखिलाः विरुध्यमानाः प्रददुःस्म ते करे ॥ समं सुधायाः कलशं विभज्य निपाययास्मानिति वंचितास्त्वया ॥ २५ ॥ धर्मच्छलं पापजनेषु धर्म इति त्वया ज्ञापयितुं तदोक्तं ॥ यद्यत्कृतं मे भवतां यदीह संवाद एवोद्विभजे सुधामिमां ॥ २६ ॥ यथेष्टतोहं विभजामि सर्वथा न विश्वसध्वं मयि केनाचित्क्वचित् ॥ इति प्रहस्याभिहितं निशम्य स्त्रीभावमुग्धास्तु तथेति ते वदन् ॥ २७ ॥

॥ ॥ ॥ ॥ ॥

ततःसुराश्चअसुराश्चतथातान्पृथक्संस्थाप्य तवातिरूपेणसुरूपातिशयेनउच्चालितान् चंचलीकृतान्सुरेतरान्दैत्यान्इत्यवोचस्त्वमितिशेषः। किमिति। भवतादर्शनेनेत्रेइ क्ष्यप्रतीक्ष्य यद्वा दर्शनेजातेचक्षुर्षीप्रतीक्ष्येति ईक्ष्येत्युपसर्गविभक्तिस्वरप्रतिरूपकाश्चेतिअत्रचकारस्यानुक्तसमुच्चयार्थत्वात्तिङंतप्रतिरूपकाश्चेतिवत् ल्यबंतप्रतिरूपकम व्ययंद्रष्टव्यं। यद्वा ईक्षित्वाइतिविगृह्य स्वरप्रतिरूपकेणाव्ययेनकर्तृकरणेकृताबहुलमितिबहुलवचनात्समासः लज्जितास्मिअतएवदृशःनेत्राणिमीलयतनिमीलयतेतिसं बंधः ॥ २८ ॥ असुरेषुनिमीलितानिअक्षीणियैस्तेतथा तेषुसत्सु। न्यकृंतः छेदितवानसि ॥ २९ ॥ नन्वयोग्यस्यसुधाप्राप्तिःकथमित्यतआह। तेनेति। तेनराहुणाभूयः महत्। 'भूयःपुनःपुनःख्यातंप्रभूतार्थेत्वनव्यय'मितिविश्वः। तपःप्रतप्य स्वयंभुवःविरिंचाद्वरःअमृतप्राप्तिरूपोवरः। आरितःप्राप्तोयेनकारणेनतेनभवानस्यराहोःकरोविंदुंबिं दुमात्रंसुधांप्राप्यनिक्षिप्य राहोःशिरःजहारचिच्छेद ॥३०॥ तस्यराहोःसुरैःसमाविष्टंप्रविष्टंशिरः ग्रहतांगृह्णातिग्रसतीतिग्रहः तस्यभावःग्रहतां चंद्रसूर्यग्रहत्वमवाप। तदु

ततश्च संस्थाप्य पृथक्सुरासुरांस्तवातिरूपोच्चालितान् सुरेतरान् ॥ सर्वान् भवद्दर्शन ईक्ष्य लज्जितास्म्यहं दृशो मीलयतेत्यवोचः ॥ २८ ॥ निमीलिताक्षेष्वसुरेषु देवता न्यपाययः साध्वमृतं ततः पुमान् ॥ क्षणेन भूत्वा पिबतः सुधां शिरो राहोर्न्यकृंतश्च सुदर्शनेन ॥ २९ ॥ तेनामृतार्थं हि सहस्रजन्मसु प्रतप्य भूयस्तप आरितो वरः ॥ स्वयंभुवस्तेन भवान् करेस्य बिंदुं सुधां प्रास्य शिरो जहार ॥ ३० ॥ शिरस्तु तस्य ग्रहतामवाप सुरैः समाविष्टमथो सबाहुः ॥ क्षिप्तः कबंधोस्य शुभोदसागरे त्वया स्थितोद्यापि हि तत्र सामृतः ॥ ३१ ॥ अथासुराः प्रत्यपतन्नुदायुधाः समस्तशस्ते च हतास्त्वया रणे ॥ कलिस्तु स ब्रह्मवरादजेयो ऋते भवंतं पुरुषेषु संस्थितः ॥ ३२ ॥

क्तंआदिपर्वणि। 'ततोवैरविनिर्बंधःकृतोराहुमुखेनवै। शाश्वतश्चंद्रसूर्याभ्यांग्रसत्ययापिचैवतावि'ति। अथोत्वयाशुभंउत्तमंस्वादित्यर्थः। उदकंयस्मिन्नसौतथा सचासौसाग रश्चतस्मिन्स्वादुदकसमुद्रइतियावत्। सबाहुःअस्यराहोःकबंधःआशिरःकायःक्षिप्तःप्रक्षिप्तोभूदित्यर्थः। 'कबंधोस्त्रीक्रियायुक्तमपमूर्धकलेवरमि'त्यमरः। सामृतःअमृतेनसहि तःकबंधोहियस्मात्तस्मादद्यापि तत्रस्वादूदकसागरेस्थितःपर्वतइत्यर्थः ॥३१॥ उदायुधाःऊर्ध्वकृतायुधाःअसुराःप्रत्यपतन्आभिजग्मुःसकलिःअभूत्। कलिःसर्वजगत्सु इत्युक्तोविषरूपोयःकालिःसइत्यर्थः। भवंतंत्वांऋतेविनापुरुषेषुरुद्रादिषुसंस्थितःप्रविष्टोभूदित्यर्थः। ब्रह्मवरादित्यनेनब्रह्माणमप्यतइत्यवगंतव्यं। तुशब्दस्तुइममेवावि शेषार्थंसूचयति ॥ ३२ ॥ ॥ ॥ ॥ ॥

अलक्ष्मी:दारिद्र्यदोषाभिमानिनीनाम्नाप्यलक्ष्मी:नस्यकले:अर्धदेहाअर्धांगीस्त्रीत्यर्थः । सर्वशःसर्वदोषगणाःकामादिदोषाभिमानिनःतस्यकले:पुत्रकाः धातात्वत्कंठगंकौस्तुभंब्रह्मणाअभिमन्यमानमासेत्यर्थः ॥ ३३ ॥ तत्रक्षीराब्धौ जाताअन्येपदार्थाःसुरेषुयथाविभागंपूर्वविभागमनतिक्रम्यइत्यर्थः । तथातदनुसारेणत्वयादत्ताःइत्थंअनेनप्रकारेण मोक्षस्यनिदर्शनाय येषाममृतंदत्तंतेषांमोक्षइतिदर्शनार्थंसुरेषुदत्तंसुराणांमोक्षःनियतंध्रुवं यथास्यात्तथाभवेत् हियस्मात्तस्मात् अमृतंदत्तमितिसंबंधः ॥ ३४ ॥ स मोक्षःअसुराणांकथंचनकेनाप्युपायेननस्यादेवतस्मादमृतंनदत्तमितिभावः । ननु मोक्षप्राप्तिसाधनकर्मणिप्रयत्नवतोसुरस्य मोक्षःस्यादित्यतआह । उत्साहेति । उत्साहेनमोक्षप्राप्तिकर्मणिउद्योगेनयुक्तस्यासुरस्यतत्कर्मप्रतीपंमोक्षप्राप्तिविरोधियभवेदितिहिप्रसिद्धिः । तांप्रसिद्धिंदृष्टांतेनदर्शयति । राहोरिवेति । राहोरमृतार्थंकृतंतपःदुःखरूपंय

तस्यार्धदेहा समभूदलक्ष्मीस्तत्पुत्रका दोषगणाश्च सर्वशः ॥ अथेंदिरा वक्षसि ते समास्थिता त्वत्कंठगं कौस्तुभमास धाता ॥ ३३ ॥ यथाविभागं च सुरेषु दत्तास्त्वया तथान्येपि हि तत्र जाताः ॥ इत्थं त्वया साध्वमृतं सुरेषु दत्तं हि मोक्षस्य निदर्शनाय ॥ ३४ ॥ भवेद्धि मोक्षो नियतं सुराणां नैवासुराणां स कथंचन स्यात् ॥ उत्साहयुक्तस्य च तत्प्रतीपं भवेद्धि राहोरिव दुःखरूपं ॥३५॥ कलिः स्वयं ब्रह्मवरादिदानीं विबाधतेस्मांत्सकलाः प्रजाश्च ॥ अज्ञानमिथ्यामतिरूपतोसौ प्रविश्य सज्ज्ञानविरुद्धरूपः ॥ ३६ ॥ त्वदाज्ञया तस्य वरोब्जजेन दत्तः स आविश्य शिवं चकार ॥ कदागमांस्तस्य कुयुक्तिबाधां न हि त्वदन्यश्चरितुं समर्थः ॥ ३७॥ वेदाश्च सर्वे सह शास्त्रसंघा उत्सादितास्तेन न संति तेद्य ॥ तत्साधु भूमाववतीय वेदानुद्धृत्य शास्त्राणि कुरुष्व सम्यक् ॥ ३८॥ अदृश्यमज्ञेयमतर्क्यरूपं कलिं निलीनं हृदयेखिलस्य ॥ सच्छास्त्रशस्त्रेण निहत्य शीघ्रं पदं निजं देहि महाजनस्य ॥ ३९ ॥

थातथेत्यर्थः ॥ ३५ ॥ असावयंकलिःसोयंकलिरित्यर्थः । अज्ञानंअभावरूपज्ञानं । मिथ्यामतिर्विपरीतज्ञानमित्युभयरूपः ॥ ३६ ॥ कदागमान्कुत्सितागमान्तस्यकलेःकुयुक्तीनांबाधांदूषणंचरितुंकर्तुं ॥ ३७ ॥ तेनकलिनातेवेदाद्याःनसंति कदागमैःकृत्वासम्यक्ज्ञानजनकानभवंतीत्यर्थः । यद्यस्मात्तस्मात् साधुभूमौपुण्यहेतुकर्मभुविअवतीर्यअवतारंकृत्वा । सम्यक्शास्त्राणिनिर्णयरूपब्रह्मसूत्रादिशास्त्राणि ॥ ३८ ॥ अदृश्यंदृष्टचगोचरंअतएवअज्ञेयंकुत्राप्यस्तीतिज्ञातुमशक्यंअतर्क्यरूपंयस्यसतथा अनुमानेनएतादृशरूपवानितितर्कितुमशक्यमित्यर्थः । अखिलस्यजगतःहृदयेमनसिनिलीनंगोप्यतयासंतं महाजनस्यभक्तजनस्य ॥ ३९ ॥

अखिलशक्तिपूर्णोहियस्मात्तस्मात्तं निहंताभवंतंऋतेनहि तमोनिहत्यैअज्ञाननाशाय निजबोधःस्वरूपज्ञानंविग्रहोदेहोयस्यसतथातं ॥ ४० ॥ तैःदेवैःअमृतानांक्षयरहितानंदादिगुणानां भूराश्रयःभूमाश्रयोवा विशुद्धंअज्ञानलेशरहितंविज्ञानेनविशेषज्ञानेनघनंपूर्णंस्वरूपंयस्यसतथा । यद्वा विशुद्धेतिविज्ञानविशेषणं आद्यंतरहितत्वंच तस्यार्थःइलायांभुविप्रादुर्बभूवप्रकटोभूत् ॥ ४१ ॥ यथास्यभेप्रादुर्भावःतथाइलायांकिमित्यतआह । वसिष्ठेति । कमलोद्भवात्मजःब्रह्मपुत्रोवसिष्ठनामाअस्यवसिष्ठस्यसुतः शक्तिःशक्तिनामातस्यशक्तिनाम्नःतनयःपुत्रःपराशरः सपराशरःहरिरपिहरिरेवममसुतःस्यादितितपोचरत्हरिःतत्तदभीष्टंददौ ॥ ४२ ॥ उवाचचैनमितिश्लोकचतुष्टयस्यसंबंधः । सुतोषितःपराशरेणतपसासंतोषंप्रापितःसंतुष्टइतियावत् । भगवानएनंपराशरंउवाच किमिति । मदीयस्यमद्भक्तस्यवसोःवसुराजस्यशोभनापुण्यकर्मवतीयासुता

ऋते भवंतं न हि तं निहंता त्वमेक एवाखिलशक्तिपूर्णः ॥ ततो भवंतं शरणं गता वयं तमो निहत्यै निजबोधविग्रहं ॥ ४० ॥ इतीरितस्तैरभयं प्रदाय सुरेश्वराणां परमो प्रमेयः ॥ प्रादुर्बभूवामृतभूरिलायां विशुद्धविज्ञानघनस्वरूपः ॥ ४१ ॥ वसिष्ठनामा कमलोद्भवात्मजः सुतोस्य शक्तिस्तनयः पराशरः ॥ तस्योत्तमं सोपि तपोचरद्धरिः सुतो मम स्यादिति तद्धरिर्ददौ ॥ ४२ ॥ उवाच चैनं भगवान्सुतोषितो वसोर्मदीयस्य सुतास्ति शोभना ॥ वने मृगार्थं चरतोस्य वीर्यं पपात भार्यां मनसा गतस्य ॥ ४३ ॥ तच्छ्येनहस्ते प्रददौ स तस्यै दातुं तदन्येन तु युध्यतो पतत् ॥ जग्रास तन्मत्स्यवधूर्यमस्वसुर्जलस्थमेनां जगृहुस्म दाशाः ॥ ४४ ॥ तद्गर्भतोभून्मिथुनं स्वराज्ञे न्यवेदयन्सोपि वसोः समर्पयत् ॥ पुत्रं समादाय सुतां स तस्मै ददौ सुतोभूदथ मत्स्यराजः ॥ ४५ ॥ कन्या तु सा दाशराजस्य सद्मन्यवर्धतातीव सुरूपयुक्ता ॥ नाम्ना तु सा सत्यवतीति तस्यां तवात्मजोहं भवितास्म्यजोपि ॥ ४६ ॥

अस्ति अतीवअत्यंतसुरूपेणसुंदररूपेणयुक्ताकन्याकेनापिपाणिग्रहणकर्मरहितासादाशानांनाविकानांराज्ञःदाशनायकस्येत्यर्थः । सद्मनिगृहेअवर्धतवृद्धे । सावसुसुतानाम्नासत्यवतीतिप्रसिद्धा अहंअजोपिजन्मरहितोपितस्यांसत्यवत्यांतवात्मजोभविता स्मिभविष्यामीतियोजना । ननु वसुसुतादाशगृहेकिमर्थंअवर्धतेत्यतस्तदुत्पत्तिपूर्वकंकथामाह । वनेति । वनेमृगार्थंमृगहननार्थंचरतोभ्रमतःअस्यवसोःवीर्यंरेतःपपातस्कंदितं कथंभूतस्यभार्यांमनसागतस्यप्राप्तस्य सराजातस्यैभार्यायैतद्वीर्यंदातुंश्येनस्यपक्षिविशेषस्यहस्तेप्रददौ अन्येनश्येनेनयुध्यतःयुद्धंकुर्वतःवसुराजस्यश्येनात् तद्वीर्यंअपततयमुनाजलेइतिशेषः । मत्स्यवधूःमीनस्त्रीयमस्वसुर्यमुनायाःजलस्थतद्वीर्यंजग्रास

एनांमत्स्यवधूंदाशाःजगृहुः तस्याःमत्स्यवध्वाःगर्भतःमिथुनंकन्यापुत्रात्मकंयुग्मंअभूत् । स्वराज्ञेस्वस्वामिनेदाशायन्यवेदयन्समर्पयामासुः दाशाःमिथुनमितिशेषः । सोपिदाशनायकःवसोःसमर्पयत् सवसुःस्वयंपुत्रंसमादायसुतांतस्मैदाशनायकायददौ । सुतःवसुसुतःमत्स्याख्योराजाअभूदितिचतुःश्लोकान्वयः ॥४३॥४४॥४५॥४६॥ मुनिःसमुद्रगांसमुद्रगामिनीं मार्तंडःसूर्यःतस्यसुतांयमुनांउत्तारयंतींउडुपेनजनान्परकूलंप्रापयंतींतांसत्यवतींजगामरमयामासेत्यर्थः। अथरमणानंतरं तत्रतस्यांविशुद्धचिता सज्ज्ञानेनघनःपूर्णइत्यर्थः॥४७॥ ननु पराशरात्सत्यवत्यांप्रादुर्बभूवेतिकिमर्थमुक्तं लोकवत्शुक्ररक्तसंबंधादुत्पन्नइतिकिंनस्यादित्यतआह । विदोषेति । विदोषेनिर्दुष्टेविज्ञान सुखेएकंकेवलंरूपंयस्यसतथा । अजोपिजन्मरहितोपिजनानयोग्यजनान्मोहयितुं मृषैवपुंसःपुरुषाद्योषित्सुस्त्रीषुअजनीवउत्पन्नइवदृश्यते हियस्मात्तस्मात् बलादयःबल ज्ञानानंदादयोगुणाःविग्रहोदेहोयस्यसतथा एतादृशोहरिःक्वापिकस्मिंश्चिदप्यवतारइत्यर्थः । नजायते ॥४८॥ उक्तार्थंदृष्टांतपूर्वकमाह । यथेति । तथानृसिंहरूपवत्विभुः

इतीरितश्चक्रधरेण तां मुनिर्जगाम मार्तंडसुतां समुद्रगां ॥ उत्तारयंतीमथ तत्र विष्णुः प्रादुर्बभूवाशु विशुद्धचिद्घनः ॥ ४७ ॥ विदोषविज्ञानसुखैकरूपोप्यजो जनान्मोहयितुं मृषैव ॥ योषित्सु पुंसो ह्यजनीव दृश्यते न जायते क्वापि बलादिविग्रहः ॥ ४८ ॥ यथा नृसिंहाकृतिराविरासीत्स्तंभात्तथा नित्यतनुत्वतो विभुः ॥ आविर्भवेद्योषिति नो मलोत्थस्तथापि मोहाय निदर्शयेत्तथा ॥ ४९ ॥ स्त्रीपुंप्रसंगात्परतो यतो हरिः प्रादुर्भवत्येष विमोहयन् जनं ॥ अतो मलोत्थोयमिति स्म मन्यते जनो शुभः पूर्णगुणैकविग्रहं ॥ ५० ॥ द्वीपे भगिन्याश्च यमस्य विश्वकृत्प्रकाशते ज्ञानमरीचिमंडलः ॥ प्रभासयन्नंडबहिस्तथांतः सहस्रलक्षामितभानुदीधितिः ॥ ५१ ॥ ॥

सर्वत्रव्यापकोहरिःनित्याअविनाशीतनुःस्वरूपंयस्यसतथा । नित्यतनोर्भावःनित्यतनुत्वं । तद्धेतोःयोषितिस्त्रियामाविर्भवेत् मलोत्थोनो शुक्रशोणिताख्यमलादुत्पन्नोनेत्यर्थः। यद्यपितथापितथामलोत्थवत् ॥ ४९ ॥ मोहकारणंदर्शयति । स्त्रीति । स्त्रियःपुंसइतिउभयोःप्रसंगात्संबंधात् परतःसंबंधोत्तरकालेयतःकारणाद्देवोहरिः अतःकारणादयंह रिः मलोत्थइतिअशुभोजनःपापजनःमन्यतेस्मजानाति ॥ ५० ॥ प्रादुर्भावस्थलकथनपूर्वकंहरेर्जननाभावद्योतकदृष्टांतंदर्शयति । द्वीपइत्यादिना । विश्वकृत्सर्वजगज्ज नकइत्यर्थः । ज्ञानानिमरीचयइवतेषांमंडलंसमूहोयस्यसतथा । अंडस्यबहिस्तथा । अंतःअंडांतःप्रभासयन्प्रकाशयन् । सहस्रलक्षामिताश्चतेभानवश्चतथा तेषांदीधितिं रिवदीधितिर्दीप्तिर्यस्येतिसतथा । यमस्यभगिन्याःद्वीपेजलावृतप्रदेशेप्रकाशतेसहस्रलक्षामितेति । नीचमध्योत्तमाधिकारियोग्यतामपेक्ष्योक्तमित्यवगंतव्यं ॥ ५१ ॥

अवतीर्णस्यहरेःस्वरूपंसामर्थ्यंचवर्णयति । अगण्येत्यादिना । अगण्याःदिव्याःलोकविलक्षणाःउरवःउत्तमाःयेगुणास्तैःअर्णवइवार्णवःप्रभवत्यस्माज्जगदितिप्रभुःसमर्थो वा । जगतांईश्वराणांब्रह्मादीनांईश्वरःस्वामी समस्तदोषेभ्यःअतिविदूरःविग्रहोयस्यसतथा ॥ ५२ ॥ शुभमरकतवत्शुद्धेंद्रनीलरत्नवत्वर्णोयस्यसतथा । पादाब्जेचनेत्रेचअधरःअधरोष्ठश्चकरौचनखानिचरसनायाःजिव्हायाः ‘रसज्ञारसनाजिव्हे’त्यमरः अग्रंचरक्तानिआरक्तानिपादाब्जादीनियस्यसतथा । चक्रंचशंखश्चअब्जंपद्मंच तद्वत्रेखायस्यसतथा । हस्तपादेषुचक्रादिवद्रेखाःसंतीतिभावः । वराश्चतेकराश्चेतिकरवराः । रवेःश्रेष्ठकिरणाःतद्वद्गौरं यद्वा रविकरवदुत्तमगौरवर्णं ऐणंएणसंबंधिचर्मवसानःदधानः । ‘एणःकुरंगोहरिण’ इतिहलायुधः ॥ तडिद्वत्विद्युद्वत्अमलजटाभिःसंदीप्ताचूडाशिखायस्मिन्मूर्ध्निसतथा तंमूर्धानंदधानःमूर्ध्निपरिवर्तमानाभिःजटाभिः

अगण्यदिव्योरुगुणार्णवः प्रभुः समस्तविद्याधिपतिर्जगद्गुरुः ॥ अनंतशक्तिर्जगदीश्वरेश्वरः समस्तदोषातिविदूरविग्रहः ॥ ५२ ॥ शुभमरकतवर्णो रक्तपादाब्जनेत्राधरकरनखरसनाग्रश्चक्रशंखाब्जरेखः ॥ रविकरवरगौरं चर्मचैणं वसानस्तडिदमलजटासंदीप्तचूडं दधानः ॥ ५३ ॥ विस्तीर्णवक्षाः कमलायताक्षो बृहद्भुजः कंबुसमानकंठः ॥ समस्तवेदान्मुखतः समुद्गिरन्ननंतचंद्राधिककांतिसन्मुखः ॥ ५४ ॥ प्रबोधमुद्राभयदोर्द्वयान्वितो यज्ञोपवीताजिनमेखलोल्लसन् ॥ दृशा महाज्ञानभुजंगदष्टमुज्जीवयानो जगदत्यरोचत ॥ ५५ ॥ स लोकधर्माभिरिरिक्षया पितुर्द्विजत्वमप्याशु पितुर्ददौ निजं ॥ ज्ञानं तयोः संस्मृतिमात्रतः सदा प्रत्यक्षभावं वरमात्मनो ददौ ॥ ५६ ॥ ॥

दीप्यमानांमध्यशिखांदधानइतिभावः । ‘शिखाचूडाकेशपाशी’त्यमरः ॥ ५३ ॥ कंबुनाशंखेनसमानःकंठोयस्यसतथा । रेखात्रयोपेतमध्योन्नतकंठइत्यर्थः । सम्यक् उद्गिरन्उदीरयन्अनंतचंद्रेभ्यःअधिकाकांतिर्यस्यतत्तथा । तच्चतत्सन्निर्दुष्टंमुखंयस्यसतथा ॥ ५४ ॥ प्रबोधमुद्राज्ञानमुद्राअभयंअभयमुद्रातेयस्मिन्तत्तथा । तच्चतत् दोर्द्वयंचहस्तद्वयंतेनअंकितःचिन्हितः अन्वितइतिवापाठः । मेखलामौंजी यज्ञोपवीतादिभिःउल्लसन्शोभमानं दृशाप्रसन्नदृष्ट्या महाऽज्ञानाख्यभुजंगेनसर्पेणदष्टंजगत्भक्तसमूहमित्यर्थः । उज्जीवयतीत्युज्जीवयानःश्रीवेदव्यासः अत्यरोचत स्मादिसर्वमतिक्रम्यशुशुभे दृशामहाज्ञानेत्यनेनसामर्थ्यंदर्शितं ॥ ५५ ॥ सव्यासःरिरिक्षयारक्षणेच्छयानिजंज्ञानंददौ तयोर्मातापित्रोःसंस्मृतिमात्रतःभक्तिपूर्वकस्मरणमात्रादेव सदाआत्मनःप्रत्यक्षभावंस्वरूपगोचरप्रत्यक्षत्वंवरंददौ ॥ ५६ ॥ ॥

अनुगम्यमानःअनुगतःयथाआदिसृष्टौब्रह्मणेवेदादिविद्याः यथोपदिदेशतथेत्यर्थः ॥ ५७ ॥ तथैववेदानुसारेणशास्त्राणिकृत्वा विनिर्णयंविशेषनिर्णयोयस्मिन्तत्तथाब्रह्म सूत्रंचकार तस्माद्व्यासात्तत्ब्रह्मसूत्रं ॥ ५८ ॥ समस्तशास्त्रार्थस्यनिदर्शनात्मकंदृष्टांतरूपंवेदेभ्यःउत्तमं तन्महाभारतंतस्यवेदव्यासस्यमुखतः ॥ ५९ ॥ गिरीशादीनांरुद्रा दिदेवानांमनःसु अनुशेतेसतथा । वसतीत्यर्थः कालिर्भगवन्मुखेनश्रीवेदव्यासमुखेनईरितैःप्रयुक्तैःसुवाङ्मयैःवेदभारतब्रह्मसूत्रादिसद्वाक्यात्मकैः शरैःनिकृंतंछिन्नंशीर्षंशिरो यस्यसतथा । ममारमृतइवाभूत् । सुराःसज्ज्ञानंसमीचीनज्ञानं सुधारसइवतंपपुः ॥ ६० ॥ अथोदेवमनसःनिर्गमनानंतरं मनुष्येषुत्रिविधमनुष्येषुतथाअसुरेषुरूपांतरैःरू

द्वैपायनः सोथ जगाम मेरुं चतुर्मुखाद्यैरनुगम्यमानः ॥ उद्धृत्य वेदानखिलान्सुरेभ्यो ददौ मुनिभ्यश्च यथादिसृष्टौ ॥ ५७ ॥ सर्वाणि शास्त्राणि तथैव कृत्वा विनिर्णयं ब्रह्मसूत्रं चकार ॥ तच्छुश्रुवुर्ब्रह्मगिरीशमुख्याः सुरा मुनीनां प्रवराश्च तस्मात् ॥ ५८ ॥ समस्तशास्त्रार्थनिदर्शनात्मकं चक्रे महाभारतनामधेयं ॥ वेदोत्तमं तच्च विधातृशंकरप्रधानकैस्तन्मुखतः सुरैः श्रुतं ॥ ५९ ॥ अथो गिरीशादिमनोनुशायी कलिर्ममाराशु सुवाङ्मयैः शरैः ॥ निकृंतशीर्षो भगवन्मुखेरितैः सुराश्च सज्ज्ञानसुधारसं पपुः ॥ ६० ॥ अथो मनुष्येषु तथा सुरेषु रूपांतरैः कलिरेवावशिष्टः ॥ ततो मनुष्येषु च सत्सु संस्थितो विनाश्य इत्येव हरिर्विचिंतयत् ॥ ६१ ॥ ततो नृणां कालबलात्सुमंदमायुर्मतिं कर्म च वीक्ष्य कृष्णः ॥ विव्यास वेदान्स विभुश्चतुर्धा चक्रेतथा भागवतं पुराणं ॥ ६२ ॥ ये ये च संतस्तमसानुविष्टास्तांस्तान्सुवाक्यैस्तमसो विमुंचन् ॥ चचार लोकान्स पथि प्रयांतं कीटं व्यपश्यत्तमुवाचकृष्णः ॥ ६३ ॥

पविशेषैःकलिरवशिष्टएव ततःअवशिष्टत्वात्सत्सुमनुष्येषुमनुष्योत्तमेषु संस्थितःकलिर्विनाश्यःमयानाशनीयइतिहरिःव्यासःअचिंतयत् ॥ ६१ ॥ ततःविभुःसकृष्णःव्यासःनृणांकालबलात् युगसामर्थ्येनसुमंदं अत्यल्पं । आयुःमतिंप्रज्ञांकर्मवर्णाश्रमोचितकर्माचरणंचवीक्ष्यविचार्य वेदान्मूलवेदान् चतुर्धाऋगादिचतुःप्रकारभेदेनविभागान्चकार पुराणंचक्रे ॥ ६२ ॥ सव्यासःतमसाअज्ञानेन सुवाक्यैःब्रह्मपुत्रादिसूक्तनिर्णयरूपसद्वाक्यैः तमसःअज्ञानात्लोकान्सज्जनाक्रांतप्रदेशान्चचार कृष्णःपथिप्रयांतंगच्छंतंकीटकंकंचन कीटस्वरूपंप्राप्तंपुरुषंअपश्यत् तंकीटंउवाच ॥ ६३ ॥ ॥ ॥ ॥

किमिति । कुशरीरंनिंद्यदेहंअसौकीटःतद्देहसंत्यजनंतंकीटंनृपतिंचकार नृपतिकरणेहेतुमाह । पुरेति । तद्दर्णमप्याह । वृषलमिति । वृषलंशूद्रंभक्तस्यकीटयोनिप्राप्तौका रणमाहसुलुब्धमिति । अतिलोभाख्यदोषयुक्तमित्यर्थः ॥ ६४ ॥ तंकीटस्वरूपंराजानंयथावैश्याःवलिष्ठस्यराज्ञःकरंददतितथा । अस्यकीटस्वरूपराजस्येत्यर्थः ॥६५॥ तंकीटंयद्यपिसमर्थःतथापिसीमार्थंस्वभावतःचतुर्वर्णजीवेषुयःस्वभावतोब्राह्मणस्तस्यब्राह्मणजन्मन्येवमुक्तिरितिमर्यादामाभिरक्षितुमित्यर्थः ॥ ६६ ॥ तस्मैकीटायसर्वांम हींचक्रवर्तित्वमित्यर्थः । तदंतेराज्यांतेतनुंकीटदेहंत्यक्त्वाविसृज्य विप्रवरत्वंब्राह्मणोत्तमत्वंएत्य तत्रापिसुतत्ववेदीहरिस्वरूपाभिज्ञस्वभावःसन् हरेःपदंस्थानंआप ॥ ६७ ॥ एवंकीटवत्बहून्स्वभक्तान्संसृतिबंधतःसंसारबंधनात् तस्यश्रीवेदव्यासस्यअशेषदेवेशैःब्रह्माद्यैःसदासंसारेमुक्त्यवस्थायांउदितानिउपात्तानीत्यर्थः । तथाप्यचिंत्यानिमन

भवस्व राजा कुशरीरमेतत्त्यक्त्वेति नैच्छत्तदसौ ततस्तं ॥ अत्यक्तदेहं नृपतिं चकार पुरा स्वभक्तं वृषलं सुलुब्धं ॥ ६४ ॥ लोभात्स कीटत्वमुपेत्य कृष्णप्रसादतश्चाशु बभूव राजा ॥ तदैव तं सर्वनृपाः प्रणेमुर्ददुः करं चास्य यथैव वैश्याः ॥ ६५ ॥ उवाच तं भगवान् मुक्तिमास्मिन् तव क्षणे दातुमहं समर्थः ॥ तथापि सीमार्थमवाप्य विप्रतनुं विमुक्तो भव मत्प्रसादात् ॥६६॥ ज्ञानं च तस्मै विमलं ददौ सः महीं च सर्वां बुभुजे तदंते ॥ त्यक्त्वा तनुं विप्रवरत्वमेत्य पदं हरेराप सुतत्ववेदी ॥ ६७ ॥ एवं बहून्संसृतिबंधतः प्रभुर्व्यमोचयद्व्यासतनुर्जनार्दनः ॥ बहून्यचिंत्यानि च तस्य कर्माण्यशेषदेवेशसदोदितानि ॥ ६८ ॥ अथास्य पुत्रत्वमवाप्तुमिच्छंश्चचार रुद्रः सुतपस्तदीयं ॥ ददौ च तस्मै भगवान्वरं तं स्वयं च तप्त्वेव तपो विमोहयन् ॥ ६९ ॥ विमोहनायासुरसर्गिणां प्रभुः स्वयं करोतीव तपः प्रदर्शयेत् ॥ कामादिदोषांश्च मृषैव दर्शयेन्न तावता तस्य हि संति कुत्रचित् ॥ ७० ॥

सास्मंतुंअशक्यानिबहूनिकर्माणिसंतीतिशेषः ॥ ६८ ॥ अस्यव्यासस्यतदीयंव्याससंबंधिसुतपःमहत्तपःभगवान् तस्मैरुद्रायतंवरंस्वपुत्रत्वप्राप्तिरूपंवरंददौ किंकृत्वा स्वयं तपस्तप्त्वारुद्रंपुत्रंप्रापेतिविमोहयन्दैत्यानितिशेषः । स्वयंव्यासःतपःशैवंतपःतप्त्वेवरुद्रःममपुत्रोभवेदिति तथैववरंददावितिसंबंधः ॥६९॥ व्यासःएवमन्यत्रापितथावतारांतरेपितपःकरोतीवप्रदर्शयतीत्याह । विमोहनायेति । असुरसर्गिणांदैत्यसृष्टिमतां । 'सर्गस्वभावनिर्मोकनिश्चयाध्यायसृष्टिष्वि'त्यमरः । विमोहनायविपरीतज्ञानार्थंकमादिदोषान्पुत्रेच्छादिदोषान् मृषैवअविद्यमानानेवेत्यर्थः । दर्शयेत्तावता दर्शनमात्रादेव तेदोषाःतस्यहरेःकुत्रचिद्देशेकालेपिनसंतीतिहिनिर्णयग्रंथेषुप्रसिद्धिः ॥ ७० ॥

ततःरुद्रःममपुत्रोभवेदितिवरप्रदानात्अरण्योःअग्निमथनकाष्ठयोःअस्यव्यासस्यपुत्रः ननु अरण्योरुत्पन्नस्यशुकनामधेयत्वंकुतइत्यतआह । शुकीति । घृताचीघृताचीतिनामवतीअप्सराःशुकीभूत्वाशुकपाक्षिरूपंधृत्वेत्यर्थः । अरणींविमथ्नंतंतंव्यासंअगमत्प्राप ॥ ७१ ॥ उतअनंतरं अकामयन्अपेक्षारहितोव्यासःकामुकवत्स्त्रैणपुरुषवत्भूत्वा तयाघृताच्याअर्थितःस्वयंशुकीरूपवत्याःममनामधेयोभवेदितिप्रार्थितःव्यासः अरण्योस्तनयंसृष्ट्वाउत्पाद्यतत्वमार्गेषुअयोग्यान्दैत्यान्विमोहयन् तंअरण्योरुत्पन्नंपुत्रंशुकनामधेयंचक्रे ॥ ७२ ॥ सर्वज्ञानंसर्वविषयज्ञानं सभारतंभागवतंपुराणंभागवताख्यपुराणंअस्यवायोःशुकस्यवा व्यासमुखाच्छ्रोतुंमुख्याधिकारीवायुरेवेतिभावः ॥ ७३ ॥ व्यासस्यमुखादुपदेशंप्राप्तुंदेवानामेवयोग्यतानुसारेणमुख्याधिकारइतिसूचयितुं देवाःमुनीन्प्राविशन्नित्याह । शेषइति । अथशब्दःप्रकारांतरेणउपदेशारंभःतदोपदेशकालेवीशोगरुडःसुमंतुंऋषिंवारुणिंमुनिमपिवरुणपुत्रंभृगुऋषिमपिइत्युभावपिआविशत् ब्रह्मातमुतगरुडाविष्टवारुणिमुनिमपिवैशंपायनऋषिंचेत्युभावपिआविशत् विभुःशक्रःजैमिनिऋषिंआविशत् ॥ ७४ ॥ देवानांऋषिप्रवेशनेकारणांतरमाह । कृष्णस्येति । परिसेवनेपरिचर्यायांउत्सुकाःउत्कंठावंतःतान्पैलादीन् असौव्यासःतेषुदेवेषुमुनिषुवापुनःविद्याप्रतिपादनानंतरं । हरिःतान्शेषाद्याविष्टान्पैलादीन्प्रवर्तकान् भूरादिलोकेषुविद्याप्रवर्तकान्विदधेचक्रे ॥ ७५ ॥ कंकस्यकुत्रप्रवर्तकंचक्रइत्यतआह । ऋचामित्यादिना । सप्तशाखाभेदादृचामितिसर्वत्रबहुवचनं । ऋचांऋग्वेदस्यपैलंप्रवर्तकंचक्रेइतिसर्वत्रानुषंगः । षडशीतिभेदाद्यजुषांसहस्रभेदात्साम्नांनवभेदादथर्वांगिरसामितिसर्वत्रबहुवचनं । यजुषांयजुर्वेदस्यकृष्णत्वशुक्लत्वेभेदेनद्वैविध्यात्कृष्णयजुषांवैशंपायनंशुक्लयजुषांसूर्यंप्रवर्तकंचक्रइतिविभागः । तत्रोभयेषांसाम्यादेकंवैशंपायनंद्वितीयंसूर्यंचक्रइत्युक्तिर्घटते ॥ ७६ ॥ ॥ ॥ ॥ ॥

ततस्त्वरण्योरुस बभूव पुत्रकः शिवस्य सोभूच्छुकनामधेयः ॥ शुकी हि भूत्वा ह्यगमद्घृताची व्यासं बिमथ्नंतमुतारणीं तं ॥ ७१ ॥ अकामयन्कामुकवत्स भूत्वा तयार्थितस्तं शुकनामधेयं ॥ चक्रे ह्यरण्योस्तनयं च सृष्ट्वा विमोहयंस्तत्वमार्गेष्वयोग्यान् ॥ ७२ ॥ शुकं तमाशु प्रविवेश वायुर्व्यासस्य सेवार्थमथास्य सर्वं ॥ ज्ञानं ददौ भगवान् सर्ववेदान् सभारतं भागवतं पुराणं ॥ ७३ ॥ शेषोथ पैलं मुनिमाविशत्तदा वीशःसुमंतुमपि वारुणिं मुनिं ॥ ब्रह्माविशत्तमुत वैशंपायनं शक्रश्च जैमिनिमथाविशद्विभुः ॥ ७४ ॥ कृष्णपादपरिसेवनोत्सुकाः सुरेश्वरा विविशुराशु तान्मुनीन् ॥ समस्तविद्याः प्रतिपाद्य तेष्वसौ प्रवर्तकांस्तान्विदधे हरिः पुनः ॥ ७५ ॥ ऋचां प्रवर्तकं पैलं यजुषां च प्रवर्तकं ॥ वैशंपायनमेवैकं द्वितीयं सूर्यमेव च ॥ ७६ ॥ ॥ ॥ ॥

साम्नांसामवेदस्यजैमिनिं अथर्वांगिरसांअथर्वणवेदस्यसुमंतुंसुमंतुमपिसुमंतौआविष्टंगरुडं ॥ ७७ ॥ मानुषेषुभारतस्यापिशुक्लयजुषांप्रवर्तकंवैशंपायनं भारतस्यापिप्रवर्तनेतमेवादिशदित्यर्थः । उभयप्रवर्तकोवैशंपायनइतिभावः । गंधर्वादिषुआदिपदेनसिद्धचारणादयः आत्मजंशुकंभारतस्यप्रवर्तनेआदिशदितिशेषः । नारदंभारतंपाठयित्वा उपदेश्येत्यर्थः । देवलोकप्रवृत्तयेदेवलोकप्रवृत्त्यर्थमदिशत् सव्यासःरोमांचात्स्वरोमकूपात् रोमहर्षणंससृजे ॥ ७८ ॥ तंरोमहर्षणंकृत्स्नस्यसर्वशास्त्रसमूहस्येत्यर्थः । कृत्स्नस्यपंचरात्रस्येतिवासंबंधः ॥ ७९ ॥ कृष्णसेवायांसमुत्सुकःअत्युत्कंठायुक्तःतंरोमहर्षणंतस्मैकामदेवायरोमहर्षणायवा ॥ ८० ॥ सनत्कुमारःप्रमुखोयेषांतेसनकसनंदनादीनांतान्योगशास्त्रस्यप्रवर्तकान् भृग्वादीनांअमलंसंशयरहितंशुभंज्ञानंहरिस्वरूपप्रकाशकंज्ञानंदत्वा कर्मयोगस्यप्रवर्तकान् भृग्वादीन्चक्रे ॥ ८१ ॥ क

चक्रेथ जैमिनिं साम्नामथर्वांगिरसामपि ॥ सुमंतुं भारतस्यापि वैशंपायनमादिशत् ॥ ७७ ॥ प्रवर्तने मानुषेषु गंधर्वादिषु चात्मजं ॥ नारदं पाठयित्वा च देवलोकप्रवृत्तये ॥ ७८ ॥ आदिशत्ससृजे सोथ रोमांचाद्रोमहर्षणं ॥ तं भारतपुराणानां महारामायणस्य च ॥ ७९ ॥ पंचरात्रस्य कृत्स्नस्य प्रवृत्त्यर्थमथादिशत् ॥ तमाविशत्कामदेवः कृष्णसेवासमुत्सुकः ॥ ८० ॥ स तस्मै ज्ञानमखिलं ददौ द्वैपायनः प्रभुः ॥ सनत्कुमारप्रमुखांश्चक्रे योगप्रवर्तकान् ॥ ८१ ॥ भृग्वादीन् कर्मयोगस्य ज्ञानं दत्वामलं शुभं ॥ जैमिनिं कर्ममीमांसाकर्तारमकरोत्प्रभुः ॥ ८२ ॥ देवमीमांसकाद्यंतं कृत्वा पैलमथादिशत् ॥ शेषं च मध्यकरणे पुराणान्यथ चाकरोत् ॥ ८३ ॥ शैवान्पाशुपतांश्चक्रे संशयार्थं सुरद्विषां ॥ वैष्णवान्पंचरात्रांश्च यथार्थज्ञानसिद्धये ॥ ८४ ॥ ॥ ॥

र्ममीमांसायाःकर्तारं जैमिनिनावा कर्ममीमांसाकृतेतिभावः ॥ ८२ ॥ देवमीमांसकायाःआद्यंतमित्यत्रैकवद्भावः । आद्यंतभागौकृत्वास्वयंव्यासइतिशेषः । अथअनंतरं मध्यकरणेदेवमीमांसकायाःमध्यभागंकर्तुमित्यर्थः । पैलंऋषिंशेषंचपैलाविष्टंशेषंचआदिशत् । एवंऋषिंऋष्याविष्टदेवमितिसर्वत्रज्ञातव्यं । अथपुराणानिअकरोत् ॥ ८३ ॥ पुराणानांमूलंदर्शयति । शैवानित्यादिना । पाशुपतान् पाशुपतागमान् शैवान् शिवसर्वोत्तमत्वप्रतिपादकतामसपुराणग्रंथसंग्रहान् संशयार्थंविपरीतज्ञानार्थं । पंचरात्रान्वैष्णवान् विष्णोःसर्वोत्तमत्वप्रतिपादकान्सात्विकपुराणग्रंथसंग्रहान् ॥ ८४ ॥ ॥ ॥

वेदतःप्रतीयमानकर्मादिप्रतिपादकार्थवेदानुसारेणत्राह्मान्राजसपुराणग्रंथसंग्रहांश्चक्रे संशयार्थमितिशेषः । एवमनेनप्रकारेणदेवादिमानुषांताःहरिभक्ताःपुनःवैवस्वतमन्वंतरप्रथमद्वापरापेक्षयापंचविंशतिद्वापरेयुगेकृतव्यासावतारापेक्षयाच पुनःअष्टाविंशतिद्वापरेज्ञानंप्रापुः । व्यासादितिशेषः । देवाःपुनःपृथगाविष्टरूपेणचाविशेषज्ञानंप्रापुः ऋषयोमनुष्याश्चगातमशापात्नष्टज्ञानाःपुनर्ज्ञानंप्रापुरितिभावः ॥ ८५ ॥ तेपूर्वोक्तादेवादयःकृष्णद्वैपायनात्श्रीवेदव्यासात्ज्ञानंप्राप्य सदाइहामुत्रेत्यर्थःमुमुदुः ॥ ८६ ॥ व्यासावतारलीलांसंक्षेपादुक्त्वा उपसंहरति । समस्तेति । विज्ञानेनमहादिवाकरःअभिनवसूर्योव्यासःसमस्तविज्ञानानिसर्वविशेषज्ञानानितान्येवगभस्तयःकिरणाःतासांच

ब्राह्मांश्च वेदतश्चक्रे पुराणग्रंथसंग्रहान् ॥ एवं ज्ञानं पुनः प्रापुर्देवाश्च ऋषयस्तथा ॥ ८५ ॥ सनत्कुमारप्रमुखा योगिनो मानुषास्तथा ॥ कृष्णद्वैपायनात्प्राप्य ज्ञानं ते मुमुदुः सदा ॥ ८६ ॥ समस्तविज्ञानगभस्तिचक्रं वितायविज्ञानमहादिवाकरः ॥ निरस्य चाज्ञानतमोजगत्ततं प्रभासते भानुरिवावभासयन् ॥ ८७ ॥ चतुर्मुखेशानसुरेंद्रपूर्वकैः सदा सुरैः सेवितपादपल्लवः ॥ प्रकाशयंस्तेषु सदात्मगुह्यं मुमोद मेरौ च तथा बदर्यां ॥ ८८ ॥ इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते श्रीमहाभारततात्पर्यनिर्णये व्यासावतारकथानिरूपणोनाम दशमोध्यायः ॥ ॥ १० ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥ ॥ ॥

क्रंसमूहंवितायविस्तार्य जगतिततंव्याप्तंअज्ञानाख्यंतमोंधकारंनिरस्यतिरस्कृत्य भानुरिवाभासयन्सज्ज्ञानेनप्रकाशयन्जगदितिशेषः । प्रभासतेउत्कृष्टत्वेनप्रकाशते ॥८७॥ तेषुचतुर्मुखादिषुआत्मगुह्यंस्वसंबंधिगुणादिरहस्यंप्रकाशयन् मेरौतथाबदर्यांमुमोदेत्यखिलमतिमंगलं ॥ ८८ ॥ यंगंगाजमद० पूर्तितस्यकृतौसदैवदशमोध्यायःसतां० ॥ १० ॥ इति श्रीमन्महाभारत तात्पर्यनिर्णयटीकायां पदार्थदीपिकायां व्यासावतारवर्णनंनाम दशमोध्यायः ॥ १० ॥ ॥ श्रीकृष्णार्पणमस्तु ॥



श्रीगुरुभ्योनमः ॐ क्रमप्राप्तांश्रीकृष्णपांडवकथांवक्तुंतदुपयुक्तंसोमवंशमाह । शशांकेत्यादिना । अत्रिस्तुब्रह्मणःपुत्रःशशांकस्तत्सुतःस्मृतः । शशांकपुत्रोबुधःतस्मात् पुरूरवाःतस्यपुरूरवसःआयुःआयोर्नहुषःनहुषस्ययया‌तिःतस्यययातेःपत्नीयुगुलंआस । 'असगतिदीप्त्यादानेष्वि'त्यस्यलिटिरूपं द्वेस्त्रियौबभूवतुरित्यर्थः । पंचसुताश्चाभव न्कथंभूताः विष्णुपदेएकभक्ताःमुख्यभक्ताः ॥ १ ॥ पत्नीयुगुलंपंचसुताइत्युक्तंतर्हि एकस्याःद्वौपुत्रौअन्यस्याःद्वौपुत्रौएकस्तूभयोःपुत्रःयथादेवकीरोहिणीजोबलभद्रःत थाकिमित्यतआह।यदुमित्यादिना । शुक्रकन्यानाम्नादेवयानीययातिभार्यायदुंचतुर्वसुंचेत्युभौव्यजायत जनयामास । वार्षपर्वणीवृषपर्वणोदानवस्यपुत्रीनाम्नाशर्मिष्टाययातिभार्या द्रुह्यंचानुंचपूरुंचेतित्रीन्पुत्रान्अजायतेत्यनुवर्तते ॥ २ ॥ तत्रतावद्यदुवंशमाह । यदोरित्यादिना । योगवीर्यवानणिमाद्यष्टयोगवीर्यवान् ॥ ३ ॥ तस्यकृतवीर्य

ॐ शशांकपुत्रादभवत्पुरूरवास्तस्यायुरायोर्नहुषो ययातिः ॥ तस्यास पत्नीयुगुलं सुताश्च पंचाभवन्विष्णुपदैकभक्ताः ॥ १ ॥ यदुं च तुर्वसुं चैव देवयानी व्यजायत ॥ द्रुह्यं चानुं च पूरुं च शर्मिष्ठा वार्षपर्वणी ॥ २ ॥ यदोर्वंशे चक्रवर्ती कार्तवीर्यार्जुनोऽभवत् ॥ विष्णोर्दत्तात्रेयनाम्नः प्रसादाद्योगवीर्यवान् ॥ ३ ॥ तस्यान्ववाये यदवो बभूवुर्विष्णुसंश्रयाः ॥ पुरोर्वंशे तु भरतश्चक्रवर्ती हरिप्रियः ॥ ४ ॥ तद्वंशजः कुरुर्नाम प्रतीपोऽभूत्तदन्वये ॥ प्रतीपस्याभवन्पुत्रास्त्रयस्त्रेताग्निवर्चसः ॥ ५ ॥ देवापिरथ बाल्हीकः गुणज्येष्ठश्च शंतनुः ॥ त्वग्दोषयुक्तो देवापिर्जगाम तपसे वनं ॥ ६ ॥ विष्णोः प्रसादात्स कृते युगे राजा भविष्यति ॥ पुत्रिका पुत्रतां यातो बाल्हीको राजसत्तमः ॥ ७ ॥

पुत्रार्जुनस्यअन्ववायेवंशे विष्णुःकृष्णःसंश्रयःमुख्याश्रयोयेषांयदवोयादवाः अथपुरुवंशमाह । पुरोरिति ॥ ४ ॥ तस्यभरतस्यवंशजःतस्यकुरोःअन्वयेवंशे प्रतीपोराजात्रेताग्नीनांआहवनीयगार्हपत्यदक्षिणाग्नीनांवर्चइववर्चःतेजःकांतिर्येषांतेतथा । 'तेजःपुरीषयोर्वर्च'इत्यमरः । 'दक्षिणाग्निर्गार्हपत्याहवनीयास्त्रयोग्नयः । अग्नित्रयमिदंत्रेते'त्य मरः ॥ ५ ॥ तेषांनामानिउत्पत्तिक्रमंचाह । देवापिरिति । देवापिर्जैष्ठः अथदेवाप्यनंतरं बाल्हीकश्चानंतरं शंतनुः कथंभूतःशंतनुः गुणज्येष्ठःदेवापिबाल्हीकाभ्यांज्ञान भक्त्यादिगुणैरुत्तमः नतुवयसा गुणज्येष्ठइत्यनेनशंतनुर्ज्येष्ठइतिग्रंथांतरविरोधःपरिहृतः तेषांप्रवृत्तिमाह । त्वगिति । त्वग्दोषेणकुष्टेनयुक्तः॥ ६ ॥ पुत्रिकापुत्रतांमातामह पुत्रत्वंयातः पुत्रिकापुत्रत्वलक्षणं अन्यत्रोक्तं । 'अपुत्रेणमयाकन्यादीयतेतवभोवर । एतस्यांजायतेपुत्रःसमेपुत्रोभविष्यती'ति ॥ ७ ॥ ॥

सपूर्वकइत्यतआह । हिरण्यकशिपोरिति । प्रल्हादइत्यर्थः । बाल्हीकस्यमूलस्वरूपंउक्त्वा तत्सामर्थ्यंचाह । वायुनेति । यतोवायुनासमाविष्टःअतएवमहाबलः ॥ ८ ॥ महाबलत्वंदर्शयति । येनेति । जायमानेनयेनैवबाल्हीकेनैवतरसाबलेन तरसीबलरंहसीत्यमरः । उक्तंचसभापर्वणि । 'वरदंस्तुहिबाल्हीकमिमंपार्थिवसत्तमं । जायमानेनयेनेयमभवद्दारितामही । प्रल्हादःकिंकर्तुंजातइत्यतआह । भूभारेति । सःप्रल्हादःभुवःभाररूपदैत्यसमूहस्यक्षपणेनिरसनकर्मणि विष्णोःश्रीकृष्णस्यअंगतांसहायत्वं प्राप्तुमेवप्रतीपस्यपुत्रतांप्राप्य बाल्हीकेषुविषयेषुपतिःराजाअभवत् । मातामहपुत्रत्वादितिशेषः ॥ ९ ॥ अस्यबाल्हीकस्यात्मजःसोमदत्तः सपूर्वरुद्रेषुमध्येपत्रतापाख्यो

हिरण्यकशिपोः पुत्रः प्रल्हादो भगवत्परः ॥ वायुना च समाविष्टो महाबलसमन्वितः ॥ ८ ॥ येनैव जायमानेन तरसा भूर्विदारिता ॥ भूभारक्षपणे विष्णोरंगतामाप्तुमेव सः ॥ ९ ॥ प्रतीपपुत्रतामाप्य बाल्हीकेष्वभवत्पतिः ॥ रुद्रेषु पत्रतापाख्यः सोमदत्तोस्य चात्मजः ॥ १० ॥ अजैकपादहिर्बुध्निर्विरूपाक्ष इति त्रयः ॥ रुद्राणां सोमदत्तस्य बभूवुः प्रथिताः सुताः ॥ ११ ॥ विष्णोरेवांगतामाप्तुं भूरिर्भूरिश्रवा शलः ॥ शिवादिसर्वरुद्राणामावेशाद्वरतस्तथा ॥ १२ ॥ भूरिश्रवा अतिबलस्तत्रासीत्परमास्त्रवित् ॥ तदर्थं हि तपश्चीर्णं सोमदत्तेन शंभवे ॥ १३ ॥ दत्तो वरश्च तेनास्य त्वत्प्रतीपाभिभूतिकृत् ॥ बलवीर्यगुणोपेतो नाम्ना भूरिश्रवाः सुतः ॥ १४ ॥ भविष्यति मयाविष्टो यज्ञशील इति स्म ह ॥ तेन भूरिश्रवा जातः सोमदत्तसुतो बली ॥ १५ ॥ ॥ ॥

रुद्रः ॥ १० ॥ रुद्राणांमध्येअजैकपादादयइतित्रयोरुद्राः । सोमदत्तस्यप्रथिताःप्रसिद्धाःभूर्यादयःसुताःबभूवुः ॥ ११ ॥ किंकर्तुमित्याह विष्णोरिति ॥ १२ ॥ भूर्यादयस्त्रयोयद्यपिरुद्राःतथापिभूरिश्रवविशेषमाह । शिवादिति तत्रत्रिषुमध्ये ॥ १३ ॥ कुतइत्यतआह । तदर्थमिति । तदर्थंभूरिश्रवसोर्थेतेनरुद्रेणअस्यसोमदत्तस्यवरोदत्तः किमिति । त्वत्प्रतीपस्यप्रतिपक्षिणोशिनेःअभिभूतिंपराभवंकरोतीतितथा ॥ १४ ॥ मयाआविष्टःप्रविष्टःयज्ञेषुशीलंस्वभावोयस्यसतथा । नाम्नाभूरिश्रवाःसुतोभविष्यति स्मेतिवरोदत्तइतिपूर्वेणसंबंधः । तेनवरादिकारणेनसोमदत्तसुतोभूरिश्रवाःबली जातः ॥ १५ ॥ ॥ ॥

पूर्वंशंतनुःकःकिमर्थमुत्पन्नइत्याशंकायां तत्स्वरूपंउत्पत्तिकारणंचविविच्याह । पूर्वोदधेरिति । अब्जसंभवेब्रह्मणिपूर्वोदधेःपूर्वस्यांप्राच्यांदिशिविद्यमानस्योदधेः । पूर्वो न्यालिंगप्रागाहेत्यमरः । समुद्रस्यतीरंगतेपश्चिमतीरंप्राप्तेसति । 'समुद्रेहंपुरापूर्वेवेलामासाद्यपश्चिमामि'तिहरिवंशेषु । पर्वणिपूर्णिमायां उद्धूतैश्चमहावातैःप्रवृद्धैश्चबलाह कैः । 'पर्वणाचेंदुयुक्तेनात्रिभिःक्षुब्धोस्मिकारणैरि'तिहरिवंशे । गंगायायुतःगंगासमुद्रसंगमइतिभावः। घूर्णितःउच्चलितस्तादृशोब्धिःतस्यब्रह्मणःतनौदेहे.निजोदबिंदुंस्व जलबिंदुं अवाक्षिपत् । अथउदकक्षेपणानंतरं एनंअब्धिं ॥ १६ ॥ किमिति त्वंमहाभिषगितिनामप्रसिद्धोनरेश्वरोराजाभूत्वा पुनःमहाभिषगाख्यदेहवियोगानंतरं शं तनुनामधेयःसन् जनिष्यसेउत्पत्स्यसेएषाविष्णुपदीगंगातत्रशंतनुजन्मनि तथापिदेवतादेहेनापिभवतस्तवभार्याभविष्यति ॥ १७ ॥ ननु जलाभिषेचनाम्नमहाभिषगि तिनामभवतु जन्मांतरेशंतनुरितिनामकुतइत्यतआह । शांतइति । शांतः नवातेएवएवंअनेनप्रकारेणमयाउदितःत्वंतनुत्वंसंक्षेपत्वंशांतत्वामित्यर्थः । आप्तोसियतःततः

पूर्वोदधेस्तीरगतेब्जसंभवे गंगायुतःपर्वणि घूर्णितोब्धिः ॥ अवाक्षिपत्तस्य तनौ निजोदबिंदुं शशापैनमथाब्जयोनिः ॥ १६ ॥ महाभिषङ्नामनरेश्वरस्त्वं भूत्वा पुनः शंतनुनामधेयः ॥ जनिष्यसे विष्णुपदी तथैषा तत्रापि भार्या भवतो भविष्यति ॥१७॥ शांतो भवेत्येवमयोदितस्त्वं तनुत्वमाप्तोसि ततश्च शंतनुः ॥ इतीरितः सोथ नृपो बभूव महाभिषङ्नाम हरेः पदाश्रयः ॥ १८ ॥ स तत्र भुक्त्वा चिरकालमुर्वीं तनुं विहायाप सदो विधातुः ॥ तत्रापि तिष्ठन् सुरवृंदसंन्निधौ ददर्श गंगां श्लथितांबरां स्वकां ॥ १९ ॥ अवङ्मुखेषु द्युसदत्सु गंगां निरीक्ष्यमाणं पुनरात्मसंभवः ॥ उवाच भूमौ नृपतिर्भवाशु शप्तो यथा त्वं हि पुरा मयैव ॥ २० ॥

तनुश्चशंतनुनामासन्जनिष्यसइतिपूर्वेणान्वयः । अथशापानंतरंसमुद्रः ॥ १८ ॥ सःमहाभिषक्तत्रतस्मिन्जन्मनिउर्वीभुक्त्वापालयित्वा सदःसभामाप तत्रापिसभा यांश्लथितंअंबरंवस्त्रंयस्याः सातांस्वकांस्वभार्यांगंगांददर्श ॥ १९ ॥ द्युसदत्सुदेवेषुअवाक्अधःकृतंमुखंयेषांतेतथा तेषुसत्सु'ननग्नांस्त्रियमीक्षेते'तिवचनादवाङ्मुखेष्वि तिभावः । आत्मनःपरमात्मनःसकाशात्संभवःउत्पत्तिर्यस्यब्रह्मणःसतथा । ब्रह्मागंगांनिरीक्ष्यमाणंवरुणंप्रतिउवाच । पूर्वशापापेक्षयापुनरित्युक्तं रागान्निरीक्ष्यमाणमि तिपाठे रागात्स्नेहवशादित्यर्थः । किमिति पुरानिजोदबिंदुप्रक्षेपणकाले मयैवयथापुनःशंतनुनामधेयः जनिष्यसइति तथाशप्तोहियस्मादाशुभूमौनृपतिःशंतनुनामधेयो राजाभव इममेवअपराधंजानताब्रह्मणाएतदर्थंपुरैवशप्तइतिभावः ॥ २० ॥ ॥ ॥ ॥

तत्क्षणतःशापोत्तरक्षणतःतयागंगया ॥ २१ ॥ अथभीष्मोत्पत्तिंवकुंगंगागमनप्रकारंदर्शयति । अथेत्यादिना । अथशब्दःकथांतरद्योतकः द्युनामा अष्टमोवसुरासीत् । अस्यद्युनाम्नःवरांगिनाम्नीवरांगिनामवती नत्रानिर्दिष्टमनित्यमित्यनेननमनइतिङीप्प्रतिषेधोनप्रवर्तते भार्याबभूव तस्याःवरांग्याःसुविंदनाम्नोनृपस्यसनाम्नी समाननामावरांगीतियावत् ॥ दयितासखीबभूव ॥ २२ ॥ देवीद्युभार्यावरांगीतस्याःवरांग्याःसख्याःजराचमृतिश्चतथा तयोर्विध्वंसहेतोःविनाशार्थंस्वमृतं शोभनामृतंक्षरंतींदुहंतीमित्यर्थः। जरापहांजरानाशिनींनंदिनीनामधेयांवसिष्ठधेनुंबद्धुंबध्वाआनेतुमित्यर्थः । पतिंद्युनामानंचोदयामास प्रेरयामास ॥ २३ ॥ स्नेहान्निमित्तात्अपरैःसप्तभिःपृथ्वादिसप्तव

इतीरितस्तत्क्षणतः प्रतीपाद्बभूव नाम्ना नृपतिश्च शंतनुः ॥ अवाप्य गंगां दयितां स्वकीयां तया मुमोदाब्दगणान्बहूंश्च ॥ २१ ॥ अथाष्टमो वसुरासीद्द्युनामा वरांगिनाम्न्यस्य बभूव भार्या ॥ बभूव तस्याश्च सखीनृपस्य सुविंदनाम्नो दयितास नाम्नी ॥ २२ ॥ तस्या जरामृतिविध्वंसहेतोर्वसिष्ठधेनुं स्वमृतं क्षरंतीं ॥ जरापहां नंदिनिनामधेयां बद्धुं पतिं चोदयामास देवी ॥ २३ ॥ तया द्युनामा स वसुः प्रचोदितो भ्रातृस्नेहात्सप्तभिरन्वितो परैः ॥ बबंध तां गामथ तांच्छशाप वसिष्ठसंस्थः कमलोद्भवः प्रभुः ॥ २४ ॥ अधर्मवृत्ताः प्रतियात मानुषीं योनिं द्रुतं यत्कृते सर्व एव ॥ धर्मच्युताः स तथाष्टायुराप्यतामन्ये पुनः क्षिप्रमथो विमोक्ष्यथ ॥ २५ ॥ प्रचोदयामास च या कुमार्गे पतिं हि सांबेति नरेषु जाता ॥ अभर्तृका पुंस्त्वसमाश्रयेण पत्युर्मृतौ कारणत्वं व्रजेत ॥ २६ ॥

सुभिः काचिद्वसिष्ठःशशापेत्युक्तं अतएवास्मिन्निर्णयग्रंथेवासिष्ठसंस्थइत्युक्तं ॥ २४ ॥ किमिति अधर्मेगोबंधनरूपाधर्मकर्मणिवृत्ताःप्रवृत्ताःयूयंमानुषींयोनिंद्रुतंशीघ्रंप्रतियात यत्कृतेयदर्थंद्युनाम्नःप्रीत्यर्थंधर्मच्युताःसद्युःतथामुख्यकर्तृत्वात् । अष्टानामायुःआप्यतांप्राप्नुयात् अन्येसप्तवसवःक्षिप्रंपुनःशीघ्रमेवजन्ममात्रादेवेत्यर्थः । पुनरप्रथमेप्रश्नेऽव्यावृत्तावतवधारणइतियादवः । अतःमनुष्यदेहाद्विमोक्ष्यथमुक्ताभविष्यथ ॥ २५ ॥ वसूनांशापप्रकारमुक्त्वाद्युपत्न्याःशापप्रकारंदर्शयति । प्रचोदयामासेति । याद्युभार्याकुमार्गेगोचौर्यरूपदुमार्गेअंबेतिअंबनाम्नीअभर्तृकापतिरहितासती पुंस्त्वसमाश्रयेणपुरुषत्वाश्रयेणपत्युर्मृतौमरणे ॥ २६ ॥ ॥

द्युवसोःशापविशेषमाह । भवत्विति । असौद्युवसुःब्रह्मचर्येएकामुख्यानिष्ठानियमोयस्यसतथाभवति तयोर्वरांगियुवसोःमहान्विरोधःभवेत् प्रनुष्यजन्मनीतिशेषः । सव सुःगर्भवासानामष्टकंतेनयावद्दुःखंतावदित्यर्थ । सामाप्नुतांएकस्यैवभवेदितिभावः ॥ २७ ॥ शस्त्रैर्बहुधाबहुप्रकारेणनिकृंतःशराणांतल्पेशयनीयेशयानःस्थितइत्यर्थः । ए तादृशःसमृतीनांअष्टकंतेनउत्थांजातांवेदनांव्यथामपिप्राप्नोतुइतिशशापेतिपूर्वेणान्वयः । तेवसवः प्रणेमुःविज्ञापनंचक्रुरितिचार्थः ॥ २८ ॥ विज्ञापनंदर्शयति । नेति। वयंमानुषंमनुष्यसंबंधिनंगर्भंनावाप्नुमःनप्राप्नुमः मनुष्यवीर्यंदेवतागर्भंअवाप्नुमइतिभावः । नमानुषीमितिपाठे मानुषींयोनिंआप्नुमइत्यर्थः । गर्भअवाप्नुमःदेवब्ध्वाइतिशेषः। अयंद्युवसुःभवतःब्रह्मणःअंशेनआवेशेनयुक्तोभवतु तथा आखिलानांनःसप्तानांअस्माकंबलंउपैतुप्राप्नोतु ॥ २९ ॥ वसुभिःइतीरितेसतिस्वयंभुवाब्रह्मणाअस्त्वित्युदिता वसवः सुरापगांदेवनदींगंगांप्रतिययुः । एनांगंगांजायेमजनिष्यामाक्षिप्रंतत्क्षणेअस्मांत्सप्तहन एकंमाहनोतिभावः ॥ ३० ॥ इतीरितासागंगा अथप्रार्थनानंतरं अपि

भवत्वसौ ब्रह्मचर्यैकनिष्ठो महान्विरोधश्च तयोर्भवेत ॥ स गर्भवासाष्टकदुःखमेव समाप्नुतां शरतल्पे शयानः ॥२७॥ मृत्यष्टकोत्थामपि वेदनां सः प्राप्नोतु शस्त्रैर्बहुधा निकृंतः ॥ इतीरितास्ते कमलोद्भवं तं ज्ञात्वा समुत्सृज्य च गां प्रणेमुः ॥ २८ ॥ न मानुषं गर्भमवाप्नुमो वयं भवत्वयं सर्ववित्कीर्तिमांश्च ॥ महास्त्रवेत्ताभवदंशयुक्तस्तथा बलं नो खिलानामुपैतु ॥ २९ ॥ इतीरितैस्त्वित्युदिताः स्वयंभुवा वसिष्ठसंस्थेन सुरापगां ययुः ॥ ऊचुस्तथैनामुदरे वयं ते जायेमहि क्षिप्रमस्मान्हन त्वं ॥ ३० ॥ इतीरिता सा वरमाशु वव्रे तेभ्योप्यपापत्वमथप्रियत्वं ॥ तेषां तथैवात्मन एकमेषां दीर्घायुषं तान्सुषुवेथ शंतनोः ॥ ३१ ॥ अविघ्नतस्तान्विनिहंतुमेव पुरा प्रतीपस्य हि दक्षिणोरुं ॥ समाश्रिता कामिनीवत्त्वकामा तत्पुत्रभार्या भवितुं विडंबात् ॥ ३२ ॥ ॥ ॥

शिशूनांवधेकृतेपि आत्मनःअपापत्वंशिशुवधप्राप्तदोषाभावंतथैवआत्मनःतेषांसप्तवसूनांप्रियत्वंपरस्परप्रीतिभावंवरंतेभ्यःसप्तभ्यःवव्रे । आत्मनइत्युभयत्रानुषंगः तेषांस दैवात्मनइतिवापाठः अथगंगातान्‌अष्टवसून्‌शंतनोःसकाशात्सुषुवे । तेषांअष्टानांमध्येएकंकनीयसंदीर्घायुषंसुषुवेइतिसंबंधः ॥ ३१ ॥ गंगाकृतहननस्यभीष्मानुकू ल्यप्रकारंदर्शयति । अविघ्नतइति । पुराशंतनोत्पत्तेःपूर्वंअकामातुप्रतीपेच्छारहितापिगंगाकामिनीवत् कामवतीवविडंबात् । वंचनाहेतोःतस्यप्रतीपस्यपुत्रस्यशंतनोर्भा र्याभवितुंप्रतीपस्यदक्षिणोरुंसमाश्रिता दक्षिणांकेउपविष्टेतिभावः । तदुक्तंआदिपर्वणि । 'तथेत्युक्तातुराजानंतत्रैवांतरधीयतेति । एतस्मिन्नेवकालेतुप्रतीपःक्षत्रियर्षभः । तपस्तेपेसुतस्यार्थेसभार्यःकुरुनंदनेति । शांतस्यजज्ञेसंतानस्तस्मादासीत्सशांतनुरि'तिच ॥ ३२ ॥ ॥ ॥ ॥ ॥

तेनप्रतीपेनदक्षिणोरौस्थिताआसि । कामिनीचयतःअतोमेसुतस्यभार्याभवेतिउक्ताभूदितिशेषः । तत्रप्रमाणमाह । भागइति । दक्षोदक्षिणइतिस्मृतिषुप्रसिद्धः ॥३३॥ विडंबादित्युक्तंविवृणोति । उवाचेत्यादिना । सागंगातंप्रतीपंप्रत्युवाच किमिति । तेसुतःमांत्वमितिशेषः । काअसीतिनैवपृच्छेत् अयोग्यकर्त्रीमपिमामिदंमाकुर्वितिन निवारयेत् ममकर्मणःक्रियायाःकारणंहेतुंकदाचित्नैवपृच्छेत् ॥ ३४ ॥ एनःतेसुतःत्रयाणांकासीत्यादित्रयाणांमध्येएकमपियदाकरोति तदाअहंत्वदीयंसुतंविसृज्यवि हायगच्छेयं इतीरितेसतिप्रतीपोराजापितथेतितथास्त्वित्यवदत् ॥ ३५ ॥ तेनप्रतीपेनतनुनद्याःगंगायाःवचनात् त्वंमदुक्तंपुत्रायवदेत्येवंरूपवचनात् वध्वाभाविस्नुषया नार्याउक्तं तत्पूर्वोक्तंकासीत्यादिवचःतथैव यथागंगयोक्तंतथैवेत्यर्थः । कनीयसेकनिष्ठायशंतनवेपुत्रायउक्तं ।'वधूर्नारीवधूर्भार्यावधूःपुत्रवधूर'पीत्यनेकार्थध्वनिपदमंजर्यां ।

तेनैव चोक्ता भव मे सुतस्य भार्या यतो दक्षिणोरुस्थितासि ॥ भागो हि दक्षो दुहितुस्नुषाया भार्या भागो वाम इति प्रसिद्धः ॥ ३३ ॥ उवाच सा तं न तु मां सुतस्ते कामीति पृच्छेन्नतु मां निवारयेत् ॥ अयोग्यकर्त्रीमपि कारणं च मत्कर्मणो नैव पृच्छेत्कदाचित् ॥ ३४ ॥ यदा त्रयाणामपि चैकमेषः करोति गच्छेयमहं विसृज्य ॥ तदा त्वदीयं सुतमित्युदीरिते तथेति राजाप्यवदत्प्रतीपः ॥ ३५ ॥ तथैव पुत्राय च ते न तद्वचो वधूक्तमुक्तं वचनाद्धुनद्याः ॥ कनीयसे सा ह्यवदत्सुतस्ते नान्यः पतिः शंतनुरेव मे द्दतः ॥ ३६ ॥ ततस्तु सा शंतनुतोष्टपुत्रानवाप्य सप्त न्यहनत्तथाष्टमं ॥ गंतुं ततो मतिमाधाय हंतुमिवोद्योगं सा हि कृता चकार ॥ ३७ ॥ अवस्थितिर्नातिसुखाय मानुषे यतः सुराणामत एव गंतुं ॥ ऐच्छन्न तस्या हि बभूव मानुषो देहो नरोत्थो हि तथा स शंतनोः ॥ ३८ ॥ ॥

कनिष्ठायकिमर्थमुक्तमित्यतआह । साहीति । यस्मात्सागंगातेतवसुनःशंतनुरेवमेमनापि निश्चेनद्दतःअन्यःपतिर्नेत्यवदत् । तस्मात्कनीयसेउक्तमित्यर्थः ॥ ३६ ॥ सा गंगाततःशंतनुगृहात् गंतुंमतिमाधायधृत्वा । तथासप्तनवदष्टमंपुत्रंहंतुमिवउद्योगंनयत्नंचकार ॥ ३७ ॥ पतिंहित्वागमनेकारणमाह । अवस्थितिरिति । सुराणांमानुषेमनुष्यसंबंधिगृहादौअवस्थितिःसंवासःअतिसुखायननभवेद्यतःअतएवगंतुंऐच्छत् । गमनेअन्यदपिकारणमाह । नतस्याइति । तस्याःगंगायाःदेहःमानुषःमनुष्यसंबंधिमनुष्यादुत्पन्नइत्यर्थः नबभूव । शंतनोःसःशापसंबंधिदेहःतयागंगादेहवन्नाकिंतुनरोत्थोहि मनुष्यादुत्पन्नएवहियस्मात्तस्माद्गंतुंऐच्छदितिसंबंधः । अत्रन अध्याहारः तदासेतिपाठे तदाशापोत्पत्तिकालेशंतनोर्देहःनरोत्थोहिआस ॥ ३८ ॥ ॥ ॥ ॥ ॥ ॥

शंतनुः त्वंका असिस्वरूपेणेतिशेषः । केनहेतुनापुत्रान् नृशंसवत् राक्षसवत् हंसिहनिष्यसीत्युक्तेतिशेषः । पुत्रस्यनिधनेहननविषये उद्युक्तांउद्योगयुक्तांतांगंगांन्यवारयत् तांपुत्रेतिपद्येनगंगयोक्तमकर्तव्यत्रयमपि अनेनकृतमितिसूचितंभवति ॥ ३९ ॥ नन्वेतस्याःपुत्रहननकर्मणाराक्षसीत्वेप्रसिद्धेकासीतिप्रश्नःकुतइत्यतआह । रूपमिति । सुरवरस्त्रीणांरूपमिवेतिशेषः । तवरूपंतेनकारणेनत्वदीयंत्वत्कर्मपुत्रवधरूपकर्मपापकंपापस्वरूपंभवेत् । हियस्मात्तस्मात् अत्रपुत्रहिंसायांमहत्कारणमस्तीतिशेषः ॥ ४० ॥ नृशंसत्वव्यावृत्त्यर्थंशुभेतिसंबोधनं । यदिमच्छ्रोत्रंममश्रोत्रेंद्रियंतत्कारणमर्हतिश्रोतुमितिशेषः । तर्हिवदसर्वंवसुकृतंकर्मादि ॥ ४१ ॥ ननु कारणंउक्त्वाकिंचित्कालंकुतोनास्थितेत्यतआह । नेति ज्ञातेसतिवासःधर्मोन हियस्मात्तस्मात्प्रययावितिसंबंधः । ननु पूर्वंकथंस्थितेत्यतआह । कारणादेवेति । कारणस्यअप

तां पुत्रनिधनोद्युक्तां न्यवारयत शंतनुः ॥ कासि त्वं हेतुना केन हंसि पुत्रान्नृशंसवत् ॥ ३९ ॥ रूपं सुरवरस्त्रीणां तव तेन न पातकं ॥ भवेत्कर्मत्वदीयं तन्महत्कारणमत्र हि ॥ ४० ॥ तत्कारणं वद शुभे यदि मच्छ्रोत्रमर्हति ॥ इतीरितावदत्सर्वं प्रययौ च सुरापगा ॥ ४१ ॥ न धर्मो देवतानां हि ज्ञातवासश्चिरं नृप ॥ कारणादेव हि सुरा नृषु वासं प्रकुर्वते ॥ ४२ ॥ कारणापगमे यांति धर्मोप्येषां तथा विधः ॥ अदृश्यत्वमसंस्पर्शो ह्यसंभाषणमेव च ॥ ४३ ॥ सुरैरपि नृजातैस्तु गुह्यधर्मो दिवौकसां ॥ अतः सा वरुणं देवं पूर्वभर्तारमप्यमुं ॥ ४४ ॥ नृजातं शंतनुं त्यक्त्वा प्रययौ वरुणालयं ॥ सुतमष्टममादाय भर्तृरेवाभ्यनुज्ञया ॥ वधोद्योगान्निवृत्ता सा ददौ पुत्रं बृहस्पतौ ॥ ४५ ॥ ॥

गमेअतिक्रमेसति यांतिगच्छंति ननु देवाःकारणविशेषेणापिअधर्मंकथंचरंतीत्यतआह । धर्मोपीति । एषांदेवानांधर्मोपितथाविधःतादृशइत्यर्थः । यावत्प्रयोजनंतावन्नृषुसंवासःप्रयोजनेजातेततोनिर्गमइत्येवंविधोदेवानांस्वाभाविकोधर्मइतिभावः ॥ ४२ ॥ देवानांगुह्यंधर्ममप्याह । अदृश्यत्वमिति । दिवौकसांदेवानांनृपुजातैःसुरैरपिअदृश्यत्वादिगुह्यधर्मःरहस्यधर्मः ॥ ४३ ॥ अतःकारणात्सागंगादेवंवरुणंवरुणस्वरूपं पूर्वभर्तारमप्यमुंनरिनरेजातंशंतनुंत्यक्त्वा आज्ञयातत्सुतमादायप्रययौ ॥ ४४ ॥ कथंभूतावधोद्योगात् अष्टमपुत्रवधप्रयत्नात् निवृत्तापरावृत्तासापुत्रंबृहस्पतौतद्देशेददौ ॥ ४५ ॥ ॥ ॥ ॥ ॥

मात्रादेवगुरौबृहस्पतिवशेअनुशासनायवेदशिक्षणार्थंदत्तःस्थापितइत्यर्थः । देवव्रतःदेवव्रतनामासौगंगापुत्रःसंवत्सराणांशतार्धपंचाशद्वर्षाणीत्यर्थः । तावत्कालपर्यंतंत स्यबृहस्पतेर्वशगःवशवर्तीत्यर्थः अंतरात्माचित्तंयस्यसतथासन् अखिलान्खिलरहितान्अनंतरितानितियावत् । वेदान्सम्यगर्थपूर्वकमित्यर्थः । अभ्यसत्अध्ययनंकृ तवानित्यर्थः ॥ ४६ ॥ ततःअध्ययनानंतरं गरीयसिश्रेष्ठेअखिलसद्गुणैःअर्णवइवार्णवः । उभयकूलावधिसमुद्रवद्धरेरपिपारःप्रतीयते तंनिवारयति अनंतेति । अनंतः अंतरहितःपारःअवधिर्यस्यसतथा तस्मिन्अनेननिरवधिकपरिपूर्णगुणइत्युक्तंभवति । रामेपरशुरामेप्रदत्तोदेवव्रतः तत्वंहरिस्वरूपप्रतिपादकशास्त्रं ॥ ४७ ॥ सदेवव्र तःपुनःशतार्धवर्षानंतरंपतेः 'षष्ठीयुक्तेतिघिसंज्ञा अभ्यस्यतत्रस्थोभूदितिशेषः। स्वपित्रेदेवव्रतस्यपित्रेशंतनवेप्रार्पयितुंदातुं मात्रासमानीयरामाश्रमादितिशेषः । निजेतटे

देवव्रतोसावनुशासनाय मात्रा दत्तो देवगुरौ शतार्धं ॥ संवत्सराणामखिलांश्च वेदान् समभ्यसत्तद्वशगांतरात्मा ॥ ४६ ॥ ततश्च मात्रा जगतां गरीयस्यनंतपारेखिलसद्गुणार्णवे ॥ रामे भृगूणामधिपे प्रदत्तः शुश्राव तत्वं च शतार्धवर्षं ॥ ४७ ॥ स पंचविंशत्पुनरब्दकानामस्त्राणि चाभ्यस्य पतेर्भृगूणां ॥ मात्रा समानीय तटे निजे तु संस्थापितः प्रार्पयितुं स्वपित्रे ॥ ४८ ॥ स तत्र बध्वा शरपंजरेण गंगांविजह्रेस्य पिता तदैव ॥ व्रजन्मृगार्थी तृषितो वलोकयन् गंगामतोयामभवत्सुविस्मितः ॥ ४९ ॥ स मार्गयामास ततोस्य हेतुं ज्ञप्त्यै तदा स्वं च ददर्श सूनुं ॥ क्रीडंतमस्त्रेण बभूव सोपि क्षणाददृश्यः पितृदर्शनादनु ॥ ५० मीमांसमानं तमवेक्ष्य गंगा सुतं समादाय पतिं जगाद ॥ अयं सुतस्तेपरमास्त्रवेत्ता समर्पितो वीर्यबलोपपन्नः ॥ ५१ ॥ ॥ ॥ ॥

स्वतीरेसंस्थापितइत्यर्थः ॥ ४८ ॥ सदेवव्रतःशरपंजरेणगंगांबध्वागंगाप्रवाहस्यनिरोधंकृत्वेत्यर्थः । तत्तीरेविजह्रेचिक्रीडे तदैवकालेअस्यदेवव्रतस्यपिता मृगार्थीमृगा निच्छन्व्रजन्गच्छन् तृषितःअतोयांअल्पजलांअनुदरीकन्येतिवत् । तदुक्तंआदिपर्वणि 'भागीरथीमल्पजलांशंतनुर्दृष्टवान्नृप इति गंगांविलोकयन् पश्यन्सुविस्मितः अतिस्मययुक्तोभूदितिशेषः ॥ ४९ ॥ ततःसशंतनुःअस्यअतोयत्वस्यहेतुंज्ञप्त्यैज्ञातुंमार्गयामास । तदातत्तीरेअस्त्रेणक्रीडंतंस्वंस्वकीयंसुतंददर्श । सोपिपितृदर्शनात्क्षणात्अनु ल्यवलोपेपंचमी । अदृश्योबभूव ॥ ५० ॥ मीमांसमानंतंकोसौक्कगतइतिविचारयंतं ॥ ५१ ॥ ॥ ॥ ॥

अस्यअग्रजा:सप्तहरे:पदांभोजेनपादकमलेन सुपावितेपवित्रीकृतेमदीयेगंगासंबंधिनीत्यर्थ । जलेतनूर्देहान्प्रणिधाय स्वांस्थितिंमूलरूपस्थितिंयाता:प्राप्ताः यस्मात्तस्मात् अनेनपुत्रेणमोदमान:सन् तान्स्वमूलरूपंप्राप्तान्प्रति माशुच:शोकंमाकुर्वित्यर्थः ॥५२॥ अमुंपुत्रंराजातंदेवव्रतं अथगृहप्रवेशानंतरं । भृशंतस्यपुत्रस्यसद्गुणै:ज्ञानभक्त्यादिगुणैस्तर्पित:तृप्तिंप्रापित: शंतनु:यौवराज्येयुवराजपदेअभिषिच्यमुमोद ॥ ५३ ॥ अनुमत:संमत:पुरुषायुषस्यार्धत:पंचदशाब्दैरित्यर्थः । शतायुर्वैपुरुष:शतेंद्रियइतिश्रुति: । तावद्भि:पूर्वोक्तै:पंचविंशद्भि: ॥ ५४ ॥ सदेवव्रत:सर्वविदोभाव:सर्ववित्वंसर्वज्ञत्वमित्यर्थः । तंपितरंशुश्रूषमाण:सेवमानः ॥ ५५ ॥ कृपाद्युत्पत्तिंवक्तुंतदुपोद्घातमा

अस्याग्रजा स्वां स्थितिमेव याताः हरेः पदांभोजसुपाविते जले ॥ तनूर्मदीये प्रणिधाय तस्मात्तान्मा शुचोनेन च मोदमानः ॥ ५२ ॥ इति प्रदायामुमदृश्यतामगाद्गंगातमादाय ययौ गृहं स्वकं ॥ राजाभिषिच्याथ च यौवराज्ये मुमोद तत्सद्गुणतर्पितो भृशं ॥ ५३ ॥ पुनः स पित्रानुमतो बृहस्पतेरवाप वेदान् पुरुषायुषोर्धतः ॥ रामात्तथास्त्राणि पुनस्त्ववाप तावद्भिरब्दैस्त्रिशतैश्च तत्वं ॥ ५४ ॥ ससर्ववित्त्वं समवाप्य रामात्समस्तविद्याधिपतेर्गुणार्णवात् ॥ पितुः समीपं समवाप्य तं च शुश्रूषमाणः प्रमुमोद वीरः ॥ ५५ ॥ यदैव गंगा सुषुवेष्टमं सुतं तदैव यातो मृगयां स शंतनुः ॥ शरद्वतो जातमपश्यदुत्तमं वने विसृष्टं मिथुनं त्वयोनिजं ॥ ५६ ॥ शरद्वांस्तु तपः कुर्वन् ददर्श सह सोर्वशीं ॥ चस्कंद रेतस्तस्याथ शरस्तंबे ततो भवत् ॥ ५७ ॥ निष्कंभो नाम रुद्राणां भूभारहरणेंगतां ॥ हरेः प्राप्तुं तथा तारा भार्या या हि बृहस्पतेः ॥ ५८ ॥ ॥ ॥ ॥

ह । यदैवेति । शरद्वत:शरद्वानितिनामवान्ऋषि:तस्माज्जातंविसृष्टंत्यक्तं तुशब्दोविशेषद्योतकः । तंविशेषमाह । अयोनिजमिति । योन्यांनजातमित्यर्थः । अतएवोत्तमं मिथुनंकन्यापुत्रइतिद्वंद्वंअपश्यत् ॥ ५६ ॥ अयोनिजत्वंविशदयति । शरद्वानिति । सहसाअकस्मात् अथउर्वशीदर्शनानंतरं । तस्यशरद्वत:रेत: शुक्रंशराणांतृणविशेषाणांस्तंबेगुल्मे चस्कंदसृतंततोरेतसः ॥ ५७ ॥ रुद्राणांमध्येयइतिशेषः । विष्कंभनामइतिप्रसिद्धःस:भूभारस्यहरणेसंहारविषयेअंगतांसहायतांप्राप्तुंअभवत् । तथा बृहस्पतेर्भार्यायातारासापिअभवदितिश्लोकद्वयस्यसंबंधः ॥ ५८ ॥ ॥ ॥ ॥

ताउभौकन्यापुत्रौदृष्ट्वाकृपयाअनुकंपयाआविष्टःप्रविष्टःसन्स्वकंगृहंप्रतिनिनायअनयत् । अथगृहप्राप्त्यनंतरं । कृपायाविषयौगोचरावित्यर्थः । यतःअतःपुत्रस्यकृपःकन्यकायाःकृपीतिनामचक्रे ॥ ५९ ॥ ६० ॥ एष्यत्सप्तर्षित्वंभाविसप्तर्षिषुमध्येएकऋषित्वंप्रादात् कल्पांतमेववैवस्वतमनुकल्पपर्यंतंआयुश्चप्रादादित्यर्थः । अन्यथाभाविसप्तऋषित्वंनस्यात् ॥ ६१ ॥ सकृपःसचशंतनुःपुत्रवत्पुत्रसाम्येनतन्मिथुनंपालयामास ॥ ६२ ॥ सकृपःअस्त्राणि चशब्दात्गोत्रादिअवाप गौतमादितिशेषः । ततुक्तं आदिपर्वणि । 'गोपितोगौतमस्तत्रतपसातावविंदत । आगम्यतस्मैगोत्रादिसर्वमाख्यातवांस्तदा । चतुर्विधंधनुर्वेदमस्त्राणिविविधानिचे'ति कौशिकात्विश्वामित्रात्सर्ववेदान् सर्वशास्त्राणि अधिजगौअध्यगीष्ट ॥ ६३ ॥ द्रोणोत्पत्तिंवदिष्यन्तदुपोद्घातमाह । यदेति । बृहस्पतेःसूनुःपुत्रोभरद्वाजः तत्रगंगातीरेश्लथितंस्रस्तंदुकूलंकौशेयवस्त्रं

तावुभौ शंतनुर्दृष्ट्वा कृपाविष्टः स्वकं गृहं ॥ निनाय नाम चक्रेथ कृपाया विषयौ यतः ॥ ५९ ॥ कृपः कृपीति स कृपस्तपो विष्णोश्चचार ह ॥ तस्य प्रीतस्तदा विष्णुः सर्वलोकेश्वरेश्वरः ॥ ६० ॥ प्रादादेष्यत्सप्तऋषित्वं आयुः कल्पांतमेव च ॥ स शंतनुगृहे तिष्ठन् देवव्रतसखाभवत् ॥ ६१ ॥ पुत्रवच्छंतनोश्चासीत् स च पुत्रवदेव तत् ॥ मिथुनं पालयामास कृपोप्यस्त्राण्यवाप च ॥ ६२ ॥ सर्ववेदानधिजगौ सर्वशास्त्राणि कौशिकात् ॥ तत्त्वज्ञानं तथा व्यासादाप्य सर्वज्ञतां गतः ॥ ६३ ॥ यदाभिजातः स कृपस्तदैव बृहस्पतेः सूनुरगाच्च गंगां ॥ स्नातुं घृताचीं स ददर्श तत्र श्लथद्दुकूलां सुरवर्यकामिनीं ॥ तद्दर्शनात्स्कंन्नमथेंद्रियं स द्रोणे दधाराशु ततोभवत्स्वयं ॥ अंभोजजावेशयुतो बृहस्पतिः कर्तुं हरेः कर्म भुवोभरोद्धृतौ ॥ ६५ ॥ द्रोणेति नामास्य चकार तातो मुनिर्भरद्वाज उतास्य वेदान् ॥ अध्यापयामास स शास्त्रसंघान् सर्वज्ञतामाप च सोचिरेण ॥ ६६ ॥ ॥ ॥

यस्याःसातांसुरवर्याणांकामिनीं भोगस्त्रियंघृताचींददर्श ॥ ६४ ॥ तस्याःश्लथद्दुकूलायाःघृताच्याःदर्शनात् । स्कन्नंपतितंइंद्रियंरेतःद्रोणेकलशेदधारन्यधात् । 'आचार्यःकलशाज्जातोद्रोणःशस्त्रभृतांवर'इत्यादिपर्वणि । शिक्षासंदर्शनप्रकरणेभीमंप्रतिदुर्योधनवचनं । ततःद्रोणाद्रेतसोवा अंभोजजोब्रह्मा स्वयंबृहस्पतिःअभवत् । किंकर्तुं भरस्यभाररूपासुरसंघस्य उद्धृतौसंहरणविषयेकर्मसंहाररूपंकर्मकर्तुंदैत्यहननरूपसेवांकर्तुमितिभावः ॥ ६५ ॥ अचिरेणशीघ्रंद्रोणेत्यस्यसंज्ञाशब्दत्वेनसतोप्यर्थवत्त्वस्याविवक्षितत्वात्विभक्त्यभावः . यद्वा द्रोणेतिनामेतिएकंपदंद्रोणइतिनामचकार ॥ ६६ ॥ ॥ ॥ ॥

तस्मिन्कालेद्रोणोत्पत्तिकालेअनपत्यःअपत्यरहितःपृषतःपृषतनामराजा तस्यपृषतस्यवराप्सरोवलोकनात् उत्तमाप्सरस्त्रीदर्शनात् । तथारेतःस्कंदितंश्लथितमभूत् ॥ ६७॥ सपृषतःविशेषलज्जावशतः तद्रेतःपदेनपादतलेनसमाक्रमत् आच्छादितवान् तस्यरेतसःसकाशात् तस्यपूर्वस्वरूपमाह । हूहूत्विति । ससूनुःविरिंचगायकःब्रह्मणोगंधर्वःहाहाहूहूइत्यव्ययमितिशृंगारप्रकाशे तुशब्दइत्यर्थः । अव्ययस्यानेकार्थत्वात् । हूहूइतिनाम्नाप्रसिद्धः तुनाम्नाविशेषनाम्नाहूहूनामकइत्यर्थइतिवा अत्रापिशब्दस्वरूपवाचकस्यतद्वाच्येलक्षणा यद्वा हूहूतुनाम्नेत्येकंपदं तुशब्दोविशेषार्थः । हूहूचततुनामचहूहूतुनाम तेनहूहूनाम्नाप्रसिद्धः मरुतांमध्येयोनाम्नायोआवहोस्तीतिशेषः । तस्यावहस्यअंशयुक् ॥ ६८ ॥ सपृषतपुत्रःद्रोणेनयुक्तःसन् द्रोणताताद्भरद्वाजात् वेदादिविद्याःसमवापप्राप सकुमारःगुरोर्भरद्वाजस्यसुतंद्रोणंनौआवयोःसहैवराज्यंमम

काले च तस्मिन् पृषतोनपत्यो वने तु पांचालपतिश्चचार ॥ तपोमहत्तस्य तथा वराप्सरोवलोकनात्स्कंदितमाशु रेतः ॥ ६७ ॥ स तद्विलज्जावशतःपदेन समाक्रमत्तस्य बभूव सूनुः ॥ हूहू तु नाम्ना स विरिंचगायको नाम्ना वहो यो मरुतां तदंशयुक् ॥ ६८ ॥ स द्रोणतातात्समवाप्य वेदान् शास्त्राणि विद्याश्च तथा समस्ताः ॥ द्रोणेन युक्तः स तदा गुरोः सुतं सहैव नौ राज्यमिति ह्यवादीत् ॥ ६९ ॥ पदे द्रुतत्वाद्द्रुपदाभिधेयः सराज्यमापाथ निजां कृपीं सः ॥ द्रोणोपि भार्यां समवाप्य सर्वं प्रतिग्रहोज्झश्च पुरे वसत्सुखी ॥७०॥ शिलोंछवृत्त्यैव हि वर्तयन्स धर्मं महांतं विरजं जुषाणः ॥ उवास नागाख्यपुरे सखास देवव्रतस्याथ कृपस्य चैव ॥ ७१ ॥ ॥ ॥

राज्यंउभयोःस्यादिति । तदाविद्याभ्यासकाले अवादीद्धि ॥ ६९ ॥ तस्यनामाकिमित्यतोर्थपूर्वकमाह । पदइति । पदेतृतीयार्थेसप्तमी पादेनद्रुतत्वादाक्रांतत्वात्रेतसइतिशेषः । द्रुपदाभिधेयःसपृषतपुत्रोराज्यंपितृदत्तराज्यंआप । अथसद्रोणोपिद्रुपदस्यार्धराज्याधिकारयोग्योपिनिजांस्वकीयांभार्यांपूर्वभार्यांकृपींसमवाप्य ब्राह्मविवाहेनस्वीकृत्यसर्वप्रतिग्रहैरुज्झितःरहितः अतएवसुखीपुरेनागपुरेअवसत् ॥ ७० ॥ तस्यजीवनोपायःकुतोभवदित्यतआह । शिलेति । शिलंचउंछंचशिलोंछेताभ्यांवृत्तिर्जीवनोपायः । तयैववर्तयन्प्राणधारणंकुर्वन् विरजंनिर्दोषंकाम्यकर्मरहितमित्यर्थः । 'शिरोवाचीशिरोदंतोरजोवाचीरजस्तथा । निचकर्तशिरान्द्रोणिरधःपादरजोपमा' इतिकविकंठाभरणे । अतएवमहांतंउत्तमंधर्मंविष्णुप्रीतिकरंधर्मंजुषाणःसेवमानःसद्रोणःनागाख्यपुरेउवास ॥ ७१ ॥ ॥ ॥ ॥ ॥

तेषांदेवव्रतादिचतुर्णांसमानोभूत् विराटस्यपूर्वस्वरूपमाह । हहाइति । पूर्वेन्हस्वशब्दोप्यस्ति विधातृगायकःब्रह्मगंधर्वःहहानामहहाइतिप्रसिद्धः । मरुत्सुमध्येयोविवहो नामतस्यापिनिजधर्मवर्तीस्ववर्णाश्रमोचितधर्मवर्तनशीलोविराटोभूदितिपूर्वेणसंबंधः ॥ ७२ ॥ पांडवोत्पत्तिंवदिष्यन्तदुपोद्घातमाह । ततःकदाचिदित्यादिना । ततःदेव व्रतस्ययौवराज्याभिषेकानंतरं । प्रवरांभक्त्यादिगुणैरुत्तमां साकेत्यतआह । येति । याकन्यापूर्वसर्गेपूर्वजन्मनिपितृणांअग्निष्वात्ताख्यदेवपितृणांपुत्रिकातत्रापिअमूर्तानां इतिज्ञेयं । अच्छोदानाम्नीपुत्रीसतीविष्णोःसंबंधितपश्चचार । इयंदेवपितृणांअग्निष्वात्तानांपुत्रीइत्यादिहरिवंशेउक्तं । तथाहि 'पितरोदिविवर्तंतेदेवास्तान्भावयन्त्युत । अग्नि ष्वात्ताइतिख्याताःसर्वएवामितौजसः । एतेषांमानसीकन्या अच्छोदानामनिम्नगे' ति ॥७३॥ विष्णुःयस्यैपितृकन्यायैअहंतवसुतस्यामितिपुरापितृपुत्रिकाजन्मनिवरंअदात् । सापितृपुत्रिकावसोःवसुराजस्यसुतासतीजातापुनःजननानंतरं दाशस्यनाविकस्यगृहेविवर्धितावव्रधे यस्यांवसुसुतायांविष्णुर्व्यासात्मनाव्यासस्वरूपेणाभूत् । प्रकटोभूदित्य

तेषां समानो वयसा विराटस्त्वभूद्धहानाम विधातृगायकः ॥ मरुत्सु यो विवहो नाम तस्याप्यंशेन युक्तो निजधर्म वर्ती ॥७२ ॥ ततः कदाचिन्मृगयां गतः स ददर्श कन्याप्रवरां तु शंतनुः ॥ या पूर्वसर्गे पितृपुत्रिका सती चचार विष्णो स्तप उत्तमं चिरं ॥ ७३ ॥ यस्यै वरं विष्णुरदात्पुराहं सुतस्तवस्यामिति या वसोः सुता ॥ जाता पुनर्दाशगृहे विवर्धि ता व्यासात्मना विष्णुरभूच्च यस्यां ॥७४॥ तद्दर्शनान्नृपतिर्जातहृच्छयो वव्रे प्रदानाय च दाशराजं ॥ ऋते स तस्यास्त नयस्य राज्यं नैच्छद्दातुं तामथायाद्गृहं स्वं ॥ ७५ ॥ तच्चिंतया म्लानमुखं जनित्रं दृष्ट्वैव देवव्रत आश्वपृच्छत् ॥ तत्का रणंसारथिमस्य तस्माच्छ्रुत्वाखिलं दाशगृहं जगाम ॥ ७६ ॥ स तस्य विश्वासकृते प्रतिज्ञां चकार नाहं करवाणि रा ज्यं ॥ तथैव मे संततितो भयं ते व्येतूर्ध्वरेताः सततं भवामि ॥ ७७ ॥ ॥

र्थः ॥ ७४ ॥ तस्याःदाशगृहस्थवसुसुतायाः दर्शनात्जातहृच्छयःआविर्भूतकामोनृपतिःशंतनुःप्रदानायदातुंआत्मनइतिशेषः । दाशराजंदाशनायकंवव्रे । प्रार्थयामासेत्यर्थः । सदाशराजःतस्याःकन्यकायास्तनयस्य राज्यंसाम्राज्यंऋतेविनातांदातुंनैच्छत् राज्यार्हस्यज्येष्ठस्यराज्यंदास्यतीतिबुद्ध्यातांदातुंनैच्छदितिभावः । अथस्वगृहंप्रत्यायात्प्रत्यगच्छत् ॥ ७५ ॥ तस्याःकन्यकायाःचिं तयाम्लानंशुष्कंमुखंयस्यसतथा । तंजनित्रंजनकंदृष्ट्वातस्यम्लानमुखत्वस्यकारणंतस्यशंतनोःसारथिमपृच्छत् । तस्मात्सारथेःसकाशात्अखिलंशंतनुदाशसंवादं ॥७६॥ सदेवव्रतःतस्यदाशस्यविश्वासकृतेविश्वासार्थंप्रतिज्ञांचकार किमिति । नकरवाणिनकरोमितथैवमेसंततितःसंतानात्तेभयंव्येतुनप्राप्नोतु । भयंव्येत्वित्युक्तंविशदयति । ऊर्ध्वेति । संततंदेहपातपर्यंतंऊर्ध्वरेताःरेतोविसर्जनरहितःनैष्ठिकब्रह्मचर्यवानित्यर्थः । भवानिभवामिइतिप्रतिज्ञांचकारेतिसंबंधः ॥ ७७ ॥ ॥ ॥

तदाभीमंभयंकरंव्रतंयस्यसतथा तस्यभावस्तत्त्वंतस्मात् अस्यदेवव्रतस्यभीष्मइतिनामकृत्वाप्रसूनानांपुष्पाणांवृष्टिंअचीक्लृपन्ववृषुः । सचभीष्मनामकोदेवव्रतःदाशेनद त्तांकालींकालीनाम्नींवसुकन्यांपितुःसमर्पयत् ॥ ७८ ॥ ननु भीष्मः अवर्णस्यगृहस्थांकन्यांकथंपितुःसमर्पयदित्यतआह । ज्ञात्वेति । सभीष्मःराजपुत्रींवसुपुत्रींगुणा ढ्यांसत्यस्यविष्णोःमातरं उदारांश्रेष्ठांततस्मात्विष्णुमातृत्वात् नामतःसत्यवतीतिलोकेप्रसिद्धांतांदाशदत्तांज्ञात्वा ॥ ७९ ॥ ननु शंतनुःदाशगेहस्थामपिकन्यांकथंजग्रा हइत्याशंकायामाह । प्रायइति । सतांमनःपापमार्गेनगच्छेद्धि । इंद्रचंद्रादिव्यावृत्त्यर्थंप्रायइत्युक्तं । आत्ममनःप्रसक्तंतस्यामासक्तंइतिहेतोःज्ञात्वा तस्याःकुलीनत्वं ज्ञात्वेत्यर्थः । दाशगृहेविवर्धितामपितांजग्राह । सद्धर्मरतइतिहेतुगर्भविशेषणं ॥ ८० ॥ सनृपोत्तमःशंतनुःस्वच्छंदेनस्वेच्छयामृत्युत्ववरंमरणरूपवरंप्रदाय तथा युद्धे

भीमव्रतत्वाद्धि तदास्य नाम कृत्वा देवा भीष्म इति ह्यचीक्लृपन् ॥ प्रसूनवृष्टिं स च दाशदत्तां कालीं समादाय पितुः समर्पयत् ॥ ७८ ॥ ज्ञात्वा तु तां राजपुत्रीं गुणाढ्यां सत्यस्य विष्णोर्मातरं नामतस्तत् ॥ लोके प्रसिद्धां सत्य वतीत्युदारां विवाहयामास पितुः स भीष्मः ॥ ७९ ॥ प्रायः सतां न मनः पापमार्गे गच्छेदिति ह्यात्ममनश्च सक्तं ॥ ज्ञात्वापि तां दाशगृहे विवर्धितां जग्राह सद्धर्मरतश्च शंतनुः ॥ ८० ॥ स्वच्छंदमृत्युत्ववरं प्रदाय तथाप्यजेयत्वम धृष्यतां च ॥ युद्धेषु भीष्मस्य नृपोत्तमः स रेमे तथैवाब्दगणान्बहूंश्च ॥ ८१ ॥ लेभे स चित्रांगदमत्र पुत्रं तथा द्वितीयं च विचित्रवीर्यं ॥ तयोश्च बाल्ये विसृजच्छरीरं जीर्णे न देहेन च किं ममेति ॥ ८२ ॥ स्वेच्छया वरु णत्वं स प्राप नानिच्छया तनुः ॥ तस्मिन्काले त्यज्यते हि बलवद्भिर्वधं विना ॥ ८३ ॥ अतिसक्तास्तपोहीनाः कथंचिन्मृतिमाप्नुयुः ॥ अनिच्छयापि हि यथा मृतश्चित्रांगदानुजः ॥ ८४ ॥ ॥

षुअजेयत्वंअपराभवत्वंअधृष्यतांचशत्रुभिःधर्षणायोग्यत्वंप्रदायतयासत्यवत्या ॥ ८१ ॥ सशंतनुःअत्रास्यांलेभेप्राप तयोःपुत्रयोर्बाल्येबाल्यावस्थायांममजीर्णेनदेहेनाकिं किंप्रयोजनंइतिशरीरंव्यसृजत् । अत्यजत्सशंतनुः ॥ ८२ ॥ तदेवविशदयति । स्वेच्छेति । तस्मिन्कालेदेहस्यजीर्णत्वावस्थायांबलवद्भिःवधंहननंविनाअनिच्छयातनु र्नत्यज्यते किंत्विच्छयैवेत्यर्थः । तपोनिष्ठैरितिशेषः । हियतोअतःसशंतनुःस्वेच्छयावरुणत्वंप्रापेत्यन्वयः । चित्रांगदादिव्यावृत्त्यर्थंबलवद्भिरित्युक्तं ॥ ८३ ॥ उक्तस्याप वादमाह । अतिसक्त इति । अतिसक्ताःविषयेष्वत्यासक्ताः तपोहीनाःबलवद्भिःस्वस्माद्बलिष्ठैःवधंविनाअनिच्छयाइच्छाभावेनैवकथंचिन्मृतिहेतुरोगाद्यैर्मृतिंआप्नुयुः । तत्रदृष्टांतमाह । यथेति । चित्रांगदस्यअनुजोविचित्रवीर्यःयक्ष्मणार्दितःसन् मृतः यथातथेत्यर्थः । हिप्रसिद्धिःबलवद्भिरित्यादेरुभयत्रानुषंगः ॥ ८४ ॥

प्रकृतमनुसरति । अथेति । अथशंतनोःस्वमूलरूपप्राप्त्यनंतरं । और्ध्वदैहिकंदेहाद्यदूर्ध्वंतदौर्ध्वदैहिकंप्रेतसंस्कारकमितियावत् ॥ अस्यचित्रांगदस्यअनुजंविचित्रवीर्यं ॥ ८५ ॥ अकृतः उद्वाहःविवाहोयेनसतथा । चित्रांगदःगंधर्वेणचित्रांगदेनमहारणेनिहतः किंकुर्वन्चित्रांगदाख्यंस्वंनामअपरित्यजन्अत्यजन् गंधर्वचित्रांगदेनमदीयचित्रांगदाख्यंनामतवायोग्यंतस्मात्त्वंचित्रांगदाख्यंनामत्यजेत्युक्तः शंतनुपुत्रःचित्रांगदःगंधर्वोक्तमकुर्वन्गंधर्वेणनिहतइतिभावः ॥८६॥ अनुचित्रांगदमृत्यनंतरं अथकाशिनःकाशिराजस्येत्यर्थः ॥ सुताःतदर्थंविचित्रवीर्यार्थंआहरत्अपहृतवान् ॥ ८७ ॥ तदेवविविच्याह । पाणीति । वीर्यवान्भीष्मःब्रह्मदत्ताख्यासुरस्यपाणिग्रहणकालेउद्वाहसमये तंसाल्वराजंब्रह्मदत्तंसमेतान्तत्रमिलितान्क्षत्रियानपिविजित्य अंबिकानाम्नीतथैवपरांद्वितीयांअंबालिकांअंबामपिविवाहस्यानर्हामंबानाम्नीमप्याहरदितिसंबंधः

अथौर्ध्वदैहिकं कृत्वा पितुर्भीष्मोऽभ्यषेचयत् ॥ राज्ये चित्रांगदं वीरं यौवराज्येऽस्य चानुजं ॥ ८५ ॥ चित्रांगदेन निहतो नाम स्वं त्वपरित्यजन् ॥ चित्रांगदो कृतोद्वाहो गंधर्वेण महारणे ॥ ८६ ॥ विचित्रवीर्यं राजानं कृत्वा भीष्मोन्वपालयत् ॥ अथ काशिसुतास्तिस्रस्तदर्थं भीष्म आहरत् ॥ अंबामप्यंबिकानाम्नीं तथैवांबालिकां परां ॥ ८७ ॥ पाणिग्रहणकाले तु ब्रह्मदत्तस्य वीर्यवान् ॥ विजित्य तं साल्वराजं समेतान् क्षत्रियानपि ॥ ८८ ॥ अंबिकांबालिके तत्र संवादं चक्रतुः शुभे ॥ अंबा सा भीष्मभार्यैव पूर्वदेहे तु नैच्छत ॥ ८९ ॥ शापाद्धिरण्यगर्भस्य साल्वकामाहमित्यपि ॥ उवाच तां स तत्याज सागमत्साल्वमेव च ॥ ९० ॥ तेनापि संपरित्यक्ता परामृष्टेति सा पुनः ॥ भीष्ममाप स नोगृण्हात् प्रययौ सापि भार्गवं ॥ ९१ ॥ भ्रातुर्विवाहयामास सोंबिकांबालिके ततः ॥ भीष्माय तु यशो दातुं युयुधे तेन भार्गवः ॥ ९२ ॥ ॥ ॥

॥ ८९ ॥ तत्रतासुमध्येशुभेशापादिदोषाभावादुत्तमेअंबिकाबालिकेउभेसंवादंविचित्रवीर्यस्यभार्यात्वेअंगिकारं साचापूर्वदेहेभीष्मभार्यैव वशांगिनाम्नीवसोर्भार्याहिरण्यगर्भस्यब्रह्मणःशापात्सावेतिनरेपुजातेत्यादिशापान्निमित्तान्नैच्छन् विचित्रवीर्यमितिशेषः ॥ ८९ ॥ अहंसाल्वकामापिब्रह्मदत्तकामेत्युवाच । ब्रह्मदत्तस्यसाल्वविषयपतित्वात्साल्वइतिनामा सभीष्मःतामंबांतत्याजअत्यजत् ॥ ९० तेनसाल्वेनपरामृष्टास्पृष्टेत्यर्थः अन्यपुरुषेणेतिशेषः । संपरित्यक्तासांबाभीष्मंपुनराप । सभीष्मः नोगृण्हात् नांगीचकार । गृण्हादगृण्हदितिवा सापितार्गवंरामंप्रतिययौ ॥ ९१ ॥ ततःअंबागमनानंतरं सभीष्मःअंबिकांअंबालिकेभ्रातुःविचित्रवीर्यस्यतेनभीष्मेणमत्स्वीकारंकारय तदभावेतस्यवधंकुर्विति प्रार्थितइतिकथानुसंधेया । भार्गवःभीष्माययशःतद्वाक्यसत्यकारणरूपं यशोदातुंतेनभीष्मेण ॥ ९२ ॥ ॥

भीष्मेविद्यमानंयत्कारुण्यंकृपातयायंत्रितोबद्धोरामःअंबांनग्राहयामास भीष्मेणेतिशेषः ॥ ९३ ॥ ननु अशक्तत्वान्नजघानेतिकिंनस्यादित्यतआह । अनंतशक्तीति अनंतशक्त्यादिविशेषवान्यःयस्यसमःअन्योनास्तिनस्यपरमस्यसर्वोत्कृष्टस्यरामस्यकथंचन केनापिप्रकारेणकुत्रचिद्देशेकालेचाशक्तिःकथंनहीत्यर्थः ॥ ९४ ॥ यशसा अंबांनजग्राहेत्येवंरूपंयशसाअभिपूरयन् असुरान्विमोहयन् भीष्मंजित्वैवनजघान । सदेवोरामः तस्यभीष्मस्यवाचंअंबांनगृण्हीयामितिप्रतिज्ञारूपांवाचं सत्यामकरोत् ॥ ९५ ॥ स्वोक्तार्थेप्रमाणमुदाहरति । विद्ववदिति । केशवःविद्धवन्भल्लेनविद्धवत्मुग्धवतअज्ञवत्वेदनयाव्यथयाआर्तवत्पीडितवद्दर्शयतीतिशेषः । विष्णुःमोहायदर्शयन्नपितथाविद्धादिवन्नभवेत् ॥ ९६ ॥ एवमादिउक्तपुराणवाक्यादिचतत्पुराणोत्थवाक्यंचतस्मात् ॥ ९७ ॥ भीष्मेणत्वांग्राहयिष्यइतिरामप्रतिज्ञायाःसार्थक्यंदर्शयति । सों

अनंतशक्तिरपि सन्न भीष्मं निजघान ह ॥ न चांबांग्राहयामास भीष्मकारुण्ययंत्रितः ॥ ९३ ॥ अनंतशक्तिः सकलांतरात्मा यः सर्ववित्सर्ववशी च सर्वजित् ॥ न यत्समोन्योस्ति कथं च कुत्रचित्कथं ह्यशक्तिः परमस्य तस्य॥९४॥ भीष्मं स्वभक्तं यशसाभिपूरयन् विमोहयन्नसुरांश्चैव रामः ॥ जित्वैव भीष्मं न जघान देवो वाचं च सत्यामकरोत्स तस्य ॥ ९५ ॥ विद्धवन्मुग्धवच्चैव केशवो वेदनार्तवत् ॥ दर्शयन्नपि मोहाय नैव विष्णुस्तथा भवेत् ॥ ९६ ॥ एवमादिपुराणोत्थवाक्याद्रामः सदा जयी ॥ यशो भीष्मस्य दत्वा तु सोंबां च शरणागतां ॥ ९७ ॥ उन्मुच्य भर्तृद्वेषोत्थपापात्तेनाश्वयोजयत् ॥ अनंतरं शिखंडित्वात्तदा सा शांकरं तपः ॥९८॥ भीष्मस्य निधनार्थाय पुंस्त्वार्थं च चकार ह ॥ भीष्मो यथा त्वांगृण्हीयात्तथा कुर्यामितीरितं ॥ रामेण सत्यं तच्चक्रे भीष्मे देहांतरं गते ॥ ९९ ॥ ॥

वामित्यादिना । सरामःयशोदत्वाअंबांचभर्तुःभीष्मस्यद्वेषाद्वधकारणरूपद्वेषात् । उत्थंचतत्पापंचतस्मादुन्मुच्य शिखंडित्वादनंतरं शिखंडिस्वरूपानंतरं तेनपुरूपेण भीष्मेण आशुअविलंबेनअयोजयत् । योजयामास । जन्मांतरेभर्तृसंबंधघटनात्नरामप्रतिज्ञाभंगइत्येतत्श्लोकाभिप्रायः । तदासांबाभीष्मस्यनिधनार्थाय प्रयोजनायपुंस्त्वार्थंपुरुषत्वप्राप्त्यर्थंस्वस्येतिशेषः । शांकरंरुद्रसंबंधि ॥ ९८ ॥ ननु देहांतरगतभीष्मेणसहशिखंड्याःसंयोजनाद्रामप्रतिज्ञाभंगइत्यतःप्रतिज्ञाभिप्रायमाह भीष्मइति । रामेणइतीरितंतद्वाक्यंभीष्मेदेहांतरंगतेवसुत्वंप्राप्तेसति सत्यंचक्रेरामइतिशेषः । रामेणअस्मिन्जन्मन्येवयोजयिष्यइतिविशिष्यानुक्तत्वातभीष्मेणयोजयिष्यइतिसामान्योक्तेश्च जन्मांतरविषयत्वाभिप्रायसंभवात्तस्यचकृतत्वान्नरामप्रतिज्ञाभंगइतिभावः ॥ ९९ ॥ ॥ ॥ ॥

तस्याःअंबायाःमृतौमरणेहेतुत्वंकालात्स्त्रीत्वोत्पत्तिकालोत्तरकालात्पुंदेहस्यपुरुषदेहस्यसंभवंप्राप्तिंच इतिवरद्वयंपुंदेहसंभवंमृतिहेतुत्ववरंवाप्रादात् ॥ १०० ॥ यइमांमालां गृण्हीयात्गृहीष्यतिसभीष्मंहनिष्यतिइत्येवइतिवदन्नेवमालांचप्रादादितिसंबंधः । सांबातांमालांगृहीत्वानृपान्प्रतिययौ । भीष्मवधार्थंदातुमितिशेषः ॥ १०१ ॥ केपिनृपा तांमालांनजगृहुः ततःसांबातांमालांन्यस्यनिशाय ॥ १०२ ॥ सशंभुः । एनंद्रुपदंअब्रवीत्किमिति । तवादौकन्यकाभूत्वासैवकन्यकाकालांतरेपुनान्भविष्यतीतिसंबंधः ॥ १०३ ॥ ततःवरप्राप्त्यनंतरं । सांबानाम्नाशिखंडिनीतिअजनिद्रुपदादितिशेषः । पांचालराजोद्रुपदःतस्याःशिखंडिन्याःपुंवत्पुत्रवदित्यर्थः । कर्माणिचौलोपनयनादिक र्माणिअकरोत् ॥ १०४ ॥ सराजातस्यैशिखंडिन्यैदशार्णाधिपतेःदशार्णविषयभूपतेर्हिरण्यवर्मणःसुतांउद्वाहयामास । साहिरण्यवर्मणःसुतापुंवेषेणैवगूहितांआच्छादितां

रुद्रस्तु तस्यास्तपसा तुष्टः प्रादाद्वरं तदा ॥ भीष्मस्य मृतिहेतुत्वं कालात्पुंदेहसंभवं ॥ १०० ॥ मालां च य इमां मालां गृण्हीयात्स हनिष्यति ॥ भीष्ममित्येव तां मालां गृहीत्वा सा नृपान्ययौ ॥ १०१ ॥ तां न भीष्मभयात्केपि जगृहुस्तां हि सा ततः ॥ द्रुपदस्य गृहद्वारि न्यस्य योगात्तनुं जहौ ॥१०२॥ एतस्मिन्नेव काले तु सुतार्थं द्रुपदस्तपः ॥ चकार शंभवे चैनं सोब्रवीत्कन्यका तव ॥१०३॥ भूत्वा भविष्यति पुमानिति सांबा ततोजनि ॥ नाम्ना शिखंडिनी तस्याः पुंवत्कर्माणि चाकरोत् ॥ १०४ ॥ तस्यै पांचालराजः स दशार्णाधिपतेः सुतां ॥ उद्वाहयामास स तां पुंवेषेणैव गूहितां ॥ १०५ ॥ अन्यत्र मातापित्रोस्तु न विज्ञातां बुबोध ह ॥ धात्र्यै न्यवेदयत्साथ तत्पित्रे सा न्यवेदयत् ॥ १०६ ॥ स क्रुद्धः प्रेषयामास निहन्मि त्वां सबांधवं ॥ इति पांचालराजाय निर्जगाम च सेनया ॥ १०७ ॥ विश्वस्य वाक्यं रुद्रस्य पुमानेवेति पार्षतः ॥ प्रेषयामास दिग्बुद्धिर्भिन्ना ते बालवाक्यतः अपरीक्षकस्यते राष्ट्रं कथमित्येव नर्मकृत् ॥ १०८ ॥ ॥

मातापित्रोरन्यत्रान्यैः नविज्ञातांअज्ञातांशिखंडिनींबुबोध । एषापिकन्यानतुपुमानितिज्ञातवती ॥ १०५ ॥ 'धात्रीस्यादुपमाते'त्यमरः। अथसाधात्रीतत्पित्रेहिरण्यवर्मणे न्यवेदयत् ॥ १०६ ॥ सहिरण्यवर्मात्वांहन्मीतिपांचालराजायद्रुपदंप्रतीत्यर्थः । प्रेषयामास कांचनवर्माणंदूतमितिशेषः । सेनयासहनिर्जगामचनिःसृतोभूत ॥ १०७ ॥ पार्षतःपृषतपुत्रोद्रुपदःविश्वस्यविश्वासंकृत्वा तेतवबुद्धिःबालवाक्यतःभिन्नानष्टा अतएवधिक्त्वामितिशेषः । अपरीक्षकस्यपरीक्षतेअवधारयतिप्रमाणैरर्थमितिण्वुल् । परीक्षकःसनभवत्यपरीक्षकःतस्य 'परीक्षकःकारुणिक' इत्यमरः । परीक्षारहितस्यतेराष्ट्रंकथंयोग्यामित्यर्थः । इत्येवनर्महास्यंकरोतीतिनर्मकृत् सनूपुमानेवशिखंडिनीपुरुषएवेतिप्रेषयामासदूतमितिशेषः ॥ १०८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

अथदूतप्रेषणानंतरं शिखंडिनीपितरंदृष्ट्वामन्निमित्तात्मदर्थंननश्यतु पितेतिशेषः । इतिमत्वाज्ञात्वादुःखात्यत्रयस्मिन्वने तुंबरुनामागंधर्वःतिष्ठतीतिशेषः । तस्मैवनायय यौ ॥ १०९ ॥ स्थूणाकर्णोपश्यदितिग्रंथांतरविरोधंपरिहरन्नाह । स्थूणाकर्णेति । तांशिखंडिनींसतुंबरुःतस्याःशिखंडिन्याःसकाशात्अखिलंपूर्ववृत्तं ॥ ११० ॥ सतुं बरुःस्वंवपुःस्वपुरुषदेहंततःतदीयंशिखंडिनीसंबंधिशरीरंपुंस्त्वभावार्थंपुरुषत्वस्वभावार्थंअंशेनएकभागेनपूर्वदेहेतद्दत्तगंधर्वदेहेसमास्थितःआधिष्ठितोभूत् गंधर्वइतिशेषः ॥ ॥ १११ ॥ गंधर्वःशिखंडिन्यैपुंग्यार्थंदत्तदेहेपुनरंशेनकिमर्थंसमास्थितइतिजिज्ञासायामाह । पुंसामित्यादिना । पुंसांपुरुषाणांक्वापिक्वचिदपिस्त्रीत्वंस्त्रीस्वरूपंभवेत्शापवरदुष्कर्मावरणादिहेतुनेतिशेषः । अंतेस्त्रीत्वप्राप्तिकारणसमाप्तौतथापूर्ववत्पुमान्भवेत् । स्त्रीणांस्त्रीजीवानांबलवत्कारणैरपिदेवतावरोत्कृष्टपुण्यादिकारणैरपिपुंस्त्वंनैवस्याद्धि

अथ भार्यासमेतं तं पितरं चिंतयाकुलं ॥ दृष्ट्वा शिखंडिनी दुःखान्मन्निमित्तान्न नश्यतु ॥ इति मत्वा वनायैव ययौ यत्र च तुंबरुः ॥ १०९ ॥ स्थूणाकर्णाभिधेयस्तामपश्यद्दृढकर्णतः ॥ स च तस्याखिलं श्रुत्वा कृपां चक्रे महामनाः ॥११०॥ स तस्यै स्वं वपुः प्रादात्तदीयंजगृहे तदा ॥ अंशेन पुंस्त्वभावार्थं पूर्वदेहे समास्थितः॥१११॥ पुंसां स्त्रीत्वं भवेत्क्वापि तथाप्यंते पुमान् भवेत् ॥ स्त्रीणां नैव हि पुंस्त्वं स्यात् बलवत्कारणैरपि ॥ ११२॥ अतः शिववरेप्येषा जज्ञे योषैव नान्यथा ॥ पश्चाच्च पुंतनुं सैषा प्रविवेशैव पुंयुतां ॥ ११३ ॥ नास्या देहः पुंस्त्वमाप न च पुंसानाधिष्ठिते ॥ पुंदेहे न्यवसत्साथ गंधर्वेण त्वधिष्ठिते ॥ गांधर्वं देहमाविश्य स्वकीयं भवनं ययौ ॥११४॥

यस्मात्तस्मात्पूर्वदेहेस्थितइतिसंबंधः ॥ ११२ ॥ अतःउक्तनियमहेतोःशिववरेसत्यपिकन्यकात्वंभूत्वाभविष्यतिपुमानित्येवंरूपेशिववरेसत्यपि येषांवायोषैवजज्ञे स्त्रीदेहसंबंधमेवाप नान्यथापुरुषदेहसंबंधंनैवापेत्यर्थः । जननोत्तरकालेपुंस्त्वप्राप्तिःश्रूयतेतत्कथमित्यतआह । पश्चादिति । पश्चात्स्त्रीत्वेनोत्पत्त्यनंतरंएषाशिखंडिनीपुंसागंधर्वेणयुतांअतएवपुंतनुंपुरुषदेहमेवप्रविवेश । नतुस्वयंपुंदेहंप्रापेतिभावः । निषेधस्तुकेवलस्यनत्वन्याधिष्ठितप्रवेशस्यनिषेधः । पूर्वांशस्यजातत्वेप्युत्तरांशस्याभावाच्छिववरइत्युक्तमितिभावः ॥ ११३ ॥ अस्याःशिखंडिन्याः देहःगंधर्वेणस्वीकृतस्त्रीदेहःपुंस्त्वंन पुंसाअनधिष्ठितेअवस्थानरहितेपुंदेहेनचन्यवसत् । किंतु साशिखंडिनीगंधर्वेणअधिष्ठितंगांधर्वदेहंगंधर्वसंबंधिपुरुषदेहंआविश्य । अथशब्दःसमुच्चयार्थः ॥ ११४ ॥ ॥ ॥ ॥ ॥ ॥

ननु गांधर्वदेहमाविश्यययाविरत्युक्तंतर्हि श्वशुरादीनांशिखंडिनीतिप्रतीतिःकथमभूदित्यतआह । तस्याइति । तयाशिखंडिन्यापश्चादनंतरं । अधिष्ठितःप्रविष्टःगंधर्वदेहोपि गंधर्वस्यप्रसादतःतस्याःशिखंडिन्याःसचासौदेहश्चतद्देहः शिखंडिनीपूर्वदेहःतेनसादृश्यंसदृशत्वंप्राप । गंधर्वांशयुक्तोगंधर्वदेहःशिखंडिन्याःपश्चादधिष्ठितइतिभावः ॥११५॥ कन्यादेहंशिखंडिनीदेहंसमास्थितः ॥ ११६ ॥ वनेउवासअवसत्धनदोदेवःकुबेरः ॥ ११७ ॥ अप्रत्युत्थायिनंप्रत्युत्थानरहितंविलज्जयातंतुपुरस्तंबेपुगुल्मेष्वितियावत् । लीयमानंतंतुंबुरुंइत्थंस्त्रीरूपीभवेतिशशाप । इत्थंभवेदितातेविपाठः । 'तंतुस्तंबेतथोर्णायांसुत्रसंघेचसंतताविं' त्यभिधानं ॥११८॥ यातियास्यतिचपलत्वादकार्यकर्मकरणत्वादित्यर्थः । इतीरितः ॥ ११९ ॥ सगंधर्वःतुंबरुःतथास्त्रीशरीरेणकौरवपांडवयुद्धावसानपर्यंतंअवसत् । कन्याशिखंडिनीपित्रोरशेषतःसर्वंअनुभूतंकथयामास ।

तस्यास्तद्देहसादृश्यं गंधर्वस्य प्रसादतः ॥ ११५ ॥ प्राप गंधर्वदेहोपि तथा पश्चादधिष्ठितः ॥ श्वो देहि मम देहं मे स्वं च देहं समाविश ॥ इत्युक्त्वा स तु गंधर्वः कन्यादेहं समास्थितः ॥ ११६ ॥ उवासैव वने तस्मिन् धनदस्तत्र चागमत् ॥ अप्रत्युत्थायिनं तं तु लीयमानं विलज्जया ॥ ११७ ॥ शशाप धनदो देवः चिरमित्थं भवेति तं ॥ यदा युद्धे मृतिं याति सा कन्या पुंतनुस्थिता ॥ ११८ ॥ तदा पुंस्त्वं पुनर्यासि चपलत्वादितीरितः ॥११९ ॥ तथा वसत्स गंधर्वः कन्या पित्रोरशेषतः ॥ कथयामासानुभूतं तौ भृशं मुदमापतुः ॥ १२० ॥ परीक्ष्यतामुपायैस्तु श्वशुरो लज्जितो ययौ ॥ १२१ ॥ श्वोभूते सा तु गंधर्वं प्राप्य तद्वचनात्पुनः ॥ ययौ तेनैव देहेन पुंस्त्वमेव समाश्रिता ॥ १२२ ॥ स शिखंडी नामतोभूदस्त्रशस्त्रप्रतापवान् ॥ १२३ ॥ विचित्रवीर्यः प्रमदाद्वयंतत्संप्राप्य रेमेद्वगणान्सुसक्तः ॥ तत्याज देहं च स यक्ष्मगार्दितस्तनोस्य मातास्मरदाशु कृष्णं ॥ १२४ ॥ ॥ ॥

तौपितरौ ॥ १२० ॥ उपायैःपुंस्त्वज्ञापकोपायैःपरीक्ष्यपुमानितिपरीक्षांकृत्वा ययौ ॥ १२१ ॥ तद्वचनात् नरणयर्तंममपुंदेहस्तवास्तुत्वदीयंत्रिवपुःममास्त्वित्येवंरूपगर्ववचनात् तेनैवदेहेनपुंदेहेनैवययौ स्वगृहंप्रतीतिशेषः । पुंस्त्वंपुरुषत्वंसमास्थिताप्राप्ताएव ॥ १२२ ॥ अतएवततःशिखंडिन्याअभिमन्यनानोगंधर्वांशयुक्तोगंधर्वदेहः नामतःशिखंडीतिअभूत् ॥ १२३ ॥ प्रसंगात् गातकथानिर्गयेनेत्काप्रकृतमनुसरति । विचित्रवीर्यइति । विचित्रवीर्यःशंतनुपुत्रःतत्प्रमदाद्वयंपूर्वोक्तांबिकांबालिकात्मकस्त्रीद्वंद्वं यक्ष्मणाक्षयरोगेणअर्दितःपीडितःसविचित्रवीर्यःदेहंतत्याजअत्यजत् ततःअस्यविचित्रवीर्यस्यमातासत्यवती श्रीकृष्णंवेदव्यासंअस्मरत् ॥ १२४ ॥

जगज्जनित्रःजगदुत्पादकःअपहंतिनाशयतीतितथा । जनित्रीमातासत्यवतीतंव्यासंपूजयामास ॥ १२५ ॥ अस्यव्यासस्यमातापरमादरेणसर्वस्मादधिकप्रीत्या । अर्चितंस्वभिष्टुतंसम्यक्स्तुतंव्यासंप्रत्यवदत् । किमिति । पुत्रौचित्रांगदविचित्रवीर्यौततस्तस्मात्अस्माभिःपरमादरेणविशेषभक्त्याअर्थितःप्रार्थितस्त्वंभ्रातुःक्षेत्रेभार्यायां उत्पादयेत्यवददितिसंबंधः । नक्षेत्रजाअपिमृतेपितरिस्वकीयैःसम्यक्नियोगमनत्याप्यभवाययोग्याइतिस्मृत्युक्तदोषपरिहर्तुंअस्मत्परमादरार्थितइत्युक्तं इतिरितःप्रणतःअभिष्टुतःभीष्मादिभिःप्रणतोभिष्टुतश्चव्यासःवचःआह ॥१२६ ॥ १२७ ॥ किमिति । रमांऋतेजातुकदाचित्ममअंगयोगायअंगसंबंधायसंभोगायेत्यर्थः । योग्याअंगनास्त्री सुराणांआलयेलोकेपिनैव यद्यपितथापिवाक्यंपुत्रोत्पत्त्यर्थमुक्तंवाक्यंसातेस्नुषासांवत्सरंसंवत्सरसंबंधिमेव्रतंवैष्णवव्रतमित्यर्थः । चरतुकरोतु ॥ १२८ ॥ त

आविर्बभूवाशु जगज्जनित्रो जनार्दनो जन्मजराभयापहः ॥ समस्तविज्ञानतनुः सुखार्णवः संपूजयामास च तं जनित्री ॥ १२५ ॥ तं भीष्मपूर्वैः परमादरार्चितं स्वभिष्टुतं चावददस्य माता ॥ पुत्रौ मृतौ मे न तु राज्यमैच्छद्भीष्मो मया नितरामर्थितोपि ॥ १२६ ॥ क्षेत्रे तव भ्रातुरपत्यमुत्तममुत्पादयास्मत्परमादरार्थितः ॥ इतीरितःप्रणतश्चाप्यभिष्टुतो भीष्मादिभिश्चाह जगद्गुरुर्वचः ॥ १२७ ॥ ऋते रमां जातु ममांगयोगयोग्यांगना नैव सुरालयेपि ॥ तथापि ते वाक्यमहं करिष्ये सांवत्सरं सा चरतु व्रतं मे ॥ १२८ ॥ सा पूतदेहाथ च वैष्णवव्रतान्मत्तः समाप्नोतु सुतं वरिष्ठं ॥ इतीरिते राष्ट्रमुपैति नाशमिति ब्रुवंती पुनराह वाक्यं ॥ १२९ ॥ सौम्यस्वरूपोप्यतिभीषणं मृषा तच्चक्षुषो रूपमहं प्रदर्शये ॥ सहेत सा तद्यदि पुत्रकोस्या भवेद्गुणाढ्यो बलवीर्ययुक्तः ॥१३०॥ इतीरितेस्त्वित्युदितस्तयागमत्कृष्णोंबिका सा तु भयान्यमीलयत् ॥ अभूच्च तस्यां धृतराष्ट्रनामको गंधर्वराट्पवनावेशयुक्तः ॥१३१॥

तःकिमित्यतआह । सेति । अथव्रताचरणानंतरं सांबिकाराष्ट्रंनाशमुपैति अराजकत्वादितिशेषः । इतिब्रुवंतीमानरंपुनराह ॥ १२९ ॥ किमिति अहंसौम्यंशांतंस्वरूपंयस्यसतथा । अपियद्यपितथापितस्याःतवस्नुषायाःचक्षुषोलोचनयोर्मृषाअविद्यमानमेवअतिभीषणंअतिभयंकररूपंप्रदर्शयिष्ये सातद्भयंकरामविद्यमानरूपंयदिसहेतद्द्रष्टुंशक्नुयात्तर्हि अस्याःतेस्नुषायाः ॥ १३० ॥ व्यासेनइतीरितेसति तयासत्यवत्यातथास्त्वित्युदितःकृष्णःअंबिकामगमत् । सांबिकाभयादविद्यमानभयंकररूपदर्शनभयाद्यमीलयत् नयनइतिशेषः । तस्यामंबिकायांपूर्वंधृतराष्ट्रनामकोगंधर्वराट् गंधर्वश्रेष्ठः अत्रापिधृतराष्ट्रनामाबभूव ॥ १३१ ॥ ॥

कृष्णः अस्यधृतराष्ट्रस्य सधृतराष्ट्रःदोषतःनेत्रमीलनदोषात्अंधः ॥ १३२ ॥ अंबालिकायांअन्यंजनयेत्यब्रवीत्ततः अन्यंजनयेत्येवंरूपंमातृवाक्यंतथापूर्ववदकरोद्व्यास इतिशेषः । मृषाद्दक्मृषामिथ्याभूतंभयंकररूपंदृक्पश्यतीतिसांबालिकाभयात्पांडुःश्वेतवर्णोभूत् ॥ १३३ ॥ ततःअंबालिकायाःसअंबालिकापुत्रः हियस्माद्वर्णेनपांडुः तस्मान्नामतश्चनाम्नापांडुरित्यर्थः । सचपांडुःआवेशतःआवेशहेतोः ॥ १३४ ॥ तस्मैपांडवेवरंप्रादात् मातातंअंबालिकायामुत्पन्नंपांडुश्वेतवर्णंविज्ञायप्राह किमिति । निर्दोषंअंधपांड्वादिदोषरहितंअन्यं ॥ १३५ ॥ पुनर्जनयउत्पादयइतिकृष्णंप्रत्युक्त्वा स्नुषांअंबिकांपुनराह । किमिति । पुरात्वया अक्ष्णोःनेत्रयोर्निमीलनंआच्छादनंय

स मारुतावेशवशाद्बलाधिको बभूव राजा धृतराष्ट्रनामा ॥ आदाद्वरं चास्य बलाधिकत्वं कृष्णोंध असीत्सतु मातृ दोषतः ॥ १३२ ॥ ज्ञात्वा तमंधं पुनरेव कृष्णं माताब्रवीज्जनयान्यं गुणाढ्यं ॥ अंबालिकायामिति तत्तथाकरोद्द याच्च सा पांडुरभून्मृषादृक् ॥ १३३ ॥ परावहो नाम मरुत्ततो भवद्वर्णेन पांडुः सहि नामतश्च ॥ स चास वीर्या धिक एव वायोरावेशतः सर्वशस्त्रास्त्रवेत्ता ॥ १३४ ॥ तस्मै तथा बलवीर्याधिकत्वं वरं प्रादात्कृष्ण एवाथ पांडुं ॥ विज्ञाय तं प्राह पुनश्च माता निर्दोषमन्यं जनयोत्तमं सुतं ॥ १३५ ॥ उक्त्वेति कृष्णं पुनरेव च स्नुषामाह त्व याक्ष्णोर्हि निमीलनं पुरा ॥ कृतं ततस्ते सुतआस चांधस्ततः पुनः कृष्णमुपास्व भक्तितः ॥ १३६ ॥ इतीरि ताप्यस्य हि मायया सा भीता भुजिष्यां कुमतिर्न्ययोजयत् ॥ सा तं परानंदतनुं गुणार्णवं संप्राप्य भक्त्या पर यैवरेमे ॥ १३७ ॥ तस्यां स देवोजनि धर्मराजो मांडव्यशापाद्य उवाह शूद्रतां ॥ वसिष्ठसाम्यं समभीप्समानं प्रच्यावयन्निच्छया शापमाप ॥ १३८ ॥ ॥ ॥ ॥

तःकृतंततःतेसुतःअंधःआसततःतदर्थंनिर्दोषपुत्रोत्पत्त्यर्थं पुनःभक्तितःकृष्णंउपास्वभजस्व ॥ १३६ ॥ भुजिष्यांपरिचारिकींऊढांशूद्रींन्ययोजयत् अतएवकुमतिःसाभु जिष्या ॥ १३७ ॥ तस्यांसधर्मराजोदेवःअजनिजातःनकइत्यतआह । मांडव्येति । योधर्मराजःमांडव्यस्यऋषेःशापात् शूद्रतांशूद्रीपुत्रत्वात्शूद्रत्वंउवाहप्राप । 'पितुर्गुणामा तृजातिःसुतानांयस्मात्सतांप्राय'शइतिस्मरणात् शूद्रोत्पन्नत्वात्शूद्रत्वंप्रापेत्यर्थः । ननु यमस्यशूद्रत्वप्राप्तौकिंकारणमित्यतआह । वसिष्ठेति । वसिष्ठेनसाम्यंसदृशत्वंसम्य गभीप्समानंइच्छंतंमांडव्यंप्रच्यावयन् । वसिष्ठसाम्यप्राप्त्यर्थंकृततपसोविमोचयन् इच्छयास्वेच्छयाधीपूर्वकमित्यर्थः । शापंशूद्रत्वप्रापकंशापंआप ॥ १३८ ॥

शापप्रकारंस्पष्टयति । अयोग्येति । अयोग्यस्यस्वायोग्यवसिष्ठसाम्यत्वस्यसंप्राप्तौविषयेकृतश्चासौप्रयत्नश्चतज्जन्यदोषान्निमित्तादेवअयोगव्यवच्छेदकएवकारः कस्याचि द्धनिकस्यअर्थेद्रव्येचोरैःहृतेअपहृतेसत्यपि चोरबुध्याअयमेवचोरइतिबुध्याशूलोपरिसमारोपितंतंमांडव्यंप्रतियमःमक्षीवधादिति मक्षिकापुच्छेषीकाप्रवेशनात्तवशूलप्राप्तिरि त्यवदत् । अत्र । 'अनुसार्यमाणाबहुभीरक्षिभिर्भरतर्षभ । तामेववसतिंजग्मुस्तद्ग्रामाल्लोप्त्रहारिणः । तेतस्यपुरतोलोप्त्रंनिदधुःकुरुसत्तम । निधायचभयाल्लीनातत्रैवा नागतेवने । तेषुलीनेष्वथोशीघ्रंततस्तद्रक्षिणांबलं । आजगामततोपश्यंस्तमृषिंतस्करानुगाः । तमपृच्छंस्ततोराजन्यथावृत्तंतपोधनं । कतरेणपथायाताःदस्यवोद्विजसत्तम । तेनगच्छेमहिब्रह्मन्यथाशीघ्रतरंवयं । तथातुरक्षिणांतेषांब्रुवतांसतपोधनः । न किंचिद्वचनंराजन्अब्रवीत्साध्वसाधुवा । ततस्तेराजपुरुषाविचिन्वानास्तथाश्रमं । ददृशुस्त त्रसल्लीनांस्तांश्चोरान्द्रव्यमेवच । तत.शंकासमभवद्रक्षिणांतंमुनिंप्रति । संयम्यैनंततोराज्ञेदस्यून्सर्वान्न्यवेदयन् । सवध्यघातैराज्ञप्तैःशूलेप्रोतोमहातप' इत्यादि । तथा । 'सगत्वासदनंविप्रोधर्मस्यपरमार्थवित्' । इत्यादि तथा । 'पतंगकानांपुच्छेषुत्वयेषीकाप्रवेशिता' इत्यादिआदिपर्वतःकथाज्ञेया चोरैर्धनिकस्यधनेहृतेसति धनिकदूतैरनुग

**अयोग्यसंप्राप्तिकृतप्रयत्नदोषात्समारोपितमेव शूले ॥ चोरैर्हृतेर्थेपि तु चोरबुद्ध्या मक्षीवधादित्यवदद्यमस्तं॥१३९॥ नासत्यता तस्य च तत्र हेतुतःशापं गृहीतुं स तथैव चोक्त्वा ॥ अवाप शूद्रत्वमथास्य नाम चक्रे कृष्णः सर्वविस्त्वं तथादात् ॥ १४० ॥ ॥ ॥ ॥ ॥ ॥**

मेकृतेसति असंप्रज्ञातसमाधिस्थस्यमांडव्यस्याग्रेधनंसंस्थाप्य चोरेषुपलायितेषुअनुयातादूताःपुरस्थद्रव्यंमांडव्यंदृष्ट्वा अयमेवचोरःपलायनेत्वशक्तःसन् निमीलिता क्षोवर्तते अतएववधार्हइतिमत्वाशूलेसमारोपितः ततःकस्माद्दोषान्मेशूलप्राप्तिरितिपृष्टोयमःत्वयामक्षिकाकंटकाग्रंसमारोप्यहता तेनदोषेणशूलप्राप्तिरित्युदितोमांडव्यः अस त्यवादात्त्वंशूद्रोभवेतियमंशशापेतिभावः ॥ १३९ ॥ ननु अयोग्यसंप्राप्तिकृतप्रयत्नदोषःशूलारोपणेहेतुश्चेत्तूयमोमक्षीवधादित्यसत्यंकिमर्थमवददित्यतआह । ना सत्येति । तस्यचमक्षीवधस्यापितत्रशूलारोपणेहेतुतःकारणत्वात्असत्यता मक्षीवधादितिब्रुवतोधर्मस्यासत्यत्वन्न । वसिष्ठसाम्येच्छयाकृततपःमक्षीवधश्चेत् उभयमपि शूलारोपणेकारणमितिभावः । ननु निमित्तद्वयेसत्यपिप्रबलनिमित्तंविहायाल्पनिमित्तंकुतोवददित्यतआह । शापमिति । संभवद्बलवत्कारणोक्त्यातस्यकोपानुदयाद्यर्कि चित्तदल्पकारणोक्त्याकुपितोयंशपेत्ततोवसिष्ठसाम्यत्वप्राप्त्यैकृततपोहानिर्भवेदितिभावेनशापंगृहीतुंसधर्मः तथैवमक्षीवधादितिउक्त्वाशूद्रत्वमवाप । अथोत्पत्त्यनंतरं । अस्य भुजिष्यायांजातस्य ॥ १४० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

किन्नामेत्यतोनिरुक्तिपूर्वकंतदाह । विद्येति । सकृष्णोव्यासःविद्यायांतत्वविद्यायांरतेः रतत्वात् विदुरइतिनामप्रसिद्धोयंबालःज्ञानबलेनसञ्ज्ञानाधिक्येनउपपन्नोयुक्तःमहाधनुःअतिधनुष्मान्बाह्वोर्बलेनाधिकःश्रेष्ठः सुनीतिमान्उत्तमनीतिज्ञःभविष्यतीत्यवदत् ॥१४१॥ अथविदुरोत्पत्त्यनंतरं । अस्यकृष्णस्यमातासत्यवतीअस्यविदुरस्य अथोत्रयाणामुत्पत्त्यनंतरं नैच्छत्अदृश्योपिअप्रत्यक्षोप्यभवत् ॥ १४२ ॥ भीष्मोमुनिभिःसहतेषांधृतराष्ट्रादित्रयाणां योग्यानिक्षत्रशूद्रवर्णयोग्यानिकर्माणिजातकर्मादिसंस्कारकर्माणियथावत्यथाक्रमेणविध्युक्तमार्गेणवाचकार । धृतराष्ट्रपांडवोःक्षत्रयोग्यसंस्कारकर्माणि विदुरस्यशूद्रयोग्यसंस्कारकर्माणिचकारेतिभावः । कृष्णःतेषांविद्याः भीष्मःपांडोःअस्त्रशस्त्राणिच अदादित्यर्थः ॥ १४३ ॥ प्रवराःचतुराःएकवीरःअप्रतिवीरःजिगायजितवान् ॥ १४४ ॥ पूर्वंसमस्तगंधर्वपतिःयःतुंबरुःसउद्दहोनामयोमरुत्त

विद्यारतेर्विदुरोनाम चायं भविष्यति ज्ञानबलोपपन्नः॥महाधनुर्बाहुबलाधिकश्च सुनीतिमानित्यवदत्स कृष्णः॥१४१॥ ज्ञात्वास्य शूद्रत्वमथास्य माता पुनश्च कृष्णं प्रणता ययाचे ॥ अंबालिकायां जनयान्यमित्यथो नैच्छत्स कृष्णोभवदप्यदृश्यः॥ १४२ ॥ योग्यानि कर्माणि ततस्तु तेषां चकार भीष्मो मुनिभिर्यथावत् ॥ विद्याः समस्ता अददाश्च कृष्णस्तेषां पांडोरस्त्रशस्त्राणि भीष्मः॥ १४३ ॥ ते सर्वविद्याप्रवरा बभूवुर्विशेषतो विदुरः सर्ववेत्ता ॥ पांडुः समस्तास्त्रविदेकवीरो जिगाय पृथ्वीमखिलां धनुर्धरः॥ १४४ ॥ गवलगणादास तथैव सूतात्समस्तगंधर्वपतिः स तुंबरुः ॥ य उद्दहोनाम मरुत्तदंशयुक्तो वशी संजयनामधेयः ॥ १४५ ॥ विचित्रवीर्यस्य स सूतपुत्रः सखा च तेषामभवत्प्रियश्च ॥ समस्तविन्मतिमान्व्यासशिष्यो विशेषतो धृतराष्ट्रानुवर्ती ॥ १४६ ॥ गांधारराजस्य सुतामुवाह गांधारिनाम्नीं सुबलस्य राज्ञः॥ ज्येष्ठो ज्येष्ठां शकुनेर्द्वापरस्य नास्तिक्यरूपस्य कुकर्महेतोः ॥ १४७ ॥ ॥ ॥

दंशयुक्तःसन् वशीजितेंद्रियइत्यर्थः । अतएवसंजयइतिनामधेयःसन् सूताद्विचित्रवीर्यसारथेर्गवल्गणात्गवल्गणनाम्नःआस । अजनि तथाशब्दःसमुच्चयार्थः ॥१४५॥ विचित्रवीर्यस्यराज्ञःसूतस्यगवल्गणस्यपुत्रः समस्तवित्सर्वज्ञःमतिमान्विवेकवान्व्यासशिष्यःसंजयःतेषांधृतराष्ट्रादित्रयाणांसखाप्रियश्चाभवत् । विशेषतःधृतराष्ट्रस्यअनुकूलंवर्तितुंशीलंयस्यसतथाअभवत् ॥ १४६ ॥ धृतराष्ट्रादीनांविवाहमाह । गांधारेत्यादिना । ज्येष्ठःपांडोःसकाशादितिशेषः । राजाधृतराष्ट्रःगांधारराजस्यगांधाराख्यविषयाणांराज्ञःसुबलस्यसुबलनाम्नःसुतां नास्तिक्यस्यनास्तिपरलोकइत्यादिदुर्बुद्धेराभिमानिनः । कुकर्मणांकुत्सितकर्मणांहेतोःकारणभूतस्यद्वापरस्यपूर्वंद्वापराख्यासुरस्यज्येष्ठांज्येष्ठभगिनींगांधारीनाम्नींउवाहप्राप ।'शकुनिर्नामयस्त्वासीद्राजालोकेमहारथः। द्वापरंविद्धितंराजन्संभूतमरिमर्दनमि'त्यादिपर्वणि । तथागांधारींपूर्वमतिनाम्नीं॥१४७॥

शूरस्यराज्ञःपुत्रीगुणायैर्युक्तानाम्नापृथा स्वपित्रापृथायाःपित्राशूरेणसख्युःस्वस्यसख्युरनपत्यस्यकुंतिभोजस्यदत्ता पुत्रीत्वेनपालनार्थंदत्तेत्यर्थः । तेनकुंतीभोजायदत्तत्वेन कारणेनकुंतिनाम्नाकुंतीत्यर्थः । पूर्वदेहोपूर्वजन्मन्यपिपांडोर्भार्याकुंतीतिशेषः । पूर्वदेहेपरावहनात्रोमकृतःसिद्धिनाम्नीभार्येतिभावः । "सिद्धिर्धृतिश्चयेदेव्यौपंचानांमातरौच ते । कुंतीमाद्रीचजज्ञातेमतिस्तुसुबलात्मजे"त्यादिपर्वणि ॥ १४८ ॥ कुंतिभोजस्वरूपमाह । कूर्मइति । कुंतिभोजःपूर्वनाम्नाकूर्मेतिमरुदेव अथकुंतिभोजःएनांकुंतीं सम्यक्प्रीतिपूर्वकंवर्धयामास । कुंतिभोजइत्यस्योभयत्रानुषंगः । शंकरस्यांशअवतारः । अत्यंतंकोपोयस्यसःतथा दूर्वासऋषिःतत्रकुंतिभोजगृहंप्रतिअगमत् । मांचा तुर्मास्यंवासयवासंकारयेतितंकुंतिभोजंप्राह ॥ १४९ ॥ शक्तितःस्वशक्त्यनुसारेणकर्म सेवारूपंकर्मकरोतीतिकर्त्री तस्याःकन्यकायाःयदिक्षमिष्यसे क्षमांकरोषितर्हि

शूरस्य पुत्री गुणशीलरूपयुक्ता दत्ता सख्युरेव स्वपित्रा ॥ नाम्ना पृथा कुंतिभोजस्य तेन कुंती भार्या पूर्वदेहेपि पांडोः ॥ १४८ ॥ कूर्मश्च नाम्ना मरुदेव कुंतिभोजोथैनां वर्धयामास सम्यक् ॥ तत्रागमच्छंकरांशोतिकोपो दुर्वासास्तं प्राह मां वासयेति ॥ १४९ ॥ तमाह राजा यदि कन्यकायाः क्षमिष्यसे शक्तितः कर्म कर्त्र्याः ॥ सुखं वसेत्योमिति तेन चोक्ते शुश्रूषणायादिशदाशु कुंतीं ॥ १५० ॥ चकार कर्म सा पृथा मुनेः सुकोपनस्य हि ॥ यथा न शक्यते परैः शरीरवाङ्मनोनुगा ॥ १५१ ॥ स वत्सरत्रयोदशं तया यथावदर्चितः ॥ उपादिशत्परं मनुं समस्तदेववश्यदं॥१५२॥ ऋतौ तु सा समाप्लुता परीक्षणाय तन्मनोः ॥ समाव्हयद्दिवाकरं स चाजगाम तत्क्षणात् ॥ १५३ ॥ ॥

सुखंयथास्यात्तथावसवासंकुर्वित्यर्थः । तेनदूर्वाससा ओमितितथास्त्विति उक्तेसतिशुश्रूषणाय यतिसेवार्थंकुंतींआदिशत् आज्ञापयामासराजेतिशेषः ॥ १५० ॥ शरीर वाङ्मनोभिःअनुगाअनुतिष्ठतीइत्यर्थः । पृथाअपरैःस्वान्यैःयथाकर्तुंनशक्यतेतथासुकोपनस्यकोपिष्ठस्यमुनेःदूर्वाससःकर्मसेवांचकार ॥ १५१ ॥ यथावत्प्रथमदिनमार भ्यअंत्यदिनपर्यंतंएकप्रकारेणअर्चितोमुनिः परमनुंमंत्रंउपादिशत्उपदिदेश ॥ १५२ ॥ ऋतौतुऋतुकालेसमाप्लुतासुस्नातासाकुंतीसचासौमनुश्चतयातस्यप्रसिद्धमंत्रस्य परीक्षणायसमस्तदेववश्यदमित्युक्तस्य । परीक्षांकर्तुंदिवाकरंसमाव्हयत् । मंत्रेणआव्हानंचकार । ससूर्यःतत्क्षणाच्चक्षणमात्रादेवेति मंत्रप्रभावोवर्णितःआजगाम॥१५३॥

ततःसूर्यस्यागमनानंतरं सापृथारतिंसूर्येणसहरमणंविनाअकृत्वा सुवाक्प्रयत्नतोपिरतिंविनागच्छेतिसुवाग्भिःयःप्रयत्नःप्रार्थनातस्मादपितंसूर्यंविसर्जितुं परावृत्यप्रेषणा येत्यर्थः नशशाकनसमर्थाभूत् । अथतांकुंतीआससाद रमयामासेत्यर्थः । सुवाक्प्रयत्नतोषितामितिपाठे सुवाग्भिः तवापयशोनभविष्यतीत्यादिवाक्प्रयत्नेनसंतोषं प्रापितामित्यर्थः ॥ १५४ ॥ वर्मणाकवचेनदिव्यकुंडलाभ्यांसहितःद्वितीयरूपकःमूलरूपादवताररूपकःसविभुःसूर्यःस्वयंस्वतेजसाज्वलन्निवदीप्यन्निवसन् तत्रकुंत्यांज ग्मिवान्जातः । द्वितीयरूपकइत्यत्रकप्रत्ययः कुत्सितसंबंधवाची ॥ १५५ ॥ कुत्सितसंबंधंहेतुपूर्वकमाह । पुरेति । पुरात्रेतायुगेससूर्यःवालिनःमारणंतेनप्रभूतःजातो योदोषस्तस्यकारणाद्धेतोःसहस्रवर्मेतिनामविद्यतेयस्येतिविग्रहः । तेनासुरेणवेष्टितःआविष्टःसन् अजनिअजायत ॥ १५६ ॥ असुरावेष्टितस्यफलमाह । यथेति ।

ततोनु सा विसर्जितुं सशाक तं विना रतिं ॥ सुवाक्प्रयत्नतोपि तामथाससाद भास्करः ॥ १५४ ॥ स तत्र जज्ञिवान् स्वयं द्वितीयरूपको विभुः ॥ सवर्मदिव्यकुंडलो ज्वलन्निव स्वतेजसा ॥ १५५ ॥ पुरा स वालिमारणप्रभूतदोषकारणात् ॥ सहस्रवर्मनामिनाऽसुरेण वेष्टितोऽजनि ॥ १५६ ॥ यथा ग्रहैर्विदूष्यते मतिर्नृणां तथैव हि ॥ अभूच्च दैत्यदूषिता मतिर्दिवाकरात्मनः ॥ १५७ ॥ तथापि रामसेवनाद्धरेश्च सन्निधानयुक् ॥ सुदर्शनीयकर्णतः स कर्णनामतोभवत् ॥ १५८ ॥ सरत्नपूर्णमंजुपागतो विसर्जितो जले ॥ जनापवादभीतितस्तया यमस्वसुर्द्रुतं ॥ १५९ ॥ नदीप्रवाहतो गतं ददर्श सूतनंदनः ॥ समग्रहीत्सरत्नकं चकार पुत्रकं निजं ॥ १६० ॥ ॥ ॥

विदूष्यतेदूषिताभवेत् यथातथादिवाकरात्मनः सूर्यावतारस्यमतिरभूद्यद्यपि ॥ १५७ ॥ तथापिरामस्यराघवस्यसेवनात् शुश्रूषणनिमित्ताद्धरेःसंनिधानेनयुक्युक्तःसन्न जनीतिसंबंधः । सुदर्शनीयौद्रष्टुंयोग्यौसुंदरावित्यर्थः तौचतौकर्णौचतथाताभ्यांतथासुंदरकर्णत्वान्निमित्तात् सकौंतेयः ॥ १५८ ॥ तयाकुंत्याजनानामपवादस्य कन्यकायांजातइतिनिंदायाःभीतितःजलेऽश्वनद्याइतिशेषः । रत्नैःपूर्णाचसामंजुषाचतस्यांगतोविद्यमानःसकुमारकोविसर्जितः यमस्वसुःसकाशात् द्रुतंशीघ्रंनदीप्रवाहतोगंगाप्रवाहतोगतंप्राप्तंचंपामितिशेषः । यमस्वसुरित्युपलक्षणं अश्वनद्याः चर्मण्वतींततोयमुनांततोगंगामितिभावः । तदुक्तंआरण्यकेपर्वणि । 'मंजुषात्वश्वनद्याःसाययौच र्मण्वतींनदीं । चर्मण्वत्याश्चयमुनांततोगंगांजगामह । गंगायांसूतविषयंचंपामभ्ययगमत्पुरीमि'ति ॥ १५९ ॥ रत्नैःसहितंबालंसमग्रहीत् ॥ १६० ॥ ॥

तस्यअधिरथस्यभार्यया बाल्यादेवबाल्यावस्थामारभ्यमहाबलःनिजगुणैःस्वशौर्यवदान्यादिगुणैः । सम्यक्भासमानःशोभमानःकर्णःनिखिलाश्रुतीःवेदानाधिजगौअध्य गीष्ट सर्वाणिशास्त्राणिच। असौकर्णःनाम्नावसुषेणत्वमप्यगमत् । ननु वसुषेणत्वंकुतइत्यतआह । आसीदिति । ततूमंजूषागतंवसुरत्नादिद्रव्यंअमासहआसीत् वसुना सहस्थितइत्यर्थः हियस्मात्तस्मादितिसंबंधः वसुनासेनत्वात्स्वंबद्धत्वाद्वसुषेणः । षिञ्बंधनइतिधातुः । नप्रत्ययऔणादिकः । यद्वा वसुसेनायस्येति ' वसुरत्नंवसुद्र व्यंवसवोष्टौधुवादय' इत्यनेकार्थपदमंजर्यां ॥१६१॥ अथकर्णस्योत्पत्त्यनंतरं एतयाकुंत्या । विदुरस्य विवाहप्रकारमाह । शूरादिति । शूरात्पृथापितुःशूरात् । शूद्र्यांपा णिग्रहणधर्मेणस्वीकृतशूद्र्यांजातांआरुणिंआरुणिनाम्नींअवहत् । उद्वाहमकरोत् ॥ १६२ ॥ पांडोर्द्वितीयभार्यास्वीकारंवदिष्यन्तदुपोद्घातमाह । अथेत्यादिना । अ

सूतेनाधिरथेन लालिततनुस्तद्भार्यया राधया संवृद्धो निखिला श्रुतीरधिजगौ सर्वाणि शास्त्राणि च ॥ बाल्यादेव म हाबलो निजगुणैः संभासमानो वसन्नाम्नासौ वसुषेणतामगमदप्यासीद्ययमा तद्वसु ॥१६१॥ अथ कुंती दत्ता सा पांडोः सोप्येतया चिरं रेमे ॥ शूराच्छुद्र्यां जातां विदुरोवहदारुणीं गुणाढ्यां सः ॥ १६२ ॥ अथ चार्तायननामा मद्रेशः श क्रतुल्यपुत्रार्थी ॥ कन्यारत्नं चाप्तुं चक्रे ब्राह्मं तपो वरं चाप ॥ १६३ ॥ प्रल्हादावरजो यः सल्हादो नामतो हरेर्भ क्तः ॥ सोभूद्ब्रह्मवरांते वायोरावेशयुक् सुतो राज्ञः ॥ १६४ ॥ समारुतावेशवशात्पृथिव्यां बलाधिकोभूद्वरतश्च धा तुः ॥ शल्यश्च नाम्नाखिलशत्रुशल्यो बभूव कन्यास्य च माद्रिनाम्नी ॥ १६५ ॥

थशब्दःकथांतरद्योतकः शक्रतुल्यपुत्रार्थीइंद्रसदृशपुत्राकांक्षीऋतायनइतिनामयस्यसतथा । मद्राणांविषयाणांईशोराजा । कन्याश्रेष्ठंच ' रत्नंस्वजातिश्रेष्ठेपीत्यमरः ' आप्तुंप्राप्तुंब्रह्मसंबंधितपश्चक्रे वरंईप्सितवरंआप पुत्रार्थंतपश्चक्रेवरमापेतिचार्थः ॥१६३॥ यःप्रल्हादस्यावरजः 'प्रल्हादःपूर्वजस्तेषांसल्हादस्तदनंतरमि'त्यादिपर्व णि । नामतःसल्हादःपूर्वमितिशेषः । ब्रह्मवरस्यअंतेसमाप्तौ वरप्राप्त्यनंतरं राज्ञःऋतायनस्य ॥ १६४ ॥ सआर्तायनिःआवेशवशात् वरतश्चेत्युभयहेतुभ्यांबलाधि कोभूत् । अखिलशत्रूणांशल्यःशल्यरूपश्च यतःअतएवनाम्नाशल्योबभूव । अस्यऋतायनस्यकन्याच बभूव ॥ १६५ ॥ ॥ ॥

कन्यकायाःमूलस्वरूपंस्पष्टयति । सेति । पुनश्च अवतारेपिअस्मैपांडवेप्रतिपादिताभार्यात्वेनदत्ताअत्रेतिशेषः । तदुक्तमादिपर्वणि । 'तत्प्रगृह्य धनंसर्वंशल्यःसंप्रीत मानसः । ददौतांसमलंकृत्यस्वसारंकौरवर्षभे' इति समस्तशास्त्रविद्य इतिशेषः । अतअंजःसम्यक्धर्मेणजुगोपररक्ष ॥ १६६ ॥ अथमद्रीस्वीकारानंतरं । तत्पूर्वोक्त द्वयंकुंतीमाद्र्यावित्युभयात्मकंअंगनारत्नंस्त्रीरत्नं यथेष्टतःइच्छानुसारात्भोगान्धर्मःसम्यगाश्रयोयस्यसतथा । अतएवज्येष्ठंधृतराष्ट्रं अपचायीअनतिक्रमशीलःधृतराष्ट्रा पेक्षयास्वस्मिन्नीचबुद्धिमानित्यर्थः । एतादृशःपांडुःविदुरोक्तेनमार्गतःनीतिमार्गेणमहीअपीपलत्अपात् ॥ १६७ ॥ ननु धर्मसमाश्रयोजेष्ठापचायीपांडुश्चेत्तर्हि ज्ये ष्ठेसतिस्वयंमहींकथमपीपलदित्यतआह । भीष्मोहीति । भीष्मःयद्यपिराष्ट्रेसंस्थाप्यराजानंकृत्वेतिभावः । पांडुंयुवराजमेवचक्रे नतुराजानमित्येवकारार्थः । तथाप्यसौ

सा पांडुभार्यैव च पूर्वजन्मन्यभूत्पुनश्च प्रतिपादितास्मै ॥ शल्यश्च राज्यं पितृदत्तमंजो जुगोप धर्मेण समस्तशा स्त्रवित् ॥१६६॥ अथांगनारत्नमवाप्य तद्द्वयं पांडुस्तु भोगान् बुभुजे यथेष्टतः ॥ अपीपलद्धर्मसमाश्रयो महीं जेष्ठा पचायी विदुरोक्तमार्गतः ॥ १६७ ॥ भीष्मो हि राष्ट्रे धृतराष्ट्रमेव संस्थाप्य पांडुंयुवराजमेव ॥ चक्रे तथाप्यंध इति स्म राज्यं चकार नासावकरोच्च पांडुः ॥ १६८ ॥ भीष्मांबिकेयोक्तिपरः सदैव पांडुः शशासावनिमेकवीरः ॥ अथां बिकेयो बहुभिश्च यज्ञैरीजे स पांडुश्च महाधनौघैः ॥ १६९ ॥ नैषा विरोधे कुरुपांडवानां तिष्ठेदिति व्यास उदार सद्गुणः ॥ स्वमातरं स्वाश्रममेव निन्ये स्नुषे च तस्या ययतुस्म तामनु ॥ १७० ॥ ॥

धृतराष्ट्रःअंधइति अहमंधइतिबुद्ध्याराज्यंनचकार । हियस्मात्तस्मात्पांडुश्चाकरोत् ॥ १६८ ॥ एकवीरः अप्रतिवीरःएतादृशोपिपांडुः भीष्मस्यआंबिकेयस्यअंबिकापुत्रस्य उक्तौआज्ञारूपवाक्येपरस्तात्पर्यवान्सन् अवनिंपृथ्वींशशास । आंबिकेयो धृतराष्ट्रःमहाधनानांअनर्घ्यरत्नायुत्तमधनानाओघाःसमूहाःयेषु यैर्यज्ञैरीजेअयजत् प्रसिद्धःपां डुश्चईजइत्यर्थः ॥ १६९ ॥ तस्मिन्काले प्रवृत्तं कथांतरमाह । नैषेत्यादिना । उदीर्णाःउत्कृष्टाःसंतःनिर्दुष्टाःगुणाःयस्येतिविग्रहः । व्यासःकुरूणांकौरवाणांपांडवानां विरोधेप्राप्तेसति । एषासत्यवतीनतिष्ठेत्नागपुरइतिशेषः । इतिभावेनस्वमातरंसत्यवतींस्वस्यआश्रमंबदरिकाश्रमंनिन्येप्रापयामास तस्याःसत्यवत्याःस्नुषेवध्वौअंबिका बालिकेतांसत्यवतींअनुअन्वाययतुः ॥ १७० ॥ ॥ ॥ ॥ ॥

सासत्यवतीसुतोक्तमार्गेण व्यासोदितप्रकारेण तंहरिंश्रीवेदव्यासंसुतात्मनापुत्रत्वेनब्रह्मतयापरब्रह्मत्वेनविचिंत्यध्यात्वा कृष्णप्रसादात्परंपदंययौ । सुतात्मनेत्यनेनहारौ प्रीतिविशेषःसूचितः । स्नुषेचकृष्णप्रसादात्स्वःस्वर्गंययतुः ॥ १७१ ॥ माताचसाअंबिकापरिचारिकीअंबिकामनु अन्वैवगतानगपुगद्गदंगंप्रतीतेभेवः । साविदुरस्यमातावैरिंचंब्राह्मलोकंआप । सातिनिर्दुष्टेहरौमतिर्मनोयस्याःसा अतएवव्यासप्रसादात्सुतसद्गुणैरितिहेतुद्वयाभ्यांकालेनयोग्यतापूर्तिकालेन ॥ १७२ ॥ अंबालिकापिक्रमयोगतःक्रमेणकालक्रमेणयोगतःसंपादितमोक्षोपायतः परांउत्तमांगतिंस्थानंअगात् । अंबिकानयाअंबालिकावत् परांगतिंनैवययौ किंतुततोपिनीचांगतिंययावित्यर्थः । ननु चेतनानांविविधागतिःकुतइत्यतआह । यथेति । चिदात्माज्ञानस्वरूपोजीवःयथायथास्वस्वरूपयोग्यानुसारेणविष्णौपरःतात्पर्यवान् तथातथास्वस्वयोग्या

सुतोक्तमार्गेण विचिंत्य तं हरिंसुतात्मना ब्रह्मतया च सा ययौ ॥ परं पदंवैष्णवमेव कृष्णप्रसादतः स्वर्ययतुः स्नुषे च ॥ १७१ ॥ माता च सा विदुरस्यापि लोकं वैरिंचिमन्वेव गतांबिका सती ॥ व्यासप्रसादात्सुतसद्गुणैश्च कालेन मुक्तिं च जगाम सन्मतिः ॥ १७२ ॥ अंबालिकापि क्रमयोगतोगात्परां गतिं नैव तथांबिका ययौ ॥ यथा यथा विष्णुपरश्चिदात्मा तथा तथा ह्यस्य गतिः परत्र ॥ १७३ ॥ पांडुस्ततो राज्यभरं निधाय ज्येष्ठेनुजे चैव वनं जगाम ॥ पत्नीद्वयेनानुगतो बदर्यामुवास नारायणपालितायां ॥ १७४ ॥ गृहाश्रमेणैव वने निवासं कुर्वन्स भोगान् बुभुजे तपश्च ॥ चक्रे मुनींद्रैः सहितो जगत्पतिं रमापतिं भक्तियुतोभिपूजयन् ॥ १७५ ॥ स कामतो हरिणत्वं प्रपन्नं दैवादृषिं ग्राम्यकर्मानुषक्तं ॥ विध्वा शापं प्राप तस्मात्स्त्रियायुङ् मरिष्यसीत्येव बभूव चार्तः ॥ १७६ ॥ ॥

नुसारेणअस्यजीवस्यपरत्रपरलोकेगतिर्भवतीतिशेषः ॥ १७३ ॥ ततःसत्यवत्यादीनांपरलोकप्राप्त्यनंतरं ज्येष्ठेधृतराष्ट्रेभरंभारंनिधाय अनुजेविदुरेपिनिधायानुगतोयुक्तः बदरिकाश्रमेउवास ॥ १७४ ॥ गृहाश्रमेणगृहस्थाश्रमेणवनेबदर्यांभोगान्बुभुजे । मुनींद्रैःसहितःरमापतिंव्यासंअभिपूजयन्तपश्चक्रे ॥ १७५ ॥ सपांडुःदैवात्इरीच्छयाहरिणत्वंहरिणरूपंकामतःइच्छया नतुशापेनेत्यर्थः । प्रपन्नंप्राप्तंग्राम्यकर्मणिरतिकर्मणिअनुसक्तंआसक्तंप्रवृत्तमित्यर्थः । किंदमऋषिंविध्वाबाणेनहत्वा तस्माद्दषेः शापंप्राप । किमिति । स्त्रियायुक्युक्तःरतिस्थएवेतिभावः । मरिष्यस्येवमरणंयास्यस्येवेतिसंबंधः । अतोदुःखितोबभूव पांडुरितिशेषः ॥ १७६ ॥ ॥

न्यसिष्णुर्न्यासमिच्छुः संन्यासस्वीकारेच्छुः पांडुः पृथयाप्रणामपूर्वंनतिपूर्वंयथास्यात्तथा सःसन्यासःस्वीकारःनेतिमास्त्वितिउक्तःयाचितःसन् तथैवगृहस्थधर्मेणैवताभ्यां कुंतीमाद्रीभ्यांसमेतःपांडुः आश्रमस्यबदरिकाश्रमस्यमध्यगेमध्यप्रदेशेविद्यमानेशतशृंगाख्यपर्वते विद्यमाननारायणस्य दोषदूरगुणाश्रयस्यश्रीवेदव्यासस्यपुरःअग्रेअभिमुखप्रदेशइत्यर्थः। 'स्यात्पुरःपुरतोग्रत' इत्यमरः न्यवसत् ॥ १७७॥ तस्यत्रिविक्रमावतारस्यहरेःसंगेननखसंबंधेनपूतं चततूर्युसरितःगंगायाः वरांभश्वउत्तमजलंतस्मिन्सदानियतकालेषु अवगाहःस्नानं तेनअतिपवित्रितंपूर्वंपवित्रमपिअतिशयेनपवित्रीकृतं अंगंयस्यसतथा । सपांडुःनितांतंदुष्करंतपश्चकार ॥१७८॥ अथकृष्णावतारंवदिष्यन्तदुपोद्घातमाह । एतस्मिन्नित्यादिना । एतस्मिन्नेवकालेपांडोस्तपश्चरणकाले । कमलभवोब्रह्माशिवश्चतौअग्रेसरौपुरःसरौयेषांतेतथा । शक्रपूर्वाश्चेंद्रादिदेवाः पापमेवआत्मास्वरूपंयेषांतेतथा तेचतेदैत्याश्चतैः भुविकृतैःनिर्मितैःनिलयैःगृहैःआक्रमंआक्रमणंअसहंत्यासोढुमशक्तयातयाभूम्यासह देवानांअधिदेवंश्रेष्ठदेवंसर्वाधिकमित्यर्थः । श्री

न्यसिष्णुरुक्तः पृथया स नेति प्रणामपूर्वं न्यवसत्तथैव ॥ ताभ्यां समेतः शतशृंगपर्वते नारायणस्याश्रममध्यगे पुरः ॥ १७७ ॥ तपो नितांतं स चकार ताभ्यां समन्वितः कृष्णपदांबुजाश्रयः ॥ तत्संगपूतद्युसरिद्वरांभःसदावगाहातिपवित्रितांगः ॥ १७८ ॥ एतस्मिन्नेव काले कमलभवशिवाग्रेसराः शक्रपूर्वा भूम्या पापात्मदैत्यैर्भुवि कृतनिलयैराक्रमं चासहंत्या ॥ ईयुर्देवाधिदेवं शरणमजगुरुं पूर्णषाड्गुण्यमूर्तिं क्षीराब्धौ नागभोगे शयितमनुपमानंदसंदोहदेहं ॥ १७९ ॥ ऊचुः परं पुरुषमेनमनंतशक्तिं सूक्तेन तेऽब्जजमुखा अपि पौरुषेण ॥ स्तुत्वा धरासुरवराक्रमणात्परेश खिन्ना यतोतिविमुखास्तव तेतिपापाः ॥ १८० ॥ ॥ ॥ ॥ ॥

हरिंईयुःप्रापुः । कथंभूतंशरणंरक्षकं आतपरब्रह्मणःसकाशाज्जातः। अजःब्रह्मातस्यगुरुं ऐश्वर्यादिषड्गुणाएवषाड्गुण्यं पूर्णंचततूषाड्गुण्यंच तदेवमूर्तिःस्वरूपंयस्यस तथा। तस्मिन्क्षीराब्धौनागस्यशेषस्यभोगेदेहेशयितंशयानं अनुपमस्यानंदस्यसंदोहःसमूहोदेहोयस्यसतथातं कृतनिलयैराक्रममित्यनेन गृहनिर्माणतयादैत्यानांअक्रमणमभूदित्यवगंतव्यं ॥ १७९ ॥ देवाधिदेवंप्राप्यकिंचक्रुरित्यतआह । ऊचुरिति । तेदेवाःपौरुषेणपरमपुरुषप्रतिपादकेनपुरुषसूक्तेनेतियावत् । परं पुरुषंउत्तमपूरुषंएनंनारायणंस्तुत्वाऊचुःकिमिति । हेपरेशतेअसुराःअतिपापाःपापरूपाःअतएवविमुखाःयतःअतःधराभूःअसुरवराणांदैत्यश्रेष्ठानां अक्रमणात्संक्रमणात् खिन्नाहिखेदयुक्ताहि ॥ १८० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

हेदेवनित्यंदुःसंगतिःदुष्टानांसमागमःसतामपिसंतःसाहिष्णवःतेषामपिभारवदेवभवति हियस्मात्तस्मात्हेईश नोस्माकंवाक्यंवक्ष्यमाणंवचनंश्रुणु । भवतात्वयापूर्वंअस्माकंप्रियार्थंसंतोषार्थंयेहताःतेअधुनाइदानींप्रजाताः ॥ १८१ पूर्वंहताइत्येतद्विवृणोति । आसीदिति । पुरादितिसुतैःसहअमरोत्तमानांसंग्रामःयुद्धंआसीत् । तत्रदेवासुराणांसैन्यसंख्यामाह । उत्तमेत्यादिना द्विपदःपदातयःउत्तमाश्वतेगजाश्वरथद्विपदश्चतैःसहितं अक्षौहिणीशतमहौघमहौघं अक्षोहिणीनांशतंअक्षौहिणीशतं अक्षौहिणीशतेनगुणितंचतत्महौघंचतादशमहौघेनगुणितंमहौघंएतत्संख्याविशेषपरिमितंपरमास्त्रैःदिव्यमंत्रैःयुक्तंसुरात्मकंदेवसंबंधिसैन्यंअभूत् ॥ १८२ ॥ तस्माद्देवसैन्यसंख्यायाःमहौघेनगुणितं । देवासुराणांसैन्यसंख्यामुक्त्वा रथपरिमाणमाह तेषामिति तेषांदेवासुराणां । वहवश्चतेनल्वाश्चतथातेषांपरिमाणंयेषांतथादेवासुराणांप्रवरैःश्रेष्ठैःकार्मुकैश्चा

**दुःसंगतिर्भवति भारवदेव देव नित्यं सतामपि हि नः शृणु वाक्यमीश ॥ पूर्वं हता दितिसुता भवता रणेषु ह्यस्मत्प्रियार्थमधुना भुवि तेभिजाताः ॥ १८१ ॥ आसीत्पुरा दितिसुतैरमरोत्तमानां संग्राम उत्तमगजाश्वरथद्विपाद्भिः ॥ अक्षौहिणीशतमहौघमहौघमेव सैन्यं सुरात्मकमभूत्परमास्त्रयुक्तं ॥ १८२ ॥ तस्मान्महौघगुणमास महासुराणां सैन्यं शिलागिरिमहास्त्रधरं सुघोरं ॥ तेषां रथाश्च बहुनल्वपरिप्रमाणा देवासुरप्रवरकार्मुकबाणपूर्णाः ॥ नानांबराभरणवेषवरायुधाढ्या देवासुराः सस्पृधुराशु परस्परं ते ॥ १८३ ॥ जघ्नुर्गिरींद्रतलमुष्टिमहास्त्रशस्त्रैश्चक्रुर्नदीश्च रुधिरौघवहामहौघं ॥ तत्र स्म देवऋषभैरसुरेशचम्वा युद्धे निषूदित उतौघबलैः शतांशः ॥ १८४ ॥ ॥ ॥**

पैर्बाणैःपूर्णाःरथाअसन्नितिशेषः ' किष्कुर्हस्तोवितस्तौचनल्वःकिष्कुचतुःशतमि'त्यभिधानात् । नानाबहुप्रकारैःअंबरैःवस्त्रैःआभरणैर्भूषणैःवेषोयेषांतेतथा वरायुधैःआढ्याःश्रेष्ठाःनानांवराभरणवेषाश्चतेवरायुधाढ्याश्चेति तेदेवासुराःपरस्परंअन्योन्यंसस्पृधुःयुद्धंकर्तुंप्रापुः ॥ १८३ ॥ गिरिंद्रैर्महापर्वतैः तलैः करपादतलैःमुष्टिभिः महास्त्रैःमंत्रयुक्तायुधैःशस्त्रैःखड्गादिभिःनिजघ्नुः परस्परंताडयामासुः महौघंमहौघसंख्याकाःरुधिरौघंरक्तसमूहंवहाःनदश्चिक्रुः । तत्रयुद्धेओघबलैर्महाबलैःपरंपरायुक्तसेनावद्भिः । 'ओघःपरंपरायांस्यादि'त्यभिधानं । देवऋषभैःदेवश्रेष्ठैःअसुरेशानांचम्वाःसेनायाःशतांशःशतभागेषुएकभागइत्यर्थः निषूदितःनिहतः ॥ १८४ ॥ ॥

मायाः इंद्रजालमायावेत्तीतितथा उमेशस्यवरादसह्यासोढुमशक्यामायायस्यतथा । अवमृद्यमानांपीडचमानांवीक्ष्य मायानांसहस्रेणसुरान्विमोहयन्ससारप्राप ॥१८५॥ रणेमायासहस्रेणविमर्दिताःशशिसूर्यमुख्याःसुराःविषेदुःश्रांतावभूवुः । वज्रीइंद्रःतान्देवान्वीक्ष्यवैष्णवींविष्णुदेवताकां परमाख्यविद्यांपराव्हयविद्यांवैष्णवीमायामितियावत् प्रयुयोजप्रयोगंकृतवान् ॥ १८६ ॥ समस्तमायाअपहंतिनाशयतीतितथा तयावरादप्यसह्ययाअविषह्ययातयावैष्णवमायया मायाःविनेशुःनाशंप्रापुःवारीशोवरुणः ॥ १८७ ॥ ततःमायाबंधान्मोचनानंतरं । सुरेश्वरेणआप्यायितविक्रमाःवर्धितपराक्रमाःऊर्जितपौरुषाःस्वतोपिउत्कृष्टपराक्रमाःयमादयःबहून्सुरान्निजघ्नुः व

अथात्मसेनामवमृद्यमानां वीक्ष्यासुरः शंबरनामधेयः ॥ ससार मायाविदसह्यमायो वरादुमेशस्य सुरान्विमोहयन् ॥ १८५ ॥ मायासहस्रेण सुराविमर्दिता रणे विषेदुः शशिसूर्यमुख्याः ॥ तान्वीक्ष्य वज्री परमाख्यविद्यां स्वयंभुदत्तां प्रयुयोज वैष्णवीं ॥ १८६ ॥ समस्तमायापहया तयैव वरादुमेशस्य सदाप्यसह्यया ॥ माया विनेशुर्दितिजेंद्रसृष्टा वारीशवन्हींदुमुखाश्च मोचिताः ॥ १८७ ॥ यमेंदुसूर्यादिसुरास्ततोसुरान् निजघ्नुराप्यायितविक्रमास्तदा ॥ सुरेश्वरेणोर्जितपौरुषा बहून् वज्रेण वज्री निजघान शंबरं ॥ १८८ ॥ तस्मिन्हते दानवलोकपाले दितेः सुता दुद्रुवुरिंद्रभीषिताः ॥ तान्विप्रचित्तिर्विनिवार्य धन्वी ससार शक्रप्रमुखान् सुरोत्तमान् ॥१८९॥ वरादजेयेन विधातुरेव सुरोत्तमांस्तेन शरैर्निपातितान् ॥ निरीक्ष्य शक्रं च विमोहितं द्रुतं न्यवारयत्तं पवनः शरौघैः ॥ १९० ॥ अस्त्राणि तस्यास्त्रवरैर्निवार्य चिक्षेप तस्योरसि कांचनीं गदां ॥ विचूर्णितोसौ निपपात मेरौ महाबलो वायुबलाभिनुन्नः ॥ १९१ ॥

ज्रीइंद्रः वज्रेण ॥ १८८ ॥ दानवलोकपालेदैत्यजनरक्षकेतास्मिन्शंबरेहतेसति इंद्रेणभीषिताःभयंप्रापिताः विप्रचित्तिनामाअसुरःतान्सुराननिवार्यसंस्थाप्येत्यर्थः ॥ १८९ ॥ तेनविप्रचित्तिनानिपातितान्सुरोत्तमानवीक्ष्य विमोहितंशक्रंचवीक्ष्य पवनोवायुःतंविप्रचित्तिं ॥ १९० ॥ तस्यविप्रचित्तेर्निवार्य तस्यविप्रचित्तेःउरसिवक्षसि कांचनींहेममयींगदांचिक्षेप नुन्नः प्रेरितोसौविप्रचित्तिः ॥ १९१ ॥ ॥ ॥ ॥ ॥ ॥

अथविप्रचित्तिनिपातानंतरं । अजःब्रह्मापुरात्वदाज्ञयायस्यकालनेमिनःअजेयत्वंवरंददौ । सहस्रशीर्षैःसहितःसहस्रशीर्षःद्विसहस्रबाहुभिर्युग्युक्तःसअसुरःकालनेमिःआ शुआससादप्राप वायुमितिशेषः ॥ ११२ ॥ मारुतोवायुःतंकालनेमिंप्रसमीक्ष्यदृष्ट्वा त्वदाज्ञयाकालनेमयेअवध्यत्वंदेहीत्येवंरूपयातवाज्ञयादत्तःवरोयस्यसतथा कालनेमिः ब्रह्मणेतिशेषः त्वयैवहंतव्यइतित्वदाज्ञयायोवरोदत्तःसोपित्वदीयएव हियतःअतएवत्वयैवहंतव्यः हंतुंयोग्यइतिभावेनयदात्वामस्मरत्सस्मार तदात्वंआशुअविलंबेनआविः प्रकटःअसीःअभवः तवापितद्धननेशक्तिःकुतइत्यतआह । अनंतेति । अतएवेत्यर्थः ॥ ११३ ॥ बाहुभिःप्रवर्षमाणंभुवनंभूप्रदेशंआप्तःव्याप्तःदेहोयस्यसतथा । तंकाल नेमिंचक्रेणसुदर्शनेनबाहून्कानिचिच्छिरांसिचविनिकृत्यछित्वा यमायमृत्यवेन्यवेदयःप्रार्पयः ॥ ११४ ॥ ततःकालनेमिवधानंतरं अशेषाःसर्वेतेअसुराःनिहताःत्वयावायु

**अथाससादाशु सकालनेमिस्त्वदाज्ञया यस्य वरं ददौ पुरा ॥ सर्वैरजेयत्वमजोसुरः सः सहर्षशीर्षो द्विसहस्रबाहु युक् ॥ ११२ ॥ तमापतंतं प्रसमीक्ष्य मारुतस्त्वदाज्ञया दत्तवरस्त्वयैव ॥ हंतव्य इत्यस्मरदाशु हि त्वां तदावि रासीत्त्वमनंतपौरुषः ॥ ११३ ॥ तमस्त्रशस्त्राणि बहूनि बाहुभिः प्रवर्षमाणं भुवनाप्तदेहं ॥ चक्रेण बाहून्विनिकृत्य कानि च न्यवेदयश्चाशु यमाय पापं ॥ ११४ ॥ ततोसुरास्ते निहता अशेषास्त्वया त्रिभागा निहताश्चतुर्थं ॥ ज घान वायुः पुनरेव जातास्ते भूतले धर्मबलोपपन्नाः ॥ ११५ ॥ राज्ञां महावंशसुजन्मनां तु तेषामभूद्धर्ममतिर्वि पापा ॥ शिक्षामवाप्य द्विजपुंगवानां त्वद्भक्तिरप्येषु हि काचन स्यात् ॥ ११६ ॥ त्वद्भक्तिलेशाभियुतः सुकर्मा व्रजेन्न पापां तु गतिं कथंचित् ॥ दैत्येश्वराणां च तमोंधमेव त्वयैव कॢप्तं ननु सत्यकाम ॥ ११७ ॥**

नेतिशेषः । तत्रविभागंविविच्याह । त्वयेत्यादिना त्वयात्रिभागाःचतुर्षुभागेषुमध्येत्रिभागाइत्यर्थः निहताःचतुर्थंअवशिष्टभागंवायुर्जघान । प्रकृतेकिमित्यतआह । पुनरिति । तेअसुराःधर्मेणबलेनउपपन्नाःयुक्ताःसंतःप्रजाताः ॥ ११५ ॥ राज्ञांमहावंशेप्रसिद्धेतंतौसुजन्मनांशोभनजन्मवतांतेषांअसुराणांविपापादोषरहिताधर्ममतिःधर्म बुद्धिरभूत् द्विजपुंगवानांब्राह्मणोत्तमानांशिक्षांदीक्षामवाप्य एष्वप्ययोग्येष्वप्यसुरेषुकाचनईषत्त्वद्भक्तिःस्यादितिसंभाव्यते ॥ ११६ ॥ भक्तिश्चेत्किमित्यतआह । त्व दिति । त्वद्भक्तिलेशेनआभियुतःयुक्तःसुकर्माशोभनकर्मापुरुषःपापांनिरयरूपांगतिंकथंचिन्नव्रजेत् तेषांसद्गतिर्भवत्वित्यतआह । दैत्येश्वराणामिति । हेसत्यकामअ मोघेच्छ दैत्येश्वराणांअंधंतमःत्वयैवकॢप्तं नतुकल्पितंनिश्चितमित्यर्थः ॥ ११७ ॥ ॥ ॥ ॥

स्वप्रार्थनस्य फलवत्त्वंप्रसाध्यतत्स्पष्टयन्नुपसंहरति । धर्मस्येति । धर्मस्यत्वद्भक्त्यात्मकधर्मस्यधर्मादिमतापिपुंसासद्वृत्यभावेधर्मस्यमिथ्यात्वभयात् विपरीतफलजननभयात् अथापिधर्मस्येतिमिथ्यात्वपरिहारार्थंतेषांसद्गतिदानपक्षेदैत्यानांशुभाप्तेःसद्गतिप्राप्तेःभीषाभीयादितिजान्त्वद्भक्तितःतवभक्तिजनकात्सुकर्मणः सत्कर्मणःसकाशात् त्वद्भक्तितश्चशीघ्रंचालयितुंमोचयितुंवयंत्वांसंप्रार्थयामः ॥ १९८ ॥ भुवितेप्रजाताइत्युक्तंविवेचयन्नाहुरित्याह । यउग्रसेनइत्यादिना । यःपूर्वंउग्रसेनाख्यःसुरगायको गंधर्वः सउग्रसेनःयदुषुयादवेषुतथाभिधेयःपूर्वंयथाभिधेयस्तथेत्यर्थः अत्राप्युग्रसेनाभिधेयइतियावत् तवसेवार्थमेवजातः । हेईश सःत्वायुनानहतइतियःप्रसिद्धःसइत्यर्थः असुरःकालनेमिःअमुष्यउग्रसेनस्यपुत्रःसन्जातः ॥ १९९ ॥ सइत्युक्तंविवेचयन्नाह । यस्त्वदिति । भवत्प्रसादात् परंअलंईशितासमर्थेनअतिसमर्थेनेत्यर्थः

**धर्मस्य मिथ्यात्वभयाद्वयं त्वामथापि वा दैत्यशुभाप्तिभीषा ॥ संप्रार्थयामो दितिजान्सुकर्मणस्त्वद्भक्तितश्चालयितुं च शीघ्रं ॥ १९८ ॥ य उग्रसेनः सुरगायकः स जातो यदुष्वेव तथाभिधेयः ॥ तवैव सेवार्थममुष्य पुत्रो जातोसुरः कालनेमिः स ईश ॥ १९९ ॥ यस्त्वत्प्रियार्थं न हतो हि वायुना भवत्प्रसादात्परमीशतापि ॥ स एष भोजेषु पुनश्च जातो वरादुमेशस्य परैरजेयः ॥ २०० ॥ स औग्रसेने जनितो सुरेण क्षेत्रे हि तद्रूपधरेण मायया ॥ गंधर्वजेन द्रामिलेन नाम्ना कंसो जितो येन वराच्छचीपतिः ॥ २०१ ॥ जित्वा जलेशं च हृतानि येन रत्नानि यक्षाश्च जिता शिवस्य ॥ कन्यावनार्थं मगधाधिपेन प्रयोजितास्तेच हते बलेन ॥ २०२ ॥ ॥ ॥ ॥ ॥ ॥ ॥**

वायुनात्वत्प्रियार्थंहितवप्रीत्यर्थमेवयःनहतःपुरेतिशेषः । ईशतेतितृतीयैकवचनं तकारांतशब्दःप्रथमैकवचनेईशन्निितिरूपंज्ञेयं । सएषःकालनेमिःभोजेषुभोजाख्यविशेषणवत्त्वेनप्रसिद्धेषुयादवेषुपुनर्जातः ॥ २०० ॥ अमुष्यपुत्रोजातइत्युक्ते: औरसःक्षेत्रजोवेतिप्राप्तांशंकांपरिहरन्नाह । सऔग्रसेनइति । माययागंधर्वमायया तस्यउग्रसेनस्यरूपधरेणगंधर्वजेनगंधर्वकुलोत्पन्नेन नाम्नाद्रमिलेनअसुरेणऔग्रसेनेउग्रसेनसंबंधिनिक्षेत्रेधर्मपत्न्यांसकालनेमिः नाम्नाकंसइतिजनितःउत्पादितः । येनकंसेनवराच्छिववरनिमित्तात् शच्याःपतिःपुरंदरःजितः पराजितः ॥ २०१ ॥ येनकंसेनजलेशंवरुणंजित्वा समुद्रस्यरत्नानिहृतानिअपहृतानि येनकंसेनमगधाधिपेनजरासंधेनकन्ययोःअवनार्थंरक्षणार्थंप्रयोजितानियुक्ताःशिवस्ययक्षाःजिताःनिर्जिताः तेअस्तिप्राप्तीतिनाम्न्यौकन्येबलेनहतेच ॥ २०२ ॥ ॥

ईशोपिजरासंधःकंसस्यतादिंद्रादिजयेनप्रसिद्धंउत्तमंबलंज्ञात्वा मुदैवसुतेकंसेनापहृतेअस्तिप्राप्तीपुनर्द
मागधाधिपःपूर्वंकइत्यतआह। सइति। अजेयःजेतुंअशक्योभूत्। ईशोपिजरासंधःकंसस्यतादिंद्रादिजयेनप्रसिद्धंउत्तमंबलंज्ञात्वा मुदैवसुतेकंसेनापहृतेअस्तिप्राप्तीपुनर्द
दौकंसायेतिशेषः ॥२०३॥ यस्यजरासंधस्यबलेबलविषयेपृथिव्यांविवरेषुपातालादिसप्तलोकेषुवा कचित्कालेकश्चित्पुरुषःतुल्योननास्ति अतएवबलाढ्योजरासंधः नृप
तीन्शल्यबाल्हीकादीन्वशेस्ववशेस्थितानितिशेषः वशवर्तिनइत्यर्थः चक्रे जरासंधःशक्तोपिकंसात्कन्येमोचयितुंसमर्थोपिउद्धतंस्वतोपिबलिष्टस्यकन्याहरणान्मत्तं
कंसंननिवारयामास। किंतुकंसस्यबलंज्ञात्वातस्मैददावितिपूर्वेणान्वयः ॥ २०४ ॥ पुरात्वयैवहयग्रीवावतारेणत्वयैवेत्यर्थः हयग्रीवस्यश्रीनारायणस्याभेदसूचकएव
कारः यौहतौनाम्नाहंसडिभिकश्चेतिजातौब्रह्मदत्तादितिशेषः। तौहंसडिभिकौजरासंधंअनुअनंतरंशिवेभक्तौस्म अन्वित्यनेनतारतम्यंज्ञेयं ॥ २०५ ॥ संगरेयुद्धेये

स विप्रचित्तिश्च जरासुतोभूद्वराद्विधातुर्गिरिजस्य चैव ॥ सर्वैरजेयो बलमुत्तमं तज्ज्ञात्वैव कंसस्य मुदा सुते ददौ ॥ २०३ ॥ निवारयामास न कंसमुद्धतं शक्तोपि यो यस्य बलेन कश्चित् ॥ तुल्यः पृथिव्यां विवरेषु वा कचिद्वशे बलाढ्यो नृपतींश्च चक्रे ॥ २०४ ॥ हतौ पुरा यौ मधुकैटभाख्यौ त्वयैव हंसो डिभिकश्च जातौ ॥ वराद्जेयौ गिरिशस्य वीरौ भक्तौ जरासंधमनुस्मतौ शिवे ॥ २०५ ॥ अन्येपि भूमावसुराः प्रजातास्त्वया हता ये सुरदैत्यसंगरे ॥ अन्ये तथैवांधतमः प्रपेदिरे कार्या तथैषां च तमोगतिस्त्वया ॥ २०६ ॥ व्यासावतारे निहतस्त्वया यः कलिः सुशास्त्रोक्तिभिरेव चाद्य ॥ श्रुत्वा त्वदुक्तीः पुरुषेषु तिष्ठन् ईषच्चकारेव मनस्त्वयीश ॥ २०७ ॥ रामात्मना ये निहताश्च राक्षसा दृष्ट्वा बलं तेपि तदा तवाद्य ॥ समं तवान्यं नहि चिंतयंति सुपापिनोपीश तथा हनूमतः ॥ २०८ ॥ ॥ ॥

न्येयुक्तेभ्योअन्येहतास्तेअसुराःतथा अन्येअंधंतमःप्रपेदिरे केचित्तमःप्राप्ताःकेचिद्भूमौप्रजाताइतिभावः। त्वयाएषांभूमौजातानां तथायथातेप्रपेदिरेतथेत्यर्थः तमोग
तिःकार्याः ॥२०६॥ सुशास्त्रोक्तिभिःसच्छास्त्रात्मकवचनैःनिहतोनिरस्तःसकलिःअद्यपुरुषेषु सज्जनेषुतिष्ठन्सन्वसन्त्वदुक्तीःसच्छास्त्ररूपवाक्यानिश्रुत्वा त्वयित्वद्विषये
ईषत्किंचिन्मनःचकारेवेतिसंभाव्यते मनसिआदरंचकारेवेतिभावः ॥ २०७ ॥ रामात्मनाराघवस्वरूपेणतेपितदारामावतारेतवबलंदृष्ट्वा अद्यअस्मिन्कालेसुपापिनोपि
तवसमंअन्यंपुरुषंनहिचिंतयंतिनमन्यंते। तथाहनुमत्समंअन्यंत्वदन्यंनचिंतयंति ॥ २०८ ॥ ॥ ॥ ॥

हेकेशव त्वयिबहुमानेनमहत्वाभिमानेनयुक्ताःतथैववायौबहुमानेनयुक्ताःप्राणिनःतेतमोंधंप्रवेष्टुंनयोग्याः हियस्मात्तस्मात्त्वयाभूमौजनयित्वास्वीयंरूपंप्रादुर्भाव्यहिप्र सिद्धादतोमार्गात् अस्मात्सज्ज्ञानमार्गाच्चाल्याःचालनीयाः ॥ २०९ ॥ चालनोपायंदर्शयंतीत्याह । नितांतमिति । नितांतंभवति विरोधःतथैववायौसर्वेषुदेवेषुचविरोधंवैरंबहुभिःअनेकैःप्रकारैःउपायैःउत्पाद्य ॥ २१० ॥ त्वदीयौत्वद्भक्तौप्रतिहारपालौद्वारपालौशापात्सनकादीनांशापात्महासुरावेशयुतौरावणकुंभकर्णाविति जातौयौहतौतौजयविजयौअद्यशिशुपालदंतवक्रजन्मनिविमोचनीयौशापादितिशेषः ॥ २११ ॥ इहशिशुपालदंतवक्रजन्मनितयोःद्वारपालयोः । तवारीइतितौप्रसिद्धौयौदैत्यौशिशुपालदंतवक्रनामानौदैत्यौप्रविष्टौब्रह्मजाअसुरायेतुतेविष्णोःपार्षदौगताइतितत्त्वनिर्णयोक्तेः । त्वदीयौतवसंबंधिनौजयविजयौभवदीयवेश्मत्वदीयलोकं

ये केशव त्वद्बहुमानयुक्तास्तथैव वायौ नहि ते तमोंधं ॥ योग्याः प्रवेष्टुं तदतो हि मार्गाच्चाल्यास्त्वया जनयित्वैव भूमौ ॥ २०९ ॥ नितांतमुत्पाद्य भवद्विरोधं तथैव वायौ बहुभिः प्रकारैः ॥ सर्वेषु देवेषु च पातनीयास्तमस्यथांधे कालिपूर्वकाःसुराः ॥२१०॥ हतौ च यौ रावणकुंभकर्णौ त्वया त्वदीयौ प्रतिहारपालकौ ॥ महासुरावेशयुतौ हिशापात्त्वयैव तावद्य विमोचनीयौ ॥ २११ ॥ यौ तौतवारीहतयोः प्रविष्टौ दैत्यौ तु तावंधतमः प्रवेश्यौ ॥ यौ तौ त्वदीयौ भवदीयवेश्म त्वया पुनःप्रापणीयौ परेश ॥ २१२ ॥ आविश्य यो बलिमंजश्चकार प्रतीपमस्मासु तथा त्वयीश ॥ सचासुरो बलिनामैव भूमौ साल्वो नाम्ना ब्रह्मदत्तस्य जातः ॥ २१३ ॥ मायामयं तेन विमानमग्र्यमभेद्यमाप्तं सकलैर्गिरीशात् ॥ विद्रावितो यो बहुशस्त्वयैव रामस्वरूपेण भृगूद्वहेन ॥ २१४ ॥ नासौ हतः शक्तिमतापि तत्र कृष्णावतारे स मयैव वध्यः ॥ इत्यात्मसंकल्पमृतं विधातुं स चात्र वध्यो भवतातिपापी ॥ २१५ ॥ ॥ ॥ ॥

॥ २१२ ॥ यःबलिनामासुरःबलिंकर्मदेवंप्रल्हादपौत्रंबलिंआविश्य सचबलिनामासुरःनाम्नासाल्वइतिब्रह्मदत्तस्यसकाशाज्जातः ॥ २१३ ॥ तेनसाल्वेनमायामयं इंद्रजालमायाप्रचुरं सकलैरभेद्यंविमानं यःसाल्वःभृगूद्वहेन भृगुकुलेअवतीर्णेनरामस्वरूपेणपरशुरामात्मनैवत्वयाबहुशःबहुवारंयुद्ध्यन् विद्रावितोभूदितिशेषः ॥२१४॥ ननु रामेणहंतुंअशक्यत्वात्विद्रावितःकिमित्यतआह । नासाविति । मयैवकृष्णात्मनामयैवेत्यर्थः ससाल्वःकृष्णावतारेवध्यःवधार्हइतिआत्मसंकल्पंऋतंसत्यंविधातुंकर्तुंशक्तिमतापिहंतुंसमर्थेनापिपरशुरामेणतत्रपरशुरामावतारेअसौसाल्वोनहतोयतइतिशेषः अतःसचातिपापीसाल्वःअत्रअस्मिन्कृष्णावतारेभवतावध्यः ॥ २१५ ॥

ननु साल्वेनसौभंविमानंप्राप्तंतर्हि ब्रह्मदत्तःसौभपतिरितिकथमुच्यतइत्यतआह। यदीयमिति। अस्यपितासाल्वस्यपिताब्रह्मदत्तः।यदीयंसाल्वसंबंधिविमानंआरुह्यनाम्ना सौभपतिरभवत् ननु एतादृशेपुत्रेसतिकथंभीष्मेणजितइत्यतआह। यदेति। यदास्यसाल्वस्यपितासब्रह्मदत्तःजितःतदासाल्वःतपसिस्थितःसौभार्थमितिशेषः अभूत् तदानींपुत्रासान्निध्याज्जितइतिभावः ॥ २१६ ॥ सचसाल्वःअद्यइदानींतस्मात्सौभार्थंकृतात्तपसःनिवृत्तःपरावृत्तःसन् तपसातुष्टेनरुद्रेणविमानंप्राप्यनिवृत्तइतिभावः। जरासुतस्यअनुमतेस्थितःअनुकूलवर्तीत्यर्थः अनन्यवध्योहियस्मात्तस्मात् भवताअद्यइदानींकृष्णावतारेवध्योवधार्हः अथससाल्वःउग्रतमसिप्रापणीयःपातनीयइत्यर्थः ॥ २१७ ॥ योवाणंकर्मदेवबलिपुत्रंवाणंआविश्यसनाम्ना समाननाम्नावाणइतिनाम्नेतियावत् प्रथितःप्रसिद्धोमहासुरः स्थितोभूत् सनाम्नेत्येकंपदं सोपिअसुरात्मको

यदीयमारुह्य विमानमस्य पिताभवत्सौभपतिश्च नाम्ना ॥ यदा स भीष्मेण जितः पितास्य तदा स साल्वस्तपसि स्थितोभूत् ॥ २१६ ॥ स चाद्य तस्मात्तपसो निवृत्तो जरासुतस्यानुमते स्थितो हि ॥ अनन्यवध्यो भवताद्य वध्यः स प्रापणीयश्च तमस्यथोग्रे ॥ २१७ ॥ यो बाणमाविश्य महासुरोभूत्स्थितः स नाम्ना प्रथितोपि बाणः ॥ स कीचको नाम बभूव रुद्रवराद्‍वध्यः स तमःप्रवेश्यः ॥२१८॥ अतस्त्वया भुव्यवतीर्य देवकार्याणि कार्याण्यखिलानि देव ॥ त्वमेव देवेश गतिः सुराणां ब्रह्मेशशक्रेंदुयमादिकानां ॥ २१९ ॥ त्वमेव नित्योदितपूर्णशक्तिस्त्वमेव नित्योदितपूर्णचिद्घनः ॥ त्वमेव नित्योदितपूर्णसत्सुखस्त्वादृङ्न कश्चित्कुत एव तेधिकः ॥ २२० ॥ ॥ ॥ ॥

वाणःकीचकोनामप्रसिद्धोवभूव ॥ २१८ ॥ स्वाभिप्रेतमुक्त्वोपसंहरतीत्याह। अतइति। हेदेव अवतीर्यअवतारंकृत्वा अखिलानिदेवकार्याणिदेवानांकर्तुंयोग्यानिकर्माणिकार्याणिकर्तव्यानिमयैवकुतःकार्याणीत्यतआह। त्वमिति। हेदेवेशेतिहेतुगर्भसंबोधनमेतत् ब्रह्मादीनांगतिःप्राप्यस्त्वमेवनान्योस्तीत्यर्थः ॥ २१९ ॥ देवेशेत्युक्तंविवृण्वन्नाहुरित्याह। त्वमेवेति। नित्यंसर्वदाउदिताअभिव्यक्तापूर्णाशक्तिर्यस्यसतथा। त्वमेवनित्योदितयापूर्णयाचिताज्ञानेनघनःनिबिडःत्वमेवनित्योदितं पूर्णंसत्दुःखास्पृष्टंसुखंआनंदोयस्यसःत्वमेवयतःअतःत्वादृक्त्वत्सदृशःकश्चित्पुमान्नास्ति तेधिकःत्वदुत्तमःकुतएव नैवेत्यर्थः ॥ २२० ॥ ॥ ॥ ॥

उदारैः उत्कृष्टैः गुणैः ज्ञानानंदादिगुणैः अर्णवइवार्णवः । समुद्रदृष्टांतेनसमुद्रवत्परिमाणन्हासवान्स्यादित्यतआह । अक्षोभ्येति । अक्षयोभ्यतमा अत्यगाधापरिच्छेदरहिते तियावत् अमृतानित्याआकृतिःस्वरूपंयस्यसतथा । तस्मान्नागभोगातूउत्थाय अमरैःदेवैःअन्वितःयुक्तःप्रययौ मेरुंप्रतीतिशेषः । ननु असुरबलंश्रुत्वाविच्छविःकिम भूदित्याशंक्याह । अनंतेति । अनंतसोमार्काणांकांतिःशोभाद्युतिःप्रकाशोयस्य कांतिद्युत्योःपर्यायत्वेपिचंद्रगतशोभासूर्यगतप्रतापरूपावांतरविशेषवाचित्वेनसहप्रयोगः ॥ २२१ ॥ यत्रयस्मिन्कुलेत्वयाउक्तोस्मिअवतारंकुर्वित्युक्तोस्मि तत्रसर्वथाअवश्यंप्रादुर्भविष्ये । हियस्मात्कारणात् अहंस्ववशोपिस्वतंत्रोपिभवतोभक्त्यातववशइव अतइतिसंबंधः ॥ २२२ ॥ आत्मनःस्वस्यकारणंउत्पत्तिकारणंहरिंप्राह किमिति । पुराअहंवरुणायगाःप्रादांदत्तवानस्मि । तस्यवरुणस्यपितासदेवपितेतिप्रसिद्धः ।

इतीरितो देववरैरुदारगुणार्णवोऽक्षोभ्यतमामृताकृतिः ॥ उत्थाय तस्मात्प्रययावनंतः सोमार्ककांतिद्युतिरन्वितो मरैः ॥ २२१ ॥ समेरुमाप्याह चतुर्मुखं प्रभुर्यत्र त्वयोक्तोस्मि हि तत्र सर्वथा ॥ प्रादुर्भविष्ये भवतो हि भक्त्या वशस्तवाहं स्ववशोपि चेच्छया ॥ २२२ ॥ ब्रह्मा प्रणम्याह तमात्मकारणं प्रादां पुराहं वरुणाय गाः शुभाः ॥ जहार तास्तस्य पितामृतस्रवाः स कश्यपो द्राक् सहसातिगर्वितः ॥ २२३ ॥ मात्रा त्वदित्या च तथा सुरभ्या प्रचोदितेनैव हृतासु तासु ॥ श्रुत्वा जलेशात्स मयाभिशप्तः क्षत्रेषु गोजीवनको भवेति ॥२२४॥ शूरात्स जातो बहु गोधनाढ्यो भूमौ यमाहुर्वसुदेव इत्यपि ॥ तस्यैव भार्या त्वदितिश्च देवकी बभूव चान्या सुरभिश्च रोहिणी ॥२२५॥

कश्यपः सहसापितृत्वबलेनगर्वितःसन् द्राक्शीघ्रंअमृतंस्रवंतीदुहंतीत्यमृतस्रवाःनद्दत्तगाःजहारअपहृतवान् ॥ २२३ ॥ मात्रावरुणमात्राअदित्यातथासुरभ्याचमात्राअ दित्याःसपत्नीत्वात्सुरभ्याःमातृत्वमुक्तमितिभावः । प्रचोदितेनकश्यपेनतासुगोषुहृतासुसतीषुजलेशाच्छ्रुत्वा । कश्यपकर्मेतिशेषः । मयासकश्यपःशप्तः किमिति क्षत्रेषुक्ष त्रियेषुगोभिर्जीवनकंजीवनोपायोयस्यसतथा । भवेतिसंबंधः । गोरसगोमयगोवृषविक्रयादिकृतजीवनोपायइत्यर्थः । क्षत्रियेषूत्पन्नानांगोजीवनकंनीचवर्तनंतस्माद्गोजीवन कोभवेतिशप्तइतिभावः । क्षेत्रेष्वितिपाठे गोसंचरणयोग्यस्थानेषु ॥ २२४ ॥ सकश्यपःशूरात्तन्नामयादवात् बहुगोरूपधनेनआढ्यःश्रेष्ठःसन्जातः । भूमौवसूनांगो धनानांदेवःस्वामीअतएववसुदेवइतियंशूरपुत्रंआहुर्जनाइतिशेषः । तस्यकश्यपस्यअन्याद्वितीयासुरभिः ॥ २२५ ॥ ॥ ॥

तत्तस्मात्त्वंतथैवयथादेवकीपुत्रत्वेकारणंतथैवअन्यदपिकारणमस्तीत्यर्थः । पूर्वंयोद्रोणनामावसुःसःस्वभार्ययाधरानाम्न्यासहतवपितृत्वंप्राप्तुंतपःमदीयंतपः तेपे अतएवउदारं
उत्तमंमानसंअंतःकरणंयस्य ॥ २२६ ॥ तस्मैवसवेसवरःत्वत्पितृत्वप्राप्तिरूपवरःसंनिसृष्टःप्रदत्तः । सद्रोणःनंदाख्यःआसउतनंदोतपत्त्यनंतरं अस्यद्रोणस्यभार्याधरा
नाम्नीयशोदाआसेतिशेषः । सचनंदःशूरस्यतातःतस्यसुतःशूरभ्रातातस्यसकाशात्शूरस्यवा वैश्यायांविवाहधर्मेणस्वीकृतवैश्यास्त्रियांप्रभवःउत्पन्नः यतःअतःगोपःगोपालः
॥ २२७ ॥ तत्त्वंभवस्वाशुचदेवकीसुतइत्युक्तस्यकारणंविशदयन्वसुदेवनंदयोःपितृत्वंघटयन्नाह ताविति । कथंभूतौसुतंपुत्रस्वरूपंत्वांइच्छमानौइच्छंतौ तस्मात्त्वंप्रथमं
तत्रदेवक्यांस्वरूपंप्रदर्श्य ततःप्रादुर्भावानंतरं व्रजंनंदगोपगोष्ठंप्रतिव्रजगच्छ ॥ २२८ ॥ देवताःदेवान्पुनराह । किमिति सर्वेभवंतःआशुमानुषेमनुष्यलोके कार्यानु

तत्त्वं भवस्वाशु च देवकीसुतस्तथैव यो द्रोणनामा वसुः सः ॥ स्वभार्यया धरया त्वत्पितृत्वं प्राप्तुं तपस्तेप उदार
मानसः ॥ २२६ ॥ तस्मै वरः स मया सन्निसृष्टः स चास नंदाख्य उतास्य भार्या ॥ नाम्ना यशोदा स च शूरता
तसुतस्य वैश्याप्रभवोथ गोपः ॥ २२७ ॥ तौ देवकीवसुदेवौ च तेपतुस्तपस्त्वदीयं सुतमिच्छमानौ ॥ त्वामेव तस्मा
त्प्रथमं प्रदर्श्य तत्र स्वरूपं हि ततो व्रजं व्रज ॥२२८॥ इतीरितः सोऽजभवेन केशवस्तथेति चोक्त्वापुनराह देव
ताः ॥ सर्वे भवंतो भवताशु मानुषे कार्यानुसारेण यथानुरूपतः ॥ २२९ ॥ अथावतीर्णाःसकलाश्च देवताः यथा
यथैवाह हरिस्तथा तथा ॥ वित्तेश्वरः पूर्वमभूद्धि भौमाद्धरेः सुतत्वेपि तदिच्छया सुरात् ॥ २३० ॥ ॥

सारेणसुप्रतीकहस्तिप्रातिरूपादिस्वकार्यानुकूलेनवलकार्यानुसारेणवा यथानुरूपतःचतुर्वर्णेषुयोग्यतानुसारेण । योयत्रोत्पत्तुमर्हःतथेत्यर्थः भवंतःउत्पद्यध्वम् ॥ २२९ ॥
अथहर्याज्ञानंतरं हरिःयथायथाकार्यानुसारेणयथानुरूपतइतियथाआह तथातथातदनुसारेणसकलाःदेवताःअवतीर्णाः तदेवउत्पत्तिक्रमपूर्वकंविवृणोति । वित्तेश्वरइत्या
दिना । वित्तेश्वरःकुबेरःअसुराद्भौमात् भूमिपुत्रात् नरकात् पूर्वंहर्याज्ञानंतरं उत्पन्नेभ्योदेवेभ्यःपूर्वंअभूत्जातः । ननु श्रीवराहाद्भूम्यांजातस्यनरकस्यासुरत्वं कथमित्यत
आह । हरेरिति । हरेःश्रीवराहस्यसुतत्वेसत्यपितस्यहरेरिच्छयाअसुरादसुरत्वंप्राप्तादभूदितिसंबंधः । असुरोपिहरीच्छयाहरेःसुतत्वंप्राप्तेतिभावः ॥ २३० ॥

ननु वित्तेश्वर:असुरात्किमर्थंजातइत्यतआह । पापेनेति । पापेनपापात्मनातेननरकेण हस्तीकुवेरस्यगजःतदर्थमेवसुप्रतीकाख्यहस्त्यर्थमेव ॥ २३१ ॥ सभगदत्तःमहासुरस्यबाष्कलनाम्नोसुरस्यअंशेनकलयायुतःरुद्रावेशान्निमित्तात् बलवान्महेंद्रस्यशिष्योयतःअतश्चअस्त्रवान्अस्त्रज्ञः तातेनरकेहतेसति नित्यंस्वधर्माभिरतःदेवावतारा णांयोग्यधर्मेअभिरतोवभूवेतिअस्यसर्वत्रसंबंधः । नरकवधानंतरं असुरावेशोनष्टइतिभावः ॥ २३२ ॥ तस्यशिनेःतस्मात्सत्यकात् कृष्णःपक्षःकृष्णपक्षाभिमानीदेवःगरुत्मतःगरुडस्यअंशेनयुतःयुयुधानाभिधेयोवभूव ॥ २३३ ॥ तस्मिन्युयुधानेतदंशःसंवहांशःचक्रस्यचअंशःबभूव यदुषुमध्येभोजाख्यवंशेहृदिकःतन्नाम्नाकश्चिदभूत् । सि

पापेन तेनापहृतो हि हस्ती शिवप्रदत्तः सुप्रतीकाभिधानः ॥ यदर्थमेवास्य सुतोभिजातो धनेश्वरो भगदत्ताभिधानः ॥ २३१ ॥ महासुरस्यांशयुतः स एव रुद्रावेशाद्बलवानस्त्रवांश्च ॥ शिष्यो महेंद्रस्य हते बभूव ताते स्वधर्माभिरतश्च नित्यं ॥ २३२ ॥ अभूच्छिनिर्नाम यदुप्रवीरस्तस्यात्मजः सत्यक आस तस्मात् ॥ कृष्णः पक्षो युयुधानाभिधेयो गरुत्मतोंशेन युतो बभूव ॥ २३३ ॥ यः संवहो नाम मरुत्तदंशश्चक्रस्य विष्णोश्च बभूव तस्मिन् ॥ यदुष्वभूद्धृदिको भोजवंशे शितः पक्षस्तस्य सुतो बभूव ॥ २३४ ॥ सपांचजन्यांशयुतो मरुत्सु तथांशयुक्तः प्रवहस्य वीरः ॥ नामास्य चासीत्कृतवर्मेत्यथान्ये ये यादवास्तेपि सुराः सगोपाः ॥ २३५ ॥ ये पांडवानामभवन्सहायाः देवाश्च देवानुचराः समस्ताः ॥ अन्येपि सर्वेप्यसुरा हि मध्यमा ये मानुषास्ते चलबुद्धिवृत्तयः ॥ २३६ ॥ ॥ ॥ ॥ ॥ ॥

तःपक्षःशुक्लपक्षाभिमानीदेवःतस्यहृदिकस्य ॥ २३४ ॥ सहृदिकसुतःतथामरुत्सुप्रवहस्य अतएववीरः अस्यहृदिकपुत्रस्य ॥ २३५ ॥ उत्पन्नानांदेवादीनांविभागंवदन् मानुषानपिविविच्याह । यइति । अथशब्दःसमुच्चये अन्येउक्तेभ्योन्येयेयादवाःगोपैःसहितास्तेपिसुराःदेवावताराःदेवानुचराःदेवानुकूलवर्तिनःगंधर्वादयइतियावत् । अन्ये पांडवप्रातिकूलाःयेतेअसुराःयेमध्यमाःपांडवानांउदासीनाःतेमानुषाः चलाचंचलाबुद्धेःवृत्तिःवर्तनंयेषांतेतथा संशयज्ञानिनइत्यर्थः ॥ २३६ ॥ ॥

देवासुरनिश्चायकलिंगमाह । लिंगमिति । सुराणांविष्णौपरासर्वोत्कृष्टा भक्तिरेवलिंगंलक्षणंतेभ्योदेवेभ्यःअन्येषुअसुरेषुतस्मिन्हरौप्रतीपताद्वेषित्वंलिंगंहियतःअतः अत्रउत्पन्नेषुयेयेहरिभक्तौतत्पराःतात्पर्यवंतः तेतेसुराः विशेषतःक्षितिपादिभ्योविशेषात् तयाभक्त्याभरिताःपूर्णाःअसुराःद्वेषभरिताइतिपूरणीयं ॥२३७॥ यंगंगाजमद

लिंगं सुराणां हि परैव भक्तिर्विष्णौ तदन्येषु च तत्प्रतीपता ॥ अतोत्र ये ये हरिभक्तितत्परास्ते ते सुरास्तद्भरिता विशेषतः ॥ २३७ ॥ इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये एकादशोध्यायः ॥११॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥ ॥ ॥ ॥

ग्निजान्वयभवाद्विद्धिरण्याभिधात्पुत्रंप्रापजनार्दनंशमदमस्वाध्यायसंपद्युतात् । पूर्तिंतस्यकृतौसतांसुखकरोध्यायःकिलैकादशःश्रीमद्भारतभावनिर्णयपदार्थोद्दीपिकाय मगात् ॥ १ ॥ इति श्रीभारततात्पर्यनिर्णयटीकायां एकादशोऽध्यायः ॥ ११ ॥ ॥ ॥ ॥ ॥



॥ इति श्रीमहाभारत तात्पर्यनिर्णये एकादशमोध्यायः संपूर्णः ॥

श्रीगुरुभ्योनमः ॐ श्रीमद्भगवत्पादाचार्यःश्रीकृष्णस्यपितृवंशंसंक्षेपादुक्त्वामातृवंशमाह । बभूवगंधर्वमुनिरित्यादिना । देवकःदेवकनामागंधर्वमुनिःगंधर्वऋषिःपूर्वंयःबभूव सःहरेःसेवार्थंआहुकात्उग्रसेनपितुःआहुकाद्यादवात् आसजज्ञे सःउग्रसेनस्यअवरजःअनुजः ननुज्येष्ठःअस्यउग्रसेनावरजस्यतथैवनाम पूर्वजन्मनियन्नामतदेवेत्यर्थः । तस्माद्देवकात्देवकीअजनिजातास्म ॥ १ ॥ अन्याश्चयाःकश्यपस्यैवभार्याःताश्चदेवकाज्जाताइत्यर्थः । ज्येष्ठांतांदेवकींआहुकःदेवकपिताआत्मपुत्रींचकार । पौत्रींपुत्रीत्वेनपालयामासेत्यर्थः । हियस्मात्तस्मात्सादेवकीकंसस्यपितृष्वसास्वसाचबभूव आहुकस्यदत्तपुत्रीत्वादुग्रसेनस्यस्वसातेनकंसस्यपितृष्वसा उग्रसेनभ्रातृपुत्रीत्वात्स्वसेतिभावः ॥ २ ॥ सैवदेवकीपूर्वंअदितिःपूर्वाध्याये'तस्यैवभार्यात्वदितिश्चदेवकीबभूवे'त्युक्तमपिअल्पज्ञमतिमपेक्ष्य अत्रापिसैवादितिरित्याचार्यैःकृपयोक्तमित्यवगंतव्यं । उत्तरत्राप्येवमेव सैवादितिर्वसुदेवस्यदत्ताःकन्यादानरूपेणदत्तेत्यर्थः । कंसएवस्वयमेवतस्याःदेवक्याःमांगलकंगृहप्रवेशोत्सवसंबंधिनंरथंसंध्यापयामासप्रापितवान् । वरगृहमि

ॐ बभूव गंधर्वमुनिस्तु देवकः स आस सेवार्थमथाहुकाद्धरेः ॥ स उग्रसेनावरजस्तथैव नामास्य तस्मादजनि स्म देवकी ॥ १ ॥ अन्याश्च या कश्यपस्यैव भार्या ज्येष्ठां तु तामाहुक आत्मपुत्रीं ॥ चकार तस्माद्धि पितृष्वसा सा स्वसा च कंसस्य बभूव देवकी ॥ २ ॥ सैवादितिर्वसुदेवस्य दत्ता तस्या रथं मांगलकं स एव ॥ संध्यापयामास तदा हि वायुर्जगाद वाक्यं गगनस्थितोमुं ॥ ३ ॥ विनापराधाद्धि ततो गरीयसो न मातुलो वध्यतामेति विष्णोः ॥ लोकस्य धर्माननुवर्ततोतः पित्रोर्विरोधार्थमुवाच वायुः ॥ ४ ॥ मृत्युस्तवास्या भविताष्टमः सुतो मूढेति चोक्तो जगृहे कृपाणं ॥ पुत्रान् समर्प्यास्य च शूरसूनुर्विमोच्य तां तत्सहितो गृहं ययौ ॥ ५ ॥ ॥

तिशेषः । तदागृहप्रवेशोत्सवकालेगगनेआकाशेस्थितःअमुंकंसंप्रति ॥ ३ ॥ कुतोजगादेत्यतआह । विनेति । लोकस्यधर्मान्अनुवर्ततःप्रवर्तकस्यविष्णोस्ततःवधानर्हान्मातुलाद्गरीयसःश्रेष्ठपुरुषस्यअपराधात्द्रोहंविनामातुलःवध्यतांवधार्हत्वंनैति हियतःअतःवायुःमातुलाद्गरीयसोःपित्रोःमातापित्रोर्विरोधार्थंविरोधोत्पादनार्थंउवाच॥४॥ विरोधोत्पादकप्रकारमाहेत्युक्तंदर्शयति । मृत्युरिति । हेमूढअस्याःदेवक्याः इत्युक्तःकंसःतांहंतुंकृपाणंखड्गं शूरसूनुः इमांमाजहिअस्याष्टमोगर्भःमृत्युरितियदिमन्यसेतर्हि अस्यांउत्पत्स्यमानान्सर्वान्पुत्रांस्तेदास्यामीत्युक्त्वेतिशेषः । अस्यकंसस्यपुत्रान्समर्प्य उत्पत्स्यमानानितिशेषः तांदेवकींमृत्योर्विमोच्यमोचयित्वातयादेवक्यासहितः ॥ ५ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तेनवसुदेवेनअवरजाःदेवक्यनंतरमुत्पन्नाःषट्षट्संख्याकाःकन्यकाःदेवकपुत्र्यःगृहीताःवृताःपत्नीत्वेनेतिशेषः । बाल्हीकस्यपुत्रीचपुराषट्कन्यकाभ्यःपुरा देवक्यनंतर मित्यर्थः 'पौरवीरोहिणीनामबाल्हीकस्यात्मजाभवत् । ज्येष्ठापत्नीमहाराजदयितानकदुंदुभेरि' तिहरिवंशे गृहीतावृतातस्याःमूलस्वरूपमाह । पुरेति । पुरापूर्वजन्मनि अस्यवसुदेवस्यभार्यायासुरभिःसारोहिणीगृहीतेतिसंबंधः ॥ ६ ॥ सवसुदेवःकाश्यांप्रभवःजन्मयस्यसतथा तस्यराज्ञःकाशिराजस्यकन्यकांपुरादितिंपुत्रिकापुत्रधर्मतः अस्यांजातःपुत्रोममपुत्रःस्यादितिकन्याप्रदानधर्मेणअवहत्उवाह । तेनैवधर्मेणपुत्रिकापुत्रधर्मेणकरवीरपुरेश्वरस्यकन्यांपुरादनुंअवहदितिसंबंधः ॥ ७ ॥ यःपापःपापा त्मावेनःअहमेवविष्णुरितिमन्यते असौवेनःशूरजाद्वसुदेवात्काशिराजपुत्र्यांपौंड्रकोवासुदेवइतिनाम्नाजातः पुनःसत्कुलोत्पत्त्यनंतरमपीत्यर्थः मत्तःअन्योविष्णुर्ना

षट्कन्यकाश्चावरजा गृहीता तेनैव ताभिश्च मुमोद शूरजः ॥ बाल्हीकपुत्री च पुरा गृहीता पुरास्य भार्या सुरभि स्तु रोहिणी ॥ ६ ॥ राज्ञश्च काशीप्रभवस्य कन्यकां स पुत्रिकापुत्रकधर्मतोवहत् ॥ कन्यां तथाकरवीरेश्वरस्य तेनैव धर्मेण दितिं दनुं पुरा ॥ ७ ॥ यो मन्यते विष्णुरेवाहमित्यसौ पापो वेनः पौंड्रको वासुदेवः ॥ जातः पुनः शूरजा त्काशिजायां नान्यो मत्तो विष्णुरस्तीति वादी ॥ ८ ॥ धुंधुर्हतो यो हरिणा मधोः सुतः आसीत्सुतायां करवीरेश्व रस्य ॥ मृगालनामा वासुदेवोथ देवकीमुद्वह्य शौरिर्न यथावृ[illegible] ॥ ९ ॥ ततस्तु तौ [illegible] बभूवतुर्ज्येष्ठौ सुतौ शूरसुतस्य नित्यं ॥ अन्यासु च प्राप सुतानुदारान् [illegible] वसुदेवोखिलज्ञः ॥ १० ॥

स्तीअहमेवेत्यर्थः इतिवादीवभूवेतिशेषः ॥ ८ ॥ हरिणाकुव[illegible] ॥ [illegible] नगरद्रोणकोन्यस्तेजसाप्यायितस्तदा । [illegible] महीपतिः इत्याद्यरण्यपर्ववचनात् । अतएवकुवलाश्वकोधुंधुमारइतिनाम्नाप्रसिद्धो[illegible] यःमधोर्मधुनाम्नोऽसुरस्यसुतःधुंधुनामाहतः करवीरेश्वरस्यसुतायांवसुदेवपुत्रत्वात् सुदेवः सृगालनाम्नाआसजातः अथ[illegible] शौरि[illegible] करवीरेश्वरसुतेन[illegible] तरमहत्यर्थः ॥ ९ ॥ ततःस्वस्वमातृपरित्या गात् तौपौंड्रकसृगालौनित्यंवृष्णीनांयादवानांशत्रू वसुदेवःअन्यासु[illegible] अतएवाखिलज्ञःसर्वज्ञः ॥ १० ॥

शिष्याःआसन्निति शेषः । सर्वैनस्माद्व्या नात्ज्ञानंप्राप्य यथायोग्यतया योग्यतामनतिक्रम्येतियथायोग्यं तस्यभावस्तथास्वस्वरूपयोग्यतानुसारेणेतियावत् । अखिलज्ञाः सर्वज्ञाबभूवुः ॥ ११ ॥ मरीचिजाःमरीचिकृतेःपुत्राःषण्मुनयःबभूवुः । तेमरीचिपुत्राःदेवकंऋषिंकार्श्यहेतोःतपोव्रतादिनियमैःशरीरकृशत्वनिमित्तात्प्राहसन्जहसुः तस्यदेवकस्यशापतःकालनेमेःअसुरात्प्रसूताःजाता.संतः ॥ १२ ॥ धाताब्रह्माएषांकालनेमिप्रसूतानांमरीचिपुत्राणांतथैवयथाअवध्यतास्यात्तथैववरंप्रादात् हिरण्यःहिरण्यकशिपुःआत्मनःस्वस्मादन्यतःअन्यस्माद्ब्रह्मणइत्यर्थः वरंलिप्संतोनिजनातान्प्रातवरान् शशाप किमिति । युयंक्ष्मातलेभूतलेसंभवध्वंउत्पद्यध्वं तत्रजन्मानिस्वतातःभवतांपिताकालनेमिःभवतांमच्छापात् जातानांभवतानिहंताभवेतेतिशशापेतिसंबंधः ॥ १३ ॥ वरशापयोरन्वयर्थलंघटयन्नाह । दुर्गेति । तदाभगवताहरिणाप्रचोदिताप्रेरितादुर्गातान्कालनेमिपुत्रान्प्रस्वापयित्वानिद्रितान्कृत्वा कायात्कालनेमिप्रसूतदेहात्क्रमाज्ज्येष्ठादिक्रमात् प्रथमवत्सरेएकंद्वितीयवत्सरेद्वितीयंतृतीयवत्सरेतृती

ये ये हि देवाः पृथिवीं गतास्ते सर्वे शिष्याः सत्यवतीसुतस्य ॥ विष्णोर्ज्ञानं प्राप्य सर्वेऽखिलज्ञाः तस्माद्यथा योग्यतया बभूवुः ॥ ११ ॥ मरीचिजाः षण्मुनयो बभूवुस्ते देवकं प्राहसन्कार्श्यहेतोः ॥ तच्छपतः कालनेमिप्रसूता अवध्यतार्थं तप एव चक्रुः ॥ १२ ॥ धाता प्रादाद्वरमेषां तथैव शशाप तान् क्ष्मातले संभवध्वं ॥ तत्र स्वतातो भवतां निहंतेत्यात्मान्यतो वरलिप्सून्हिरण्यः ॥ १३ ॥ दुर्गा तदा तान् भगवत्प्रचोदिता प्रस्वापयित्वा प्रचकर्ष कायात् ॥ क्रमात्समावेशयदाशु देवकीगर्भाशये तान्यहनच्च कंसः ॥ १४ ॥ तदा मुनींद्रैः संयुतः सदो विधातुरुत्तमं ॥ सपांडुरागंतुमैच्छतन्यवारयंश्च ते तदा ॥ १५ ॥ ॥ ॥ ॥ ॥

यमित्यादिक्रमाद्वा षड्जीवान्चकर्ष देवक्याःगर्भाशयेजरायौ 'गर्भाशयोजरायुःस्यादि'त्यभिधानं। यद्वा देवक्यागर्भेउदरेआशयेस्थानविशेषे 'कुक्षिभ्रूणाभ्रकागर्भाःस्थानाभिप्रायआशय'इत्यमरः। जननायेतियावत् समावेशयत्प्रवेशयामास। कंसःतान्देवकीगर्भजातान् आशुजन्ममात्रादेवन्यहनत् कंसहताःतेकालनेमिजातदेहान्विशन्नितिद्रष्टव्यं। कालनेमिप्रसूतदेहानांचेतनवियोगादपिनिर्विकारत्वात् देवकीगर्भोत्पत्त्यनंतरकालेचेतनसंयोगाच्चब्रह्मणोवध्यत्ववरः तथाकालनेमिप्रसूतानां देवकीगर्भजननात्तत्रदेहांतरप्राप्तकालनेम्यात्मककंसेनहतत्वाच्चब्रह्मणःप्राप्तसामर्थ्यवतोहिरण्यकशिपोःशापश्चेत्युभयमपिसंपादितमित्युक्तंभवति ॥ १४ ॥ अथपांडवोत्पत्तिंवक्तुंतत्संगतिमाह। तदेति। तदातस्मिन्कालेमुनींद्रैःसंयुतःसहितःसन् तपश्चरन्सपांडुःयोगेनमानुषंदेहंत्यक्त्वा विधातुःसदःसभांसेवार्थंआगंतुंयदाऐच्छतेतिबहुपदाध्याहारेणयोज्यं तेमुनयः तदान्यवारयन् पांडुमितिशेषः ॥ १५ ॥ ॥ ॥ ॥ ॥ ॥

कुतोन्यवारयन्नित्यतआह । यदर्थमिति । एषःयःकश्चनपुमान्यदर्थंयत्प्रयोजनार्थंजायतेसपुरुषःतस्यप्रयोजनस्यअकृतेः अकरणात् शुभांगतिंध्रुवंनतुव्रजेत् नप्राप्नुयाद्वियस्मात्ततःन्यवारयन्नित्यर्थः ॥१६॥ तर्हि पांडुःकिंप्रयोजनार्थं उत्पन्नइत्यतआह । प्रधानेति । एषःपांडुःप्रधानदेवतानांवाय्वादुत्तमदेवतानां जनौजननविषयेआत्मनःप्रियांभार्यांकुंतीं नियोक्तुंआज्ञापयितुंबभूव अजनि तत्कुंत्याःप्रधानदेवताजनौआज्ञादानरूपकार्यंविना तस्यपांडोःसद्गतिर्नास्तीतिन्यवारयन्नितिसंबंधः ॥ १७ ॥ ननु 'नापुत्रस्यलोकोस्ती'तिवचनात् । पांडोस्तदभावादेवन्यवारयन्निति किंनस्यादित्यतआह । अतइति । अतोन्यथेत्यस्यैवव्याख्यानं सुतानृतइति यतःसुतानृतेनराःसद्गतिंव्रजंति अतःकारणात् 'नापुत्रस्यलोकोस्ती'ति श्रुतेः यःपुत्रजननार्थंउत्पन्नःसपुत्रोत्पत्तिंविनासद्गतिंनयातीतिश्रुत्यर्थोज्ञातव्यइतिभावः । नन्वपुत्रकःकोवासद्गतिंगतःयेन श्रुत्यर्थसंकोचः कृतइत्यतआह । यथैवेति । रुक्मांगदाज्जातःसंध्यकायाःसुतःधर्मभूषणःयथैवजगाम सद्गतिमितिशेषः ॥ १८ ॥ तदातस्मिन्कालेकलिःइंद्रजिन्मुखाः

यदर्थमेष जायते पुमान्हि तस्य सोऽकृतेः ॥ शुभांगतिं न तु व्रजेध्द्रुवं ततो न्यवारयन् ॥ १६ ॥ प्रधानदेवता जनौ नियोक्तुमात्मनः प्रियां ॥ बभूव पांडुरेषतद्विना न तस्य सद्गतिः ॥ १७ ॥ अथोन्यथा सुतानृते व्रजंति सद्गतिं नराः ॥ यथैव धर्मभूषणो जगाम संध्यकासुतः ॥ १८ ॥ तदा कलिश्च राक्षसा बभूवुरिंद्रजिन्मुखाः ॥ विचित्रवीर्यनंदनप्रियोदरे हि गर्भगाः ॥ १९ ॥ तदास्य सोनुजोऽशृणोन्मुनींद्रभाषितं च तत् ॥ विचार्य च प्रियामिदं जगाद वासुदेवधीः ॥ २० ॥ य एव सद्गुणाधिकस्ततः सुतं समाप्नुहि ॥ सुतं विना न नो गतिं शुभां वदंति साधवः ॥ २१ ॥ तदस्य कृच्छ्रतो वचः पृथाऽग्रहीज्जगाद च ॥ ममास्ति देवतेश्यदो मनूत्तमः सुताप्तिदः ॥ २२ ॥ ॥ ॥

राक्षसाःविचित्रवीर्यस्यनंदनःधृतराष्ट्रःतस्यप्रियाभार्यागांधारीतस्याःउदरेगर्भगाःजरायुगाःगर्भस्थानंप्राप्ताबभूवुः ॥ १९ ॥ अस्यधृतराष्ट्रस्यअनुजःपांडुःमुनींद्रैःनागपुरागतैः ऋषिभिर्भाषितंउदितंतत्कल्यादीनांगर्भगत्वंअशृणोत् वासुदेवधीःहरिसेवाबुद्धिःपुत्रोत्पादनंहरिसेवैवेतिबुद्धिमानित्यर्थः । मुनींद्रैर्ब्रह्मसदःप्रतिमायाहीतियैर्निवारितःतैःमुनींद्रैःभाविनंपुत्रोत्पादनार्थंउत्पन्नस्यतद्विनानसद्गतिरित्युक्तंतद्वाक्यंविचार्यविमृश्य प्रियांकुंतींप्रति इदंवक्ष्यमाणवाक्यंजगादेतियोजना । मुनींद्रभाषितमित्युभयत्रसंबध्यते ॥ २० ॥ ततःतस्मात्पुरुषात्कुतइत्यतआह । सुतमिति । साधवःसमीचीनाःमुनींद्राःनोस्माकं ॥ २१ ॥ अस्यपांडोस्तद्वचःअग्रहीदंगीचकार जगादकिमिति ॥ २२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

सुरान्ऋतेतेतवसमोन सुरेषुकेचित्समाःसंतीत्यर्थः । अधिकाःसंतीतिचार्थःतेषांप्राप्तिःकथंस्यादित्यतउक्तं ममास्तीति मनूत्तमःउत्तममंत्रःममास्तियतःअतःतवसकाशात्क मधिकंसुरंआनेतुंआज्ञापयसि तंत्वदाज्ञयाआनयेआनयिष्यामीतियोजना ॥ २३ ॥ अतस्तवाधिकंसुरंकमानयइत्युक्तेहेतुंविशदयन्नाह । वरमिति । ततःपत्युःअधमंनीच पुरुषंतस्याःकाचिन्निष्कृतिःप्रायश्चित्तन्नास्ति साभर्तृलोकंपतिप्राप्तलोकंभर्त्रासहनऋच्छतिनप्राप्नोति । ऋगतावितिधातुः ।'हुत्वात्मदेहमुरुपापमदःकृतंचे'त्यग्रेवक्ष्यमाणत्वादि दंदेहहानिरूपप्रायश्चित्तराहित्यइतिद्रष्टव्यं ॥ २४ ॥ ननु वरंपतिंसमाश्रितानांसुरस्त्रीणांअवरपतिप्राप्तिदर्शनात् वरंसमाश्रितेत्यादिनादोषोक्तिःकथमित्याशंक्य सुरस्त्रीणा मवरपतिप्राप्तिदर्शनं किं कृतयुगेउतकृतांतेइत्याशंक्यआद्यंनिषेधयति कृतइति । पुराकृतेकृतयुगेसुराःकेवलंअत्यंतंनिमित्ततोपिकुतश्चित्कारणात् अपिकाचित्ताःनियतस्वां गनाःविहाय रेमिरेअनियतांगनाइतिशेषः । तथासुरांगनाश्चदेवनियतस्त्रियःनिमित्ततोपिकचित्तान्स्वनियतपतीन्विहायनरेमिरे । अन्यपुरुषमितिशेषः । इत्याद्याश्रयो

न ते सुरानृते समः सुरेषु केचिदेव च ॥ अतस्तवाधिकं सुरं कमाऽह्वये त्वदाज्ञया ॥ २३ ॥ वरं समाश्रिता पतिं व्रजेत या ततोधमं ॥ न काचिदस्ति निष्कृतिर्न भर्तृलोकमृच्छति ॥ २४ ॥ कृते पुरा सुरास्तथा सुरांगनाश्च केव लं ॥ निमित्ततोपि ताः क्वचिन्न तान्विहाय रेमिरे ॥ २५॥ मनोवचःशरीरतो यतो हि ताः पतिव्रताः ॥ अनादिकाल तोभवंस्ततः सभर्तृकाः सदा ॥२६॥ स्वभर्तृभिर्विमुक्तिगाः सहैव ता भवंति हि ॥ कृतांतमाप्य चाप्सरः स्त्रियो बभू वुरूर्जिताः ॥ २७॥ अनावृताश्च तास्तथा यथेष्टभर्तृकाः सदा ॥ अतस्तु ता न भर्तृभिर्विमुक्तिमापुरुत्तमां ॥२८॥ सुरस्त्रियोतिकारणैर्यदान्यथा स्थिताः सदा ॥ दुरन्वयाः सुदुःसहा विपत्तता भविष्यति ॥ २९ ॥

ज्यं ॥ २५ ॥ ताःसुरांगनाःअनादिकालतःमनआदिभिर्यतोपतिव्रताःपतिधर्मनिष्ठाहिश्रुत्यादौप्रसिद्धाः ततःसदाभर्तृभिःसहिताअभवन् ॥ २६ ॥ ताःदेवांगनाःस्वस्व भर्तृभिःसहैवविमुक्तिगाःभवंतिहिमोक्षंप्राप्नुवंतीत्यर्थः । ननु एवंचेत्तर्हि देवानांउर्वश्यादिभोगःकथमित्याशंकायांतास्त्वप्सरसइत्याह । कृतांतमिति । कृतांतंकृतयुगस्य पूर्तिंआप्यकृतयुगानंतरमित्यर्थः । ऊर्जिताःबह्व्यःबहुसंख्याकाइत्यर्थः याः अप्सरस्त्रियःभोगांगनाबभूवुः ॥ २७ ॥ ताःअनावृताःपाणिग्रहणधर्मेणास्वीकृताःनिर्ल ज्जाइतिवा तथाअनावृतत्वादित्यर्थः । सदानित्यंयथेष्टभर्तृकाःबहुभर्तृकाःस्वमनोभीष्टभर्तृकावायतःअतस्ताप्सरसःउत्तमांदेवस्त्रीयोग्योत्तमांविमुक्तिंभर्तृभिःसहनापुः॥ २८ ॥ ननु नियतांगनानांतारादीनांव्यभिचारप्रसंगःकथमितिद्वितीयपक्षमाशंक्याह । सुरस्त्रियइति । यदासुरस्त्रियःअतिकारणैःप्रारब्धकर्मानुरूपोत्तमशापादिबलवत्कारणैःअ न्यथाअन्यपुरुषसंयोगेनस्थिताः तदादुरन्वयाःबहुकालंस्वमूलरूपप्राप्त्यादिरहिताःस्युरितिशेषः । ततःअन्यथास्थितत्वात् सुदुःसहाअत्यंतंसोढुमशक्याविपत् भूलोकेपि

स्वभर्तुःअसामीप्याद्यापत्स्यविष्यति भवति दुरन्वयाबहुकालभर्तृयोगरहिताविपदितिकेचित् ॥ २९ ॥ ततःकारणात्भवान्यद्यपिअयुक्तंउक्तवानसि तथापितेवचःमेमया अलंघ्यमेवततःअलंघ्यत्वात् ॥ ३० ॥ नृपःपांडुःअब्रवीत् किमिति । नृपःधर्मतःधर्मंविनाभुवःअभिरक्षितानभवेद्यस्मात्तस्मात्त्वंधर्मात्मकंविभुं सुतदानेसमर्थंधर्ममि तियावत् । आशुआव्हय ॥ ३१ ॥ धर्मात् यमाज्जातःसउत्तमःसूनुःसुधार्मिकःअतिधर्मनिष्ठोभवेद्धि राज्ञाइतीरितेसतितयाकुंत्याआहुतः गांधारीगर्भस्यसंवत्सरेजाते आकारितः 'संवत्सरेधृतेगर्भेगांधार्याजनमेजय । आव्हयामासवैकुंतीगर्भार्थंधर्ममच्युतमि'त्यादिपर्वाणि । मंत्रेणआकारितोयमःद्रुतंशीघ्रंअगमत् ॥३२॥ साकुंतीततश्च तस्मात्यमात् युधिष्ठिरंयुधिष्ठिरनामकंपुत्रंसुषावजनयामास सयुधिष्टिरःइयस्माद्यमःतस्मात् आत्मैवस्वयमेवपुत्रतांप्रपेदेप्राप ॥३३॥ कुंतितःयमेयमात्मकेसुतेप्रजातेसत्ये वजननश्रवणमात्रादेवेतिभावः । सौबलीगांधारीईर्ष्यया मत्तःपूर्वंकुंत्याःपुत्रोवभूवेतिमात्सर्येणअदह्यत दुःखाग्निनास्वांभस्मीचकारेतिभावः। तदेवदर्शयति। अचिरमिति।

अयुक्तमुक्तवांस्ततो भवांस्तथापि ते वचः ॥ अलंघ्यमेव मे ततो वदस्व पुत्रदं सुरं ॥ ३० ॥ इतीरितोब्रवीन्नृपो न धर्मतो विना भुवः ॥ नृपोभिरक्षिता भवेत्तदाव्हयाशु तं विभुं ॥ ३१ ॥ स धर्मजः सुधार्मिको भवेद्धि सूनुरुत्तमः ॥ इतीरिते तया यमः समाहुतोगमद्द्रुतं ॥ ३२ ॥ ततश्च सद्य एव सा सुषाव पुत्रमुत्तमं ॥ युधिष्ठिरं यमो हि स प्रपेद आत्मपुत्रतां ॥३३॥ यमे सुते तु कुंतितः प्रजात एव सौबली ॥ अदह्यतेर्ष्यया चिरं बभंज गर्भमेव च ॥ ३४ ॥ स्वगर्भपातने कृते तया जगाम केशवः ॥ पराशरात्मजो न्यधाद् घटेषु तान्विभागशः ॥३५॥ शतात्मना विभेदिताः शतं सुयोधनादयः ॥ बभूवुरन्वहं ततः शतोत्तरा च दुःशला ॥ ३६ ॥ ॥ ॥

अचिरंयथास्यात्तथातत्क्षणादेवेत्यर्थः गर्भंचस्वगर्भमपिबभंजैव यथापातःस्यात्तथामुष्टिनातताड ॥ ३४ ॥ तान्मांसपेशीस्थितान्जंतून् विभागशःअंगुष्टपर्वमात्रेणएका धिकशतत्वेनविभज्य घटेषुन्यधात्स्थापयामास 'अंगुष्ठपर्वमात्राणांभागानांपृथगेवतु एकाधिकंशतंपूर्णंयथायोगविशेषतः । मांसपेश्यास्ततोराजन्' इत्यादिपर्ववाक्यादु क्तोर्थोवगंतव्यः ॥ ३५॥ शतात्मनाशतधाविभेदिताःविभागंप्रापिताः एतेसुयोधनादयःशतंशतसंख्याकाइत्यर्थः । अन्वहंप्रतिदिनंततोघटेभ्यःवभूवुःजाताः शतेभ्यःशत भागेभ्यःउत्तराअधिकाउर्वरितायामांसपेशीतस्याःसकाशात् दुःशलानाम्नीकन्याबभूव । 'व्यासउवाच पूर्णंपुत्रशतत्वेननमिथ्यावागुदाहृता । दौहित्रयोगायभागएकःशिष्टः शतात्परः । एषातेसुभगाकन्याभविष्यतियथेप्सितेति' तथा मांसपेश्यास्ततोराजन्क्रमशःकालपर्ययाज्जाताइत्यादिपर्ववाक्यादुक्तोर्थोवगंतव्यः ॥ ३६ ॥

अकालेपतितंगभर्ंकथंररक्षेत्यतआह । विभुरिति ॥३७॥ कलिःप्रभूतेनउत्कृष्टेनबाहुवीर्येणयुक्युक्तःसन् सुयोधनःतन्नामाअजनि । अस्यसुयोधनस्यतत्पूर्वोक्तंबलाधिकत्व प्रधानवायोःश्रीमुख्यप्राणनामकस्यसन्निधेःसन्निधाननिमित्तात् ॥३८॥ उक्तविशेषबलवतःकालेहननेकारणमाह । पुरेति । पुरामेरोःपर्वतस्यमूर्धनिउपरिभागेवसुंधरातले भूतलेउद्भवायउत्पत्तये उन्मुखंउत्कंठितं त्रिविष्टपेस्वर्गेओकांसिमंदिराणियेषांतेतथातेषां त्रिविष्टपंओकःआश्रयोयेषामितिवा तेषांदेवानांवचःश्रुतं । ओकसीमंदिराश्र याविितियादवः ॥ ३९ ॥ ततस्तेदैत्याःत्रिलोचनंत्र्यंबकंअतोषयन् तोषयामासुः । दैत्यैःरुद्रादीनिवाक्यशेषः । देवकंटकःदेवद्विट्कलिःसर्वतःसर्वभ्योवध्यएव इतःयाचि तःहियस्मात्ततः ॥ ४० ॥ उमापतेर्वरात् देवकंटकःकलिःवज्रकाययुक्वज्रवत्कठिणदेहयुक्तःसर्वतोऽवध्यइतियावत् । नाम्नासुयोधनोबभूव ॥ ४१ ॥ घृताभिपूर्णकुंभत

स देवकार्यसिद्धये ररक्ष गर्भमीश्वरः ॥ पराशरात्मजो विभुर्विचित्रवीर्यजोद्भवं ॥ ३७ ॥ कलिःसुयोधनोजनि प्रभूत बाहुवीर्ययुक् ॥ प्रधानवायुसन्निधेर्बलाधिकत्वमस्य तत् ॥ ३८ ॥ पुरा हि मेरुमूर्धनि त्रिविष्टपौकसां वचः ॥ वसुंध रातलोद्भवोन्मुखं श्रुतं दितेः सुतैः ॥ ३९ ॥ ततस्तु ते त्रिलोचनं तपोबलादतोषयन् ॥ वृतश्च देवकंटको ह्यवध्य एव सर्वतः ॥ ४० ॥ वरादुमापतेस्ततः कलिः स देवकंटकः ॥ बभूव वज्रकाययुक् सुयोधनो महाबलः ॥ ४१ ॥ अवध्य एव सर्वतः सुयोधने समुत्थिते ॥ घृताभिपूर्णकुंभतः स इंद्रजित्समुत्थितः ॥४२॥ स दुःखशासनोऽभवत्ततो तिकायसंभवः ॥ स वै विकर्ण उच्यते ततः खरोभवद्बली ॥ ४३ ॥ स चित्रसेननामकस्तथापरे च राक्षसाः ॥ बभूवु रुग्रपौरुषा विचित्रवीर्यजात्मजाः ॥ ४४ ॥ समस्तदोषरूपिणः शरीरिणो हि तेभवन् ॥ मृषेति नामतो हि या बभू व दुःशला सुरी ॥ ४५ ॥ ॥ ॥ ॥ ॥ ॥

इतिसर्वत्रसंबंधः । प्रसिद्धोरावणपुत्रइंद्रजित्समुत्थितःजातः ॥४२॥ सइंद्रजिद्दुःखशासनःदुःशासननामा अभवत् ततःअतिकायस्यसंभवःउत्पत्तिरभूत् सइत्यादिस्पष्टो र्थः ॥ ४३ ॥ तथाएवमेवअपरेअन्येराक्षसाःविचित्रवीर्यस्यधृतराष्ट्रस्यआत्मजाबभूवुः ॥ ४४ ॥ समस्तदोषरूपिणःअज्ञानद्वेषादिसर्वदोषाभिमानिनः तेदुर्योध नाद्याःशरीरिणः दोषरूपशरीरधारिणःअभवन् हिमृषाभिमानित्वात्नामतोमृषेतियाअसुरीअसुरस्त्रीसाकुहूःप्रवेशसंयुतानष्टेंदुकलाअमावास्याकुहूःतदभिमानिदेवताप्रवेशे नआवेशेनसंयुतादुःशलानाम्नीकन्याबभूव ॥ ४५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ययामृषयाअर्जुनापत्याभिमन्योःवधायवधार्थंत्रिशूलिनेरुद्राय तपःकृतंहियतःततोवधार्थंसामृपा अत्रधृताष्टगेहेजज्जुषीजाता जनजननेक्सुहित्वं उगितश्चेतिङीप् वसोः संप्रसारणमितिवस्यउः गमजनहसामितिअकारस्यलोपः स्तोश्चुनाश्चुरितिञकारःजञोर्ज्ञःआदेशप्रत्यययोरितिसस्यषत्वं ॥ ४६ ॥ ननु अभिमन्योःदुःशासनपुत्रेणहतत्वात्कथंतदर्थंदुःशलाजातेत्यतो दुःशलोदितेनजयद्रथेनपांडवनिरोधनादसहायोभिमन्युःदुःशासनपुत्रेणहतइतिदुःशलायाअभिमन्युवधकारणत्वमित्यभिप्रेत्याह । तयोदितइति । तयादुःशलया वधेअभिमन्युवधविषयेकारणंबभूव व्यूहद्वारिपांडवनिरोधनादितिभावः । ससैंधवःपूर्वंकालिकेयदानवः कालिकेयगणेषुकश्चिद्दानवः तदर्थंअभिमन्युवधार्थंआसजातः ॥ ४७ ॥ तथाशब्दःकथांतरसमुच्चयार्थः । निर्ऋतेःकोणाधिपतिनिर्ऋतिर्नाम्नोराक्षसस्यअनुजोयःसनिर्ऋतइतिअभिधाआव्हयंयस्यसतथा आसपूर्वंमभूत सनिर्ऋतःनासिकामरुतानासिकाभिमन्यमानवायुनायुतःकृतीसत्कर्मणिनिपुणःयुयुत्सुनामकःअभूज्जातः भुवीतिशेषः ॥ ४८ ॥ सचसोपियुयुत्सुःआंबिकेयस्य

कुहुप्रवेशसंयुता ययार्जुनेर्वधाय हि ॥ तपः कृतं त्रिशूलिने ततो हि सात्र जज्ञुषी ॥ ४६ ॥ तयोदितो हि सैंधवो बभूवकारणं वधे ॥ स कालिकेयदानवस्तदर्थमास भूतले ॥ ४७ ॥ तथा स निर्ऋताभिधोनुजः स निर्ऋतेरभूत् ॥ स नासिकामरुद्युतो युयुत्सुनामकः कृती ॥ ४८ ॥ स चांबिकेयवीर्यजः सुयोधनादनंतरः ॥ बभूव वैश्यकन्यकोदरोद्भवो हरिप्रियः ॥ ४९ ॥ युधिष्ठिरे जात उवाच पांडुर्बाहुबलज्ञानबलाच्च धर्मः ॥ रक्ष्योन्यथा नाशमुपैति तस्माद्बलद्वयाढ्यं जनयाशु पुत्रं ॥ ५० ॥ यज्ञाधिको ह्यश्वमेधो मनुष्यदृश्येषु तेजःस्वधिको हि भास्करः ॥ वर्णेषु विप्रः सकलैर्गुणैर्वरो देवेषु वायुः पुरुषोत्तमादृते ॥ ५१ ॥ विशेषतोप्येष पितैव मे प्रभुर्व्यासात्मना विष्णुरनंतपौरुषः ॥ अतश्च ते श्वशुरो नैव योग्यो दातुं पुत्रं वायुमुपैहि तं प्रभुं ॥ ५२ ॥

धृतराष्ट्रस्यवीर्याद्रेतसोजातः सचबभूवेतिसर्वत्रसंबंधः । सुयोधनादनंतरःसुयोधनस्यअनुजःदुःशासनस्यअग्रजइत्यर्थः । वैश्यकन्यकायाःधृतराष्ट्रोढव्यवैश्यास्त्रियःउदरादुद्भवःउत्पत्तिर्यस्यसतथा । हरिःप्रियोयस्यहरेःप्रियोवा हरिभक्तइतियावत् ॥ ४९ ॥ वाय्ववतारप्रसंगमाह । युधिष्ठिरइत्यादिना । रक्ष्यःरक्षितुंयोग्यःअन्यथातद्द्वयंविनाधर्मःनाशंउपैति । यस्मात्तस्माद्बलद्वयेनआढ्यंसंपन्नंपुत्रंआशुजनयप्रसव ॥ ५० ॥ एतादृशःकइत्यतआह । यज्ञेत्यादिना । इंद्रादिनेत्रोव्याप्तत्यर्थंमनुष्यदृश्येष्वित्युक्तं मनुष्याणांदृश्येषुद्रष्टुंयोग्येषुदेवेषुवायुःपुरुषोत्तमादृतेपुरुषोत्तमंविनेत्यर्थः । सकलैःगुणैःवरःश्रेष्ठः ॥ ५१ ॥ तर्हि पुरुषोत्तममेवपुत्रार्थंप्राप्नुयामित्यतआह । विशेषतइति । हरेःसर्वजगत्पितृत्वाद्विशेषतइत्युक्तं एषोविष्णुःविशेषतः व्यासात्मनाव्यासस्वरूपेणमेममपितैवयतःअतःतेतवश्वशुरःपुत्रंदातुंउत्पादयितुमित्यर्थः नैवयोग्यःअतःप्रभुंवायुंउपैहिप्राप्नुहि ॥ ५२ ॥ ॥

पांडुनाइतिपूर्वोक्तप्रकारेणईरितेसति पृथयाआहूतःमंत्रप्रार्थनेनआकारितश्चासौवायुश्चतस्यसंस्पर्शमात्रात् स्पर्शलक्षणरमणात्सुतोभवत् । तदुक्तंभारते । 'संतिदेवनिकायाश्चसंस्पर्शाज्जनयंतिये । वाचादृष्ट्यातथास्पर्शात्संघर्षेणेति'चपंचधे'ति । कथंभूतःसुतः जगतियस्यवायोःबलद्वयेबाहुबलज्ञानबलमितिद्वयेसमःकश्चित्पुरुषःनास्ति विष्णोर्भक्तौभक्तिविषयेचसमोनास्तीत्यर्थः । भगवद्वशइत्यत्रतत्पुरुषेकृष्यादीनामपिमुक्तानुक्तावस्थायांतन्निष्ठत्वैवातोनविशेषः । बहुव्रीहौतु वायोर्भक्त्याभगवान्वायुवशइवेतिविशेषोस्त्येवेत्यर्थः ॥ ५३ ॥ ससुतःवायुरेवअत्रभुविभीमनामाअभवत् । भीमनाम्नोनिरुक्तिमाह । भृताइति । यस्मिन्सकलाःमाःप्रमाणानिभृताःपूर्णाःहियस्मात्तस्मात् प्रमाणपूर्णत्वाद्भीमइत्यर्थः । अस्यनामांतरमप्याह । सइति । सवायुसुतःईशेनस्वामिनाविष्णुनासदैवयुतोयस्मात्तस्मान्नाम्नासेनःइनेनपत्यासहितइतिविग्रहः असौवायुसुतःततोभीमत्वात्सेनत्वाद्भीमसेनः भीमश्चासौसेनश्चेतिकर्मधारयः ॥ ५४ ॥ तस्यभीमस्यजन्ममात्रेणउत्पत्तिक्षणएवेत्यर्थः धराभूःविदारिताभेदंप्रापिताशार्दूलेनव्याघ्रेण भीतात्संचलितात् भीभयसंचलयोरितिधातोः जनन्याःकरात्यदापपातपर्वतेइतिशेषः । शार्दूलंदृष्ट्वातद्भयेनकंपितकुंतीकरात्पपातेतिभावः । तदातेनभीमपतनेनअ

इतीरिते पृथयाहूतवायुः संस्पर्शमात्रादभवद्बलद्वये ॥ समो जगत्यस्ति न यस्य कश्चिद्भक्तौ च विष्णोर्भगवद्वशः सुतः ॥ ५३ ॥ स वायुरेवाभवदत्र भीमनामा भृता माः सकला हि यस्मात् ॥ स विष्णुनेशेन युतः सदैव नाम्ना सेनो भीमसेनस्ततोसौ ॥ ५४ ॥ तज्जन्ममात्रेण धरा विदारिता शार्दूलभीताज्जननीकराद्यदा ॥ पपात संचूर्णित एव पर्वतस्तेनाखिलोसौ शतशृंगनामा ॥ ५५ ॥ तस्मिन्प्रजाते रुधिरं प्रसस्रुवुर्महासुरा वाहनसैन्यसंयुताः ॥ नृपाश्च तत्पक्षभवाः समस्तास्तदा भीता असुरा राक्षसाश्च ॥ ५६ ॥

खिलःअसौशतशृंगनामापर्वतःसंचूर्णितःशिथिलावयवःकृतइत्यर्थः । भीमस्यातिबलविक्रमसूचकोयंश्लोकः । अयंपर्वतःअनादितःशतशृंगनामा नतुसंचूर्णनेन तत्पूर्वमपिताभ्यांसमेतःशतशृंगपर्वतइत्यादौतन्नाम्नाव्यवहारात् अतएवसंचूर्णितइत्यनेनपर्वतावयवानांशिथिलत्वंविवक्षितं । तेनभीमेनसंचूर्णितः शतधाविभक्तोअतएवशतशृंगनामाभवदितिटीकाकारः ॥ ५५ ॥ तस्मिन्भीमेप्रजातेसति वाहनैःसैन्यैःसंयुताःमहासुराः पातालादिषुवर्तमानाः मूलरूपस्थमहासुराःतत्पक्षभवाःमहासुरपक्षीयत्वेनजाताःसमस्ताःनृपाःनृन्मनुष्याधमान्पातिरक्षंतितेतथा त्रिविधमनुष्याधमेषु मनुष्याधमश्रेष्ठाइत्यर्थः । यद्वा राजकुलेप्रजातामनुष्याधमाश्चअसुराःभुव्युत्पन्नजरासंधकीचकादयः राक्षसाःहिडंबकिर्मीरादयोराक्षसाः तदाभीमोत्पत्तिकालेभीताःसंतःरुधिरंरक्तंप्रसस्रुवुः मूत्रद्वारात्गुदद्वारात्मुखाच्चरक्तस्रवः तेषांविनाशकोत्पातो जातइतिभावः ॥ ५६ ॥ ॥ ॥ ॥ ॥ ॥

वृकोदरोभीमः अत्रैववनेबदरिकाश्रमेसुराणांअभितःसर्वदामुदंप्रवर्धयन् प्रकर्षेणवृद्धिंकुर्वन्नवर्धतववृधे ॥ ५७ ॥ शेषावतारप्रकारंदर्शयति । तदैवेति । तदैवअवतारार्थंत्र ह्मादीनांहारिप्रार्थनसमयएवेत्यर्थः । हरिणाउदितः त्वमप्यवतारंकुर्वित्याज्ञापितःशेषःदेवकस्यसुतायाःदेवक्याःगर्भंअविशात्हितेशेनियोजना । तदैवभीमोत्पत्तिसमयएवे तिकेषांचिद्व्याख्यानमनादरणीयं । यदासमासाद्दितयाविभूवेति उत्तरश्लोकविरोधात् अन्यथाभीमोत्पत्त्यनंतरं दशमेमासिचोत्पन्नइतिब्रूयुः । तस्माद्भीमोत्पत्तेःप्रागष्टमे मासिशेषोदेवकीगर्भंमविशादित्यवगंतव्यं । सशेषःतत्रदेवकीगर्भेमासत्रयं त्रिमासपरिमितकालं उष्यवासंकृत्वा अथमासत्रयानंतरं केशवेननियुक्तयाआज्ञापितयातया दुर्गयारोहिणीगर्भंअपवाहितःदेवकीगर्भान्निःसार्यप्रापितःसन् तत्ररोहिणीगर्भेसप्तमासान् स्थित्वापृथिव्यांजातः ॥ ५८ ॥ सरोहिणीसूनुःनामतःबलदेवोबभूव । कुतः यतोबलाढ्यःतस्यबलदेवस्यअनुअनंतरं मासत्रयानंतरमित्यर्थः प्रभुःजनार्दनोपिदेवकस्यसुतायामाविर्बभूव । जातः सुतायामिहेतिपाठे इहभूम्यां इदंकुतइत्यत्र अ

अवर्धतात्रैव वृकोदरो वने मुदं सुराणामधिकं प्रवर्धयन् ॥ ५७ ॥ तदैव शेषो हरिणोदितो विशद्गर्भं सुताया अपि देवकस्य ॥ स तत्र मासत्रयमुष्य दुर्गया प्रवाहितो रोहिणीगर्भमाशु ॥ नियुक्तया केशवेनाथ तत्र स्थित्वा मासान् सप्त जातः पृथिव्यां ॥ ५८ ॥ स नामतो बलदेवो बलाढ्यो बभूव तस्यानु जनार्दनः प्रभुः ॥ आविर्बभूवाखिल सद्गुणैकपूर्णः सुतायामपि देवकस्य ॥ ५९ ॥ यः सत्सुखज्ञानबलैकदेहः समस्तदोषस्पर्शोज्झितः सदा ॥ अव्यक्त तत्कार्यमयो न यस्य देहः कुतश्चित्क्व च सह्यजो हरिः ॥ ६० ॥ न शुक्ररक्तप्रभवोस्य कायस्तथापि तत्पुत्र तयोच्यते मृषा ॥ जनस्य मोहाय शरीरतोस्या यदाविरासीदमलस्वरूपः ॥ ६१ ॥ ॥ ॥

खिलसद्गुणैकपूर्णइतिहेतुगर्भविशेषणं ॥ ५९ ॥ पुनरपिहेतुगर्भविशेषणैःतमेवार्थंसाधयन्नाह । यइति । यःसंतिनिर्दुष्टानि सुखज्ञानबलानिएकःकेवलंदेहोयस्यसतथा । सदासर्वदासमस्तदोषस्पर्शेनपारतंत्र्याद्यशेषदोषसंबंधेन उज्झितोरहितोयस्यहरेःदेहःकुतश्चित्कारणात्क्वचिद्देशेकालेपि अव्यक्तंजडप्रकृतिःतत्कार्यमयःतद्विकारमहत्तत्वा द्यात्मकः महत्तत्वभूतादिप्रकृतिविकारात्मकदेहोनैवेतिभावः । हियस्मात्तस्मात्सहरिःअजःजननरहितः ॥ ६० ॥ अस्यहरेःकायोदेहःशुक्राद्रेतसःरक्तात्प्रभवतीतितथान यद्यपितथापितयोःमातापित्रोःपुत्रतयापुत्रत्वेनमृषाबुद्धिमोहादुच्यते असुरैरितिशेषः । तत्पुत्रत्वाभावेपिबुद्धिमोहःकथमित्यतआह । जनस्येति । अमलंनिर्दुष्टंस्वरूपं यस्यसतथा एतादृशोहरिःजनस्यअसुरलोकस्य मोहायमिथ्याज्ञाननिष्पत्त्यर्थं अस्याःदेवक्याःशरीरतःयस्मादाविरासीत् तत्तस्मान्मृषाउच्यतइतिभावः ॥ ६१ ॥

आविर्भावेप्युत्पत्तिक्रमंदर्शयतीत्याह । आविश्येति । पूर्वंआदौवसुदेवंआविश्य तस्मादेववसुदेवादेवऋतुकालएवगर्भाधानयोग्यसमयएवदेवकीगर्भमित्यर्थःविवेश अत्रदेवकीगर्भेसार्धान्त्रिंशद्दिनात्मकोमासःपंचदशदिनैर्मसार्धंभवति अर्धमानेनसहितान्सप्तमासानुवास ततःदेवक्याःसकाशात् अजोपिजननरहितोपिआविरभूत् अष्टमेमासिप्रकटोभूदितिभावः । सार्धान्अर्धेनसमार्धेनमार्धंमसन्वयेनसहितान्सप्तमासानुवास सार्धदशमासानुवासेत्यर्थः । इतिकेषांचिदाशंका 'गर्भं क्रा लेत्वसंपूर्णेअष्टमेमासिते स्त्रियौ । देवकी च यशोदा च सुषुवाते समं तदे'तिहरिवंशवाक्यविरोधान्निरस्तावेदितव्या ॥ ६२ ॥ उक्तार्थेदृष्टांतमाह । यथेति । अशुक्ररक्तोपिवीर्यरक्तसंबंधरहितएव नृसिंहरूपोहरिरित्यर्थः । कृष्णोपितथापितथैवनृसिंहावतारवदशुक्ररक्तश्चेत्यर्थः । तथापि अजःकृष्णःमातापितृक्रमादेवमातापितृक्रमानुसरणमात्रादेवविमोहयति असुरानितिशेषः॥६३॥ सहरिःमोहनार्थंपितृक्रमंसमेति तावता पितृक्रमानुसरणनिमित्तेन अस्यहरेःदेहःशुक्रतोरक्तश्च जातोनैवेतिदर्शनाय तुविशेषज्ञानार्थंपित्रादीनामितिशेषः।

**आविश्य पूर्वं वसुदेवमेव विवेश तस्मादृतुकाल एव ॥ देवीमुवासात्र च सप्तमासान् सार्धं ततश्चाविरभूदजोपि ॥६२॥ यथा पुरास्तंभत आविरासीदशुक्ररक्तोपि नृसिंहरूपः ॥ तथैव कृष्णोपि तथापि मातापितृक्रमादेव विमोहयत्यजः ॥ ६३ ॥ पितृक्रमं मोहनार्थं समेति न तावता शुक्रतो रक्ततश्च ॥ जातोस्य देहस्त्विति दर्शनाय सशंखचक्राब्जगदः स दृष्टः ॥ ६४ ॥ अनेकसूर्याभकिरीटयुक्तो विद्युत्प्रभे कुंडले धारयंश्च ॥ पीतांबरो वनमाली स्वनंतः सूर्योरुदीप्तिर्ददृशे गुणार्णवः ॥ ६५ ॥ स कंजयोनिप्रमुखैः सुरैः स्तुतः पित्रा च मात्रा च जगाद शूरजं ॥ नयस्व मां नंदगृहानिति स्म ततो बभूव द्विभुजो जनार्दनः ॥ ६६ ॥ ॥ ॥ ॥ ॥**

अब्जंपद्मंशंखाद्यैःसहितःसन् दृष्टःपितृभ्यामितिशेषः शंखचक्रादिभिश्चतुर्भुजत्वमवगंतव्यं ॥ ६४ ॥ ननु केवलंशंखाद्यायुधवान्दृष्टःकिमित्यतआह । अनेकेतिअनेकानामपरिमितानांसूर्याणांआभेवआभादीप्तिर्यस्यसतथा तच्चतत्किरीटंचमुकुटंतेनयुक्तःविद्युद्वत्तडिद्वत्प्रभाययोस्तेतथा तादृशेकुंडलेधारयन्बिभ्रन्पीतवर्णंअंबरंवस्त्रंयस्यवनमालास्यास्तीतितथा । शोभनेभ्यःअभ्रतिमिरराह्वादिसंबंधराहितेभ्यःअनंतसूर्येभ्यःउर्वीउत्कृष्टदीप्तिर्दीधितिर्यस्यगुणार्णवोहरिः ददृशेदृष्टोभूत् ॥ ६५ ॥ कंजंकमलंयोनिःकारणंयस्यब्रह्मणःसतथा सएवप्रमुखःआद्योयेषांतेतथातैःस्तुतः पित्राचमात्राचस्तुतइत्यर्थः कृष्णःशूरजंवसुदेवंजगाद किमिति । मांनंदस्यनंदगोपस्यगृहान्पुंल्लिंगत्वाद्बहुवचनं गृहंप्रतिनयस्वेतिसंबंधः । ततःजनार्दनःद्विभुजःप्रादुर्भावसमयेचतुर्भुजः इदानींद्विभुजोबभूवस्मेतिभावः ॥ ६६ ॥ ॥

तदेवकृष्णस्यप्रादुर्भावकालेअनुकृष्णमनु ततःद्विभुजस्वरूपप्राकट्यानंतरं सशूरात्मजःतंहरिंकृष्णंआदायउपगृह्य निशीथेअर्धरात्रौनंदगृहान्प्रतिप्रययौ ॥ ६७ ॥ वसुदेवःतत्रनंदगृहेतंकृष्णंसंस्थाप्य तथैवकन्यायशोदायांप्रादुर्भूतांदुर्गांआदाय तस्मान्नंदगृहात्पुनःस्वगृहंययौ कंसःगर्भषट्कंषड्गर्भानित्यर्थः । क्रमेणउत्पत्तिक्रमेणहत्वा । अष्टमंउत्पन्नंअष्टमपुत्रंमत्वाज्ञात्वा तत्रसूतिकागृहंप्रतिजगाम ॥ ६८ ॥ ननु गर्भषट्कंहत्वाअस्मिन्सप्तमत्वबुद्धिमकृत्वाअष्टमंकथंमेनइत्यतआह । गर्भमिति । लोकाःदेवक्याःसप्तमंगर्भंसृतंमेनिरेज्ञातवंतोयतः 'कुक्षिभ्रूणाभर्कार्भा' इत्यमरः।देवकीगर्भतःशेषःदुर्गयारोहिणीगर्भेस्थापितःअतोदेवकीगर्भस्रावोजातइतिलोकेप्रसिद्धिरभूदितिभावः । ततःसप्तमगर्भस्रावश्रवणात् स कंसःतांदुर्गांअष्टमंअष्टमापत्यंमत्वा हंतुंसंपोथयामासतताडेत्यर्थः ॥ ६९ ॥ सादेवीदुर्गातस्यकंसस्यहस्तादेवशिलास्पर्श

तदैव जाता च हरेरनुज्ञया दुर्गाभिधा श्रीरनु नंदपत्न्यां ॥ ततस्तमादाय हरिं ययौ सः शूरात्मजो नंदगृहान्निशीथे ॥ ६७ ॥ संस्थाप्य तं तत्र तथैव कन्यकामादाय तस्मात्स्वगृहं पुनर्ययौ ॥ हत्वा स्वसुर्गर्भषट्कंक्रमेण मत्वाष्टमं तत्र जगाम कंसः ॥ ६८ ॥ गर्भं देवक्याः सप्तमं मेनिरे हि लोकाः सृतं त्वष्टमं तां ततः सः ॥ मत्वा हंतुं पादयोः संप्रगृह्य संपोथयामास शिलातले च ॥ ६९ ॥ सा तद्धस्तात्क्षिप्रमुत्पत्य देवी खे दृश्यतैवाष्टभुजा समग्रा ॥ ब्रह्मादिभिः पूज्यमाना समग्रैरत्यद्भुताकारवती हरिप्रिया ॥ ७० ॥ उवाच चार्या तव मृत्युरत्र क्वचित्प्रजातो हि वृथैव पाप ॥ अनागसीं मां विनिहंतुमिच्छस्यशक्यकार्यं तव चोद्यमोयं ॥७१॥ उक्त्वेति कंसं पुनरेव देवकीतल्पे शयद्बालरूपैव दुर्गा ॥ नाज्ञासिपुस्तामथ केचनात्र ऋते हि मातापितरौ गुणाढ्यां ॥ ७२ ॥

नमनवाप्येत्यर्थः क्षिप्रंउत्पत्याष्टौभुजायस्याःसातथा समग्रास्तनाद्यवयवैःसंपूर्णातारुण्यस्वरूपेत्यर्थः । खेवियतिअदृश्यतदृष्टाभूत् भूमिष्ठैरितिशेषः । ब्रह्मादिभिःसमग्रैःसर्वसुरैःपूज्यमानाअत्यद्भुतःअत्याश्चर्यकरःलोकविलक्षणइत्यर्थः आकारःस्वरूपंविद्यतेयस्याःसाहरेःप्रियाभार्या ॥ ७० ॥ अतएवआर्यासर्वैस्तमादुर्गाउवाच किमिति । हेपापपापरूपकंस तवमृत्युः अत्रभुविक्वाचित्स्थलेप्रजातोहि अनागसींअनपराधांमांवृथैवकार्यंविनैवहंतुमिच्छसि अशक्यंकर्तुमशक्यंतच्चतत्कार्यंचमद्धननाख्यकार्यंतस्मिन्तवअयमुद्यमःउद्योगश्चवृथेत्युवाचेतिपूर्वेणान्वयः ॥ ७१ ॥ दुर्गाकंसंप्रतिइत्युक्त्वापुनःबालरूपासुतेवदेवक्याःतल्पेशयनेअशयत् सुष्वाप । अथदेवकीतल्पप्राप्त्यनंतरं अत्रभुविमातापितरौऋतेकेचनपुरुषाःगुणाढ्यांतांदुर्गांनाज्ञासिपुःनाजानन् ॥ ७२ ॥ ॥ ॥

कंसःतयादुर्गया पश्चात्तापात्स्वसृभामयोःवृथामयादुःखंदत्तमित्यनुतापात् । तौदेवकीवसुदेवौकोपंविहायतंकंसंऊचतुः किमिति हेराजन्हिराजश्रेष्ठ सुखस्यदुःखस्यचवासुदेवादन्यःपुरुषःकर्तानास्तिस्म अतस्त्वत्तःआवयोर्दुःखंनास्तीतिभावेनऊचतुरितिसंबंधः ॥ ७३ ॥ अथकंसःगृहेस्वगृहेस्वमंत्रिणःस्वामात्यान् आनीयआहूयेत्यर्थः कन्यावचनंकन्योक्तवाक्यंप्रोवाच । तेमंत्रिणःसर्वशोपिसर्वेषामपिनिधनंवधः ॥ ७४ ॥ कंसःतथेतितथास्त्वितिउक्त्वेत्यर्थः । तान्मंत्रिणःतत्रबालवधकर्मणिनियुज्यव्यापार्यसततंनिरंतरंस्वभावतःनिमित्तंविनेतिभावः हिंसैवविहाराःक्रीडायेषांतेतथानृशंसाइत्यर्थः । तेमंत्रिणःबालवधेसदाउद्यताःप्रयत्नवंतःसंतःइतस्ततःचेरुःसंचारंचक्रुः ॥७५॥ अथशब्दोमंगलवाची अवतारानंतरंवा । प्रभातेप्रातःकालेआनंदेनसांद्रानिविडा आकृतिःप्रतिमायस्यसनथा तंकृष्णंअपश्यतांददृशतुः ॥ ७६ ॥ एतौयशोदानंदगोपौअ

श्रुत्वा तयोक्तं तु तदैव कंसः पश्चात्तापाद्वसुदेवं सभार्यं ॥ प्रमादयामास पुनः पुनश्च विहाय कोपं च तमूचतुस्तौ ॥ सुखस्य दुःखस्य च राजसिंह नान्यः कर्ता वासुदेवादिति स्म ॥ ७३ ॥ आनीय कंसोथ गृहे स्वमंत्रिणः प्रोवाच कन्यावचनं समस्तं ॥ श्रुत्वा च ते प्रोचुरत्यंतपापाः कार्यं बालानां निधनं सर्वशोपि ॥७४ ॥ तथेति तांस्तत्र नियुज्य कंसो गृहं स्वकीयं प्रविवेश पापः ॥ चेरुश्च ते बालवधे सदोद्यता हिंसाविहाराः सततं स्वभावतः ॥ ७५ ॥ अथ प्रभाते शयने शयानमपश्यतामब्जदलायताक्षं ॥ कृष्णं यशोदा च तथैव नंद आनंदसांद्राकृतिमप्रमेयं ॥ ७६ ॥ मेनात एतौ निजपुत्रमेनं स्रष्टारमब्जप्रभवस्य चेशं ॥ महोत्सवात्पूर्णमनाश्च नंदो विप्रेभ्योदाल्लक्षमितास्तदा गाः ॥ ७७ ॥ सुवर्णरत्नांबरभूषणानि बहूनि गोजीविगणाधिनाथः ॥ प्रादादथोपायनपाणयस्तं गोपा यशोदां च मुदा स्त्रियोगमन् ७८ ॥ ॥ ॥ ॥ ॥ ॥

ब्जात्प्रभवःउत्पत्तिर्यस्यब्रह्मणःस्रष्टारंउत्पादकंएनंकृष्णंनिजपुत्रमितिआवयोःपुत्रमित्यर्थः मेनातेज्ञातवंतौ महोत्सवात्पुत्रोत्सवनिमित्तात् पूर्णअभीप्सितकामपूर्णमनोयस्यसतथा लक्षमिताःलक्षाभ्यांमिताःलक्षद्वयसंख्याकाःगाःअदात् 'धेनूनांनियुतंप्रादादि'तिभागवते ॥ ७७ ॥ गोभिर्गोरसाद्यैःजीवनंजीवनोपायोविद्यतेयेषांतेतथा तेषां गोजीविनांगोपानांगणानामधिनाथःसुवर्णादीनांबहूनिअपरिमितानिसंख्याविशेषोवाप्रादात् । अथउपायनंउत्सवकालेदातुमुचितंवस्त्रादिकंउपायनंतदेवपाणौयेषांतेगोपाः तंनंदंअगमनप्रापुः स्त्रियःगोपवध्वःउपायनपाणयःसत्यःयशोदांअगमन् ॥ ७८ ॥ ॥ ॥ ॥ ॥

नंदःतत्रयमुनातीरेकेषुचिद्दिनेषुत्रिंशद्दिनेष्वित्यर्थः गतेषुसत्सुकंसस्यगृहंप्रतिजगाम। ननु नंदःस्ववासभूतंमहावनंहित्वा यमुनातीरेकिमर्थंवसतिंकृतवानित्यतआह। पूर्वमिति। नंदःपूर्वंयशोदाप्रसवकालात्पूर्वं कंसायकरंदातुंबृहद्वनात्महावनान्निःसृतःनिर्गतःसन् कृष्णांकालिंदींप्राप। बृहद्वनान्निर्गतोनंदःबृहद्वनस्यपश्चिमदिक्स्थांक्रोशद्वयव्यवहितांमधुरांगंतुंमहावनांतरगां यमुनांप्रापेतिभावः॥ ७९॥ तेननंदेनसहयशोदाआगतातदातस्मिन्दिनेतत्रयमुनातीरेदुर्गांसुषाव। अथदुर्गाप्रसवानंतरं शौरिःवसुदेवःतत्रयशोदामंचेकृष्णंनिधाय कन्यांयशोदायांजातां कन्यांप्रतिगृह्य गृहंमधुरायांविद्यमानंस्वगृहंययौ प्राप तत्रेत्युभयत्रानुषज्यते नंदस्तत्रयमुनातीरेउवासअवसत्॥८०॥ सनंदःतस्मिन्यमुनातटेप्रसवस्थलएवेत्यर्थः मासंमासपरिमितकालंनिरुष्यउषित्वा नरेंद्रंकंसंद्रष्टुकामःययौ मधुरांप्रतीतिशेषः। अथमधुराप्रवेशानंतरं राज्ञेकंसाय। तंनंद

गतेषु तत्रैव दिनेषु केषुचिज्जगाम कंसस्य गृहं स नंदः॥ पूर्वं हि नंदः स करं हि दातुं बृहद्वनान्निःसृतः प्राप कृष्णां॥७९॥ सहागता तेन तदा यशोदा सुषाव दुर्गामथ तत्र शौरिः॥ निधाय कृष्णं प्रतिगृह्य कन्यकां गृहं ययौ नंद उवास तत्र॥८०॥ निरुष्य तस्मिन् यमुनातटे स मासं ययौ द्रष्टुकामो नरेंद्रं॥ राज्ञेथ तं दत्तकरं ददर्श शूरात्मजो वाक्यमुवाच चैनं॥ ८१ ॥ यान्युत्पाताः संति तत्रेत्युदीरिते जगाम शीघ्रं यमुनां स नंदः॥ रात्रावेवागच्छमाने तु नंदे कंसस्य धात्री तु जगाम गोष्ठं॥ ८२ ॥ सा पूतनानाम निजस्वरूपमाच्छाद्य रात्रौ शुभरूपवत्त्व॥ विवेश नंदस्य गृहं बृहद्वनं प्रांते हि मार्गे रचितं प्रयाणे॥८३॥ तीरे आगिन्यास्तु यमस्य वस्त्रगृहे शयानं पुरुषोत्तमं तं॥ जग्राह मात्रा तु यशोदया तया निद्रायुजा प्रेक्ष्यमाणा शुभेव॥ ८४॥ ॥ ॥ ॥ ॥

ददर्शएनंनंदंप्रति ॥८१॥ तत्रयशोदानिवासस्थलेउत्पाताःसंति भवंति इयतःअतोयाहिसुवाचेतिसंबंधः। धात्रीपूतना गोष्ठंव्रजंजगाम प्राप नंदागमनात्पूर्वमितिशेषः। धात्रीस्यादुपमातेत्यमरः ॥ ८२ ॥ सा कंसधात्री पूतनेतिनामप्रसिद्धा निजस्वरूपंस्वराक्षसीस्वरूपंआच्छाद्य माययापिधाय शुभरूपवत्सुरूपमिवरूपंप्राप्येत्यर्थः। शुभरूपवतीवेतिवा बृहद्वनस्यप्रांतेप्रदेशेप्रयाणेमधुराप्रयाणेमार्गे हिप्रसिद्धमार्गेराजमार्गेअनिवासं। रचितंनिर्मितंनंदस्यगृहंवस्त्रगृहंविवेश॥ ८३ ॥ मार्गेनिवासयोग्यस्थलंदर्शयन्नाह। तीरइति। निद्रायुजायुक्तयामात्रानयायशोदयाशुभेव स्त्रीव प्रेक्ष्यमाणादृश्यमानापूतना तीरेरचितेवस्त्रगृहेवस्त्रात्मकगृहे शयानंकृष्णंजग्राह ॥८४॥

तस्याःपूतनायाःमाययामोहनशक्त्यानिद्रयाच धर्षितावशीकृतानंदस्यजायाभार्यायशोदा शिशुमव्ययंमाकुर्वितिपूतनांनान्यवारयत् ईशितासमर्या। प्रभवतिअस्मादितिप्रभुःजनार्दनःकृष्णःतयापूतनयाप्रदत्तंस्तनंअसुभिःप्राणैःपपौ ॥ ८५ ॥ सापूतनामृतासती मृतीभूतेनअतिभयंकरेणस्वरूपेणराक्षसीस्वरूपेणसमस्तंवनंमहावनंव्याप्यपपात। यदापूतनापपाततदानंदगोपोपितत्रगोकुलंप्रत्यागमत्। सर्वेनंदादिगोकुलवासिनःदृष्ट्वा पूतनादेहमितिशेषः तत्रतंपूतनादेहमितिवा 'पिलोक्यपूतनादेहंबभूवुरतिविस्मिता' इतिभागवतोक्तेः। सुविस्मिताःअभवन् ॥ ८६ ॥ सापूर्वकेत्यतआह। सेति। उर्वश्याःसंप्रविष्टासापूतनापूर्वंताटकानाम्नीराक्षसी पूतनादेहेउर्वशीप्रवेशः नतुउर्वश्यांपूतनाप्रवेशः अन्यथा उक्तश्लोकविरोधःकृष्णस्य अवध्यानात् स्तनस्थकालकूटविषेणहननेच्छारूपपापगधान निरयंतमः सापूतनादेहस्थाउर्वशी कृष्णेनभुक्तेनपीतेनस्तनेनस्तन्येनेत्यर्थः पूतातुंबरुरनणदोषात्पूतासती ॥ ८७ ॥ उर्वश्याःरक्षस्तनुप्रवेशकारणमाह। सेति। संगतःरमगात्वित्तपस्यकुबेरस्य पुनःदिवंस्वर्गंययौ।

तन्मायया धर्षिता निद्रया च न्यवारयन्नैव हि नंदजाया ॥ तया प्रदत्तं स्तनमाशितासुभिः पपौ सहैवाशु जनार्दनः प्रभुः ॥ ८५ ॥ मृता स्वरूपेण तु भीषणेन पपात सा व्याप्य वनं समस्तं ॥ तदागमन्नंदगोपोपि तत्र दृष्ट्वापि सर्वेप्यभवन्सुविस्मिताः ॥ ८६ ॥ सा ताटका चोर्वशीसंप्रविष्टा कृष्णावधस्तान्निरयं संजगाम ॥ सा तूर्वशी कृष्णभुक्तस्तनेन पूता स्वर्गं प्रययौ तत्क्षणेन ॥ ८७ ॥ सा तुंबरोः संगत आविवेश रक्षस्तनुं शापतो वित्तपस्य ॥ कृष्णस्पर्शाच्छुद्धभावा पुनर्दिवं ययौ तुष्टे किमलभ्यं रमेशे ॥ ८८ ॥ यदापि देवश्चतुरोथ मासांस्तदोपनिष्क्रामणमस्य चासीत् ॥ जन्मर्क्षमस्मिन् दिन एव चासीत्प्रातः किंचित्तत्र महोत्सवोभूत् ॥ ८९ ॥ तदा शयानः शकटस्य सोधः पदा क्षिपत्तं दितिजं निहंतुं ॥ अनः समाविश्य दितेः सुतोसौ स्थितः प्रतीपाय हरेः सुपापः ॥ ९० ॥

नेदंचित्रमित्याह। तुष्टइति अलभ्यंकिंअप्राप्यंकिंनकिमपीत्यर्थः ॥ ८८ ॥ अथशब्दःकथांतरारंभकः यदादेवःकृष्णःचतुरःमासान्चतुर्थमासमित्यर्थः आप तदाचतुर्थमासिमार्गशीर्षेअस्यकृष्णस्यउपनिष्क्रमणंप्रथमंस्वगृहात्मातुलादिगृहंप्रतिनयनकर्मनिष्क्रामणंआसीत्। अस्मिन्दिनेएवउपनिष्क्रामणदिनएव प्रातःप्रातःकालेजन्मर्क्षंजन्मकालस्थनक्षत्रंरोहिणीनक्षत्रमित्यर्थः। किंचिदल्पकालवर्तिआसीत्। तत्रनिष्क्रामणकर्मणि ॥ ८९ ॥ तदातस्मिन्दिनेशकटस्यअधः अधोभागेशयानःसुतःकृष्णःतंशटस्थंदितिजंनिहंतुंपदापादेनअक्षिपत्पर्यवर्तयत्। तदुक्तंहरिवंशे। 'ततस्त्वेकेनपादेनशकटंपर्यवर्तयदि'ति। सुपापोसौदितेःसुतःहरेःप्रतीपायप्रतिकूलंकर्तुं अनःशकटंसमाविश्यस्थितःअवस्थितोभूत् ॥ ९० ॥

विष्णुनाकृष्णेनाक्षितःताडितः अनसितिष्ठतीतिअनसिस्थःशकटाक्षनामापपात । विष्णुनाक्षितःसहितःरसकुप्यादिसंभारोपेतःइत्वाचशकटंचपपात उत्तरार्धस्थचकारः इत्वेतिपदेनसंबध्यते । विष्णुनाक्षिप्तइत्यस्योभयत्रानुषंगः । सहितइत्यत्ररसकुप्यादिसंभारोपेतइतिव्याख्याने 'विध्वस्तनानारसकुप्यभाजन'मित्यादिदशमस्कंधोक्तिर्मानं । प्रतिभग्नानिभंगप्राप्तानिगात्राणिहस्तपादाद्यंगानियस्यसतथा शकटाक्षनामाआशुतत्कालएवममार । अनश्चव्यत्यस्तानिविपरीतानिचक्रे अक्षंचक्रयोरंध्रप्रविष्टकाष्ठविशेषोयस्यतदितिविग्रहःअभूत् ॥ ११ ॥ तदानंदस्यवचोभिःबालंत्यक्त्वाइतस्ततश्चरसीत्येवंरूपवाक्यैःअभितर्जिताभर्त्सितानदीतटात्समागता शकटसमीपमितिशेषः यशोदासंभ्रमाद्भयात् तंकृष्णंप्रतिगृह्य शंकयागृहबाधशंकयाद्विजवर्याणांशोभनोक्तिभिःभयपरिहारकरूपवचोभिःसंस्नापयामास । संभ्रमस्त्वादरेभयेइत्यभिधानं ॥ १२ ॥

क्षिप्तोऽनसिस्थः शकटाक्षनामा सविष्णुनेत्वा सहितः पपात ॥ ममार चाशु प्रतिभग्नगात्रो व्यत्यस्तचक्राक्षमभूदनश्च ॥ ११ ॥ सा संभ्रमात्तं प्रतिगृह्य शंकया कृष्णं यशोदा द्विजवर्यसूक्तिभिः॥ संस्नापयामास नदीतटात्तदा समागता नंदवचोभितर्जिता ॥ १२ ॥ हत्वा तु तं कंसभृत्यं स कृष्णः शिश्ये पुनः शिशुवत्सर्वशास्ता ॥ एवं गोपान् प्रीणयन् बालकेली विनोदतो न्यवसत्तत्र देवः ॥ १३ ॥ विवर्धमाने लोकदृष्ट्यैव कृष्णे पांडुः पुनः प्राह पृथामिदं वचः ॥ धर्मिष्ठो नौ सूनुरग्रे बभूव बलद्वयज्येष्ठ उतापरश्च ॥ १४ ॥ यदैक एवातिबलोपपन्नो भवेत्तदा तेन परावमर्दे ॥ प्रवर्तमाने स्वपुरं हरेयुश्चौर्यात्परे तद्द्वयमत्र योग्यं ॥ १५ ॥ ॥ ॥

सर्वेषांशास्ताशिक्षकःतंशकटाक्षंएवमनेनप्रकारेण देवःक्रीडादिगुणविशिष्टःकृष्णःबालानांकेलीक्रियातद्रूपोयोविनोदःतस्मात् यद्वा बालकेलीचविनोदश्चबालकेलीविनोदौ बालकेलीविनोदाभ्यामिति तथागोपान्प्रीणयन्संतोषयन् तत्रगोष्ठेन्यवसत् । केलीस्यात्कामुकक्रियेत्यमरः ॥ १३ ॥ लोकदृष्ट्यैवअज्ञजनदृष्ट्यपेक्षयैवनौआवयोः अग्रेप्रथमंउतअनंतरं अपरःद्वितीयःबलद्वयेनबाहुबलंज्ञानबलंचेत्युभयेन ज्येष्ठश्चसूनुःबभूवेत्यर्थः ॥ १४ ॥ अतिबलोपपन्नःएकएवपुत्रःयदायदिभवेत्तदातर्हि तेनबलिष्ठपुत्रेणपरैःशत्रुभिःसह अवमर्देयुद्धेप्रवर्तमानेसति यद्वा इत्थंभूतलक्षणेतृतीया तेनोपलक्षितइतियावत् । कमंडलुनाच्छात्रइतियावत् । परेवैरिणःचौर्यात्स्वपुरंस्वराजधानींहरेयुः तत्तस्मादत्रपरयुद्धस्वपुररक्षणात्मके कार्यद्वये द्वयंबलिष्ठपुत्रद्वयंयोग्यंयुक्तं ॥ १५ ॥ ॥ ॥

तस्मान्नौआवयोः अन्यःभीमादन्योबलाढ्यइत्यर्थः सुतोभवेत् अतस्तादृशंबलिष्टपुत्रदानयोग्यंआव्हय । तादृशःकइत्याशंकयांपरिशेषतःइंद्रएवेत्याहेत्याह । शेषइति । भ्रातुःवसुदेवस्यसुतःबलभद्राख्यसुतःसन्नभिजातोयस्मात्तस्मादसौशेषः ॥ ९६ ॥ सुतदः सुपर्णःनरेषुवैनिश्चयेन नप्रजायेतपुराहरिणाअस्यचगरुडस्यैवतथानरेषुअवतारंमाकुर्विंतिआज्ञाकृतायतःअतोनप्रजायतइतिसंबंधः । क्रोधात्मकःक्रोधजनकतमोगुणाभिमानीशंकरः पालनेराज्यरक्षणेयोग्योनैव ॥ ९७ ॥ अतःतेषांशेषादित्रयाणामनंतरः अव्यवधानवान् महेंद्रःपुरंदरः बलवानन्तीतिशेषः । बलमित्युपलक्षणं ज्ञानभक्तिमांश्चशेषाद्यनंतरंतत्समन्यस्थइंद्रएवेतिभावः अतःस्वराट्इंद्रःसमाव्हानंअर्हति 'जंभभेदीहरिहयस्वराडि'त्यमरः । साकुंतीबालवंपुरंदरंआव्हयत् पुत्रार्थंप्रार्थयामासेत्यर्थः । ततःस्मरणानंतरं शक्रःस्वयमेवजज्ञेजातः स्वस्मादितिसंबंधः ॥ ९८ ॥ सचकुंतीपुत्रः नरांशयुक्तःहरिवायुशेषांशयुक्तःविष्णोरावेशोविशेषावेशवान्अर्जुनइतिनामप्रसिद्धोभूदितिशेषः । अन्योकुंती रूपादिसुंदररूपवानन्यःसूनुःस्यादित्युच्यमानाकुंतीधर्मात्सुमहत्त्वा

शस्त्रास्त्रविद्वीर्यवान्नौ सुतोन्यो भवेदेवं तादृशमाह्वयातः ॥ शेषस्तव भ्रातृसुतोभिजातस्तस्मान्नासौ सुतदानाय योग्यः ॥ ९६ ॥ न वै सुपर्णः सुतदो नरेषु प्रजायते चास्य यतस्तथाज्ञा ॥ कृता पुरा हरिणा शंकरस्तु क्रोधात्मकः पालने नैव योग्यः ॥९७॥ अतो महेंद्रो बलवाननंतरस्तेषां समाव्हानमिहार्हति स्वराट् ॥ इतीरिता साऽऽह्वयदाशु वासवं ततः प्रजज्ञे स्वयमेव शक्रः ॥ ९८ ॥ सचार्जुनो नाम नरांशयुक्तो विष्ण्वावेशी बलवानस्त्रवेत्ता ॥ रूप्यन्यः स्यात्सूनुरित्युच्यमाना भर्त्रा कुंती नेति तं प्राह धर्मात् ॥ ९९ ॥ बृहस्पतिःपूर्वमभूद्धरेः पदं संसेवितुं पवनावेशयुक्तः ॥ स उद्धवो नाम यदुप्रवीराज्जातो विद्वानुपगवनामधेयात् ॥ १०० ॥ द्रोणात्मकं नातितरां स्वसेवकं कुर्याद्धरिर्मामिति भूय एव ॥ स उद्धवात्मावततार यादवेष्वासेवनार्थं पुरुषोत्तमस्य ॥ १०१ ॥ ॥ ॥ ॥

र्यांविनापुत्रार्थंपरपुरुषसंबंधोनर्थकारीत्येवंरूपधर्मशास्त्रोक्तेःतंपांडुंप्रतिनेदंयोग्यमितिप्राह ॥९९॥ बृहस्पतेःपुनरवतारप्रकारमाह । बृहस्पतिरिति । पूर्वंभीष्मकपोत्पत्तिकालेयःबृहस्पतिःहरेःपदंसंसेवितुंअभूत् द्रोणनामाभूत् सबृहस्पतिःपवनावेशयुक्तःअतएवविद्वान्ज्ञानीउद्धवइतिनामप्रसिद्धःसन् यदुषुप्रवीरात्श्रेष्ठात्उपगवइतिनामधेयस्य तस्माज्जातः ॥ १०० ॥ ननु द्रोणस्वरूपेणजातोबृहस्पतिःपुनरप्युद्धवस्वरूपेणकिमर्थंअवततारेत्यतआह । द्रोणात्मकमिति । हरिःश्रीकृष्णःद्रोणात्मकंद्रोणस्वरूपिणंमां अतितरांअत्यंतंस्वसेवकंनकुर्यादिति भूयएवपुनरपिसबृहस्पतिः पुरुषोत्तमस्यश्रीकृष्णस्यआसमंतात्सेवनार्थंस्वयोग्यतापूर्तिरूपांसेवांकर्तुमित्यर्थः उद्धवात्मा उद्धवस्वरूपःसन् यादवेषुअवततार ॥ १०१ ॥ ॥ ॥ ॥ ॥ ॥ ॥

सउद्भवःबृहस्पतेःसकाशादेवअतएवमंत्री संधिविग्रहादिकरणाभिज्ञःनिपुणःचतुरःसर्ववेत्तासर्वज्ञोभूदितिशेषः । अवतीर्णानांदेवानांवयस्तारतम्यमाह । वर्षत्रयइत्यादिना । तस्योद्भवस्यपरतःउत्पत्तेःपरतःवर्षत्रयेवर्षत्रयात्मककालेअतीतेसति पूर्वोक्तःसात्यकिःजज्ञे तस्मिन्दिनेचेकितानाख्योयादवश्चजज्ञइत्यर्थः ॥१०२॥ मरुत्सुप्रवहोनामयःसप्रवहःहरिसेवनार्थंयदुषुचेकितानःतन्नामासन् अभूज्जातः । नामप्रतिभइतिक्वचित्पाठः । तदैवतस्मिन्नेवदिनेहृदिकात्मजोपिकृतवर्मापि तस्यकृतवर्मणःपरतःपरस्तात् ॥ १०३ ॥ ततोयुधिष्ठिरोत्पत्त्यनंतरं अब्दतःअब्दात्परतः द्वितीयवर्षेप्राप्तेसतीत्यर्थः । गिरिशोरुद्रःभूभारसंहृतौभूभारविनाशरूपकर्मणि हरेःकृष्णस्यअंगत्वंसहायत्वंआप्तुंअजनिष्ठजज्ञे यस्मात्कारणात्जायमानःमहात्माउत्तमस्वरूपोरुद्रः अश्वस्योच्चैःश्रवसःध्वनिमिवध्वानंचक्रे तस्मान्नामतोश्वत्थामा ॥ १०४ ॥ सोश्वत्थामाकृपस्यस्वसायांभगिन्यांकृपीनाम्न्यांद्रोणस्यवीर्याद्रेतसःउद्भवःउत्पत्तिर्यस्यसतथा अभूत् तस्यअश्वत्थाम्नःचतुर्थेन्हिदिवसेसुयोधनोजातः नन्वत्रसुयोधनःयुधि

बृहस्पतेरेव स सर्वविद्यामवाप मंत्री निपुणः सर्ववेत्ता ॥ वर्षत्रये तत्परतः स सात्यकिर्जज्ञे दिने चेकितानश्च तस्मिन् ॥ १०२ ॥ मरुत्सु नामप्रवहो यदूष्वभूत्स चेकितानो हरिसेवनार्थं ॥ तदैव जातो हृदिकात्मजोपि वर्षत्रये तत्परतो युधिष्ठिरः ॥ १०३ ॥ ततोब्दतोभूभरसंहृतौ हरेरंगत्वमाप्तुं गिरिशोजनिष्ठ ॥ अश्वत्थामा नामतोश्वध्वानं स यस्माच्चक्रे जायमानो महात्मा ॥ १०४ ॥ स सर्वविद्बलवानस्त्रवेत्ता कृपस्वसायांद्रोणवीर्योद्भवोभूत् ॥ सुयोधनस्तच्चतुर्थेन्हि जातस्तस्यापरेद्युर्भीमसेनः सुधीरः ॥ १०५ ॥ यदा स मासद्वितयी बभूव तदा रोहिण्यां बलदेवोभिजातः ॥ बली गुणाढ्यः सर्ववेदीय एव सेवाखिन्नो लक्ष्मणोग्रे हरेर्भूत् ॥ १०६ ॥ ॥ ॥ ॥

ष्ठिरतःचतुर्दिनाधिकवर्षांत्नीचइत्युक्तमिदंनसंगच्छते पूर्वंनष्टस्येत्यादिनापांडुःगांधार्यांगर्भंश्रुत्वेतिश्रुत्वा कुंतींपुत्रोत्पत्त्यर्थंप्रेरयामासेत्युक्तत्वात् गर्भस्यदशमास्यत्वस्यश्रुत्वाउक्तत्वाच्चेतिचेत्सत्यं दशमास्यत्वंतुप्रायिकंक्वचित् । आधिक्यस्यापिदृष्टत्वादत्रगांधार्यावर्षद्वयंगर्भस्यधृतत्वाच्चतुर्दिनाधिकवर्षान्नीचत्वंयुज्यते गांधार्यावर्षद्वयंगर्भस्यधारणंआदिपर्वण्युक्तं तथाहि । 'संवत्सरद्वयंतंतुगांधारीगर्भमाहितं । अप्रजाधारयामासततस्तांदुःखमाविशदि'ति । तस्यदुर्योधनस्यअपरेद्युःद्वितीयेन्हिसुतरांधीरःधैर्यवान्भीमःजातइतिशेषः ॥ १०५ ॥ सभीमःयदामासद्वितयीविद्यमानयस्येतिमासद्वयवान्बभूव तदातस्मिन्दिनेअग्रेपूर्वंत्रेतायामित्यर्थः । हरेःश्रीरामचंद्रस्यसेवयाखिन्नःश्रांतोयोलक्ष्मणःसएवबलीशारीरबलवान् गुणैर्हरिभक्त्यादिगुणैःआढ्यःश्रेष्ठःसर्ववेदीसर्वज्ञःज्ञानबलवानित्यर्थः अतएवनाम्नाबलदेवःसन्रोहिण्यांअभिजातः यद्वा अग्रेरामावता

रसमाप्तिकालेममसेवानाभूदितिसेवायांसेवानिमित्तंखिन्नोऽनलंबुद्धिर्यो लक्ष्मण:सरोहिण्यांअभिजात: अतएवोक्तं'पूर्वभक्तिंखेदोच्युताश्रय'इतिपाद्मे।'अतुष्टिरप्रसादश्चखेदो तत्रिस्तथैवच। अनलत्वंवदंत्येतेसर्वेपर्यायवाचका'इतिब्राह्मे ॥ १०६ ॥ रोहिणीप्रसवोगोकुलेकिमर्थमित्याशंकायामाह। यदाहीति। यदाकंसेनपुत्रान्देवकीपुत्रान्वि निहंतुंअपापौराजद्रोहरहितौदेवकीशूरपुत्रौसहैवएकत्रशृंखलायांगतिनिर्गमनानुकूलायांदृशाचसाशृंखलाचतथा तस्यांबद्धौतदापरा:देवक्या:सकाशादन्याइत्यर्थ: शौरे: भार्या:रोहिण्याद्या: ॥ १०७ ॥ नन्वासांवसुदेवात्पुत्रोत्पत्ति:कथमित्याशंकायामाह। विनिश्चयेति। सुपापबुद्धि:सकंस:धृत:वसुदेवाद्धृत:गर्भोयाभिस्ता:तथा अन्या:देव क्या:रोहिण्याद्या:भार्या:वसुदेवदारा: आसांप्रसूतिकालपर्यंतंप्रसव: तावत्स्थानांतरेस्थापयामास ॥ १०८ ॥ एतस्माद्धेतो:उक्तकारणात्तेनकंसेनस्थापिता

यदा हि पुत्रान्विनिहंतुमेतौ सहैव बद्धौ गतिशृंखलायाम् ॥ कंसेनापापौ देवकीशूरपुत्रौ वियोजिता: शौरिभार्या: पराश्च ॥ १०७ ॥ विनिश्चयार्थं देवकीगर्भजानामन्या भार्या धृतगर्भा: स कंस: ॥ स्थानांतरे प्रसवो यावदासां संस्थापयामा स सुपापबुद्धि: ॥ १०८ ॥ हेतोरेतस्माद्रोहिणी नंदगेहे प्रसूत्यर्थं स्थापिता तेन देवी ॥ लेभे पुत्रं गोकुले पूर्णचंद्रकांता ननं बलभद्रं सुशुभ्रम् ॥१०९॥ यदा त्रिमास: स बभूव देवस्तदाविरासीत्पुरुषोत्तमोऽज: ॥ तौ कृष्णशेषावात्तकामौ सुतौ हि ततश्चक्राते देवकीशूरपुत्रौ ॥ ११० ॥ विष्णवावेशी बलवान्यो गुणाधिक: स मे सुत: स्यादिति रोहिणी च ॥ तेपे तपोऽतो हरिशुक्लकेशयुत: शेषो देवकीरोहिणीज: ॥ १११ ॥ अवर्धतासौ हरिशुक्लकेशसमावेशी गोकुले रौहि णेय: ॥ कृष्णोपि लीला ललिता: प्रदर्शयन् बलद्वितीयो रमयामास गोष्ठम् ॥ ११२ ॥ ॥ ॥

रोहिणीदेवीपूर्णचंद्रवत्कांतरम्यंआननंमुखंयस्यसतथा तं सुशुभ्रंमनोहरंशुक्लवर्णंबलभद्रंपुत्रंगोकुलेलेभेप्राप ॥ १०९ ॥ यदासदेव:बलभद्र:त्रिमास:मासत्रयपरिमित वयस्क:बभूव तदा। ननु शेषस्यदेवकीरोहिण्योर्गर्भप्राप्तौकिंकारणमित्यतआह। कृष्णशेषाविति। कृष्णोहरि:शेष:प्रसिद्ध:कृष्णशेषात्मकौसुतावात्तकामौययोस्तौतथा देवकीशूरपुत्रौतपश्चक्रातेचक्रतु: ॥११०॥ रोहिणीविष्णो:आवेशोविद्यतेयस्मिन्सतथा गुणाधिक:ज्ञानादिगुणैरुत्तमोय:सदेव:मेसुत:स्यादितितपस्तेपेचक्रइत्यर्थ: हियत: अत:शेष:हरे:शुक्लकेशेनयुत:सन् देवकीरोहिणीभ्यांजातइत्यर्थ: ॥ १११ ॥ हरे:शुक्लकेशस्यसमीचीन:आवेशोविद्यतेयस्मिन्सतथा असौरौहिणेय:बलभद्र:गोकुलेअवर्धत बल:बलभद्र:द्वितीयोयस्यसतथा बलभद्रसहितइत्यर्थ: कृष्णोपिललिता:मनोहरा:लीला:प्रदर्शयन् गोष्ठंगोकुलस्थजनमित्यर्थ: रमयामासतोषयामास ॥ ११२ ॥

ईशः सकृष्णः आत्मनः स्वस्य प्राकृतं प्रकृतिसंबंधिनं लौकिकमित्यर्थः शिशुमितिविजानंत्याः ज्ञातवत्याः मातुर्यशोदायाः उच्चैः विशेषत्वेनआदर्शनायप्रदर्शयितुं विजृंभमाणः सन् आत्मनिसंस्थंविद्यमानंअखिलंसर्वंस्थावरजंगमात्मकं कदाचित्प्रदर्शयामास ॥ ११३ ॥ सायशोदामहाभूतैः भूरादिपंचभूतैः मनोभिमानेनमनोभिमानिनोरैक्येन मनोभिमानिनारुद्रेणअभिमन्यतइत्यभिमानेन अहंकारतत्वेनमहतामहत्तत्वेनएतैर्युक्तयाप्रकृत्यागुणत्रयात्मकयाप्रकृत्यावृतंआवरणीभूतैर्युक्तं 'सासूक्ष्मत्वाद्वृणोत्यंडंद्विगुणात्तुदशोत्तराः। अबादयः प्रकृत्यंताअष्टप्रकृतयः स्मृता' इतिवचनात्। अब्जजः ब्रह्मासएवआदिः उत्पत्तिकारणंयेषांतेतथातैः शिवेनइतैः सहितैः सुरैर्नराणांदैत्यानांसंघैः समुहैश्चयुतं अंडंअस्यकृष्णस्यतनौददर्श। अत्रमहाभूतपदेनअबादिभूतचतुष्टयंविवक्षितं। तथामनोभिमानेतिपदेनअहंकारतत्वमेवविवक्षितं। नतुभूतपदेनभूतपंचकं मनःपदेनमनस्तत्वं। अभिमानपदेअहंकारतत्वंविवक्षितं। तथासतिअंडावरणस्यनत्वप्रतिपादकाबग्नीरनभोहंकृन्महत्तत्वगुणत्रयैरितिवाक्यविरोधःस्यात्। मनोभिमानपदेनमनस्तत्व

**स प्राकृतं शिशुमात्मानमुच्चैर्विजानंत्या मातुरादर्शनाय ॥ विजृंभमाणोऽखिलमात्मसंस्थं प्रदर्शयामास कदाचिदीशः ॥११३॥ सांडं महाभूतमनोभिमानमहत्प्रकृत्यावृतमब्जजाद्यैः ॥ सुरैः शिवेतैर्नरदैत्यसंघैर्युतं ददर्शास्य तनौ यशोदा ॥ ११४ ॥ न्यमीलयच्चाक्षिणी भीतभीता जुगूह चात्मानमथो रमेशः ॥ वपुः स्वकीयं सुखचित्स्वरूपं पूर्णं सत्सु ज्ञापयंस्तथ्यदर्शयत् ॥ ११५ ॥ कदाचित्तं लालयंती यशोदा वोढुं नाशक्नोद्भूरिभाराधिकार्ता ॥ निधाय तं भूमितले स्वकर्म यदा चक्रे दैत्यआगात्सुघोरः ॥ ११६ ॥ तृणावर्तो नामतः कंसभृत्यः सृष्ट्वात्युग्रं चक्रवातं शिशुं तम् ॥ आदायागादंतरिक्षं स तेन शस्तः कंठग्राहनिरुद्धवायुः ॥ ११७ ॥**

मपिनविवक्षितं। अबग्नीरितिवाक्येहंकारस्यैवपरिगणनात् मनस्तत्वस्यापरिगणनाच्च ॥ ११४ ॥ भीतभीताअत्यंतभीतायशोदाअक्षिणीन्यमीलयत् आच्छादयामास। अथोरमेशआत्मानंस्वरूपंजुगूहआच्छादयामास। ननु अलौकिकंस्वरूपंकिमर्थंदर्शयामासेत्यतआह। वपुरिति। स्वकीयंस्वसंबंधिवपुः शरीरंसुखचित्स्वरूपंआनंदज्ञानात्मकंपूर्णंव्यापकमितिसत्सुसज्जनेषुज्ञापयन्। तत्पूर्वोक्तंस्वरूपंअदर्शयादित्यर्थः ॥ ११५ ॥ भूरिभारेणअतिभारेणअधिकंअत्यंतंआर्तापीडितासती वोढुमुद्वर्तुंनाशक्नोतसमर्थानाभूत् यशोदातंकृष्णंभूमितलेनिधाय स्वकर्मस्वविहितगृहकर्मयदाचक्रे तदासुघोरः अत्यंतक्रूरः दैत्यः अगात्आजगाम ॥ ११६ ॥ दैत्यःकः आगत्यकिमकरोदित्यतआह। तृणावर्तइति। अत्युग्रंचक्रवातंचक्राकारवायुंसृष्ट्वा जनयित्वा तंशिशुंकृष्णंआदायअपहृत्य अंतरिक्षंप्रतिअगादयात् तेनकृष्णेनकंठेग्राहः बाहुभ्यांग्रहणं तेनसंरुद्धः रोद्धुंप्राप्तः वायुः श्वासनामकोवायुः यस्यसतथाभूतः सन्तृणावर्तः शस्तः हतः शसुहिंसायामितिधातोः ॥ ११७ ॥

पर्वतवत्उदग्रअतिदीर्घःदेहोयस्येति तेजना:महावनस्थासुविस्मयंअत्याश्चर्यं ॥ ११८ ॥ निजेनस्वरूपभूतेनसना निर्दुष्टेनसुखेनअंबुधिरिवाबुधिःदेवःसकेशवःकृष्णःनक्रुध्यं तिनकुप्यंति थातेषांकोपमकुर्व मित्यर्थः अनुग्रहायस्वयोग्यपुण्याभिवृद्धये । क्रुध्यतांकुप्यतांप्राणिनांस्वयोग्यात्स्वरूपयोग्यादधिकंआभिवृद्धंशुभंपुण्यंनिहंतुंनवनीतादि आदिपदेनक्षीरदध्यादिमुष्णन्चोरयन् मुषस्तेयइतिधातुः । चचार नवनीतादिभक्षितवान् इतस्ततःगतिंचकारेतिच ॥ ११९ ॥ यस्मिन्नब्देसंवत्सरेभाद्रपदेमासेगुरु श्चरविश्चतत ॥ तयोःसिंहस्थयोःसिंहराशौवर्तमानयोःसतोःसपरेशःकृष्णःउदैत्प्रकटोभूत् । पौर्णिमास्यांतुचंद्रग्रहणेन भाद्रपदत्वंमीनादिसौरग्रहणेनच रवेर्भाद्रपदत्वं द्रष्टव्यं । ततःभाद्रपदानंतरं आश्विजादिमासक्रमेणपष्ठेमासिप्राप्ते फाल्गुनेमासिफल्गुनोर्जुनोभूज्जातः ततःफाल्गुनमासानंतरंचैत्रमासीतियावत् माद्रवतीपांडुंप्रतिब

पपात कृष्णेन हतः शिलातले तृणावर्तः पर्वतोदग्रदेहः ॥ सुविस्मयं चापुरथो जनास्ते तृणावर्तं वीक्ष्य संचूर्णितांगं ॥ ११८ ॥ अक्रुध्यतां केशवोनुग्रहाय शुभं स्वयोग्यादधिकं निहंतुं ॥ सक्रुध्यतां नवनीतादिमुष्णंश्चचार देवो निज सत्सुखांबुधिः ॥११९॥ यस्मिन्नब्दे भाद्रपदे स मासे सिंहस्थयोर्गुरुरव्योः परेशः ॥ उदैत्ततः फाल्गुने फाल्गुनोभूत्तत तो माद्रवती बभाषे ॥ १२० ॥ जाताः सुतास्ते प्रवराःपृथायामेकानपत्याहमतः प्रसादात् ॥ तवैव भूयासमहं स तेता विधत्स्व कुंतीं मम मंत्रदात्रीं ॥ १२१ ॥ इतीरितः प्राह पृथां स माद्र्यै दिशस्व मंत्रं सुतदं वरिष्ठं ॥ इत्युक्तिवां सं पतिमाह यादवी दद्या त्वदर्थे तु सकृत्फलाय ॥ १२२ ॥ उवाच माद्र्यै सुतदं मनुं च पुनःफलं ते न भविष्यतीति ॥ मंत्रं समादाय च मद्रपुत्री व्यचिंतयत्स्यान्नु कथं द्विपुत्री ॥ १२३ ॥ ॥ ॥

भाषे ॥ १२० ॥ किमिति प्रवराःश्रेष्ठाःसुताःतेतवपृथायांजाताःआसन् युवांपुत्रवंतावितिभावः अनपत्याअपुत्रवतीअहमेका यतःअतःतवप्रसादात् अहमेवअहम पिसुतैरितासहिताभूयासं तवप्रसादादित्युक्तेरभिप्रायमाह । विधत्स्वेति । कुंतींममनंत्रदात्रींमंत्रोपदेशकर्त्रीं विधत्स्वकुरुष्व ॥१२१॥ सपांडुःयादवींयदुनंदनींकुंतींइतिउ क्तप्रकारेणउचिवासंवदंतंपतिंपांडुंआह । किमिति । त्वदर्थेतवोपकारायसकृत्एकदैवफलायफलप्राप्त्यैदद्यान्मंत्रंदास्यामि ॥ १२२ ॥ कुंतीसुतदंमनुंमाद्र्यैउवाचउप दिदेश । तेपुनःप्रसवानंतरं फलंपुत्रप्राप्तिरूपफलंनभविष्यतीतिचउवाचेत्यर्थः । मद्रपुत्रीमद्रराजपुत्रीमाद्रीमंत्रंसमादायप्राप्य द्वौपुत्रौयस्याःसातथा द्विपुत्रवतीत्यर्थः कथंकेनोपायेनस्यांभविष्यइति नुवितर्केणव्यचिंतयत् ॥ १२३ ॥ ॥ ॥ ॥

वितर्कंदर्शयति । सदेति । सदासर्वदादिविजेषुदेवेषुअवियोगौवियोगशून्यौदस्रौअश्विनौएतयोरश्विनोःक्वचित् नामभेदोन उभयोरेकमेवनामेत्यर्थः एतयोरश्विनोर्भार्या पिसा सकारांतशब्दवाच्येतिप्रसिद्धा उषाइतिनामवतीएकाहिएकैवआवंतशब्दवाच्योषाअनिरुद्धभार्येतिद्रष्टव्यं यद्यस्मात्तस्माद्धेतुत्रयात् द्वावश्विनौसकृदेकवारंआवर्तनात्मंत्रावृत्तेःआयातःआयास्यतः ॥ १२४ ॥ इतिईक्षंत्य विचारयंत्यामाद्र्या आकारितौएकावृत्याआहूतौतौअश्विनौशीघ्रंप्राप्तौआगतौ तावेवयौप्राप्तौतावेवेत्यर्थः । देवौअश्विनौपुत्रकौसंतौतस्यांमाद्रवत्यांप्रसूतौजातौतयोर्मध्यइतिवाक्यशेषः । पूर्वंब्राह्मणःसकाशात्प्रथममुत्पन्नोनासत्योनकुलः पश्चिमःनासत्यानंतरमुत्पन्नोदस्रःसहदेवः अस्मिन्नर्थेनासत्यदस्रौक्रमशःप्रसूनाविति मनं यद्वा पूर्वजातःज्येष्ठःनकुलःनकुलनामा पश्चिमःकनिष्ठः सहदेवनामाभूत् तौनकुलसहदेवौयमौचएकसमयएकगर्भगावित्यर्थः ॥ १२५ ॥ माद्रीपुनःमनोःफलवत्वायपुत्ररूपफलार्थंपतिंसंप्रार्थयामास तेनपांडुनाउक्तामाद्र्याःपुत्रप्राप्तिरूपवीर्यवान्मनुःस्यादित्युक्ता पृथाअवदत् किमिति ।

सदाऽवियोगौ दिविजेषु दस्रौ न चैतयोर्नामभेदः क्वचिद्धि ॥ एका भार्या मा तयोरप्युषा हि तदाऽऽयातः सकृदावर्तनाद्वौ ॥ १२४ ॥ इतीक्षंत्या कारितावश्विनौ तौ शीघ्रं प्राप्तौ पुत्रकौ तत्प्रसूतौ ॥ तावेव देवौ नकुलः पूर्वजातः सहदेवोऽभूत्पश्चिमस्तौ यमौ हि ॥ १२५ ॥ पुनर्मनोः फलवत्वाय माद्री संप्रार्थयामास पतिं तदुक्ता पृथाऽवादीत्कुटिलैषा मदाज्ञामृते देवावाव्हयामास दस्रौ ॥ १२६ ॥ अतो विरोधं च मदात्मजानां कुर्यादिषेत्येव भीतां न मां त्वं ॥ नियोक्तुमर्हः पुनरेव राजन्निति रितोऽसौ विरराम क्षितीशः ॥ १२७ ॥ विशेषनाम्नैव समाहुताः सुरा दधुः सुतानित्यविशेषितं तयोः ॥ विशेषनामापि समाव्हयत्तौ मंत्रादृतिर्नामभेदस्य चोक्ता ॥ १२८ ॥ ॥

हेराजन् कुटिलाछद्मवतीएषामाद्रीममआज्ञांऋतेदस्रौअश्विनौदेवौआव्हयामास ॥ १२६ ॥ अतःकुर्यात्करिष्यतेदेविनिभीतांमांपुनःनियोक्तुंमनोःफलवत्वायआज्ञापयितुंत्वंनार्हःएव योग्योनभवत्येवेर्थः । इतीरितोसौक्षितीशःपांडुः विरराम तुष्णींबभूव ॥ १२७ ॥ ननु पुत्रद्वयप्राप्त्यनंतरं पुनरपिमंत्रस्यफलवत्वामिच्छतीमाद्रीपूर्वमेवैकनामप्रसिद्धं मरुद्रुद्राद्याव्हानेनबहुपुत्रप्राप्तिसंभवेकिमर्थंनाव्हयदित्यतआह । विशेषनाम्नेति । विशेषनाम्नाअसाधारणनाम्नासमाहूताःसुराःसुतान्दधुरेवइतियतः अतःमरुद्रादिनाम्नांसामान्यवाचकत्वात् तेषांआव्हानंनसंभवतीतिभावः । ननुतर्हि सामान्यनामत्वेनोरश्विनोःकथनाव्हानमित्यतआह । अविशेषितमिति । तयोरश्विनोर्विशेषनामापिअसाधारणनामापि अविशेषितंविशेषरहितंअव्यावर्तकं एकैकमपिउभयोरनेनद्वयोरप्यभिदायकं ननुशक्त्याअन्यथा नासत्यदस्रौक्रमशःप्रसूताविल्यादौसह

प्रयोगोनस्यात् । अयंचार्थः तक्षनासत्याभ्यामित्येतद्भाष्यटीकायांजयतीर्थैर्निर्णीतः अतःतौसमाव्हयादित्यर्थः । तथापिव्यक्तिभेदस्याविद्यमानत्वात् मंत्रावृत्त्यभावे कथंद्वयोरागमनंइत्यतआह । मंत्रेति । अस्य आव्हातव्यस्यदेवस्यनामभेदेचएकमंत्रवाचकनामभेदेसत्येव मंत्रस्यावृत्तिःपुनरुच्चारणंउक्ता नतुव्यक्तिभेदइतिभावः ॥१२८॥ ग्रंथांतरेयुधिष्ठिरादयःपंचवायवइत्युक्तेरभिप्रायमाह । युधिष्ठिराद्येष्वित्यादिना । वायुःयुधिष्ठिराद्येषुचतुर्षुभीमंविनायुधिष्ठिरादिचतुर्षु समाविष्टोभूदितिशेषः अतःयुधिष्ठिरनकुलसहदेवेभ्यःफल्गुनेअर्जुनेविशेषाद्विशेषावेशेनसमाविष्टइत्यर्थः कस्मिन्केनरूपेणाविष्टइत्यतआह । युधिष्ठिरइति । सौम्यरूपेणशांतरूपेणअसौवायुःवीरेणवीररूपेणेत्यर्थः धनंजयेविष्टःआविष्टइत्यस्योभयत्रसंबंधः अभूदितिशेषः ॥१२९॥ प्रधानोवायुःश्रीमुख्यप्राणःकेवलंअत्यंतंशृंगाररूपंसौंदर्यस्वरूपंदर्शयानः दर्शयमानः सन् यमजौनकुलसहदेवौविवेश यमजौविवेशेत्युक्तार्थेविशेषंदर्शयन्नाह । शृंगारेत्यादिना । पांडुःकेवलस्यभावःकैवल्यं शृंगारसौंदर्यमेवकैवल्यं असाधारणधर्मोयस्येतिवि

युधिष्ठिराद्येषु चतुर्षु वायुः समाविष्टः फल्गुनेतो विशेषात् ॥ युधिष्ठिरे सौम्यरूपेण विष्टो वीरेण रूपेण धनंजयेऽसौ ॥ ॥ १२९ ॥ शृंगाररूपं केवलं दर्शयानो विवेश वायुर्यमजौ प्रधानः ॥ शृंगारकैवल्यमभीप्समानः पांडुर्हि पुत्रं चकमे चतुर्थं ॥ १३० ॥ शृंगाररूपो नकुले विशेषात्सुनीतिरूपः सहदेवं विवेश ॥ गुणैः समस्तैः स्वयमेव वायुर्बभूव भीमो जगदंतरात्मा ॥ १३१ ॥ सुपल्लवाकारतनुर्हि कोमलः प्रायो जनैः प्रोच्यते रूपशाली ॥ ततः सुजातौ वरवज्रकायौ भीमार्जुनावप्यूते पांडुरैच्छत् ॥ १३२ ॥ ॥ ॥ ॥ ॥

ग्रहः । तादृशंचतुर्थंपुत्रंचकमेऐच्छत् ॥ १३० ॥ हियस्मात्तस्माद्विशेषात्सहदेवस्यसौंदर्यरूपापेक्षयाविशेषात्शृंगाररूपोवायुःनकुलेकर्मण्यर्थेसप्तमी विवेशसुनीतिरूपो वायुःसहदेवंविवेश वायुःसहदेवेरूपद्वयेनतिष्ठतीत्यर्थः । जगतःअंतरात्माअंतर्नियामकोवायुःस्वयमेवसमस्तैर्गुणैः भक्तिज्ञानादिगुणैश्चेतिसमस्तैर्गुणैःसहितःसन् नाम्ना भीमोबभूव ॥ १३१ ॥ ननु सद्गुणवतोर्भीमार्जुनयोःसुरूपवतोःसतोःपांडुःरूप्यन्यस्यात्सूनुरितिकिमर्थंचतुर्थपुत्रंचकमइत्यतआह । सुपल्लवेति । सुपल्लवस्यललितप्रवालस्य आकारइवआकारोयस्याःसातथातादृशीतनुर्देहोयस्यसतथा । कोमलःमृदुःपुरुषःप्रायःबाहुल्येनजनैःस्थूलज्ञानिजनैःरूपशालीशोभनरूपवानितिप्रोच्यते हियतः ततःकारणात्पांडुःसुजातौसुरूपवत्तया जातावपिवज्राद्वरइतिवरवज्रः वज्रादप्यधिकदृढइत्यर्थः । राजदंतादित्वात्परनिपातः पंचमीतियोगविभागात्समासः तादृशःकायोदेहोययोस्तौतथा तादृशौभीमार्जुनौऋतेऐच्छत् अन्यंरूपवंतमितिशेषः ॥ १३२ ॥ ॥ ॥ ॥ ॥

भीमार्जुनस्वरूपंउत्तमैर्द्रष्टुंयोग्यं नतुसर्वेषामितिभावेनाह । अप्राकृतानामिति । द्वात्रिंशल्लक्षणैः उपेतंयुक्तं अतएवाग्र्यं यद्रूपंतत् अप्राकृतानां सूक्ष्मदृष्टीनांपुरुषाणांतुएव मनोहरमित्यर्थः । तत्तस्मात्पांडुनाकोमलरूपस्यअभिलषितत्वात् कोमलाभःकोमलपल्लवसदृशोमारुतः नकुलेस्थितोभूदितिशेषः । एवंउक्तप्रकारेणवायुःअत्रकृष्णावतारेपंचरूपःभीमस्वरूपोयुधिष्ठिराद्याविष्टचतुःस्वरूपश्च पंचरूपःआसीत् ॥ १३३ ॥ कृष्णपांडवाःपूर्वेंद्राइतिपुराणोक्तेरभिप्रायंविवेचयन्नाह । अतीतेंद्राइति विष्णुः षष्ठोयेषांतेतथा प्रातिलोम्यक्रमेणविष्णुःषष्ठइत्यर्थः । एतेपंचपांडवाःअतीताःअतिक्रांताःतेचतेइंद्राश्च अतीतमन्वंतरइंद्राइत्यर्थः । तदेवक्रमपूर्वकमाह पूर्वेंद्रइति । असौ यज्ञनामारमेशः पूर्वेंद्रःप्रथममन्वंतरेंद्रः सवैयज्ञनामैवकृष्णोभूदितिशेषः । अथयज्ञेंद्रानंतरं वायुर्द्वितीयःद्वितीयेंद्रः रोचनाख्यःसवायुःभीमसेनः। धर्मःतृतीयःइंद्रःसत्यजित्आसीत् ॥ १३४ ॥ असौधर्मःयुधिष्ठिरःअथधर्मेंद्रानंतरं नासत्यदस्रौ अश्विनौक्रमात्क्रमेणएकःचतुर्थइंद्रःअपरःपंचमइंद्रइत्यर्थः । तौअश्विनौविभूतौमाद्रवत्याः सुतौ

**अप्राकृतानांतु मनोहरं यद्रूपं द्वात्रिंशल्लक्षणोपेतमग्र्यं ॥ तन्मारुतो नकुले कोमलाभ एवं वायुः पंचरूपोत्र आसीत् ॥ १३३ ॥ अतीतेंद्रा एव ते विष्णुषष्ठाः पूर्वेंद्रोऽसौ यज्ञनामा रमेशः ॥ स वै कृष्णो वायुरथ द्वितीयः स भीमसेनो धर्म आसीत्तृतीयः ॥ १३४ ॥ युधिष्ठिरोसावथ नासत्यदस्रौ क्रमात्तावेतौ माद्रवतीसुतौ च ॥ पुरंदरः षष्ठ उतात्र सप्तमः स एवैकः फल्गुनो ह्येत इंद्राः ॥ १३५ ॥ क्रमात्संस्कारान् क्षत्रियाणामवाप्य ते वर्धंत स्वतवसो महित्वना ॥ सर्वे सर्वज्ञाः सर्वधर्मोपपन्नाः सर्वे भक्ताः केशवेत्यंतयुक्ताः ॥ १३६ ॥ इति श्रीमदानंद० विरचिते श्रीमन्महाभारतता० श्रीकृष्णावतारे पांडवोत्पत्तिर्नाम द्वादशोऽध्यायः ॥ १२ ॥ ॥ ॥ ॥ ॥**

एतौचअत्रन्यौनकुलसहदेवावित्यर्थः । पुरंदरःषष्ठःषष्ठमन्वंतरेंद्रःमंत्रद्युम्नः उतषष्ठमन्वंतरेंद्रपदप्राप्त्यनंतरं । अत्रवैवस्वतमन्वंतरेपुरंदरःसप्तमेंद्रःसपुरंदराख्यःषष्ठःसप्तमश्च एकएवफल्गुनः हियतःएतेविष्ण्वाद्याःषट्इंद्राःएकैकमन्वंतरेंद्राःअतःकारणात् अतीतेंद्राइत्यर्थः ॥ १३५ ॥ स्वतवसःस्वरूपभूतसामर्थ्यवंतःतेपांडवाःक्रमात् संस्कारयोग्यकालक्रमात् जेष्ठक्रमाद्वा क्षत्रियाणांयोग्यान्संस्कारान्अवाप्य महित्वनामहिम्नाअवर्धंतअभिवृद्धिंप्रापुः सर्वे पांडवाःसर्वज्ञाःसर्वधर्मैःस्वविहितविष्णुप्रीतिकरधर्मैःउपपन्नाःयुक्ताःसर्वे केशवेभक्ताःभक्तिमंतःकेशवेअत्यंतयुक्ताःमनोयोगयुक्ताःअवर्धंतेतिसंबंधः । पांडवाःश्रुतिप्रतिपाद्याइतिज्ञापनार्थं तेवर्धंतेति आश्वलायनशाखायांविद्यमानश्रुतिरध्याहृता ॥ १३६ ॥ यंगं ... ज० पूर्णस्यकृतौसंगसुखकरोध्यायस्तथाद्वादशःश्रीमद्भारते ॥ १२ ॥ इति श्रीमन्महाभारततात्पर्यनिर्णयटीकायां जनार्दनभट्टाचार्यां पदार्थदीपिकायां द्वादशोध्यायः ॥ १२ ॥ ॥ ॥ ॥ ॥ ॥

श्रीगुरुभ्योनमः ॐ अक्षत्रसंस्कारयुतोजातोपिक्षत्रियेकुले । नक्षत्रियोहिभवतियथाव्रात्योहिद्विजोत्तमइतिस्मरणात्स्वौरसपुत्रबुद्ध्यावसुदेवपुत्रोयमित्यजानतोनंदगोपात्प्राप्त वैश्ययोग्यसंस्कारस्यकृष्णस्याक्षत्रियत्वंस्यादित्याशंकापनुत्यर्थं कृष्णबलभद्रयोर्गर्गोरहःक्षत्रिययोग्यसंस्कारान्चक्रइत्याह । गर्गइत्यादिना । सात्वतांयादवविशेषाणांपु रोधाःपुरोहितोगर्गःगर्गाचार्यःशूरसुतस्यवसुदेवस्यउक्तयारामकृष्णयोःसंस्कारान्कुर्वित्येवरूपवाक्येनोक्तःसन् व्रजंगोस्थानंप्रतिआयात्आगात् सगर्गःसंस्कारान्जात कर्मादिसंस्कारांश्चक्रे यशोदासूनुर्वैश्यसंस्कारार्हः यतःअतएवश्रीमद्भगवत्पादाचार्यैः यशोदारोहिणीसून्वोरितिप्रयोगोनकृतइतिभावः ॥१॥ गर्गोनंदंप्रतीतिवाक्यशेषः। ऊचेकिमिति । हेनंदअयंपुरोवर्तीतवसुतःकृष्णःसर्वैर्गुणैर्विष्णोःसकाशात्अवमःअनुचोननभवति किंतुविष्णुतुल्यइत्यर्थः । विष्णोःसमाधिकरहितत्वात्तत्समःसएवेतिभावः एतेनकृष्णेनत्राताःरक्षिताःभवान्पूर्वौयेषांतेतथा सर्वेउन्नतंसुखंउच्चसुखंआप्स्यंति ॥ २ ॥ सनंदःमुमोद गर्गोपिययौ । अथआद्यःआदिपुरुषःअग्रजेनबलेनयुक्तःकेशवः

**ॐ गर्गः शूरसुतोक्त्या व्रजमायात्सात्वतां पुरोधाः सः ॥ चक्रे क्षत्रिययोग्यान् संस्कारान् कृष्णरोहिणीसुन्वोः ॥ १ ॥ ऊचे नंद सुतोयं तव विष्णोर्नावमो गुणैः सर्वैः ॥ सर्वे चैतत्त्राताः सुखमाप्स्यंत्युन्नतं भवत्पूर्वाः ॥ २ ॥ इत्युक्तः स मुमोद प्रययौ गर्गोपि केशवोथाद्यः ॥ स्वपदैरग्रजयुक्तश्चक्रे पुण्यं व्रजन् व्रजोद्देशं ॥३॥ स कदाचिच्छिशुभावं कुर्वंत्या मातुरात्मनो भूयः ॥ अपनेतुं परमेशो मृदं जघासेक्षतां वयस्यानां ॥ ४ ॥ मात्रोपालब्ध ईशो मुखविवृतिमकर्नांब मृद्भक्षिताहं पश्यत्यास्यांतरे तु प्रकृतिविकृतियुक् सा जगत्पर्यपश्यत् ॥ इत्थं देवोप्यचिंत्यामपरदुरधिगां शक्तिमुच्चां प्रदर्श्य प्रायो ज्ञातात्मतत्त्वां पुनरपि भगवानावृणोदात्मशक्त्या ॥ ५ ॥ ॥ ॥ ॥**

व्रजन्इतस्ततः पर्यटन् स्वस्यपदैःपादविन्यासैः व्रजस्यउद्देशंउत्तमप्रांतमपिपुण्यंअतिपुण्यमित्यर्थः चक्रे ॥ ३ ॥ परेशःपरमसमर्थःसकृष्णःआत्मनःस्वस्यशिशुःमम बालोयमितिभावंबुद्धिंकुर्वंत्याःमातुःयशोदायाःभूयःअपनेतुंशिशुभावंनाशयितुंकदाचिद्वयस्यानांसमवयस्कानां ईक्षतांपश्यतांसतांमृदंमृत्तिकांजघासभक्षितवान् । अद भक्षणेलिट् ॥ ४ ॥ मात्रायशोदयाउपालब्धःभर्त्सितःईशःकृष्णःहेअंब मृद्भक्षितामृद्भक्षकःअहंन आस्यस्यअंतरेमध्येपश्येतिवदन् मुखस्यविवृतिंप्रसारणंअकःअकरो त् सायशोदाप्रकृत्यात्रिगुणात्मिकयाजडप्रकृत्याविकृतिभिःप्रकृतिविकारैर्महत्तत्वादिभिःयुक्युक्तंजगत्पर्यपश्यत् । देवः इत्थंअनेनप्रकारेणअचिंत्यांस्मर्तुंअशक्यांअपरैः स्वान्यैःरमादिभिःदुरधिगांज्ञातुमशक्यांउच्चांउत्कृष्टांशक्तिस्वरूपशक्तिंप्रदर्श्य प्रायःबाहुल्येनज्ञातंआत्मतत्वंपरमात्मस्वरूपंययासातथा तामपियशोदामात्मशक्त्यावै ष्णवमाययापुनःपूर्ववदित्यर्थः आवृणोत्पुत्रस्नेहेनावृतांचक्रे । वैष्णवींव्यतनोन्मायांप्रजास्नेहमयींप्रभुः । सद्योनष्टस्मृतिर्गोपीसारोप्यारोहमात्मजं । प्रवृद्धस्नेहकलिल

हृदयासायथापुरेतिभागवतवाक्यादुक्तार्थोवगंतव्यः। यद्वा प्रायःपुनरपिज्ञातंआत्मतत्वंस्वस्वरूपंयस्याःशक्तेःसकाशात् तथातादृशींशक्तिंआत्मशक्त्यास्वसामर्थ्येनआवृणोत्जुगूह ॥ ५ ॥ इतिलीलयाइत्यादिक्रीडयाक्रीडाभिरित्यर्थःगोष्ठमंडलेव्रजप्रदेशे ॥ ६ ॥ सृतंभांडादुच्छ्वसितंपयःक्षीरंनिधातुंचुल्याःसकाशादधःस्थापनार्थं यशोदयाउज्झितःमुक्तःअधःस्थापितःसन् दध्यमत्रकंमथ्यमानदधिसंबंधिअमत्रकंपात्रंबभंज स्फोटयामास। अमत्रंभाजनंपात्रमित्यभिधानं ॥ ७ ॥ ईशितासमर्थःकृष्णःप्रमथ्यमानंचतत्दधिचतथा तस्माद्दध्नःउरुबहुयथास्यात्तथाप्रजातंउत्पन्नंइंदुसन्निभंचंद्रसदृशश्वेतवर्णमित्यर्थ नवंनीतंनवनीतंआददेअंगीचकार। रहःएकांतेजघासभक्षयामास ॥ ८ ॥ ननु ईशितुःनवनीतभक्षणादिकर्मकुतइत्याशंकायां प्रजायतेहीतिश्लोकद्वयेनपरिहरन्नाह। प्रजायतेहीति। जनार्दनःदिवौकसांदेवानांसमुद्भवेप्रादुर्भावेक्षुविप्राप्तेसतीतिशेषः। यथायादृशंयुगंयथायादृशंवयःयथाकुलमित्यपिग्राह्यं तथातादृशकुलयुगवयोनुसारेणप्रवर्तनंआचरणंभवेदित्यभिप्रायेणदिवौकसांउत्तमंस्वधर्मं

इति प्रभुः स लीलया हरिर्जगद्विडंबयन् ॥ चचार गोष्ठमंडलेप्यनंतसौख्यचिद्घनः ॥ ६ ॥ कदाचिदीश्वरस्तनं पिबन्यशोदया पयः ॥ सृतं निधातुमुज्झितो बभंज दध्यमत्रकं ॥ ७ ॥ प्रमथ्यमानदध्युरुप्रजातमिंदुसन्निभं ॥ नवं हि नीतमाददे रहो जघास चेशिता ॥ ८ ॥ प्रजायते हि यत्कुले यथा युगं यथा वयः ॥ तथा प्रवर्तनं भवेद्दिवौकसां समुद्भवे ॥ ९ ॥ इति स्वधर्ममुत्तमं दिवौकसांप्रदर्शयन् ॥ अधर्मपावकोपि सन् विडंबते जनार्दनः ॥ १० ॥ नृतिर्यगादिरूपकः सबाल्ययौवनादि यत् ॥ क्रियाश्च तत्तदुद्भवाः करोति शाश्वतोपि सन् ॥ ११ ॥ स विप्रराजगोपकः स्वरूपकस्तदुद्भवाः ॥ तदा तदा विचेष्टते क्रियाः सुरान् विशिक्षयन् ॥ १२ ॥ ॥ ॥ ॥

स्वस्यप्रीतिकरधर्मंप्रदर्शयन्ज्ञापयन्सन् अधर्मस्यअविहितकर्मणःदाहकर्मणिपावकःअग्निरिवाग्निःसन्नपियत्कुलेयादृशेकुलेप्रजायतेइदमप्युपलक्षणं यादृशेयुगेप्रजायतेयादृशवयोविशिष्टःप्रजायतेइतिहिशब्दार्थः तथाकुलाद्यनुसारेणविडंबते लोकमनुकरोतीतिश्लोकद्वयस्ययोजना ॥ १० ॥ उक्तमेवार्थंविवेचयन्नाह। नृतिर्यगादीत्यादिना। नरश्चतिर्यंचश्चनृतिर्यंचः तएवआदयोयेषांतेनतथा रूपकःरामकृष्णाद्यानृरूपकाः मत्स्याद्यास्तिर्यग्रूपकाः आदिपदेनहयग्रीवनृसिंहाद्याइत्यादिरूपवान् सहरिःशाश्वतःसन्नपिशश्वदेकप्रकारःसन्नपि बाल्ययौवनादिआदिपदेनकैशोरपौगंडादियद्वयःतत्प्रदर्शयतीतिशेषः। तदुद्भवाःरूपवयोचिताइत्यर्थः। क्रियाःकर्माणिकरोति ॥ ११ ॥ अधिकारार्थंवदन्उपसंहरति। सइति। व्यासभार्गवाद्याःविप्रस्वरूपकाःरामोराजस्वरूपकः गोपस्वरूपकःकृष्णःयदायदाविप्रादिस्वरूपकःसहरिर्भवति तदातदातदुद्भवाः तत्तद्रूपोचिताःक्रियाःसुरान्विशिक्षयन् विचेष्टतेकरोति ॥ १२ ॥ ॥ ॥ ॥ ॥ ॥

तथापिविशिक्षयन्नप्यजःप्रभुःअन्यदेवतासमंनभवतीत्यनन्यदेवतासमंनिजंबलंप्रकाशयन्प्रकटीकुर्वन् पुनःपुनःगुणान् अलौकिकबलज्ञानानंदादिगुणान् प्रकाशयतिप्रकटीकरोति ॥ १३ ॥ पुनःपुनःप्रकाशयतीत्युक्तंदर्शयति । अथेति । अथदधिभांडस्फोटनानंतरं । जगद्गुरुःजगदुपदेशकर्ता अतएवआत्ताउपात्तायष्टिःदंडोययासातथा तांस्वमातरंयशोदांसंवीक्ष्यदृष्ट्वा पुप्लुवेदुद्रुवइत्यर्थः । अंगनाअबलायशोदा मनोविदूरंयोगिभिःमनसाअप्राप्यमित्यर्थः तंकृष्णंअन्वगात् ॥ १४ ॥ पुनरनंतरं उरुक्रमःउरुकृष्टपराक्रमःदूरपादक्षेपोवा प्रभुःकृष्णःयशोदायाःश्रमंश्रांतिंसमीक्ष्य तस्याःकरःतेनग्रहःग्रहणंजगाम । तयागृहीतइत्यर्थः । किंकुर्वन्स्वस्यभक्तावश्यतां अधीनत्वंप्रकाशयन् ॥ १५ ॥ गोपिकायशोदासदाविमुक्तंबंधरहितंईश्वरंकृष्णंअंजसा सम्यक्निबद्धुंबंधनार्थं दामगोबंधनपाशंयदाआददेअग्रहीत् । तदानद्दामतंकृष्णं

तथाप्यनन्यदेवतासमं निजं बलं प्रभुः ॥ प्रकाशयन्पुनः पुनः प्रकाशयत्यजो गुणान् ॥ १३ ॥ अथात्तयष्टिमीक्षतां स्वमातरं जगद्गुरुः ॥ स पुप्लुवे तमन्वयान्मनोविदूरमंगना ॥ १४ ॥ पुनः समीक्ष्य तच्छ्रमं जगाम तत्करग्रहं ॥ प्रभुः स्वभक्तवश्यतां प्रकाशयन्नुरुक्रमः ॥ १५ ॥ सदा विमुक्तमीश्वरं निबद्धुमंजसाऽददे ॥ यदैव दाम गोपिका नतत्पुपूर तं प्रति ॥ १६ ॥ समस्तदामसंचयः सुसंधितोप्यपूर्णतां ॥ ययावनंतविग्रहे शिशुत्वसंप्रदर्शके ॥ १७ ॥ अबंधयोग्यतां प्रभुः प्रदर्श्य लीलया पुनः ॥ स एकवत्सपाशकांतरं गतोऽखिलंभरः ॥ १८ ॥ सुतस्य मातृवश्यतां प्रदर्श्य धर्ममीश्वरः ॥ बभंज तौ दिविस्पृशौ यमार्जुनौ सुरात्मजौ ॥ १९ ॥ ॥ ॥

प्रति नपुपूरपूरणंनाभूत् ॥ १६ ॥ समस्तदाम्नांसंचयःसमूहःसुसंधितोपिउत्तरोत्तरग्रंथिभिर्नियोजितोपिशिशुत्वंशिशुस्वरूपंसंप्रदर्शके अनंतविग्रहेपरिमाणरहितकृष्णदेहे अपूर्णतांययौ ॥ १७ ॥ अखिलंभरःविश्वंभरःउदरस्थविश्वइतियावत् सप्रभुःकृष्णःअबंधयोग्यतांस्वस्यबंधनयोग्यताभावंप्रदर्श्य पुनःअनंतरं सुतस्यमातुर्वश्यतांवशत्वं धर्मंप्रदर्श्य एकएववत्सपाशः स्वार्थेकप्रत्ययः तस्यअंतरंमध्यंगतःप्राप्तोभूदित्यर्थः । वत्सगलावरणभूतेनपाशेनबंधनंप्राप्तवानितिभावः ॥ १८ ॥ ईश्वरःदिविस्पृशौसहस्रधनुर्मात्रोर्ध्वदेशस्पृशावतिदीर्घावित्यर्थः । सहस्रधनुषस्तूर्ध्वंद्युशब्देनापिभण्यतइतितंत्रमालायां । पुरासुरस्यकुबेरस्यआत्मजौपुत्रौतौप्रसिद्धौयमौएकगर्भेसहोत्पन्नौतौचतौअर्जुनौचवृक्षौवृक्षत्वेनोत्पन्नौबभंजउद्बबर्ह । अर्जुनस्तृणजातिःस्यादर्जुनःककुभद्रुमइतिअनेकध्वनिपदमंजर्यां ॥ १९ ॥ ॥

तर्वोरसुरप्रवेशंकुबेरपुत्रयोःतरुत्वप्राप्तिकारणंचाह । पुरेति । पूतनयासमन्वितौयुक्तौअनोक्षेणशकटासुरेणसंयुतौ धुनिःधुनिनामासुरःतथा चमुरपिचमुनामकोपिपुराशिवां पार्वतींप्रतितपश्चक्रतुः चत्वारःसहैवतपश्चक्रुरितिभावः । तयापार्वत्याअवध्यताअवध्यत्वरूपोवरःचतुर्षुस्थितिनिमित्तंप्रयोजितःदत्तइत्यर्थः ॥ २० ॥ अनंतरंधुन्यादिवर प्राप्त्यनंतरं तृणान्युद्भ्रामयतीतिविग्रहः तृणावर्तनामकोसुरःतपःशिवांप्रत्यचरत् । तंअवध्यत्वरूपंवरंचअवाप । शिशोःस्वरूपमिवस्वरूपंयस्यसतथा सचासौविष्णुः कृष्णःतेनतेपूतनाअनोक्षःतृणोद्भ्रामिरितित्रयःहताः ॥ २१ ॥ अमुनाकृष्णेनतौप्रसिद्धौपूर्वोक्तौतरूअर्जुनौसमाश्रितौवृक्षप्रविष्टावित्यर्थः । धुनिश्चमुश्चतर्वोःवृक्षयोःप्रभंग तःउन्मूलनात्निषूदितौनिहतौ असुरप्रवेशमुक्तातरुत्वकारणमाह । तर्विति । तरूयमार्जुनौशापात्संभवोययोस्तौतथा ॥ २२ ॥ किमर्थंकस्यशापइत्यतआह । पुरेति ।

पुराधुनिश्चमुस्तथापि पूतनासमन्वितौ ॥ अनोक्षसंयुतौ तपः प्रचक्रतुः शिवां प्रति ॥ तया वरोप्यवध्यता चतुर्षु च प्रयोजितः ॥ २० ॥ अनंतरं तृणोद्भ्रमिस्तपोचरद्वरं च तं ॥ अवाप ते त्रयो हताः शिशुस्वरूपविष्णुना ॥ २१ ॥ धुनिश्चमुश्च तौ तरू समाश्रितौ निषूदितौ ॥ तरुप्रभंगतोमुना तरू च शापसंभवौ ॥ २२ ॥ पुरा हि नारदांतिके दिगंबरौ शशाप सः ॥ धनेशपुत्रकौ द्रुतं तरुत्वमाप्नुतां त्विति ॥ २३ ॥ ततो हि तौ निजां तनुं हरेः प्रसादतः शुभौ ॥ अवापतुःस्तुतिं प्रभोर्विधाय जग्मतुर्गृहं ॥ २४ ॥ नलकूबरमणिग्रीवौ मोचयित्वा च शापतः ॥ वासुदेवोथ गोपालैर्विस्मितैरभिवीक्षितः ॥ २५ ॥ वृंदावनमियासुः सन्नंदसूनुर्बृहद्वने ॥ ससर्ज रोमकूपेभ्यो वृकान्व्या घ्रसमान्बले ॥ २६ ॥ ॥ ॥ ॥ ॥

पुरासनारदःनारदस्यस्वस्येत्यर्थः । अंतिकेसमीपेदिगंबरौमुक्तवस्त्रावित्यर्थः । धनेशस्यपुत्रौनलकूबरमणिग्रीवनामानौ द्रुतंशीघ्रंतुबहुकालंतरुत्वंयुवांआप्नुतमितिशशाप । हियतःततःतरूशापसंभवावितिपूर्वेणान्वयः ॥ २३ ॥ तौनलकूबरमणिग्रीवौहरेःकृष्णस्यप्रसादतःशुभौशापदेहान्मुक्तौसंतौनिजांतनुंस्वमूलरूपंअवापतुः प्रभोःकृष्णस्य स्तुतिंविधाय गृहंदेवतापदंप्रतिजग्मतुः ॥ २४ ॥ अथतयोर्गमनानंतरं विस्मितैः विस्मययुक्तैःगोपालैरभिवीक्षितःदृष्टोभूदित्यर्थः ॥ २५ ॥ बृहद्वनात्वृंदावनाख्यस्थान विशेषंप्रतिइयासुःयातुमिच्छुः नंदस्यसूनुःसकृष्णःबृहद्वनेरोमकूपेभ्यःस्वस्येतिशेषः । बलेशक्तिविषयेव्याघ्रसमानान्वृकान्सारमेयाकारान्श्वापदविशेषान्ससर्ज ॥ २६ ॥

कोटीनांसंघाःकोटिसंघाःअनेकेकोटिसंघायेषांतेतथा तैःबहुकोटिसमूहवद्भिःतैःवृकैःपीड्यमानाःव्रजेआलयाःगृहाःयेषांतेतथा व्रजवासिनोनराःनित्यःअविच्छिन्नःआनंदोयस्यसतथा तंनंदजंनंदगोपपुत्रंआदाय वृंदावनंययुःप्रापुः ॥ २७ ॥ उद्दामतरैः अतिप्रौढैःचेष्टितैःस्वकृतकर्मभिःनंदयामास संतोषयामास ॥ २८ ॥ चंद्रतश्चंद्रंहसन्तिरस्कुर्वन् कांतंमनोहरंवदनंयस्यसतथा तेनेंदोर्वर्चइववर्चःकांतिर्यस्यसतथा । तेनरौहिणेयेनसंयुतःसकृष्णःवत्सानांपालःपालकोबभूव ॥ २९ ॥ अप्रमयःप्रमितिःप्रमःघञर्थेकः तेनप्रमीयतइतिप्रमयःनप्रमयःअप्रमयःज्ञातुमशक्यइत्यर्थः कृष्णःकंसस्यअनुगंअनुचरंभृत्यमितियावत् वत्सस्यतनुरिवतनुःस्वरूपंयस्यसतथा तंदैत्यंप्रगृह्यपृष्ठपादौप्रगृह्य वृक्षस्याशिरसिऊर्ध्वभागेप्रक्षिप्यसंप्रास्यन्यहनतूजवान । अथबकोपिबकनामकोप्यसुरःआससादप्राप ॥ ३० ॥ स्कंदस्यषण्मुखस्यप्रसादः

अनेककोटिसंघैस्तैः पीडयमाना व्रजालयाः ॥ ययुर्वृंदावनं नित्या नंदमादाय नंदजं ॥ २७ ॥ इंदिरापतिरानंदपूर्णो वृंदावने प्रभुः ॥ नंदयामास नंदादीन् उद्दामतरचेष्टितैः ॥ २८ ॥ स चंद्रतो हसत्कांतवदनेनेंदुवर्चसा ॥ सहितो रौहिणेयेन वत्सपालो बभूवह ॥ २९ ॥ दैत्यं स वत्सतनुमप्रमयः प्रगृह्य कंसानुगं हरवरादपरैरवध्यं ॥ प्रक्षिप्य वृक्षशिरसि न्यहनद्बकोपि कंसानुगोथ विभुमच्युतमाससाद ॥ ३० ॥ स्कंदप्रसादकवचः स मुखे चकार गोविंदमग्निवदमुं प्रदहंतमुच्चैः ॥ चच्छर्द तुंडशिरसैव निहंतुमेनमायांतमीक्ष्य जगृहेस्य स तुंडमीशः ॥ ३१ ॥ तुंडद्वयं यदुपतिः करपल्लवाभ्यां संगृह्य चाशु विददार ह पक्षिदैत्यं ॥ ब्रह्मादिभिः कुसुमवर्षिभिरीड्यमानः सायं ययौ व्रजभुवं सहितोग्रजेन ॥ ३२ ॥ एवं सदैव वरवंदितपादपद्मो गोपालकेषु विहरन् भुवि षष्ठमब्दं ॥ प्राप्तो गवामखिलपोपि स पालकोभूद्वृंदावनांतरगसांद्रलतावितानें ॥ ३३ ॥ ॥ ॥ ॥ ॥

वररूपप्रसादःकवचंवर्मयस्यसतथा तादृशोबकपक्षिरूपदैत्यःगोविंदंश्रीकृष्णंमुखेचकारकृतवान् अग्रसदित्यर्थः । सबकःउच्चैःअतिशयेनअग्निवत्प्रदहंतंदहंतंअमुंकृष्णंच छर्दववाम ईशःसकृष्णः तुंडशिरसाचुंच्वग्रेणस्वंनिहंतुमेवायांतंआगच्छमानंएवंबकंवीक्ष्य । अस्यबकस्य तुंडंचुंचुंजगृहेजग्राह ॥ ३१ ॥ करपल्लवाभ्यांप्रवालवत्कोमलकराभ्यामित्यर्थः । ऊर्ध्वाधस्थंतुंडस्यद्वयं । कुसुमानिवर्षतीतिकुसुमवर्षिणःतेतथा ॥ ३२ ॥ एवमुक्तप्रकारेणवरैःउत्तमैर्ब्रह्माद्यैर्वंदितपादपद्मःसकृष्णःगोपालकेषुविहरन्क्रीडन् भुविषष्ठंअब्दंप्राप्तःसन् अखिलपोपिब्रह्मादिविश्वपालकोपिवृंदावनस्यांतरेमध्येगच्छंतीतितथा ताश्चताःसांद्राःअविरलाःतादृशाःलताःवल्लयःतल्लक्षणंवितानंउपरितनवस्त्रविशेषोयस्मिन् तथातस्मिन् । यद्वा लताभिः वितानेविस्तीर्णेस्थलेगवांपालकोभूत् ॥ ३३ ॥ ॥ ॥ ॥

सकृष्णःज्येष्ठंबलभद्रंविहाय गोगोपगोगणयुतःगाःगोपायंतिपालयंतीतिगोगोपाः । गुपुरक्षणइतिधातुः । गवांगणःगोगणःगोगोपैःगोगणेनचयुतःसन् यमुनायाःतटेषुरेमे ज्येष्ठंविहायगमनेकारणमाह । भविष्यदिति । सकृष्णःभविष्यद्भाविगोपानांदुःखंअनुवीक्ष्यविचार्यदृष्ट्वा तेषांगोपानांबोधनायकृष्णसामर्थ्यकथनार्थं एषुगोपेषुअग्रजंबलं अधात्स्थापयामास ॥ ३४ ॥ सकृष्णःब्रह्मणोवरबलात्सर्वैरवध्यंसुपर्णाद्गरुडात्ऋतेअवार्यंविषवीर्यंयस्यसतथा तंउरगंकालियाख्यंसर्पंजलस्थंविज्ञाय तस्यसर्पस्यविषेण विदूषितंदुष्टंवारिजलंतस्यपानेनसन्नानपिमूर्छितानपिमृतानपिवा पशून्वयसिभवाःवयस्याःसमानवयस्काइत्यर्थः तेचतेजनाश्चतथातान्सर्वजनानित्यर्थः । आवीत्अपात् ॥ ३५ ॥ तस्यकृष्णस्यदृष्टिलक्षणादिव्यसुधयाअभिवृष्टाःअभिषिक्ताःसर्वेपशुगोपाश्च सहसाअकस्माज्जीवितंजीवनमवापुः । अथकृष्णःउच्चाःशाखाःयस्यसतथा तंक

ज्येष्ठं विहाय स कदाचिदचिंत्यशक्तिर्गोगोपगोगणयुतो यमुनातटेषु ॥ रेमे भविष्यदनुवीक्ष्य हि गोपदुःखं तद्बोधनाय निजमग्रजमेषु सोऽधात् ॥ ३४ ॥ तं ब्रह्मणोवरबलादुरगं त्ववध्यं सर्वैरवार्यविषवीर्यमृते सुपर्णात् ॥ विज्ञाय तद्विषविदूषितवारिपानसन्नान्पशूनपि वयस्यजनान्स आवीत् ॥ ३५ ॥ तद्दृष्टिदिव्यसुधया सह साभिवृष्टाः सर्वेपि जीवितमवापुरथोच्चशाखं ॥ कृष्णः कदंबमधिरुह्य ततोतितुंगात् आस्फोट्य गाढरशनोन्यपतद्विषोदे ॥ ३६ ॥ सा पंन्हदः पुरुषसारनिपातवेगसंक्षोभितोरगविषोच्छ्वसितांबुराशिः ॥ पर्यक्प्लुतो विषकषायविभीषणोर्मिभीमो धनुःशतमनंतबलस्य किंतत् ॥ ३७ ॥ ॥ ॥ ॥ ॥ ॥

दंबंतन्नामकवृक्षंअधिरुह्य गाढादृढारशनाकटिबंधनंयस्यसतथासन् आस्फोट्यकरतलाभ्यांभुजौअवहत्यातितुंगात्अत्युच्चात्ततः कदंबवृक्षात्विषोदेविषोपेतजलेन्हदइति शेषः । न्यपतत् । कुमातृकःकदंबस्यात्कदंबःसर्षपस्मृतः । कदंबोवृक्षभेदश्चकदंबोनिर्गुणःपुमानित्यनेकध्वनिपदमंजर्यां ॥ ३६ ॥ पुरुषसारस्यपुरुषश्रेष्ठस्यनिपातः तस्ययोवेगःतेनसंक्षोभितस्यस्वस्थानात्उच्चलितस्यउरगस्यविषेणउच्छ्वसितःऊर्ध्ववृद्धःअंबुराशिर्यस्यसतथा । विषकषायेणविषक्वाथेनविभीषणाःभयंकराःऊर्मयःतरंगाःतैर्भीमःभयजनकः । रागेक्वाथेकषायोस्त्रीनिर्यासेसौरभेरसइतियादवः । सर्पेणाधिष्ठितःसार्पःसचासौन्हदश्चयमुनान्हदःधनुःशतंपर्यक्समंतात्प्लुतःउत्प्लुतःऊर्ध्वगतइतियावत् । अनंतबलस्यश्रीकृष्णस्यतद्धनुःशतजलगमनंकिंकिमाश्चर्यमित्यर्थः । चतुर्हस्तैस्तुदंडकःधनुर्द्वादशदंडैस्तुइत्यभिधानं ॥ ३७ ॥ ॥ ॥

काल्योनागःयमुनायाःअयंयामुनःसचासौन्हदश्चतंविलोलकंहस्तस्फालनेनकलुषंकुर्वाणं तंकृष्णंनिजैःस्वैर्नागैःसहआप्य समदशद्दंश अज्ञःविवेकशून्यःयतःअतएवनिजेश्वरंस्वस्वामिनंएनंवासुदेवं भोगैःपुच्छादिदेहावयवैःबबंधच ईशःउतसमर्थोपिकृष्णःभक्तिमतःकालियस्यतंअपराधंसेहेममर्ष ॥ ३८ ॥ हलिनाहलायुधेनरामेणप्रतिबोधितोपि हरिसामर्थ्यंत्तयाशिक्षितोपीत्यर्थः । तत्रसर्पाधिष्ठितस्थलंप्रतिकृष्णःवहोःनागात्बहुसंख्याकस्यनिजाश्रयःस्वयमेवआश्रयोयस्यसतथा सचासौजनश्चतस्य स्वभक्तगोपजनस्यसुदुःखंदृष्ट्वा स्वभक्तमप्यमुंनागंकालियंममर्दमर्दितवान् । अल्पीयोभक्तजनापेक्षयाबहुभक्तानांदुःखविनाशनंयुक्तमेवेतिभावः ॥ ३९ ॥ ईड्यमानः स्तूयमानःसकृष्णःतस्यकालियस्यउन्नतेषुउच्चेषु ननर्तनर्तनमकरोत् ॥४०॥ सनागःआर्तःसन्पीडितःसन् मुखैःउरुरुधिरंबहुरक्तंवमन्सन्वांतंकुर्वन् तंभक्तरक्षकइतिप्रसिद्धं नारायणंमनसाअरणंशरणंजगाम । अमुष्यकालियस्यपत्न्यःतस्यकृष्णस्याचित्रतांडवेनआश्चर्यनृत्येन विरुग्णंभग्नंफणातपत्रंफणलक्षणछत्रंयस्यसतथा तंउरुरक्तंवमंतंमुखा

तंयामुनन्हदविलोलकमाप्य नागः काल्यो निजैः समदशत्सह वासुदेवं ॥ भोगैर्बबंध च निजेश्वरमेनमज्ञः सेहे तमीश उत भक्तिमतोपराधं ॥ ३८ ॥ उत्पातमीक्ष्य तु तदा खिलगोपसंघस्तत्राजगाम हलिना प्रतिबोधितोपि ॥ दृष्ट्वा निजाश्रयजनस्य बहोः सुदुःखं कृष्णः स्वभक्तमपि नागममुं ममर्द ॥ ३९ ॥ तस्योन्नतेषु स फणेषु ननर्त कृष्णो ब्रह्मादिभिः कुसुमवर्षिभिरीड्यमानः ॥ आर्तो मुखैरुरुवमन् रुधिरं सनागो नारायणं तमरणं मनसा जगाम ॥ ४० ॥ तच्चित्रतांडवविरुग्णफणातपत्रो रक्तं वमंतमुरुसन्नधियं नितांतं ॥ दृष्ट्वाहिराजमुपसेदुरमुष्य पत्न्यो नेमुश्च सर्वजगदादिगुरुं भुवीशं ॥ ४१ ॥ ताभिः स्तुतः स भगवानमुना च तस्मै दत्वाभयं यमसहोदरवारितोमुं ॥ उत्सृज्य निर्विषजलां यमुनां चकार संस्तूयमानचरितः सुरसिद्धसाध्यैः ॥ ४२ ॥ ॥ ॥

त्स्रवंतंनितांतंसन्नानष्टामूर्छिताधीर्बुद्धिर्यस्यसतथा तंअहिराजंसर्पराजंदृष्ट्वाउपसेदुः श्रीकृष्णसमीपंप्रापुः । अमुष्यपत्न्यः सर्वजगतःआदिगुरुंमूलगुरुंसर्वजगतःआदिः उत्पादकःसचासौगुरुश्चेतिवा । सर्वजगतःरुद्रादिसर्वजगतःआदेःस्रष्टुःब्रह्मणःगुरुमितिवा । अतएवईशंसमर्थंकृष्णंभुविनेमुः भुविनेमुरित्यनेनसाष्टांगप्रणामंचक्रुरितिज्ञातव्यं । अमुष्यपत्न्यःइत्युभयत्रसंबध्यते ॥४१॥ ताभिःनागवधूभिःस्तुतःअमुनाचकालियेनस्तुतइत्यर्थः सभगवान्कृष्णःतस्मैकालियायअभयंदत्वा तवसुपर्णाद्भयंनभवेदितिअभयंदत्वा यमस्यसहोदरायाःभगिन्याःभाषितपुंस्त्वाध्रस्वः । वारितःजलात् अमुंकालियं उत्सृज्यनिःसार्यनिर्विषंविषरहितं जलंयस्याःसातांच । कथंभूतःसुरादिभिः संस्तूयमानंचरितंकर्मयस्यसतथा ॥ ४२ ॥ ॥ ॥ ॥ ॥ ॥

भगवान्समेत्यकूलंप्राप्य उदीर्णतरःअत्युत्कृष्टःप्रमोदःसंतोषोयेषांतेतथा तैःसार्धंसहसमेत्यजलसमीपात्कूलंसंप्राप्य तत्रयमुनाकूलेतांरात्रींन्यवसत् उवास। सकृष्ण यमुनातटे उद्धतबलंअतिशयबलंव्याप्तमित्यर्थः दावाग्निंवडवाग्निंव्रजार्थेव्रजरक्षणार्थंपपौ ॥ ४३ ॥ इत्थंअनेनप्रकारेणगोकुलेगतेविद्यमाने अगणिताअपरिमिताउर्वी शक्तिर्यस्येति। अजेजन्मरहिते कृष्णेअविचिंत्यानिचिंतितुमशक्यानिदिव्यानिअलौकिकानि कर्माणिकुर्वतिसति तरुरूपतःवृक्षस्वरूपात्उग्रइत्यभिधानामयस्यसत स्मात् असुरतःदैत्यात्व्रजेभवंतितेव्रजभुवःतेषांतथाव्रजोद्भवानांअलमत्यंतंविनाशःअभवत्। नाशप्रकारमाह। तदिति। बहुलैःबहुविधैःरोगैःनिपीडितानिभूतानिप्राणि नः तस्यवृक्षस्यगंधतःपरिमलात् धातुर्वरात्जगतःअभावेविनाशेकृताएकाबुद्धिःनिश्चितबुद्धिर्येनसतथा असौतरुरूपदैत्यःकेनचित्केनापिवध्योन ॥ ४४ ॥ ४५ ॥ संकर्ष

गोपैर्बलादिभिरुदीर्णतरप्रमोदैः सार्धं समेत्य भगवानरविंदनेत्रः ॥ तां रात्रिमत्रनिवसन् यमुनातटे स दावाग्निमुद्ध तबलं च पपौ व्रजार्थे ॥ ४३ ॥ इत्थं सुरासुरगणैरविचिंत्यदिव्यकर्माणि गोकुलगते गणितोरुशक्तौ ॥ कुर्वत्यजे व्र जभुवामभवद्विनाश उग्राभिधादसुरतस्तरुरूपतोलं ॥ ४४ ॥ तद्गंधतो नृपशुमुख्यसमस्तभूतान्यापुर्मृतिं बहुलरो गनिपीडितानि ॥ धातुर्वराज्जगदभावकृतैकबुद्धिर्वध्यो न केनचिदसौ तरुरूपदैत्यः ॥ ४५ ॥ संकर्षणेपि तदुदार विषानुविष्टे कृष्णो निजस्पर्शतस्तमपेतरोगं ॥ कृत्वा बभंज विषवृक्षममुं बलेन तस्यानुगैः सह तदाकृतिभिः स मस्तैः ॥ ४६ ॥ दैत्यांश्च गोवपुष आत्तवरान्विरिंचान्मृत्यूज्झितानपि निपात्य ददाह वृक्षान् ॥ चिक्रीडय रामस हितो यमुनाजले स नीरोगमाशु कृतवान् व्रजमब्जनाभः ॥ ४७ ॥ ॥ ॥

णेपिबलभद्रेपितस्यविषवृक्षस्यउदारेणउत्कृष्टेनाविषेणअनुविष्टेआविष्टेसति कृष्णःनिजस्पर्शतःस्वालिंगनेनतंरामं अपेतरोगंगतविषजरोगंकृत्वा। तदाकृतिभिःवृक्षाकारैःसम स्तैःतस्योग्रस्यानुगैःसहचरैःसह विषवृक्षंविषवृक्षात्मकंअमुंउग्रंबभंज ॥ ४६ ॥ विरिंचादात्तःस्वीकृतःवरोयैस्तेतथा तान्मृत्यूज्झितानपिमरणरहितानापि गोवपुषःगोस्वरू पान्दैत्यान्वृक्षांश्चनिपात्य ददाहभस्मीचकार। उग्राभिधानदैत्यस्यगोरूपाःपत्न्यःवत्सरूपाःपुत्रास्तांश्चनिपात्यवृक्षैःसहददाहेतिभावः। सकृष्णःयमुनाजलेचिक्रीडय स्नात्वा व्रजंनिरोगंनिरस्तरोगंकृतवांश्चकार ॥ ४७ ॥ ॥ ॥ ॥ ॥

विभुःसकृष्णःगिरीशवरतःसर्वैर्दम्यान्नियहंकर्तुमशक्यान्दितिजप्रधानान्दैत्यश्रेष्ठान्सप्तउक्षणः संज्ञापूर्वकोविधिरनित्यइत्यछोपेन उक्षणःवृषान्हत्वा यशोदायाःभ्रातुः कुंभकसमाव्हयिनःकुंभकनाम्नःसुतांनीलांनीलानाम्नीं आशुअलभत्प्राप ॥ ४८ ॥ यानीलापूर्वजन्मनिअस्यकृष्णस्यप्रथमाभार्याजेष्ठभार्याभूयासमेवस्यामितितपःअचरत् । तपश्चरणांतरमाह । हीति । कृष्णजन्मनिकृष्णावतारे समस्तवरांगनाभ्यःरुक्मिण्याद्युत्तमस्त्रीभ्यः पूर्वआदौमेसंगमःकृष्णरमणंस्यादिति तुविशेषेणतपआचरत्समेत्यर्थः । हियस्मात्तस्मात् सकृष्णःप्रथमंसमस्तवरांगनाभ्यःपूर्वइमांनीलांआप ॥ ४९ ॥ एषःकृष्णःद्विजत्वतःउपनयनादग्रेपूर्वंनीलांउपावहत्उपयेमे । ननु तपश्चरणान्नीलाप्रथमाभार्याभवतुतस्याःप्रथमसंगोपिभवतु गोपांगनानांसंस्कारतःपूर्वस्वीकारःकुतइत्यतआह । गोपांगनाइति । पुरापूर्वजन्मनिगोपांगनाअपिगोपकन्यकाःगोप

सप्तोक्षणोतिबलवीर्ययुतानदम्यान् सर्वैर्गिरीशवरतो दितिजप्रधानान् ॥ हत्वा सुतामलभदाशु विभुर्यशोदाभ्रातुः सकुंभकसमाव्हयिनोपि नीलां ॥ ४८ ॥ या पूर्वजन्मनि तपः प्रथमैव भार्या भूयासमित्यचरदस्य हि संगमो मे ॥ स्यात्कृष्णजन्मनि समस्तवरांगनाभ्यः पूर्वं त्विति स्म तदिमां प्रथमं स आप ॥ ४९ ॥ अग्रे द्विजत्वत उपावहदेष नीलां गोपांगना अपि पुरा वरमापिरे यत् ॥ संस्कारतः प्रथममेव सुसंगमो नो भूयात्तवेति परमाप्सरसः पुरायाः ॥ ५० ॥ तत्राथ कृष्णमवदन् सबलं वयस्याः पक्वानि तालसुफलान्यनुभोजयेति ॥ इत्यर्थितः सबल आप स तालवृंदं गोपैर्दुरासदमतीव हि धेनुकेन ॥ ५१ ॥ विघ्नेशतोवरमवाप्य सुदुष्टदैत्यो दीर्घायुरुत्तमबलः कदनप्रियोभूत् ॥ नित्योद्धतः स उत राममवेक्ष्य तालवृंदात्फलानि गलयंतमथाभ्यधावत् ॥ ५२ ॥ ॥ ॥

पत्न्यश्चवरंआपिरेप्रापुः । किमिति । यद्यस्मात्संस्कारतःप्रथममेवपूर्वमेव नोस्माकंतवसुसंगमःशोभनसंबंधःभूयादितिवरंआपिरे तत्तस्माद्द्विजत्वतःअग्रेनीलांउपावहदिति पूर्वेणान्वयः । गोपांगनाःपूर्वकाइत्यतआह । परमेति । यागोपांगनापुरा परमाप्सरसःउत्तमाप्सरःस्त्रियः ॥ ५० ॥ अथेतिकथांतरारंभः तत्रगोकुलेवयस्याःसखिजना इत्यर्थः पक्वानितालसुफलानि अनुभोजयेतिबलेनसहितंकृष्णमवदन्इति अर्थितःगोपैःप्रार्थितःसकृष्णःधेनुकेननिमित्तेन गोपैरतीवदुरासदं अप्राप्यंतालानांवृंदंसमूहोयस्मिन्तत्तथातालवनमित्यर्थः आपगोपैःसहेतिवा ॥ ५१ ॥ सुदुष्टश्चासौदैत्यश्चधेनुकःविघ्नेशतःविनायकाद्वरंअवाप्य उत कदनंयुद्धमभूदितिविशेषणचतुष्टयेपिसंबंधः । अथवनप्रवेशानंतरं सधेनुकःतालानांवृंदात्समूहात् फलानिगलयंतंपातयंतंराममवेक्ष्यअभ्यधावत्अभ्यगात् । रामाभिमुखःसन्अधावदितिभावः ॥ ५२ ॥ ॥

सराम:प्रहारंपादाभ्यांप्रहर्तुंअभिकांक्षत:इच्छत:तस्यधेनुकस्यपृष्ठपादौपश्चात्तनपादौआशुप्रगृह्य तृणराजशिर:तालोर्ध्वभागंअहरत्अच्छिनत् । खरतरेआतिक्रूरेखररूपदैत्येरासभरूपदैत्येतस्मिन्धेनुकेहतेसति खरताल:श्रीतालइतितालभेदोस्ति तत्रखरतालवनस्यअंतरस्था:मध्यस्था:खर:क्रूर:स्वरोयेषांतेखरस्वरा:अतिशयेनखरस्वरा: खरस्वरतरा:सर्वेखरा:धेनुकसंबंधिनोरासभा: खरराक्षसानांरासभरूपराक्षसानांअरिंबलेनसहितंकृष्णंप्रापु: तेननिहताश्च ॥ ५३ ॥ दुर्वारंवारयितुमशक्यंपौरुषंयस्यसतथा सचासौगुणोद्धरित:गुणपूर्ण:सकृष्ण:निहत्यनिजेषुस्वकीयेभ्य:अदात् ॥ ५४ ॥ पक्षद्वयेनकृष्णरामौनायकौकृत्वा केचिद्गोपा:कृष्णपक्षस्था: श्रीदामाद्या:केचिद्गोपा:रामपक्षस्था:जाता इत्येवंपक्षद्वयेनद्वंद्वीभूय वाह्यवाहकरूपक्रीडयागोपकेषुविहरत्सुसत्सुक्रीडांकुर्वत्सुसत्सु । अथकंसेनविसृष्ट:प्रेषित:प्रलंबइतिख्यात:दैत्य:अगात् श्रीकृष्ण

तस्यप्रहारमभिकांक्षत आशु पृष्ठपादौ प्रगृह्य तृणराजशिरोहरत्स: ॥ तस्मिन् हते खरतरे खररूपदैत्ये सर्वे खराश्च खरतालवनांतरस्था: ॥ प्रापु: खरस्वरतरा: खरराक्षसारिं कृष्णं बलेन सहितं निहताश्च तेन ॥ ५३ ॥ सर्वान्निहत्य खररूपधरान् स दैत्यान् विघ्नेश्वरस्य वरतोन्यजनैरवध्यान् ॥ पक्वानि तालसुफलानि निजेषु चादाद्दुर्वारपौरुषगुणोद्धरितो रमेश: ॥ ५४ ॥ पक्षद्वयेन विहरत्स्वथ गोपकेषु दैत्य: प्रलंब इति कंसविसृष्ट आगात् ॥ कृष्णस्य पक्षिषु जयत्सु स राममेत्य पाप: पराजित उवाह तमुग्ररूप: ॥ ५५ ॥ भीतेन रोहिणिसुतेन हरि: स्तुतोसौ स्वाविष्टतामुपदिदेश बलाभिपूर्त्यै ॥ तेनैव पूरितबलोंबरचारिणं तं पापं प्रलंबमुरुमुष्टिहतं चकार ॥ ५६ ॥ तस्मिन्हते सुरगणा बलदेवनाम रामस्य चक्रुरतितृप्तियुता हरिश्च ॥ वन्हि पपौ पुनरपि प्रदहंतमुच्चैर्गोपांश्च गोगणमगण्यगुणार्णवोपात् ॥ ५७ ॥ ॥ ॥ ॥ ॥ ॥

पक्षगोभूदितिशेष: । कृष्णस्यपक्षिषुजयत्सुसत्सुस्वयंपराजित:पाप:प्रलंब: अथपराभवानंतरं तंरामंएत्यरामंउवाह पृष्ठेनावहत् । अत्रायमाशय: कृष्णपक्षिभि:सर्वैर्जितं तत्पक्षस्थै:प्रलंबभद्रसेनाद्यै:द्वित्रिभिरेवपराजितं रामपक्षिभि:श्रीदामाद्यै:सर्वै:पराजितंरामवृषभाद्यै:द्वित्रिभिरेवजितमिति अयमेवार्थोहरिवंशदशमस्कंधानुकूल्यात् ॥ ५५ ॥ स्तुतोसौहरि:कृष्ण:स्वाविष्टतांस्वशुक्लकेशावेशत्वंबलस्यशक्ते:अभिपूर्त्यैरामस्येतिशेष: । उपदिदेशआविष्कारेत्यर्थ: । तेनैवआविष्करणनिमित्तेनैवपूरितंपूर्णकृतंबलंयस्य सराम:अंबरेआकाशेचारिणंविचरंतंप्रलंबंउरुणादृढेनमुष्टिनाहतंमृतं ॥ ५६ ॥ तस्मिन्प्रलंबे । हरिश्चकृष्णोपि । बलदेवनामचक्रुरित्यर्थ: । अगण्यगुणार्णव:कृष्ण:पुनरपिकालियप्रसंगप्राप्तदावाग्निप्राशनापेक्षयापुन: ॥ ५७ ॥ ॥ ॥ ॥

वयस्याःवयंक्षुधार्दितनराःअतिशयेनपीडिताः क्षुधार्दिततरइतिपाठे क्षुधेतिपदच्छेदःइति उदारंभक्ताभीष्टदं। उदारोदातृमहतोरित्यभिधानं । कृष्णंऊचुः परिपूर्णाःसम
स्तकामायस्यतादृशोपिसकृष्णः इहवनेविप्रगणाःसत्रंबहुकर्तृकयागंचरंतिकुर्वंति तान्विप्रान्याचतअन्नयाचनंकुरुतेतिआह ॥ ५८ ॥ गोपाःतान्विप्रान्आप्य कामं
अभीष्टंअनवाप्य कृष्णंसमाययुः। अथदेवःसकृष्णःपुनस्तान्गोपानअवदत् किमितिमद्वचनात् मदागमनाख्यानरूपवचनात् पत्नीःविप्रपत्नीःसमर्थयतप्रार्थयध्वमित्य
वददितिसंबंधः। तेगोपाःतत्पत्नीनामन्नयाचनंचक्रुस्म। ताअपिस्त्रियअपिभगवंतंकृष्णंआपुः ॥ ५९ ॥ कृष्णःषड्विधान्नेन षड्विधरसवदन्नेन परिपूर्णाःकराःयासांताः
तथाताःसमेताःमिलिताःपत्यादीन्विसृज्यविहाय प्राप्ताःस्वात्मानंप्रत्यागताःआत्मार्चनेएकंकेवलंपरमंमुख्यंतात्पर्यंयासांतास्तथाताःविप्रपत्नीःविससर्जसत्रंप्रतिप्रेषयामासे

कृष्णं कदाचिदतिदूरगतं वयस्या ऊचुः क्षुदर्दिततरा वयमित्युदारं ॥ सोप्याह सत्रमिह विप्रगणाश्चरंति तान्या
चतेति परिपूर्णसमस्तकामः ॥ ५८ ॥ तान्प्राप्य काममनवाप्य पुनश्च गोपाः कृष्णं समीयुरथ तानवदत्स देवः ॥
पत्नीः समर्थयत मद्वचनादिति स्म चक्रुश्च ते तदपि ता भगवंतमापुः ॥५९॥ ताः षड्विधान्नपरिपूर्णकराः समेताः प्राप्ता
विसृज्य पतिपुत्रसमस्तबंधून् ॥ आत्मार्चनैकपरमा विससर्ज कृष्ण एका पतिप्रविधृता पदमाप विष्णोः ॥ ६० ॥
भुक्त्वाथ गोपसहितो भगवांस्तदन्नं रेमे च गोकुलमवाप्य समस्तनाथः ॥ आज्ञातिलंघनकृतेः स्वकृतापराधा
त्पश्चात्सुतप्तमनसोप्यभवंश्च विप्राः ॥ ६१ ॥ कृष्णोथ वीक्ष्य पुरुहूतमहप्रयत्नं गोपानवारयदविस्मरणाय तस्य ॥
मा मानुषोयमिति मामवगच्छतात्स इत्यव्ययोस्य विदधे महभंगमीशः ॥ ६२ ॥ ॥ ॥

त्यर्थः। तास्वितिशेषः। पत्यास्वपतिनाप्रविधृतामागच्छेतिप्रवारिताएकाविप्रपत्नीयोगेनतनुंत्यक्त्वा विष्णोःपदंस्थानंआप ॥ ६० ॥ विप्राःसत्रकारिणोविप्राःआज्ञायाःकृ
ष्णाज्ञायाःअतिलंघनंअतिक्रमणंतल्लक्षणाकृतिःकर्मयस्यसतथा तस्मात्स्वैःकृतादपराधात् पश्चात्सुतप्तमनसःअनुतप्तमनसोभवन् ॥ ६१ ॥ अथकृष्णःपुरुहूतस्यपुरंदर
स्यमहस्यपूजायाःप्रयत्नंउद्योगंवीक्ष्य तस्येंद्रस्यअविस्मरणायस्वावतारस्यविस्मृत्यभावार्थेगोपानन्यवारयत् इंद्रपूजांमाकुरुध्वंइतिन्यवारयत् । उक्तमेवार्थंविशदयति । सइ
ति। सइंद्रःमांअयंकृष्णःमानुषंमनुष्यइतिमाअवगच्छतात्नजानात्विति अव्ययःक्षयरहितः कृष्णःअस्येंद्रस्यमहभंगंपूजापहारंविदधे। अतएवेशः ॥ ६२ ॥

महभंगप्रकारमाह। गोपानिति। सकृष्णःगिरिमहःगिरिपूजाअस्माकंगिरिम.श्रित्य जीवनामस्माकमित्यर्थः उरुःश्रेष्ठःस्वधर्मःस्वोचितधर्मःइत्युक्तिसच्छलतःएवंविधवचन सद्व्याजेनतानिंद्रयागोयुक्तान्गोपान् आत्ममहेस्वपूजायांअवतार्यप्रवर्त्य अतिविस्तृततनुः स्वयंअतिविस्तीर्णदेहोभूत्वा नानाविधैःबहुप्रकारैःअन्नरसपानान्येवगुणाःअंगा नितैःसहैवबलिंबुभुजे। 'गोपांश्चतान्गिरिवरस्यविधीयतांसयागोयथावदितिहे'तिपाठे सयागःइंद्रार्थंक्रियमाणोयागः गिरिवरस्यअर्थेयथावदुक्तप्रकारेणविधीयतांइत्युक्तेति शेषः। तान्गोपान्॥६३॥ अथपूजासमाप्त्यनंतरं विस्मृतःरथांगधरस्यचक्रधरस्यकृष्णस्यअवतारोयेनसतथा इंद्रःउरूदकपूगस्यउत्कृष्टजलसमुदायस्य वृष्ट्यैवर्षणार्थंतेमे घाःउरुनागानांश्रेष्ठहस्तीनांकरप्रकाराःशुंडादंडवद्विद्यमानाधाराःजलधाराःवितेरुःविस्तारितवंतः ववृषुरितियावत् 'नागोवृक्षविशेषस्यान्नागौवारणपन्नगावि'त्यनेकध्वनिपदमं

गोपांश्च तान्गिरिमहोस्मदुरुस्वधर्म इत्युक्तिसच्छलत आत्ममहेवतार्य ॥ भूत्वातिविस्तृततनुर्बुभुजे बलिं स नानाविधान्नरसपानगुणैःसहैव ॥ ६३ ॥ इंद्रोथविस्मृतरथांगधरावतारो मेघान्समादिशदुरूदकपूगवृष्ट्यै ॥ ते प्रेरिताः सकलगोकुलनाशनाय धारावितेरुरुरुनागकरप्रकाराः ॥ ६४ ॥ ताभिर्निपीडितमुदीक्ष्य स कंजनाभः सर्वं व्रजं गिरिवरं प्रसभं दधार ॥ वामेन कंजदलकोमलपाणिनैव तत्राखिलाः प्रविविशुः पशुपाः स्वगोभिः ॥ ६५ ॥ वृष्ट्वोरु वार्यथ निरंतरसप्तरात्रं त्रातं निरीक्ष्य हरिणा व्रजमश्रमेण ॥ शक्रोनु संस्मृतसुरप्रवरावतारः पादांबुजं यदुपतेः शरणं जगाम ॥ ६६ ॥ तुष्टाव चैनमुरुवेदशिरोगताभिर्गीर्भिः सदागणितपूर्णगुणार्णवं तं ॥ गोभृद्गुरुं हरगुरोरपि गोगणेन युक्तः सहस्रगुरगाधगुमग्र्यमग्र्यात् ॥ ६७ ॥ ॥ ॥ ॥

जर्या ॥ ६० ॥ कंजनाभःकमलनाभःसकृष्णःताभिःजलधाराभिःनिपीडितंसर्वंव्रजंउदीक्ष्य प्रसभंहठंययास्यात्तथागिरिवरंगोवर्धनपर्वतश्रेष्ठंदधार। तत्रधृतपर्वतस्याधः पशुपाःगोपाःस्वगोभिःसहप्रविविशुः॥६५॥ शक्रःनिरंतरंअव्यवहितंसप्तरात्रंसप्तदिनपर्यंतं यथास्यात्तथा उत्कृष्टवारिजलंवृष्ट्वा अश्रमेणहरिणात्रातंरक्षितंव्रजंनिरीक्ष्य। अथरक्षितव्रजदर्शनानंतरं अनुस्मृतःसुरप्रवरस्यकृष्णस्यावतारोयेनसतथासन्॥६६॥ गोभृन्वज्रधरःसहस्रगुःसहस्रनेत्रःइंद्रःगोगणेनसुरभ्यादिगोसमूहेनयुक्तःसन् स दाअगणितत्वेनपूर्णैःगुणैःअर्णवइवार्णवःतंहरगुरोरपिब्रह्मणोपिगुरुं अगाधगुंअपरिमितदीप्तिं अपरैरसह्यदीप्तिमित्यर्थः अग्र्यात् उत्तमादग्र्यंउत्तमम्एनंकृष्णंउरवःश्रेष्ठावे दाश्चअनंतवेदाःतेषांशिरस्सुउपनिषत्सुगताभिर्विद्यमानाभिःगीर्भिर्वाग्भिःतुष्टावअस्तौत् 'दिक्दृष्टिदीधितिस्वर्गवज्रवाग्बाणवारिषु भूमौपशुपुगोशब्दोविद्वद्भिर्दशसुस्मृत' इ

त्यभिधानं । 'स्वर्गेशरेचवज्रेचबलीवर्देचगौःपुमान् । स्त्रियांनयनदिग्भागमातृवाग्भूजलेष्वपी'त्यनेकध्वनिपदमंजर्याम् ॥ ६७ ॥ स्तुतिंसमासेनाह त्वत्तइति अगण्या नांज्ञानानंदादिगुणानांधाम्नःआश्रयात्अगण्यमपरिमितंधामतेजोयस्येतिवा । अगण्यानिअवधिरहितानिधामानिवैकुंठादित्रीणिस्थानानियस्येतिवा । त्वत्तःत्वत्अखिलंज गत्आविरभूदुत्पन्नमित्यर्थः। त्वमेवपरिपासिस्थितिकर्तात्वमेवेत्यर्थः। अंतेसमस्तजगदत्सि । अदभक्षणइतिधातुःत्वय्यैवास्यजगतःबंधःसंसारबंधःमोक्षःसंसारमोक्षःतौभ वतः । हेपरिपूर्णशक्तेकुहचित्कुत्रापित्वत्समोनास्ति ॥ ६८ ॥ हेईशसदात्वमेवसंश्रयोयस्यसतथा तादृशोहमस्मि हियतःअतःममबाल्यंमुग्धभावंभवतैवत्वय्यैवक्षंतव्यं सोढव्यंइत्युक्त्वा अभिवंदितोजोरमेशःकृष्णःसदाभवतःतवक्षांतमेवमयाबाल्यमितिशेषः । तवशिक्षणायसन्मार्गप्रवर्तनाय पूजायाःअपहारःपरिहाररूपोयोविधिःविधानंस

त्वत्तो जगत्सकलमाविरभूदगण्यधाम्नस्त्वमेव परिपासि समस्तमंते ॥ अत्सि त्वय्यैव जगतोस्य हि बंधमोक्षौ न त्वत्समोस्ति कुहचित्परिपूर्णशक्ते ॥ ६८ ॥ क्षंतव्यमेव भवता मम बाल्यमीश त्वत्संश्रयोस्मि हि सदेत्यभिवंदितो जः ॥ क्षांतं सदैव भवतस्तव शिक्षणाय पूजापहारविधिरित्यवदद्रमेशः ॥ ६९ ॥ गोविंदमेनमभिषिच्य स गोगणे शो गोभिर्जगाम गुणपूर्वममुं प्रणम्य ॥ गोपैर्गिरांपतिरपि प्रणतोभिगम्य गोवर्धनोद्धरणसंगतसंशयैः सः ॥ ७० ॥ कृष्णं ततः प्रभृति गोपगणो व्यजानन् नारायणोयमिति गर्गवचश्च नंदात् ॥ नारायणस्य सम इत्युदितं निशम्य पूजां च चक्रुरधिकामरविंदनेत्रे ॥ ७१ ॥ ॥ ॥ ॥

त्यतइत्यवदत् ॥ ६९ ॥ गोगणेशःसुरभ्यादिगवांसमूहस्यपतिःइंद्रःगोभिःआकाशगंगाजलैःएनंगोविंदंअभिषिच्य । 'जलैश्चाकाशगंगायाऐरावतकरोद्धृतैरि'तिभागवते । गोवर्धनगिरेःउद्धरणेनसम्यक्गतःपरिहृतःसंशयःकृष्णोमनुष्योदेवोवेतिसंशयोयेषांतेतथा तैर्गोपैरपिगिरांवेदानांपतिःसकृष्णःअभिगम्यअभिमुखंप्राप्य प्रणतोभूत् ॥७०॥ ततःप्रभृतिगोवर्धनोद्धरणदिनमारभ्यगोपगणाःअयंनारायणइतिकृष्णंव्यजाननूज्ञातवंतः नारायणस्यसमइत्युदितंगर्गस्यवचनंनंदान्निशम्यचश्रुत्वाव्यजानन्नित्यर्थः । अर विंदनेत्रेकमललोचनेअधिकांसर्वोत्तमत्वेनेतिभावःपूजांचक्रुश्च ॥ ७१ ॥ ॥ ॥ ॥ ॥

गोपाः स्कंदात् षडाननात् उपात्तवरतः स्वीकृतवरतः मरणान्मृत्योः अपेतं उज्झितं बलिनं रामनिहतं प्रलंबं दृष्ट्वा अमुष्य रामस्य सुराधिकत्वे देवश्रेष्ठत्वे विनिश्चयं चक्रुः । ननु कृष्णस्य अधिकां पूजां यथा चक्रुः तथा चक्रुः किमित्यतोनेत्याह । अथेति । अस्य कृष्णस्य अथ अनंतरं असमानामित्यर्थः परमां स्वोत्तमेभ्यः परमामित्यर्थः पूजां अस्य रामस्य विदधुः चक्रुः अस्येत्युभयत्र संबध्यते ॥ ७२ ॥ भगवान् स्वस्य पतित्वहेतोः पतित्वार्थं कात्यायन्याः गौर्याः व्रतधराः कन्याः उवाह उद्वाहयामास । कन्यकानां मूलस्वरूपं परमाप्सरसः पुरा या इति पुरैवोक्तत्वादत्रनोक्तं अन्यैर्गोपैः धृताः वृताः अयुगबाणः कामः तस्य शरेण अभिनुन्नाः प्रेरिताः शशिना चंद्रेण राजितासु शोभमानासु निशासु रात्रिषु प्राप्ताः स्वसंनिधिमिति शेषः । अपराः उद्वाहितकन्याभ्योन्याः गोपीः अरमयत् रमयामास ॥ ७३ ॥ अत्र व्रजे तेन कृष्णेन तासु उद्वाहितगोपकन्यासु नारायणेति आह्वयेन नाम्ना युताः बलिनो दशलक्षपुत्राः जनिताः उत्पादिताः ते सर्वेपि गोपाः गोपकन्यासु जातत्वाद्गोपाः मातृजातिं प्राप्ता इति भावः । ते पूर्वं क इत्यत आह । दैवतेति । दैवतगणाः हरौ पित्रा

स्कंदादुपात्तवरतो मरणादपेतं दृष्ट्वा च रामनिहतं बलिनं प्रलंबं ॥ चक्रुर्विनिश्चयममुष्य सुराधिकत्वे गोपा अथास्य विदधुः परमां च पूजाम् ॥ ७२ ॥ कात्यायनीव्रतधराः स्वपतित्वहेतोः कन्या उवाह भगवानपराश्च गोपीः ॥ अन्यैर्धृता अयुगबाणशराभिनुन्नाः प्राप्ता निशासु रमयच्छशिराजितासु ॥ ७३ ॥ तास्तत्र तेन जनिता दशलक्षपुत्रा नारायणाह्वययुता बलिनश्च गोपाः ॥ सर्वेपि दैवतगणा भगवत्सुतत्वमाप्तुं धरातलगता हरिभक्तिहेतोः ॥ ७४ ॥ तास्तत्र पूर्ववरदानकृते रमेशो रामा द्विजत्वगमनादपि पूर्वमेव ॥ सर्वा निशास्वरमयत्समभीष्टसिद्धिचिंतामणिर्हि भगवानशुभैरलिप्तः ॥ ७५ ॥ ॥ ॥ ॥

त्मके हरौ भक्तिहेतोः प्रीतिविशेषार्थं भगवत्सुतत्वं आप्तुं धरातलं भूतलं गताः प्राप्ताः भुवि जाता इत्यर्थः ॥ ७४ ॥ ननु कृष्णः संस्कारात्पूर्वं कन्या उवाहेत्याशंकायां तत्र हेतुमाह । तां इति । भगवान् रमेशः कृष्णः तत्र वृंदावने पूर्ववरदानकृते संस्कारात्पूर्वं [illegible] दिव्यवरदानाद्धेतोः रामाद्बलभद्रात् पूर्वं रामस्य स्त्रीस्वीकारादथवा भाविनो रामसंभोगात्पूर्वं द्विजत्वगमनादपि पूर्वं स्वोपनयनादपि पूर्वं ताः सर्वाः उद्वाहितकन्याः गोपकीश्च निशासु अरमयत् रमयामास । नन्वेकः कथं बह्वीः रमयामासेत्यत आह । समभीष्टेति । समभीष्टस्य सत्कामस्य सिद्धौ प्राप्तौ चिंतामणिरिव चिंतामणिः । ननु ज्येष्ठस्य विवाहात्पूर्वं स्त्रीस्वीकारेण गोपस्त्रीगमनेन च कृष्णस्य दोषः स्यादित्यत आह । अशुभैरिति । अशुभैः विकर्मजदोषैः अलिप्तः अस्पृष्ट इत्यर्थः रामात् द्विजत्वगमनादिनि पाठे रमेशः पूर्ववरदानकृते द्विजत्वगमनादपि पूर्वमेव सर्वास्ताः रामाः युवतीः निशास्वरमयदित्यन्वयः । रामा स्त्री जामदग्न्यश्च रामो रामौ सितासितौ इत्यनेकध्वनिपदमंजर्या ॥ ७५ ॥ ॥ ॥ ॥ ॥

गोपांगना:संपूर्णस्यषोडशकलाभिःपूर्णस्यचंद्रस्यकरैःकिरणैः राजिताःदीप्यमानाचसामनीचमामनोहरारजनीरात्रीतस्यांकुमुदानांकुमुदपुष्पाणांसुगंधः समीचीनपरिमलोयस्यसतथा । तादृशःवातःवायुःयस्मिन्नतथानास्मिन्वृंदावनेमुकुंदमुखात्कृष्णमुखान्निःसृतःउद्गतश्वासौगीतसारःगायनश्रेष्ठः तंश्रुत्वामुमुहुःमोहंप्रापुः । उतअत्रकृष्णस्यक्रीडास्थानेससार कृष्णाभिनिवेशः ॥ ७६ ॥ शंखचूडःयक्षःतास्ताःगोपीःकालयन्द्रावयन्ससार । कलद्रावणइतिधातुः । कथंभूतःरुद्रस्यप्रसादेनकृतारक्षारक्षणंयस्यसतथा । अस्यरुद्रस्यसख्युःकुबेरस्यभृत्यःबलमदगर्वितःबली स्वरतरःअतिक्रूरःभगवतःकृष्णस्यतलताडनेनतलघातनेनकृष्णःअस्यशंखचूडस्यमणिं शिरोगतमणिंजहारअपाहरत् ॥ ७७ ॥ उरुगायस्यउत्तमश्लोकस्यकृष्णस्यविलोमचेष्टःविपरीतकर्मावृषभाकृतिः गोवृषभस्वरूपःसदैवकंसंअनुगतःअनुकूलेनवर्तमानः ।

संपूर्णचंद्रकरराजितसद्रजन्यां वृंदावने कुमुदकुंदसुगंधवाते ॥ श्रुत्वा मुकुंदमुखनिःसृतगीतसारं गोपांगना मुमुहुरत्र ससार यक्षः ॥ ७६ ॥ रुद्रप्रसादकृतरक्ष उतास्य सख्युः भृत्यो बली स्वरतरोपि च शंखचूडः ॥ ताः कालयन् भगवतस्तलताडनेन मृत्युं जगाम मणिमस्य जहार कृष्णः ॥ ७७ ॥ नाम्नाप्यरिष्ट उरुगायविलोमचेष्टो गोष्ठं जगाम वृषभाकृतिरप्यवध्यः ॥ शंभोर्वरादनुगतश्च सदैव कंसं गा भीषयंतममुमाह्वयदाशु कृष्णः ॥ ७८ ॥ सोप्याससाद हरिमुग्रविषाणकोटिमग्रे निधाय जगृहेस्य विषाणमीशः ॥ भूमौ निपात्य च वृषासुरमुग्रवीर्यं यज्ञे यथा पशुममारयदग्र्यशक्तिः ॥ ७९ ॥ केशी तु कंसविहितस्तुरगस्वरूपो गिर्यात्मजावरमवाप्य सदा विमृत्युः ॥ पापः स केशवमवाप मुखेस्य बाहुं प्रावेशयत्स भगवान्ववृधेस्य देहे ॥ ८० ॥ ॥ ॥ ॥

कंसस्यचित्तानुवर्तीत्यर्थः । नाम्नापिअरिष्टःगोष्ठंजगाम कृष्णःगाःभीषयंतंभयप्रापकंअमुंअरिष्टंआह्वयत् ॥ ७८ ॥ सोप्यरिष्टःउग्रयोर्विषाणयोःशृंगयोःकोटिंअग्रंअग्रेपुरतःनिधायकृत्वा हरिंआससादप्राप । विषाणंदंतशृंगयोरित्यभिधानं । कोटिरग्रेप्रकारेचेतिच ईशःकृष्णःअस्यवृषभाकृत्यसुरस्य विषाणंशृंगंजगृहे । यद्यस्मादग्रशक्तिःउत्तमबलःअतःयज्ञेयथापशुंघ्नंतितथा । अमारयत्जघान ॥७९ ॥ गिर्यात्मजापार्वती । कंसेनाविहितःप्रेषितःतुरगस्यअश्वस्यस्वरूपःकेशीचकेशीनामायःपापःसकेशवंअवाप । सःअस्यमुखेबाहुंप्रावेशयत् । सभगवान्अस्यकेशिनोदेहेववृधेवृद्धिंप्राप । बाहुनाभोगिनंकृत्वामुखेत्वस्यजनार्दनः । प्रवेशयामासतदाकेशिनोदुष्टवाजिनः । तथाकृष्णस्यववृधेबाहुरितिविष्णुपुराणे ॥ ८० ॥ ॥ ॥ ॥

तस्यकृष्णस्यबाहोःखादनायभक्षणार्थंकृतप्रयासःकृतप्रयत्नःसकेशीआस्यंचदंताश्चदशनच्छदौदंतानाच्छादकौओष्ठौचशीर्णाःविदीर्णाःआस्यदंतदशनच्छदाःयस्यसतथा । सचासौरुद्धवायुश्चतथा गलेहस्तवृद्ध्यानिरुद्धश्वासःदीर्णःविदारितदेहइत्यर्थः । तदुक्तंहरिवंशे । द्विपादपुच्छपृष्ठार्धश्रवणैकाक्षिनासिके । केशिनस्तेद्विधाभूतेद्वेत्वर्धेरेजतुः क्षिताविति विष्णुपुराणेच । निपपातद्विधाभूतइति । तथासन्पपातमृतश्च दिनकृत्सूर्यः ॥ ८१ ॥ मयःमयनामादैत्यःतस्यातस्यसूनुःअजस्यब्रह्मणःप्रसादात् वरप्रसादात् लब्धंप्राप्तंअमितायुःदीर्घायुःयेनसतथा व्योमश्चव्योमइतिनामप्रसिद्धोयोऽसुरःसःअखिलान्गोपान् बिलगुहायांविदधेन्यधात् । सुरपतिरित्यनेनसुरावताराणांगोपानां तदीयत्वमुक्तं नतुकेवलंसुरपतिःकिंतुश्रीपतिश्चेत्यर्थः एतादृशःकृष्णःतंव्योमं पशुवद्विशस्यहत्वा । शसुहिंसायामितिधातुः । बिलमुखात् अखिलान्गोपान्निःसारितान्नि

तत्खादनाय कुमतिः स कृतप्रयासः शीर्णास्यदंतदशनच्छदरुद्धवायुः ॥ दीर्णः पपात च मृतो हरिरप्यशेषैर्ब्रह्मेश शक्रदिनकृत्प्रमुखैःस्तुतोभूत् ॥८१॥ व्योमश्च नाम मयसूनुरजप्रसादाल्लब्धाप्तुतायुरखिलान्विदधे बिले सः ॥ तं श्रीपतिः सुरपतिः पशुवद्विशस्य निःसारितान्बिलमुखादखिलांश्चकार ॥ ८२ ॥ कुर्वत्यनन्यविषयाणि दुरंतशक्तौ कर्माणि गोकुलगते खिललोकनाथे ॥ कंसाय सर्वमवदन्मुनिरकार्यहेतोर्ब्रह्मांकजो मुनिरकारि यदीशपित्रा ॥ ८३ ॥ श्रुत्वाऽतिकोपरभसोच्चलितः स कंसो बध्वा सभार्यमथ शूरजमुग्रकर्मा ॥ अक्रूरमाश्वादिशदानयनाय विष्णो रामान्वितस्य सहगोपगणै रथेन ॥ ८४ ॥ संसेवनाय स हरेरभवत्पुरैव नाम्ना किशोर इति यः सुरगायकोभूत् ॥ स्वायंभुवस्य च मनोः परमांशयुक्त आवेशयुक्तमलजस्य बभूव विद्वान् ॥ ८५ ॥ ॥ ॥ ॥

ष्काशितांश्चकार ॥ ८२ ॥ गोकुलेगतेविद्यमानेदुरंतशक्तौ अतएवअनन्यविषयाणिअन्यैःकर्तुमशक्यानीत्यर्थः कर्माणिकुर्वतिसति ब्रह्मणःअंकजःउरुजःमुनिःनारदमुनिः ईशस्यकृष्णस्यपित्रावसुदेवेनयद्गोकुलेकृष्णंनिधाय दुर्गानयनादियत्कर्मअकारिकृतंतत्सर्वंअवदत् ॥ ८३ ॥ अतिकोपरयरभसःवेगःतेनोच्चलितःचलत्तनुरित्यर्थः । अथरथेनविष्णोःआनयनायआदिशत्आज्ञापयामास ॥ ८४ ॥ अक्रूरस्यमूलरूपमाह । संसेवनायेति । पुरानाम्नाकिशोरइतियोभूत् सकिशोरःहरेःसंसेवनायअभवद्यतः । मनुःब्रह्मणोअंशावेशाभ्यांयुक्तःअतएवविद्वान्ज्ञानीबभूव ॥ ८५ ॥ ॥ ॥ ॥ ॥

विहानित्यस्यैवविवरणं उत्तमेति । उत्तमस्यहरेः पूज्यंपूजाविषयकंकर्मयस्येतिविग्रहः उत्तमोहरिःतद्विषयत्वात्उत्तमंअतएवपूज्यं । सद्भिर्मान्यंकर्मयस्येतिवा । उत्तमैर्ब्रह्माद्यैःपूज्योहरिःतत्प्रीतिकरंकर्मयस्येतिवा । सपुरुषःवृष्णिपुयादवविशेषेपुअक्रूरइतिनामाभवत् । अथनहिसएवाक्रूरःभोजपतेःकंसस्यमंत्रीआस । आदिष्टःकंसेनाज्ञापितः एवसएवाक्रूरःजगदीश्वरस्यकृष्णस्यदृष्टिहेतोःदर्शननिमित्तात् आनंदेनपूर्णसुशोभनंमनोयस्यसतथा । तादृशःसन् कृतःअर्थःप्रयोजनंयेनसतथा । कृतकृत्यइतियावत् अभवत् ॥८६॥ सोक्रूरःसचासौरथवरश्चतथातंकृष्णार्थंकंसदत्तरथंआरुह्य अब्जोद्भवेनब्रह्मणाप्रणतंभगवत्पदाब्जंअंतरंअवकाशंअंतरेणविनानिरंतरमित्यर्थः पथिसंचिंतयन् गोष्ठंप्रतिजगाम । आरात्गोष्ठसमीपेपरस्यकृष्णस्यपदापादेनअंकिताचिह्निताचसाभूश्चतांभूमिंआरात् दूरेणदृष्ट्वामुमुदेतुतोष । आराद्दूरसमीपयोरित्यमरः । आरादित्युभयत्रसंबध्यते ॥ ८७ ॥ सोक्रूरःअत्रभुविजगदीशितुःकृष्णस्यअंगस्यपादांगस्यसंगात्संबंधात् लब्धोत्र्ययेनप्राप्तोत्तमत्वेननिखिलाघानिसर्वपापानिविदारयं

सोक्रूर इत्यभवदुत्तमपूज्यकर्मा वृष्णिष्वथास स हि भोजपतेश्च मंत्री ॥ आदिष्ट एव जगदीश्वरदृष्टिहेतोरानंदपूर्णसुमना अभवत्कृतार्थः ॥ ८६ ॥ आरुह्य तद्रथवरं भगवत्पदाब्जमब्जोद्भवप्रणतमंतरमंतरेण ॥ संचिंतयन्पथि जगाम स गोष्ठमाराद्दृष्ट्वा पदांकितभुवं मुमुदे परस्य ॥ ८७ ॥ सोचेष्टतात्र जगदीशितुरंगसंगाल्लब्धोच्चयेन निखिलाघविदारणेषु ॥ पांसुष्वजेशपुरुहूतमुखोच्चविद्युद्भ्राजत्किरीटमणिलोचनगोचरेषु ॥ ८८ ॥ सोपश्यताथ जगदेकगुरुं समेतमग्रोद्भवेन भुवि गा अपि दोहयंतं ॥ आनंदसांद्रतनुमक्षयमेनमीक्ष्य हृष्टः पपात पदयोः पुरुषोत्तमस्य ॥ ८९ ॥ उत्थाप्य तं यदुपतिः सबलो गृहं स्वं नीत्वोपचारमखिलं प्रविधाय तास्मिन् ॥ नित्योदिताक्षयविदप्यखिलं स तस्माच्छुश्राव लोकचरितानुविडंबनेन ॥ ९० ॥ ॥ ॥ ॥

तिनाशयंतीतितथा । तेषुअजोब्रह्माईशःशिवःपुरुहूतःपुरंदरःएतेमुखानिमुख्यायेषांतेतथा तेचतेउच्चाःश्रेष्ठाःकामाद्याश्चतेषांविद्युदिवभ्राजंतिचतानिकिरीटानिचतेषुविद्यमानानां मणिलक्षणलोचनानांगोचरेषुकिरीटस्थमणीनांसछन्नेष्विनिभावः । पांसुपुधूलिषुअचेष्टत व्यलुंठत । अवेष्टितेतिवापाठः ॥ ८८ ॥ अथसोक्रूरःअग्रोद्भवेन अग्रजेनसमेतंजगतःएकगुरुंमुख्यगुरुंभुव्यपिस्वयमपिगाःदुहंतमित्यर्थः । दोहयंतंचगोपैरितिशेषः । अपश्यत् आनंदेनसांद्रानिबिडातनुर्यस्यसतथा तंअक्षयंनाशरहितंएनंकृष्णंवीक्ष्यहृष्टस्तुष्टःसन् ॥ ८९ ॥ स्वगृहंनीत्वाप्रापयित्वाअखिलंउपचारंषोडशोपचारान् तस्मिन्नक्रूरेविधाय नित्याउदिताप्रकटीभूताअक्षयाह्रासरहिताचित्ज्ञानंयस्यसतथा । तादृशोपिसकृष्णःलोकचरितस्यअनुविडंबनेनअनुकरणेन तस्मादक्रूरादखिलंआगमनादिकारणंशुश्राव ॥ १० ॥ ॥

रामश्चश्वफल्कस्यतनयोक्रूरःताभ्यांयुतःअव्ययात्माअविनाशिस्वरूपःकृष्णःतेनकंसेनप्रेषितेनयानेनरथेनयमुनातटंप्रतिजगाम ॥ ११ ॥ श्वाफल्किःअक्रूरःतौरामकृष्णौ संस्थाप्यअवततार । रथादितिशेषः । सोक्रूरःयमस्वसारंयमुनांप्राप्य तत्रयमुनायांविधिनैवस्नात्वा कृतःअघमर्षःअघमर्षविधिःयेनसतथासन् । शेषासनंशेषोपर्युपविष्टंपरमपुरुषंश्रीकृष्णं अत्रजलेऐक्षतददर्श ॥ १२ ॥ सिद्धमंत्रःसिद्धाघमर्षणमंत्रःदानेश्वरःअक्रूरःनित्यंशेषंअभिपश्यति तदातस्मिन्दिनेहरिंचशेषस्थहरिंचेत्यर्थः ददृशे । उभौददर्शइतिभावः । सोक्रूरःअत्रयमुनायांअग्रेस्वपुरतःबालतनुंकृष्णंईक्ष्य यानेनास्तिकिमितिसंचिंत्य यानमुखःरथाभिमुखोबभूव ॥ १३ ॥ तत्रापियानेपिशेषस्यउरुभो

श्रुत्वा स कंसहृदि संस्थितमब्जनाभः प्रातस्तु गोपमहितो रथमारुरोह ॥ रामः श्वफल्कतनयाभियुतो जगाम याने न तेन यमुनातटमव्ययात्मा ॥ ११ ॥ संस्थाप्य तौ रथवरे जगताभिवंद्यौ श्वाफल्किराश्ववततार यमस्वसारं ॥ स्नात्वा स तत्र विधिनैव कृताघमर्षः शेषासनं परमपूरुषमत्र चैक्षत् ॥ १२ ॥ नित्यं हि शेषमभिपश्यति सिद्धमंत्रो दानेश्वरः स तु तदा ददृशे हरिं च ॥ अग्रे हि बालतनुमत्र समीक्ष्य कृष्णः किन्नास्ति यान इति यानमुखो बभूव ॥१३॥ तत्रापि कृष्णमभिवीक्ष्य पुनर्निमज्य शेषोरुभोगशयनं परमं ददर्श ॥ ब्रह्मेशशक्रमुखदेवमुनींद्रवृंदसंवंदितांघ्रियुगमिंदिरया समेतं ॥१४॥ स्तुत्वा वरस्तुतिभिरब्जभवाब्जनाभं सोंतर्हिते भगवति स्वकमारुरोह ॥ यानं च तेन सहितो भगवान् जगाम सायं पुरीं सहबलो मधुरामनंतः ॥ १५ ॥ अग्रेथ दानपतिमक्षयपौरुषोसावीशो विसृज्य सबलः सहितो वयस्यैः ॥ द्रष्टुं पुरीमभिजगाम नरेंद्रमार्गे पौरैः कुतूहलयुतैरभिपूज्यमानः ॥ १६ ॥ ॥ ॥

गः उत्तमदेहःशयनंशय्यायस्यसतथातं ब्रह्मादिवृंदेनसंवंदितंअंघ्रियुगंपादयुग्मंयस्यसमतया तंइंदिरयालक्ष्म्यासमेतंपरमंश्रेष्ठंकृष्णं ददर्शपूर्वतोविशेषंददर्शेतिभावः ॥१४॥ सोक्रूरःअंतर्हितेअदृश्येसतिस्वकंयानंआरुरोह । बलेनसहितःसबलःकृष्णःतेनाक्रूरेणसःयंसायंकालेमधुरांपुरींजगाम ॥१५॥ अथपुरप्राप्त्यनंतरं अक्षयंअविनाशिपौरुषंसामर्थ्यंयस्यअतएवईशोसौकृष्णःदानपतिंअक्रूरंअग्रेपुरतोविसृज्यसंप्रेष्येत्यर्थः । पुरींद्रष्टुंअभिजगाम कथंभूतःनरेंद्रमार्गेराजमार्गेकुतूहलेनकौतुकेनयुतैःपौरैःपुरवासिभिःअभिपूज्यमानः ॥ १६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

कृष्णःकंसस्यदयितंप्रियंकुंजरगतंगजोपरिस्थंरजकंआसाद्यप्राप्य वस्त्राणिययाचे तेनरजकेणदुरुक्तिभिःपरुषवाग्भिःविद्धःनिंदितइत्यर्थः । तथासन्कराग्रेणहस्ततलेनमृ दितंमर्दितंपापंरजकंयमायव्यनयत्प्रापयामास ॥ ९७ ॥ आत्मसमितानिस्वोचितानि प्रगृह्यस्वीकृत्य बलस्यचतत्सम्मितानीत्यर्थः। अदात् सखाचासौगोपजनश्चेति विग्रहः । सखिभूतगोपसमूहस्येत्यर्थः । अपराणिदत्वा शिष्टानिउर्वरितानिआस्तीर्यपथिविस्तृत्य तत्रविस्तृतवस्त्रेषु पदंपादविन्यासंप्रणिधायकृत्वाअगात् ॥ ९८ ॥ ग्रा ह्येणस्वीकर्तुंयोग्यमंडनद्रव्येणअपहेयेनपरित्यागयोग्येन नखलोमादिनारहितं एकंचिदात्मकंमुख्यज्ञानात्मकं सांद्रस्वानंदेननिबिडस्वरूपानंदेनपूर्णंवपुर्यस्यसतथा । अ यशोषहीनोपिअयोवृद्धिःशोषोन्हासःताभ्यांरहितोपि नखलोमाद्यवयवानांवृद्धिन्हासाभ्यांरहितइतिभावः । अप्रमेयः ज्ञातुंअशक्यःकृष्णःलोकान्विडंब्यअनुकृत्य नरवत्

आसाद्य कुंजरगतं रजकं ययाचे वस्त्राणि कंसदयितं गिरिजावरेण ॥ मृत्यूज्झितं सपदि तेन दुरुक्तिविद्धः पापं क राग्रमृदितं व्यनयद्यमाय ॥ ९७ ॥ हत्वा तमक्षतबलो भगवान्प्रगृह्य वस्त्राणि चात्मसमितानि बलस्य चादात् ॥ दत्वा पराणि सखिगोपजनस्य शिष्टान्यास्तीर्य तत्र च परं प्रणिधाय चागात् ॥ ९८ ॥ ग्राह्यापहेयरहितैकचिदा त्मसांद्रस्वानंदपूर्णवपुरप्ययशोषहीनः ॥ लोकान्विडंब्य नरवत्समलक्तकाद्यैर्वस्त्रा विभूषित इवाभवदप्रमेयः ॥ ९९ ॥ मालामवाप्य च सुदामत आत्मतंत्रस्तावक्षयोनुजगृहेनिजपार्षदौ हि ॥ पूर्वं विकुंठसदनाद्धरिसेवनाय प्राप्तौ भुवं मृजनपुष्पकरौ पुरापि ॥ १०० ॥ सर्वेष्टपुष्टिमिह तत्र सरूपतां च कृष्णस्तयोर्वरमदादथ राजमार्गे ॥ गच्छन् द दर्श वनितां नरदेवयोग्यमादाय गंधमधिकं कुटिलां व्रजंतीं ॥ १०१ ॥ ॥ ॥

समीचीनंअलक्तकंलाक्षाविकाराःतदादिधातुभिःवस्त्रानापितेनविभूषितइवअलंकृतइवाभवत् ॥ ९९ ॥ आत्मतंत्रोपिस्वतंत्रोपिकृष्णःसुदामतःसुदामनाम्नोमालाकारात् मालामवाप्य पूर्वंपूर्वजन्मनितौवस्तृपुष्पकरौहरेःपार्षदौविकुंठस्यनारायणस्यसदनाद्वैकुंठस्थानान्हरिसेवनायकृष्णस्यसेवार्थंभुवंप्राप्तौ हियतःअतःअनुजगृहेअनुग्रहंचका र पुराहिपुरापिमृजनपुष्पकरौनापितमालाकारौपार्षदावित्यर्थः ॥ १०० ॥ कृष्णःतयोःपार्षदयोःइहभुविसर्वेषांइष्टानांअभीष्टानांपुष्टिंपूर्तिं तत्रवैकुंठेसरूपतांसारूप्यवरं अदात् । अथराजमार्गेगच्छन्सन् नरदेवस्यराज्ञःयोग्यंगंधंआदायगृहीत्वा व्रजंतींराजगृहंप्रतिगच्छंतींअधिकंयथास्यात्तथाकुटिलांवक्रांवनितांनारींददर्श ॥ १०१ ॥

तेनकृष्णेनअर्थितात्रिवक्रासपदिशीघ्रंअविचार्येत्यर्थः । गंधंअदात्तेनगंधेनलिलिंपे लेपनमकरोत् तांचऋजुत्वंवक्राभावंअनयत् तयासैरंध्रिकया अर्थितःतवसंगोभ वत्वित्यलंप्रार्थितःसकृष्णःकालतःकालांतरेआयामीतिप्रहसन्नमुंचत्तांमुमोच ॥ १०२ ॥ पूर्णेंदूनांषोडशकलापूर्णचंद्राणांवृंदानिवृंदइतिसंख्याविशेषः । तदुक्तंवायवीये । अर्बुदंन्यर्बुदंचैववृंदंचैवततःपरमिति । तेषांनिवहाःसमूहाःतेभ्योअधिकाचसाकांतिश्चतयाकांतःमनोहरः । वृंदानिसमूहास्तेषांनिवहाइतिकेचित् । अमितसूर्याइतिसूर्यामि ताःतेभ्यःउर्वीउत्कृष्टाअधिकेत्यर्थः । अतएवपरमाश्रेष्ठाद्युतिर्यस्यसतथा । कडाराःकर्मधारयइत्यनेनविशेषणस्यपरनिपातः । सुखमेवसौख्यंतदेवदेहोयस्यसतथा । पूर्णेंदुवृं दनिवहाधिककांतिकांतश्चासौसूर्यामितोरुपरमद्युतिश्चासौसौख्यदेहश्चतथोक्तः । पीतंअंबरंयस्यसतथा कनकवत्सुवर्णवत् भासुराणिमनोहराणिगंधमाल्यानिगंधाःचंदना

तेनार्थिता सपदि गंधमदात्रिवक्रा तेनाग्रजेन सहितो भगवांल्लिलिंपे ॥ तां चाऽऋजुत्वमनयत्स तयार्थितोऽलमायामि कालत इति प्रहसन्नमुंचत् ॥ १०२ ॥ पूर्णेंदुवृंदनिवहाधिककांतिकांतसूर्यामितोरुपरमद्युतिसौख्यदेहः ॥ पीतांबरः कनकभासुरगंधमाल्यः शृंगारवारिधिरगण्यगुणार्णवोगात् ॥ १०३ ॥ प्राप्याथ चायुधगृहं धनुरीशदत्तं कृष्णः प्रसह्य जगृहे सकलैरभेद्यं ॥ कांसं स नित्यपरिपूर्णसमस्तशक्तिरारोप्य चैतदनुकृष्य बभंज मध्ये ॥ १०४ ॥ तस्मिन्सुरासुरगणैरखिलैरभेद्ये भग्ने बभूव जगदंडविभेदभीमः ॥ शब्दः स येन निपपात भुवि प्रभग्नसारोऽसुरो धृतियुतोपि तदैव कंसः ॥ १०५ ॥ ॥ ॥ ॥ ॥

दिद्रव्याणिमाल्यानिमालायस्यसतथा । माल्यंमालाप्रसूनयोरित्यभिधानं । शृंगारेणवारिधिरिवअगण्यवारिधिःसमुद्रःअगात् ॥ १०३ ॥ अथनित्यंपरिपूर्णासमस्तासर्वाविषयाश क्तिर्यस्यसतथा । कृष्णःकांसंकंसस्यविद्यमानंधनुःप्रसह्यबलात्कारेणजगृहे आददे सकृष्णःतद्धनुःआरोप्यज्यासहितंकृत्वा अनुकृष्यमध्येबभंज ॥ १०४ ॥ तस्मि न्धनुषिभग्नेसति जगद्भिःचतुर्दशलोकैःसहितंअंडंजगदंडंतस्यविभेदवत्आस्फोटवत्आस्फोटजन्यशब्दवदित्यर्थः । भीमःभयजनकशब्दःबभूव । येनधनुःप्रभंगशब्देन धृतियुतोपिधैर्ययुक्तोपिअसुरःकंसःप्रभग्नःसारोबलंयस्यसतथासन् तदैवतस्मिन्नेवक्षणेभुविनिपपात । सिंहासनादितिशेषः ॥ १०५ ॥ ॥ ॥

भगवानादिष्टंकंसेनाज्ञापितं उरुबलमपिउत्कृष्टसैन्यमपितेनधनुःशकलेननिहत्यपुनःपरावृत्येत्यर्थः । नंदादिगोपानांसमितिंसमूहंप्रतिययौ । सबलइत्यनेनबलोप्येकध नुःशकलेनबलंजघानेतिद्रष्टव्यं । क्रुद्धौधन्वनआदायशकलेतांश्चजघ्नतुरितिभागवते । हरिःअत्रनंदादिस्थितोद्यानेरात्रौ पयसाक्षीरेणअन्वितंशुभान्नंभुक्त्वा कामंस्वेच्छा यथास्यात्तथानिर्भयेनेत्यर्थः । उवास ॥ १०६ ॥ कंसोप्यतीवभयेनकंपितंहस्तसरोजंहृदयकमलंयस्यसतथासन् प्रातःकालेयुवतीभिःसमेतैःनानाचतेअनुमंचकाःउपमंच काः तेषुगतैर्विद्यमानैःपौरैःपुरवासिभिःजानपदैःदेशस्थैःसहनरेंद्राणांराज्ञांगणमध्यगतःसन् अधिकोच्चंअत्युच्चंमंचंविवेश राजमंचानांमध्यस्थंमंचंविवेशेतिभावः॥ १०७॥ कंसःउरुरंगस्यवररंगस्थलस्यमुखेद्वारि करिसादिनाहस्तिपेनयुक्तं कुवलयापीडंतदाख्यनागंवारणंसंस्थाप्य चाणूरश्चमुष्टिकश्चतावेवमुखेमुख्यौयेषांतेतथातान् हरिसंयमनंकृ

आदिष्टमप्युरुबलं भगवान्स तेन सर्वं निहत्य सबलः प्रययौ पुनश्च ॥ नंदादिगोपसहितं हरिरत्र रात्रौ भुक्त्वा प योन्वितशुभान्नमुवास कामं ॥ १०६ ॥ कंसोप्यतीव भयकंपितहस्तसरोजः प्रातर्नरेंद्रगणमध्यगतोधिकोच्चं ॥ मंचं विवे श सहजानपदैश्च पौरैर्नानानुमंचकगतैर्युवतीसमेतैः ॥ १०७ ॥ संस्थाप्य नागमुरुरंगमुखे कुवलयापीडं गिरींद्रसदृशं करिसादियुक्तं ॥ चाणूरमुष्टिकमुखानपि मल्लवीरान् रंगे निधाय हरिसंयमनं किलैच्छत् ॥ १०८ ॥ अक्षौहिणीगणि तमस्य बलं च विंशदासीदसह्यमुरुवीर्यमनन्यवध्यं ॥ शंभोर्वरादपि च तस्य सुनीथनामा यः पूर्वमास वृक इत्यसुरोनु जोभूत् ॥ १०९ ॥ सप्तानुजा अपि हि तस्य पुरातना ये सर्वेपि कंसपृतनासहिता स्म रंगे ॥ तस्थुः सराममभियां तमुदीक्ष्य कृष्णमात्तायुधा युधि विजेतुमजं सुपापाः ॥ ११० ॥ कृष्णोपि सूर्य उदिते सबलो वयस्यैः सार्धं जगाम वररंगमुखं सुरेशैः ॥ संस्तूयमान उरुविक्रम आसुराणां निर्मूलनाय सकलाचरितोरुशक्तिः ॥ १११ ॥ ॥

ष्णनिग्रहंऐच्छत् । किलआश्चर्यंस्वाशक्यकार्यमैच्छदितिभावः ॥ १०८ ॥ तस्यकंसस्यअसह्यंसोढुमशक्यंबलंसैन्यंअक्षौहिणीभिर्गणितंविंशत्विंशदक्षौहिणिगणितमि त्यर्थः । आसीत् तस्यकंसस्यसुनीथनामायःअनुजःअभूत् सपूर्ववृकइतिवृकनामाअसुरःआस ॥ १०९ ॥ तस्यकंसस्यपुरातनाःपूर्वजन्मनिविद्यमानाःयेनुजाःतेसप्तअ पिइहजन्मन्यपिअनुजाहि सर्वेप्यनुजाःसरामंअभियांतंकृष्णंउदीक्ष्य अजंकृष्णंयुधिविजेतुं आत्तानि गृहीतानिआयुधानियैस्तेतथासंतः कंसस्यपृतनयासेनयासहिताःरं गेतस्थुः । अतएवसुपापाः ॥ ११० ॥ उरुविक्रमःउत्कृष्टपराक्रमःसकलानांसृष्ट्यादिकर्मणांआचरितेआचरणविषयेउरुशक्तिर्यस्यसतथा कृष्णःअसुराणांनिर्मूलनाय विनाशायेत्यर्थः । जगाम ॥ १११ ॥ ॥ ॥ ॥ ॥ ॥ ॥

चाणूरइतिनाम्ना अभिहितः उक्तः शंभोः शिवस्यप्रसादतः वरप्रसादाज्जगतांसकाशादवध्योमल्लः रंगंप्रविष्टंकृष्णंअभिवीक्ष्य जगन्निवासंकृष्णंहेमाधवेतिअभिभाष्य भोकृष्णेति संबोधनेनअभिमुखीकृत्वा इदंवक्ष्यमाणंशृण्वितिकंसप्रियार्थंजगादेत्यन्वयः ॥ ११७ ॥ शृण्वित्युक्तंदर्शयति । राजेति । विप्राःराजैवदैवतंएवकारस्तुअन्ययोगव्यवच्छेदकः । हियतः अतः राज्ञः प्रियंकृतवतः कुर्वतः पुंसः परमासिद्धिःमोक्षः भवतीतिप्रवदंति तेनकारणेननृपतेःकंसस्यप्रियकाम्ययाप्रियेच्छया आवामित्यस्मच्छब्दस्यप्रथमाद्विवचनं । अहंत्वंचेत्यर्थः योत्स्यावःयुद्धंकुर्वः रामःमुष्टिकेनसहाभियुध्यतुयुद्धंकरोतु ॥ ११८ ॥ इत्युक्तोभगवान्परिहासपूर्वकंयथास्यात्तथाएवमुक्तप्रकारेण भवतांराजादैवतं भवत्वि त्याह । तदातेनमल्लेनअभियातःअभिप्राप्तःसदैवतपतिःसकृष्णः युधिमल्लयुद्धेमौहूर्तिकींघटिकाद्वयसंबंधिनींमल्ललीलांमल्लशिक्षांसंदर्श्य अथमुहूर्तानंतरं । स्वशत्रुंमल्लंप

रंगं प्रविष्टमभिवीक्ष्य जगाद मल्लः कंसप्रियार्थमभिभाष्य जगन्निवासं ॥ चाणूर इत्यभिहितो जगतामवध्यः शं भुप्रसादत इदं शृणु माधवेति ॥ ११७ ॥ राजैव दैवतमिति प्रवदंति विप्रा राज्ञः प्रियं कृतवतः परमा हि सि द्धिः ॥ योत्स्याव तेन नृपतिप्रियकाम्ययावां रामोभियुध्यतु बली सह मुष्टिकेन ॥ ११८ ॥ इत्युक्त आह भगवा न्परिहासपूर्वमेवं भवत्विति स तेन तदाभियातः ॥ संदर्श्य दैवतपतिर्युधि मल्ललीलां मौहूर्तिकीमथ पदोर्जगृहे स्वशत्रुम् ॥ ११९ ॥ उत्क्षिप्य तं गगनगं गिरिसन्निकाशमुद्भ्राम्य चाथ शतशः कुलिशाक्षतांगं ॥ आविध्य दुर्धर बलो भुवि निष्पिपेष चूर्णीकृतः स निपपात यथा गिरींद्रः ॥ १२० ॥ कृष्णं च तुष्टुवुरथो दिवि देवसंघा मर्त्या भुवि प्रवरमुत्तमपूरुषाणां ॥ तद्वद्बलस्य दृढमुष्टिनिपिष्टमूर्धा भ्रष्टस्तदैव निपपात स मुष्टिकोपि ॥ १२१ ॥

दोःपादयोःजगृहे ॥ ११९ ॥ दुर्धरंसोढुमशक्यंबलंयस्यसतथा कृष्णःउत्क्षिप्यऊर्ध्वंनिक्षिप्य गगनगंआकाशेविद्यमानंगिरिसन्निकाशंपर्वतसदृशंकुलिशेनवज्रेणापिअ क्षतंअदार्यंअंगंयस्यसतथा तंचाणूरंशतशःशतवारंउद्भ्राम्य अथभुविआविध्यपोथयित्वानिष्पिपेष पदामर्द चूर्णीकृतःसचाणूरःनिपपात । कथमिवयथागिरींद्रःतथे तिसंबंधः ॥ १२० ॥ उत्तमपुरुषाणांमध्येप्रवरंपुरुषोत्तममितियावत् । कृष्णंतद्वत्चाणूरवत्बलस्यदृढमुष्टयःतेषांपातैःनिष्पिष्टःसंचूर्णितःमूर्धाशिरोयस्यसतथा । समुष्टि कोपितदैवचाणूरमरणसमयेभ्रष्टोमृतःसन्निपपात । तदुक्तंहरिवंशे । मुष्टिनैकेनतेजस्वीजानुनिस्तनायेनतुना । शिरस्यभ्यहनद्वीरोवज्रेणेवमहागिरिं ससुनिष्पिष्टमस्ति ष्कोविस्रस्तनयनाननः । पपातनिहतस्तेनेति ॥ १२१ ॥ ॥ ॥ ॥

तत्रयुद्धेकूटःकोसलश्चेतिद्वौकृष्णेननिहतौउतअनंतरं अपरःताभ्यामन्यःछलनामधेयःबलेननिहतःपरिघेणमुसलेन ॥ १२२ ॥ पापःकंसःअक्षयंशस्त्रास्त्रबलाशिक्षाद्यैः ह्रासरहितंअतएवउग्रवीर्यंबलंसैन्यंइत्युक्त्वा आदिदेशइतीतिकिं एतौरामकृष्णौनिःसार्यदूरीकृत्य अधिकंयथाभवतितथादंडशिक्षांकुरुतेत्युक्त्वेतिसंबंधः ॥ १२३ ॥ अक्षौहिणीनांदशकंतस्ययुग्मंविंशदक्षौहिणीसंख्याकमित्यर्थः । बलंअनंतवीर्यंकृष्णंस्वकोष्ठेस्वसमूहमध्येचकार । तत्रदृष्टांतमाह । सिंहमिति । समेतंमिलितंअखिलानांसृगालानांगोमायूनांबलंसिंहंयथातथेत्यर्थः ॥ १२४ ॥ महेंद्रःइंद्रःईश्वरंसर्वसंपदांलोकानांचेश्वरंअनंतबलंअनंतबलत्वाद्रथायुधाद्यपेक्षारहितमितिभावः । ईदृशंकृष्णंजानन्न

कूटश्च कोशल उत च्छलनामधेयो द्वौ तत्र कृष्णनिहतावपरो बलेन ॥ कंसस्य ये त्ववरजाश्च सुनीथमुख्याः सर्वे बलेन निहताः परिघेण वीराः ॥ १२२ ॥ ताभ्यां हतानभिसमीक्ष्य निजान्समस्तान् कंसो दिदेश बलमक्षयमुग्रवीर्यम् ॥ रुद्रप्रसादकृतरक्षमवध्यमेतौ निःसार्य दंडमधिकं कुरुतेतिपापः ॥ १२३ ॥ श्रुत्वैव राजवचनं बलमक्षयं तदक्षौहिणीदशकयुग्ममनंतवीर्यं ॥ कृष्णं चकार विविधास्त्रधरं स्वकोष्ठे सिंहं यथा किल सृगालबलं समेतम् ॥ १२४ ॥ जानन्नपीश्वरमनंतबलं महेंद्रः कृष्णं निजं रथमयातयदायुधाढ्यम् ॥ शुश्रूषणाय परमस्य यथा समुद्रमर्घ्येण पूरयति पूर्णजलं जनोयम् ॥ १२५ ॥ स्वं स्यंदनं तु भगवान् स महेंद्रदत्तमारुह्य सूतवरमातलिसंगृहीतं ॥ नानायुधोग्रकिरणस्तरणिर्यथैव ध्वांतं विनाशयदशेषत आशु सैन्यम् ॥ १२६ ॥ ॥

पिपरमस्यश्रीकृष्णस्य शुश्रूषणायसेवनार्थंआयुधैःआढ्यंपूर्णंनिजंकृष्णसंबंधिनं हरिणाइंद्रायदत्तत्वात्स्वकीयंवा रथंआयातयत्प्रेषयामास । अस्यहरिशुश्रूषणंनित्यविधिरूपमितिसूचनार्थंतत्रदृष्टांतमाह । यथेति । अयंजनःविधिबद्धोजनःपूर्णजलंसमुद्रमर्घ्येणतदीयंजलंअंजलिनादायसमुद्रस्तृप्यत्वितिअर्घ्येणयथापूरयतिपूर्णंकरोतितथैवेत्यर्थः । अनेनस्वविधिप्रतिपालनमेवकृतमितिभावः ॥ १२५ ॥ सूतवरेणइंद्रस्यसूतश्रेष्ठेनमातलिनाम्नागृहीतंस्वंस्यंदनंआत्मरथंअशेषतःसर्वसैन्यंव्यनाशयत् । कथंभूतोभगवान्नानायुधान्येवउग्रकिरणायस्यसतथा । कइवतरणिःसूर्यःध्वांतंअंधकारंयथाविनाशयतितथेत्यर्थः ॥ १२६ ॥ ॥ ॥

कृष्णंप्रतिअभियातुंइयेषऐच्छत् यदातावत्तदातंरंगस्थितंवीरअभिप्रयांतंस्वाभिमुखंआगतंभगवंतंकृष्णं उत्तुंगस्यउन्नतस्यमंचस्य शिरसिउपरिप्रददर्श।।१२७।।भगवान्श्ये
नःपक्षिविशेषःतस्यवेगवत्वेगोयस्यसतथा तंअभितःपरितःनिश्छिद्रंअविच्छिन्नंयथास्यात्तथा प्रतिसंचरंतंस्वमभिप्रनंतंकंसंप्रसह्यबलात्कारेणआशुकेशेषुअभिमृश्यस्पृष्ट्वा
केशानाकृष्येत्यर्थः।जगृहेकृष्णइतिशेषः।एनंकंसंवामेनकरेणउद्धृत्यदक्षिणकरेणअस्यकंसस्यकेशिरसिजघान ॥१२८॥ नरसिंहकराग्रेपुरुषश्रेष्ठकृष्णहस्ततलेसंस्थःस्थि
तःकंसःसंचालितेनपतितेनमुकुटेनकिरीटेनपतितमुकुटवत्मस्तकेनेतिभावः । विगतेकुंडलेयस्यतत्तेनकर्णद्वयेनात्रिगतानिआभरणानियस्यसतथा तच्चतदुरोवक्षःतेनस्रस्तं
श्लथितंअंबरंवस्त्रंयस्मात्तत्तथा तेनजघनेनकट्यूर्वोर्मध्यप्रदेशेन सुशोच्यंअतिदुःखितंरूपंयस्यसतथा बभूव। नरसिंहकराग्रसंस्थःहिरण्यकशिपुःयथासुशोच्यरूपोबभूव

निःशेषतो विनिहते स्वबले स कंसश्चर्मासिपाणिरभियातुमियेष कृष्णम् ॥ तावत्तमेव भगवंतमभिप्रयांतमुत्तुंगमंच
शिरसि प्रददर्श वीरं ॥ १२७ ॥ तं श्येनवेगमभितः प्रतिसंचरंतं निश्छिद्रमाशु जगृहे भगवान्प्रगृह्य ॥ केशेषु चैनम
भिमृश्य करेण वामेनोद्धृत्य दक्षिणकरेण जघान केस्य ॥ १२८ ॥ संचालितेन मुकुटेन विकुंडलेन कर्णद्वयेन विग
ताभरणोरसा च ॥ स्रस्तांबरेण जघनेन सुशोच्यरूपः कंसो बभूव नरसिंहकराग्रसंस्थः ॥ १२९ ॥ उत्कृष्य तं सुर
पतिः परमोच्चमंचादन्यैरजेयमतिवीर्यबलोपपन्नं ॥ अब्जोद्भवेन वरगुप्तमनंतशक्तिर्भूमौ निपात्य स ददौ पदयोःप्रहा
रं ॥ १३० ॥ देहे तु योऽभवदमुष्य रमेशबंधुर्वायुः स कृष्णतनुमाश्रयदन्यपापम् ॥ दैत्यं चकर्ष हरिरत्र शरीरसंस्थं
पश्यत्सु कंजजमुखेषु सुरेष्वनंतः ॥ १३१ ॥ ॥ ॥ ॥ ॥

तथाकंसोबभूवेतिलुप्तोपमेयमितिवा ॥१२९॥ सुरपतिःगुप्तंरक्षितंकंसंपरमोच्चमंचात्उत्कृष्यआकृष्यभूमौनिपात्य पदयोःप्रहारंददौ कंसायेतिशेषः। पादद्वयस्यप्रहारंददावितिभावः। अतएवअनंतशक्तिः ॥ १३० ॥ कंसःसायुज्यंप्रापेतिपुराणोक्तेर्गतिमाह । देहइति । अमुष्यकंसस्यदेहे रमेशबंधुर्हरेर्मित्रं । यद्वा रमाजायातस्याईशःभर्तासंकर्षणःतस्यबंधुःपुत्रइत्यर्थः । योवायुःअभवत्सकृष्णतनुमाश्रयत् प्रविवेश । हरिःअत्रअस्यकंसस्यशरीरसंस्थं अन्यश्चासौपापश्चेतिविग्रहः । वायोरन्यइत्यर्थः । दैत्यं कालनेमिंचकर्ष तमःप्रतीतिशेषः । अत्रप्रमाणंकिमित्यतोयोगिप्रत्यक्षमेवप्रमाणमित्याह । पश्यत्स्विति ॥ १३१ ॥ ॥ ॥

सकंसःसर्वजगतःएकगुरोःमुख्यगुरोःकृष्णस्यद्वेषात् पूर्वंप्रमापितैःहतैःजनैःधात्र्यादिभिःसमस्तैःस्वकीयैःसहितःसन् अंधंतमःप्रतिययौ । यतःकुमतिःपापबुद्धिःअतएवे त्यर्थः । कुःपापेल्पार्थेकुत्सयोरितियादवः । अन्येषामपिद्वेषिणांएवमेवतमःप्राप्तिरित्याह । अन्येपीति । अन्येहरौअभक्ताःद्वेषिणःउपयांतिप्रतियांति ॥ १३२ ॥ तमःस्वरूपंवदन्उक्तमेवार्थंविशदयन्नाह नित्येति । कंजजादिषुभक्तोपिसर्वधर्मार्णवोपिस्वविहितसर्वधर्मानुष्ठानशीलोपीत्यर्थः हरौअभक्तश्चेत्नित्यंअतिदुःखंयस्मिन्तत्तथा तत्अनिवृत्तिपुनरावृत्तिरहितंसुखेनव्यपेतं विशेषेणोज्झितंसुखलेशोपिनास्तीतिभावः एतादृशंअंधंतमः निखिलागमनिर्णयेननियतंनिश्चयेन एतिप्राप्नोति ॥ १३३ ॥

**द्वेषात्स सर्वजगदेकगुरोः स्वकीयैः पूर्वं प्रमापितजनैः सहितः समस्तैः ॥ धात्र्यादिभिः प्रतिययौ कुमतिस्तमोंधमन्येपि चैवमुपयांति हरावभक्ताः ॥ १३२ ॥ नित्यातिदुःखमनिवृत्तिसुखव्यपेतमंधंतमो नियतमेति हरावभक्तः ॥ भक्तोपि कंजजगिरीशमुखेषु सर्वधर्मार्णवोपि निखिलागमनिर्णयेन ॥ १३३ ॥ यो वेत्ति निश्चितमतिर्हरिमब्जजेशपूर्वाखिलस्य जगतः सकलेपि काले ॥ सृष्टिस्थितिप्रलयमोक्षदमात्मतंत्रं लक्ष्म्या अपीशमतिभक्तियुतः स मुच्येत् ॥ १३४ ॥ तस्मादनंतगुणपूर्णममुं रमेशं निश्चित्य दोषरहितं परयैव भक्त्या ॥ विज्ञाय दैवतगणांश्च यथाक्रमेण भक्त्या हरेरिति सदैव भजेत धीरः ॥ १३५ ॥ निहत्य कंसमोजसा विधातृशंभुपूर्वकैः ॥ स्तुतः प्रसूनवर्षिभिर्मुमोद केशवोधिकं ॥ १३६ ॥ ॥ ॥ ॥ ॥ ॥**

महात्म्यज्ञानपूर्वकहरिभक्त्यैवमोक्षप्राप्तिरित्याह । योवेत्तीति । यःपुरुषःअब्जजेशादित्रयविशेषणैरुपेतंहरिंनिश्चितमतिःउक्तार्थनिश्चितज्ञानीसन्वेत्तिजानाति सहरौभक्तियुतःसन् मुच्येत्मुक्तोभवति ॥ १३४ ॥ तस्मान्मुक्तोभवतीतिनियमात् । धीरः दृढभक्तिःपुरुषःअमुंहरिंअनंतगुणपूर्णंदोषरहितंरमेशंनिश्चित्य परयैवभक्त्यासर्वेभ्यःआधिकभक्त्यासदैवमुक्तावस्थायांभजेत दैवतगणांश्चब्रह्मादिदेवसमूहांश्चयथाक्रमेणउक्ततारतम्यक्रमेणविज्ञाय हरेर्भक्ताइतिबुद्ध्याभजेतसमर्चयेदित्यर्थः ॥ १३५ ॥ ओजसासामर्थ्येनअधिकमितिक्रियाविशेषणम् ॥ १३६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

अधिकंमुमोदेत्युक्तेस्तात्पर्यमाह । सदैवेति । सदैवनिरंतरंमोदरूपिणःआनंदरूपिणःअस्यकृष्णस्यमुदायाःमोदस्यउक्तिः कथनंलौकिकीअल्पज्ञबुद्ध्यानुसारिणी तत्रदृष्टांतमाह । यथेति । सदाउदितस्यरवेःलोकतःउदयोभवेत्भवति यथातथासदैवमोदरूपिणःमुदोक्तिरित्यर्थः । टापंचैवहलंतानांयथावाचानिशादिशेति हलंतादपिटापूविधानात्मुच्छब्दस्यटाबंतत्वमभिप्रेत्यायंप्रयोगः । अस्यकृष्णस्यमुदासंतोषेणउक्तिःविशिष्टत्वोक्तिःलौकिकीतिवार्थः ॥ १३७ ॥ सदैवमोदरूपित्वंकृष्णस्यसाधयितुमेव

**सदैव मोदरूपिणो मुदोक्तिरस्य लौकिकी ॥ यथोदयो रवेर्भवेत्सदोदितस्य लोकतः ॥ १३७ ॥ अनंतचित्सुखार्णवः सदोदितैकरूपकः ॥ समस्तदोषवर्जितो हरिर्गुणात्मकः सदा ॥ १३८ ॥ इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये कंसवधोनाम त्रयोदशोध्यायः ॥ १३ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥**

तत्स्वरूपंनिरूपयति । अनंतचिदिति । हरिःसदाअनंतेचतेचित्सुखेज्ञानानंदौताभ्यांअर्णववदर्णवः सदाउदितंअभिव्यक्तंस्वरूपंयस्यसतथा । स्वार्थैकप्रत्ययः । समस्तदोषवर्जितः गुणाःआनंदादयःआत्मादेहोयस्यसतथा ॥१३८ ॥ यंगंगाजमद० ॥ पूर्तिंतस्यकृतौत्रयोदशइहाध्यायःसतांमोददःश्रीमद्भारत० ॥ १ ॥ इति भारततात्पर्यनिर्णयटीकायां जनार्दनभट्टविरचितायां पदार्थदीपिकानाम्न्यां त्रयोदशोध्यायः ॥ १३ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥

श्रीगुरुभ्योनमः ॐ श्रीमद्भगवानाचार्यः कंसवधानंतरं सतांधर्मशिक्षणरूपां दैत्यपराभवरूपांचकृष्णलीलांनिरूपयति । कृष्णइत्यादिना । कृष्णःपितरौदेवकीवसुदेवौ विमोच्यनिगडान्मोचयित्वा धर्मस्यप्रतिपालनाय रक्षणार्थंसतांधर्मंशिक्षयन्निति भावः । रामसहितःसन्स्वयंसर्ववंद्योपि पितरौअभिवंद्य उग्रसेनेराज्यपदवींमधुरामंडलाधिपत्यंप्रणिधायच । द्विजत्वंउपनयनेगायत्रीतोजन्मउपगम्यप्राप्य वसुदेवादितिशेषः । धर्मस्यप्रतिपालनायेतित्रिषुसंबंधः । नंदंमुमोचसांत्वयित्वावृंदावनंप्रतिप्रेषयामासेत्यर्थः ॥ १ ॥ ॥ कृष्णेननंदोपिनंदश्चसांत्ववचनैःदुःखपरिहाररूपवाक्यैःअनुनीयसांत्वयित्वामुक्तःप्रेषितोभूदित्यर्थः । तस्यकृष्णस्यचरणपंकजंआत्मनिअंतःकरणेसंस्थंनिश्चलंकृत्वा गोपगणेनसहकृच्छ्राज्जगामनंदइतिशेषः । सभार्योनंदःजनार्दनंध्यायन्वनेवृंदावनेउवास ॥ २ ॥ अथसंपूर्णासंविज्ज्ञानंयस्यसतथा । तादृशोपिकृष्णःसांदीपि

ॐ कृष्णो विमोच्य पितरावभिवंद्य सर्ववंद्योपि रामसहितः प्रतिपालनाय ॥ धर्मस्य राज्यपदवीं प्रणिधाय चोग्रसेने द्विजत्वमुपगम्य मुमोच नंदम्॥१॥ नंदोपि सांत्ववचनैरनुनीय मुक्तः कृष्णेन तच्चरणपंकजमात्मसंस्थं ॥ कृत्वा जगाम सहगोपगणेन कृच्छ्राद्ध्यायन् जनार्दनमुवास वने सभार्यः ॥ २ ॥ कृष्णोप्यवंतिपुरवासिनमेत्य विप्रं सांदीपिनं सह बलेन ततोध्यगीष्ट ॥ वेदान् सकृन्निगदितान्निखिलाश्च विद्याः संपूर्णसंविदपि दैवतशिक्षणाय ॥ ३ ॥ धर्मो हि सर्वविदुषामपि दैवतानां प्राप्ते नरेषु जनने नरवत्प्रवृत्तिः ॥ ज्ञानादिगूहनमुताध्ययनादिरत्र तज्ज्ञापनार्थमवसद्भगवान् गुरौ च ॥ ४ ॥ गुर्वर्थमेष मृतपुत्रमदात्पुनश्च रामेण सार्धमगमन्मधुरां रमेशः ॥ पौरैः सजानपदबंधुजनैरजस्रमभ्यर्चितो न्यवसदिष्टकृदात्मपित्रोः ॥ ५ ॥ सर्वेपि ते पतिमवाप्य हरिं पुरा हि तप्ता हि भोजपतिना मुमुदुर्नितांतं ॥ किं वाच्यमत्र सुतमाप्य हरिं स्वपित्रोर्यत्राखिलस्य सुजनस्य बभूव मोदः ॥ ६ ॥ ॥

नंसांदीपिनामकंविप्रमेत्य ततःतस्मात्सांदीपिनःसकृन्निगदितानेकवारमुक्तान्वेदान्निखिलाःविद्याश्चदैवतानांदेवानांशिक्षणाय अध्यगीष्टअधिजगौ ॥ ३ ॥ दैवतशिक्षणमित्युक्तंविशदयति । धर्मइति । सर्वविदुषामपिसर्वज्ञानिनामपिदैवतानांनरेषुजननेअवतारेप्राप्तेसति । अवतारेनरवत्प्रवृत्तिःप्रवर्तनंज्ञानादेःज्ञानबलादेर्गूहनंगोप्यंउतत था अध्ययनादिःअध्ययनंवेदपठनं आदिपदेनवर्णोचितविद्याभ्यासःधर्मोहियस्मात्तस्माद्भगवान् ज्ञापनार्थंअवतीर्णानांधर्मज्ञापयितुंगुरौचगुरुवशेचावसत् ॥ ४ ॥ एषःकृष्णःगुर्वर्थंगुरवेमृतपुत्रंअदात्दक्षिणात्वेनेतिशेषः । तेसर्वेपिमधुरामंडलस्थासर्वएवपुराभोजपतिनाकंसेनतप्ताः हियतःअतःहरिंपतिंअवाप्य नितांतंमुमुदुः । यत्रयदाअखिलस्यसुजनस्यमोदोबभूव तदाहरिंसुतंअवाप्य आत्मपित्रोःकृष्णस्यमातापित्रोःअत्रमोदोबभूवेत्येतद्विषयेकिंवाच्यंनवाच्यमित्यर्थः ॥ ५ ॥ ६ ॥ ॥

यत्रयस्मिन्देशेकृष्णःआश्रयोयस्यसतथा जनोलोकःवसतिवासंकरोति तत्रापितस्मिन्नपिदेशेवृद्धिःसर्वसंपत्समृद्धिर्भवेत् । रमायाःसंपदभिमानिन्याःलक्ष्म्याःअधिपतेःमुख्यस्वामिनःइंद्रादयोपिहरिदत्तसंपत्स्वामिनःहरिस्तुमुख्यस्वामीतिभावः । ईदृशस्यकृष्णस्यनिवासेवसतौवासस्थानइतियावत् । किमुवृद्धिर्भवेदितीतिकिमुवक्तव्यामित्यर्थः । वृंदावनंयस्यकृष्णस्यअधिवासतःअधिष्ठानात्सध्यक्सम्यक्महेंद्रसंबंधिनःसद्मनःगृहस्यस्वर्लोकस्येत्यर्थः । सदृशंआस तिङंतप्रतिरूपकमव्ययमेतत् । नतुतिङंतंपदंअस्तेरार्धधातुके भूरादेशविधानात् । तत्रतस्यांपुर्यांमथुरापुर्यांकिमुसंपद्वृद्धिरभूदितिकिमुवक्तव्यमित्यर्थः ॥ ७ ॥ येनकारणेनजगतांमध्येवृषभःश्रेष्ठोविष्णुः विधातुःसदनेस्थानेअधिवासंमुख्यतयावासंविधत्तेकरोति ततःतेनकारणेनवरतासत्यलोकस्यउत्तमत्वंहियस्मात्तस्मात्प्रभोःकृष्णस्यशश्वन्निरंतरं ॥ ८ ॥ अस्मिन्भूलोकेअस्मिन्नजेकृष्ण

कृष्णाश्रयो वसति यत्र जनोपि तत्र वृद्धिर्भवेत्किमु रमाधिपतेर्निवासे ॥ वृंदावनं यदधिवासत आस सध्यङ् माहेंद्रसद्मसदृशं किमु तत्र पुर्याम् ॥ ७ ॥ येनाधिवासमृषभो जगतां विधत्ते विष्णुस्ततो हि वरता सदने विधातुः ॥ तस्मात्प्रभोर्निवसनान् मधुरापुरी सा शश्वत्समृद्धजनसंकुलिता बभूव ॥ ८ ॥ रक्षत्यजे त्रिजगतां परिरक्षकेस्मिन् सर्वान्यदून्मगधराजसुते स्वभर्तुः ॥ कृष्णान्मृतिं पितुरवाप्य समीपमस्तिप्रास्ती शशंसतुरतीव च दुःखितेस्मै ॥ ९ ॥ श्रुत्वैव तन्मगधराज उरुप्ररूढबाह्वोर्बलेन न जितो युधि सर्वलोकैः ॥ ब्रह्मेशचंडमुनिदत्तवरैरजेयो मृत्यूज्झितश्च विजयी जगतश्चुकोप ॥ १० ॥ ॥ ॥ ॥ ॥

इतिवा यदून्रक्षतिसति । मगधराजस्यजरासंधस्यसुतेपुत्र्यौअतीव अत्यंतंसुदुःखितेवैधव्येनसंजातमहादुःखेअस्तिप्रास्तीतिसंज्ञेपितुःजरासंधस्यसमीपंअवाप्य स्वभर्तुःकंसस्यकृष्णाज्जातांमृतिंअस्मैपित्रेशशंसतुः । शंसकथनइतिधातुः ॥ ९ ॥ मगधराजःतद्दुहित्रोर्दुःखंश्रुत्वाचुकोपकुपितोभूत् । कथंभूतःउरुप्ररूढौ अतिप्ररूढौतौचतौबाहूच तयोर्बलेननिमित्तेनसर्वलोकैःयुधियुद्धेनाजितःअजितःपराभवरहितइतियावत् । अपराभवेकारणांतरमाह । ब्रह्मेति । चंडमुनिः चंडकौशिकः । तदुक्तंसभापर्वणि । अथकक्षीवतःपुत्रंगौतमस्यमहात्मनः । शुश्रावतपसिश्रेष्ठंउदारंचंडकौशिकमिति । दुर्वासाइतिकेचित् । ब्रह्मादिदत्तवरैर्जगतःजगतांअजेयःमृत्यूज्झितश्च अवध्यइत्यर्थः । अतएवविजयीविशेषेणजयशीलः ॥ १० ॥ ॥ ॥ ॥ ॥ ॥ ॥

अतिकोपवशतःक्षुब्धःक्षोभंप्राप्तः । अखिलाश्चतेशैवागमाइतिशैवागमाखिलाःतान्वेत्तिजानातीतितथा । शैवागमैरखिलंततत्वादिजगद्वेत्तिनान्येनेतिशैवागमानामखिलंअ र्थसारंवेत्तीतिवा गदांजगृहे असौजरासंधःअत्रचस्वपुर्याएवसुस्थिरःसुस्थितःसन् योजनानांशतंयोजनशतेतांगदांपरस्मैकृष्णार्थेचिक्षेप ॥ ११ ॥सागदामधुराप्रदेशात्योज नेनअर्वाक्पृष्ठतः पपात मधुरायाःयोजनव्यवहितपूर्वदिशिपपातेतिभावः । तत्रकारणमाह । यदिति । यद्यस्मात्पृष्टःमधुराइतःकतियोजनव्यवधानेनतिष्ठतीतिपृष्टोदेवर्षिः शताच्छतयोजनसंख्याविशेषात् एकेनएकयोजनेनउत्तरामपिअधिकामपिएकयोजनाधिकशतयोजनव्यवहितामित्यर्थः मधुरांभगवत्प्रियार्थेकृष्णप्रीत्यैअत्रअस्मात्नग रात्शतयोजनव्यवहितामधुरेतिइमंजरासंधंप्रतिजगाद तत्तस्मादर्वाक्पपातेतिसंबंधः ॥ १२ ॥ भगवतःप्रीत्यैइत्युक्तंविशदयति । शक्तस्येति । भगवतःगदाप्रतिघ

क्षुब्धोतिकोपवशतः स गदाममोघां दत्तां शिवेन जगृहे शिवभक्तवंद्यः ॥ शैवागमाखिलविदत्र च सुस्थिरोसौ चिक्षे
प योजनशतां स तु तां परस्मै ॥ ११ ॥ अर्वाक् पपात च गदामधुराप्रदेशात्सा योजनेन यदिमं प्रजगाद पृष्टः ॥
एकोत्तरामपि शताच्छतयोजनेति देवर्षिरत्र मधुरां भगवत्प्रियार्थे ॥१२॥ शक्तस्य चापि हि गदाप्रतिघातने तु शुश्रू
षणं मदुचितं त्विति चिंतयानः ॥ विष्णोर्मुनिः स निजगाद हि योजनोनं मार्गं पुरो भगवतो मगधेश पृष्टः ॥१३॥
क्षिप्ता तु सा भगवतोथ गदा जराख्यां तत्संधिनीमसुभिराशु वियोज्य पापां ॥ मर्त्याशनीं भगवतः पुनराज्ञयैव याता
गिरीशसदनं मगधं विसृज्य ॥ १४ ॥ राजा स्वमातृत उतो गदया च हीनः क्रोधात्समस्तनृपतीनभिसन्निपात्य ॥
अक्षौहिणीत्र्यधिकविंशयुतोतिवेलं दर्पोद्धतः सपादि कृष्णपुरीं जगाम ॥ १५ ॥ ॥ ॥

तसामर्थ्याभावात् तत्प्रियार्थंयोजनोनंजगादकिमित्यतोवाह । शक्तस्येति । मगधेशपृष्टःसमुनिर्नारदःगदायाःप्रतिघातनेपरिहारविषयेशक्तस्यापिविष्णोःशुश्रूषणंगदाघा तपरिहाररूपसेवाममउचितंयोग्याइतिचिंतयानःसन् भगवतःपुरःपुर्याःयोजनेनऊनंन्यूनंमार्गंजगादह तस्मादर्वाक्पपातेतिभावः ॥ १३ ॥ अथनारदोक्त्यनंतरं भगव तःअर्थेक्षिप्तासागदातस्यजरासंधस्यसंधिनींशकलद्वयसंधानकर्त्रींमर्त्याःअशनंयस्याःसातांअतएवपापांजराख्यांराक्षसींअसुभिःप्राणैर्वियोज्यविमोच्यहत्वेत्यर्थः मगधंवि सृज्यविहायभगवतःआज्ञयैवपुनःगिरीशस्यसदनंयातागता ॥ १४ ॥ हीनःरहितः अभिसन्निपात्यमेलयित्वा विंशतेरधिकाअधिकविंशास्त्रयश्चतेअधिकविंशाश्चत्र्यधिकविंशाः। अक्षौहिणीनांत्र्यधिकविंशाःतैर्युतःअतिवेलंभृशंदर्पेणगर्वेणउद्धतःमत्तः ॥ १५ ॥ ॥ ॥ ॥ ॥

प्रतिनिरुध्यरोधयित्वाविंदस्यअनुजःअनुविंदःविंदश्चविंदानुजश्चविंदविंदानुजौतौतथाभ्रातराविरयर्थः विंदानुविंदाख्यौदूतौभगवतःसकाशांदिदेशप्रेषयामास तौविंदानुविं दौअतिदर्पेणमहागर्वेणपूर्णंभगवतोपिकृष्णस्यापिअपहासेनपरिहासेनयुक्तंअस्यजरासंधस्यवचःभगवतेकृष्णायऊचतुः ॥ १६ ॥ अपहासयुक्तवचनंविशदयति । लोक इति । लोकेजगतिअप्रतीतेअप्रसिद्धे ये बलपौरुषेताभ्यांसाररूपःश्रेष्ठरूपःत्वंएकइतिहिप्रसिद्धिः वीर्यरहितेनमयाएष्यस्यभविष्यतःभवतःतवबलवीर्ययोःसारंआधिक्यंनज्ञा त्वाअविज्ञायसुतेकंसस्यप्रतिपादितेअतःत्वयासकंसःहतः ॥ १७ ॥ दुर्बलतमःअत्यंतनिर्बलःसोहंबलिनांमध्येवरिष्ठंश्रेष्ठंत्वांज्ञात्वादृष्टिविषयंदृग्गोचरंकृत्वैवविगतप्रतापःह

सर्वां पुरीं प्रति निरुध्य दिदेश विंदविंदानुजौ भगवतः कुमतिः स दूतौ ॥ ता ऊचतुर्भगवतेस्य वचोतिदर्पपूर्णं तथा भगवतोप्यपहास युक्तं ॥ १६॥ लोके प्रतीतबलपौरुषसाररूपस्त्वं ह्येक एष्यभवतो बलवीर्यसारं ॥ ज्ञात्वा सुतेन तु मया प्रतिपादिते हि कंसस्य वीर्यरहितेन हतस्त्वया सः ॥ १७॥ सोहं हि दुर्बलतमो बलिनां वरिष्ठं कृत्वैवदृष्टि विषयं विगतप्रतापः ॥ यास्ये तपोवनमथो सहितः सुताभ्यां क्षिप्रं ममाद्यविषयो भव चक्षुषोतः ॥ १८ ॥ साक्षेपमी रितमिदं बलदर्पपूर्णमात्मापहाससहितं भगवान्निशम्य ॥ सत्यं तदित्युरुवचोर्थवदभ्युदीर्य मंदं प्रहस्य निरगात्स हितो बलेन ॥१९ ॥ द्वारेषु सात्यकिपुरःसरमात्मसैन्यं त्रिष्वभ्युदीर्य भगवान् स्वयमुत्तरेण ॥ रामद्वितीयउदगान्म गधाधिराजं योद्धुं नृपेंद्रकटकेन युतं परेशः ॥ २० ॥ ॥ ॥ ॥ ॥

तपराक्रमःसन् अथसुताभ्यांआस्तिप्राप्तिभ्यांसहितःसन् तपोवनंतपोवनमितिप्रसिद्धंवनंमगधविषयेतिष्ठतितंतपसेवनंप्रतीतिवा यास्येगच्छामियतःअतःअद्यममचक्षुषःदृ ष्टेःविषयःगोचरःक्षिप्रंभव ॥ १८ ॥ आक्षेपेणतिरस्कारेणसहितंयथास्यात्तथानिशम्यश्रुत्वा तज्जरासंधोक्तंविगतप्रतापइत्युक्तंस्यादेवतपोवनंयास्यइत्युक्तंनस्यादित्यभिप्राये णसत्यमित्यर्धांगीकारप्रयोगइतिअर्थवत्सार्थंउरुश्रेष्ठंगंभीरंवा वचःअभ्युदीर्यतयोरभिमुखंउक्त्वा निरगात्पुर्याःनिःसृताभूत् ॥ १९ ॥ परेशस्त्रिषुद्वारेषुउदीर्यआज्ञाप्य उदगात्निर्ययौ । कथंभूतःरामःद्वितीयोयस्येतिविग्रहः । किंकर्तुंकटकेनसमूहेनसैन्येनवा सैन्येपिकटकोस्त्रियामित्यभिधानं । युतंयुक्तंयोद्धुं ॥ २० ॥ ॥

तस्यकृष्णस्यइच्छयैवसबलस्यतस्यकृष्णस्यसुतरांभास्वराणिदीप्यमानानिआयुधानिआशुपृथिवीमवतेरुःप्रापुः । रथोप्यवततारेतिद्रष्टव्यं । दारुकेणहरिसारथिदारुकनाम्ना गृहीतरथेस्थितःसकृष्णःस्वकीयाःशार्ङ्गं धनुःअसिःखड्गःचक्रंदरःशंखःतूणाइषुधीगदाचतथाताः जग्राह तूणोपासंगतूणीरनिषंगाइषुधिर्द्वयोरित्यमरः ॥ २१ ॥ उक्तमेवार्थंविशदयति । आरुह्येति । कृष्णःभूमयंभुवा अभिमन्यमानंरथंआरुह्य कथंभूतंवेदात्मकैःऋगादिवेदानांअभिमन्यमानदेवतात्मकैःअश्वैःप्रतियुक्तंनियोजितंप्रतीतिभिन्नंवापदं अधिज्यंआरोपितज्याकंशार्ङ्गं धनुःप्रगृह्य निशितान्तीक्ष्णान्शरांश्चप्रगृह्य अथमगधाधिराजंप्रति ॥ २२ ॥ अखिलैःअधृष्यःसोढुमशक्यःरामःसहलंलांगलसहि

तस्येच्छयैव पृथिवीमवतेरुराशु तस्यायुधानि सबलस्य सुभास्वराणि ॥ शार्ङ्गासिचक्रदरतूणगदास्वकीया जग्राह दारुकगृहीतरथे स्थितः सः ॥ २१ ॥ आरुह्य भूमयरथं प्रतियुक्तमश्वैर्वेदात्मकैर्धनुरधिज्यमथ प्रगृह्य ॥ शार्ङ्गं शरांश्च निशितान् मगधाधिराजमुग्रं नृपेंद्रसहितं प्रययौ जवेन ॥ २२ ॥ रामः प्रगृह्य मुसलं सहलं च यानमास्थाय सायकशरासनतूणयुक्तः ॥ सैन्यं जरासुतसुरक्षितमभ्यधावद्दर्पान्नदन्नुरुबलोऽखिलैरधृष्यः ॥२३॥ उद्वीक्ष्य कृष्णमभियांतमनंतशक्तिं राजेंद्रवृंदसहितो मगधाधिराजः॥उद्वेलसागरवदाश्वभियाय कोपान्नानाविधायुधवरैरभिवर्षमाणः ॥२४॥तं वै चुकोप इषुरग्रत उग्रसेनं कृष्णो निधाय समगात्स्वयमस्य पश्चात्॥ दृष्ट्वाग्रतो मगधराट् स्थितमुग्रसेनं कोपाज्ज्वलत्तनुरिदं वचनं बभाषे ॥ २५॥ पापापयाहि पुरतो मम राज्यकाम निर्लज्ज पुत्रवधकारण शत्रुपक्ष ॥ त्वं जीर्णबस्तसदृशो नमयेह वध्यः सिंहो हि सिंहमभियाति न वै सृगालं ॥ २६ ॥ ॥ ॥ ॥

तंमुसलंप्रगृह्य यानंरथंआस्थायआरुह्य सायकैःबाणैःशरासनेनधनुषातूणाभ्यांइषुधीभ्यांयुक्तःयुक्तःसन् सैन्यंप्रत्यभ्यधावत् ॥ २३ ॥ उद्वीक्ष्यदृष्ट्वाउद्गताअतिक्रांतावेलामर्यादायस्मात्सतथा तादृशसागरवत्अभियायअभिययौ ॥ २४ ॥ तंजरासंधंचुकोपयिषुः कोपमुत्पादयितुमिच्छन्सन् अग्रतःपुरतःउग्रसेनंनिधायकृत्वा स्वयंअस्यउग्रसेनस्यपश्चात्पृष्ठतःइदंवक्ष्यमाणंवचनंपंचसंबोधनोपेतंवचनंबभाषे ॥ २५ ॥ वचनंस्पष्टयति । पापेति । अपयाहिअपसर त्वंजीर्णेनवृद्धेनबस्तेनछागेनसदृशःअतएवमयाइहयुद्धेवध्योवधार्होन तत्रदृष्टांतमाह । सिंहइति । सगालंगोमायुं ॥ २६ ॥ ॥ ॥ ॥ ॥

इत्थमुक्तप्रकारेणआक्षिप्तःनिराकृतः भोजराजःउग्रसेनःतेनशरेणपुनःतंजरासंधंउग्रैःतीक्ष्णैः ॥ २७ ॥ परमःकृष्णःअभियांतं उग्रसेनंप्रत्यागच्छंतंबार्हद्रथंजरासंधंप्रति रथेनययौ ॥ २८ ॥ चेदीशःशिशुपालःपौंड्रःपौंड्रकाख्यः दृष्टांतमाह । मेरुमिति । उदीर्णरवःउच्चध्वनिःघनोमेघःमेरुंमेर्वाख्यपर्वतंयथातथाववर्षेत्यर्थः ॥ २९॥ भगवान् शार्ङ्गनाम्नोधनुषःउत्थैःनिसृतैःसायकगणैःबाणपूगैःअभितःसर्वत्रवृष्टिंविवृश्च्याछित्वा । विगताःरथःअश्वाःसूतश्चयस्यसतथा तंनिर्गतायुधंछिन्नौआतपत्रवरकेतूछत्रध्वजौ यस्यसतथा तंमगधेंद्रंजरासंधंचक्रे ॥ ३० ॥ भगवान्भीमेनिजांभक्तिंयशःउच्चधर्मंचप्रथयितुंप्रख्यापयितुंसुशकंचहंतुंसुशक्यमप्येनंजरासंधंनजघान चेदीशाद्येकलव्यां

आक्षिप्त इत्थममुनाथ स भोजराजस्तूणात्प्रगृह्य निशितं शरमाशु तेन ॥ छित्वा जरासुतधनुर्बलवान्ननाद विव्याध सायकगणैश्च पुनस्तमुग्रैः ॥ २७॥ अन्यच्छरासनवरं प्रतिगृह्य कोपात् संरक्तनेत्रमभियांतमुदीक्ष्य कृष्णः ॥ भोजाधिराजवधकांक्षिणमुग्रवेगं बार्हद्रथं प्रति ययौ परमो रथेन ॥ २८ ॥ आयांतमीक्ष्य भगवंतमनंतवीर्यं चेदीशपौंड्रमुखराजगणैः समेतः ॥ नानाविधास्त्रवरशस्त्रगणैर्ववर्ष मेरुं यथा घन उदीर्णरवो जलौघैः ॥ २९ ॥ शस्त्रास्त्रवृष्टिमभितो भगवान्विवृश्च्य शार्ङ्गोत्थसायकगणैर्विरथाश्वसूतं ॥ चक्रे निरायुधमसौ मगधेंद्रमाशु छिन्नातपत्रवरकेतुमचिंत्यशक्तिः ॥ ३० ॥ नैनं जघान भगवान् सुशकं च भीमे भक्तिं निजां प्रथयितुं यश उच्चधर्मं ॥ चेदीशपौंड्रकसकीचकमद्रराजं साल्वैकलव्यकमुखान् विरथांश्चकार ॥ ३१ ॥ ये चापि हंसडिभिकद्रुमरुग्मिमुख्या बाल्हीकभौमसुतमैंदपुरःसराश्च ॥ सर्वे प्रदुद्रुवुरजस्य शरैर्विभिन्ना अन्ये च भूमिपतयो य इहासुरुर्व्यां ॥ ३२॥ छिन्नायुधध्वजपताकरथाश्वसूतवर्माण उग्रशरताडितभिन्नगात्राः ॥ स्रस्तांबराभरणमूर्धजमाल्यहीनाः रक्तं वमंत उरु दुद्रुवुराशु भीताः ॥ ३३ ॥ ॥ ॥ ॥ ॥

ताःमुखानिमुख्यायेषांतेतथातान् ॥ ३१ ॥ भौमोनरकासुरःतत्सुतःभगदत्तःमैंदइत्यत्रविविदोपिग्राह्यःमैंदविविदावित्यर्थः । विभिन्नाःविदारिताःसंतःप्रदुद्रुवुः अन्येपूर्वोक्तेभ्यःअन्येयेभूमिपतयः । उर्व्यांभुविआसुःतेपिइहअस्मिन्युद्धेविभिन्नाःसंतःप्रदुद्रुवुरितिसंबंधः ॥ ३२ ॥ वर्मकवचंअंबराणिवस्त्राणिआभरणानिभूषणानिमूर्धजाःकेशाः स्रस्ताःश्लथिताः अंबरादयोयेषांतेतथा तेचतेमाल्यैःमालासमूहैर्हीनाश्चउरुबहुरक्तंवमंतः । रथमध्यगतदीर्घस्तंभवस्त्रनिर्मितोतिलंबोध्वजःरथस्यपरितःस्थिताःदंडाश्रिताःवस्त्ररचिताःसूक्ष्माःपताकाः ॥ ३३ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

शोच्यांशोकार्हांदशांअवस्थां हरिणाआत्तानिअपहृतानिआयुधानियेषांतेतथा तेषुआस्थायआरुह्यरामंप्रससारप्राप ॥ ३४ ॥ रामःआधावतःअस्यजरासंधस्यरथंबभंज । सोपिजरासंधोपितस्यरामस्यउरुतरेअतिविस्तीर्णेउरसिचिक्षेप रामःतंजरासंधं बलवतांबलिनांमध्येउत्तमौतौरामजरासंधौउग्रंवीराणांभयंकरंयथास्यात्तथायुयुधातेयुद्धंचक्रतुः ॥ ३५॥ तौरामजरासंधौतत्रआयोधनमंडलेसर्वगिर्यादीन्समीपस्थानितिशेषः संचूर्ण्यचूर्णयित्वापुरुमहत्नियुद्धंमुष्टियुद्धंचक्रतुःदीर्घंबहुकालवर्तिएतयोःतन्नियुद्धंसमंसमानमभूत् कथंभूतयोःवज्रादपिदृढांगतमयोःकठिणांगश्रेष्ठयोःनितांतंबलिनोः ॥ ३६ ॥ अंबुजलोचनस्यकृष्णस्यशंखरवंशंखध्वनिंयुध्यतीतियुध्यन्तंरिपुंशत्रुंराजानंई

शोच्यां दशामुपगतेषु नृपेषु सर्वेष्वात्तायुधेषु हरिणा युधि विद्रवत्सु ॥ नानायुधाढ्यमपरं रथमुग्रवीर्यमारुथाय मागधपतिः प्रससार रामम् ॥ ३४ ॥ आधावतोस्य मुसलेन रथं बभंज रामो गदामुरुतरोरसि सोपि तस्य ॥ चिक्षेप तं च मुसलेन तताड रामस्तावुत्तमौ बलवतां युयुधात उग्रम् ॥ ३५ ॥ तौ चक्रतुः पुरुनियुद्धमपि स्म तत्र संचूर्ण्य सर्वगिरिवृक्षशिलासमूहान् ॥ दीर्घं नियुद्धमभवत्सममेतयोस्तु वज्राद्दृढांगतमयोर्बलिनोर्नितांतं ॥ ३६ ॥ श्रुत्वाथ शंखरवमंबुजलोचनस्य विद्रावितानपि नृपानभिवीक्ष्य रामः ॥ युध्यंतमीक्ष्य च रिपुं ववृधे बलेन त्यक्त्वा रिपुं मुसलमादद आश्वमोघम् ॥ ३७ ॥ तेनाहतः शिरसि संमुमुहेतिवेलं बार्हद्रथो जगृह एनमथो हली सः ॥ तत्रैकलव्य उतकृष्णशरैः पलायन्नस्त्राणि रामशिरसि प्रमुमोच शीघ्रं ॥ ३८ ॥ भीतेन तेन समरं भगवाननिच्छन् प्रद्युम्नमाश्वसृजदात्मसुतं मनोजम् ॥ प्रद्युम्न एनमभियाय महास्त्रजालै रामस्तु मागधमथात्मरथं निनाय ॥ ३९ ॥

क्ष्य बलेनशक्त्यावव्रृधेरिपुंयुध्यंतंरिपुंत्यक्त्वामुसलंआददे ॥ ३७ ॥ तेननुबलेनअतिवेलंअत्यंतंसंमुमुहेमोहंप्राप । हलीलांगलीएनंराजानं । तत्रतदाएकलव्यःकृष्णशरैराहतःपलायन्सन् रामशिरसिअस्त्राणिमुमोच ॥३८॥ तेनएकलव्येन । आत्मसुतंआदिसृष्टौस्वपुत्रंमनोजं अथोत्पत्यनंतरं ब्रह्मणःमानसात्जातंकामंप्रद्युम्नंइहप्रद्युम्ननामानंअसृजत्जनयामास । मनसइतिशेषः । प्रद्युम्नःमहास्त्रजालैःसहएनंएकलव्यंअभियायआदिवमौ रामःनिनायनिन्ये ॥ ३९ ॥ ॥ ॥

असौप्रद्युम्नःचिरंयुध्वारणमुखेस्थिरं अचंचलंअमुंएकलव्यंनिरायुधंचक्रे । एकलव्यस्य पूर्वस्वरूपमाह । अंशेनेति । पूर्वंक्तोयतंत्रकगणेषुक्रोधवशगणेषुमणिमानितिस्मनाम्ना मणिमानितिप्रसिद्धः अधिपः श्रेष्ठोयःसःमणिमान् अंशेननिषादःनिषादजातिःसन् भुवंअगात् निषादकुलेजातइतिभावः ॥ ४० ॥ कृष्णःप्रद्युम्नंआत्मनिस्वोदरेनिधायसंस्थाप्य पुनःसंहृत्यविनाश्य अक्षय्यपौरुषोप्यजःकृष्णःभूयःपुनरपि चमूंसेनांअभिविनेतुंआनेतुंबार्हद्रथंअमुचत् अमोचयत् अतएवोदारकर्मा ॥ ४१ ॥ व्रीडयाआनतं अधःकृतंअच्छविविगतकांतिमुखंयस्यसतथा तैःपराजितैःनृपैःसहितःमंदःअपटुःकर्तव्याकर्तव्यज्ञानशून्यः । मंदाल्पापटुनिर्भाग्याइत्यमरः । पापःपापात्मासबार्ह

युध्वाचिरं रणमुखे भगवत्सुतोसौ चक्रे निरायुधममुं स्थिरमेकलव्यं ॥ अंशेन यो भुवमगान्मणिमानितिस्म सक्रोधतंत्रकगणेष्वधिपो निषादः ॥ ४० ॥ प्रद्युम्नमात्मनि निधाय पुनः स कृष्णः संहृत्य मागधबलं निखिलं शरौघैः ॥ भूयश्चमूमभिविनेतुमुदारकर्मा बार्हद्रथं त्वमुचदक्षयपौरुषोजः ॥ ४१ ॥ व्रीडानताच्छविमुखः सहितो नृपैस्तैर्बार्हद्रथः प्रतिययौ स्वपुरीं स पापः ॥ अत्माभिषिक्तमपि भोजवराधिपत्ये दौहित्रमग्रत उत प्रणिधाय मंदः ॥४२॥ जित्वा तमूर्जितबलं भगवानजेशशक्रादिभिः कुसुमवर्षिभिरीड्यमानः ॥ रामादिभिः सहित आशु पुरीं प्रविश्य रेमेभिवंदितपदो महतां समूहैः ॥४३॥ वर्धत्सु पांडुतनयेषु चतुर्दशं तु जन्मर्क्षमास तनयस्य सहस्रदृष्टेः ॥ प्रत्याब्दिकं मुनिगणान्परिवेषयंती कुंती तदा स बहुकार्यपरा नयज्ञा ॥ ४४ ॥ ॥ ॥ ॥

द्रथःभोजवराणांभोजश्रेष्ठानांआधिपत्येसांम्राज्येआत्मनास्वेनअभिषिक्तंदौहित्रंदुहितुःपुत्रंउतापिपुनरपिपलायनसमयेपीत्यर्थः । अग्रतःपुरतोनिधायस्वपुरींप्रतिययौ उतापीत्यनेनआगमनसमयेपिदौहित्रंपुरतोनिधायागादितिद्रष्टव्यं ॥ ४२ ॥ कुसुमानांपुष्पाणांवर्षिभिःवर्षणशीलैःपुरांमधुरांमहतांउत्तमानां ॥ ४३ ॥ अस्मिन्कालेप्रवृत्तां पांडवकथामाह । वर्धत्स्विति । पांडुतनयेषुवर्धत्सुवर्धमानेषुसत्सु सहस्रदृष्टेःसहस्रनेत्रस्येंद्रस्यतनयस्यपुत्रस्यअर्जुनस्यप्रत्याब्दिकंप्रतिसांवत्सरिकंचतुर्दशजन्मर्क्षंजन्मनक्षत्रंयदाआस । तदातद्दिनेनयंनीतिंजानातीतिनयज्ञा बहुकार्येषुपराआसक्ताकुंतीमुनिगणान्परिवेषणकर्त्र्यास ॥ ४४ ॥ ॥ ॥

नृपतिःपांडुःपुंस्कोकिलैःपुरुषपिकपक्षिभिः आकुलितंसंकुलितंफुल्लंविकसितंपुष्पवदित्यर्थः वनंददर्श तस्मिन्वनेवसंतपवनस्यवसंतकालवायोःस्पर्शेनएधितःउद्रिक्तः पांडुःसहसाअकस्माच्छापमविचार्येत्यर्थः । कंदर्पःकामःतस्यमार्गणस्यबाणस्यवशंजगाम प्राप सौरमासानुसारेणकाचित्फाल्गुनेमासिवसंततुर्भवति ॥ ४५ ॥ अथहरिपादस्यसंगोस्यास्तीतितथाहारिभक्तइत्यर्थः । पांडुःतांमाद्रींजग्राहरत्यर्थमंगीचकार । सदनंस्थानंयातःप्राप । रतिकालेमृतस्यापिसुपुण्यैःराजभिःप्राप्यस्ययम सदनस्यप्राप्तौहरिपादसंगित्वमेवकारणमितिभावः ॥४६॥ पांडोःरतिकालेमृतिकारणात्पूर्वोक्तमुनिशापादप्यधिककारणमाह । पूर्वमिति । एषःपांडुःपूर्वपरावहनामम रुत्स्वरूपेणतस्येंद्रस्यदर्शनार्थंउपगतःसमीपंप्राप्तःसन् शच्यासहरमणंइच्छतःशक्रस्यविघ्नंरतिप्रतिबंधंचक्रे हियेनकारणेनतेनैवरतिविघ्नकरणेनैवमानुषंमनुष्यजन्मअवा

तत्काल एव नृपतिः सहमाद्रवत्या पुंस्कोकिलाकुलितफुल्लवनं ददर्श ॥ तस्मिन्वसंतपवनस्पर्शोधितः स कंदर्पमार्गणवशं सहसा जगाम ॥ ४५ ॥ जग्राह तामथ तया रममाण एव यातो यमस्य सदनं हरिपादसंगी ॥ ४६ ॥ पूर्वं शचीरमणमिच्छत एष विघ्नं शक्रस्य तद्दर्शनोपगतो हि चक्रे ॥ तेनैव मानुषमवाप्य रतिस्थ एव पंचत्वमाप रतिविघ्नमपुत्रतां च ॥ ४७ ॥ स्वात्मोत्तमेष्वथ सुरेषु विशेषतश्च स्वल्पो पि दोष उरुतामभियाति यस्मात् ॥ माद्रीपतिं नृपमवेक्ष्य रुराव दूरात्तच्छुश्रुवुश्च पृथया सह पांडुपुत्राः ॥ तेष्वागतेषु वचनादपि माद्रवत्याः पुत्रान्निवार्य तु पृथा स्वयमेव चागात् ॥ ४८ ॥ पत्युः कलेवरमवेक्ष्य निशम्य माद्र्याः कुंती भृशं व्यथितहृत्कमलैव माद्रीं ॥ धिक्कृत्य चानुमरणाय मतिं चकार तस्याः स्वनो रुदितजः श्रुत आशु पार्थैः ॥ ४९ ॥ ॥ ॥ ॥

प्य रतिस्थएवपंचत्वंमृतिंआपरतिविघ्नंआप । अपुत्रतांचऔरसपुत्ररहितत्वंआप । नन्वल्पापराधेनमहानर्थफलप्राप्तिःकथमित्यतआह । स्वात्मेति । स्वात्मोत्तमेषुस्वतः गुणोत्तमेषुस्वल्पोपिअस्वल्पोपिदोषःउरुतांफलतःमहत्त्वंअभियाति अथअतोपिस्वात्मोत्तमापराधादपिसुरेषुविपर्ययेक्तःस्वल्पोपिदोषःउरुतांअभियाति यस्मात्तस्मात्पांडोः मानुषमवाप्येत्याद्युक्तफलंयुक्तमेवेत्यर्थः ॥ ४७ ॥ रुरावरोदनंचक्रे दूरात्तद्रोदनंशुश्रुवुः । पृथातेषुपार्थेषुआगतेषुसत्सुमत्सहायेननागंतव्यमितिपुत्रान्स्वयंनिवार्य माद्रवत्या वचनादपिचनिवार्येत्यर्थः । स्वयमेवागात्शवसमीपमितिशेषः ॥ ४८ ॥ कलेवरंदेहंमाद्र्याःसकाशान्निशम्यकारणंश्रुत्वा भृशंव्यथितंहृत्कमलंहृदयपद्मंयस्याःसातादृशी सत्येवमाद्रींधिक्कृत्यविनिंद्य अनुमरणायपतिमनुमरणार्थंमतिंचकार । तस्याःकुंत्याःरुदितजःरोदनाज्जातःस्वनःरावःआशुपार्थैःकुंत्यामध्येस्थापितैःपार्थैःश्रुतः ॥ ४९ ॥

तेषुपार्थेषुविरावःरोदनशब्दःअधिकःआस । एतंविरावंसर्वेपिशुश्रुवुः । अत्रऋषिलोकमध्येयेउत्तमकृपाःतेऋषिप्रवराःअत्रआजग्मुः । पत्नीपत्न्यौनृपानुगमनायनृपमनुमरणार्थंपस्पृधातेअहमहमितिपरस्परंस्पर्धामकुर्वाते ॥ ५० ॥ सदाअवगताःज्ञाताःभागवताःभगवत्संबंधिनःउच्चधर्माःयैस्तेतथा । तेऋषिप्रवराःनिजदोषंमाद्रीकृतभर्तृमरणनिमित्तदोषंअवेक्ष्यविचार्य भर्तुःसहानुगमनंप्रतिबहुशःबहुवारंअर्थयंत्याःप्रार्थयंत्याःतस्याःमाद्रवत्याःएवंसंवादंअनुगमनसंमतिंचक्रुःकृतवंतः ॥ ५१ ॥ निजदोषमित्युक्तं दोषंनिरूपयति । भर्तुरिति । माद्र्याःभर्तुःसकाशाद्गुणैःअनधिकौनअधिकौसमौनीचौच उक्तशेषशतस्थत्वेनसाम्येपिदेवादिष्वेषुसर्वेषुप्रोक्ताअपिविशेषिणांपंचांशतोदशांशाद्वा स्वस्वजात्यापरस्परमितिवचनात् । अवांतरतारतम्यापेक्षयानीचत्वंज्ञेयं । अतएवआचार्यैःसमौनीचावित्यनुक्त्वासाधारणानाधिकपदप्रयोगःकृतः स्वतोपिस्वस्मादपिअधिकौगुणोत्तमौसुरवरौअश्विनौतनयार्थमेवपुत्रार्थमेवकृतौस्वीकृतौतेनैवपत्युःअनधिकपतिस्वीकारदोषेणैवभर्तुःमृतेःहेतुःकारणंअभूत् । माद्रीसुगुणापिसमीचीनगुणव

तेष्वागतेष्वधिकआस विराव एतं सर्वेपि शुश्रुवुरृषिप्रवरा अथात्र॥ आजग्मुरुत्तमकृपा ऋषिलोकमध्ये पत्नी नृपानुगमनाय च पस्पृधाते ॥ ५० ॥ ते सन्निवार्य तु पृथामथ माद्रवत्या भर्तुः सहानुगमनं बहुशोर्थयंत्याः ॥ संवादमेव निजदोषमवेक्ष्य तस्याश्चक्रुः सदावगतभागवतोच्चधर्माः ॥ ५१ ॥ भर्तुर्गुणैरनधिकौतनयार्थमेव माद्र्या कृतौ सुरवरावधिकौ स्वतोपि ॥ तेनैव भर्तृमृतिहेतुरभूत्समस्तलोकैश्च नातिमहिता सुगुणापि माद्री ॥ ५२ ॥ पांडोः सुता मुनिगणैः पितृमेधमत्र चक्रुर्यथावदथ तेन सहैव माद्री ॥ हुत्वात्मदेहमुरुपापमदः कृतं च संमार्ज्य लोकमगमन्निज भर्तुरेव ॥ ५३ ॥ पांडोश्च पुत्रकगुणैः स्वगणैश्च साक्षात्कृष्णात्मजः सततमस्य पदैकभक्तः ॥ लोकानवाप विमला न्महितान्महद्भिः किं चित्रमत्र हरिपादविनम्रचित्ते ॥ ५४ ॥ ॥ ॥ ॥

त्यपिसमस्तलोकैःअतिमहिताअतिशयेनपूज्यानचाभूत् ॥ ५२॥ पांडोःसुताःअत्रव्यासाश्रमेमुनिगणैःसहपितृमेधंदेहदाहादिपितृयज्ञंयथावत्उक्तविधिप्रकारेणचक्रुः । माद्रीतेनदह्यमानदेहेनसह आत्मदेहंहुत्वाअदःअस्मिन्जन्मनिकृतंउरुअल्पप्रायाश्चित्तेनापरिहार्यंपापंअश्विनिसंबंधजन्यपापजन्यभर्तृमृतिहेतुरूपपापंसंमार्ज्यनिरस्य निजभर्तृलोकमेवागमत् । वरंसमाश्रितापातिनित्याद्युक्तदेहहानिप्रायश्चित्तमेवेत्यवगंतव्यं ॥ ५३ ॥ ननु इंद्रापराधेनअशुचित्वावसरेमृतस्यपांडोःउत्तमलोकप्राप्तिःकथमित्यत आह । पांडुश्चेति । साक्षादित्यनेनऔरसत्वंविवक्षितं । कृष्णस्यव्यासस्यआत्मजःसततंअस्यकृष्णस्यपदैकभक्तइति हेतुगर्भविशेषणमेतत्पदद्वयं । पांडुःपुत्रकगुणैःस्वगुणैश्चमहद्भिःश्रेष्ठपुरुषैःमहितान्पूज्यान् अतएवविमलान्निर्दोषान्लोकानवापेति हरिपादयोःविनम्रचित्तंमनोयस्यसतथा तस्मिन्अत्रअस्मिन्पांडौचित्रंकिंनैवेत्यर्थः॥५४॥

पुरंनागपुरंजग्मुःप्रापुः मुनींद्राःयथैववृत्तंपांडोःशापपुत्रोत्पत्त्यादिकंचप्रवृत्तंतथैवसमस्तंअवदन् । मृतंअनुजंपांडुंचावदन् ॥ ५५ ॥ नृपतौधृतराष्ट्रएवंतूष्णींस्थितेसति । नद्याःतनुजेचभीष्मेतूष्णींस्थितेसतीत्यर्थः । क्षत्तरिविदुरेउरुमोदंप्राप्तेसति उतसुयोधनमुखाःसौबलेनशकुनिनासहऊचुः । किमिति । पांडोर्मृतिःपुरातस्यैतस्ते:पूर्वंकिल तस्यपांडोःतनयाःक्वकुत्रत्याः ॥ ५६ ॥ औरसपुत्राभावेक्षेत्रजाःपुत्राःकिंनस्युरित्यतोनेत्याह । नेति पितरिमृतेसतिस्वकीयैःबांधवैःसम्यक्प्रीतिपूर्वकंनियोगंआज्ञामनवाप्यअप्राप्यविनेत्यर्थः । क्षेत्रेभार्यायांजाताःअपिअन्यस्मादितिशेषः । भवायस्वक्षेत्रंतत्संततयेयोग्यान । यद्वा पितरिमृतेनियोगमप्राप्य येभवायजनकनाथयोग्यास्ते क्षेत्रजाअपिनेत्यर्थः । तस्मादेतेपांडोःक्षेत्रजाअपिनभवंतीत्यूचुरितिभावः । गगनस्थोवायुःकौरवगणानाभाष्यसंबोधनेअभिमुखीकृत्य तेषांदुर्योधनादीनांइतिभवाययोग्यान

पांडोः सुताश्च पृथया सहिता मुनींद्रैर्नागाह्वयमगमत आशु पुरं स्वकीयम् ॥ जग्मुस्तथैव धृतराष्ट्रपुरो मुनींद्रा वृत्तं समस्तमवदन्ननुजं मृतं च ॥ ५५ ॥ तूष्णीं स्थिते च नृपतौ तनुजे च नद्याः क्षत्तर्युतात्तउरुमोदमतीव पापाः ॥ ऊचुः सुयोधनमुखाः सह सौबलेन पांडोर्मृतिः किल पुरा तनयाः क्व तस्य ॥ ५६ ॥ न क्षेत्रजा अपि मृते पितरि स्वकीये सम्यङ् नियोगमनवाप्य भवाय योग्याः ॥ तेषामितीरितवचोनुजगाद वायुराभाष्य कौरवगणान् गगनस्थ एव ॥ ५७ ॥ एते हि धर्ममरुदिंद्रभिषग्वरेभ्यो जाताः प्रजीवति पितर्युरुधर्मसाराः ॥ शक्याश्च नैव भवतां क्वचिदप्रहाय नारायणेन सततं परिरक्षिता यत् ॥ ५८ ॥ वायोरदृश्यवचनं परिशंकमानेष्वाविर्बभूव भगवान्स्वयमब्जनाभः ॥ व्यासस्वरूप उरुसर्वगुणैकदेह आदाय तानगमदाशु च पांडुगेहं ॥ ५९ ॥ ॥ ॥ ॥

त्यादिईरितवचःअन्वेवसहैवजगाद ॥ ५७ ॥ किमिति । उरुउत्कृष्टोभगवान्तत्प्रीतिकरंधर्मोयेषांतेतथा अतएवसाराःश्रेष्ठाएतेपार्थाःभिषग्वरावश्विनौधर्मादिभ्यःपितरि पांडोःप्रजीवतिप्रकृष्टेनज्ञानावयवपटुतरेणजीवतिसति । जाताइतिहिश्रुतिःभारतादिषुप्रसिद्धिः । भवतांअप्रहायपरित्यागायक्वचित्नैवशक्याः कुतःनारायणेनभवतांपिताम हव्यासेनसततं मूलरूपेअवतारेमुक्तौचपरिरक्षिताः यद्यस्मात्तस्मादित्यर्थः ॥ ५८ ॥ परिशंकमानेषुअदृश्यवाक्यकरणेकिंस्यादितिपरिशंकमानेषुसत्सुव्यासःतानपार्था नादायगृहीत्वा ॥ ५९ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तेनव्यासेनस्वीकृतेषुसत्सु वैचित्रवीर्येणधृतराष्ट्रेणसहिताःकुंत्यासहकुंतीसहितानित्यर्थः । सर्वान्पंचपार्थान्परिपूज्ययदाजगृहुःस्वीकारंचक्रुः । तदाभृशंयथास्यात्तथा आर्तादुःखिताबभूवुरित्यर्थः ॥ ६० ॥ कृपतःकृपाचार्यात्तत्रतेषुकुमारेषुविविधाःबहुप्रकाराःबालचेष्टाःबालक्रीडाःकुर्वत्सुसत्सु वायुतनयेनजिताःपराजिताः ॥ ६१ ॥ पराभवंदर्शयति पक्वेति । पक्वानिउरूणिश्रेष्ठानिभोज्यानिभक्ष्याणिफलानितेषांसंनयनायआनयनायभक्षणायच वृक्षतलेवृक्षस्याधोभागेउरुयथातथा पादप्रहारंप्रदाय फलैः साकंकुमारेषुविनिपतत्सुसत्सु फलानिस्वयंअभुक्तभक्षितवान् ॥६२॥ युद्धेदंडादिनाक्रीडायुद्धेवाग्युद्धेवा नियुद्धेमुष्टियुद्धे धावनेपलायने उत्प्लवेऊर्ध्वउड्डीने निम्नभूम्युड्डीने वा वारिप्लवेबाहुभ्यांजलप्लवनेचसहितान् एकत्रमिलितान्निखिलान्कुमारान्एकःतरसाजवेनजिगाय कथंभूतःआर्यपूज्यंकर्मयस्यसतथा । ननु भीमस्यसर्वजयशक्तिःकुत

तत्स्वीकृतेषु सकला अपि भीष्ममुख्या वैचित्रवीर्यसहिताः परिपूज्य सर्वान् ॥ कुंत्या सहैव जगृहुः सुभृशं तदार्ता वैचित्रवीर्यतनयाः सहसौबलेन ॥ ६० ॥ वैचित्रवीर्यतनयाः कृपतो महास्त्राण्यापुश्च पांडुतनयैः सह सर्वशास्त्रम् ॥ पुत्राश्च तत्र विविधा अपि बालचेष्टाः कुर्वत्सु वायुतनयेन जिताः समस्ताः ॥ ६१ ॥ पक्वोरुभोज्यफलसंनयनाय वृक्षेष्वारूढराजतनयानभिवीक्ष्य भीमः ॥ पादप्रहारमुरुवृक्षतले प्रदाय साकं फलैर्विनिपतत्सु फलान्यभुंक्त ॥ ६२ ॥ युद्धे नियुद्ध उत धावन उत्प्लवे च वारिप्लवे च निखिलान्सहितान्कुमारान् ॥ एको जिगाय तरसा परमार्यकर्मा विष्णोः सुपूर्णसदनुग्रहतः सुनित्यात् ॥ ६३ ॥ सर्वान्प्रगृह्य विनिमज्जति वारिमध्ये श्रांतान्विसृज्य हसति स्म स विष्णुपद्यां ॥ सर्वानुदूह्य च कदाचिदुरुप्रवाहां गंगां स तारयति सारसुपूर्णपौंस्यः ॥ ६४ ॥ द्वेषं व्यूते नहि हरौ तमसि प्रवेशः प्राणे च तेन जगतीमनु तौ प्रपन्नौ ॥ तत्कारणान्यकुरुतां परमौ करांसि देवद्विषां सततविस्तृतसाधुपौंस्यौ ॥ ६५ ॥ ॥ ॥ ॥ ॥ ॥

इत्यतआह । विष्णोरिति । सुनित्यात्निरंतरंविद्यमानात् ॥ ६३ ॥ सारंश्रेष्ठंसुपूर्णपौंस्यं पौरुषंयस्यसतथासभीमः ॥ ६४ ॥ ननु भीमःइदंकिमर्थंकृतवानित्यतआह । द्वेषमिति । देवद्विषां असुराणां हरौप्राणेचमुख्यप्राणेच । द्वेषंकृतेतमसिप्रवेशोनहि नैवभवेत् हियतःतेनकारणेनतौहरिवायूजगतींपृथ्वींअनुसृत्यप्रपन्नौप्राप्तौ सततंअविच्छिन्नंविस्तृतंपूर्णंसाधुनिर्दुष्टं वरंमंत्रसामर्थ्योपाधिरहितंस्वाभाविकमित्यर्थः । पौंस्यंबलंययोस्तौतथा अतएवपरमौश्रेष्ठौकृष्णभीमौतस्यद्वेषस्यकारणानिकरांसिकर्माणिअकुरुतांसंचक्रतुः ॥ ६५ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तस्यभीमस्यअथमंत्रंविचारंअमंत्रयन्विचारयामासुः ॥ ६६ ॥ तत्रतेषुमध्येयेयेनरदेवानांराज्ञांसुताःसुरांशाःदेवावताराःतेतेनिखिलाःसुरांशाःपवनजेभीमेनरदेववंशेराजकुलेजाताःदितिजाःतान्तान्सुरांशान्विहायविचार्यविचारंकृत्वा अस्यभीमस्य ॥ ६७ ॥ विचार्येत्युक्तंविशदयति । अस्मिन्निति । अस्मिन्भीमेअयंभीमःयतोबलाढ्यः अतःबलात्शारीरबलान्निहंतुंशक्योनच छद्मप्रयोगतःमंत्रौषधादिछद्मप्रयोगात्इमंभीमंविनिहत्यपार्थअर्जुनंवीर्यात्पराक्रमात्निहत्य अन्यान्युधिष्ठिरादित्रीन्निगडेशृंखलायांविदध्महेकुर्मः ॥ ६८ ॥ एवंकृतेसतिअस्यदुर्योधनस्यनिहतकंटकंनिष्कंटकंराज्यंभवेत् । ततःविचारितस्यअन्यथाकरणात्तस्यनिष्कंटराज्यंनस्यादित्यर्थः । तस्मिन्भीमेसुरेंद्रसूनावर्जुनेशेषाःयुधिष्ठिरादित्रयःसौबल्याःगांधार्याः ॥६९॥ शुक्रेणगिरीशात्तत्प्रसादलब्धंसुबलात्मजेनशकुनिनाप्रतोष्यसंतोषंप्रापयित्वा अमुतःशुक्रात्प्राप्तांअंतकाभंमृत्युसदृशांविषंमरुत्तनयाय भीमायअदुःददुः ॥ ७० ॥ बलवान्सभीमःराजतनयैःसहसंमंत्र्यविचार्य धृतराष्ट्रजैःस्वसूदमुखतःस्वपाककर्तृद्वाराअखिलभक्षभोज्यंसंयोज्यदत्तंभक्षार्थंआत्मनेदत्तंतद्विषंयुयुत्सोःधृतराष्ट्रपुत्रात्युयुत्सोर्मुखतःज्ञात्वापिप्रभक्ष्येतिशेषः । विष्णोरनुग्रहबलतःजरयांचकारजीर्णंचकार ॥७१॥ ॥

दृष्ट्वामितान्यथ करांसि मरुत्सुतेन नित्यं कृतानि तनया अखिलाश्च राज्ञाम् ॥ तस्यामितं बलमुदीक्ष्य सदोरुवृद्ध
द्वेषा बभूवुरथ मंत्रममंत्रयंश्च ॥ ६६ ॥ ये ये हि तत्र नरदेवसुताः सुरांशाः प्रीतिं परां पवनजे निखिला अकुर्वन् ॥
तांस्तान्विहाय दितिजा नरदेववंशजाता विचार्य वधनिश्चयमस्य चक्रुः ॥६७॥ अस्मिन्हते विनिहता अखिलाश्च
पार्थाः शक्यो बलाच्च न निहंतुमयं बलाढ्यः ॥ छद्मप्रयोगत इमं विनिहत्य वीर्यात्पार्थं निहत्य निगडे च विद
ध्महेन्यान् ॥ ६८ ॥ एवं कृते निहतकंटकमस्य राज्यं दुर्योधनस्य तु भवेन्न ततोन्यथा स्यात् ॥ अस्मिन्हते नि
पतिते च सुरेंद्रसूनौ शेषा भवेयुरथ सौबलिपुत्रदासाः ॥ ६९ ॥ एवं विचार्य विषमुल्बणमंतकाभं क्षीरोदधेर्मथनजं
तपसा गिरीशात् ॥ शुक्रेण लब्धममुतः सुबलात्मजेन प्राप्तं प्रतोष्य मरुतस्तनयाय चादुः ॥ ७० ॥ संमंत्र्य रा
जतनयैर्धृतराष्ट्रजैस्तु दत्तं ससूदमुखतो खिलभक्ष्यभोज्ये ॥ ज्ञात्वा युयुत्सुगदितं बलवान्स भीमो विष्णोरनु
ग्रहबलाज्जरयांचकार ॥ ७१ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

हरिपादाज्जातंतोयंगंगाजलमित्यर्थः ॥ तस्मिन्प्रासादंगृहविशेषंविदधुःचक्रुः मारुतिःधृतराष्ट्रपुत्रैःअमासहअत्रप्रासादेस्वयंअंतेसुष्वापशिश्ये ॥ ७२ ॥ किंकर्तुं विचित्रवीर्यपुत्रात्मजेषुदुर्योधनादिषुदोषान्प्रकाशयितुमेवदुर्योधनाद्याःनृवरंमनुष्यश्रेष्ठंप्रतिसुप्तंतंभीमंईक्ष्य अभिमंत्रणदृढैःअयसालोहविशेषेणकृतैःनिर्मितैःपाशैःबध्वाहरिपादजायाःगंगायाः तोयेजलेविचिक्षिपुः ॥ ७३ ॥ भीमःकोटियोजनैःकोटिसंख्याकयोजनैःगभीरंगह्वरंतत्उदंविगाह्यप्राप्य । यद्वा कोटिःप्रकृष्टंयोजनंगंभीरंयोजनमात्रगंहरंउदंविगाह्य । कोटिरग्रेप्रकर्षेचसंख्याचापाग्रयोरपीत्यभिधानं । विजृंभणतएवविजृंभणमात्रोदेवपाशान्विश्लिष्यछित्त्वा उत्तीर्यजलंतीर्त्वाकूलंप्राप्येत्यर्थः । सज्जनगण

जीर्णे विषे कुमतयः परमाश्रितस्ताः प्रासादमाशु विदधुर्हरिपादतोये ॥ ज्ञात्वा युयुत्सुमुखतः स्वयमत्र चांते सुष्वाप मारुतिरमा धृतराष्ट्रपुत्रैः ॥ ७२ ॥ दोषान्प्रकाशयितुमेव विचित्रवीर्यपुत्रात्मजेषु नृवरं प्रति सुप्तमीक्ष्य ॥ बध्वाभिमंत्रणदृढैरयसा कृतैस्तं पाशैर्विचिक्षिपुरुदे हरिपादजायाः ॥ ७३ ॥ तत्कोटियोजनगभीरमुदं विगाह्य भीमो विजृंभणत एव विशृङ्खय पाशान् ॥ उत्तीर्यसज्जनगणस्य विधाय हर्षं तस्थावनंतगुणविष्णुसदातिहार्दः ॥ ७४ ॥ तं वीक्ष्य दुष्टमनसोतिविपण्णचित्ताः संमंत्र्य भूय उरुनागगणानथाष्टौ ॥ शुक्रोक्तमंत्रबलतः पुर आह्वयित्वा पश्चात्सुपंजरगतान् प्रददुः स्वसूते ॥ ७५ ॥ दुर्योधनेन पृथुमंत्रबलोपहूतांस्तत्सारथिः फणिगणान्पवनात्मजस्य ॥ सुप्तस्य विस्तृतउरस्यमुचद्विशीर्णदंता बभूवुरमुमाशु विदश्य नागाः ॥ ७६ ॥ ॥ ॥ ॥ ॥ ॥

स्यहर्षंविधायतस्थौ कथंभूतःअनंतगुणश्चासौविष्णुश्चतस्मिन्सदाअतिहार्दः । अतिशयाभक्तिर्यस्यसतथा । विष्णुपदातीतिवापाठः ॥ ७४ ॥ तंभीमंविपन्नंदुःखितमित्यर्थः । चित्तंमनोयेषांतेतथासंतःभूयःपुनःसंमंत्र्यविचार्य अथशुक्रोक्तमंत्रबलतःशुक्राचार्योपदिष्टमंत्रसामर्थ्येनअष्टौअनंतोवासुकिःपद्मोमहापद्मश्चतक्षकःकर्कोटकःशंखपालोमहाशंखइत्यष्टसंख्यान्उरून्श्रेष्ठान्नागगणान् । पुरःपुर्याःनागपुरस्यसमीपेआह्वयित्वा पश्चादनंतरं सुपंजरगतान्पंजरस्थान्कृत्वा सूतेदुर्योधनसारथिवरेप्रददुःस्म ॥ ७५ ॥ पृथुःवीर्यवान्सचासौमंत्रश्चतथा । तस्यबलेनउपहूतानानीतान्उरसिवक्षसिअमुंचन् नागाःअमुंभीमम् ॥ ७६ ॥ ॥ ॥

अपहस्ततःहस्तपृष्ठभागेनतल्पातशयनात्उत्थितएवसुष्वापशिश्ये ॥ ७७ ॥ अप्रतिमंअप्रतिद्वंद्वंतस्यभीमस्यएतत्पूर्वोक्तंनैजंबलंस्वाभाविकंवलंनिरीक्ष्य अधिकंयथास्या तथा विषेदुःविषादंप्रापुः । नरेंद्रपुत्राःएवमनेनप्रकारेणसंमंत्र्यविचार्य अथहरेश्चकृष्णस्यापिबहुप्रतीपंप्रतिकूलंचक्रुरित्युत्तरपंचमश्लोकेनसंबंधः । एवंसंमंत्र्येत्युक्तंविशदयति निश्वासतइत्यादिना । येषांनागानांनिश्वासतःश्वासमात्रात्दर्शनादपिभुवनानिभस्मभूयासुः तेनागाःमृषाव्यर्थाघमाआसन् ॥ ७८ ॥ मृषेत्युक्तंविशदयति । दाढ्भिरिति । भुजंगमवराःसर्पश्रेष्ठाःसुप्रयत्नाअपिअतिप्रयत्नवंतोपिदाढ्भिःदंतैःविदश्य अमुष्यभीमस्यविकारंक्षतमोहादिविकारंकर्तुंनशेकुःसमर्थानबभूवुः ईदृशबलंभीमसदृशबलंक स्यापिश्रुतपूर्वंनासीत् । द्रष्टुंकिमुस्मकस्यंस्यादित्यर्थः । हिरण्यकस्यहिरण्यकशिपोःतनयेपिप्रल्हादेपिईदृशंश्रुतपूर्वंनासीदित्यर्थः ॥ ७९ ॥ श्रुतपूर्वमित्युक्तंविवृणोति ।

क्षिप्त्वा सुदूर उरुनागगणानथाष्टौ तद्दंशजान्सुविनिहत्य पिपीलिकावत् ॥ जघ्ने च सूतमपहस्तत एव भीमः सुष्वाप पूर्ववदनुत्थित एव तल्पात् ॥ ७७ ॥ तत्तस्य नैजबलमप्रतिमं निरीक्ष्य सर्वे क्षितीशतनया अधिकं विषेदुः ॥ निःश्वासतो दर्शनादपि भस्म येषां भूयासुरेव भुवनानि च ते मृषासन् ॥ ७८ ॥ दाढ्भिर्विदश्य न विकारममुष्य कर्तुं शेकुर्भुजंगमवरा अपि सुप्रयत्नाः ॥ कस्यापि नेदृशबलं श्रुतपूर्वमासीद्द्रष्टुं किमु स्म तनयेपि हिरण्यकस्य ॥ ७९ ॥ स्वात्मावनार्थमधिकां स्तुतिमेव कृत्वा विष्णोः स दैत्यतनयो हरिणावितोभूत् ॥ नत्वौरसं बलममुष्य स कृष्यते हि भृत्यैर्बलात्स्वपितुरौरसमस्य वीर्यम् ॥ ८० ॥ नैसर्गिकप्रियमिमं प्रवदन्ति विप्रा विष्णोर्नितान्तमपि सत्यमिदं ध्रुवं हि ॥ नैवान्यथौरसबलं भवतीदृशं तदुत्साद्य एव हरिणैव सहैष नोर्थः ॥ ८१ ॥ ॥ ॥ ॥

स्वात्मेति । सदैत्यतनयःप्रल्हादःस्वात्मनःअवनार्थंरक्षणार्थंअधिकांस्तुतिंकृत्वाहरिणाआवितःरक्षितोभूत् सप्रल्हादःस्वपितुःभृत्यैर्बलात्कृष्यतेहियस्मात्तस्मात्अमुष्यप्रल्हादस्यऔरसंस्वाभाविकंबलंन अस्यभीमस्यवीर्यंऔरसंस्वाभाविकं ॥ ८० ॥ इमंभीमंविष्णोर्नितांतंनैसर्गिकमिमं प्रियत्ववैपरीत्येनईदृशंऔरसंनिरुपाधिकप्रियमितिप्रवदंति । इदंविप्रवाक्यंध्रुवंनिश्चयेनसत्यमपिसत्यमेवहिप्रसिद्धिः अन्यथानैसर्गिकबलंनैवभवतिभीमस्येतिशेषः । तत्तस्माद्धरिणासहएषःभीमःउत्साद्यःविनाश्यएव सएवतयोर्विनाशएवेत्यर्थः । नोस्माकंअर्थःप्रयोजनं ॥ ८१ ॥ ॥ ॥ ॥ ॥

नतु लोकांतरस्थहरेःउत्सादनंकथंस्यादित्यतआह । कृष्णइति । यदुषुप्रजातःएषःकृष्णःहरिश्चहरिरेवकिल । सकृष्णःअस्यभीमस्यआश्रयःतस्यकृष्णस्यबहुप्रतीपंवैरं कुरुतकुरुध्वं एवंसंमंत्र्यप्रतीपंचक्रुरितिसंबंधः ॥ ८२ ॥ तैःअसुरांशराजकुमारैःप्रेरिताःनृपतयःतेषांकुमाराणांपितरोनृपाश्चबृहद्रथसुतेनसाकंयुद्धायहरेःसकाशंजग्मुः । अमुनाकृष्णेनअष्टादशेषुअष्टादशसंख्याकेषुयुद्धेषुबलंचदर्पोगर्वश्चबलस्यदर्पोवामदःअनवधानताभग्नाःबलदर्पमदाःयेषांतेतथासंतःनिवृत्ताःपराव्रत्ययुः ॥ ८३ ॥ उक्तमेवार्थंविशदयति । तेनेति । तेनकृष्णेनआगृहीताःअपहृताःगजादयोयेषांतेतथा नितांतंशस्त्रैःपरिक्षततनूभिःविदारितावयवैःअलंरक्तंवमंतःविगतशस्त्रादिसूतायेषांतेतथा

कृष्णः किलैष च हरिर्यदुषु प्रजातः सोऽस्याश्रयः कुरुत तस्य बहुप्रतीपम् ॥ संमन्त्र्य चैवमतिपापतमा नरेन्द्रपुत्रा हरेश्च बहु चक्रुरथ प्रतीपम् ॥ ८२ ॥ तैः प्रेरिता नृपतयः पितरश्च तेषां साकं बृहद्रथसुतेन हरेः सकाशम् ॥ युद्धाय जग्मुरमुनाष्टदशेषु युद्धेष्वत्यन्तभग्नबलदर्पमदा निवृत्ताः ॥ ८३ ॥ तेनागृहीतरथवाजिगजा नितांतं शस्त्रैः परिक्षततनूभिरलं वमंतः ॥ रक्तं विशस्त्रकवचध्वजवाजिसूताः स्रस्तांबरा श्लथितमूर्धजिनो निवृत्ताः ॥ ८४ ॥ एवं बृहद्रथसुतोऽपि सुशोच्यरूप आर्तो ययौ बहुश एव पुरं स्वकीयं ॥ कृष्णेन पूर्णबलवीर्यगुणेन मुक्तो जीवेत्यतीव विजितः श्वसितावशेषः ॥ ८५ ॥ एवं गतेषु बहुशो नतकंधरेषु राजस्वजोऽपि मथुरां स्वपुरीं प्रविश्य ॥ रामेण सार्धमखिलैर्यदुभिः समेतो रेमे रमापतिरचिंत्यबलो जयश्रीः ॥ ८६ ॥ व्यर्थोद्यमाः पुनरपि स्म सधार्तराष्ट्रा भीमं निहंतुमुरु यत्नमकुर्वताज्ञाः ॥ राज्ञां सुतास्तमखिलं स मृषैव कृत्वा चक्रे जयाय च दिशां बलवान् प्रयत्नम् ॥ ८७ ॥ ॥

स्रस्तांबराःमुक्तवस्त्राःश्लथिताःविस्रस्ताःमूर्धजाःकेशाःविद्यंतेयेषांतेतथा एवंभूताःसंतःनिवृत्ताइत्यर्थः ॥ ८४ ॥ सुशोच्यंअतिशोकार्हंरूपंयस्यसतथा । आर्तःपीडितःपूर्णंचतेबलवीर्येचतएवगुणायस्यसतथा तेनकृष्णेनजीवेतिमुक्तःविजितःपराजितःश्वसितंश्वासःअवशेषोयस्यसतथा । बहुशः ॥ ८५ ॥ नताःअधःकृताःकंधरायेषांतेतथा । तेषुजयलक्षणाश्रीःसंपद्यस्यसतथा ॥ ८६ ॥ धार्तराष्ट्रैःसहवर्तमानाःराज्ञांसुताःव्यर्थोद्यमाअपिनष्टप्रयत्नवंतोऽपि पुनःभीमंनिहंतुंउरुयत्नंअकुर्वतकृतवंतः अतएवअज्ञाःविवेकशून्याःबलवान्सभीमः अखिलंतंवधोद्योगंमृषैवव्यर्थमेवकृत्वा दिशांविजयायदिग्विजयार्थंप्रयत्नंचक्रे ॥ ८७ ॥ ॥ ॥

प्रथमंआदौप्राचींदिशंपूर्वदिशंपश्चादनंतरंयाम्यांदाक्षिणदिशंजलेशेनवरुणेनपरिपालितयाप्रतीच्यासहअन्यांउत्तरदिशंजिगाय यौपुरातनौचतौदशाननकुंभकर्णौ चपूर्वयौराव णकुंभकर्णावित्यर्थः । इदानींमातुःकुंत्याःस्वसायाःस्वसुर्भगिन्याःतनयतांपुत्रत्वंगतौप्राप्तौजिगाय ॥ ८८ ॥ तयोःरावणकुंभकर्णयोर्मध्येपूर्वज्येष्ठोरावणःदमघोषनृपस्यसु तःसन्प्रजातःनृपतयःयंदमघोषसुतंशिशुपालनाम्नाआहुः प्रवदंतिआकारयंतीत्यर्थः । अन्यंशिशुपालादन्यंकरूशविषयाणांनृपंराजानंअन्यंमातृष्वसातनयंशिशुपालमा तुःसकाशादन्यायामातृष्वसायाकुंत्याःस्वसुःतनयंदंतवक्रमितिप्रवदंति शिशुपालदंतवक्रयोःमातरौभीममातृष्वसारावितिभावः ॥ ८९ ॥ तौशिशुपालदंतवक्रौशौरेःवसुदेव स्यसुतंपौंड्काख्यंअथभीष्मकस्यसुतंरुग्मिणं पूर्वदितिजःअसुरइत्यर्थः । नरहानरघ्नःराक्षसइत्यर्थः । इल्वलाख्योयःआस सरुग्मीतिनामप्रसिद्धःसन् कुंडिनेशःकुंडिनवि

प्राचीं दिशं प्रथममेव जिगाय पश्चाद्याम्यां जलेशपरिपालितया सहान्यां ॥ यौ तौ पुरातनदशाननकुंभकर्णौ
मातृष्वसातनयतां च गतौ जिगाय ॥ ८८ ॥ पूर्वस्तयोर्हि दमघोषसुतः प्रजातः प्राहुश्च यं नृपतयः शिशुपालनाम्ना
अन्यं वदंति च करूशनृपं तथान्यमातृष्वसातनयमेव च दंतवक्रं ॥ ८९ ॥ जित्वैव तावपि जिगाय च पौंड्काख्यं
शौरेः सुतं सुतमजैद्य भीष्मकस्य ॥ यः पूर्वमास दितिजो नरहेल्वलाख्यो रुग्मीति नाम च बभूव सकुंडिनेशः ॥
॥ ९० ॥ भागे तएव त नयस्य स एव वन्हेर्नाम्नाशुचेः स तु पितास्य हि मित्रभागः ॥ राहुंशयुक्तदनुजौ क्रथकौ
शिकाख्यौ भागौ तथाग्निसुतयोः पवमानशुंध्योः ॥ ९१ ॥ बंधोर्निजस्य तु बलं सुपरीक्षमाणः शल्योपि तेन युयुधे
विजितस्तथैव ॥ भीमो जिगाय युधि वीरमथैकलव्यं सर्वेनृपाश्च विजिता अमुनैवमेव ॥ ९२ ॥ ॥

षयेनृपोबभूव ॥ ९० ॥ सएवरुग्मीवन्हेःप्रधानाग्नेः तनयस्यनाम्नाशुचेःभागेनअंशेनइतःयुक्तःइल्वलःशुचेर्भागतःसन् नाम्नारुग्मीतिभीष्मकसुतोबभूवेतिभावः । अस्य रुग्मिणःसपूर्वोक्तःपितामित्रभागःमित्राख्यदेवांशःहितथाराहोःअंशयुक् । राहुरुग्भीष्मकोमित्रइतिवचनात् । तथातस्यभीष्मकस्यअनुजौक्रथकौशिकाख्यौअग्निसुतयोः पवमानश्वशुंधिश्चपवमानशुंधीतयोःतथाभागौअंशभूतौ ॥ ९१ ॥ प्रकृतमनुसरति । बंधोरिति । निजस्यबंधोःस्वबांधवस्यभीमस्यतेनभीमेनयुयुधे तथैवशिशुपालादिवत् विजितःपराजितोभूत् । एवमेवअनेनप्रकारेणअमुनाभीमसेनेनविजिताश्च ॥ ९२ ॥ ॥ ॥ ॥ ॥

अथशब्दःकथांतरद्योतकः कृष्णःऔपगविंउपगवाख्ययादवा .त्यंउद्धवंगोकुलायसंप्रेषयन्सन् इदंउवाच किमिति । अरेभोउद्धवमदीयैःवचोभिःममविरहाद्वियोगा तुजातंनंदादीनांदुःखंविनाशय आशुयाहिगच्छेतिसंबंधः ॥ १०५ ॥ अहंतनुभृतांदेहधारिणांअंतरेहृत्कमलेनिहितःस्थितोयस्मात्तस्मात् इहजगतिकस्याचिदपिहिनःमत्तः मद्वियोगोनास्त्येव । अहंमनुष्यइतिवःयुष्माकंबुद्धिःकुत्रचकुत्रापिनास्तुनस्यात् कुतःहियस्मात्निर्मलतमंअतिशुद्धंब्रह्मैवेतिमांप्रवदंतिवेदविदोगर्गाद्याइतिशेषः । तस्मा न्नोस्त्वितिसंबंधः ॥ १०६ ॥ पूर्वंयदाअजगरःनंदंनिजगारागिलितवान् । तस्यनंदस्यविमोक्षणायसर्वेगोपाःनशेकुः तदाममपादस्यसंस्पर्शतःसोजगरःअतिदिव्यःअभू

कृष्णोथ चौपगविमुक्तमनीतियुक्तं संप्रेषयन्निदमुवाच ह गोकुलाय ॥ दुःखं विनाशय वचोभिररे मदीयैर्नंदादिनां वि रहजं मम चाशु याहि ॥ १०५ ॥ मत्तो वियोग इह कस्यचिदस्ति नैव यस्मादहं तनुभृतांनिहितोंतरेव ॥ नाहं मनु ष्य इति कुत्र च नोस्तु बुद्धिर्ब्रह्मैव निर्मलतमं प्रवदंति मां हि ॥ १०६ ॥ पूर्वं यदा ह्यजगरो निजगार नंदं सर्वे नशे कुरथ तत्प्रविमोक्षणाय ॥ मत्पादसंस्पर्शतः स तदातिदिव्यो विद्याधरस्तदुदितं निखिलं स्मरंतु ॥ १०७ ॥ पूर्वं स्व रूपमदतः प्रजहास विप्रान् नित्यं तपःकृशतरांगिरसो विरूपान् ॥ तैः प्रापितः सपदि सोजगरत्वमेव मत्तो निजां तनुमवाप्य जगाद नंदं ॥१०८॥ नायं नरो हरिरयं परमः परेभ्यो विश्वेश्वरः सकलकारण आत्मतंत्रः ॥ विज्ञाय चैनमुरुसंसृतितो विमुक्ता यांत्यस्य पादयुगलं मुनयो विरागाः ॥ १०९ ॥ ॥ ॥ ॥ ॥

त्तमःविद्याधरोभूत् तेनविद्या.धरेणउदितंनिखिलंस्मरंतु ॥ १०७ ॥ विद्याधरस्यअजगरत्वप्राप्तिःकुतइत्यतआह । पूर्वमिति । पूर्वंसविद्याधरःरूपमदतः सौंदर्यमदात् नित्यंतपसःतपश्चरणादित्यर्थः । कृशतरानातिशयेनकृशानांगिरसःअंगिरसःपुत्रान्विरूपान् विकाररूपान्विप्रान्प्रजहास । तैःविप्रैःसपदिशीघ्रंअजगरत्वंसर्पस्वरूपंप्रा पितोविद्याधरः मत्तएवनिजांतनुंविद्याधरस्वरूपंअवाप्य नंदंजगादयत्तत्स्मरंत्वित्यर्थः॥ १०८ ॥ किमितिजगादेत्यतआह । नायमिति । अयंकृष्णःनरोन किंतुसक लानांसृष्ट्यादीनांकारणहेतुःविरागाःविरक्ताःमुनयःउरुउत्कृष्टंयथाभवतितथाएनंविज्ञाय संसृतितःसंसाराद्विमुक्ताःसंतःअस्यकृष्णस्यउरुसंसृतितइत्येकंवापदं उरुकालस्थ संसारात् ॥ ९ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

वरुणस्यदूतःभृत्योसुरःस्नानकालेनंदंयदाजगृहे तत्रापितदैवजलपतेर्वरुणस्यगृहंयांतंप्राप्तंमांवारिपतिःमांसंपूज्यनंदंविमुंच्य हेनंदेतिशेषः । अयंकृष्णःतवसुतोन किंप्रसिद्धःपरमःपुमान्उत्तमपुरुषोहरिःएषःकृष्णःइतियदाहतदपिस्मरंत्वित्यर्थः॥ ११०॥मयाविकुंठलोकंदर्शयेतिप्रार्थितेनमयागोजीविनांगोपानांविकुंठलोकःसंदर्शितोननु अजेमयिमानुष्यबुद्धिंअपनेतुंप्रवराअतिश्रेष्ठामदीयास्थितिरपिवर्तमानमपिसंदर्शितायस्मात्तस्मान्मयिस्थितिं मनःस्थैर्यंअवाप्यशमंदुःखशांतिंप्रयांतु ॥ १११ ॥ पुंसःपुरुषा

नंदं यदा च जगृहे वरुणस्य दूतस्तत्रापि मां जलपतेर्गृहमाशु यांतं ॥ संपूज्य वारिपतिराह विमुच्य नंदं नायं सुतस्तव पुमान्परमः स एषः ॥ ११० ॥ संदर्शितो ननु मयैव विकुंठलोको गोजीविनां स्थितिरपि प्रवरा मदीया ॥ मानुष्यबुद्धिमपनेतुमजे मयि स्म तस्मान्मयि स्थितिमवाप्य शमं प्रयांतु ॥ १११ ॥ श्रुत्वोद्धवो निगदितं परमस्य पुंसो वृंदावनं प्रति ययौ वचनैश्च तस्य ॥ दुःखं व्यपोह्य निखिलं पशुजीवनानामायात्पुनश्चरणसन्निधिमेव विष्णोः॥११२॥
इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारत तात्पर्यनिर्णये चतुर्दशोध्यायः ॥ १४ ॥ ॥

न्निगदितंउक्तंश्रुत्वाययौ । तस्यकृष्णस्यवचनैःपशुजीविनानांनंदादिगोपानांदुःखंव्यपोह्यपरिवृत्यपुनःपरावृत्य विष्णोःश्रीकृष्णस्यचरणयोःसन्निधिंसमीपंआयात्आययौ ॥ ११२ ॥ यंगंगाजमद० ॥ पूर्तिंतस्यकृतौचतुर्दशइहाध्यायःसतांमोददःश्रीमद्भारत० ॥ १४ ॥ इति श्रीमन्महाभारततात्पर्यनिर्णयटीकायां पदार्थदीपिकायां चतुर्दशोध्यायः ॥ १४ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥ ॥





श्रीगुरुभ्योनमः ॥ ॐ अस्मिन्नध्याये भीमप्रभावमनुवर्णयन् पांडवकथांनिरूपयति । एवमित्यादिना । एवंस्वभक्तदुःखपरिहारादिप्रकारेणअस्मिन्कृष्णेवर्षाणांत्रितयं त थातस्मात्रिवत्सरात्परंकृष्णादनुज्ञामवाप्य हरेःकृष्णस्यसुतेनविशोकनाम्नासह स्वंस्वकीयंपुरंहस्तिनपुरंप्रत्याजग्मतुः ॥ १ ॥ विशोकःकस्यांजातइत्यतआह । सैरंध्रिके ति । सैरंध्रिकायाःत्रिवक्रायाःउदराद्गर्भादित्यर्थः भवःउत्पत्तिर्यस्यसतथा । सैरंध्रीपरवेश्मस्थास्ववशाशिल्पकारिकेत्यमरः । सविशोकःयंतासारथिःसैरंध्रिकायाःपूर्वस्व रूपमाह । येति । यापिंगलापिंगलानाम्नीगणिकाअन्यभवेपूर्वजन्मनि आत्मनिस्वस्मिन्हृत्कमलइत्यर्थः संस्थितंउरुगायंउत्तमश्लोकंकांतमिति हेतुगर्भविशेषणं प तित्वेनेत्यर्थः संस्मृत्यगणिकादेहंविहायेतिवाक्यशेषः त्रिवक्राअभूत्तस्मात्कृष्णसमागमोभूदितिभावः ॥ २ ॥ पंचरात्रविदंपंचरात्रागमवेत्तारंविशोकंपुनःकृष्णात्प्रा

ॐ एवं प्रशासति जगत्पुरुषोत्तमेस्मिन् भीमार्जुनौ तु सहदेवयुतावनुज्ञां ॥ कृष्णादवाप्य वर्षत्रितयात्पुरं स्वमाज ग्मतुर्हरिसुतेन विशोकनाम्ना ॥ १ ॥ सैरंध्रिकोदरभवः स तु नारदस्य शिष्यो वृकोदररथस्य बभूव यंता ॥ या पिंग लान्यभव आत्मनि संस्थितं तं संस्मृत्य कांतमुरुगायमभूत्रिवक्रा ॥ २ ॥ तंपंचरात्रविदमाप्य सुसारथिं स भीमो मुमोद पुनराप परात्मविद्यां ॥ व्यासात्परात्मत उवाच च फल्गुनादिदेवेषु सर्वविजयी परविद्ययैषः ॥ ३ ॥ सर्वान भागवतशास्त्रपथान्विधूय मार्गं चकार स तु वैष्णवमेव शुभ्रं ॥ क्रीडार्थमेव विजिगाय तथोभयात्मयुद्धे बलं चकर वाक्प्रभवेऽमितात्मा ॥४॥ नित्यप्रभूतसुशुभप्रतिभोपि विष्णोः श्रुत्वा परां पुनरपि प्रतिभामवाप ॥ को नाम विष्णवनुपजीवक आस यस्य नित्याश्रयादभिहितापि रमा सदा श्रीः ॥ ५ ॥ ॥ ॥ ॥

ततत्वविद्यापेक्षयापुनःपरमात्मतःउत्तमस्वरूपाद्व्यासात् परात्मविद्यांपरतत्वविद्यांआप । परविद्ययासर्वविजयीएषःभीमःस्वयंफल्गुनादिदेवेषुदेवावतारेषुउवाच । उपदि देश ॥ ३ ॥ सर्वविजयीत्युक्तंविशदयति । सर्वानिति । सभीमःसर्वान् अभागवतानांभगवदुत्कृष्टत्वाप्रतिपादकानांशास्त्राणांपथःमार्गान्विधूयनिराकृत्य शुभ्रंतुनिरवद्यत्वे नअत्युत्तमंवैष्णवं विष्णूत्कर्षप्रतिपादकंमार्गंचकार । तथाअमितःज्ञानबलादिनाअपरिमितः आत्मास्वरूपंयस्यसतथा भीमःकरवाग्भ्यांप्रभवोयस्यतत्तथातास्मिन् अ तएवउभयात्मयुद्धेक्रीडार्थमेवबलंबलभद्रंविजिगायाजितवान् ॥ ४ ॥ नित्यंप्रभूताउत्कृष्टासुशुभाअत्युत्तमाप्रतिभासामर्थ्यंयस्यसतथा तादृशोपि । भीमःविष्णोःकृष्णव्या

सात्मनोहरेःसकाशात् परांपरविद्यांश्रुत्वा पुनरपिप्रतिभांज्ञानंआप । परात्मविद्यांश्रुत्वाप्रतिभामवापेत्यनेनप्राप्तंपरोपजीवनशंकांपरिहरन्नाह । कोनामेति । उपजीवतीत्युप जीवकःनउपजीवकःअनुपजीवकःविष्णुनाअनुपजीविकः कोनामआसनकोप्यासेत्यर्थः। तदेवकैमुत्येनाह । यस्येति । रमापियस्यहरेःनित्याश्रयात् सदाश्रीरिति अभि हिताउदिता ॥ ५ ॥ भगवंतंप्रपन्नःशरणंप्राप्तोधर्मात्मजःपरमात्मनःसुतत्वविद्यांपरतत्वविद्यांउरुक्रमाभ्यांव्यासकृष्णाभ्यांशिक्षिताःअर्थाःधर्मादिपुरुषार्थायेषांतेतथा अतए वसद्धर्मचारिणःभगवद्धर्माचरणशीलाःते ॥ ६ ॥ भरद्वाजर्षेःसुतःपुत्रोद्रोणःनिजधर्मवर्तीस्वाश्रमोचितधर्मवर्तनशीलः अतएवप्रतिग्रहमुज्झतीतितथा अतएवअसंचयीप शुद्रव्यादिसंग्रहरहितःसन् यदाआसतदाद्रौणिः अश्वत्थामाधार्तराष्ट्रैःसमेत्यसंभूयक्रीडन्सन् पयःक्षीरंपातुंपानार्थंसद्मस्वगृहंउपैतिप्राप्नोति ॥ ७ ॥ माताकृपीतस्मैआश्व

व्यासादवाप परमात्मसुतत्वविद्यां धर्मात्मजोपि सततं भगवत्प्रपन्नः ॥ ते पंच पांडुतनया मुमुदुर्नितांतं सद्धर्मचारि ण उरुक्रमशिक्षितार्थाः ॥ ६ ॥ यदा भरद्वाजसुतस्त्वसंचयी प्रतिग्रहोज्झो निजधर्मवर्ती ॥ द्रौणिस्तदा धार्तराष्ट्रैः स मेत्य क्रीडन्पयः पातुमुपैति सद्म ॥ ७ ॥ तस्मै माता पिष्टमालोड्य पातुं ददाति पीत्वैति तदेष नित्यं ॥ पीतक्षीरान्धा र्तराष्ट्रान्समेत्य मया पीतं क्षीरमित्याह नित्यं ॥ ८ ॥ नृत्यंतमेनं पाययामासुरेते पयः कदाचिद्रसमस्य सोवैत् ॥ पुनः कदाचित्स तु मातृदत्ते पिष्टे नेदं क्षीरमित्याहराव ॥ ९ ॥ दृष्ट्वा रुदंतं सुतमात्मजस्य स्नेहान्नियत्यैव जनार्दनस्य ॥ संप्रेरितः कृपयाचार्तरूपो द्रोणो ययावार्जयितुं तदा गां ॥ १० ॥ ॥ ॥ ॥ ॥

त्थान्ने पिष्टंआलोड्यजलेनेतिशेषः पातुंददाति । एषोश्वत्थामातत्पिष्टोदकंनित्यंपीत्वाएतिक्रीडास्थानंप्राप्नोति । पीतंक्षीरंयैस्तेतथा तान्धार्तराष्ट्रान्समेत्यप्राप्य मयाक्षी रंपीतमित्याह॥८॥एतेधार्तराष्ट्राःनृत्यंतंनृत्यंकुर्वंतंएनंअश्वत्थामानंकदाचित्पयःक्षीरंपाययामासुः । सोश्वत्थामाअस्यक्षीरस्यरसंमाधुर्यरसंअवैत्ज्ञातवान् । रसोरागेविषेवीर्ये तिक्तादौपारदेद्रवइतियादवः । कदाचित्सोश्वत्थामापुनःपिष्टेमातृदत्तेसतिइदंत्वद्दत्तंक्षीरंनेत्याहरावअरोदीत ॥९॥ रुदंतंरुदंतंसुतंदृष्ट्वा जनार्दनस्यनियत्यैवप्रेरणयैवजा तादात्मजस्यपुत्रस्यस्नेहाज्जनार्दनस्य नियत्योत्पन्नयाकृपयाच अनुकंपयासंप्रेरितोद्रोणःआर्तरूपःपुत्ररोदनेनव्यथितमनाइत्यर्थः । प्राप्तप्रतिग्रहादार्तरूपोवातादृशःसन् गांअर्जयितुंसंपादयितुंययौ ॥ १० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

प्रतिग्रहात्सम्यक्निवृत्तःसद्रोणःरामंपरशुरामंप्रतिगामर्थयितुंययौ । कुतःहियस्माद्विष्णोःप्रतिग्रहःदोषायनभवेत्तस्मादितिसंबंधः । तदपिकुतइत्यतआह । यस्मादिति । सविष्णुः ॥ ११ ॥ जामदग्न्योपिरामःएनंद्रोणंदृष्ट्वा क्षितिभारस्यअपनोदेपरिहारविषयेहेतुमेवनिमित्तमात्रमेव । संहारकर्मणिमुख्यकर्तास्वयमेवेतिभावः । द्रोणंकर्तुंइत्यचिंतयत् इतीतिकिंनरयोनौजातानांमनुष्येष्ववतीर्णानामित्यर्थः । सुराणांहंतानाशकर्तायंद्रोणःस्यादिति ॥ १२ ॥ ननु देवावनार्थकृतावतारोरामःदेवहननंकिमर्थमचिंतयदित्यतआह । तेषामिति । पांडवार्थेहतानांतेषांसुरावताराणांवृद्धिःपांडवसहायमकृतेभ्यःस्वसमानदेवेभ्यःसुखातिशयःस्यात् । संसारावस्थायामितिशेषः । मोक्षेपिमुक्तावपिसौख्यस्यवृद्धिःस्यात् । अतएवहननमचिंतयदित्यर्थः । सुराणांमोक्षेस्वस्वनियतानंदाविर्भावविशेषएव सौख्यस्यवृद्धिरित्यवगंतव्यं ॥१३॥ हननेहेत्वंतरमाह । नेति । सुराणांकलौजातासंततिःसंतानंभुव्यवस्थातुंयोग्यान कुतःकालिजाःकलियुगेजाताजीवसंघाःप्रायःबाहुल्येन क्षेमकादिव्यावृत्त्यर्थंप्रायइत्युक्तं सुपापाःसुतरांपापिनः

प्रतिग्रहात्सन्निवृत्तः स रामं ययौ न विष्णोर्हि भवेत्प्रतिग्रहः ॥ दोषाय यस्मात्स पिताखिलस्य स्वामी गुरुः परमं दैवतं च ॥ ११ ॥ दृष्ट्वा चैनं जामदग्न्योप्यचिंतयद्द्रोणं कर्तुं क्षितिभारापनोदे ॥ हेतुं सुराणां नरयोनिजानां हंता चायं स्यात्सह पुत्रेण चेति ॥ १२ ॥ तेषां वृद्धिः स्यात्पांडवार्थे हतानां मोक्षेपि सौख्यस्य न संततिश्च ॥ योग्या सुराणां कलिजा सुपापाः प्रायो यस्मात्कलिजाः संभवंति ॥ १३ ॥ न देवानामाशतं पूरुषा हि संतानजाः प्रायशः पापयोग्याः ॥ नाकारणात्संततेरप्यभावो योग्यः सुराणां सदमोघरेतसां ॥ १४ ॥ अव्युच्छिन्ने सकलानां सुराणां तंतौ कलिर्नो भविता कथंचित् ॥ तस्मादुत्साद्याः सर्वे एते सुरांशा एतेन साकं तनयेन वीराः ॥ १५ ॥ ॥

संभवंतियस्मात्तस्माद्योग्यानेतिसंबंधः । कालिजाःदेवसंतानजाःसुपापाःसंतु ततःकिमित्यतआह । नेति । देवानांसंतानजाःवंशेजाताःपुरुषाःआशतंशतसंतानपर्यंतंप्रायशःपापयोग्याःन दुर्योधनादिव्यावृत्त्यर्थंप्रायशइत्युक्तं कारणंविनास्वयमेव संतानोच्छेदःस्यादित्यतोनेत्याह । नेति । सन्निर्दुष्टंअमोघंरेतोयेषांसुराणांसंततेःअभावोपिअकारणात्शापरूपवधकारणंविनायोग्योन ॥ १४ ॥ तर्हितथैवास्त्वित्यतोबाधकंवदन्नुपसंहरति । अव्युच्छिन्नइति । सकलानांसुराणांतंतौवंशेअव्युच्छिन्नेउच्छित्तिरहितेसति कथंचित्कलिःकलिकालवर्तिनोंभवितानभविष्यति हंताचायंस्यादित्युक्तार्थमुपसंहरति । तस्मादिति । तनयेनअश्वत्थाम्नासाकंएतेनद्रोणेनएतेभुव्यवतीर्णावीराःउत्साद्याःविनाश्याः ॥ १५ ॥ ॥ ॥ ॥ ॥

अप्रमेयःसाकल्येनप्रतीत्यविषयः । ईषत्स्मितेनमंदहासेनजाताशोचिर्दीप्तिर्यस्याःसातथा तयागिरावाचाबभाषे किमिति मयासर्वंत्यक्तंअयममवित्तंनास्ति ननु रामःदा तुमशक्तत्वात् नास्तीतिबभाषेकिमित्यतआह । अनंतशक्तिःसकलेश्वरोपीति ॥ १६ ॥ तर्हिकिमस्तीत्याहेत्यतआह । आत्मेति । आत्माअहंविद्यातत्वविद्याशस्त्रं परशुशार्ङ्गाद्यायुधंचेत्येतावत्त्रयंअस्तितेषां आत्मादित्रयाणांमध्येयद्रुचितंइष्टंततूत्वंगृहाण इत्थंउक्तःसविप्रोद्रोणःप्रविचिंत्यजगाद किमिति । तवग्रहणेपरिचारकत्वे नस्वीकारेकःसमर्थःनकोपीत्यर्थः । कस्त्वद्ग्रहणेसमर्थइत्युक्तमिदंकुतइत्यतस्त्वदधिकोयदिस्यात्तर्हितत्संभवतिसएवनास्तीत्याह । सर्वेशितेति । हेईश सर्वेशिता सर्वस्मात्परःउत्कृष्टःस्वतंत्रःत्वमेवतवसदृशःअन्यःपुरुषःनकोपीत्यर्थः ॥ १७ ॥ तवसाम्यंइच्छन्पुरुषःअधःअंधंतमइत्यर्थः । प्रतियातियस्मादधोगतेःउत्थातुंबहिःस्था

एवं विचिंत्याप्रतिमः स भार्गवो बभाष ईषत्स्मितशोचिषा गिरा ॥ अनंतशक्तिः सकलेश्वरोपि त्यक्तं सर्वं नाद्य वित्तं ममास्ति ॥ १६ ॥ आत्मा विद्या शस्त्रमेतावदस्ति तेषां मध्ये रुचितं त्वं गृहाण ॥ उक्तः स इत्थं प्रविचिंत्य विप्रो जगाद कस्त्वद्ग्रहणे समर्थः ॥ १७ ॥ सर्वेशिता सर्वपरः स्वतंत्रस्त्वमेव कोन्यः सदृशस्तवेश ॥ साम्यं तवेच्छन् प्रतियात्यधो हि यस्मान्न चोत्थातुमलं कदाचित् ॥ १८ सर्वोत्तमस्येश तवोच्चशस्त्रैः कार्यं किमस्माकमनुद्बलानां ॥ विद्यैव देया भवता ततोज सर्वप्रकाशिन्यमला सुसूक्ष्मा ॥ १९ ॥ इतीरितस्तत्वविद्यादिकाः स विद्याः सर्वाः प्रददौ सास्त्रशस्त्राः ॥ अष्टाद्बिषट्केन समाप्य ताः स ययौ सखायं द्रुपदं महात्मा ॥ २० ॥ ॥ ॥ ॥

तुंकदाचित् नालंनसमर्थः तस्मात्पुनरावृत्तिर्नैवेतिभावः ॥ १८ ॥ अनुद्बलानांअनुत्कृष्टबलानां दुर्बलानामित्यर्थः । अस्माकंततःकारणात् हेअजभवतात्वयासर्वप्रकाशिनी अतींद्रियादिपदार्थविषयकारिणी अमलाअवद्यरहितासुसूक्ष्माअतिसूक्ष्मार्थप्रतिपादकपरब्रह्मप्रतिपादिकेत्यर्थः । ईदृशीविद्यैवदेयादातुंयोग्या ॥ १९ ॥ सरामः सास्त्रशस्त्राःअस्त्रशस्त्रविद्यासहिताःतत्वविद्यापरतत्वविद्याआदिर्यासांताःतथा स्वार्थेकप्रत्ययः सर्वाविद्याःनीतिस्तंभोच्चाटनादिविद्याःप्रददौ महात्मामहामतिःसद्रोणःअब्दानांद्विषट्केनद्वादशवर्षैःताःविद्याःसमाप्यसखायंद्रुपदंप्रतिययौ । किंकृत्वाअर्धराज्यस्यदानेदानविषये पूर्वंसहैवनौराज्यमितीत्यात्मार्थं पूर्वकृतांतद्द्रुपदस्यप्रतिज्ञांसंस्मृत्यद्रुपदंययाविति संबंधः ॥ २० ॥ ॥ ॥ ॥ ॥ ॥

अहंतवसखाअस्मीतितदाउदितःद्रोणोदितोद्रुपदोपिदैवात्अदृष्टोद्बोधकहरीच्छयाजातादतिदर्पाद्धर्वात् उपयातंस्वसन्निधिंप्राप्तंसखायंद्रोणंप्रतिवाक्यंजगाद । किमिति । हे विप्रनिर्धनःदरिद्रःराज्ञःसखेतिराजसखःनभवेत यथेष्टतःस्वेच्छयागच्छेतिसंबंधः ॥ २१ ॥ द्रुपदेनईरितेसतिहरीच्छयाअस्यद्रोणस्यआशुकोपोबभूव । कथंभूतस्याजितेंद्रियस्यापि ॥ २२ ॥ कोपप्रकारंदर्शयति । प्रतिग्रहादित्यादिना । पितुःशिष्यःआत्मनःस्वस्यशिष्योभवेत् शिष्यस्यअर्थःद्रव्यंस्वीयएवस्वकीयमेवाशिष्यप्रतिग्रहोदोषायनभवेदित्यर्थ । इतिमत्वाज्ञात्वाममपितुःभरद्वाजस्यशिष्यकत्वात्प्रतिग्रहात्सम्यक्निवृत्तेनउज्झितेनमयासशिष्यभूतोयंद्रुपदःप्राप्तः ॥ २३ ॥ अवज्ञायतिरस्कृत्यअस्य

दानैर्धराज्यस्य हि तत्प्रतिज्ञां संस्मृत्य पूर्वामुपयातं सखायं ॥ सखा तवास्मीति तदोदितोपि जगाद वाक्यं द्रुपदोतिदर्पात् ॥ २१ ॥ न निर्धनो राजसखो भवेत यथेष्टतो विप्र गच्छेति दैवात् ॥ इतीरितेस्याशु बभूव कोपो जितेंद्रियस्यापि मुनेर्हरीच्छया ॥ २२ ॥ प्रतिग्रहात्सन्निवृत्तेन सोयं मया प्राप्तो मत्पितुः शिष्यकत्वात् ॥ पितुः शिष्ये ह्यात्मशिष्यो भवेत शिष्यस्यार्थः स्वीय एवेति मत्वा ॥ २३ ॥ सोयं पापो मामवज्ञाय मूढो दुष्टं वचो श्रावयदस्य दर्पं ॥ हनिष्य इत्येव मतिं विधाय ययौ कुरून्छिष्यतां नेतुमेतान् ॥ २४ ॥ प्रतिग्रहाद्विनिवृत्तस्य चार्थः स्याच्छिष्येभ्यः कौरवेभ्यो ममात्र ॥ एवं मन्वानः क्रीडतः पांडवेयान् सधार्तराष्ट्रान् पुरबाह्यतोस्यत् ॥ २५ ॥ विक्रीडतो धर्मसूनोस्तदैव सहांगुलीयेन च कंदुकोपतत् ॥ कूपे न शेकुः सहिताः कुमारा उद्धर्तुमेनं पवनात्मजोवदत् ॥२६॥

द्रुपदस्यदर्पमदंएतान्बुद्धिस्थान्कुरून्शिष्यतांस्वशिष्यत्वंनेतुंप्रापयितुं कुरून्कुरुविषयान्ययौ ॥ २४ ॥ ममअर्थःद्रुपदनिग्रहरूपप्रयोजनंद्रव्यार्थश्चकौरवेभ्यःस्यादेवंमन्वानःमनसिमंत्रयन्द्रोणःअत्रकुरुविषयंपुरस्यहस्तिनपुरस्यबाह्यतःबहिप्रदेशेक्रीडतःक्रीडांकुर्वतःअख्यत्अपश्यत् ॥ २५ ॥ तदाधर्मसूनोःअंगुलीयेनप्रधानमुद्रारूपांगुलीयभूषणेनसकंदुकःकूपेअपतत् । गेंदुकःकंदुकइत्यमरः । सहिताः मिलिताःएनंकंदुकंउद्धर्तुंनशेकुःयदातदेतिशेषः । पवनात्मजःभीमोवदत् ॥ २६ ॥ ॥

किमिति । हेकुमाराःअहंवीर्यसंश्रयात्स्ववीर्याश्रयादेवनिष्पत्यकूपेनिमज्य कंदुकेनसहितांमुद्रिकांउद्धृत्यभृशंनीचादपिअतिनिम्नादपिअमुष्मात्कूपात्समुत्पतिष्येसम्यगूर्ध्वं आगमिष्ये सर्वेयूयंपश्यतेत्यवददितिसंबंधः ।।२७।। अस्त्रबाह्यांमंत्रहीनांप्रवृत्तिंधिक्धिगित्यव्ययं निंदार्थे । भरतानांभरतनृपकुलोद्भवानांकुलजाताःयूयंअस्त्राणिनवित्थन जानीथ ॥ २८ ॥ सुरैःपुज्यःबृहस्पतिःतस्यपौत्रंविप्रंअस्त्रविदंअस्त्रज्ञमितिविज्ञाय अथप्रधानमुद्रयायुतश्चासौकंदुकश्चतस्यउद्धृतिंप्रतिसंप्रार्थयामासुः । उद्धृत्यदेहीतिप्रार्थयामासुरितिभावः ॥ २९ ॥ सचद्रोणःउतरोत्तरंसंप्रास्यइषीकाःसंयोज्य दिव्यास्त्रबलेनइषीकाभिःतृणविशेषैःआशु कंदुकंउद्धृत्यमुद्रायाःप्रधानमुद्रिकायाःउद्धरणार्थं

निष्पत्य चोद्धृत्य समुत्पतिष्ये कूपादमुष्माद्भृशनीचादपि स्म ॥ सकंदुकां मुद्रिकां पश्यताद्य सर्वे कुमारा इति वीर्यसंश्रयात् ॥ २७ ॥ तदा कुमारानवदत्स विप्रो धिगस्त्रबाह्यां भवतां प्रवृत्तिं ॥ जाताः कुले भारतानां न वित्थ दिव्यानि चास्त्राणि सुरार्चितानि ॥ २८ ॥ इतीरिता अस्त्रविदं कुमारा विज्ञाय विप्रं सुरपूज्यपौत्रं ॥ संप्रार्थयामासुरथोद्धृतिं प्रति प्रधानमुद्रायुतकंदुकस्य ॥ २९ ॥ स चाप्यिषीकाभिरथोत्तरोत्तरं संप्रास्य दिव्यास्त्रबलेन कंदुकं ॥ उद्धृत्य मुद्रोद्धरणार्थिनः पुनर्जगाद भुक्तिर्मम कल्प्यतामिति ॥ ३० ॥ यथेष्टवित्ताशनपानमस्य धर्मात्मजः प्रतिजज्ञे सुशीघ्रं ॥ तथैव तेनोद्धृतमंगुलीयं त्रिवर्गमुख्यात्मजवाक्यतोनु ॥ ३१ ॥ पप्रच्छुरेनं सहिताः कुमाराः कोसीति सोप्याह पितामहो वः ॥ वक्तेति ते दुद्रुवुराशु भीष्मं द्रोणोयमित्येव स तांस्तदोचे ॥ ३२ ॥

अर्थिनःसंप्रार्थयतःकुमारान्प्रतिममभुक्तिःभोजनंजीवनोपायमित्यर्थः कल्प्यतांक्रियतामितिपुनर्जगाद ॥ ३० ॥ अस्यद्रोणस्ययथेष्टमितिसर्वत्रसंबंधःवित्ताशनपानमित्यत्रैकवद्भावः । दास्यामीतिप्रतिजज्ञेप्रतिज्ञातवान्त्रिवर्गेषुधर्मार्थकामेषुमुख्यस्यधर्मस्यअभिमन्यमानत्वगुद्धबोधोधर्मःतत्स्वरूपस्ययमस्यआत्मजस्य पुत्रस्ययुधिष्ठिरस्यवाक्यतःवाक्यस्यअनुअनंतरं तेनद्रोणेनतथैवकंदुकवदेवअंगुलीयकंउद्धृतं ॥ ३१॥ सहिताःमिलिताःकुमाराःत्वंकोसीतिएनंद्रोणंपप्रच्छुः सोपिद्रोणःवःभवतांपितामहःभीष्मःमांवक्तावक्ष्यतीत्याह । तेकुमाराःआशुभीष्मंदुद्रुवुःगताः द्रुगताविति धातुः । सभीष्मःतदातान्प्रतिअयंविप्रःद्रोणइत्यूचे ॥ ३२ ॥ ॥ ॥

ननु कुमाराःस्वपुरवासिनंद्रोणंकिमर्थंनाज्ञासिषुरित्यतआह । नेति । येनकारणेनसद्रोणःराजगेहंकदाचित्नैतिनप्राप्नोति तेनकारणेनअतःअस्मात्कालात्पुराकुमारैःसद्रोणः अदृष्टःतर्हि भीष्मःकथंज्ञातवानित्यतआह । भीष्मइति । तेनद्रोणेनसहविद्याःचिंतयन्विचारयन् भीष्मःइदानींद्रोणःक्वगतःकुत्रतिष्ठतिकिंकरोतीति विचार्येतिवाक्यशेषः । रामात्तस्यद्रोणस्यअस्त्रप्राप्तिंशुश्रावअशृणोत् अतोभीष्मेणज्ञातमितिभावः ॥ ३३ ॥ तथापितमदृष्ट्वाकथंज्ञातवानित्यतआह । श्रुत्वेति । द्विजंश्रुत्वातामपिकंदुकाद्युद्धरणरूपांमहास्त्रविद्यांश्रुत्वेत्यर्थः । इतिहेतुहृयेनद्रोणोयमितिज्ञात्वाअतएवमहामतिर्भीष्मःस्वयंतत्रद्रोणसन्निधिंगत्वातस्यद्रोणस्यवशेशिष्यत्वेशिष्यत्वार्थेएतान्ददौ ॥३४॥तान्कुमारान्अवदत् किमिति यःपुमान्ममइष्टंअभीप्सितंकर्तुंप्रथमंआदौप्रतिज्ञांकरोतिकरिष्यति तंधन्विनांमध्येप्रवरंश्रेष्ठंसाधयिष्येकरोमीत्यवदत् । अर्जुनःतांद्रोणोक्तांप्रतिज्ञांअकरोत् ॥३५॥ सोर्जुनःउन्मादनंआदिर्येषांतानितथातानिअस्त्राणिकृष्णाद्वेद । अनापत्सुआपद्रहितकालेषुतानिउन्मादनादीनिनमुंचेत् नप्रयुंज्येदितिके

न राजगेहं स कदाचिदेति तेनादृष्टः स कुमारैः पुरातः ॥ भीष्मो विद्यास्तेन सहैव चिंतयन्नस्त्रप्राप्तिं तस्य शुश्राव रामात् ॥ ३३ ॥ श्रुत्वा वृद्धं कृष्णवर्णं द्विजं तं महास्त्रविद्यामपि तां महामतिः ॥ द्रोणं ज्ञात्वा तस्य शिष्यत्व एतान् ददौ कुमारांस्तत्र गत्वा स्वयं च ॥ ३४ ॥ द्रोणोथ तानवदद्यो मदिष्टं कर्तुं प्रतिज्ञां प्रथमं करोति ॥ तं धन्विनां प्रवरं साधयिष्ये इत्यर्जुनस्तामकरोत्प्रतिज्ञां ॥ ३५ ॥ उन्मादनादीनि स वेद कृष्णादस्त्राण्यनापत्सु न तानि मुंचेत् ॥ इत्याज्ञया केशवस्यापराणि प्रयोगयोग्यानि सदेच्छति स्म ॥ ३६ ॥ भीष्मादिभिर्भविता संगरो नस्तदा नाहं गुरुभिर्नित्ययोद्धा ॥ भवेयमेकः फल्गुनोस्त्रज्ञ एषां निवारकश्चेन्मम धर्मलाभः ॥ ३७ ॥ ॥

शवस्याज्ञयासदाआपद्यनापदिप्रयोगयोग्यान्यपराण्यस्त्राणिइच्छतिस्म ॥ ३६ ॥ अर्जुनादपिसमर्थेनभीमेनप्रतिज्ञाकुतोनकृतेत्यतोहेतुमाह । भीष्मादिभिरित्यादिना । यदाभीष्मादिभिर्नोस्माकंसंगरःसंग्रामःभविताभविष्यति तदाहंगुरुभिर्भीष्माद्यैर्नित्यंयोद्धायुद्धकर्तानभवेयंनस्यां अतःअस्त्रज्ञःएकःफल्गुनःएषांभीष्मादीनांनिवारकश्चेत्तर्हि ममधर्मलाभःननु क्षत्रियाणांविशेषतोपिपरमधर्मंनारायणद्विट्तदनुबंधिनिग्रहनितिगीतातात्पर्याविरोधइतिचेन्न तात्पर्यंविष्णुद्विट्तदनुबंधिनिग्रहमात्रंधर्मइत्युक्तं । नतुस्वतएवेतिनियमः निग्रहस्यपरतोपिसंभवात् यथादुष्टस्त्रीकितवादीनांनिग्रहस्यपरतएवसंभवात् । तथानारायणद्विट्तदनुबंधिनिग्रहणंअस्त्रैःसदानिग्रहोपिपरतएवधर्मः अतएवात्रगुरुभिर्नित्ययोद्धाअस्त्रज्ञइतिविशेषणानि तत्रतु नारायणद्विट्तदनुबंधिनिग्रहामितिसामान्योक्तिः ॥ ३७ ॥ ॥ ॥ ॥ ॥

हेत्वंतरमाह । नेति । इंदिरापतेः अन्यत्र अन्यस्मात् बुद्धिपूर्वं यथास्यात्तथा मे मया वरो न ग्राह्यः अप्रार्थितगुर्वादिभिर्दत्तवरस्य ग्राह्यत्वात् नबुद्धिपूर्वमित्युक्तं इतश्च अस्माद्धेतोः जिष्णुः अर्जुनः गुर्वर्थं प्रतिज्ञां करोतु इति हेतुद्वयं चिंतयन् भीमः तत्र गुरुविषये अस्त्रप्राप्तिसमये वा स्वयं प्रतिज्ञां न चकार ॥३८॥ तेन भीमेन प्रेरितेन यदा प्रतिज्ञा कृता ततः परं तदनंतरं स विप्रवरः द्रोणः सुरराजसूनौ अर्जुने तस्मै अर्जुनाय ददौ ॥३९॥ स द्रोणः तस्मिन्नर्जुने अस्य अर्जुनस्य उरुतरां अत्युत्कृष्टां प्रशंसां स्तुतिं करोति लोकमध्ये इति शेषः रहस्यविद्याः गुह्यविद्याः तस्यार्जुनस्य ददाति तथा अर्जुनवत् अन्यस्य कस्यापि शिष्यस्य कथंचित् न ददाति ॥ ४० ॥ एवं चेद्भीमस्य सर्वज्ञत्वं नस्यादित्यत आह । भीमइति । प्रतिभायाः

न बुद्धिपूर्वं वर इंदिरापतेरन्यत्र मे ग्राह्य इतश्च विष्णुः ॥ करोतु गुर्वर्थमिति स्म चिंतयन् भीमः प्रतिज्ञां न चकार तत्र ॥ ३८ ॥ तत्प्रेरितेनार्जुनेन प्रतिज्ञा कृता यदा विप्रवरस्ततः परं ॥ स्नेहं नितांतं सुरराजसूनौ कृत्वा महास्त्राणि ददौ स तस्य ॥ ३९ ॥ स पक्षपातं च चकार तस्मिन् करोति चास्योरुतरां प्रशंसां ॥ रहस्य विद्याश्च ददाति तस्य नान्यस्य कस्यापि तथा कथं चित् ॥ ४० ॥ भीमः समस्तं प्रतिभाबलेन जानन् स्नेहं त्वद्वितीयं कनिष्ठे ॥ द्रोणस्य कृत्वा सकलास्त्रवेदिनं कर्तुं पार्थं नार्जुनवच्चकार ॥४१॥ नैवातियत्नेन ददर्श लक्ष्यं शुश्रूषया पार्थमग्रे करोति ॥ स्वबाहुवीर्याद्भगवत्प्रसादाद्विहन्मि शत्रून्किमनेन चेति ॥ ४२ ॥ तदा समीयुः सकलाः क्षितीशपुत्रा द्रोणात्सकलास्त्राण्यवाप्तुं ॥ ददौ स तेषां परमास्त्राणि विप्रो रामादवाप्तान्यगतानि चान्यैः ॥ ४३ ॥

प्रज्ञायाः बलेन समस्तं अस्त्रादिकं जानन् भीमः सकलास्त्रवेदिनं पार्थं कर्तुं कनिष्ठे अर्जुने द्रोणस्य अद्वितीयं असदृशं स्नेहं कृत्वा कारयितुं अर्जुनवत् प्रतिज्ञापूर्वकास्त्रप्रेप्स्यादिकं स्वयं न चकार ॥ ४१ ॥ नचकारेत्युक्तं विवृणोति । नैवेति । अतियत्नेन अतिप्रयासेन लक्ष्यं नैव ददर्श लक्ष्यवेधे अतिप्रयत्नं न चकारेत्यर्थः । शुश्रूषया द्रोणसेवाविषये पार्थं अग्रे पुरतः करोति अहं स्वबाहुवीर्यात् भगवत्प्रसादाच्च शत्रून्न हान्मि अनेन प्रतिज्ञापूर्वकास्त्रसंग्रहणेन किं न किमपीत्यर्थः । इत्यभिप्रायेण अर्जुनवत् न चकारेति संबंधः ॥ ४२ ॥ तदा शस्त्रास्त्रसंग्रहणकाले रामात् स्वेन अवाप्तानि प्राप्तानि अन्यैः अगतानि अप्राप्तानि अज्ञातानि वा अस्त्राणि ददौ ॥ ४३ ॥ ॥ ॥ ॥ ॥ ॥

अन्यैःनृपैःमनसापिअस्मृतानिअस्त्राण्यवाप्य पूर्वेपूर्वतनाःनृपाःयथाशक्ताःनबभूवुः तथाशकाःसमर्थाःबभूवुः पूर्वतेनभ्यःअधिकाबभूवुरितिभावः ॥ ४४ ॥ अस्त्रेबलेवि द्यासुएतादृशाःद्रोणशिष्यसदृशाःनरेंद्राःनासन् दौष्यंतिःदुष्यंतपुत्रोभरतःमरुत्तोनामराजाएतत्पूर्वाःनृपाःउदारवीर्याश्चउत्कृष्टवीर्याअपिएतैर्द्रोणशिष्यैःसमाःतुल्याःनासुः ॥ ॥ ४५ ॥ तदाअस्त्राभ्यासकाले सविप्रःतुविशेषेणयतोरामशिष्यः । अतःएतयोः कर्णैकलव्ययोःसूतोनिषादइतिभावेन अस्त्राणिनददौ ॥ ४६ ॥ उन्नमानःउत्कृष्टगर्वः सकर्णःनिजंईप्सितंस्वाभिलषितंअनवाप्यअप्राप्य अयमपिविप्रोद्रोणःयस्मात्पुरुषोत्तमतःअस्त्राणांवृंदंसमूहंअवाप । अजंभृगोःभृग्वर्षेःकुलेउत्थंअवतीर्णंतंरामंएमिग च्छामि इत्थंविचिंत्यभृगुपस्यपरशुरामस्यआश्रमाययौ ॥ ४७ ॥ सकर्णःसर्ववेत्तुःसर्वज्ञस्यविभोः रामस्यभयेनअस्त्रवराणांअतिलोभात्अतिलौल्यात् अहंविप्रइत्यवदत्

अस्त्राणि चित्राणि महांति दिव्यान्यन्यैर्नृपैर्मनसाप्यस्मृतानि ॥ अवाप्य सर्वे तनया नृपाणां शक्ता बभूवुर्न यथैव पूर्वे ॥ ४४ ॥ नैतादृशाः पूर्वमासन्नरेंद्रा अस्त्रे बले सर्वविद्यासु चैव ॥ दौष्यंतिमांधातृमरुत्तपूर्वाश्चैतत्समानासुरुदारवीर्याः ॥ ४५ ॥ तदा कर्णोथैकलव्यश्च दिव्यान्यस्त्राण्याप्तुं द्रोणसमीपमीयतुः ॥ सूतो निषाद इति नैतयोरदादस्त्राणि विप्रः स तु रामशिष्यः ॥ ४६ ॥ कर्णोनवाप्य निजमीप्सितमुन्नमानो यस्मादवाप पुरुषोत्तमतोस्त्रवृंदं ॥ विप्रोप्ययं तमजमेमि भृगोः कुलोत्थमित्थं विचिंत्य स ययौ भृगुपाश्रमाय ॥ ४७ ॥ स सर्ववेत्तुश्च विभोर्भयेन विप्रोहमित्यवददस्त्रवरातिलोभात् ॥ जानन्नपि प्रददावस्य रामो दिव्यान्यस्त्राण्यखिलान्यव्ययात्मा ॥ ४८ ॥ अस्त्रज्ञचूडामणिमिंद्रसूनुं विश्वस्य हंतुं धृतराष्ट्रपुत्रः ॥ एनं समाश्रित्य दृढो भवेतेत्यदाज्ज्ञात्वैवास्त्रमस्मै रमेशः ॥ ४९ ॥ ज्ञानं च भागवतमाप्य पराश्च विद्या रामादवाप्य विजयं धनुरग्र्ययानं ॥ अब्दैश्चतुर्भिरथ स न्यवसत्तदंते हातुं न शक्तउरुगायमिमं स कर्णः ॥ ५० ॥ ॥ ॥ ॥ ॥ ॥

सूतोयमितिजानन्नपिप्रददौ । सूतस्यमंत्रोपदेशेनरामस्यअनर्थःस्यादित्यतआह । अव्ययात्मेति ॥ ४८ ॥ सूतमितिज्ञात्वाप्यस्त्रदातुःरामस्याभिप्रायमाह । अस्त्रेति । धृ तराष्ट्रपुत्रःएनंकर्णंसमाश्रित्यअस्त्रज्ञानांचुडामणिंमस्तकमणिंइंद्रसूनुमर्जुनंहंतुंविश्वस्य दृढःधैर्यवान्भवेतेत्यभिप्रायेणरमेशोरामः अस्मैसूतायज्ञात्वैवकर्णस्यसूतत्वंज्ञात्वैवअस्त्रं ददौ ॥ ४९ ॥ कर्णश्चतुर्भिरब्दैरामात् भागवतंज्ञानंपराःउत्तमाःविद्याश्चअस्त्रशस्त्रविद्यादिनानाविद्याअवाप्य विजयोयस्मात्तद्विजयं तादृशंधनुरग्र्यंचतद्यानं चश्रेष्ठरथंअ वाप्य अथचविद्याप्राप्त्यनंतरमपि उरुगायंउत्तमश्लोकंइमंरामंहातुंत्यक्तुंनशक्तःअशक्तःसन् तदंतेगमनसमीपेन्यवसत् ॥ ५० ॥ ॥ ॥

उदारःउत्कृष्टःबोधःज्ञानंयस्यसतथा । अतएवविगतानिद्रायस्यनिद्रारहितइत्यर्थः । यतःसुरवरःदेवपतिःअतःसरामःसुराणांकार्यहेतोःकर्णपराजयरूपकार्यहेतोःअस्यकर्णस्यतत्प्रसिद्धंवालिनःनिधनस्यफलंदातुंकदाचित्अमुष्यकर्णस्यअंकेऊरौशिरोनिधायसंसुप्तवच्छिश्येसुष्वाप ॥ ५१ ॥ हेतिनामासतुवैष्णवइतिप्रसिद्धोराक्षसवरः कालेस्वविहितकालेमहेंद्रंअनुपास्यपूजामकृत्वा अस्येंद्रस्यशापतःकीटःसन्तत्ररामाश्रमेआसअभूत् । उतकीटतनुप्राप्त्यनंतरं इंद्रसुतार्थंअर्जुनस्यकर्णवधजयसामर्थ्यार्थंकर्णस्यशापंउपपादयितुंसंपादयितुं । तत्रतदाकर्णांकेरामस्यस्वापकालेतंकीटंसमाविवेश ॥ ५२ ॥ सकीटतनुगेनकीटतनुगोहेतिस्तेनसहितेनकिरीटिना इंद्रेणउरोरधस्तलतःअधोभागमारभ्यऔपरिगात्वचःआऊर्ध्वभागगत्वचंमर्यादीकृत्यशरेणयथाविद्धःभिन्नःसकर्णःरुधिरस्यधारांसुस्राव आऔपरिगत्वचइतिपदच्छेदः । उपरिगच्छतीत्युपरिगाउपरिगैवौपरिगाआसमस्तात्त्वक्आत्वक्औपरिगाचासौआत्वक्चऔपरिगात्वक्तस्याःऔपरिगात्वचइतिपाठे आउपरिगात्वचइतिछेदः उपरिगच्छती

अंके निधाय स कदाचिदमुष्य रामः ॥ शिश्ये शिरो विगतनिद्र उदारबोधः ॥ संसुप्तवत्सुरवरः सुरकार्यहेतोर्दातुं च वालिनिधनस्य फलं तदस्य ॥ ५१ ॥ तत्रास राक्षसवरः स तु हेतिनामा काले महेंद्रमनुपास्य हि शापतो ऽस्य ॥ कीटस्तमिंद्र उत तत्र समाविवेश कर्णस्य शापमुपपादयितुं सुतार्थे ॥ ५२ ॥ कर्णः स कीटतनुगेन किरीटिनेव ह्यूरोरधस्तलत औपरिगा त्वचश्च ॥ विद्धःशरेण स यथा रुधिरस्य धारा सुस्राव तं विगतनिद्र इवाह रामः ॥५३ ॥ किं त्वं न चालयसि मां रुधिरप्रसेके प्राप्तेपि पावनविरोधिनि कोसि चेति ॥ तं प्राह कर्ण इह नैव मया विधेयो निद्राविरोध इति कीट उपेक्षितो मे ॥ ५४ ॥ ॥ ॥ ॥

त्युपरिगाउपरिगाचासौत्वक्उपरिगात्वक्तस्याइतिविग्रहः गात्वागित्यत्रङ्यापोःसंज्ञाच्छंदसोर्बहुलमितिन्ह्रस्वाभावः । केचित्उपरिगच्छतीत्युपरिगाआईषदुपरिगाओपरिगासा आ सामस्त्येनमर्यादयावात्वक्यस्याइत्याहुस्तन्न । त्वक्विशेषणस्यसामस्त्यमर्यादार्थकस्याङ् ओपरीत्यपेक्षयापूर्वनिपातोनस्यात् उपसर्जनंपूर्वमित्यन्वर्थसंज्ञाश्रयणेन यत्प्रतियदुपसर्जनंतंप्रतितस्यैवपूर्वनिपातस्यस्थापितत्वात्किंच औपरिगत्वागितिस्यात् । ननु अतएवआत्वक्यस्याइत्युच्यतइतिचेत्तर्हिओपरिगात्वचइतिस्यान्नत्वौपरिगेति । सरामःविगतनिद्रइवसन् तंकर्णंप्रतिआह ॥ ५३ ॥ किमिति । पावनस्यापवित्रस्यविरोधिनिप्रतिकूलेअपवित्रइत्यर्थः रुधिरस्यप्रसेकेसंस्पर्शेप्राप्तेसत्यपित्वंमांकिमर्थंनचालयसिनचलितवानसि । त्वंकोसिचेत्याहेतिसंबंधः । कर्णःतंरामंप्राह । किमिति । मयानिद्रायाःविरोधःनविधेयःनकर्तव्यइतिबुद्ध्या इहनिद्रासमयेमेमयाकीटःउपेक्षितइत्याद्यप्रश्नोत्तरमुक्त्वा कोसीत्यस्योत्तरमाह ॥ ५४ ॥ ॥ ॥ ॥ ॥ ॥

जात्येति । जात्यासूतोस्मि । उतपक्षांतरेणयेनकारणेनतेतनयोस्मितेनकारणेनभार्गववंशजःअहंविप्रोस्मीतिभवतःतवअग्रेसत्यंयथास्यात्तथाअब्रुवं तेममपुत्रत्वंकथमित्य तआह । ईशेति । हेईश जगतोपिनकेवलंममाकिंतुजगतोपीत्यर्थः । त्वत्अन्यःमुख्योमात्रादिर्नहिनास्ति मात्रादिस्त्वमेवेत्यर्थः ॥ ५५ ॥ इतिउक्तरीत्यारामेउक्तमात्रवच नेसति । सतुकीटकःअस्यरामस्यदृष्टिविषयत्वतएवदृष्टिगोचरत्वादेव नैजंरूपंस्वमूलरूपंसंप्राप्य तस्यरामस्यानुग्रहतःविमानगःसन्स्वःस्वर्गंआप ॥ ५६ ॥ असत्यवाचं असत्यसंभाषिणंतंकर्णंममसकाशेतेतववासयोग्यतान यद्यपितथापितेतवमदीयामत्संबंधिनीभक्तिःवृथानैवभवेत् । सर्वशत्रून्जेष्यसि ॥ ५७ ॥ जेष्यसीत्यत्रविशेषमाहे त्याह । अस्पर्धेति । अस्पर्धमानंस्पर्धामाकुर्वंतंत्वांकश्चित्पुरुषःकथंचनजेतानभवेत् । स्पर्धमानस्त्वंपराभूतिंपराभवंयासि । प्राप्स्यसि । स्पर्धमानस्त्वंअस्त्रसंख्येअस्त्रयुद्धे प्र

जात्यास्मि सूत उत ते तनयोस्मि सत्यं तेनास्मि विप्र इति भार्गववंशजोहं ॥ अग्रे ब्रुवं भवत ईश नहि त्वदन्यो मातापितागुरुतरो जगतोपि मुख्यः ॥ ५५ ॥ इत्युक्तमात्रवचने स तु कीटकोस्य रामस्य दृष्टिविषयत्वत एव रूपं ॥ संप्राप्य नैजमतिपूर्णगुणस्य तस्य विष्णोरनुग्रहत आप विमानगः स्वः ॥ ५६ ॥ अथाह रामस्तमसत्य वाचं न ते सकाशे मम वासयोग्यता ॥ तथापि तेनैव वृथा मदीया भक्तिर्भवेज्जेष्यसि सर्वशत्रून् ॥ ५७ ॥ अ स्पर्धमानं न कथं च न त्वां जेता कश्चित्स्पर्धमानस्तु यासि ॥ पराभूतिं नात्र विचार्यमस्ति प्रमादी त्वं भविता चास्त्रसंघे ॥ ५८ ॥ याहीति तेनोक्त उदारकर्मणा कर्णो ययौ तं प्रणम्येशितारं ॥ तथैकलव्योपि निराकृतोमुना द्रोणेन तस्य प्रतिमां वनेर्चयन् ॥ ५९ ॥ ततः कदाचिद्धृतराष्ट्रपुत्रैः पांडोः सुता मृगयां संप्रयाताः । अग्रे गच्छन् सारमेयो रुराव धर्मात्मजस्यात्र वने मृगार्थी ॥ ६० ॥ श्रुत्वा रावं सारमेयस्य दूराच्छरैर्मुखं शब्दवेधी पुपूरे ॥ स एकलव्यो व्रणमस्य नाकरोत् श्वा पूरितास्यः पांडवानभ्ययात्सः ॥ ६१ ॥ ॥ ॥

मादीविस्मरणशीलःभविताभविष्यसि । अत्रउक्तार्थेविचार्यंनास्ति । स्पर्धमानइत्यावर्त्ययोज्यं । अस्त्रसंघेतिपाठेअस्त्रसमूहे ॥ ५८ ॥ तेनरामेण तंरामं अथकथांतरारंभः निराकृतःनिषादइतितिरस्कृतःएकलव्यःतस्यदोणस्यप्रतिमांमृत्प्रतिमां ॥ ५९ ॥ ततःअस्त्रप्राप्त्यनंतरं अथवनेमृगार्थीधर्मात्मजस्यसारमेयःश्वाअग्रेगच्छन्सन् रुरावश ब्दमकरोत् ॥ ६० ॥ शब्दवेधीशब्दवेधनशीलःसएकलव्यःदूरात्सारमेयस्यारावंश्रुत्वा दूरात्सारमेयस्यमुखशरैःपुपूरेपूरयास । अस्यमुखस्यव्रणंक्षतंनाकरोत् पूरितंशरैःपू रितंआस्यंमुखंयस्यसतथा श्वाअभ्ययात्अभ्यगात् ॥ ६१ ॥ ॥ ॥ ॥ ॥ ॥

अत्रवनेकर्तारंद्रष्टुंविचित्रकर्मणइतिशेषः । मार्गयामासुःअन्वेषणंचक्रुः । मार्तिकींमृत्तिकासंबंधिनींद्रोणाकृतिंद्रोणप्रतिमांपूजयंतंधनुरभ्यसंतंधनुर्विद्याभ्यासंकुर्वंतं एनंएकलव्यंददृशुः ॥ ६२ ॥ एषःएकलव्यःपिशाचकेभ्यःपैशाचिंपिशाचसंबंधिअस्त्रवृंदंविवेदविशेषेणव्यजाना तर्हि द्रोणप्रतिमांकिमर्थंपूजयतीत्यतआह । दिव्यानीति । एतांशिक्षांधनुर्विद्याशिक्षांच ॥ ६२ ॥ पार्थःअमुष्यएकलव्यस्यतंविशेषंशब्दवेधात्मकंशिक्षाविशेषंदृष्ट्वा । द्रोणायद्रोणंप्रतीत्यर्थः । ऊचे । तववचःत्वंधन्विनांप्रवरंसाधयिष्येइत्युक्तवचःमेमृषाव्यर्थंअसीत् इत्युक्तोविप्रःएनंएकलव्यंअभिगम्यअभिमुखंप्राप्य दक्षिणांगुष्ठमेवदक्षिणंहस्तांगुष्ठमेवदाक्षिणांगुरुदाक्षिणांययाचे ॥ ६४ ॥ तस्यद्रोणस्यप्रसादेनउपचितासमृद्धाशिक्षायस्यसतथा निषादःएकलव्यःअस्मैद्रोणायअदाच्छित्वेतिशेषः ॥ ततःपरंअंगुष्ठदानानंतरं सन्मुष्टिःसमीचीनमुष्टिःतेनहीनस्यशून्यस्यअस्यैकलव्यस्यशिक्षापूर्वंसंमिताशिक्षानबभूव । किंतुअर्जुनेनसमाअर्जुनशिक्षासमाबभूवेत्यर्थः ॥ यद्वा मुष्टिहीनस्यअस्यशिक्षाअर्जुनेनसमानबभूवेत्यर्थः ॥ ६५ ॥ कृपालुःद्रोणएवअतएवकृपालुत्वादेवेत्यर्थः अस्यैकलव्यस्यभक्त्याप्रतिमापूजांगुष्ठदानादिरूपभक्त्यासुतुष्टःसन् पुनःअंगुष्ठदानानंतरं रैवतपर्वतेतमेकलव्यंप्राप्य अस्मैएकलव्याय अस्त्रवराण्यदात् पुनःअर्जुनंधन्विनांश्रेष्ठंएकलव्यादिधन्विभ्यःश्रेष्ठंकृतवानित्यनेनतंधन्विनांप्रवरंसाधयिष्येइत्युक्तंस्ववचनंसत्यमकरोदितिभावः ॥ ६६ ॥ यंगंगाज० ॥ पूर्तिपंचदशःसदैवकृतिनोध्यायःसतांमोददःश्रीमद्भारत० ॥ १५ ॥ इति श्रीतात्पर्यनिर्णयटीकायां पंचदशोध्यायः ॥ १५ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥

दृष्ट्वा चित्रं कुरवः पांडवाश्च द्रष्टुं कर्तारं मार्गयामासुरत्र ॥ द्रोणाकृतिं मार्तिकीं पूजयंतं ददृशुश्चैनं धनुरेवाभ्यसंतं ॥ ६२ ॥ पैशाचमेवैष पिशाचकेभ्यः पूर्वं विवेदास्त्रवृंदं निषादः ॥ दिव्यान्यस्त्राण्याप्तुमेतां च शिक्षां द्रोणं सदा पूजयति स्म भक्त्या ॥ ६३ ॥ दृष्ट्वा विशेषं तममुष्य पार्थो द्रोणायोचे त्वद्वचो मे मृषासीत् ॥ इत्युक्त एनं त्वभिगम्य दक्षिणां विप्रो ययाचे दाक्षिणांगुष्ठमेव ॥ ६४ ॥ तस्य प्रसादोपचितोरुशिक्षो निषादोदाद्दक्षिणांगुष्ठमस्मै ॥ ततः परं नास्य बभूव शिक्षा सन्मुष्टिहीनस्य समार्जुनेन ॥ ६५ ॥ पुनः कृपालू रैवतपर्वते तं द्रोणः प्राप्यादादस्त्रवराणि तस्मै ॥ एकांत एवास्य भक्त्या सुतुष्टो धन्विश्रेष्ठं कृतवानर्जुनं च ॥ ६६ ॥ इति श्रीमदा० विरचिते श्रीमन्महाभारततात्पर्यनिर्णये पंचदशोध्यायः ॥ १५ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥

श्रीगुरुभ्योनमः ॥ श्रीभगवानाचार्यःकुमाराणांअस्त्रप्राप्तिकाले प्रवृत्तांश्रीकृष्णकथामध्यायद्वयेननिरूपयति । कालइत्यादिना । एतस्मिन्नेवकालेकुमारणांअस्त्रप्राप्तिकाले भूयएवपुनरपियदून्प्रतिप्रायात् । तत्रतस्मिन्युद्धे नित्यंनाशरहितंअव्ययंन्हासरहितंअतिबलात्मकंऐश्वर्यंयस्येति । ईदृशोपिकृष्णःइच्छयागाद्ययौ यदून्पुरींचत्यक्त्वेतिशेषः ॥१॥ ननु नित्याव्ययातिबलैश्वर्योपिकृष्णः किमर्थमगादित्यतआह । संदर्शयन्निति । अल्पानिसेनादीनिउपस्कराणियुद्धसाधनानियेषांतेतथा । तेषांबलिनांबहुलानिबहूनिउपस्कराणिसेनायुद्धसाधनानियेषांतेतथा तैःबलिभिःविरोधेप्राप्तेसति । अग्र्यांनीतिंसंदर्शयन् रामेणसहितोरमायाःईशःकृष्णःदक्षिणाशांदक्षिणदिशंप्रतिययौ ॥ २ ॥ अशक्तत्वाद्भयेनययाविति ग्रंथांतरविरोधंपरिहरन्उक्तमेवार्थंविशदयति । सइति । एकोपिक्रीडार्थमेव लोकानुकरणार्थमेवततःपरशुरामात् अतिदुर्गंअतिशयेनगंतुमशक्यं

ॐ काले त्वेतस्मिन् भूय एवाखिलैश्च नृपैर्युक्तो मागधो योद्धुकामः ॥ प्रायाद्यदूंस्तत्र नित्याव्ययातिबलैश्वर्योपी च्छयागात्स कृष्णः ॥ १ ॥ संदर्शयन्बलिनामल्पसेनाद्युपस्कराणां बहुलोपस्करैश्च ॥ प्राप्ते विरोधे बलिभिर्नीति मग्र्यां ययौ स रामो दक्षिणाशां रमेशः ॥ २ ॥ सोनंतवीर्यः परमोभयोपि नीत्यै गच्छन् जामदग्न्यं ददर्श ॥ क्रीडार्थमेकोपि ततोतिदुर्गं श्रुत्वा गोमंतं तत्र ययौ सहाग्रजः ॥ ३ ॥ तदा दुग्धाब्धौ संसृतिस्थैः सुराद्यैः पूजां प्राप्तुं स्थानमेषां च योग्यं ॥ मुक्तस्थानादाप नारायणोजो बलिश्चागात्तत्र संद्रष्टुमीशं ॥ ४ ॥ तत्रासुरावेशममुष्य विष्णुः संदर्शयन् सुप्तिहीनोपि नित्यं ॥ संसुप्तवच्छिश्ये उदारकर्मा संज्ञायै देवानां मुखमीक्ष्याप्रमेयः ॥ ५ ॥ देवाश्च तद्भावविदोखिलाश्च निमीलिताक्षाः शयनेषु शिश्यिरे ॥ तदा बलिस्तस्य विष्णोः किरीटमादायागाज्जहसुः सर्वदेवाः ॥ ६ ॥

गोमंताख्यपर्वतंश्रुत्वा तत्रगोमंतंप्रतिययौ ॥ ३ ॥ तदागोमंतगमनकाले अजोनारायणःसंसृतिस्थैःसंसारस्थैःसुराद्यैःआद्यपदेनऋषिबल्यादिसर्वदैत्याविवक्षिताः । तैःपूजप्राप्तुंदुग्धाब्धौविद्यमानान्मुक्तस्थानात् एषांसंसृतिस्थानांयोग्यस्थानममुक्तस्थानमित्यर्थः आप तत्रतदातत्स्थानंप्रतिबलिश्च ॥ ४ ॥ तत्रतदाअमुष्यबलेःअसुरावेशंसंदर्शयन् संज्ञायैमद्वत्सुताइवभवंत्वितिसूचनार्थंदेवानांमुखंइक्ष्यसंसुप्तवच्छिश्ये ॥ ५ ॥ तस्यविष्णोर्भावविदःअभिप्रायज्ञाःशिश्यिरेस्वापंचक्रुः । किरीटंमुकुटंआदायअगात् पातालंप्रतीतिशेषः ॥ ६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

देवैःसमेतेनारायणेहासमानेहास्यंकुर्वतिसति सुपर्णःपातालंपातालंलोकंगत्वाप्राप्य । बलिंयुधिजित्वाकिरीटंआदाययत्रगोमंतेकृष्णःअस्तितत्रअभ्ययादगात् । ननु ब्र ह्मवरसत्वाद्गरुडःकथंबलिमजयदितिचेत्सत्यं यथाजरासंधजयेरामगेणेत्युक्तंतथाविशेषावेशात् हरिवराद्वा वरश्चोक्तोस्कांदेबदरीमाहात्म्ये । अजेयोदेवदैत्यानांस्यामहंतेप्रसा दतः । ओमित्युक्तातदाविष्णुरुवाचचहितंवचइति ॥ ७ ॥ खगःगरुडःतत्किरीटंतस्यकृष्णस्यशीर्ष्णिमूर्ध्निप्रविमुच्यसंस्थाप्य नत्वास्तुत्वा स्मृतःमयास्मृतस्त्वंआगच्छ आयाहीत्येवइत्युक्ता अमुनाकृष्णेनविसर्जितःप्रेषितःसन् यत्रदुग्धाब्धौअसौकृष्णात्मानारायणःतिष्ठति तंदुग्धाब्धिंप्रतिययौ ॥ ८ ॥ कृष्णस्यमूर्ध्निप्रविष्टंस्थापितं तन्नारा यणशिरस्थंकिरीटंतस्यकृष्णशिरसःतुल्यंपरितंआसीत् । कुतःतस्यहरेरूपेषुमत्स्याद्यवतारेषुअभेदात् तदिच्छैवनारायणेच्छयैवअस्यगोमंतस्थस्यकृष्णस्यदुग्धाब्धौक्षीराब्धौ स्थितस्यनारायणस्यशीर्ष्णियुगपदेवअसीत् । कृष्णनारायणयोरभेदादुभयोःएकंकिरीटंएककालेआसीदितिभावः ॥ ९ ॥ पूर्वंजरासंधेनप्राप्तप्रथमयुद्धेप्राप्तान्यागतानिदि

नारायणे सर्वदेवैः समेते ब्रह्मादिभिर्हासमाने सुपर्णः ॥ गत्वा पातालं युधि जित्वा बलिं च किरीटमादायाऽभ्ययाद्य त्र कृष्णः ॥ ७॥ तत्तस्य शीर्ष्णि प्रतिमुच्य नत्वा खगस्तुत्वा देवदेवंरमेशं ॥ स्मृत आगच्छेत्येव विसर्जितोमुना ययौ दुग्धाब्धिं यत्र नारायणोसौ ॥ ८ ॥ किरीटं तत्कृष्णमूर्ध्नि प्रविष्टं तत्तुल्यमासीत्तस्य रूपेष्वभेदात् ॥ तदिच्छ या चैव नारायणस्य शीर्ष्ण्यप्यासीद्युगपद्दुग्धवार्धौ ॥ ९ ॥ पूर्वं प्राप्तान्येव दिव्यायुधानि पुनर्वैकुंठं लोकमितानि भूयः ॥ तदावतेरू रौहिणेयस्य चैव भार्याप्यागाद्वारुणीनाम पूर्वा ॥ १० ॥ सैवापरं रूपमास्थाय चागाच्छ्रीरित्या ख्यं सेंदिरावेशमग्र्यं ॥ कांतिश्चागात्तस्य सोमस्य चान्या भार्याद्वयोः पूर्वतना सुरूपा ॥ ११ ॥ ॥

व्यायुधानिपुनःयुद्धानंतरं वैकुंठलोकंप्रतिइतानिगतानिआयुधानीत्यर्थः । पुनःगोमंतावस्थानकालेअवतेरुःकृष्णंप्रतिप्राप्तानि तदैवकालेरौहिणेयस्यचरामस्यायुधान्यागता नीत्यर्थः । पूर्वापूर्वतनभार्यावारुणीतिनामप्रसिद्धा याअपिसापिवारुण्यप्यागात् रामस्यायुधान्यागतानितथाभार्यापिमूलरूपेणागादितिभावः ॥ १० ॥ सैववारुणीश्रीरि त्याख्यं श्रीनामकइंदिरायाःलक्ष्म्याःआवेशोयस्मिन्तत्तथा ततेन श्रीश्चदेवीवरिष्ठास्त्रीस्वयमेवांबुजध्वजेतिहरिवंशेव्याख्यातंभवति। अतएवाग्र्यंश्रेष्ठंअपरंअन्यंरूपंआ स्थायप्राप्यअगात् । तस्यरामस्यकांतिश्चकांतिनामकाभार्यापिअगात् । कांतिश्चशशिनःप्रियेतिहरिवंशे । अत्ररामभार्येतिकथमुक्तेत्यतआह । सोमस्येति । सोमस्य भार्याकांतिःअन्यारामभार्यायाःकांत्याःभिन्नातथाचतत्रेयंव्याख्या । कांतीरामभार्याआगताशशिनःप्रियाकांतिःअन्येतिअध्याहारेणसूचिताभवति । द्वयोःवारुणीकांत्योर्म ध्येपूर्वतनाज्येष्ठावारुणीसुरूपासुंदररूपा ॥ ११ ॥ ॥ ॥ ॥ ॥

शशांकपूगःचंद्रसमूहः । पूगःक्रमुकवृंदयोरित्यमरः । तस्मादुद्रिक्ताउत्कृष्टाकांतिर्यस्यसतथा । अतएवसुधामाशोभनप्रकाशोरामःतत्रगोमंतेतिष्ठन्वसन् ताभिःवारुणी श्रीकांतीभिर्मुमुदेमुमोद । तस्याःपूर्वोक्तायाःवारुण्याःप्रतिमाअभिमन्यमानस्वरूपापेयरूपापानयोग्यमद्यस्वरूपायाकादंबरीकदंबकोटरादुत्पन्ना वारुणींसमुद्रोत्पन्नत्वाद्वा रुणीनाम्नींवरुणात्मजामित्यर्थः । शेषभार्यायावारुण्याअभिमन्यमानत्वात् वारुणीनाम्नींकादंबरींपपावितियोजना । कदंबकोटराज्जातानाम्नाकादंबरीतिसा । वारुणीरूपिणीतत्रदेवानाममृतारिणींइतिहरिवंशे । सुराहलिप्रियाहालापरिस्नुद्वरुणात्मजा । गंधोत्तमाप्रसंनेराकादंबर्यःपरिस्रुतेत्यमरः । कुत्सितंचतत्अंबरंचनीलवस्त्रमित्यर्थः । तदस्यास्तीतिकादंबरःतस्येयंकादंबरीति तृतीयासहार्थेक्षीरस्वामिनाव्याख्यातं । वारुणीमदिराज्ञेयाइत्यनेकध्वनिपदमंजर्यां ॥ १२ ॥ एवंअनेनप्रकारेणअत्रगिरौतयोःकृ

ताभी रामो मुमुदे तत्र तिष्ठन् शशांकपूगोद्रिक्तकांतिः सुधामा ॥ तस्या वारुण्याः प्रतिमापेयरूपा कादंबरी वारुणीं तां पपौ सः ॥ १२ ॥ एवं तयोः क्रीडतोः स्वैरमत्र राजन्यवृंदानुगतो जरासुतः ॥ गिरिं गोमंतं परिवार्यादहत्तं दृष्ट्वा देवौ पुप्लुवतुर्बलाढ्यौ ॥ १३ ॥ गिरिस्ताभ्यांपीडितः संनिमग्नो भूमौ पद्भ्यां योजनैकादशं सः ॥ निष्पीडितात्जल धारोद्गतास्माद्वन्हिं व्याप्तं शमयामास सर्वं ॥१४॥ सेनां प्रविष्टौ सर्वराजन्यवृंदं व्यमथ्नतां देववरौ स्वशस्त्रैः ॥ तत्रैव हंसो डिभिकश्चैकलव्यः सकीचकस्तौ शिशुपालपौंड्रकौ ॥ १५ ॥ भौमात्मजो दंतवक्रश्च रुग्मी सौभाधिपो मैंद मैंदानुजौ च ॥ अन्ये च ये पार्थिवाः सर्व एव क्रोधात्कृष्णं परिवार्याभ्यवर्षन् ॥ १६ ॥ ॥ ॥

ष्णरामयोःस्वैरंस्वेच्छानुसारेणयथास्यात्तथाक्रीडतोःक्रीडांकुर्वतोःसतोःराजन्यानां राज्ञांवृंदेनअनुगतःसहितः । परिवार्यआवृत्यअदहत्ददाह । देवौकृष्णरामौतंदहंतंदाह्यंतंजरासंधंदह्यमानंपर्वतंवा ॥ १३ ॥ ताभ्यांकृष्णरामाभ्यांपद्भ्यांपदाभ्यांयोजनैकदशं एकादशयोजनानीत्यर्थः । भूमौसंनिमग्नःप्रविष्टोभूत् । निष्पीडितातस्माद्गिरेःउद्गताऊर्ध्वंनिःसृता ॥ १४ ॥ सेनांजरासंधसेनांप्रविष्टौकृष्णरामौ स्वशस्त्रैःवृंदंसमूहंव्यमथ्नतांममंथतुः । यदातत्रैवतदैवसकीचकःएकलव्यःतौप्रसिद्धौ ॥ १५ ॥ भौमात्मजःभगदत्तःसौभाधिपःसाल्वःमैंदश्चमैंदानुजोविविदःयेपार्थिवाःतेसर्वेकृष्णंपरिवार्यपरितःआवृत्य द्रुमपूगैःवृक्षसमूहैःशिलाभिःपाषाणैःक्रोधातअभ्यवर्षन् यस्माद्धरौएतेअभक्ताःतस्मात्क्रोधादभ्यवर्षन्नितिभावः ॥ १६ ॥ ॥ ॥ ॥ ॥ ॥ ॥

भगदत्तमैंदद्विविदाद्याःयद्यपिभक्ताःतथापितेष्वसुरावेशवशादसुरेष्वेवपरिगणिताः भक्तेषुविशेषमाह । भक्ताश्चेति । सोमदत्तेनपित्रासहवर्तमानःसोमदत्तिःभूरिश्रवाःयेशल्यादयोभक्तास्तेपिजरासुतस्यभयात्अवर्षन् । नतुक्रोधादितिभावः । एषांभयंकुतइत्यतआह । कारागृहइति । यतोमागधेनकारागृहेबंदिगृहेवासिताःवासंप्रापिताःपूर्वमितिशेषः । अतएवावर्षन्नितिसंबंधः ॥ १७ ॥ विगतानिसूतादीनियेषांतेतथातान्कृत्वा वमत्शोणितंरक्तंयेषांतेतथातान् आर्तपीडितंरूपंयेषांतेतथातान् हरिःसिंहः ॥१८॥ त्रिभिःत्र्यक्षौहिणीभिःयुक्तांविंशतविंशतिशब्दपर्यायोविंशच्छब्दः । अक्षौहिणींअक्षौहिण्यात्मकांसेनांत्रयोविंशत्यक्षौहिणीसंख्याकांसेनामित्यर्थः । हत्वारुग्मिण्याःदेव्याअर्थेकृतेरुग्मिणंरुग्मिण्यग्रजंरुग्मनामकंनैवपीडयामास । किंभूतःकृष्णःअस्यरुग्मिणःशस्त्राणिछित्वाविगतरथंकृत्वेतिशेषः । द्रावयनःद्रावयन् ॥ १९ ॥ तस्यरामस्यमुस

**शस्त्रैरस्त्रैर्द्रुमपूगैः शिलाभिर्भक्ताश्च ये शल्यबाल्हीकमुख्याः ॥ ससोमदत्तः सौमदत्तिर्विराटः पांचालराजश्च जरासुतस्य ॥ भयात्कृष्णं शरवर्षैरवर्षन् कारागृहे वासिता मागधेन ॥ १७ ॥ सर्वानितांच्छरवर्षेण कृष्णो विसूतवाजिध्वजशस्त्रवर्मणः ॥ कृत्वा वमच्छोणितानार्तरूपान् विद्रावयामास हरिर्यथा मृगान् ॥ १८ ॥ हत्वा सेनां विंशदक्षौहिणीं तां त्रिभिर्युक्तां रुग्मिणं नैव कृष्णः ॥ रुग्मिण्यर्थे पीडयामास शस्त्राण्यस्य छित्वा विरथं द्रावयानः ॥ १९ ॥ जरासुतो रौहिणेयेन युद्धं चिरं कृत्वा तन्मुसलेन पोथितः ॥ विमोहितःप्राप्तसंज्ञश्चिरेण क्रुद्धो गदां तदुरस्यभ्यपातयत् ॥ २० ॥ तेनाहतः सुभृशं रौहिणेयः पपात मूर्च्छामभिगतः क्षणेन ॥ अजेयत्वं तस्य दत्तं हि धात्रा पूर्वं गृहीतो विष्णुना रामगेन ॥ २१ ॥ तथा कृते बलभद्रे तु कृष्णो गदामादाय स्वामगान्मागधेशं ॥ तताड जत्रौ स तयाभिताडितो जगाम गां मूर्च्छयाभिप्लुतांगः ॥ २२ ॥ ॥ ॥ ॥ ॥**

लेनपोथितःअतएवविमोहितःमूर्छितोजरासुतःचिरेणविलंबेनप्राप्तसंज्ञःसन्क्रुद्धोभूत्वा तस्यरामस्यउरसिगदांअभ्यपातयत्पातयामास ॥ २० ॥ तेनजरासंधेनआहतःपोथितःरामस्यपतनेहेतुमाह । अजेयत्वमिति । तस्यजरासंधस्यतर्हि प्रथमयुद्धे रामेणजरासंधःकथंगृहीतइत्यतआह । पूर्वमिति । रामगेनरामेविद्यमानेनशुक्लकेशस्वरूपिणाविष्णुना ॥२१॥ बलभद्रेतथाकृतेमूर्छितेकृतेसति जत्रौवक्षःकंठयोर्मध्यप्रदेशेतताड । तयागदयाअभिताडितःसजरासंधः अभिप्लुतांगःस्रवद्गात्रःसन् मूर्छयागांभुवंजगाम भुविपपातेतिभावः ॥ २२ ॥ ॥ ॥ ॥ ॥ ॥ ॥

रौहिणेयः उत्तस्थौ मागधोपिसहैवरामेणसहैवसमुत्तस्थौ रामः क्रुद्धः सन् अस्यजरासंधस्यमौलिंकेशग्रंथिमित्यर्थः । गृहीत्वावधायहंतुंमुसलंउद्यच्छत् उद्युक्तमकरोत् । यतोबाहुभ्यांशालतेशोभतेअसौतथा बाहुबलाढ्यइत्यर्थः ॥ २३ ॥ एनंरामंप्रतिनप्रयोज्यंनप्रयोक्तव्यं कुतः यद्यस्माद्यद्दस्त्रंअमोघंतद्वत्तेबलमप्यमोघं तत्तस्मात्तेबाहुबलंवृथानप्रयोज्यमितिसंबंधः ॥ २४ ॥ अस्यजरासंधस्यहंताअन्यस्त्वदन्यः बलवान्त्वत्तोपिबलाधिकश्चास्तीतिश्रुत्वाबलभद्रः शत्रुंविमुच्ययौ तथैवपूर्ववदेव ॥ २५ ॥ तेन कृष्णेनस्रस्तानिसमस्तगात्राणिसर्वावयवायस्यसतथा मूर्छामभिगतः प्राप्तः असौजरासंधः संज्ञांप्राप्य कृष्णेनजीवेतिमुक्तः भीतभीतः अत्यंतभीतइत्यर्थः । पराजितोभूदिति

अथोत्तस्थौ रौहिणेयः सहैव समुत्तस्थौ मागधोप्यग्र्यवीर्यः ॥ क्रुद्धो गृहीत्वा मौलिमस्याशु रामो वधायोद्यच्छन्मुसलं बाहुशाली ॥ २३ ॥ अथाब्रवीद्वायुरेनं न राम त्वया हंतुं शक्यते मागधोयं ॥ वृथा न ते बाहुबलं प्रयोज्यममोघं ते यद्बलं तद्वदस्त्रं ॥ २४ ॥ अन्यो हंता बलवानस्य चेति श्रुत्वा ययौ बलभद्रो विमुच्य ॥ जरासुतं पुनरुद्यच्छमानं जघान कृष्णो गदया स्वयैव ॥ २५ ॥ तेनाहतः स्रस्तसमस्तगात्रः पपात मूर्छाभिगतः स राजा ॥ चिरात्संज्ञां प्राप्य चांतर्हितोसौ संप्राद्रवद्भीतभीतः सलज्जः ॥ २६ ॥ ययौ शिष्टै राजभिः संयुतश्च पुरं जीवेत्येव कृष्णेन मुक्तः ॥ पुनर्युद्धं बहुशः केशवेन कृत्वा जितो राजगणैः समेतः ॥ कृष्णो जित्वा मागधं रौहिणेयः युक्तो ययौ दमघोषेण सार्धं ॥ २७ ॥ पितृष्वसायाः पतिना तेन चोक्तः पूर्वं जितेनापि युधि स्म बांधवात् ॥ यामः पुरं करवीराख्यमेव महालक्ष्म्याः क्षेत्रसंदर्शनाय ॥ २८ ॥ ॥ ॥ ॥

शेषः ॥ २६ ॥ अतएवअंतर्हितः निलीनः । लज्जयासहितः शिष्टैर्हतावशिष्टैः राजाभिः संवृतः संयुतः सन् पुरींप्रतिययौ जितः पराजितोभूदितिशेषः । कृष्णोजित्वारौहिणेययुक्तः सन् दमघोषेणदमघोषनृपेणसार्धंसाकंययौ ॥ २७ ॥ ननु दमघोषः कः तेनसार्धंकुत्रययावित्यतआह । पितृष्वसायाइति । पितुः कृष्णस्यपितुः स्वसायाः स्वसुः पतिना भर्त्रा षष्ठीयुक्तश्छंदसिवेतिघिसंज्ञा भर्तापूर्वंआदौयुधियुद्धेजितेनजरासंधेनसहकृष्णेनपराजितेनापितेनदमघोषेणमहालक्ष्म्याः क्षेत्रसंदर्शनायलक्ष्म्याअधिष्ठितस्थानंद्रष्टुमित्यर्थः करवीराख्यंपुरंप्रतियामइतिबांधवादेवबंधुस्नेहादेवमुक्तः कृष्णः ययावितिसंबंधः ॥ २८ ॥ ॥ ॥ ॥

ननु वैरिपक्षस्थेनसहकथंययावित्यतआह । श्रुत्वेति । युद्धेजितस्यआत्मनःअंतःकरणेनप्रीत्याकृष्णःस्नेहेनयुक्तस्यतस्यदमघोषस्यवाक्यंश्रुत्वा तेनदमघोषेणयुक्तःसन्नगात् करवीरंप्रतीतिशेषः । भीत्यायुक्तस्येतिपाठे कृष्णेनसह कृतयुद्धरूपापराधभयेनयुक्तस्य ॥ २९ ॥ दमघोषःपूर्वंकइत्यतआह । गंधर्वइति । यस्मादसौदमघोषःपूर्वंदनुनामागंधर्वःत्रिजटापुत्रदनुराक्षसव्यावृत्त्यर्थं गंधर्वइत्युक्तंतस्मात् राजाकृष्णेभक्तिमानास पापःवसुदेवःवसुदेवपुत्रःसप्रसिद्धःसृगालाख्यःक्रुधाअगात् ॥ ३० ॥ उक्तमेवार्थंविवृणोति । सूर्येति । तिग्मरुचेःसूर्यस्यवरादवध्यःसृगालःकृष्णंप्रतियोद्धुंययौ । अस्त्रसंधानममुचच्च । अथजहाराचिच्छेद ॥ ३१ ॥ सकृष्णःअस्यसृगालस्यदेहंअ

श्रुत्वा वाक्यं तस्य युद्धे जितस्य प्रीत्या युक्तस्यात्मना तद्युतोगात् ॥ २९ ॥ गंधर्वोसौ दनुनामा नरोभूत्तस्मात्कृष्णे भक्तिमांश्चास राजा ॥ पुरं प्राप्तांस्तान्स विज्ञाय पापः सृगालाख्यो वासुदेवः क्रुधागात् ॥ ३० ॥ सूर्यप्रदत्तं रथमारुह्य दिव्यं वरादवध्यस्तिग्मरुचेः स कृष्णं ॥ योद्धुं ययावमुचच्चास्त्रसंघाच्छिरस्तस्याथाशु जहार कृष्णः ॥ ३१ ॥ द्विधा कृत्वा देहमस्यारिणा च पुत्रं भक्तं तस्य राज्येभिषिच्य ॥ स शक्रदेवं मणिभद्रः पुरा यो ययौ पुरीं स्वां सहितोग्रजेन ॥ ३२ ॥ नीतिं बलिष्ठस्य विहाय सेना दूराद्युद्धं दर्शयित्वैव गुप्त्यै ॥ स्वसेनायाः सर्वपूर्णात्मशक्तिः पुनः पुरीं प्राप्य संपूजितोवसत् ॥ ३३ ॥ इति श्रीमदानंदतीर्थ भगवत्पा० विरचिते श्रीमन्महाभारत तात्पर्यनिर्णये षोडशोध्यायः ॥ १६ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥

रिणासुदर्शनेन द्विधाद्विःप्रकारंकृत्वा पुरामूलरूपेयोमणिभद्रःमणिभद्राख्योदेवोभूदितिशेषः तस्यसृगालस्यपुत्रं भक्तंस्वभक्तं शक्रदेवंशक्रदेवनामकं राज्येअभिषिच्य मणिभद्रःशक्रदेवनाम्नासृगालपुत्रोभूदितिभावः । स्वांपुरींमथुरांययौ ॥ ३२ ॥ संदर्शयन् बलिनामित्यादिनोपक्रांतमर्थंविशिष्यन्नुपसंहरति । नीतिमिति । सर्वविषयेपूर्णाआत्मशक्तिःस्वरूपशक्तिर्यस्यसतथा कृष्णःस्वसेनायाःगुप्तेरक्षणार्थंसेनांस्वसेनांविहाय दूराद्युद्धंकर्तव्यमितिबलिष्ठस्यनीतिंदर्शयित्वैव पुरींसंप्राप्यसंपूजितोवसत् ॥ ३३ ॥ यंगंगाज० ॥ पूर्ततस्यकृतौसतांसुखकरोध्यायस्तथाषोडशः श्रीमद्भारत० ॥ १६ ॥ इति श्रीतात्पर्यनिर्णयस्य टीकायां षोडशोध्यायः ॥ १६ ॥ श्रीकृष्णार्पणमस्तु ॥

श्रीगुरुभ्योनमः ॥ ॐ मधुरागमनकालप्रवृत्तांकथामाह । गतइत्यादिना । चेदिपेचेदिविषयाधिपेदमघोषेस्वकंपुरंप्रतिगतेसति । जनार्दनःकृष्णःरुग्मिणीतिरुग्मिणीना
म्नीयारमैवस्वयंवरायउद्यतांउद्युक्तांतांरुग्मिणींअशृणोत् ॥ १ ॥ श्रियःरुग्मिण्याःअग्रजःरुग्मिनामकः सरुग्मीरमायाःसर्वसंपदाभिमानिन्याःलक्ष्म्याःपतिंकृष्णंश्रियःसं
पदःहीनइतिद्विषन्कुत्सयन् हरिप्रियांकृष्णदयितांरुग्मिणींहरेःप्रदातुंउद्यतान् भीष्मकादिसद्बंधून्न्यवारयत् । इदमप्यणशूोदितियोऽयं । श्रियइत्युभयत्रसंबध्यते । तथो
क्तंभागवते । बंधूनामिच्छतांदातुंकृष्णायभगिनींनृप । रुग्मीनिवार्यकृष्णाद्विट्चैद्यायसमकल्पयदिति । बंधूनांबंधूनित्यर्थः ॥ २ ॥ अथनिवारणानंतरं । तेनरुग्मिणाप्रघो
षितेभेरीताडनादिनासमीयुःसमागताः ॥ ३ ॥ तदाराज्ञांआगमनकाले तेनकृष्णेनस्मृतःपक्षिराट्गरुडःकेशवंप्रत्याजगाम । अथगरुडागमनानंतरं । केशवोगरुडमारु

ॐ गतेथ चेदिपे स्वकं पुरं जनार्दनोश्शृणोत् ॥ रमेव रुग्मिणीति योद्यतां स्वयंवराय ताम् ॥१॥ स रुग्मिनामकोग्र
जः श्रियो द्विषन् रमापतिं ॥ हरेःप्रदातुमुद्यतां न्यवारयद्धरिप्रियां ॥ २ ॥ प्रघोषिते स्वयंवरेथ तेन मागधादयः ॥
समीयुरुग्रपौरुषाः ससाल्वपौंड्रचेदिपाः ॥ ३ ॥ तदा जगाम केशवो जवेन कुंडिनं पुरं ॥ स्मृतोथ तेन पक्षिराट् स
माजगाम केशवं ॥ ४ ॥ पतत्रवायुनास्य ते नरेश्वराः प्रपातिताः ॥ यदेदृशं पतत्रिणो बलं हरेः किमुच्यते ॥५॥
किमत्र नः कृतं भवेत्सुखाय हीति तेब्रुवन् ॥ अथाब्रवीज्जरासुतो जयी पयोब्धिमंदिरः ॥ ६ ॥ किल्वेष पक्षिवाह
नो यतश्च नान्यथा भवेत् ॥ जिता वयं च सर्वशोमुनैकलेन संयुगे ॥ ७ ॥ अनेकशो न संगतैर्जितः कदाचिदे
ष हि ॥ अमुष्य चाग्रजः पुरा निहंतुमुद्यतो हि माम् ॥ ८ ॥ ॥ ॥ ॥ ॥

ढ्वेतिवाक्यशेषः । कुंडिनंपुरंप्रत्याजगाम ॥ ४ ॥ अस्यगरुडस्यपतत्रयोःपक्षयोः वायुनातेमागधादयःप्रपातिताःपतनंप्रापिताः तेनृपाइतिअब्रुवन् किमिति । यद्यस्मा
त्पतत्रिणःईदृशंबलंतत्तस्मात्हरेर्बलंकिमुच्यतेहरेर्बलंउत्तममितिकिंवक्तव्यमित्यर्थः ॥ ५ ॥ अत्रस्वयंवरेनोस्माकंकिंकृतंकर्मसुखायभवेदित्यब्रुवन्नित्यर्थः ॥ ६ ॥ जयीज
यवान्एषःकृष्णःपयोब्धिमंदिरोहरिःकिल यतःपक्षिवाहनःअतएवेत्यर्थः । अन्यथाहर्यभावेपक्षिवाहनोनभवेत् । एकलेनएकेनअमुनाकृष्णेन सर्वशःसर्वेवयंसंयुगेसंगरेअ
नेकशःबहुवारं जिताश्चपराजिताः ॥ ७ ॥ संगतैःसम्यङ्मिलितैःअस्माभिःएषःकृष्णःकदाचिन्नजितःनपराजितः । पुराप्रथमयुद्धेअमुष्यकृष्णस्य ॥ ८ ॥ ॥

अक्षतेनक्षतरहितेनयेनकृष्णेन मृधेमृधेयुद्धेयुद्धे समस्तशोवयंतृणोपमाःकृताः हियस्मात्तस्मात् अस्यकृष्णस्यबलंकिमुच्यते । कृष्णबलंउत्तममितिकिंवक्तव्यमित्यर्थः ॥ ९ ॥ अत्रस्वयंवरेउदीर्णसंकटेउत्कृष्टापादिप्राप्तेसति । किंकुर्वतांकिंकर्मकुर्वतांनःसुखंभवेदितिब्रुवन् नृपोजरासंधःविच्छविःविगतकांतिःसन् अवाङ्मुखंअधोमुखंचकार ॥ १० ॥ दंतवक्रेणसहवर्तमानःचेदिभूपतिःशिशुपालः पुराहरेःपार्षदःहियस्मात्तस्मात् एकदाकाचित्प्रसन्नबुद्धिःहरौशुभबुद्धिःअतएवतादृशंवचःआह ॥ ११ ॥ प्रसन्नबुद्धिरित्युक्तंस्पष्टयति । शृणुष्वेति । हेराजसत्तमजरासंध शृणुष्वेत्याहेतिसंबंधः । केचित्संतःप्रभुंहरिंवदंति अदःइदंवचःमृषान सत्यमेवेत्यर्थः ॥ १२ ॥ तथाआवयोर्दंतवक्रस्यममच अमुष्यकृष्णस्यदर्शनेजातेसति । कदाचिदूर्जिताउत्कृष्टाभक्तिर्भवेत् । पुनरनंतरं क्रुधाकोपःअन्यथाभक्त्यभावः द्वेषइत्यर्थः । जायतेच ॥ १३ ॥

**अदृश्यवाक्यतोत्यजत्प्रताडनात्सुपीडितं ॥ किमस्य तूच्यते बलं वयं तृणोपमाः कृताः ॥ समस्तशो मृधेमृधे हि येन चाक्षतेन हि ॥ ९ ॥ किमत्र कुर्वतां सुखं भवेदुदीर्णसंकटे ॥ इति ब्रुवन्नवाङ्मुखं नृपश्चकार विच्छविः ॥१०॥ अथाह चेदिभूपतिः सदंतवक्रको वचः ॥ पुरा हरेर्हि पार्षदः प्रसन्नबुद्धिरेकदा ॥ ११ ॥ शृणुष्व राजसत्तम प्रभुं शिवस्वयंभुवोः ॥ हरिं वदंति केचिदप्यदो भवेन्न वै मृषा ॥ १२ ॥ तथावयोश्च दर्शने भवेत्कदाचिदूर्जिता ॥ अमुष्य भक्तिरन्यथा पुनश्च जायते क्रुधा ॥ १३ ॥ न कारणं च विद्महे न संशयः परो हरिः ॥ व्रजाम तं सुखार्थिनो वयं विहाय शत्रुतां ॥ १४ ॥ इदं हि नः शुभप्रदं न चान्यथा शुभं क्वचित् ॥ इतीरितो जरासुतो ददर्श तौ दहन्निव ॥ १५ ॥ अथ प्रहस्य सौभराट् वचो जगाद मागधम् ॥ विनिंद्य तौ क्रुधा स्फुरन् क्रुधा स्फुरंतमीक्ष्य च ॥ १६ ॥ न तन्मृषा हरिः स्वयं जनार्दनो वधाय नः ॥ प्रजात एष यादवो वयं च दानवेश्वराः ॥१७॥**

तत्रभक्तिद्वेषोत्पत्तौकारणंनविद्महेनजानीमः । तथापिहरिःपरःउत्तमःसंशयोनकिमत्रकुर्वतांसुखंभवेदित्यस्योत्तरमाह । व्रजामेति । तंकृष्णंव्रजाम शरणमितिशेषः ॥१४॥ इदंहिइदमेवमयोक्तमेवशरणप्राप्तिरितियावत् । नःशुभप्रदंसुखप्रदंअन्यथामदुक्तयकरणे तौशिशुपालदंतवक्रौदहन्निवददर्श ॥१५॥ सौभराट्साल्वः स्वयंक्रुधास्फुरन्उज्वलन्सन् । क्रुधास्फुरंतंजरासंधंईक्ष्य तौशिशुपालदंतवक्रौविनिंद्यप्रहस्यच मागधंप्रतिवचोजगाद ॥१६॥ किमिति । स्वयंकृष्णः हरिरितित्वयोक्तंतद्वाक्यंमृषान । ननु हरित्वेपिकृष्णःकिमर्थंजातइत्यतआह । जनार्दनइति । एषःहरिःयतोजनार्दनोअतोनःवधाययादवःसन् प्रजातः । अस्मद्वधःकुतःक्रियतइत्यतआह । वयमिति । यतोवयंपूर्वंदानवेश्वराः ॥ १७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

एवंचेद्द्वेषनिवृत्त्यर्थंसंधानंकिमर्थंनक्रियतइत्यतआह । स्वधर्मइति । हरौसदाप्रतीपताएषःनःस्वधर्मः स्वधर्मफलमाह । स्वधर्मिणइति । परागतिःपरदैवमित्यर्थः ॥ १८ ॥ भवान्त्वंराजाजरासंधःगुरुःहरिःअरिःशत्रुःसाधुसाधुसम्यगुक्तंसम्यगुक्तमितिजगाद ॥ १९ ॥ तथैवसाल्ववत्तौपूर्वोक्तौकरूशचेदिपौकरूशविषयाणांचेदिविषयाणांचयौ रक्षकौदंतवक्रशिशुपालौचतथैवोचतुरित्यर्थः । कुबुद्धयःदुरात्मानःसाल्वादयःयुद्धेकृष्णेनसहयुद्धार्थे ॥ २० ॥ करूशचेदिभूभृतौकृष्णविषयेसदाप्रतीपकारिणौप्रतिकूला चरणशीलौअपिआवामपिभवावइतिप्रतिज्ञांकृत्वेत्यर्थः । गुरोःअसतांगुरोःजरासंधस्यप्रसादंअनुग्रहंआप्नुतांप्रापतुः ॥ २१ ॥ तेजरासंधादयःअमंत्रयन्विचारंचक्रुः ।

स्वधर्म एष नः सदा दृढप्रतीपता हरौ ॥ स्वधर्मिणो हता अपि प्रयाम सद्गतिं ध्रुवं ॥ १८ ॥ शिवश्च नः परा गतिर्गुरुर्भवानरिर्हरिः ॥ इतीरितः स मागधो जगाद साधुसाध्विति ॥ १९ ॥ तथैव रुग्मिपूर्वकाः करूशचेदिपौ च तौ ॥ विनिश्चयं कुबुद्धयो युधे च चक्रुरूर्जितं ॥ २० ॥ सदा प्रतीपकारिणौ भवाव कृष्ण इत्यपि ॥ गुरोः प्रसादमाप्नुतां करूशचेदिभूभृतौ ॥ २१ ॥ पुनश्च ते त्वमंत्रयन् सहैव पापबुद्धयः ॥ ध्रुवं समागतो हरिर्लभेत रुग्मिणीमिमां ॥ ॥ २२ ॥ अयं हि लोकसुंदरो सुरूपिणी च रुग्मिणी ॥ मुखेन बाहुनाप्ययं समस्तलोकजिद्वशी ॥ २३ ॥ समस्तवेदिनां वरं जितारिमग्र्यरूपिणं ॥ समस्तयोषितां वरा व्रजेत रुग्मिणी ध्रुवं ॥ २४ ॥ वयं च मानसंक्षयं नितांतमाप्नुमस्तदा ॥ न शक्नुमो निवारितुं शरैरमुं कथं च न ॥ २५ ॥ अतः स्वयंवरे यथा न संगमो हरेर्भवेत् ॥ तथा विधानमेव नः सुनीतिरूर्जिता ध्रुवं ॥ २६ ॥ ॥ ॥ ॥ ॥ ॥

लभेतप्राप्नुयात् ॥ २२ ॥ अयंकृष्णःसुरूपिणीसुंदररूपवतीमुखेनमुखतेजसासमस्तलोकाजितूस्वमुखतेजसातिरस्कृतसमस्तलोकमुखकांतिरितिभावः । मुखेनवशी कृष्णमुखावलोकनेन सर्वेतद्वशाभवंतीतिभावः । बाहुनापिबाहुबलेनयुद्धेसमस्तलोकाजित् अतएववशीकृतलोकइत्यर्थः ॥ २३ ॥ समस्तवेदिनांसर्वज्ञानांमध्येवरं जिताअरयो येनसतथा । तंअग्र्यंउत्तमंरूपमस्यास्तीतितंकृष्णंयोषितांस्त्रीणांमध्येव्रजेतव्रीयेत यदा ॥२४॥ तदावयंमानसंक्षयंमानभंगंअमुंकृष्णंनिवारितुं नशक्नुमःनसमर्थाः ॥२५॥ अतःकारणात्स्वयंवरेहरेःकृष्णस्यसंगमःमेलनं नोस्माकंयथानभवेत् तथाविधानमेवकरणमेवध्रुवंऊर्जितामहतीसुनीतिःउत्तमनीतिः ॥ २६ ॥ ॥

अतःकृष्णसंगमाभावार्थं अस्यकृष्णस्यभूभुजांभूपालानांनःसमागमेसंमेलनेक्काचिन्अत्रअन्यस्थलेपिवा कदाचित्समयेआसनंनदेयं अर्घ्यपूर्वकोविधिश्च पूजापिनकर्तव्या ॥ २७ ॥ वरासनेउत्तमासनेतिष्ठंतीतितथा । तेचतेभूभुजश्चभूपाःतेषांनःपुरःविमानितःअवमानंप्राप्तःसन् क्षितौभूम्यांअधइत्यर्थः । नास्यतिनोपविशति । कुतःहियतः सकृष्णःदैवतैर्मानितःअतएवेत्यर्थः ॥ २८ ॥ दर्पःगर्वःमानःअभिमानःताभ्यांसंयुतःसकृष्णःक्रुधाकोपेनध्रुवंस्वकांपुरींप्रतियास्यति । ततःकृष्णगमनानंतरं विधेमकुर्मः ॥ २९ ॥ कैशिकेनसहवर्तमानःभीष्मकानुजःक्रथःइत्युक्तप्रकारेणसर्वभूभुजांविनिश्चयंअवगम्यज्ञात्वा हरिंप्रतिद्रुतंअभ्ययात् ॥ ३० ॥ तौक्रथकैशिकाख्यौप्रचक्रतुः कृष्णायेतिशेषः ॥ ३१ ॥ शतक्रतोःइंद्रस्यपुमान्दूतःवचःइंद्रवचःप्रगृह्यस्वीकृत्य । भूभुजःप्रत्यगमत् । जरासुतादिकान्प्रतिअर्थवत्अर्थोपेतंनव्यर्थमित्यर्थः । वचःउ

**अतो न देयमस्य नः सुभूभुजां समागमे ॥ क्वचित्कदाचिदासनं न चार्घ्यपूर्वको विधिः ॥ २७ ॥ न चास्यति क्वचि त्क्षितौ विमानितः पुरो हि नः ॥ वरासनस्थभूभुजां स मानिनो हि दैवतैः ॥ २८ ॥ सदर्पमानसंयुतः क्रुधा प्रयास्य ति ध्रुवं ॥ पुरीं स्वकां ततो वयं विधेम च स्वयंवरं ॥ २९ ॥ इति स्म सर्वभूभुजां विनिश्चयं सकैशिकः ॥ क्रथोवग म्य भीष्मकानुजोभ्ययाद्धरिं द्रुतं ॥ ३० ॥ प्रणम्य पादपद्मयोर्निजं गृहं प्रवेश्य च ॥ महासनं प्रदाय तौ प्रचक्रतुर्व रार्चनं ॥ ३१ ॥ अथागमच्छतक्रतोर्वचः प्रगृह्य भूभुजः ॥ जरासुतादिकान्पुमानुवाच चार्थवद्वचः ॥ ३२ ॥ अहं प्रियः शचीपतेः सदास्य चाक्षिगोचरः ॥ सुरेंद्र आज्ञया वदन्नृपान्व ईश्वरो हि सः ॥ ३३ ॥ समस्तराजसत्पतिर्हरिर्न चान्य इत्यपि ॥ वराभिषेकमीशितुः कुरुध्वमाश्वसंशयं ॥ ३४ ॥ अतोन्यथा शिरस्यहं निपातयामि वोशनिं ॥ इ तीदमिंद्रशासनं कुरुध्वमित्यसौ ययौ ॥ ३५ ॥ ॥ ॥ ॥ ॥ ॥**

वाच ॥ ३२ ॥ किमिति । सदेत्युभयत्रसंबंधः । अस्यशचीपतेःअक्ष्णोर्गोचरश्चदृग्विषयइत्यर्थः । सुरेंद्रोनृपान्राजभूतान्वःयुष्मान्आज्ञयाऽवदत् । हियतःससुरेंद्रोवः युष्माकंईश्वरःस्वामीअतोआज्ञांअवददित्यर्थः । नतुप्रार्थनया । वइत्युभयत्रसंबध्यते ॥ ३३ ॥ आज्ञांस्पष्टयति । समस्तेति । समस्तानांराज्ञांजरासंधादीनांसत्पतिः मुख्यस्वामीहरिरपिकृष्णएवेत्यर्थः । अन्योनचनास्त्येवेतिबुद्ध्या असंशयंयथाभवतितथा । ईशितुःकृष्णस्यवराभिषेकंसाम्राज्याभिषेकंआशुकुरुध्वं ॥ ३४ ॥ अतःमदा ज्ञायाःअन्यथावैपरीत्याचरणात्कृष्णस्यअभिषेकाकरणादित्यर्थः । वःशिरसिअशनिंवज्रंनिपातयामि इतिमदुक्तप्रकारेणइदंअभिषेककरणरूपंइंद्रस्यशासनंआज्ञांकु रुध्वं इत्युक्त्वाअसौइंद्रदूतःययौ ॥ ३५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तेजरासंधादयः तेनदूतेनईरितं किमिति । वासवःइंद्रःसुगर्हितोहि अतिगर्हयुक्तःखलु इदानीमितिशेषः ॥ ३६ ॥ पुराकृष्णोत्पत्तेःपूर्वं सदावासवःनोस्माकंसकाशात् प्रति प्रतिस्मएकैकस्मादपिबिभेति । उतअसौइंद्रः ॥ ३७ ॥ यदिअदृश्यःसन्तर्हि अमृत्यवोपिवयंपीडिताःभवेम ॥ ३८ ॥ दिविस्थितस्यइंद्रस्यक्षमाःसमर्थाःउतअद्ययदि वयंअमुंइंद्रंव्रजेमतर्हि कृष्णःएष्यतियोद्धुमागमिष्यति ॥ ३९ ॥ अतःकारणात्यदिशचीपतिः शार्ङ्गिणःशार्ङ्गधन्विनःकृष्णस्यअभिषेचनात् इहअस्मासुवज्रंनउत्सृजेत् । तदातर्हि वयंतंकृष्णंअभिषेचयामः । अभिषेकंकुर्मः ॥ ४० ॥ अतोन्यथाकृष्णस्यअभिषेकाकरणे दनुःदनुनामराक्षसः अमृत्युकःमृत्युरहितःसन्नपियथासुरेंद्रवज्रताडनात्कुक्षौउदरेगच्छतीतिकुक्षिगंतत्आस्यंतेनयुक्तःबभूव ॥ ४१ ॥ तथैवदनुवत्सःनः आत्मान्नयेत्प्रापयेत् । इतिउक्तरीत्याविचार्य विनिश्चिताःस्म अभिषेकुंवि

तदीरितं निशम्य ते पुनः सुतप्तचेतसः ॥ बभूवुरूचिरे वचः सुगर्वितो हि वासवः ॥ ३६ ॥ पुरा बिभेति नः सदा प्रतिप्रति स्म वासवः ॥ उताद्य कृष्णसंश्रयाद्दृढं बिभीषयस्यसौ ॥ ३७ ॥ अदृश्य एव देवराड्यदि स्म वज्रमुत्सृजेत् ॥ भवेम पीडिता वयं वरादमृत्यवोपि हि ॥ ३८ ॥ पुरा दिवि स्थितस्य च प्रमर्दने वयं क्षमाः ॥ उताद्य यद्यमुं वयं व्रजेम कृष्ण एष्यति ॥ ३९ ॥ अतोभिषेचनाद्यदीह शार्ङ्गिणः शचीपतिः ॥ न वज्रमुत्सृजेत्तदाभिषेचयाम तं वयं ॥ ४० ॥ अतोन्यथा दनुर्यथा वरादमृत्युकोपि सन् ॥ सुरेंद्रवज्रताडनाद्बभूव कुक्षिगास्ययुक् ॥ ४१ ॥ तथैव कृष्णसंश्रयात्स नः शचीपतिर्नयेत् ॥ इति स्म निश्चिता नृपानयातयंत शौरये ॥ ४२ ॥ समस्तशो जरासुतादिभिः कृतेभिषेचने ॥ अतीव भग्नमानकान्न चानुयाति कश्चन ॥ ४३ ॥ समाश्रयं च केशवं तदैव जीवनार्थिनः प्रकुर्युरासुरा अपीति देवकार्यसंक्षयः ॥ ४४ ॥ ॥ ॥ ॥ ॥

निश्चयवंतोपिजरासंधादयः नृपान्कांश्चननृपान् शौरयेकृष्णायअभिषेकंकर्तुं अयातयंतप्रेषयामासुः । जरासंधादिचत्वारोनृपाःअन्यनृपान्अभिषेकुंप्रेषयामासुः । स्वयं नगताइतिभावः ॥ ४२ ॥ ननु तेचत्वारःकुतोनगताइत्याशंकायां नगंतव्यमितिइंद्रस्यआज्ञयैवेत्युक्ते इंद्रोपिकिमर्थंतथाआज्ञापयामासेत्यतस्तदभिप्रायमाह । समस्तशइत्यादिना । समस्तशःसमस्तैःकृतेसति अतीवभग्नोमानःअभिमानोयेषांतेतथा तान्जरासुतादीन् कश्चनपुरुषः नानुयाति अनुकूलवर्तीनभविष्यति ॥ ४३ ॥ तदा मानभंगकालेजीवनार्थिनः असुराअपिकेशवमेवसमाश्रयंरक्ष्यरक्षकंप्रकुर्युः । इत्यस्माद्धेतोः देवकार्यस्यसंक्षयोविनाशःस्यादितिशेषः ॥ ४४ ॥ ॥

पाकशासनःइंद्रःइतीक्ष्यइतिविचार्य । अवदत्दूतमुखादितिशेषः । किमिति । रुग्म्यादिभिःसहितोमागधःहरिंकृष्णंअभिषेकार्थंनयातुनप्राप्नोतु इत्यवददित्यर्थः ॥ ४५ ॥ ततःकारणात्अपरेनृपाःसुरेंद्रशासनात्मागधादिचतुरःविनाविहाय । अधिराजानांचक्रवर्तिनांराजेतिअमुंकृष्णंअभिषेकुंतदाउद्यताःउद्योगवंतोबभूवुरितिशेषः ॥ ४६ ॥ अदात्प्रेषयामास । नभस्थलात्आकाशात्अवतारितेआगतेसति तत्रवरासनेविवेशउपविष्टोभूत् ॥ ४७ ॥ प्रभुःसकेशवःपतत्रिपुंगवंगरुडं भीष्मकानुजौतौ क्रथकैशिकौकरेकरंप्रगृह्यसहासनेइंद्रप्रेषितासनइत्यर्थः । न्यवेशयत्उपवेशयामास ॥ ४८ ॥ शातकुंभसंबंधिनःशातकौंभाः शोभनाश्चतेशातकौंभाश्चसुवर्णनिर्मिताःतेचतेकुंभाश्च तेषुविद्यमानानिचतानिकानिचजलानितैः हरिंअभिषेकिणंअभिषेकवंतंप्रचक्रुः । स्वर्णंसुवर्णंकनकंहिरण्यंहेममहाटकं । तपनीयंशातकुंभमित्यमरः ॥ ४९ ॥ पूर्वकैः

इतीक्ष्य पाकशासनोवदज्जरासुतादिकान् ॥ सरुग्मिसाल्वचेदिपो न यातु मागधो हरिम् ॥४५॥ ततस्तु तान्विनापरे धिराजराज इत्यमुं ॥ तदाभिषेकुमुद्यताः नृपाः सुरेशशासनात् ॥ ४६ ॥ ततः शचीपतिर्निजं वरासनं हरेरदात् ॥ विवेश तत्र केशवो नभस्थलावतारिते ॥ ४७ ॥ करे प्रगृह्य केशवो न्यवेशयत्सहासने ॥ पतत्रिपुंगवं च तौ सभीष्मकानुजौ प्रभुः ॥ ४८ ॥ अथाखिला नरेश्वरा मुनींद्रसंयुता हरिम् ॥ सुशातकौंभकुंभकैः प्रचक्रुराभिषेकिणम् ॥४९॥ विरिंचशर्वपूर्वकैरभिष्टुतः सुरादिभिः ॥ समस्तदेवगायकैः प्रगीत आस केशवः ॥ ५० ॥ अथाह भीष्मकं प्रभुः स्वयंवरः किल त्वया ॥ अभीप्सितः सुताकृते शुभाय ते भवेन्न सः ॥ ५१ ॥ इयं रमा तवात्मजा बभूव तां हरेर्न चेत् ददाति चेत्तदा पिता निरिंदिरो व्रजेदधः ॥ ५२ ॥ हिताय चैतदीरितं तवान्यथा न चिंतय ॥ न योषिदिच्छया त्वहं ब्रवीमि पश्य यादृशः ॥ ५३ ॥ ॥ ॥ ॥ ॥

सुरादिभिः ॥ ५० ॥ त्वयासुताकृतेपुण्यर्थंस्वयंवरोअभीप्सितोवांछितःकिल सःस्वयंवरःतेशुभायपुण्यायनभवेत् ॥ ५१ ॥ रमालक्ष्मीःइयंरुग्मिणीनाम्नीसतीतवआत्मजा बभूव । यदिपितारुग्मिणीपिताभवान्तांरुग्मिणींहरेःअयनददातिदातुंनेच्छतिचेत् अन्यस्मैददातिचेत् तदातर्हि निरिंदिरःश्रीरहितःसंपद्धीनइत्यर्थः । तादृशःसन्अधःतमोव्रजेत् ॥ ५२ ॥ तद्वाक्यंतवहितायईरितंउक्तंअन्यथास्वप्रयोजनार्थमितीरितमितिनाचिंतय । अहंयोषितःभार्यायाइच्छयानब्रवीमि । कुतःअहंयादृशःयादृशसंपयुक्तःतादृशंमांपश्येति ॥ ५३ ॥ ॥ ॥ ॥ ॥ ॥

ईश्वरःसकृष्णःउदीर्यंआत्मनःविश्वरूपंआविश्चकारह प्रकटमकरोत् । कथंभूतंउत्तमंशीर्षाणिशिरांसिचबाहवश्चविसंख्याःविगतसंख्याःशीर्षाःबाहवोयस्यतत् ॥ ५४ ॥ अनेकंबहुप्रकारंतेजोयस्यतत् आततंअंडस्यअंतर्बहिर्व्याप्तं विसंख्यरूपैःअनंतरूपैःसंयुतं अंगदानिबाहुभूषणानिनूपुराणिपादभूषणानिविचित्राणिमौल्यादीनियस्यतत् ॥ ५५ ॥ ज्वलत्प्रकाशमानंतच्चतत्कौस्तुभंचतस्यप्रथामभिभासयतिप्रकाशयतीतितथा । शुभान्यंबराणिवासांसियस्यतत् ममयादृशाःस्त्रियःसंतिताअपिप्रपश्येत्युक्त्वा मनुष्यदृष्टितःमनुष्यज्ञानापेक्षयारुग्मिणीतनोरपिरुग्मिणीस्वरूपभूतायाःश्रियाअपीत्यर्थः । अधिकांरूपेणेतिशेषः । परांसर्वोत्तमांअनंतरूपिणीं बहुरूपवतींश्रियंअदर्शयत् । स्वविश्वरूपवत्रमायायाअपि अनंतरूपाण्यदर्शयदितिभावः॥ ५६॥ देवताश्चस्वरूपाश्रितब्रह्मादिदेवानप्यदर्शयत् । देवताःदेव्यःजांबवत्यादिषण्महामहिष्यश्चे

उदीर्य चैवमीश्वरश्चकार ह्याविरात्मनः ॥ सविश्वरूपमुत्तमं विसंख्यशीर्षबाहुकम् ॥ ५४ ॥ अनंततेजसा ततं विसंख्यरूपसंयुतं ॥ विचित्रमौलिकुंडलां गदोरुहारनूपुरं ॥ ५५ ॥ ज्वलत्सुकौस्तुभप्रभाप्रभासकं शुभांबरं ॥ प्रपश्य यादृशा स्त्रियो ममेत्यदर्शयच्छ्रियं ॥ ५६ ॥ अनंतरूपिणीं परां मनुष्यदृष्टितोधिकां ॥ सरुग्मिणीतनोरपि व्यदर्शयच्च देवताः ॥ ५७ ॥ तदद्भुतं समीक्ष्य तु प्रभीत आस भीष्मकः ॥ पपात पादयोः प्रभोः करोमि तत्तथेति च ॥ ५८ ॥ पुनश्च विश्वरूपतां पिधाय पद्मलोचनः ॥ जगाम पक्षिवाहनः पुरीं स्वबाहुपालितां ॥ ५९ ॥ अपांपतिश्च मैथिलः स्वयंवरं कृतावपि ॥ हरिं विनिश्चयादियं व्रजेदिति स्म चक्रतुः ॥ ६० ॥ स्वयंवरः क्षितिभुजां स्वधर्म इत्यतो द्वयोः ॥ न दोष आस भीष्मको न केशवार्थमैच्छत ॥ ६१ ॥ अतो हरौ प्रबोध्य तं गते कृपालुसत्तमे ॥ वशीकृते च भीष्मके नृपास्त्वमंत्रयन्पुनः ॥ ६२ ॥ ॥ ॥ ॥ ॥

तिवा । विमलादिस्वस्वरूपभूतशक्तयोवा ॥ ५७ ॥ अद्भुतंआश्चर्यकरंतद्विश्वरूपं तथायथात्वयाउक्तंतथातत्तेवाक्यंकरोमीतिब्रुवन्पपात ॥ ५८ ॥ पिधायआच्छाद्य पुरींमथुरां ॥ ५९ ॥ ननु रमायाःस्वयंवरंकर्तुःप्रत्यवायश्चेद्वरुणजनकयोःस्वयंवरःप्रत्यवायहेतुःकथंनाभूदित्यतआह । अपांपतिःवारांपतिःवरुणोमैथिलोजनकः । यद्यपि स्वयंवरंकृतावपिइयंममात्मजारमेतिवरुणः इयंसीतारमेतिजनकः हरिंनारायणंरामंचनिश्चयाद्व्रजेत् इत्यभिप्रायेणस्वयंवरंचक्रतुःस्म ॥ ६० ॥ ननु एवंनिश्चयश्चेत्तर्हिस्वयंवरंकिमित्यकुर्वतामित्यतआह । स्वयंवरइति । क्षितिभुजांराज्ञांस्वयंवरःस्वधर्मइत्यतइतिहेतोश्चक्रतुरित्यर्थः । अतःद्वयोःवरुणजनकयोर्भीष्मकःकेशवार्थंनैच्छतयतः ॥ ६१ ॥ अतोदोषःस्यादितिहरौतंभीष्मकंप्रबोध्य सम्यग्बोधयित्वागतेसति कृष्णेनवशीकृतेसति ॥ ६२ ॥ ॥ ॥ ॥

पुनःपुनःकृष्णेनपराजितोजरासंधःकिमर्थंयुद्धार्थंयततइत्यतस्तदभिप्रायमाह । यशइत्यादिना । वृकोदरेयशः धर्मंविधित्सताविधातुमिच्छताकेशवेननसूदितःनहतोजरासंधइतिमन्यते ॥ ६३ ॥इतीतिकिंअयंकृष्णःउत्तमाद्वरात् हंतुंनेष्टेनसमर्थःअतःकारणाज्जितोपिपूर्वंपराजितोप्यहंशिवप्रसादतःउत्तरंउत्तरत्रजेष्यइतिमन्यतइतिसंबंधः ॥६४॥ जरासंधस्यशिवेभक्तिदार्ढ्यंदर्शयति । मृधइति । मृधेमृधेप्रतियुद्धंइत्यर्थः जितःसन्नपिदृढाशयाउत्तरोत्तरंजेष्यामिइतिनिश्चितेच्छया पुनःपुनःयुधेयुद्धार्थंसमीहतेयततेक्वचिच्छिवंचनावमन्यतेनैवतिरस्करोति ॥ ६५ ॥ अतश्चअतएवउवाच किमिति । नःपौरुषंधिक्दहतु । कुतःयद्यस्मात् एषःकृष्णःनोस्मान्सदाप्रतियुद्धेअजयत्जितवान् किल ॥ ६६ ॥ अभूपतेअराज्ञःअमुष्यकृष्णस्यउदाहृतंअस्माभिरुक्तं । हेनृपाःनोस्माकंचिंतितंतत्आसनादिकंनदेयमितिचिंतितंअन्यथाविपरीतंबभूव ॥ ६७ ॥

यशश्च धर्ममुत्तमं विधित्सता वृकोदरे ॥ न केशवेन सूदितो जरासुतो हि मन्यते ॥ ६३ ॥ वराच्छिवस्य मामयं न हंतुमिष्ट उत्तमात् ॥ अतः शिवप्रसादतो जितोपि जेष्य उत्तरं ॥ ६४ ॥ मृधे मृधे जितोपि सन् दृढाशया पुनः पुनः॥ समीहते युधे शिवं न चावमन्यते क्वचित् ॥ ६५ ॥ अतः पुनश्च भूमिपानुवाच बारुहद्रथः ॥ धिगेव पौरुषं हि नो यदेष नोजयत्सदा ॥ ६६ ॥ अभूपतेर्न चासनं प्रदेयमित्युदाहृतं ॥ अमुष्य नस्तदन्यथा बभूव चिंतितं नृपाः ॥ ॥ ६७ ॥ अयं नृपोत्तमांगणे महेंद्रपीठमारुहत् ॥ समस्तराजराजतामवाप नोप्यनिच्छतां ॥ ६८ ॥ अतः पुनः कथं हरिं वयं जयेम चिंत्यतां ॥ यथा च भीष्मकात्मजामवाप्नुयाच्च चेदिराट् ॥ ६९ ॥ अयं हि दत्तपुत्रको ममौरसाद्धि शिष्यते ॥ अतो निवेश्य एष मे सुरूपिणी च रुग्मिणी ॥ ७० ॥ शिवागमेषु शिष्यका सरुग्मिसाल्वपौंड्रकाः ॥ ममाखिला नृपास्ततः कुरुध्वमेतदेव मे ॥ ७१ ॥ ॥ ॥ ॥ ॥

अन्यथेत्युक्तंविवृण्वन्नाहेत्याह । अयंकृष्णःनृपोत्तमस्यभीष्मकस्यअंगणेमहेंद्रपीठंइंद्रसिंहासनंआरुहत्आरुरोह । अनिच्छतांनःसकाशात्समस्तानांराज्ञांराजतांराजत्वंचक्रवर्तित्वंश्रेष्ठत्वमितियावत् अवाप ॥ ६८ ॥ अतःपुनःइतःपरंकथंजयेमतच्चिंत्यतां चेदिराट्शिशुपालःअवाप्नुयात् । तच्चापिचिंत्यतां ॥ ७० ॥ अयंचेदिराटमेदत्तपुत्रकःऔरसाद्धीर्यजादपिविशिष्यतेयतःअतःएषःशिशुपालःमेमयानिवेश्यःउद्वाह्यः । निवेशःशिबिरोद्वाहनिश्वानेषुप्रकीर्तितइतिशाश्वतः । सुरूपिणीचरुग्मिणीचयोग्या ॥ ७० ॥ शिवागमेषुममशिष्यकाःयतःअतःमेएतदेवअभीष्टंकुरुध्वं ॥ ७१ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

रुग्मिणःसंविदाअनुमतेनस्वयंवरःनिवर्तितःत्यक्तःएषःरुग्मीस्वसारंभगिनींशिशुपालायदास्यति ॥ ७२ ॥ अस्यरुग्मिणःपितातांरुग्मिणींप्रदातुंकामोयस्यतंपुत्रं अतिवर्तितुं अतिक्रांतुंनक्षमःनसमर्थः कुतोयतोवयोगतःवृद्धःतथाअबलःनिर्बलः ॥ ७३ ॥ यदिकृष्णःकन्यकांहरेत्तर्हि किंकर्तव्यमितिअतःतत्रोपायमाह । स्वयंत्विति । यतोहरे ततःकारणात् पूर्वमेवकन्याप्रदानात्पूर्वंअस्यकृष्णस्यअभावताकृता । अभावकरणंहननमित्यर्थः । नोस्माकंशुभाहिमंगलंखलु ॥ ७४ ॥ कृष्णाभावकरणे उपायमाह । उपायइति । अत्रकृष्णाभावविषयेएषःवक्ष्यमाणःअमुष्यगर्गस्यश्यालःस्त्रियःकनिष्ठभ्राता आक्षिपत् निंदितवान् ॥ ७५ ॥ आक्षेपंस्पष्टयति । यदेति । तस्यकृष्णस्यपुरः

इतीरिते तु सौभराट् जगाद रुग्मिसंविदा ॥ स्वयंवरो निवर्तितः स्वसारमेष दास्यति ॥ ७२ ॥ नचातिवर्तितुं क्षमः पितास्य चेदिपाय तां ॥ प्रदातुकाममात्मजं वयोगतस्तथा बलः ॥७३ ॥ स्वयं तु कृष्ण एत्य नो विजित्य कन्यकां हरेत् ॥ ततोस्य पूर्वमेव नो ह्यभावता कृता शुभा ॥ ७४ ॥ उपाय एष चिंतितो मयात्र मागधेश्वर ॥ मुनिं हि गर्गनामकं ह्यमुष्य श्याल आक्षिपत् ॥ ७५ ॥ यदास्य षंढतोदिता मुनेः पुरो हि तस्य च ॥ परेण वृष्णयो हसन् चुकोप गर्ग एषु हि ॥ ७६ ॥ चकार च प्रतिश्रवं समार्जये सुतं द्रुतं ॥ अकृष्णतां य आनयेत् भुवोपि वृष्णिनाशकः ॥ ७७ ॥ यतो हि कृष्णसंश्रयाद्वतापहासिता वयं ॥ इति ब्रुवन्वनं ययौ तपश्च शैवमाचरत् ॥ ७८ ॥ स चूर्णमायसं त्वदन् ददर्श चाब्दतः शिवं ॥ वरं ततोभिपेदिवान् सुतं हरेरभावदं ॥ ७९ ॥ स विष्णुदैवतोपि सन् प्रविष्ट उल्बणासुरैः ॥ व्यधाद्धरेः प्रतीपकं व्रतं तु नैष्ठिकं जहौ ॥ ८० ॥ ॥ ॥ ॥ ॥

अग्रेअस्यमुनेःगर्गस्यषंढतानपुंसकत्वंश्यालेनयदाउदितातदा परेणकृष्णेनप्रेरिताःवृष्णयःयादवाःअहसन् जहसुः । गर्गःएषुवृष्णिषुचुकोप ॥ ७६ ॥ प्रतिश्रवंप्रतिज्ञांच कारच । स्वप्रतिश्रवप्रकारंदर्शयति । समार्जयइति । वृष्णिनाशकःसन्भुवःभूमेःभागं अकृष्णतांकृष्णरहितत्वंयःआनयेत् प्रापयेत् । तंसुतंद्रुतंसमार्जयेसंपादयेत्यर्थः भि ॥ ७७ ॥ कुतःवयंअपहासिताःअपहासंप्रापिताःव्रतकष्टं । सगर्गःआयसंलोहसंबंधिचूर्णं अदन्भक्षयन्तपःअचरत् ॥ ७८ ॥ अब्दतःसंवत्सरमात्रेणददर्श । ततः रुद्रात्सुतरूपंवरं ॥७९॥ ससगर्गःविष्णुःदैवतंयस्यसतथा । तादृशोपिउल्बणासुरैःक्रूरदैत्यैःप्रविष्टःसन् प्रतीपकंविरुद्धंनैष्ठिकंव्रतंनैष्ठिकब्रह्मचर्यव्रतं जहौअत्यजत्॥८०॥

आसुराअसुरसंबंधिनी अतएवउल्बणाक्रूराअप्सरागोपिकांगनानांगोपिकास्त्रीणांसमूहस्यमध्यंप्रविश्य तंगर्गंआरप्राप ॥ ८१ ॥ तस्या:गोपिकांगनासमूहस्यमध्यप्रविश्यागमनेकारणमाह । सइति । मुनेर्गर्गस्यमनसा अनुचिंतितंविचारितंजानता अपुत्रकेणयावनेनम्लेंछसंबंधिनाभूभृताराज्ञागोपिकाभि:करणै:गोपिकाद्वारेणेतियावत् गर्ग:अर्चितोभूदितिशेष: । गोपिकायांपुत्रमुत्पाद्यमेदेहीतियावनेनप्रार्थितोभूदितिकथानुसंधेया । . अप्सराअपितमर्चितुंगोपिकामध्येप्रविष्टेतिभाव: ॥ ८२ ॥ क्रुधा क्रोधाभिमन्यमानेनासुरेणमोहित:मोहंप्रापित: सगर्ग:अप्सरस्तनौअप्सर:शरीरेसुतंनिषिच्यउत्पाद्य । हेईशजरासंध वैरिण:तववैरिण:कृष्णस्यएतद्भर्त्राचरितप्रतिकूलंकिं अल्पमेवतस्ययोग्यंनैवेत्यर्थ: । इतोप्यधिकंकार्यमेवेतिभाव: । किमेतदीशवैरिणइत्याचार्योक्तिर्वा । ईशस्यहरेर्वैर्यसुरोयस्मिन्सतथा । तस्यपुरुषस्यएतत्एतादृशंहरे:प्रतिकू

**तमारचासुराप्सरा बलिष्ठपुत्रकाम्यया ॥ प्रविश्य गोपिकांगनासमूहमध्यमुल्बणा ॥ ८१ ॥ स यावनेन भूभृता हि गोपिकाभिरर्चितः ॥ अपुत्रकेण आनता मुनेर्मनोनुचिंतितः ॥ ८२ ॥ सचाप्सरस्तनौ सुतं निषिच्य यावनाय च ॥ ददौ विवाहित श्रुता किमेतदीशवैरिणः ॥८३॥ स आश्रमाच्च नैष्ठिकाद्विदूषितः प्रतीपकृत् ॥ हरेश्च तापमेयिवान् जगर्ह चात्मशेमुषीं ॥ ८४ ॥ जगाम चारणं हरिं प्रपाहि मां सुपापिनं ॥ इति स्म विष्णवनुज्ञया चकार वैष्णवं तपः ॥ ८५ ॥ कुतोहि भाग्यमापतेन्मुनेः शिवार्चने सदा ॥ भवादृशो हि दानवाः स्थिराः शिवार्चने सदा ॥ ८६ ॥ सतोस्य कालनामको बभूव कृष्णमर्दितुं ॥ सदैव कालकांक्षणात्सयावनाभिषेचितः ॥ ८७ ॥ तवैव शिष्य एष चाति भक्तिमान्हि शंकरे ॥ प्रभूतसेनया युतो बलोद्धतश्च सर्वदा ॥ ८८ ॥ ॥ ॥ ॥ ॥**

लाचरणंकिंकिमाश्चर्यमित्यर्थ: ॥ ८३ ॥ नैष्ठिकादाश्रमात्नैष्ठिकब्रह्मचर्याश्रमात् विदूषित:भ्रष्ट:हरे:कृष्णस्यप्रतीपकृत् सगर्ग:तापंपश्चात्तापंएयिवान्प्राप्तवान् आत्मन: स्वस्यशेमुषींमतिं जगर्हगर्हयामास ॥ ८४ ॥ सुपापिनंमांप्रपाहीतिस्मब्रुवन् हरिंकृष्णंशरणंजगाम । तपश्चकारच ॥ ८५ ॥ साल्व:गर्गंनिंदयन् दानवांस्तुवन् पुनराहेत्याह । कुतइति । मुनेर्गर्गस्यशिवार्चनेसदाभाग्यं कुत:कस्माद्धेतो:आपतेत्कदेत् [illegible] । भवादृशास्त्वद्विधा:दानवा:सदाशिवार्चनेस्थिरा:निश्चलंत: ॥ ८६ ॥ अस्यगर्गस्यसुत:कालनामकोबभूव । कुत:कृष्णमर्दितुंसंहर्तुं सदैवकाल[illegible] [illegible]यावनेनअभिषेचित:अभिषिक्तोभूद्यतइतिशेष: । [illegible]त्यर्थ: ॥ ८७ ॥ एष:काल[illegible]यवन: प्रभूतयोत्कृष्टया ॥ ८८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

अर्हंतवशासनात् तंप्रतियामिगच्छामि । एवंतमेवकालयवनंसत्वरंतवउपानीयसमीपमानीय । क्षितेस्तलंभूलोकंविगतःकृष्णोयस्मात्तत् तादृशंविधायरमामहे ॥ ८९ ॥
ततःप्रदापयामदापयिष्यामः । यथेष्टंयथाभवतितथा आरम तिष्ठामः ॥ १० ॥ दुर्मनाःदुःखयुक्तमनाः किरीटेनमुकुटेनमंडितं अलंकृतंशिरःअवाकूचकारअधश्चकार
॥ ९१ ॥ करंकरेणपीडयन् मर्दयन् आत्मनःभुजौनिशाम्यनिरीक्ष्यजगाद किमिति । कार्यसिद्धयेस्वकार्यनिष्पत्त्यै परंअन्यंकथंप्रयाचयेप्रार्थये ॥ ९२ ॥ समस्तभूत
लेसर्वराष्ट्रेष्वित्यर्थः । मद्भुजाश्रयानृपाःसुदुर्गाणांअतीवगंतुमशक्यानां कार्याणांसंततिंसमूहं अगुःस्मप्रापुःकिल सचएवएषोहंमागधोहि ॥९३॥ अचीर्णयदन्ययाचनंतत्

तमेव यामि शासनात्तवोपनीय सत्वरं ॥ विकृष्णकं विधाय च क्षितेस्तलं रमामहे ॥८९॥ ततश्च रुग्मिणीं वयं
प्रदापयाम चेदिपे ॥ विनाश्य देवपक्षिणो यथेष्टमारम सर्वदा ॥ ९० इतीरितो जरासुतो बभूव दुर्मना भृशं ॥ किरी
टमंडितं शिरश्चकार चाश्ववाग्भृशं ॥ ९१ ॥ करं करेण पीडयन् निशाम्य चात्मनो भुजौ ॥ जगाद कार्यसिद्धये कथं
प्रयाचये परं ॥ ९२ ॥ सुदुर्गकार्यसंततिं ह्यगुः स्म मद्भुजाश्रयाः ॥ समस्तभूतले नृपाः स चाहमेष मागधः ॥९३॥
कदाप्यचीर्णमद्य तत्कथं करोमि केवलं ॥ गिरीशपादसंश्रयः प्रभुः समस्तभूभृताम् ॥ ९४ ॥ इतीरितः स सौभराट्
जगाद वाक्यमुत्तरं ॥ भवानपि स्म मुह्यते किमस्मदादयः प्रभो ॥ ९५ ॥ स्वशिष्यकैः कृतं तु यत्किमन्यसाधितं भ
वेत् ॥ स्वशिष्यदासवर्गकैः समर्थयंति भूभुजः ॥ ९६ ॥ अपि स्म ते बलाश्रयप्रवृत्तयोस्मदादयः ॥ पुमान् कुठारसं
ग्रहादशक्त ईर्यते नु किं ॥९७॥ कुठारसंमितो ह्यसौ तवैव यावनेश्वरः ॥ विना भवद्बलं क्वचित्प्रवर्तितुं नाहि क्षमः॥९८॥

अथ तत्रगिरीशेत्यादिहेतुगर्भविशेषणं ॥ ९४ ॥ उत्तरंपरिहारूपंवाक्यं हेप्रभोजरासंध भवानपिमुह्यतेमोहंप्राप्नोति ॥ ९५ ॥ स्वशिष्यकैःयत्कृतंतत्कर्मअन्येनसा
धितंसंपादितंभवेत्किंनभवेदित्यर्थः । स्वकृतमेवभवेदितिभावः । स्वशिष्यदासानांवर्गकैःसमूहैःकरणैःसमर्थयंतिकार्यंसंपादयंति ॥ ९६ ॥ अस्मदादयोपिमदादयोपि
तेतवबलाश्रयेणप्रवृत्तिर्येषांतेतथा उक्तमेवार्थंदृष्टांतपूर्वकमाह । पुमानिति ॥ ९७ ॥ कुठारेणपरशुनासंमितोसमानः कुठारसंमितत्वंस्पष्टयति । विनेत्यादिना । प्रव
र्तितुंकृष्णादन्यत्रप्रवर्तितुंनक्षमः ॥ ९८ ॥ ॥ ॥ ॥ ॥

कुतः हि यस्मात्केवलं कृष्णमर्दनविषयेवरोवृतःतस्मात्क्षमोनेति अस्यकालनाम्नःतस्मात्कृष्णात् अन्येयेशत्रवःतेभ्योयत्पीडनंभयमित्यर्थः । तस्माद्रक्षकःत्रातात्वमेवनैवान्यइ त्यर्थः ॥ ९९ ॥ कुतइत्यतआह । तवेति । हि यस्मादजेयताअस्तितस्मादितिसंबंधः । अयंकालःहरेःकृष्णस्यजयेजयविषये विशेषतःकृष्णमेवहनिष्यतिइत्येवंरूपाविशे षाद्वरात् विमृग्यतेअन्विष्यते ॥१००॥ अतृप्तवत्अतुष्टवत्सौभेसौभविमानेराजतेअसौतथा । ससाल्वःसौभविमानंआस्थितःआरूढःसन् यावनंप्रतिजगाम ॥१०१॥ अंतिकादागतसाल्वंअर्चयत् उक्तमेवार्थंविशिष्यन्नाह । जरासुतइति । दैवतंदेवतानुग्रहद्वारभूतःगुरुरितियावत् । तथोक्तंपरस्तात्गुरुर्भवानितिबुद्ध्या तांदिशंयस्यांदिशि जरासुतास्तिष्ठतितांदिशमित्यर्थः । तदीयंजरासुतसंबंधिनंसाल्वं ॥ १०३ ॥ तदीरितंसाल्वोक्तंनिशम्य । त्रिकोटिसंख्ययाअक्षौहिणीकयास्वसेनया त्रिकोटिसंख्याका

वरो हि कृष्णमर्दने वृतोस्य केवलः शिवात् ॥ तदन्यशत्रुपीडनात्त्वमेव चास्य रक्षकः ॥ ९९ ॥ तवाखिलैरजेयता शिवप्रसादतोस्ति हि ॥ विशेषतो हरेर्जये वरादयं विमृग्यते ॥ १०० ॥ इतीरितेप्यतृप्तवत्स्थिते तु बाहुद्रुमे ॥ जगाम सौभमास्थितः स सौभराट् च यावनं ॥ १०१ ॥ सकालयावनोथ तं जरासुतांतिकागतं ॥ निशम्य भक्तिपूर्वकं प्रणम्य चार्चयद्द्रुतं ॥ १०२ ॥ जरासुतो हि दैवतं समस्तकेशवद्विषां ॥ इति प्रणम्य तां दिशं तदीयमभ्यपूजयत् ॥ १०३ ॥ तदीरितं निशम्य च द्रुतं त्रिकोटिसंख्यया ॥ अक्षौहिणीकया युतः स्वसेनया निराक्रमत् ॥ १०४ ॥ तदश्वमूत्रविष्ठया बभूव नामतः शकृत् ॥ नदीसु वेगगामिनी कलौ च या वहेद्द्रुतं ॥ १०५ ॥ पुनः पुनर्नदीभवं निशाम्य देशसंक्षयम् ॥ तदन्यदेशमूत्रितं व्यशोषयाद्धि मारुतः ॥ १०६ ॥ हरिश्च वैनतेययुक् विचार्य रामसंयुतः ॥ सदातिपूर्णसंविदप्यजोथ लीलयास्मरत् ॥ १०७ ॥ ॥ ॥

क्षौहिणीसंख्याकया स्वसेनयायुतःकालयावनःनिराक्रमत्निर्जगाम ॥ १०४ ॥ तस्यअश्वानांमूत्रंचविष्ठाचतयोःसमाहारःतदश्वमूत्रविष्ठा तया परवल्लिंगंद्वंद्वतत्पुरुषयोरि तिसूत्रेणपरवल्लिंगता । सुवेगेनगच्छतिवहतीतितथा । नामतःनाम्नाशकृत्शकृदितिप्रसिद्धानदीबभूव । यानदीकलौयुगेद्रुतंवेगेनवेगात् वहेत्प्रवहति ॥ १०५ ॥ मारुतो वायुःपुनःपुनःनदीभ्योभवंउत्पन्नंदेशानांसंक्षयंनाशंनिशाम्यदृष्ट्वा । तस्माच्छकृन्नदीदेशात् अन्यदेशेमूत्रितंमूत्रंव्यशोषयत् ॥ १०६ ॥ सदाअत्यंतपूर्णसंविज्ज्ञानंयस्य सतथा । रामेणसंयुतःवैनतेययुक् विनतायाःअपत्येनगरुडेनयुक्तःसन् विचार्यलीलयाक्रीडेच्छयेत्यर्थः । अस्मरत्अचिंतयत् ॥ १०७ ॥ ॥

किमिति । योद्धुमिच्छतीतियुयुत्सुःअनेनकालेननोस्माकंयुयुत्संतियोद्धुमिच्छंतीतियुयुत्सन्तःतेषांयुयुत्सतांसतां अभियास्यतिआगमिष्यति ॥ १०८ ॥सजरासंधःप्रभंगतः स्वेनप्राप्तपराभवात्जनान्कोपतोहनिष्यति । ननु पुरापराजितोजरासंधःकुतोनजघानेत्यतआह । पुरेति । असौजरासंधःपुरापूर्वयुद्धेषुजयाशयास्वस्यउत्तरत्रजयःस्यादि त्याशया नोस्माकंयदून्यादवान्जघ्निवान्जघान यदुपुर्यांदौहित्रस्यसाम्राज्यार्थमेव नजघ्निवानितिभावः ॥ १०९ ॥ अद्यनिराशकःजयाशयारहितःसन् यादवानपियाद वानेवपीडयिष्यतिस्मअस्मान्पीडयितुंनसमर्थइतिभावः । समुद्रस्यमध्येगच्छतीतितथा । साचसापुरीचतस्याःनिधानंनिर्माणं ॥ ११० ॥ अमुत्रपुर्यांसर्वसात्वतांसर्वेषां यादवानां निधानमपिसंस्थापनमपि अद्यमेप्ररोचतेरुचिर्जायते । रुचिर्प्रीणनेइतिधातुः । सुरेशवार्धकिंदेवतक्षकंविश्वकर्माणंअस्मरत् ॥ १११ ॥ भुवनस्यापत्यंभौवनः

युयुत्सुरेष यावनः समीपमागतोद्य नः ॥ युयुत्सुतामनेन नो जरासुतोभियास्यति ॥ १०८॥ स यादवान्हनिष्यति प्रभंगतस्तु कोपतः ॥ पुरा जयाशया हि नो यदून्न जघ्निवानसौ ॥ १०९ ॥ निराशकोद्य यादवानपि स्म पीडयिष्यति ॥ अतः समुद्रमध्यगापुरीविधानमद्य मे ॥११०॥ प्ररोचते विधानमप्यमुत्र सर्वसात्वतां ॥ उदीर्य चैवमीश्वरोस्मरत्सुरेशवार्धकिम् ॥ १११ ॥ स भौवनः समागतः कुशस्थलीं विनिर्ममे ॥ निरंबुकेतुसागरे जनार्दनाज्ञया कृते ॥११२॥ महोदकस्य मध्यतश्चकार तां पुरीं शुभां ॥ द्विषट्कयोजनायतां पयोब्धिमध्यगोपमाम् ॥ ११३ ॥ चकारलावणोदकं जनार्दनोमृतोपमं ॥ सभां तु धर्मनामिकां ददौ समीरणोस्य च ॥ ११४ ॥ ॥

सविश्वकर्मासमागतःसन् कुशस्थलींद्वारकापुरींविनिर्ममेरचितवान् । तदेवविशदयति । निरंबुकइति निरंबुकेनिर्गतजलेअपसृतजलइत्यर्थः सागरेकृतेसतिकृष्णेनेति शेषः॥११२॥जनार्दनाज्ञयामहोदकस्यप्राकाररूपेणास्थितजलसमूहस्येत्यर्थः । मध्यतोमध्यप्रदेशेद्विषट्कयोजनैःद्वादशयोजनैःआयतांविस्तृतां पयोब्धिमध्यगेनक्षीरस मुद्रमध्यस्थेनउपमांसदृशींअतएवशुभांश्रेष्ठांपुरींचकार । विश्वकर्मणेतिशेषः ॥ १३ ॥ लावणंलवणसमुद्रसंबंधिउदकंअमृतेनउपमंतुल्यं समीरणोवायुःसुधर्मनामकांस भांअस्यकृष्णस्यार्थेददौ ॥ ११४ ॥ ॥ ॥ ॥ ॥ ॥

नतु सुधर्मासभाइंद्रस्येतिप्रसिद्धिःवायुस्तांकथंददावित्यतआह । शतक्रतोरिति । सवायुःतांसभांशतक्रतोःइंद्रादादायकेशवायप्रदायसर्वेशःसर्वान्नवसंख्याकान्निधीन् समर्प्य । तंप्रभुंकृष्णंप्रणम्ययथौ । अस्यवर्धकेःददौ । सवार्धकिः ययाविति व्याख्यानमनादरणीयं । हरिवंशगतवाक्यविरोधात् । तथाहि । गच्छमारुतदेवेशमनुमान्य सहामरैः । सभांसुधर्मामादायदेवेभ्यस्त्वमिहानयेति । तत्रैव वायुरात्मापिजगतोजगामात्रिदशालयं । सोनुमान्यसुरान्सर्वान्कृष्णवाक्यंनिवेद्यच । सभांसुधर्मामादायपु नरायान्महीतलं । सुधर्मांतांसुधर्मायकृष्णायाक्लिष्टकारिणे । देवदेवोसभांदत्वावायुरंतरधीयतेति ॥ ११५ ॥ स्वकीयंस्वेषांविद्यमानंदेवाः यद्यत्विशेषवस्तुतत्तद्धरौसमर्पय न्नितिभावः । सोच्युतःपक्षिपुंगवंगरुडंविमुच्यविहाय योद्धुमैच्छत् ॥ ११६ ॥ प्रभुःसकृष्णःसमस्तमाधुरान्समस्तमधुरावासिनःकुशस्थल्यांद्वारकायांस्थितान्विद्यमान् क्षणात् क्षणमात्रेणविधाय बाहुभ्यांयुध्यतीतिबाहुयोधकःसन् यावनंप्रतिसमभ्ययात् ॥११७॥ अनंतशक्तिरप्यजःकृष्णःनृणांसुनीतिदृष्टयेसमीचीननीतिदर्शनार्थंनिजा

**शतक्रतोः सभां तु तां प्रदाय केशवाय सः ॥ निधीन्समर्प्य सर्वशो ययौ प्रणम्य तं प्रभुं ॥ ११५ ॥ समस्तदेव तागणा स्वकीयमर्पयन्हरौ ॥ विमुच्य पक्षिपुंगवं स योद्धुमैच्छदच्युतः ॥ ११६ ॥ समस्तमाधुरान्प्रभुः कुशस्थली स्थितान् क्षणात् ॥ विहाय बाहुयोधकः स यावनं समभ्ययात् ॥ ११७ ॥ अनंतशक्तिरप्यजः सुनीतिदृष्टये नृ णां ॥ व्यवासयन्निजान् जलान्सलीलयैव केवलं ॥११८॥ अनाद्यनंतकालकं समस्तलोकमंडलम् ॥ यदीक्षयैव रक्ष्यते किमस्य वृष्णिरक्षणं ॥ ११९ ॥ निरायुधं च मामयं वराच्छिवस्य न क्षमः ॥समस्तसेनया युतोपि योद्धुमित्य दर्शयत् ॥ १२० ॥ सकृष्णपन्नगं घटे निधाय केशवोर्पयत् ॥ निरायुधोप्यहं क्षमो निहंतुमप्रियानिति ॥ १२१ ॥**

न्जनान् केवलंलीलयैवक्रीडयैव नतुभयेनेत्यर्थः। समुद्रमध्येव्यवासयत्॥११८॥ नन्वशक्तत्वादेवव्यवासयदितिकिंनस्यादित्यतआह । अनाद्यनंतोआनाद्यनंतकालकः अनादिःप्रागभावरहितः । अनंतःध्वंसरहितः एतादृशोयःकालःतत्संबंधवत् समस्तलोकमंडलंबहुचित्रगतसमूहंयस्यहरेःईक्षयैवइच्छयैवरक्ष्यते । तस्यहर्यात्मकस्यअस्य कृष्णस्यवृष्णीनांरक्षणंकिं नकिमप्यशक्यमित्यर्थः ॥११९॥ ननु बाहुयोधकःसन् यावनंकिमर्थंसमभ्ययादित्यतआह । निरायुधमिति । अयंयावनःसमस्तसेनयायुतोपि शिवस्यवराच्चवरादपिनिरायुधंमांप्रतियोद्धुंनक्षमःनशक्तइतिबाहुयुद्धेनअदर्शयत् ॥ १२० ॥ केशवःनिरायुधोप्यहंअप्रियान्शत्रून् निहंतुंक्षमःइतिदृष्टांतंदर्शयितुं कृष्णप न्नगंकृष्णसर्पंघटेनिधाय । यावनायअर्पयत्प्रेषयामास ॥ १२१ ॥ ॥ ॥ ॥

यावनःघटंप्रपूर्यपरयित्वा बहुत्वतःविजेष्यइत्यभिप्रायेणमृतंअहिंसर्पं अस्यकृष्णस्यअदर्शयत् ॥ १२२ ॥ अत्रहंतुंक्षमइतिममवाक्यात्विजेष्यइतितववाक्ययोर्मध्येकिंसत्यं स्यादित्यपेक्षायां यत्सत्यंतदहंप्रदर्शयिष्यइत्यजःसकृष्णःदूतंप्रत्युदीर्ययावनंप्रबाधितुंहंतुंअभ्ययात् ॥ १२३ ॥ अस्ययावनस्यस्वंगजाश्वादिद्रव्यं पुरीद्वारकांप्रतियापयत् प्रेषितवान् ॥ १२४ ॥ अरिहाशत्रुघ्नःकेशवःसृजंतंवर्षमाणं तलेनहस्ततलेनरथोत्तमात् । उत्तमरथादधःन्यपातयत् ॥ १२५ ॥ सुरैरर्थितंप्रार्थितंवरंस्मरन्हरिःविमूर्च्छितं यावनंनचाहनत्नजघान । पुरार्थितमितिवापाठः ॥ १२६ ॥ तत्किमर्थितामित्यतआह । पुरेति । पुरादेवासुरयुद्धसमाप्तौसुरेश्वराःयौवनाश्वोयुवनाश्वस्यपुत्रोमांधातातज्जातोमुचकुंदःतस्मिन्विषयेवरप्रदाःवरंदत्तवंतःसंतःवरंप्रददतीतितेतथा । तेशांईश्वरंस्वामिनंजनार्दनंवरंययाचिरे ॥ १२७ ॥ किमिति । अमुनामुचकुंदेनअस्मत्तःअनर्थः

घटं पिपीलिकागणैः प्रपूर्य यावनोस्य च ॥ बहुत्वतो विजेष्य इत्यहिं मृतं व्यदर्शयत् ॥ १२२ ॥ किमत्र सत्यमित्यहं प्रदर्शयिष्य इत्यजः ॥ उदीर्य दूतमभ्ययात् सयावनं प्रबाधितुं ॥ १२३ ॥ सबाहुनैव केशवो विजित्य यावनं प्रभुः ॥ निहत्य सर्वसैनिकान् स्वमस्य यापयत्पुरीम् ॥ १२४ ॥ महास्त्रशस्त्रसंचयान् सृजंतमाशु यावनं ॥ न्यपातयद्रथोत्तमात्तलेन केशवोरिहा ॥ १२५ ॥ विवाहनं निरायुधं विधाय बाहुना क्षणात् ॥ विमूर्छितं न चाहनत्सुरार्थितं स्मरन्हरिः ॥ १२६ ॥ पुरा हि यौवनाश्वजे वरप्रदाः सुरेश्वराः ॥ ययाचिरे जनार्दनं वरं वरप्रदेश्वरं ॥ १२७ ॥ अनर्थकोवरोमुना ऋतोपि सार्थको भवेत् ॥ अरिं भविष्ययावनं दहत्वयं तवेश्वर ॥ १२८ ॥ तथास्त्विति प्रभाषितं स्ववाक्यमेव केशवः ॥ ऋतं विधातुमभ्ययात्स यौवनाश्वजांतिकं ॥ १२९ ॥ ससंज्ञकोथ यावनो धरातलात्समुत्थितः ॥ निपात्य यातमीश्वरं सपृष्ठतोन्वयात्क्रुधा ॥ १३० ॥ हरिर्गुहां नृपस्य तु प्रविश्य संव्यवस्थितः ॥ सयावनः पदाहनन्नृपं स तं ददर्श ह ॥ १३१ ॥ ॥ ॥ ॥

कःपुरुषार्थरहितःवरःऋतोपिसार्थकःधर्मार्थादिपुरुषार्थसहितोभवेत् सार्थकःकथंस्यादित्यतआह । अरिमिति । हेईश्वरअयंमुचकुंदःतवअरिंभविष्यःउत्तरत्रजनिष्यमाणःसचासौयावनश्च तं दहत्विति वरंययाचिरइतिसंबंधः ॥ १२८ ॥ सकेशवःऋतंसत्यंविधातुंकर्तुंयौवनाश्वजस्यमुचकुंदस्य अंतिकंसमीपं अभ्ययात् ॥ १२९ ॥ अत्रयुद्धरंगाद्गमनानंतरं ससंज्ञिकःप्राप्तसंज्ञोयावनःसमुत्थितःसन्स्वंनिपात्य यांतंगच्छंतंईश्वरंकृष्णंपृष्ठतःअनुपृष्ठमनु अयादगात् ॥ १३० ॥ नृपस्यतुचकुंदस्यगुहांप्रविश्य संव्यवस्थितःलीनःसन्स्थितः सयावनःनृपंमुचकुंदंपदाऽहनत् ममुचकुंदःतंयावनं ॥ १३१ ॥ ॥ ॥ ॥

सयावनःतस्यमुचकुंदस्यदृष्टिमात्रतःअवलोकनमात्रादेव सएवसुराणातथा[illegible]विष्णुःतंयावनम् ॥ १३२ ॥ दृष्टिमात्रतोबभूवभस्मसादित्युक्तस्यकारणमाह । वरादिति । पुरामुचकुंदःवरात् दैवतैर्देवैःअवध्याःहंतुमशक्याःतेचतेदानवाश्चतान् हरेःसकाशात्वरात्स्वेनप्राप्तवरात्आशुनिहत्य इमंवक्ष्यमाणंवरंदेवेभ्यःप्रपेदेप्राप ॥ ॥ १३३ ॥ इममित्युक्तंविवृणोति । सुदीर्घेति । आत्मनःस्वस्यसुदीर्घसुप्तिंसुगाढांदीर्घांबहुकालवर्तिनींसुप्तिंनिद्रांतथास्वदृष्टिमात्रतःप्रसुप्तिःगाढनिद्रातस्याःभंगःतंकरोतीतितथा तस्यक्षयःनाशःतंतथा एवंविधंवरंप्रपेदेयतइतिपूर्वेणसंबंधः ततःकारणात् ॥ १३४ ॥ सनृपःअतःयावनवधात्सुराणांप्रसादतश्च अक्षयंअविनाशिपुण्यंपुण्यजांमुक्तिमितियावत् । आप्तवान् यतोदेवतोषणंवृथान अतःअनर्थकोवरःसार्थकोभूदित्यर्थः ॥ १३५ ॥ समुचकुंदः ॥ १३६ ॥ विनिःसृतःनिर्गतः ॥ १३७ ॥ तलेनकृ

स तस्य दृष्टिमात्रतो बभूव भस्मसात्क्षणात् ॥ स एव विष्णुरव्ययो ददाह तं हि वह्निवत् ॥ १३२॥ वराच्छिवस्य दैवतैरवध्यदानवान्पुरा ॥ हरेर्वरान्निहत्य स प्रपेद आश्विमं वरम् ॥१३३॥सुदीर्घसुप्तिमात्मनः प्रसुप्तिभंगकृत्क्षयं ॥ स्वदृष्टिमात्रतस्ततो हतः स यावनस्तदा ॥१३४॥ अतश्च पुण्यमाप्तवान् सुरप्रसादतोक्षयं ॥ स यौवनाश्व जो नृपो न देवतोषणं वृथा ॥ १३५ ॥ ततो हरिं निरीक्ष्य स स्तुतिं विधाय चोत्तमां ॥ हरेरनुज्ञया तपश्चकार मुक्तिमाप च १३६ ॥ ततो गुहामुखाद्धरिर्विनिसृतो जरासुतम् ॥ समस्तभूपसंयुतं जिगाय बाहुनेश्वरः ॥१३७॥ तलेन मुष्टिभिस्तथा महीरुहैश्च चूर्णिताः ॥ निपेतुरस्य सैनिका स्वयं च मूर्छितापतत् ॥ १३८ ॥ स साल्वपौंड्रचेदिपान् निपात्य सर्वभूभुजः ॥ स पुप्लुवे जनार्दनः क्षणेन तां कुशस्थलीम् ॥ १३९ ॥ ससंज्ञकाः समुत्थितास्ततो नृपाः पुनर्ययुः ॥ जिगीषवोथ रुग्मिणीं विधाय चेदिपे हरिम् ॥ १४० ॥ ॥ ॥

ष्णस्यहस्ततलेन पादतलेनचमुष्टिभिश्च तथामहीरुहैःकृष्णकरप्रेरितवृक्षैःचूर्णिताःचूर्णीकृताः अस्यजरासंधस्यसैनिकाःनिपेतुःस्वयंचस्वयमपिजरासंधः ॥ १३८ ॥ साल्वादिभिःसहिताःभूभुजःनृपान्निपात्य तांस्वनिर्मितांकुशस्थलींप्रति पुप्लुवेउत्पपात ॥ १३९ ॥ अथकृष्णगमनानंतरं संज्ञयासहवर्तमानाः ततःयुद्धस्थानात्समुत्थिताः नृपाःमागधादयःरुग्मिणींचेदिपेशिशुपालायेत्यर्थः । विधायप्रदाय हरिंकृष्णंजिगीषवःशिशुपालायरुग्मिणीप्रदापनेनजातेनतन्मानभंगेनजेतुमिच्छवःसंतः पुनर्ययुः कुंडिनपुरमितिशेषः ॥ १४० ॥ ॥ ॥ ॥ ॥ ॥

मंडलेसमूहेविनिश्चयात् शिशुपालायरुग्मिणींप्रदापयामइतिनिश्चयादुपागतेसति । भीष्मकेणसहितेराजमंडलेमुदारुग्मिणींप्रदातुंउद्यतेसति । शिशुपालायेतिशेषः । तदेतिवापाठः ॥ १४१ ॥ तदानिश्चयसमयेविदर्भनंदनारुग्मिणीद्विजोत्तमं पुरोहितसुतंविप्रंप्रेषयामासरुग्मिणीतिपाठे । अयापयत् प्रेषयामास ॥१४२॥ तद्वचःद्विजवचःविदर्भकान् विदर्भविषयान् अगात् । समस्तयादवैःसह हलायुधःरामःतंकृष्णंअनुअगात् ॥ १४३ ॥ कन्यकायाअवनेरक्षणविषयेआत्तकार्मुकं गृहीतधनुःसन्सुयत्तंअतिप्रयत्नवद्बभुव ॥ १४४ ॥ हरिःप्रदानतःकन्यादानात्पुरापूर्वंसुरायाःअंबिकायाःदेव्याःईक्षणंदर्शनंतस्यछलात्व्याजात् बहिर्गतांदेवालयंप्रतिगंतुंबहिर्गतांरुग्मिणींभूभृतांरा

समस्तराजमंडले विनिश्चयादुपागते ॥ सभीष्मके च रुग्मिणीं प्रदातुमुद्यते मुदा ॥ १४१ ॥ समस्तलोकयोषितां वरा विदर्भनंदना ॥ द्विजोत्तमं हरेः पदोः सकाशमाश्वयापयत् ॥ १४२ ॥ निशम्य तद्वचो हरिः क्षणाद्विदर्भकानगात् ॥ तमन्वयाद्धलायुधः समस्तयादवैः सह ॥ १४३ ॥ समस्तराजमंडलं प्रयांतमीक्ष्य केशवं ॥ सुयत्तमात्तकार्मुकं बभूव कन्यकावने ॥ १४४ ॥ पुराप्रदानतः सुरेक्षणाच्छलाद्बहिर्गताम् ॥ रथेन्यवेशयद्धरिः प्रपश्यतां च भूभृताम् ॥ १४५ ॥ जरासुतादयो रुषा तमभ्ययुः शरोत्तमैः ॥ विधाय तान्निरायुधान् जगाम केशवः शनैः ॥ १४६ ॥ पुनर्गृहीतकार्मुकान् हरिं प्रयातुमुद्यतान् ॥ न्यवारयद्धलायुधो बलाढ्यऊर्जिताग्रणीः ॥ १४७ ॥ तदासितः शिरोरुहो हरेर्हलायुधः स्थितः ॥ प्रकाशमादिशद्बलं विजेतुमत्र मागधं ॥ १४८ ॥ स तस्य मागधो रणे गदाप्रहारचूर्णितः ॥ पपातभूतले बलो विजित्य तं ययौ पुरीं ॥१४९॥ वरोरुवेषसंयुतोथ चेदिराट् समभ्ययात् ॥ तमाससाद सात्यकिर्नदन्मृगाधिपो यथा ॥ १५० ॥ ॥ ॥ ॥

ज्ञांपश्यतांसतां रथेस्वरथेन्यवेशयत् ॥१४५॥ तंकृष्णम् ॥१४६॥ बलेनशक्त्याऊर्जितानांउत्कृष्टानांअग्रणीःआद्यःबलाढ्यानांमध्येश्रेष्ठइत्यर्थः । न्यवारयत् ॥१४७॥ तदाहलायुधेरामेस्थितःहरेःसितःशुक्लःशिरोरुहःकेशःअत्रअस्मिन्युद्धे मागधंविजेतुंबलंशक्तिंप्रकाशंप्रकटंआदिशत्अभूदित्यर्थः ॥ १४८ ॥ समागधःतस्यरामस्यगदायाःनिपातनंतेनचूर्णितः पिष्टीकृतःसन् पपात बलःरामःतंजरासंधं ॥ १४९ ॥ वरस्यउरुवेषःतेनसंयुतःचेदिराट्तंशिशुपालंयथामृगाधिपःसिंहः ॥ १५० ॥

तावुभौसात्यकिशिशुपालौक्रुधाकोपेन स्फुरत्तनूचलदेहौपरस्परंनिरीक्ष्य तस्थतुःस्थितौ ॥ १५१ ॥ समानभावउभयोःसमत्वं अक्षमीअसहमानःशिनेःसुतःसत्यकःतस्यआत्मजःसात्यकिःशरंउद्ववहतूणान्निःसारितंचकार । अथतंशरंबलादाकृष्येत्यर्थः । तस्यशिशुपालस्यवक्षसिमुमोच ॥ १५२ ॥ सनृपात्मजःदमघोषपुत्रःशिशुपालःतेनसात्यकिनाबाणेनचताडितःविसंज्ञकःसंज्ञारहितःसन्अपतत् ॥ १५३ ॥ तत्प्रसिद्धंमिलितंबलंशिशुपालबलंवा पुरैवपुनर्गृहीतकार्मुकानित्युक्तबलभद्रादियुद्धात्पूर्वमेवरुग्मिपूर्वकाःसहप्रजग्मुःयोद्धुमितिशेषः ॥ १५४ ॥ तदेवविवृणोति । सहेति । भीष्मकस्यात्मजःरुग्मीएकलव्यपूर्वकैःसहहरिंसमेत्यप्राप्य सायकैःववर्ष सङ्कर्षणः

चिरं प्रयुध्यतावुभौ वरास्त्रशस्त्रवर्षिणौ ॥ क्रुधा निरीक्ष्य तस्थतुः परस्परं स्फुरत्तनू ॥ १५१ ॥ समानभावमक्षमी शिनेः सुतात्मजः शरं ॥ अथोद्ववर्ह तं शरं बलान्मुमोच वक्षसि ॥ १५२ ॥ स तेन ताडितोऽपतत् विसंज्ञिको नृपात्मजः ॥ विजित्य तं ससात्यकिर्ययौ प्रहृष्टमानसः ॥ १५३ ॥ अथापरे च यादवा विजित्य तद्बलं ययुः ॥ पुरैव रुग्मिपूर्वकाः प्रजग्मुरच्युतं प्रति ॥ १५४ ॥ सहैकलव्यपूर्वकैः समेत्य भीष्मकात्मजः ॥ हरिं ववर्ष सायकैः स सिंहवन्न्यवर्तत ॥ १५५ ॥ अक्षौहिणीत्रयं हरिस्तदा निहत्यसायकैः ॥ अवाहनायुधं व्यधात् निषादपं शरैः क्षणात् ॥ १५६ ॥ शरं शरीरनाशकं समाददानमीश्वरं ॥ स एकलव्य आशु तं विहाय दुद्रुवे भयात् ॥ १५७ ॥ धनुर्भृतां वरे गते रणं विहाय भूभृतः ॥ करूशराजपूर्वकाः क्षणात्प्रदुद्रुवुर्भयात् ॥ १५८ ॥ अथाससाद केशवं रुषा स भीष्मकात्मजः ॥ शरांबुधार आशु तं विवाहनं व्यधाद्धरिः ॥ १५९ ॥ चकर्त कार्मुकं पुनः सखड्गचर्मभृद्धरेः ॥ रथं समारुहच्छरैश्चकर्त खड्गमीश्वरः ॥ १६० ॥ ॥ ॥ ॥

न्यवर्ततपरावृत्तोभूत् ॥ १५५ ॥ अवाहनायुधंवाहनादिरहितं निशादपंएकलव्यं ॥ १५६ ॥ शरंसमाददानंस्वीकुर्वंतं तमीश्वरंविहाय ॥ १५७ ॥ धनुर्भृतांधनुर्धारिणां मध्ये वरेश्रेष्ठेएकलव्येकरूशराजोदंतवक्रः ॥ १५८ ॥ रुषाकोपेन शरा अंबूनीवतेषांधारायस्यसतथा । आससादप्राप तंरुग्मिणंविवाहनंव्यधादकरोत् ॥ १५९ ॥ धनूरुग्मिधनुश्चकर्तचिच्छेद पुनःसरुग्मीहरेरथंसमारुहत्ईश्वरःकृष्णःरुग्मिणःखड्गंशरैश्चकर्त ॥ १६० ॥ ॥ ॥

वितस्तिमात्रकैःवितस्तिपरिमितैःतंरुग्मिणंप्रियायाःरुग्मिण्याःवचःप्रपालयन् मद्भ्रातरंमाजहीतिरुग्मिणीवाक्यंमानयन्नित्यर्थः एनंरुग्मिणं ॥ १६१ ॥ तंरुग्मिणंनिबध्यबध्वा पंचचूडिनंपंचशिखिनंविधायव्यसृजत् । जगतांजनित्र्योःपित्रोःरमाचईश्वरश्चतयोःरुग्मिणीकृष्णयोःइदंइमंहनिष्येमाजहीत्यनयोःविवादकरणं विडंबनंलोकानुकरणं ॥ १६२ ॥ विडंबनमित्युक्तंविशदयति । सदेति । सदाएकमनसावपिअविरुद्धेच्छावपितौरमाहरिश्चनृणांस्वधर्मशासकौगृहिणांस्वधर्मशिक्षकौचयतः अतस्तत्रयुद्धेरथेवारुग्मिणासहविजहतुःक्रीडांचक्रुः ॥ १६३ ॥ यमोपमंमृत्युसदृशंशरं तस्यसाल्वस्य ॥ १६४ ॥ मंदंईषत्चेष्टितंइंद्रियव्यापारोयस्यसतथा । चिरात्संज्ञासहितःसन्

शरैर्वितस्तिमात्रकैर्विधाय तं निरायुधम् ॥ प्रियावचः प्रपालयन् जघान नैवमीश्वरः ॥ १६१ ॥ निबद्ध्य पंचचूडिनं विधाय तं व्यसर्जयत् ॥ जगज्जनित्रयोरिदं विडंबनं रमेशयोः ॥ १६२ ॥ सदैकमानसावपि स्वधर्मशासकौ नृणां ॥ रमाहरिश्च तत्र तौ विजहतुश्च रुग्मिणा ॥ १६३ ॥ अथाससाद सौभराट् हरिं शरांबुवर्षणः ॥ हरिः शरं यमोपमं मुमोच तस्य वक्षसि ॥ १६४ ॥ शरेण तेन पीडितः पपात मंदचेष्टितः ॥ चिरात्ससंज्ञकोगमत्त्रिनेत्रतोषणेच्छया ॥ १६५ ॥ समस्तराजसन्निधावयादवीं महीमिमां ॥ करिष्य इत्युदीर्य सो व्यधात्तपोतिदुश्चरं ॥ १६६ ॥ अथो विवेश केशवः पुरीं कुशस्थलीं प्रभुः ॥ प्रियायुतोब्जजादिभिः समीडितः सुरेश्वरैः ॥ १६७ ॥ पुरा ततो हलायुधः प्रियां निजां पुरापि हि ॥ स वारुणीसमाह्वयामवाप रैवतीं प्रभुः ॥ १६८ ॥ पतिं यथानुरूपिणं तदीयमेव पूर्वकं ॥ पिता तदीय ऐच्छत प्रवेत्तुमब्जसंभवात् ॥ १६९ ॥ ॥ ॥

त्रिनेत्रस्यत्र्यंबकस्यतोषणेच्छयावनंप्रत्यगमत् ॥ १६५ ॥ किंकृत्वाअहंइमांमहींअयादवींयादवराहितांकरिष्यइति राज्ञांसन्निधौसमीपेउदीर्य ससाल्वः ॥ १६६ ॥ समीडितःसम्यक्स्तुतोभूदित्यर्थः ॥ १६७ ॥ ततःपुरारुग्मिण्यानयनात्पूर्वं प्रभुःहलायुधःरामःपुरापिपूर्वमपिमूलरूपेपीत्यर्थः । वारुणीतिसमाह्वयांसमीचीननामवतीं निजांप्रियांस्वभार्यांरैवतींभुविरेवतीनाम्नींअवाप ॥ १६८ ॥ तदीयःरेवतीसंबंधीपिताककुद्मीयथानुरूपिणंरेवतीरूपोचितंरूपं पूर्वमेवपूर्वजन्मनि विद्यमानमेवतदीयंरेवतीसंबंधिनंपतिंभर्तारं अब्जसंभवात्ब्रह्मणःप्रवेत्तुंज्ञातुंऐच्छत् ॥ १६९ ॥ ॥ ॥ ॥ ॥ ॥

सरेवतपुत्रःककुद्मीतदीयतोब्रह्मसंबंधिनोवरात् ब्रह्मणोलोकगमनविषयेब्रह्मदत्तवरात् तस्यब्रह्मणःसदःसभांगतःप्राप्तःसन् प्रगीतिकांगायनंनिशम्य युगानांउरुकालस्यपर्यंतं अतिक्रमणमित्यर्थः । नाविदत्नज्ञातवान् ॥ १७० ॥ अयोग्यगीतिकामनुष्याणांश्रोतुमयोग्या गायनंनरान्विमोहयेत् यतस्ततःसनृपःककुद्मीमूढबुद्धिःसन् । मूर्छितचित्तःसन्अंततःउद्बोधनानंतरं अल्पकालःअल्पकालोगतइत्यमन्यतज्ञातवान् ॥ १७१ ॥ मूर्छितःसककुद्मीबहौयुगात्ययेयुगातिक्रमणेसति । अब्जजेनप्रबोधितःप्रबोधंप्रापितःसन् तंब्रह्माणंसुतायाःस्वपुत्र्याःपतिं ममसुतापतिःकइतिअपृच्छतपप्रच्छ । सब्रह्मावलंबलभद्रंबलःतेसुतापतिरित्यब्रवीत् ॥१७२॥ रैवतः रेवतपुत्रःककुद्मीतांरेवतींबलायबलभद्रायप्रदायगंधमादनंशैलंगतःप्राप्तःसन् अत्रशैलेचीर्णसत्तपोयेनसतथा केशवांतिकंवैकुंठंअवाप ॥ १७३ ॥ पुरातनानांपूर्वयुगस्थमनुष्याणां प्रमाणेनसंमितांसमानांतांरेवतींहलेनलांगलेनआत्मनास्वेनसमांस्वसमामित्यर्थः । चकार यतःसत्यवांछितःसत्यकामःअतएवेत्यर्थः स्वोच्चाभार्यानविवाह्येत्युक्तधर्मशास्त्रादितिभावः ॥ १७३ ॥ उदारचेष्टितःउत्कृष्टकर्माबलःतयारेवत्यारतःरमन्सन् शठश्चउल्मुकश्चेत्यभिधाययोस्तौतथा उभौसुतौअधात्जनयामास । तौपूर्वकावित्यतआह । पुरेति । पुराअर्यमाचअंशकश्चेतिद्वंद्वः । अर्यमांशकनामानौसुरौदेवौआदित्यौ । आदित्याश्चोक्ताहरिवंशे । धातार्यमाचमित्रश्चवरुणांशोभगस्तथा । इंद्रोविवस्वान्पूषाचत्वष्टाचसवितातथा । कथितोविष्णुरित्येषकाश्यपेयोगणस्तथा । इत्येतेद्वादशादित्याज्वलंतःसूर्यवर्चसः ॥ १७५ ॥ रुग्मिण्याःकरंअग्रहीत् । पाणिग्रहणकर्माकरोदित्यर्थः । तदापाणिग्रहणकाले ॥ १७६ ॥ वियत्याकाशे रमयारुग्मिण्यासमेतं प्रतुष्टुवुः ॥ १७७ ॥ ॥ ॥ ॥

स तत्सदोगतो वरात्तदीयतः प्रगीतिकां ॥ निशम्य नाविदद्गतं युगोरुकालपर्ययं ॥ १७० ॥ नरा न योग्यगीतिका विमोहयेत्ततो नृपः ॥ स मूढबुद्धिरंततोल्पकाल इत्यमन्यत ॥१७१ ॥ स मूर्छितःप्रबोधितोब्जजेन तं त्वपृच्छत ॥ सुतापतिं बलं च सो ब्रवीद्युगात्यये बहौ ॥१२॥स रैवतो बलायतां प्रदाय गंधमादनम् ॥ गतोत्र चीर्णसत्तपाः अवाप केशवांतिकम् ॥ १७३ ॥ बलोपि तां पुरातनप्रमाणसंमितां प्रभुः ॥ हलेन चात्मना समां चकार सत्यवांछितः ॥ १७४ ॥ तया रतः सुतावुभौ शठोल्मुकाभिधावधात् ॥ पुरार्यमांशकौ सुरावुदारचेष्टितो बलः ॥ १७५ ॥ जनार्दनश्च रुग्मिणीकरं शुभे दिनेग्रहीत् ॥ महोत्सवस्तदाभवत्कुशस्थलीनिवासिनाम् ॥ १७६ ॥ चतुर्मुखेशपूर्वकाः सुराविय़त्यवस्थिताः ॥ प्रतुष्टुवुर्जनार्दनं रमासमेतमव्ययं ॥ १७७ ॥ ॥

मुनींद्राःदेवगायकाःगंधर्वादयोपि सिद्धचारणादयोपि यादवैःसह रमाचरमेशश्चतथा तयोर्योगोविद्यतेयस्मिन्तथा तस्मिन्उत्तमोत्सवेविचेरुः ॥ १७८ ॥ समाहुताःआकारिताः रमयासमायुतंहरिंसमाययुः ॥ १७९ ॥ लोकेषुप्राणिषुयेसज्जनाःसमस्ताश्चतेलोकसज्जनाश्चतथा समीक्ष्यमोदंआययुःप्रापुः ॥ १८० ॥ सदावियोगशून्ययावियोगरहितयारुग्मिण्यापुरातनंपूर्वंपुत्रंमनोभवंकामंरुग्मिण्यांउत्तमंपुत्रंअधत्तउत्पादयामास ॥ १८१ ॥ बलीसरुग्मिणीसुतः चतुस्तनोःवासुदेवादिचतुःस्वरूपकस्य प्रभोर्हरेः तृतीयरूपेण प्रद्युम्नाख्यरूपेणसंयुतःप्रद्युम्नाविष्टइत्यर्थः । यतःकारणात्ततःतस्यप्रद्युम्नस्यआह्वयंनामयस्यासौतत्तथाअभवत् ॥ १८२ ॥ अब्जजस्यब्रह्मणःअंकजःऊरुजोनारदःपुरैवप्रद्युम्नोत्पत्तेःप्राक्यंप्रद्युम्नंशंबरस्यमृत्यवेअवदत् कृष्णाद्रुग्मिण्यांप्रद्युम्ननामायःपुत्रःभविष्यति सतवमृत्युरितिशंबरं प्रत्यवदादितिभावः । अपिउत्प

मुनींद्रदेवगायकादयोपि यादवैः सह ॥ विचेरुरुत्तमोत्सवे रमारमेशयोगिनि ॥ १७८ ॥ सुरांशकाश्च ये नृपाः समाहुता महोत्सवे ॥ सपांडवाः समाययुर्हरिं रमासमायुतं ॥ १७९ ॥ समस्तलोकसुंदरौ युतौ रमारमेश्वरौ ॥ समीक्ष्य मोदमाययुः समस्तलोकसज्जनाः ॥ १८० ॥ तथा रमन् जनार्दनो वियोगशून्यया सदा ॥ अधत्त पुत्रमुत्तमं मनोभवं पुरातनम् ॥ १८१ ॥ चतुस्तनोर्हरेः प्रभोस्तृतीयरूपसंयुतः ॥ ततस्तदाह्वयोभवत्सरुग्मिणीसुतो बली १८२ ॥ पुरैव मृत्यवेवदत्तमेव शंबरस्य ह ॥ प्रजातमब्जजांकजस्तथांतकोयमित्यपि ॥ १८३ ॥ स मायया हरेः सुतं प्रगृह्य सूतिकागृहात् ॥ अवाक्षिपन्महोदधावुपेक्षितोरिपाणिना ॥ १८४ ॥ तमग्रसज्जलेचरः सदाशहस्तमागतः ॥ कुमारमस्य तूदरे निरीक्ष्य शंबरे ददुः ॥ १८५ ॥ विपाट्य मत्स्यकोदरं स शंबरः कुमारकं ॥ न्यवेदयन्मनोभवप्रियाकरे सुरूपिणं ॥ १८६ ॥ ॥ ॥ ॥

न्नमनंतरमपि प्रजातंउत्पन्नंतमेवपूर्वोक्तंप्रद्युम्नमेवअयंरुग्मिण्यांउत्पन्नोयंप्रद्युम्नःतवमृत्युरितिपुनरवददितिपद्यस्थपदान्यावश्यकानिचित्पदान्याहार्ययोज्यं ॥ १८३ ॥ शंबरःसूतिकागृहात्प्रसूतिकागृहात्प्रगृह्यआदाय महोदधौसमुद्रे कथंभूतःअरिपाणिनाचक्रपाणिनाकृष्णेनउपेक्षितः ॥ १८४ ॥ जलेचरःतंप्रद्युम्नंअग्रसत् गिलितवान् । समत्स्यःदाशानांमत्स्यघातिनांहस्तमागतःप्राप्तः अस्यमत्स्यस्यउदरेकुमारंनिरीक्ष्य शंबरेशंबरवशेमत्स्यंददुः । दाशाइतिशेषः ॥ १८५ ॥ विपाट्यविदार्यमनोभवस्यकामस्यप्रियायाःदयितायाःकरेकुमारंन्यवेदयत्ददौ ॥ १८६ ॥ ॥ ॥ ॥ ॥

ननु कामभार्यायाशंबरगृहेवासःकिमर्थमभूदित्यतस्तत्कारणमाह । अनंगतामिति । पुराहरेणअंगजेकामेअनंगतांदेहाभावत्वंउपागतेसति । सातद्भार्यारतिःविरिंचशापतः शंबरस्यवशंजगाम । हियस्मात्तस्मादितिसंबंधः ॥ १८७ ॥ विरिंचःकिमर्थमशपादित्यतआह । पुरेति । पुराकंजजेनब्रह्मणाउदितांपंचभर्तृकां पंचभर्तृवतींपार्षतात्मजांद्रौपदींनिशम्यश्रुत्वा रतिःजहास यतःअब्जजोब्रह्मातांरतिंअसुरेणदूषिताभवेतिशशाप ॥ १८८ ॥ ततःशापप्राप्त्यनंतरं सारतिःमाययानिजांस्वसंबंधिनींतनुंदेवतादेहंपिधायआच्छाद्य । अन्यथाइच्छयाकल्पितयाअसुरंजगाम ॥ १८९ ॥ उक्तमेवार्थंद्रढयति । गृहइति । सारतिःअपियद्यपि असुरेशंबरसंबंधिनिगृहेस्थिता । तथापिनिजस्वरूपतःदेवतास्वरूपेणनगच्छतिस्म तयादेवताशरीरेणअन्यगात्वंनप्राप्तामितिभावः । सारतिःनिजंपतिंप्रद्युम्नंसमीक्ष्य हर्षितासंतोषयुक्तासती ॥ १९० ॥

**अनंगतामुपागते पुरा हरेण सांगजे ॥ वशंविरिंचशापतो जगाम शंबरस्य हि ॥ १८७ ॥ पुराहि पंचभर्तृकां निशम्य कंजजोदितां ॥ जहास पार्षतात्मजां शशाप तां ततस्त्वजः ॥१८८॥ भवासुरेण दूषितेति सा ततो हि मायया ॥ पिधायतां निजां तनुं जगाम चान्यथासुरम् ॥१८९॥ गृहेपि सासुरे स्थिता निजस्वरूपतोसुरं॥न गच्छति स्म सा पतिं निजं समीक्ष्य हर्षिता ॥ १९० ॥ रसायनैः कुमारकं व्यवर्धयद्रतिः पतिं ॥ सुपूर्णयौवनोभवच्चतुर्भिरेववत्सरैः ॥ १९१ ॥ पतिं सुपूर्णयौवनं निरीक्ष्यतां विलज्जतीं ॥ उवाच कार्ष्णिरंब ते कुचेष्टितं कथं त्विति ॥१९२ ॥ जगाद साखिलं पतौ तदास्य जन्म चागतिं ॥ ततोग्रहीत्स तां प्रियां रतिं रमापतेः सुतः ॥ १९३ ॥ ददौ च मंत्रमुत्तमं समस्तमायिनाशकं ॥ भृगूत्थरामदैवतं रतिर्हरेः सुताय सा ॥ १९४ ॥ ततः स्वदारधर्षकं समाह्वयद्युधेंगजः ॥ सशंबरं सचेत्य तं युयोध शक्तितो बली ॥ १९५ ॥ ॥ ॥ ॥**

रसायनैःक्षीरघृताद्यैःकुमारकंकुमारस्वरूपंपतिंव्यवर्धयत् । कुमारकंस्कंदस्वरूपंपतिंवा ॥ १९१ ॥ कार्ष्णिःकृष्णपुत्रःप्रद्युम्नःविषज्जतींविलज्जतींभार्यावद्विकारवतींरतिंप्रत्युवाच । किमिति । हेअंबमातःतेतवकुचेष्टितंलज्जादिकुत्सिताचरणंकथंकिमर्थमित्युवाचेतिसंबंधः ॥ १९२ ॥ सारतिःपतौपत्येस्वागमनकारणं अस्यप्रद्युम्नस्यजन्मकृष्णाज्जननंआगतिंअत्रागमनंचेत्यखिलंजगाद । अग्रहीत् मातृबुद्धिंविहायभार्यात्वेनांगीचकार ॥ १९३ ॥ सारतिःहरेःसुतायभृगूत्थरामदैवतं परशुरामदेवताकं मंत्रं ॥ १९४ ॥ सोंगजःकामावतारःप्रद्युम्नःस्वस्यदाराभार्यातस्याःधर्षकंशंबरंयुद्धेयुद्धार्थंसमाव्हयत् । सबलीशंबरःतंप्रद्युम्नंएत्य शक्तितोयुयोधयुद्धमकरोत् ॥ १९५ ॥

सशंबरःवरास्त्रादिकरणैःखड्गचर्मधारिणंहरेःसुतंप्रतियोद्धुंयदाआईषदपिनाशकत्शक्तोनबभूव। तदामायानदृश्यतेनादृश्यत अंतर्हितोभूदितिभावः ॥१९६॥ कृष्णनंदनः सहस्रसंख्याकाःमायाःऐंद्रजालिकविद्यायस्यसतथा। अतएवउल्वणंक्रूरंअदृश्यंअंवराद्गिरीन्सृजंतंवर्षमाणंशंबरंविद्ययारातिप्रदत्तविद्ययाजघान॥१९७॥अमुनाप्रद्युम्नेनविद्यारामदैवत्तविद्ययाकरणेनविनाशिताःउरुमायायस्यसतथा। सशंवरःवरासिनाउत्तमखड्गेन निकृत्तकंधरःछिंनगलःसन् अपतत् ॥ १९८ ॥ तंशंबरंतयैवविद्ययाअंबरमाकाशंसमास्थितःआरूढःसन्समंसह ॥१९९॥ मुनिःनारदःसमस्तवेदिनोःसर्वविदोःनरान्विडंबमानयोःरमारमेशयोःरुग्मिणीकृष्णयोःतंसुतंप्रद्युम्नंजगाद। सूतिकागृहात्हृतोयोयुवयोःपुत्रःसोयमितिजगादेतिभावः ॥२००॥ सप्रद्युम्नःआदिशब्देनअन्याःकृष्णभार्याःविवक्षिताःरामेणसहितैर्यादवैःपितामहेनवसुदेवेनआदरात्स्नेहात्सुलालितः

स चर्मखड्गधारिणं वरास्त्रशस्त्रपादपैः ॥ यदा न योद्धुमाशकद्धरेः सुतं न दृश्यते ॥ १९६ ॥ सहस्रमायमुल्वणं त्वदृश्यमंबराद्गिरीन् ॥ सृजंतमेत्य विद्यया जघान कृष्णनंदनः ॥ १९७ ॥ स विद्यया विनाशितोरुमाय आशु शंबरः ॥ निकृत्तकंधरोऽपतद्वरासिनामुना क्षणात् ॥ १९८ ॥ निहत्य तं हरेः सुतस्तयैव विद्ययांबरं ॥ समास्थितः सभार्यया समं कुशस्थलीं ययौ ॥ १९९ ॥ समस्तवेदिनोर्मुनिर्नरान्विडंबमानयोः ॥ रमारमेशयोः सुतं जगाद तं स्म नारदः ॥ २०० ॥ स रुग्मिणीजनार्दनादिभिः सरामयादवैः ॥ पितामहेन चादरात्सुलालितोवसत्सुखं ॥ २०१ ॥ ततः पुरा स्यमंतकं ह्यवाप सूर्यमंडले ॥ स्थिताद्धरेः स सत्राजित्सदात्र केशवार्चकः ॥ २०२ ॥ सदास्य विष्णुभाविनोप्यतीव लोभमांतरं ॥ प्रकाशयन् रमापतिर्ययाच ईश्वरो मणिम् ॥ २०३ ॥ स तं न दत्तवांस्ततोनुजो निबध्य तं मणिं ॥ वनं गतः प्रसेनको मृगाधिपेन पातितः ॥ २०४ ॥

सन् सुखं यथाभवतितथाअवसत् ॥ २०१ ॥ सत्यभामाविवाहप्रकारंवदिष्यन्आचार्यस्तदुपोद्घातमाह। ततइत्यादिना। ततः प्रद्युम्नागमनात्पुरा सप्रसिद्धः सत्राजिद्राजा सूर्यमंडलेस्थिताद्धरेःस्यमंतकंमणिंअवाप। हियतःअत्रसूर्यार्चायांकेशवार्चकःनारायणपूजकःअतोवापेतिसंबंधः॥ २०२ ॥ ईश्वरःकृष्णःविष्णुभाविनोपिविष्णुभक्तस्यापिअस्यसत्राजितःआंतरंहृत्संबंधिलोभंमणौविद्यमानंलोभंप्रकाशयन्प्रकटयन्मणिंययाचे ॥ २०३ ॥ ससत्राजित्तंमणिंकृष्णायनदत्तवान् ततःअनंतरं अनुजःसत्राजिदनुजःतंस्यमंतकमणिंकंठेनिबध्यवनंप्रतिगतःसन् मृगाधिपेनसिंहेन पातितोनिषूदितःयदा ॥ २०४ ॥ ॥ ॥

तदाससत्राजित्सहोदरस्यानुजस्यांतकंमृत्युंहरिंकृष्णंउपांशुरहसिशनैर्वाशशंस अकथयत् । ममानुजःकृष्णेनपातितइत्यवददितिभावः । ततःवर्त्मनाप्रसेनगतमार्गेणययौ ॥ २०६ ॥ सकृष्णःवनेपदैःसिंहप्रसेनपदैःमुद्रितांभुवंदृष्ट्वेतिवाक्यशेषः । सिंहेनसूदितंहतंप्रसेनंनिश्चित्येतिशेषः । सिंहसूदितंप्रसेनंवृष्णीनांयादवानांअदर्शयत् । इतिसिंहसूदितंप्रसेनमित्यावर्त्यमुद्रितादिपदान्याहृत्ययोज्यं। सकृष्णःप्रदर्श्यहतंप्रसेनंवृष्णीनांप्रदर्श्येत्यर्थः । ऋक्षेणपातितंनिहतंसिंहमप्यदर्शयत्। ऋक्षाच्छभल्लभल्लूकेत्यमरः॥२०६॥ ततोनंतरं सकृष्णःतान्वृष्णीन्विधाय । बिलाद्बहिर्विसृज्य परिगृह्यतइतिपरिग्रहः कर्मण्यण् जांबवतःपरिग्रहःत्रासार्थस्वीकारोयस्मिन्तत्तथा । जांबवतोवासाश्रयभूतंबिलंगुहांविवेश । तत्रबिलेतेनजांबवतासह । ईशितुःईशस्यकृष्णस्यसंयुगंयुद्धंबभूव ॥ २०७ ॥ सकृष्णःस्वभक्तःजांबवान् ममभक्तइत्यभिप्रायेणमंदंव्यथायथानभवतितथे

तदा स सत्रजिद्धरिं शशंस सोदरांतकं ॥ उपांशु वर्त्मना ततो हरिः स यादवो ययौ ॥ २०५॥ वने स सिंहसूदितं पदैः प्रदर्श्य वृष्णिनां ॥ प्रसेनमृक्षपातितं स सिंहमप्यदर्शयत् ॥ २०६ ॥ ततो निधाय तान्बिलं स जांबवत्परिग्रहं विवेश तत्र संयुगं बभूव तेन चेशितुः ॥ २०७॥ युयोध मंदमेव स प्रभुः स्वभक्त इत्यजः ॥ चकार चोग्रमंततः प्रकाशयन्स्वमस्य हि ॥ २०८॥ समुष्टिपिष्टविग्रहो नितांतमापदं गतः ॥ जगाम चेतसा रणं रघूत्तमं निजं पतिम् ॥ २०९ ॥ स्मृतिंगते तु राघवे तदाकृतिं यदूत्तमे ॥ समस्तभेदवर्जितां समीक्ष्य सोयमित्यवैत् ॥२१०॥ ततः क्षमापयन्सुतां प्रदाय रोहिणीं शुभाम् ॥ मणिं च तं नुनाव स प्रपन्न आशु पादयोः ॥२११ ॥ विधाय चक्रदारितं सुजीर्णदेहमस्य सः ॥ युवानमाशु केशवश्चकारवेदनां विना ॥ २१२ ॥ ॥ ॥ ॥ ॥

त्यर्थः । युयोधयुद्धमकरोत् । पर्वमितिशेषः । अंततःयुद्धसमाप्तिसमयेअस्यजांबवतःस्वस्यस्वरूपंप्रकाशयन्प्रकटयन्सन्उग्रंक्रूरयुद्धंचकार ॥ २०८ ॥ मुष्टिभिःपिष्टःचूर्णीकृतःविग्रहोदेहोयस्यसतथा सजांबवान्नितांतंआपदंप्राणसंशयंगतःप्राप्तःसन् चेतसामनसानिजपतिंस्वस्वामिनंरघूत्तमंरामं अरणंशरणंजगामप्राप ॥२०९ ॥ जांबवतारावेस्मृतिंगतेसति तेनस्मृतेसतीत्यर्थः। समस्तभेदैःगुणकर्माकृत्यादिसर्वभेदैःवर्जितांरहितांतस्यरामस्यआकृतिंस्वरूपंयदूत्तमेकृष्णेसमीक्ष्यसःमत्स्वामीरामःअयंकृष्ण इतिअनेनप्रकारेणअवैत्ज्ञातवान् ॥२१०॥ ततःरामःकृष्णएवेतिज्ञानानंतरं क्षमापयन् आशुपादयोःप्रपन्नोनतःसजांबवान्शुभांहरिभक्त्यादिगुणैर्मंगलांरोहिणींरोहिणीनाम्नींसुतांप्रदाय तंस्यमंतकाख्यंमणिंचप्रदायनुनावतुष्टाव ॥ २११ ॥ सकेशवःअस्यजांबवतःसुजीर्णअतिशिथिलंदेहंवेदनांव्यथांविनाचक्रेणदारितंविदारितंविधाय आशुयुवानंतरुणंचकार ॥ २१२ ॥ ॥ ॥ ॥ ॥

ईश्वरःकृष्णःभक्तस्यजांबवतःवांछितंसुतांकृष्णायदास्यामीतिअभिलषितंविधाय प्रियाजांबवतीसहायोयस्यसतथा । तादृशःसन् स्यमंतकंमहामणिंप्रगृह्य गुहामुखाद्विनिर्ययौविनिर्गतोभूत् ॥ २१३ ॥ गुहांप्रविष्टंअनिर्गतंअनिर्यातंईश्वरंकृष्णं बहून्यहानिबहुदिनानिप्रतीक्ष्य आगमिष्यतीतिप्रतीक्षांकृत्वा गृहंप्रतिगताःयेयादवाःतेतुतदा कृष्णागमनकालेतुअधिकंजहृषुःतुतुषुः ॥ २१४ ॥ ससत्रजित् विच्छविर्विगतकांतिःकृष्णमुखोबभूवेत्यर्थः ॥ २१५ ॥ ससत्राजिद्दुर्यशःचौर्यलक्षणदुष्कीर्तिं रमापतौ कृष्णेमिथ्ययाअनूच्यउदीर्य मिथ्ययेतिविभक्तिप्रतिरूपकमव्ययं । तपनूपश्चात्तापंकुर्वन् स्वपापहानिकांक्षयास्वदोषपरिहारेच्छया जनार्दनायकृष्णायसुतांददौ ॥ २१६ ॥ तंमणिंस्यमंतकमणिंप्रदायतंकृष्णं हरिःपुनःमणिंसत्राजितेददौ । हरिःसत्यभामयासहमुमोद ॥ २१७ ॥ सत्यभामापूर्वंकाइत्यतआह । रमैवेति । द्वितीयमूर्तिःश्रीभूर्दुर्गे

विधाय भक्तवांछितं प्रियासहाय ईश्वरः ॥ प्रगृह्य तं महामणिं विनिर्ययौ गुहामुखात् ॥ २१३ ॥ गुहां प्रविष्टमीश्वरं बहून्यहान्यनिर्गतं ॥ प्रतीक्ष्य यादवास्तु ये गता गृहं तु जहृषुः ॥ २१४ ॥ समस्तवृष्णिसन्निधौ यदूत्तमः स्यमंतकं ॥ ददौ च सत्रजित्करे सविच्छविर्बभूव ह ॥ २१५ ॥ स दुर्यशो रमापतावनूच्य मिथ्यया तपन् ॥ स्वपापहानिकांक्षया ददौ सुतां जनार्दने ॥ २१६ ॥ मणिं च तं प्रदाय तं ननाम च क्षमापयन् ॥ मणिं पुनर्ददौ हरिर्मुमोद सत्यभामया ॥ २१७ ॥ रमैव सापि भूरिति द्वितीयमूर्तिरुत्तमा ॥ बभूव सत्रजित्सुता समस्तलोकसुंदरी ॥ २१८ ॥ ततो हि सा च रुग्मिणी प्रिये प्रियासुतेऽधिकं ॥ जनार्दनस्य ते हरेः सदा वियोगिनी यतः ॥ २१९ ॥ अवाप सांबनामकं सुतं च रोहिणी हरेः ॥ चतुर्मुखांशसंयुतं कुमारमेव षण्मुखं ॥ २२० ॥ ॥ ॥

तित्रिरूपवत्यालक्ष्याःद्वितीयमूर्तिरित्यर्थः । भूरितिनामवतीयारमाहिसैवभूरेवसत्रा।जितःसुताबभूव । अतएवसमस्तलोकेषुसुंदरीरूपवतीउत्तमाच ॥ २१८ ॥ ततःसत्यभामारुग्मिण्योःरमास्वरूपत्वात्सासत्यभामारुग्मिणीचेतितेद्वे जनार्दनस्यप्रियासुभार्यासुमध्ये अधिकंयथास्यात्तथाप्रिये अनुग्रहपात्रभूते । कुतःतेसत्यभामारुग्मिण्यौ हरेः सदादेशेकालेच अवियोगिनीअवियोगिन्यौ वियोगशून्येयतोतःअधिकंप्रियेत्यर्थः । यद्वा हरेःसदाअवियोगिनीरमेतिशेषः । यतःअतःतदवतारत्वात्तेप्रिये ॥ २१९ ॥ रोहिणीजांबवतीहरेःसकाशात् पूर्वंषण्मुखंकुमारंस्कंदं इदानींसांबनामकंसुतंअवाप कथंभूतंसांबं चतुर्मुखस्यअंशेनसंयुतं ॥ २२० ॥ ॥ ॥

इत्यनेनप्रकारेणप्रभौकृष्णेजगत्प्रशासतिसति कदाचिद्द्विजःकश्चनब्राह्मणःआययौ ॥२२१॥ सद्विजःनामतःनाम्नाजनार्दनःरमेशस्यपादएवसंश्रयःमुख्याश्रयःयस्यस तथा हरिभक्तइत्यर्थः । साक्षाद्धरिभक्तःऔपचारेणदैत्यभक्तइतिभावः । सजनार्दननामाद्विजःअब्रवीत् ॥ २२२ ॥ किमिति । हेप्रभोअतीवपातकंपापरूपंवचःब्रवीमि क्षमस्वेत्यब्रवीदिति संबंधः । तत्रहेतुमाहेत्याह । यतइति । अहंसुपापयोरतिपापिष्ठयोर्दूतकः । यतःअतःवचोहिवाक्यमपिताद्दशंपापरूपमित्यर्थः ॥ २२३ ॥ तेतवअ गोचरंइंद्रियविषयंकाचिन्नास्ति यद्यपितथापितवाज्ञयावदेवच्मि । अमुनाकृष्णेनवदेतिचोदितःप्रेरितोद्विजःमाधवंप्रतिजगाद ॥ २२४ ॥ किमिति । साल्वभूपतेःसाल्वदेश भूपस्यब्रह्मदत्तस्य शिवःआश्रयोययोस्तौतथाताद्दशौसुतौबभूवतुः । शिवस्यप्रसादतःतवबलिष्ठपुत्रौस्यातामिति एवंविधोयःप्रसादःतस्मात्संभवःउत्पत्तिर्ययोस्तौतथा तौब्रह्म

इति प्रशासति प्रभौ जगज्जनार्दने खिलं ॥ अगण्यसद्गुणार्णवे कदाचिदाययौ द्विजः ॥२२१॥ जनार्दनः स नामतो रमेशपादसंश्रयः ॥ स मानितश्च विष्णुना प्रणम्य वाक्यमब्रवीत् ॥ २२२ ॥ क्षमस्वमे वचः प्रभो ब्रवीम्यतीव पातकं ॥ यतः सुपापदूतकः ततो हि तादृशं वचः ॥२२३॥ नतेस्त्यगोचरं क्वचित्तथापि चाज्ञया वदे ॥ वदेति चोदितो मुना द्विजो जगाद माधवं ॥ २२४ ॥ सुतौ हि साल्वभूपतेर्बभूवतुः शिवाश्रयौ ॥ शिवप्रसादसंभवौ पितुस्तपोबलेन तौ ॥ २२५ ॥ अजेयतामवध्यतां शिवाद्वरं समापतुः ॥ जरासुतस्य शिष्यकौ तपोबलेन केवलम् ॥ २२६ ॥ महोदरं च कुंडधारिणं च भूतकावुभौ ॥ तथा जितावध्यकौ दिदेश शंकरस्तयोः ॥ २२७॥ तयोःसहाय एवतौ वराच्छिवस्य भूतकौ ॥ अजेयतामवापतुर्नचान्यथामरावपि ॥ २२८ ॥ अजेयतामवध्यतामवाप्य तावुभौ शिवात् ॥ पितुश्च राजसूयतां समिच्छतौ मदोद्धतौ ॥ २२९ ॥ ॥ ॥

दत्तसुतौ पितुस्तपोबलेन ॥२२५॥ अवध्यतांवध्यत्वाभावंअजेयतांचजेयत्वाभावंचवरंशिवात्समापतुः । केवलंजरासुतस्यशिष्यकौतयोःहंसडिभिकयोःतपोबलेनतोषितः शंकरःरुद्रःतथायथाहंसडिभिकौ अवध्यौअजेयौतथातद्वदित्यर्थः ॥२२६ ॥ अजितौअवध्यकौमहोदरंमहोदरनामानंच तथाकुंडधारिणंकुंडधारिनामानंचेत्युभौभूतकौदिदेश । तयोःसहायार्थमितिशेषः ॥ २२७ ॥ अमरावपिअवध्यत्ववरंविनैव दैवतत्वात्मरणरहितावपितौभूतकावपितयोःहंसडिभिकयोःसहायएव शिवस्यवरात्अजेयताम वापतुः एवकारार्थंस्पष्टयति । नचेति । अन्यथातयोःसहायाभावेनच । अजेयत्ववरंनैवापतुः ॥ २२८ ॥ तावुभौहंसडिभिकौशिवात्अजेयतांअवध्यतांअवाप्यपितुर्ब्रह्म दत्तस्यराजसूयतांराजसूयकर्तृत्वंसमिच्छतःयतःमदेनउद्धतौमत्तौ ॥ २२९ ॥ ॥ ॥ ॥ ॥

ननु जरासंधजयोनस्यादित्याशंकायामाह । जरासुतइति । जरासुतःगुरुत्वतःस्वस्यतयोःगुरुत्वात् । अत्रअस्मिन्राजसूयविषये विरोद्धुंविरोधंकर्तुंनेच्छतिदेवपक्षिणाःदेवपक्ष स्थान्नृपान्तुविशेषेणविजित्येत्युपलक्षणं । देवावतारांश्चेतिद्रष्टव्यं । तुशब्दबलात्असुरान्सुरांश्चसामान्यतोविजित्येतिव्याख्येयं । कर्तुंराजसूयंकर्तुमिच्छतः ॥ २३० ॥ स्वयंजरासुतःराजसूयतांराजसूयकर्तृत्वंनमन्यतेनेच्छतीत्यर्थः । कुतःहेईशवैदिकाःवेदसंबंधिनःवेदविदइतियावत् । तंक्रतुंराजसूयंयज्ञंवैष्णवंविष्णुदेवताकमित्याहुः । यतः अतोनमन्यतइतिसंबंधः ॥ २३१ ॥ अवैष्णवाविमौकिमर्थंवैष्णवंक्रतुंइच्छतइत्यतआह । इमाविति । इमौहंसडिभिकौपितुर्यशःकीर्तिंअर्थिनौइच्छंतौसंतौतथा । तेतवप राभवायपराभवार्थंअच्युतदेवताकंक्रतुंसमिच्छतःयद्वा क्रतुंसमिच्छतःहेअच्युततौहंसडिभिकौभवंतंऊचतुः ॥ २३२॥ किमिति । समुद्रःसंश्रयःआश्रयोयस्यतथा । भवा

जरासुतो गुरुत्वतो विरोद्धुमत्र नेच्छति ॥ नृपांस्तु देवपक्षिणो विजित्य कर्तुमिच्छतः ॥ २३० ॥ स्वयं च राजसूयतां जरासुतो न मन्यते ॥ यतो हि वैष्णवं क्रतुं तमाहुरीश वैदिकाः ॥ २३१ ॥ इमौ पितुर्यशोर्थिनौ पराभवाय ते तथा ॥ समिच्छतोच्युत क्रतुं भवंतमूचतुश्च तौ ॥ २३२ ॥ समुद्रसंश्रयो भवान् बहून्प्रगृह्य लावणान् ॥ सुभारकानुपैहि नाविति क्षमस्व मे वचः ॥ २३३ ॥ उदीर्य तं ननाम सः प्रचाहसन्स्म यादवाः ॥ हरिस्तु सात्यकिं वचो जगाद मेघनिस्वनः ॥ २३४ ॥ प्रयाहि सात्यके वचोब्रवीहि मे नृपाधमौ ॥ समेत्य वां वरायुधैः करं ददाम्यसंशयं ॥ ॥ २३५ ॥ उपैतमाशुसंयुगार्थिनौ चपुष्करं प्रति ॥ इतीरितःशिनेः सुतो जगाम विप्रसंयुतः ॥ २३६ ॥ उपेत्य तौ हरेर्वचो जगाद सात्यकिर्बली ॥ विधाय तौ तृणोपमौ गिरा जगाम केशवं ॥ २३७ ॥ ॥ ॥

नृयतोतःत्वमितिवाक्यशेषः । लवणान्लवणसमुद्रसंबंधिनःबहून्सुभारकान्रत्नादीनांसुभारान् । भारस्याद्विंशतिस्तुलेत्यमरः । प्रगृह्यआदायनौआवां उपैहीतिमेवचःक्षमस्व ॥ २३३ ॥ इतीर्यइत्युक्त्वासद्विजःतंकृष्णंननाम । यादवाश्चप्राहसन् प्रचेत्यत्रभिन्नंपदं मेघस्यनिःस्वनइवनिःस्वनोध्वनिर्यस्यसतथा ॥ २३४ ॥ हेसात्यकेनृपेषुअधमौकुत्सितौहंसडिभिकौप्रतिकीदृशंवचइत्यतआह । समेत्येति । वांयुवांसमेत्य ॥ २३५ ॥ संयुगार्थिनौयुद्धार्थिनौयुवांपुष्करंप्रतिपुष्कराख्यतीर्थंप्रति उपैतंआयातमितिजगादेतिसंबंधः । शिनेःसुतःसात्यकिः॥२३६॥ तौहंसडिभिकौउपेत्यप्राप्य तौहंसडिभिकौगिरावाक्येनतृणेनउपमौसदृशौविधायकेशवंप्रत्याजगाम सात्यकिरितिशेषः२३७

ततःपुराकृष्णंप्रतिदूतप्रेषणात्पूर्वं तावेवउभौहंसडिभिकावेव हरस्वरूपिणंरुद्रावतारं सुदुःखवासनामकं दुर्वासाइतिनामानंद्विजंअत्रिपुत्रत्वात् त्राह्मणंतृणोपमंप्रचक्रतुः । दुरोदुःखपर्यायत्वाद्दुरशोभनदुःखयोरित्यभिधानं ॥ २३८ ॥ तृणोपममित्युक्तंविशदयति । दशेति । दशत्रिकैःशतैःत्रिंशच्छतैःत्रिसहस्रसंख्याकैरित्यर्थः । यतीश्वरैःपरमहंसैर्वृतःयुक्तःसर्ववित्सर्वज्ञः । सदुर्वासाआत्मनःकौपीनंतदेवआदिःपूर्वयासांतास्तथा विपाटिताःविदारिताःआत्मकौपीनादयःसर्वमात्राःवस्त्राणिदंडकमंडल्वादिसर्वसाधनानिवायस्यसतथा । समासांतःकप्रत्ययः । तादृशोभवत् अन्येभ्योपीतिन्हस्वः ॥ २३९ ॥ दूर्वासाःतौकिमितिनाशपदित्यतआह । वरादिति । असौदुर्वासाःस्वस्माद्रुद्रात्मनःस्वस्मात्संभवादुत्पन्नत्वात् वरान्निमित्तादवध्यत्ववरदाननिमित्तादितिभावः । शापेशापदानविषयेशक्तिमान्नाभूत् । ततःकारणात्समस्तानां भंजनेभंगविषयेउर्वीउ

ततः पुरैव तावुभौ द्विजं हरस्वरूपिणं ॥ सुदुःखवासनामकं प्रचक्रतुस्तृणोपमं ॥ २३८ ॥ दशत्रिकैः शतैर्वृतो यतीश्वरैःस सर्ववित् ॥ विपाटितात्मकौपिनादि सर्वमात्रकोऽभवत् ॥ २३९ ॥ वरात्स्वसंभवादसौ नशापशक्तिमानभूत् ॥ ततः समस्तभंजनोरुशक्तिमाप केशवं ॥ २४० ॥ सतान्समर्च्य माधवः प्रदाय चोरुमात्रकाः ॥ ययौ च तैः समन्वितो वधाय साल्वपुत्रयोः ॥ २४१ ॥ तमत्रिजं हरात्मकं यतो हि वेद मागधः ॥ ततोऽत्यजत्स्वशिष्यकौ निशम्य तत्प्रतीपकौ ॥ २४२ ॥ हरौ तु पुष्करं गते मुनीश्वरैः समन्विते ॥ समीयतुश्च तावुभावथात्र हंसडीभिकौ ॥ २४३ ॥ सब्रह्मदत्तनामकोत्र तत्पिताप्युपाययौ ॥ समागतौ तु भूतकौ शिवस्य यौ पुरःसरौ ॥ २४४ ॥ विचक्रनामकोऽसुरः पुरा विरिंचतो वरं ॥ अवध्यतामजेयतामवाप्य बाधते सुरान् ॥ २४५ ॥ ॥ ॥ ॥

त्कृष्टाशक्तिर्यस्यसतथातं ॥ २४० ॥ तान्यतीश्वरान्समर्च्य उरुमात्रकाउत्तमदंडकौपीनादिसाधनानिप्रदाय तैर्यतीश्वरैः ॥ २४१ ॥ मागधःजरासंधःहरात्मकंरुद्रावतारं अत्रिजंअत्रिपुत्रं तंदूर्वाससंयतःहिनिश्चयेनवेद ततःस्वशिष्यकौहंसडिभिकौतस्यदुर्वाससःप्रतीपकौद्वेषिणाविातिनिशम्यश्रुत्वा अत्यजत् ॥ २४२ ॥ हरौकृष्णेपुष्करंपुष्करतीर्थंप्रतिगतेसति अत्रपुष्करतीर्थेतावुभौहंसडीभिकौसमीयतुःप्रापतुः । यथागिरिशःगिरीशःतथाडिभिकोडीभिकश्चेतिनामतस्यभवति ॥ २४३ ॥ अत्रपुष्करेतयोःपिताशिवस्यपुरःसरौअग्रगामिनौयौभूतकौतौसमागतौ ॥ २४४ ॥ यःविचक्रनामकोसुरःपुराविरिंचतःब्रह्मणःअवध्यतांवध्यत्वाभावंअजेयतांजेयत्वाभावं । वरंअवाप्य सुरान्बाधते ॥ २४५ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

सचविचक्रःतयोःहंसडिभिकयोःसहायकाम्यया तयोःसहायकरणेच्छयाअगमत् यःहिडिंबराक्षसः॥ २४६ ॥ तोषणात्तपसातोषणात् कुतश्चनकस्यापि नजीयसेजेया नभविष्यसि । नवध्यसेवध्योनभविष्यसि । इतिशंकराद्वरंआप । सचराक्षसः ॥ २४७ ॥ तयोःहंसडिभिकयोःअक्षौहिणीदशात्मकं दशाक्षौहिणीसंख्यारूपं विचक्रगविचक्रस्यविद्यमानंबलंषडात्मकं षडक्षौहिण्यात्मकं तथैवरक्षसःसंबंधिराक्षसं एकएकाक्षौहिण्यात्मकं ॥ २४८ ॥ सहैकयाएकाक्षौहिण्यासहितयाद्विरष्टसेनया षोडशाक्षौहिणीसंख्ययासेनया युतौनृपौहंसडिभिकौयुधेयुद्धार्थंहरिंसमीयतुः । हरिश्चतौहंसडिभिकौससारप्राप ॥ २४९ ॥ भयानकःभयजनकःरणःद्वयोर्द्वयोरभूत्द्वंद्वयुद्धमभूदितिभावः । द्वयोर्द्वयोरित्युक्तंविवृणोति ।हरिरित्यादिना । बलःरामः ॥ २५० ॥ शिनिप्रवीरःसात्यकिःअस्यहंसस्यअनुजांडिभिकंनामतःगदःगदनामेत्यर्थः । यःहरेः

स चाभवत्तयोः सखा सहायकाम्ययागमत् ॥ हिडिंबराक्षसोपि यः पुराप शंकराद्वरं ॥ २४६ ॥ न जीयसे न वध्यसे कुतश्चनेति तोषणात् ॥ स चैतयोः सखा भवत्समाजगाम तत्र च ॥ २४७ ॥ अक्षौहिणीदशात्मकं बलं तयोर्बभूवह ॥ विचक्रगं षडात्मकं तथैकमेव राक्षसं ॥ २४८ ॥ द्विरष्टसेनया युतौ सहैकयैव तौ नृपौ ॥ समीयतुर्युधे हरिं हरिश्च तौ ससार ह ॥ २४९ ॥ अथ द्वयोर्द्वयोरभूद्रणो भयानको महान् ॥ हरिर्विचक्रमेयिवान् बलश्च हंसमुद्धतं ॥ २५० ॥ तदास्य चानुजं ययौ शिनिप्रवीर आयुधी ॥ गदश्च नामतोनुजो हरेः स रोहिणीसुतः ॥ ॥ २५१ ॥ पुरा स चंडको गणो हरेर्निवेदिताशनः ॥ समाव्हयद्रणाय वै तयोः स तातमेव हि ॥ २५२ ॥ अक्षौहिणीत्रयान्विताः समस्तयादवास्तदा ॥ त्रिलोचनानुगौ च तौ न्यवारयन्स राक्षसौ ॥ २५३ ॥ हरिर्विचक्रमोजसा महास्त्रशस्त्रवर्षिणं ॥ विवाहनं निरायुधं क्षणाच्चकार सायकैः ॥ २५४ ॥ ॥ ॥

कृष्णस्यअनुजःअवरजःसरोहिण्याःवसुदेवभार्यायाःरोहिण्याःसुतः ॥ २५१ ॥ सगदःपुराचंडकइतिहरेर्गणःगणदेवताचंडप्रचंडादिपार्षदेषुचंडाख्यइत्यर्थः । तत्रापिनिवेदितंसमर्पितंअशनंअन्नंयस्यसतथासहिसगदःतयोःहंसडिभिकयोःतातंपितरंब्रह्मदत्तंरणायवैनिर्धारणेसमाव्हयत् ॥ २५२ ॥ अक्षौहिणीनांत्रयेणत्र्यक्षौहिणीसंख्याकात्मकबलेन अन्विताःयुक्ताःसमस्तयादवाःतदाद्वंद्वयुद्धसमयेसराक्षसौहिडिंबेनसहितौ त्रिलोचनस्यत्र्यंबकस्यअनुगौअनुचरौतौभूतकौन्यवारयत् ॥ २५३ ॥ हरिःओजसाबलेन महास्त्रशस्त्रवर्षिणं विचक्रंक्षणात्क्षणमात्रेण ॥ २५४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

अरिहाशत्रुघ्नःकृष्णःपुनश्चपुनरपिपादपान्वृक्षान् गिरींश्चप्रमुंचतःवर्षणःविचक्रस्यशिरःअरिणासुदर्शनेनजहारचिच्छेद । अत्रअस्मिन्समयेहर्षिताःसंतोषयुक्ताःदेवताः विनेदुःजयशब्दंचक्रुः ॥ २५५ ॥ प्रसूनवर्षिभिःपुष्पवर्षणशीलैःचतुर्मुखादिभिर्ब्रह्मादिदेवैस्तुतःप्रभुःसकृष्णःसात्वतांयादवानांसमूहमितिशेषः । प्रभक्षकौतौभूतकौतसा रप्राप ॥ २५६ ॥ तौभूतकौरणेसमस्तयादवान्विधूयविद्राव्य जनार्दनंउपेत्यअंसगौस्कंधस्थौभूत्वाहरेःसुकर्णकौ क्षतभेदादिराहितत्वात्समीचीनकर्णौअदंशतांदशनक्रि यांचक्रतुःनैवक्षतमितिभावः ॥ २५७ ॥ सकृष्णःभुजयोःप्रवेगतःचलनवेगात् तौभूतकौविधूयउत्थाप्य शंकरालयेकैलासेन्यपातयत् । यतोबलार्णवःअतइतिसंबंधः । अमितस्यबलादिनाअपरिमितस्यकृष्णस्यतत्कैलासेभूतपातनंकिमुच्यतेकिमाश्चर्यमित्युच्यतेनैवाश्चर्यमित्यर्थः ॥ २५८ ॥ सहोग्रसेनकःउग्रसेनेनसहवर्तमानःहरेःपिताव

पुनश्चपादपान् गिरीन् प्रमुंचतोरिणारिहा ॥ शिरो जहार देवता विनेदुरत्र हर्षिताः ॥ २५५ ॥ प्रसूनवर्षिभिस्तु तश्चतुर्मुखादिभिः प्रभुः ॥ ससार तौ हरानुगौ प्रभक्षकौ स सात्वतां ॥ २५६ ॥ समस्तयादवान् रणे विधूय तौ जनार्दनं ॥ उपेत्य चांसगौ हरेरदंशतांसुकर्णकौ ॥ २५७ ॥ स तौ भुजप्रवेगतो विधूय शंकरालये ॥ न्यपातय द्बलार्णवोमितस्य किं तदुच्यते ॥ २५८ ॥ प्रभक्षयंतमोजसा हिडिंबमुद्धतं बलं ॥ सहोग्रसेनको ययौ पिता हरेः शरान् क्षिपन् ॥ २५९ ॥ तयोरथौ सहायुधौ प्रभक्ष्य राक्षसो बली ॥ प्रगृह्य तावभाषत प्रयातमाशु मे मुखं ॥ ॥ २६० ॥ तदा गदावरायुधः सहैव हंसभूभृता ॥ प्रयुध्यमान आययौ विहाय तं हलायुधः ॥ २६१ ॥ समागतं समीक्ष्य तौ विहाय राक्षसाधिपः ॥ उपेत्य मुष्टिना हनन् बलं स वक्षसि क्रुधा ॥ २६२ ॥ ॥

सुदेवः बलंयादवसेनांओजसाबलेनप्रभक्षयंतं हिडिंबंप्रतिशरान्क्षिपन्वर्षयन्ययौ ॥ २५९ ॥ तयोःउग्रसेनवसुदेवयोः तौउग्रसेनवसुदेवौहस्ताभ्यांप्रगृह्यमेमुखंआशुप्रया तामितिअभाषतउवाच ॥ २६० ॥ तदागदैववरायुधंयस्यसतथागदयायुध्यन्नित्यर्थः । हंसभूभृताहंसेनसहैवप्रकर्षेणयुध्यतेसौयुध्यमानोहलायुधोरामः तंहंसंविहायाहिडिंबं प्रत्याययौ ॥ २६१ ॥ आगततंरामंसमीक्ष्य तौउग्रसेनवसुदेवौविहाय बलरामंउपेत्य मुष्टिनाबलंअहनत्अहन् । सबलःराक्षसंवक्षसिक्रुधाकोपेनअहन्नित्यर्थः । सरा क्षसाधिपःबलंवक्षसिअहनदितिवायोज्यं ॥ २६२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

उभौरामहिडिंबौ अयुध्यतांयुद्धंचक्रतुः । विभुःसमर्थःसबलःचिरंप्रयुध्यतंहिडिंबंजंघयोःअग्रहीत् ॥ २६३ ॥ सबलःउद्धतंएनंदूरेआक्षिपत्चिक्षेप । सहिडिंबःपादयो जनेपादेनसहितयोजनेपुष्करप्रदेशात् पंचक्रोशपरिमितदेशइत्यर्थः । पपात पुनःआवृत्यतंरामंप्रतिनाजगाम ॥ २६४ ॥ सहिडिंबःसैनिकान्स्वसैन्यसमूहान्तौनृपौहं साडिभिकौचविहायतस्यहिडिंबस्य ॥ २६५ ॥ गदःवयोगतेनवृद्धेनसाल्वभूभृताब्रह्मदत्तेनयोधयन् युध्यन्सन् सोपिब्रह्मदत्तःअपाद्रवत् ॥ २६६ ॥ रथीसात्यकिः तस्यब्रह्मदत्तस्यकनीयान्कनिष्ठःतेनसुतेनडिभिकेनयुयोध ॥ २६७ ॥ ससात्यकिःहंसस्यकन्यसाकनीयसा अनुजेनडिभिकेनचिरंप्रयुध्य तस्यडिभिकस्यधन्विनांपंच केनसहितंशतंपंचोत्तरशतमित्यर्थः । चकर्तचिच्छेद ॥ २६८ ॥ साडिभिकःशिनेःसुतात्मजंपौत्रंसात्यकिंप्रत्यभ्ययात् तथावरासिचर्मभृत् विभीर्भयरहितःससात्य

उभौ हि बाहुशालिनावयुध्यतां च मुष्टिभिः ॥ चिरं प्रयुध्य तं बली ग्रहीत्स जंघयोर्विभुः ॥ २६३ ॥ अथैनमुद्ध तं बलाद्बलः सदूर आक्षिपत् ॥ पपात पादयोजने स नाजगाम तं पुनः ॥ २६४ ॥ विहाय सैनिकांश्चतौ नृपौ ययौ वनाय सः ॥ निहत्य तस्य राक्षसान् हलायुधो ननाद ह ॥ २६५ ॥ गदस्तु साल्वभूभृता वयोगतेन योध यन् ॥ विवाहनं निरायुधं चकार सोप्यपाद्रवत् ॥ २६६ ॥ सुतेन तत्कनीयसा युयोध सात्यकी रथी ॥ वरास्त्रशस्त्र योधिनौ विजह्तुश्च तावुभौ ॥ २६७ ॥ चिरं प्रयुध्य सात्यकिः स हंसकन्यसा बली ॥ शतं सपंचकं रणे चकर्त तस्य धन्विनां ॥ २६८ ॥ स खड्गचर्मभृद्रणे ऽभ्ययात्सुतात्मजं शिनेः ॥ स चैनमभ्ययात्तथा वरासिचर्मभृद्विभीः ॥ ॥ २६९ ॥ द्विषोडशप्रभेदकं वरासियुद्धमश्रमौ ॥ प्रदर्श्य निर्विशेषकावुभौ व्यवस्थितौ चिरं ॥ २७० ॥ परस्परांत रेषिणौ न चांतरं व्यपश्यतां ॥ ततो विहाय संगरं गतौ निरर्थकं त्विति ॥ २७१ ॥ ॥ ॥

किःएनंडिभिकंअभ्ययात् ॥ २६९ ॥ अश्रमौश्रमरहितौडिभिकसात्यकी द्विषोडशप्रभेदकंद्वात्रिंशद्भेदवत् वरंउत्तमंअसियुद्धं खड्गयुद्धंप्रदर्श्य । निर्विशेषकौविशेषरहितौ ताउभौचिरंव्यवस्थितौ ॥ २७० ॥ परस्परांतरेषिणौपरस्परस्यकर्मव्यतिहारेसर्वनाम्नोद्वेभवतइतिपरपदस्यद्विर्भावः । समासवच्चबहुलमित्यत्रबहुलग्रहणादन्यपरयोर्नस मासः । इतरशब्दस्यनित्यं असमासवद्भावेपूर्वपदस्थस्यसुपस्सुर्वक्तव्यः कस्कादित्वाद्विसर्जनीयस्यसत्वं । अन्योन्यंअंतरंअवकाशं ईषिणौइच्छंतावुभौअंतरंअवकाशंनव्य पश्यतां अंतराषिणावितिपाठेसंज्ञापूर्वकोविधिरनित्यइतिज्ञेयं । निरर्थकंव्यर्थमितिविचार्य संगरंयुद्धंविहाय गतौययतुः डिभिकसात्यकीइतिशेषः ॥ २७१ ॥ ॥

हंसेनसंयुतःसडिंभिकःतौहंसडिंभिकौ ॥ २७२ ॥ चतुर्थभागंचतुर्थांशंपादमात्रमित्यर्थः । शेषितंउर्वरितंयथास्यात्तथा एतयोःहंसडिंभिकयोःसैन्यंकेशवेनक्षणेनहतं । तौहंसडिंभिकौतस्यकृष्णस्यभयात् अपेयतुः अपययतुः ॥ २७३ ॥ तदासपुष्करेक्षणःकमललोचनःकृष्णःसुरैर्नुतःश्वस्तुतोभूत् अमिताप्रभादीप्तिर्यस्यसतथा । कृष्णः पुष्करेतांनिशांरात्रींउवास ॥ २७४ ॥ परेदिनेद्वितीयदिवसे यमस्वसुर्यमुनायास्तटेनृपात्मजौहंसडिंभिकौ पृष्ठतःसमाससादप्राप ॥ २७५ ॥ सकृष्णःस्वशिष्टसेनया स्वस्मादुर्वरितसेनयावृतौपरिवारितौपलायितौ पलायनशीलाववारयत्निवारयामास ॥ २७६ ॥ अवार्यंवारयितुमशक्यंपौरुषंपराक्रमोययोस्तौतथा सुकोपितौअतिकोपयु

ततः स हंससंयुतो जगाम योद्धुमच्युतं ॥ क्षणेन तौ निरायुधौ चकार केशवः शरैः ॥ २७२ ॥ हतं च सैन्यमेतयो श्चतुर्थभागशेषितं ॥ क्षणेन केशवेन तद्भयादपेयतुश्चतौ ॥ २७३ ॥ स पुष्करेक्षणस्तदा सुरैर्नुतोथपुष्करे ॥ उवा स तां निशां प्रभुः स यादवोमितप्रभः ॥ २७४ ॥ परे दिने जनार्दनो नृपात्मजौ प्रविद्रुतौ ॥ यमस्वसुस्तटे प्रभुः समाससाद पृष्ठतः ॥ २७५ ॥ स रौहिणेयसंयुतः समन्वितः स्वसेनया ॥ स्वशिष्टसेनया वृतौ पलायिनाववार यत् ॥ २७६ ॥ निवृत्य तौ स्वसेनया शरोत्तमैर्ववर्षतुः ॥ सुकोपितौ समस्तशो यदूनवार्यपौरुषौ ॥ २७७ ॥ अथाससाद हंसको हलायुधं महाधनुः ॥ अनंतरोस्य सात्यकिं गदं च सर्वसैनिकान् ॥ २७८ ॥ स सात्यकिं निरायुधं विवाहनं विवर्मकं ॥ व्यधाद्गदं च तौ रणं विहाय ह्यापजग्मतुः ॥ २७९ ॥ विधूय सैनिकांश्च सः प्र गृह्य चापमाततं ॥ हरिं जगाम चोन्नदन्महास्त्रशस्त्रवर्षिणः ॥ २८० ॥ तमाशु केशवोरिहा समस्तसाधनोज्झितं ॥ क्षणाच्चकारसोप्यगाद्विसृज्य तं हलायुधं ॥ २८१ ॥ ॥ ॥ ॥

क्तौतौहंसडिंभिकौस्वसेनयासहनिवृत्य समस्तशःसमस्तान्यदून्शरोत्तमैर्ववर्षतुः ॥२७७॥ अस्यहंसस्यअनंतरःअवरजोडिंभिकःसात्यकिंगदंचसर्वसैनिकांश्चसर्वयादवान् आससादइतिशेषः ॥ २७८ ॥ सडिंभिकःसात्यकिंगदंचआयुधादिरहितंव्यधात्अकरोत् । तौसात्यकिगदौ ॥ २७९ ॥ साडिंभिकःसैनिकान्यादवान्विधूयविद्रावयि त्वा । आततंआरोपितमित्यर्थः । चापंधनुःप्रगृह्य उन्नदन्उच्चस्वनंकुर्वन् ॥ २८० ॥ समस्तसाधनैःसर्वयुद्धसाधनैः उज्झितंरहितं तंडिंभिकंक्षणाच्चकार । सोपिडिंभि कःतंकृष्णंविसृज्यहलायुधंरामंप्रत्यगात् ॥ २८१ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ओजसाबलेननिरायुधंहंसंविधाय तस्यहंसस्यअनुजंडिंभिकंददर्श ॥ २८२ ॥ सआदौरामेणनिरायुधःकृतोयःसइत्यर्थः । हंसःपुनःकार्मुकंप्रगृह्य तंबलंरामंआससादप्रा
प । यदातदाकेशवःतंहंसं ॥ २८३ ॥ असौशिनेःसुतात्मजोपिपूर्वंडिंभिकेनविरथीकृतोपिसात्यकिरित्यर्थः । हंसकानुजंविहायरथांतरंअन्यरथंसमास्थितःआरूढःसन् अ
स्यडिंभिकस्यतातंप्रतिजगाम ॥ २८४ ॥ वयोगतःवृद्धःतयोःपिताब्रह्मदत्तःतेनवृष्णिनासात्यकिनासहयुयोध । सब्रह्मदत्तःसात्यकेःकंठकूबरेकंठोरःसंधौविद्यमाननिम्नप्रदे
शे॥२८५॥ मोहंमूर्छा । सुलब्धाप्राप्तासंज्ञायेनसतथा । समुत्थितःसात्यकिःअर्धचंद्रकंअर्धचंद्राकारबाणविशेषंआददे तूणादितिशेषः ॥ २८६ ॥ सात्यकिःतेनअर्धचं
द्रेणशुक्लाःश्वेतवर्णाःमूर्धजाःकेशाःयस्मिन्तत्तथा । तादृशंतस्यब्रह्मदत्तस्यशिरश्चकर्तअच्छिनत् । पुराअंबयाभीष्मेणब्रह्मदत्तस्यपाणिग्रहणकाले आहृतयाकाशिराजसुत

हलायुधो निरायुधं विधाय हंसमोजसा ॥ विकृष्य चापमागतं ददर्श तस्य चानुजं ॥ २८२ ॥ सहंसकस्तु कार्मुकं पुनः प्रगृह्य तं बलं ॥ यदाससाद केशवो न्यवारयत्तमोजसा ॥ २८३ ॥ शिनेः सुतात्मजोप्यसौ विहाय हंसकानुजं ॥ रथांतरं समास्थितो जगाम तातमस्य च ॥२८४॥ वयोगतः पिता तयोर्युयोध तेन वृष्णिना ॥ शरं च कंठकूबरे व्यसर्जयत्ससात्यकेः ॥ २८५ ॥ स सात्यकिर्दृढाहतो जगाम मोहमाशु च॥ सुलब्धसंज्ञ उत्थितस्समाददेर्धचंद्रकं ॥ २८६ ॥ स तेन तच्छिरो बली चकर्त शुक्लमूर्धजं॥यदंबयाभिकामितं पुरा पपात तत्क्षितौ॥ २८७ ॥ नदंश्चसात्यकिर्हरेर्जगामपार्श्वमुद्धतः ॥ बलोपि हंसकानुजं युयोध सेनयायुतं ॥ २८८ ॥ हरिस्तुहंसमुल्बणैः शरैः समर्दयन्बलं ॥ जघान तस्य सर्वशो न कश्चिदत्र शेषितः ॥ २८९॥ स एक एव केशवं महास्त्रमुक् ससारह ॥ निवार्य तानि सर्वशो हरिर्निजास्त्रमाददे ॥ २९० ॥ सवैष्णवास्त्रमुद्यतं निरीक्ष्य यानतो महीं ॥ गतः पराद्रवद्भयात्पपात यामुनोदके॥

या अंबयाअंबानाम्न्यायत्कामितंअपेक्षितंतच्छिरःक्षितौअपतत् । साल्वकामाहमितिअंबयायःपतित्वेनअपेक्षितःससाल्वःअपतदितिभावः ॥ २८७ ॥ नदन्सिंहनादं कुर्वन् ॥ २८८ ॥ हरिःहंसंसमर्दयन्पीडयामास । तस्यहंसस्यसर्वशःसर्वंबलंसेनांजघान । अत्रअस्मिन्युद्धेकश्चिदसुरःनशेषितः ॥ २८९ ॥ सहंसःएकएवमहास्त्राणि मुंचतीतिसतथातादृशःसन् केशवंससारह । हरिःसर्वशःसर्वाणितानिहंसमुक्तास्त्राणि ॥ २९० ॥ सहंसःयानतःरथात् महींगतःप्राप्तःसन् भयात्पराद्रवत् दुद्रुवे । यामुनोदकेयमुनासंबंधिजलेपपात ॥ २९१ ॥ ॥ ॥ ॥ ॥ ॥

प्रतीपकारिणः द्वेषकारिणःस्वयंहंति । एतानकृतोद्वाहराजपुत्रदुष्टस्त्रीद्यूतकितवाद्यवैष्णवान् अजीघनत् घातयाति परैरितिशेषः ॥ ११ ॥ विद्योपजीवनंविद्ययाजीवनंउ दरपूरणंयतः अतःधर्मंनहुषौयमनहुषौप्रति नोवाचप्रश्नोत्तरंनदत्तवान् ॥ १२ ॥ ननु अस्त्रयुद्धंधर्मंनमन्यतेइत्युक्तंतर्हि कथंद्रोणिनाअलंबुसेनचसह अस्त्रयुद्धंकृतवानित्य तआह । आज्ञयेति । हरेःकृष्णस्यअनुज्ञयैव अशामयत् परिहृतवान् । अदृश्योलंबुसोभग्नःपराजितः नतुहतः । अन्यत्रतुघटोत्कचेनहतइतिषड्विंशाध्यायेभिधानात् आज्ञयेत्यनुवर्तते ॥१३॥ हरिणाकिमर्थंआज्ञादत्तेत्यतआह । नहीति । द्रोणेःअश्वत्थाम्नोयुद्धविषयेततःअर्जुनात्सर्ववित्त्वंसर्वज्ञत्वंप्रदर्शयितुं आज्ञामदादित्यर्थः ॥१४॥

प्रतीपकारिणो हंति विष्णोर्वै तानजीघनत् ॥ न संशयं कदाप्येष धर्मज्ञानेपि वा करोत् ॥ ११ ॥ विद्योपजीवनं नैष चकारापद्यपि क्वचित् ॥ अतो न धर्मनहुषौ प्रत्युवाच कथं च न ॥१२॥ आज्ञयैव हरेर्द्रौणेरस्त्राण्यस्त्रैरशामयत् ॥ अदृश्योलंबुसो भग्नो नान्यत्र तु कथं च न ॥ १३ ॥ नह्यस्त्रयुद्धे सदृशो द्रौणेरस्त्यर्जुनादृते ॥ सर्ववित्त्वं ततो भीमे प्रदर्शयितुमीश्वरः ॥ अदादाज्ञामस्त्रयुद्धे तथैवालंबुसंप्रति ॥ १४ ॥ प्रत्यक्षीभूतदेवेषु बंधुज्येष्ठेषु वा नतिं ॥ मर्यादास्थितये शासद्भगवान्पुरुषोत्तमः ॥ १५॥ तत्रापि विष्णुमेवासौ नमेन्नान्यं कथं च न ॥ आज्ञयैवास्त्रदेवांश्च प्रेरयामास नार्थनात् ॥ १६ ॥ अन्वेनमेव तद्धर्मे कृष्णैका संस्थिता सदा ॥ धृतराष्ट्रादपि परं ततो नात्मार्थमग्रहीत् ॥ १७ ॥ नाशपद्धार्तराष्ट्रांश्च महापद्यपि सा ततः ॥ न वाचा मनसा वापि प्रतीपं केशवेचरत् ॥ १८ ॥ अन्ये भागवतत्वेपि छिन्नधर्माः क्वचित्क्वचित् ॥ १९ ॥ ॥ ॥

बंधुज्येष्ठेषुबांधवाश्चतेज्येष्ठाश्चतेषुकुंतीयुधिष्ठिरादिषु अशासतआशिक्षयदित्यर्थः ॥ १५ ॥ तत्रापिप्रत्यक्षीभूतदेवेषुबंधुज्येष्ठेष्वापिअस्त्रयुद्धेअस्त्रदेवान् अस्त्राभिमानिदेवाना ज्ञयैव भृत्यानिवप्रेरयामास नार्थनात्नप्रार्थनात् ॥ १६ ॥ एनमनुभीममनु तद्धर्मेभागवतधर्मेयतःअतःकरणात् श्वशुरादपिवरं स्वीकारयोग्यंश्वशुरादपि आत्मार्थेस्वार्थे ॥ १७ ॥ ततःभीमानुकूलधर्मवत्वात् ॥ १८ ॥ अन्येबलभद्राद्याःभागवतत्वेपिभगवद्भक्तत्वेसत्यपि ॥ १९ ॥ ॥ ॥ ॥

तदेवदर्शयति । स्यमंतकार्थेत्यादिना । कृष्णस्येतिकर्मणिषष्ठी । विमनाःविरुद्धमनाभवत् । अभवत् । अवमेनेतिरस्कृतवान् ॥ २० ॥ रुरुधुःप्रतिबंधंचक्रुः ॥ २१ ॥ कृष्णस्यसंमितंकृष्णेनसदृशंपार्थं अभिभेत् शंकितवान् ॥ २२ ॥ विदुरःअवतारंआगमनंनारोचयत् नतुतोष ॥ २३ ॥ करदानायकृष्णःकरंददात्विति कुलक्षयात् कुलक्षयकारणात् अवमेनेहीनंमेने ॥ २४ ॥ भीष्मःअवमेनेनिंदांकृतवानीतिभावः ॥ २५ ॥ कृष्णाभावेकृष्णहननेदेवाःमूलरूपेणापिदेवाअपिविरोधंचक्रिरे ॥ २६ ॥ ऋषिमानुषगंधर्वाजन्मजन्मांतरेस्थितादज्ञानादनाथज्ञानात्सदाप्रतिजन्मन्यवजानंतिअवज्ञांकुर्वंति । अतस्तस्मात्परंऋष्याद्याःछिन्नधर्माइतिकिंवक्तव्याः सिद्धत्वाद्वक्त

स्यमंतकार्थे रामोपि कृष्णस्य विमना भवत् ॥ अवमेनेऽर्जुनः कृष्णं विप्रस्य शिशुरक्षणे ॥ २० ॥ प्रद्युम्न उद्धवः सांबोऽनिरुद्धाद्याश्च सर्वशः ॥ हरेरिष्टं सुभद्रायाः फल्गुने दानमंजसा ॥ ज्ञात्वापिरुरुधुः सम्यक् सात्यकिः कृष्णसंमितं ॥ २१ ॥ कदाचिन्मन्यते पार्थं धर्मजोपि नरं हरिं ॥ मत्वाभिभेज्जरासंधं वधे कृष्णमुदीरितुं ॥२२॥ बंधनं शंकमानो हि कृष्णस्य विदुरोपि तु ॥ कौरवेयसभामध्ये नावतारमरोचयत् ॥ २३ ॥ नकुलः करदानाय प्रेषयामास केशवे ॥ अवमेने हरेर्बुद्धिं सहदेवः कुलक्षयात् ॥ २४ ॥ देवकीवसुदेवाद्याः मेनिरे मानुषं हरिं ॥ भीष्मस्तु भार्गवं राममवमेने युयोध च ॥२५॥ द्रोणकर्णद्रोणिकृपाः कृष्णाभावे मनो दधुः ॥ देवाः शिवाद्या अपि तु विरोधं चक्रिरे क्वचित् ॥ २६ ॥ ऋषिमानुषगंधर्वा वक्तव्याः किमतः परं ॥ जन्मजन्मांतराज्ञानादवजानंति यत्सदा ॥ २७ ॥ तस्मादेको वायुरेव धर्मे भागवते स्थितः ॥ लक्ष्मीः सरस्वती चेति परशुक्लत्रयं स्मृतं ॥ ॥ २८ ॥ सर्वमेतच्च कथितं तत्र तत्रामितात्मना ॥ व्यासेनैव पुराणेषु भारते तु स्वसंविदा ॥ २९ ॥ ॥ ॥

व्याएवेत्यर्थः ॥२७॥ उपसंहरति । तस्मादिति । वायुरेवधर्मेस्थितः तथालक्ष्मीसरस्वतीचास्थितेइतिएतत्त्रयंपरशुक्लत्रयंस्मृतं ॥ भगवद्धर्मव्यभिचाराभावे नातिशुद्धात्रयःस्मृताइतिभावः ॥ २८ ॥ इदंस्वकपोलकल्पितंनेत्याह । सर्वमिति । स्वसंविदास्वरूपज्ञानेनव्यासेनपुराणेषुभारतेच तत्रतत्ररामार्जुनादिप्रसंगेएतद्रामादीनांछिन्नधर्मत्वंकथितमितियोजना ॥ २९ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

सर्वेष्वप्यधिकोर्जुनइत्ययुक्तिप्राप्तार्जुनाधिक्यशंकांपरिहर्तुंभीमाधिक्यमुक्त्वा तदुपसंहृत्यप्रकृतमनुसरति । यदेत्यादिना । भारद्वाजोद्रोणःएतान्कुमारान्दर्शयामासेत्यर्थः ॥ ३० ॥ अनुजज्ञेआज्ञापयामास ॥३१॥ श्रमंविद्याभ्यासम् ॥ ३२ ॥ आत्तमहास्त्रवित्प्राप्तमहास्त्रज्ञः ॥ ३३॥ माशकेमशकस्यपादेपादमित्यर्थः । पक्षिणःपक्ष्मेअक्षिलोमनि । पक्ष्मपत्रेचसूक्ष्मांशेकिंजल्केनेत्रलोमनीत्यमरः॥ ३४ ॥ राजन्यसंसदिराजन्यानां क्षत्रियाणांसंसदिसभायां ॥ ३५ ॥ असहन्असहमानः॥ ३६ ॥ कर्णा

यदा ते सर्वशस्त्रास्त्रवेदिनो राजपुत्रकाः ॥ बभूवूरंगमध्ये तान् भारद्वाजोप्यदर्शयत् ॥ ३० ॥ रक्तचंदनसत्पुष्पवस्त्रशस्त्रगुडोदनैः ॥ संपूज्य भार्गवं राममनुजज्ञे कुमारकान् ॥ ३१ ॥ ते भीष्मद्रोणविदुरगांधारीधृतराष्ट्रकान् ॥ सराजमंडलान्नत्वा कुंती चादर्शयच्छ्रमं ॥ ३२॥ सर्वैः प्रदर्शितेस्त्रे तु द्रोणादात्तमहास्त्रवित् ॥ द्रौणिरस्त्राण्यमेयानि दर्शयामास चाधिकं ॥ ३३ ॥ ततोप्यतितरां पार्थो दिव्यास्त्राणि व्यदर्शयत्॥ अविध्यन्माशके पादे पक्षिणः पक्ष्म एव च ॥३४॥ एवमादीनि चित्राणि बहुन्येष व्यदर्शयत् ॥ तदैव कर्ण आगत्य रामोपात्तास्त्रसंपदं ॥ दर्शयन्नाधिकः पार्थादभूद्राजन्यसंसदि ॥ ३५ ॥ कुंती निजसुतं ज्ञात्वा लज्जया नावदच्च तं ॥ पार्थोऽसहंस्तं युद्धाय आह्वयामास संसदि ॥ ३६ ॥ रणायाक्षत्रियाह्वानं जानन्धर्मप्रतीपकं॥ भीमो निवार्य बीभत्सुं कर्णायादात्प्रतोदकं ॥ ३७॥ अक्षत्रसंस्कारयुतो जातोपि क्षत्रिये कुले॥ न क्षत्रियो हि भवति यथा व्रात्यो द्विजोत्तमः ॥३८॥ निरुत्तरे कृते कर्णे भीमेनैव सुयोधनः॥अभ्यषेचयदंगेषु राजानं पित्रनुज्ञया॥३९॥धृतराष्ट्रः पक्षपातात्पुत्रस्यानुवशोऽभवत् ४०

ययुद्धार्थंप्रतोदकंतोत्रंअदात् । सूतजातेस्तवरथनियमनमेवधर्मः।नक्षत्रियैःसहयुद्धमितिसंज्ञयाज्ञापयन् अश्वताडनांगंतोत्रंअदादितिभावः॥३७॥क्षत्रियकन्यकायांजातत्वात् कथंअस्यसूतत्वमित्यतआह । अक्षत्रेति । यथाव्रात्यःउपनयनादिसंस्कारहीनःद्विजोत्तमःक्षत्रियादिःतस्मादुत्तमोब्राह्मणःसनभवति । ब्राह्मणकुलेजातोपि तथाक्षत्रियसंस्कारहीनःक्षत्रियो नभवतीतिभावः ॥ ३८ ॥ राजानंकृत्वा ॥ ३९ ॥ पक्षपातात् पुत्रपक्षपातात् पुत्रस्यवशेअन्वभवत् पुत्राधीनोभवदित्यर्थः ॥ ४० ॥

विप्रेभ्योहेमवर्षणाद्वृषा कर्णः । वृशाकर्णमहेंद्रयोरितिविश्वः । ब्राह्मणःसत्ववादीचतपस्वीनियतव्रतः । रिपुष्वपिदयावांश्चतस्मात्कर्णोवृषास्मृतइतिवचनाद्वावृषा तस्यकर्ण स्य ॥ ४१ ॥ छलात्व्याजेनगुर्वीगुर्व्यौ संरंभात्कोपात् ॥४२ ॥ आश्रयान्निमित्तात् ॥ ४३ ॥ तदेवविवृणोति । देवेति । आसुराःअसुरानुकूलाः ॥ ४४ ॥ ४५ ॥

अभिषिक्ते तदा कर्णे प्रायादधिरथः पिता ॥ सर्वराजसदोमध्ये ववंदे तं वृषा तदा ॥ तुतुषुः कर्मणा तस्य संतः सर्वे समागताः ॥ ४१ ॥ भीमदुर्योधनौ तत्र शिक्षासंदर्शनच्छलात् ॥ समादाय गदे गुर्वी संरंभादभ्युदीयतुः ॥४२॥ देवासुरमनुष्यादि जगदे तच्चराचरं ॥ सर्वं तदा द्विधाभूतं भीमदुर्योधनाश्रयात् ॥ ४३ ॥ देवा देवानुगाश्चैव भीम मेव समाश्रिताः ॥ असुरा आसुराश्चैव दुर्योधनसमाश्रिताः ॥ ४४ ॥ द्विधाभूता मनुष्याश्च देवासुरविभेदतः ॥ जय भीम महाबाहो जयदुर्योधनेति च ॥४५॥ हुंकारांश्चैव फट्कारांश्चक्रुर्देवासुरा अपि ॥ ४६ ॥ दृष्ट्वा जग त्सुसंरब्धं द्रोणोथ द्विजसत्तमः ॥ नेदं जगद्विनश्येत भीमदुर्योधनाश्रयात् ॥ ४७॥ इति पुत्रेण तौ वीरौ न्यवार यदरिंदमौ ॥ स्वकीयायां स्वकीयायां योग्यतायां न तु क्वचित् ॥ युवयोः सम इत्युक्त्वा द्रौणिरेतौ न्यवारयत् ॥ ॥ ४८ ॥ द्रोणाज्ञया वारितौ तौ ययतुः स्वं स्वमालयं ॥ ४९ ॥ सुरासुरान्सुसंरब्धान् कालेन द्रक्ष्यथेति च ॥ ब्रह्मा निवार्य ससुरो ययौ सेशः स्वमालयं ॥ ५० ॥ कर्णं हस्ते प्रगृह्यैव धार्तराष्ट्रो गृहं ययौ ॥ पार्थं हस्ते प्र गृह्यैव भीमः प्रायात्स्वमालयं ॥ ५१ ॥ पार्थेन कर्णो हंतव्य इत्यासीद्भीमनिश्चयः ॥ वैपरीत्येन तस्यासीद्दुर्योध नविनिश्चयः ॥ ५२ ॥ तदर्थं नीतिमतुलां चक्रतुस्तावुभावपि ॥ ५३ ॥ ॥ ॥

॥ ४६ ॥ सुसंरब्धंकोपयुक्तं ॥४७॥ क्वचित्स्वकीयायांस्वकीयायांयुवयोःसमोन॥४८॥ आलयं ॥४९॥ कालेनद्रक्ष्यथजयपराजयावितिशेषः । सेशःसरुद्रः ॥५०॥ पार्थं अर्जुनम् ॥ ५१ ॥ तस्यभीमनिश्चयस्यवैपरीत्येनकर्णेनार्जुनोहंतव्यः ॥ ५२ ॥ तावुभौभीमदुर्योधनौ तदर्थंकर्णार्जुनयोर्वधार्थम् ॥ ५३ ॥ ॥ ॥

उद्योगोयत्नःअन्यथाभीमोद्योगवैपरीत्येन ॥ ५४ ॥ भीमार्थंभीमप्रियार्थंसंग्रहेणसंग्रहणात् ॥ ५५ ॥ सुरेश्वरः पूर्वानुतापेन वालिजन्मनिस्ववधदुःखात् तदर्थमात्मनः परिग्रहार्थंतस्मात्तथापरिपालनं ॥ ५६ ॥ एतौकर्णपार्थौग्लहौआसतुः द्यूतेदेयद्रव्यरूपौबभूवतुः ॥ ५७ ॥ दक्षिणार्थंगुरुदाक्षिणार्थं दक्षिणायामितिपाठे दक्षिणावि



तथोत्कर्षे फल्गुनस्य यशसो विजयस्य च ॥ उद्योग आसीद्भीमस्य धार्तराष्ट्रस्य चान्यथा ॥५४॥ भीमार्थं केशवो न्ये च देवाः फल्गुनपक्षिणः ॥ आसन्यथैव रामाद्याः संग्रहेण हनूमतः ॥५५॥ सुराः सुग्रीवपक्षस्थाः पूर्वमासंस्त थैव हि ॥ तदर्थमेव भीमस्य ह्यनुजत्वं सुरेश्वरः ॥५६॥ आप पूर्वानुतापेन तेन भीमस्तथाकरोत् ॥ दुर्योधनार्थं कर्णस्य पक्षिणो दैत्यदानवाः ॥ आसुः सर्वेग्लहावेतावासतुः कर्णफल्गुनौ ॥५७॥ अथ पृष्टो दक्षिणार्थं द्रोण आ ह कुमारकान् ॥५८॥ बध्द्वा पांचालराजानं दत्तेत्यूचुस्तथेति ते॥ ते धार्तराष्ट्राः कर्णेन सहिताः पांडवा अपि ॥ ययुर्द्रोणेन सहिताः पांचालनगरं प्रति॥ ५९ ॥ अथाह भीमः सामर्थ्यविवेकाभीप्सया गुरुम् ॥ ६० ॥ गर्व एष कुमाराणामनिवार्यो द्विजोत्तम ॥ गच्छंत्वेतेग्रतो नैषां वशगो द्रुपदो भवेत् ॥ निवृत्तेष्वकृतार्थेषु वयं बध्द्वा रिपुं तव ॥६१॥ आनयामो न संदेह इति तस्थौ ससोदरः ॥६२॥ सद्रोणकेषु पार्थेषु स्थितेष्वन्ये ससूतजाः ॥ ययुरात्तप्र हरणाः पांचालांतःपुरं द्रुतं ॥६३॥ कुमारान्ग्रहणेप्सूंस्तानुपयातानुदीक्ष्य सः॥ अक्षौहिणीत्रितययुङ्निःसृतो द्रुप दो ग्रहात् ॥६४॥ ते शरैरभिवर्षंतः परिवार्य कुमारकान् ॥ अर्दयामासुरुद्वृत्तान् स्त्रियो बालाश्च सर्वशः ॥६५॥

षये ॥ ५८ ॥ पांचालनगरंद्रुपदपुरं ॥ ५९ ॥ सामर्थ्यविवेकाभीप्सया शक्ताशक्तविवेकज्ञानेच्छया ॥ ६० ॥ अग्रतःपुरतःअकृतार्थेषुअकृतकार्येषु निवृत्तेषुसत्सु परावृत्तेषु ॥ ६१ ॥ ६२ ॥ अन्येदुर्योधनादयःआत्तप्रहरणाःगृहीतायुधाः ॥ ६३ ॥ ग्रहणेप्सून्स्वग्रहणेच्छून् ॥ ६४ ॥ तेपांचालाःउद्वृत्तान्उद्धतान् परिवार्यपरितः आवृत्य । अर्दयामासुःपीडयामासुः ॥ ६५ ॥ ॥ ॥ ॥ ॥ ॥

स्त्रियोबालाश्च अर्दयामासुः । हर्म्यसंस्थाः उच्चागारस्थाग्लावभिःशिलाभिः अत्यर्थंअतिशयेन । एधितान्वर्धितान् ॥ ६६ ॥ ननु कर्णादीन्कथंअर्दयामासुरित्यतआह । द्रुपदस्येति । हियस्मात्पुरमुपनगरसमीपे आयोजनात् योजनपर्यंतं ॥ ६७ ॥ तेनवरेणैव ॥ ६८ ॥ अनुद्रुताःपृष्ठतोविद्राविताः वाशंतःवाश्यमानाःशब्दंकुर्वतःप्रहरतां युद्धंकुर्वतां ॥ ६९ ॥ पुरःपूर्वंआत्तशरासनःधृतकार्मुकः ॥ ७० ॥ तमनुभीममनु नरयभीमस्यचक्रयोःरथचक्रयोःसमीपेनजग्मतुरितिशेषः निरीक्षकःद्रष्टासन् ॥ ७१ ॥

हर्म्यसंस्थाः स्त्रियो बाला ग्लावभिर्मुसलैरपि ॥ अत्यर्थमर्दयामासुः कुमारान्सुसुखैधितान् ॥ ६६ ॥ द्रुपदस्य वरो ह्यस्ति सूर्यदत्तस्तपोबलात् ॥ आयोजनात्पुरमुप न त्वां जेष्यति कश्चन ॥ ६७ ॥ इति तेन वरेणैव सुखसंवर्धिताश्च ते ॥ भग्नाः कुमारा आवृत्य दुद्रुवुर्यत्र पांडवाः ॥ ६८ ॥ स्त्रीबालवृद्धसहितैः पांचालैरप्यनुद्रुताः ॥ भीमार्जुनेति वाशंतो ययुर्यत्र स्म पांडवाः ॥ ६९ ॥ तान्प्रभग्नान् समालोक्य भीमः प्रहरतां वरः ॥ आरुरोह रथं वीरः पुर आत्तशरासनः ॥ ७० ॥ तमन्वथार्देद्रसूनुर्यमौ तस्यैव चक्रयोः ॥ युधिष्ठिरस्तुद्रोणेन सह तस्थौ निरीक्षकः ॥ ७१ ॥ आयांतमग्रतो दृष्ट्वा भीममात्तशरासनं ॥ दुद्रुवुः सर्वपांचालाः विविशुः पुरमेवच ॥ ७२ ॥ द्रुपदस्त्वभ्ययाद्भीमं सपुत्रः सह सेनया ॥ चक्ररक्षौ तु तस्यास्तां युधामन्यूत्तमौजसौ ॥ ७३ ॥ धात्रर्यमावेशयुतौ विश्वावसुपरावसू ॥ सुतौ तस्य महावीर्यौ सत्यजित्पृष्ठतोऽभवत् ॥ ७४ ॥ स मित्रांशयुतो वीरश्चित्रसेनो महाबलः ॥ अग्रतस्तु शिखंड्यागाद्रथोदारः शरान् क्षिपन् ॥ ७५ ॥ ॥ ॥ ॥ ॥

आयांतमभियांतं ॥ ७२ ॥ ससुतोद्रुपदोभ्ययात् ससुतइत्येतद्विवृणोति । चक्रेति । युधामन्युश्च उत्तमोजाश्चेतिद्वौपुत्रौचक्ररक्षकौरथचक्ररक्षकौ ॥ ७३ ॥ तौपूर्वंकाविस्यतआह । धात्रेति । विश्वावसुपरावसूतदाख्यगंधर्वौ धात्रर्यमावेशयुतौ द्वादशादित्येषुमध्येधात्रर्यम्णोःआवेशयुतौ तस्यद्रुपदस्यसुतौसत्यजित् सत्यजिन्नामासुतः ॥ ७४ ॥ सत्यजित्पूर्वंचित्रसेनाख्योगंधर्वः मित्रांशयुतः मित्राख्यादित्यांशयुक्तः रथोदारःरथेनउत्कृष्टः ॥ ७५ ॥ ॥ ॥ ॥ ॥ ॥

जनमेजयाख्यसुतःतमनुशिखंडिनमनु यःपूर्वंचित्ररथाख्योगंधर्वः सत्वष्टृनामकादित्यावेशसंयुक्तोजनमेजयः ॥७६॥ तावुभौशिखंडिजनमेजयौ ॥७७॥ एनंभीमं ॥७८॥ हस्तप्राप्तंगृहीतुमितिशेषः ॥७९॥ कुतोनाग्रहीदित्यतआह । गुर्वर्थमिति । गुर्वर्थंगुरुप्रयोजनमुद्दिश्यकृतमितिशेषः । ऋतांसत्यांकर्तुं कर्णस्यापिमानभंगायपार्थमेवन्ययोजयत् । पांचालंगृहीतुमितिशेषः । क्षिपतोवर्षतःतंद्रुपदं ॥८०॥ अभिपेदिवान् प्राप पर्यवारयत् पार्थस्वमध्यरथंकृत्वास्थितमितिभावः ॥ ८१ ॥ तरसावेगेन ॥ ८२ ॥

जनमेजयस्तमन्वेव पूर्वं चित्ररथो हि यः ॥ त्वष्टुरावेशसंयुक्तः स शरानभ्यवर्षत ॥ ७६ ॥ तावुभौ विरथौ कृत्वा विचापौ च विवर्मकौ ॥ भीमो जघान तां सेनां सवाजिरथकुंजरां ॥ ७७ ॥ अथैनं शरवर्षेण युधामन्यूत्तमौजसौ ॥ अभीयतुस्तौ विरथौ चक्रे भीमो निरायुधौ ॥७८॥ हस्तप्राप्तं च पांचालं नाग्रहीत्स वृकोदरः ॥ गुर्वर्थमर्जुनस्योर्वीं प्रतिज्ञां कर्तुमप्यृतां ॥ ७९ ॥ मानभंगाय कर्णस्य पार्थमेव न्ययोजयत् ॥ स शरान्क्षिपतस्तस्य पांचालस्यार्जुनो द्रुतं ॥ पुप्लुवे स्यंदने चापं छित्वा तं चाग्रहीत्क्षणात् ॥ ८० ॥ सिंहो मृगमिवादाय स्वरथं चाभिपेदिवान् ॥ अथ प्रकुपितं सैन्यं फल्गुनं पर्यवारयत् ॥ ८१ ॥ जघान भीमस्तरसा तत्सैन्यं शरवृष्टिभिः ॥ अथ सत्यजिदभ्यागात्पार्थं मुंचन् शरान्बहून् ॥ ८२ ॥ तमर्जुनः क्षणेनैव चक्रे विरथकार्मुकं ॥ घ्नंतं भीमं पुनः सैन्यमर्जुनः प्राह मा भवान् ॥ ८३ ॥ सेनामर्हति राज्ञोस्य वीर हंतुमशेषतः ॥ संबंधयोग्यस्तातस्य सखा यन्नः सुधार्मिकः ॥८४॥ नेष्याम एनमेवातो गुरोर्वचनगौरवात् ॥ स्नेहपाशं ततश्चक्रे बीभत्सौ द्रुपदोधिकं ॥ ८५ ॥ ततः सेनां विहायैव भीमो बीभत्सुमन्वगात् ॥ मुक्ता कथंचिद्भीमास्यात्सा सेना दुद्रुवे भयात् ॥ ८६ ॥ ॥ ॥ ॥

कार्मुकंधनुःघ्नंतंसंहरंतं ॥ ८३ ॥ अशेषतःसर्वान्हंतुंभवान्नार्हति । तत्रहेतुःसंबंधीति । तातस्यपांडोःसखा । संबंधीकुरुवीराणांद्रुपदोराजसत्तम । मावधीस्तद्बलंभीमगुरुदानंप्रदीयतामित्यत्रभारतेसंबंधीतिकथमुक्तं संबंधस्यजातत्वादित्यतोवाह । संबंधयोग्यइति । नःअस्माकंसंबंधयोग्यःभाविसंबंधंहृदिविधायेदमुक्तं सुधार्मिकश्चयद्यतः अतःकारणात् एनंद्रुपदंनेष्यामः । नयनमपिगुरोर्वचनगौरवादलंघ्यत्वादित्यर्थः । ततःकारणात् बीभत्सौअर्जुने ॥ ८४ ॥ ८५ ॥ भीमास्यात् भीममुखात् ॥ ८६ ॥

आवयोःसख्यमस्तिनवेतिपप्रच्छ ॥ ८७ ॥ आंगिरसांवरंद्रोणं अक्षयं ॥ ८८ ॥ ह्रियतःअराज्ञःराजपदवीरहितस्यममतवसख्यंन भवेत् अतःइदंतवानयनंकृतम् ॥८९॥ अभीप्सताइच्छता अतःसख्यार्थमेवसखित्वार्थं त्वद्राज्यार्धःतवराज्यस्यार्धभागःहृतः । समांशस्याविवक्षितत्वादर्धइतिपुल्लिंगनिर्देशः ॥ ९० ॥ उत्तरेउत्तरकूले अहंराजाभवामि ॥ ९१ ॥ अमुतःद्रुपदात्सकाशात् गृह्यगृहीत्वासुखंयथाभवतितथा ॥९२॥ ननु नायं ब्राह्मणधर्मो यद्युद्धमित्युक्तत्वात् द्रोणःकथंयुद्धमकार्षीदित्यत आह । ब्राह्मण्ये

द्रुपदं स्थापयामासाथार्जुनो द्रोणसन्निधौ ॥ पप्रच्छैनं तदा द्रोणः सख्यमस्त्युत नेति वा ॥ ८७ ॥ अस्तीदानीमिति प्राह द्रुपदोंगिरसां वरं ॥ अथाह द्रुपदं द्रोणः सख्यमिच्छेऽक्षयं तव ॥ ८८ ॥ नह्यराज्ञो भवेत्सख्यं तवेतीदं कृतं मया ॥ न विप्रधर्मो यद्युद्धमतस्त्वं न मया धृतः ॥ ८९ ॥ शिष्यैरेतत्कारितं मे तव सख्यमभीप्सता ॥ अतः सख्यार्थमेवाद्य त्वद्राज्यार्धो हतो मया ॥ ९० ॥ गंगाया दक्षिणे कूले त्वं राजैवोत्तरे त्वहं ॥ नह्यराजत्व एकस्य सख्यं स्यादावयोः सखे ॥ ९१ ॥ इत्युक्त्वोन्मुच्य तं द्रोणो राज्यार्धं गृह्य चामुतः ॥ ययौ शिष्यैर्नागपुरं न्यवसत्सुखमत्र च ॥ ९२ ॥ ब्राह्मण्यत्यागभीरुः स नागृह्णद्धनुरप्यसौ ॥ धार्तराष्ट्रैस्तु भीमस्य भयात्पादौ प्रणम्य च ॥ ९३ ॥ शरणार्थं याचितत्वात्सपुत्रो युयुधे परैः ॥ एवं हरीच्छयैवासौ क्षात्रं धर्ममुपेयिवान् ॥ ९४ ॥ द्रुपदस्तु दिवारात्रं तप्यमानः पराभवात् ॥ भीमार्जुनबलं दृष्ट्वा चैच्छत्पांडवसंश्रयं ॥ ९५ ॥ संमंत्रीत्यर्जुनत्रचाश्वि कीर्षुः सत्यमेव तत् ॥ मार्दवंचार्जुने दृष्ट्वा सुतोमैच्छत्तदर्थतः ॥ ९६ ॥ पुत्रं चद्रोणहंतारमिच्छन्विप्रवरौ ययौ ॥ याजोपयाजावानीयाथार्बुदेन गवां नृपः ॥ ९७ ॥ ॥ ॥ ॥

ति । धनुर्नाग्रहीत् नागृण्हत् तथापिभीमस्य भयान्निमित्तात् धार्तराष्ट्रैःशरणार्थंरक्षणार्थं पादौप्रणम्ययाचितत्वात् असौद्रोणःपरैःपांडवैःयुयुधइत्यर्थः ॥ ९३ ॥ शमाशिष्योद्रोणःअवैष्णवरक्षार्थंकथंपरधर्मंप्राप्तवानित्यतआह । एवमिति । हरीच्छयैवक्षात्रधर्मंक्षत्रवृत्तिंउपेयिवान् ॥ ९४ ॥ पराभवान्निमितात् तदर्थतःअर्जुनार्थं ॥ ९५॥९६ ॥ द्रोणहंतारंपुत्रमिच्छन् इत्युभयमिच्छन् याजोपयाजौययौ । अथतत्प्राप्त्यनंतरं । गवामर्बुदेनकरणेनतावानीयस्वगृहमितिशेषः ॥ ९७ ॥ ॥

द्विजाभ्यांद्रुपदात्सुतलब्ध्यर्थंसुतश्चसुताचसुतौ तयोःप्राप्त्यर्थंमाहुताद्रुपदभार्यापुत्रोत्पादनार्थंमदपेक्षाअस्तीतिअहंकारादव्यलंबयत् कालक्षेपमकरोत् ।। ९८ ।। अवज्ञायति रस्कृत्य तत्पुत्रार्थंद्रुपदस्यपुत्रार्थं वैष्णवाभ्यांविष्णुदेवताभ्यां ।। ९९ ।। १०० ।। नदन्सिंहनादंकुर्वन् ।। १०१ ।। मुनिभिर्द्रुपदेनापिधृष्टद्युम्नइतीरितः धृष्टद्युम्नइतिनामाकिम र्थमभूदित्यतआह । धृष्टत्वादिति । धृष्टत्वाद्धार्ष्ट्यत्वात् धृष्टः द्योतनत्वात् प्रकाशमानत्वात्द्युम्नः धृष्टश्चासौद्युम्नश्चेतिधृष्टद्युम्नःसर्ववेदार्थंभगवत्तत्वंचजानातीति ।। १०२ ।। साक्षात्समुत्थिता प्रत्यक्षतयासमुत्थिता । साक्षात्प्रत्यक्षमुख्ययोरित्यमरः । कथंभारतीनामेत्यतोमुख्यप्राणभार्यात्वादितिवक्तुं मुख्यप्राणेभरतशब्दंनिर्वक्ति । प्राणोहीत्या

चकारेष्टिं च तद्भार्या द्विजाभ्यामत्रचाहुता ॥ द्रुपदात्सुतलब्ध्यर्थं साहंकाराद्व्यलंबयत् ॥ ९८ ॥ किमेतयेत्यवज्ञाय तावुभौ विप्रसत्तमौ ॥ अजुहुतां तत्पुत्रार्थं पत्न्या प्राश्यं हविस्तदा ॥ ९९ ॥ हुते हविषि मंत्राभ्यां वैष्णवाभ्यां तदैव हि ॥ दीप्तांगारनिभो वन्हिकुंडमध्यात्समुत्थितः ॥ १०० ॥ किरीटी कुंडली दीप्तो हेममाली वरासिमान् ॥ रथेनादित्यवर्णेन नदन्द्रुपदमाद्रवत् ॥ १०१ ॥ धृष्टत्वाद्द्योतनत्वाच्च धृष्टद्युम्न इतीरितः ॥ मुनिभिर्द्रुपदेनापि सर्ववेदार्थ तत्ववित् ॥ १०२ ॥ अन्वेनं भारती साक्षाद्वेदिमध्यात्समुत्थिता ॥ प्राणो हि भरतो नाम सर्वस्य भरणाच्छ्रुतः ॥ ॥ १०३ ॥ तद्भार्या भारतीनाम वेदरूपा सरस्वती ॥ शं रूपमाश्रिता वायुं श्रीरित्येव च कीर्तिता ॥ १०४ ॥ आ वेशयुक्ता शच्याश्च श्यामलायास्तथोषसः ॥ ताश्चेंद्रधर्मनासत्यसंश्रयाच्छ्रिय ईरिताः ॥ १०५ ॥ सा कृष्णा नामत श्चासीदुत्कृष्टत्वाद्धि योषितां ॥ कृष्णा सा वर्णतश्चासीदुत्कृष्टा नंदनी च सा ॥ १०६ ॥ ॥

दिना । भरणाद्रक्षणात् नामांतरमाह । सरस्वतीति । तत्कुतः यतोवेदरूपावेदवाचामभिमानिनी । अतएवसरस्वतीतिभावः । क्वचिद्भारतीश्रीरित्युच्यते । तदर्थमाह । शमि ति । शंरूपंसुखरूपं ।। १०३ ।। १०४ ।। साकिंविशिष्टेत्यतआह । आवेशेति । नकेवलंभारत्यैवश्रीनाम्नी । किंतुशच्याद्याअपीत्याह । ताश्चेति । ताःशचीशामलोषसः इंद्रयमाश्विसंश्रयाच्छ्रियईरिताः ।। १०५ ।। भारत्यावतारनामार्थमाह सेति । साद्रौपदीयोषितांमध्येउत्कृष्टत्वात्नामतःकृष्णेत्यासीत् । कृष्णवर्णतश्चकृष्णेत्यासीत् । उत्कृष्टानंदनीतिहेतुगर्भविशेषणं । कृषशब्दस्यउत्कृष्टत्वात् णशब्दस्यआनंदवाचकत्वात् नाम्नाकृष्णेत्यासीत् ।। १०६ ।। ॥ ॥ ॥

उत्पत्तितएवेतिसर्वत्रसंबध्यते ॥ १०७ ॥ उमैवकृष्णेत्युक्तेर्गतिमाह । उमेति । शच्यादिभ्योनितरांउमयासह सर्वव्यवहारेषु भारत्याअवस्थानादितिभावः ॥ १०८ ॥ भारत्यांउमावेशेकारणमाह । पूर्वमित्यादिना । ताःदेव्यःशच्याद्याःब्रह्मणःपश्यतःसतः यदाअधिकंविलासंदर्शयामासुः । तदाब्रह्माइतिशशाप । मानुषींयोनिंआप्स्यथआप्नुत । तत्रमनुष्यजन्मनिअन्यगाःअन्यपुरुषगामिन्यश्चभवतेतिशप्ताः ॥१०९ ॥ वयमन्यगात्वेकंउत्तमंपुरुषंगच्छामइतिविचार्य वायुमेवगमिष्यामइतिनिश्चित्यभारतीमेत्य अस्यैसर्वस्वापराधंशापप्रकारंचनिवेद्यविज्ञाप्य शुश्रूषित्वापरिचर्यांकृत्वा ॥ ११० ॥ १११ ॥ देविनोस्माभिःमानुषंप्राप्यंअन्यगात्वंचसर्वथाप्राप्यं सर्वथेत्यनेनशापस्या

उत्पत्तितश्च सर्वज्ञा सर्वाभरणभूषिता ॥ संप्राप्तयौवनैवासीदजरा लोकसुंदरी ॥१०७॥ उमांशयुक्ता नितरां सर्व लक्षणसंयुता ॥ पूर्वं ह्युमा च देव्यस्ताः कदाचिद्भर्तृभिर्युताः ॥१०८॥ विलासं दर्शयामासुर्ब्रह्मणः पश्यतोऽधिकं ॥ शशाप तास्तदा ब्रह्मा मानुषीं योनिमाप्स्यथ ॥ १०९ ॥ तत्रान्यगाश्च भवतेत्येवं शप्ताः सुरांगनाः ॥ विचार्य भारतीमेत्य सर्वमस्यै निवेद्य च॥ ११० ॥ सहस्रवत्सरं चैनां शुश्रूषित्वा बभाषिरे ॥ १११ ॥ देविनो मानुषं प्राप्यमन्यगात्वं च सर्वथा ॥ तत्रापि मारुतादन्यं न स्पृशेम कथंचन ॥ ११२ ॥ ब्रह्मणैव च शप्तास्मः पूर्वं चान्यत्र लीलया ॥ एकदेहत्वमाप्स्यैनं यदा वंचयितुं गताः ॥ ११३ ॥ एकदेहा मानुषत्वमाप्स्यथ त्रिश उद्धताः॥ त्रिशो मद्वंचनायेता इति तेनोदिता वयं ॥ ११४ ॥ अतस्त्वय्येकदेहत्वमिच्छामो देवि जन्मसु ॥ चतुर्ष्वपि यतोस्माकं शापद्वयनिमित्ततः ॥ ११५ ॥ ॥ ॥ ॥

निवार्यत्वमुक्तं । नस्पृशेमनव्रजामः ॥ ११२ ॥ पूर्वंअन्यत्रस्थलांतरेइतिशप्तास्मः ॥ ११३ ॥ हेउद्धताः त्रिशःत्रिवारंमद्वंचनायइताःप्राप्ताः त्रिशःत्रिवारंएकदेहाःसत्यो मानुषत्वंआप्स्यथआप्नुतइतितेनब्रह्मणावयंउदिताः ॥ ११४ ॥ अस्माकंशापद्वयनिमित्ततःएकदेहाःत्रिशोमानुषत्वमवाप्स्यथेत्येकःशापः तस्मिन्शापेजन्मत्रयंमानुषीं योनिमाप्स्यथ अन्यगाश्चभवतेत्येकःशापः तस्मिन्शापेएकंमानुषंजन्मएवंशापद्वयनिमित्ततः चतुर्जन्मभवेद्यतःअतःदेहेपिचतुर्षुजन्मसुमध्येजन्मत्रयेत्वयासहएकदेहत्वमिच्छामइत्यन्वयः । एवंचतुर्ष्वपिजन्मसु एकदेहत्वंशच्यादिभिर्वांछितमितिनभ्रमितव्यं । तथा चएकदेहत्वेनत्रिजन्मसुमध्येएकतमेअन्यगात्वं भविष्यतीतिभावः ११५

मयाएकदेहत्वेकिंप्रयोजनमित्यतस्तदाहुरित्यतआह । त्वमिति । हरेर्नित्यएवायंनियमः यतः मारुतादन्यस्त्वांनव्रजेदिति अतःअन्यगात्वेपिमारुतगामित्वमेवास्माकं त्वया एकदेहत्वप्रयोजनमितिभावः ॥ ११६ ॥ तत्रविप्रकन्याजन्मनिपार्वतीयुताश्चतस्रःशच्याद्याः ॥ ११७ ॥ तद्देहस्थातस्मिन्नेवदेहेस्थिता धृतव्रताव्रतनिष्ठाभारतीकर्मैक्यार्थंपार्वत्यादीनां रुद्रपरिचर्यादिकर्मणःस्वकृतकर्मणश्च एकविषयत्वार्थंअन्यथाविरुद्धकर्मत्वेन एकशरीरस्थानांतदुन्मथनादिप्रसंगादितिभावः । रुद्रदेहस्थितंरुद्रनामानंहरिंतपसातोषयामासेत्यन्वयः । ब्रह्मणिब्रह्मरूपोसौशिवरूपीशिवेस्थितइतिवचनात् ॥ ११८ ॥ सहरिःतस्यैभारत्यैइतिवरंददौ किमितितत्राह । अनंतेति । सर्वेष्वपिजन्मसुस्वभर्तृसंयोगंस्वभर्त्रासहविष्णोरनंततोषणंअमिततोषणं । अन्यासांशंकरएवमानुषेष्वपिजन्मसुमध्येकुत्रचिज्जन्मनिस्वभर्तृसंयोगंवरंददौ । अत्रभारत्या [illegible]मयवरप्रार्थनाभा

चतुर्जन्म भवेद्भूमौ त्वां नान्यो मारुताद्व्रजेत् ॥ नियमोऽयं हरेर्यस्मादनादिर्नित्य एव च ॥ ११६ ॥ अतस्त्वयैकदेहाप्तो नान्य आप्नोति मारुतात् ॥ इतीरिते तथेत्युक्त्वा पार्वत्यादियुतैव सा ॥११७॥ विप्रकन्या भवत्तत्र चतस्रः पार्वती युताः एकदेहस्थिताश्चक्रुर्गिरीशाय तपो महत् ॥ तद्देहस्था भारती तु रुद्रदेहस्थितं हरिम् ॥ तोषयामास तपसा कर्मैक्यार्थं धृतव्रता ॥ ११८ ॥ तस्यै स रुद्रदेहस्थो हरिः प्रादाद्वरं प्रभुः ॥ अनंततोषणं विष्णोः स्वभर्त्रा सह जन्मसु ॥ ११९ ॥ सर्वेष्वपीति चान्यासां ददौ शंकर एव च ॥ वरं स्वभर्तृसंयोगं मानुषेष्वपि जन्मसु ॥ १२० ॥ ततस्तदैव देहं ता विसृज्य नलनंदिनी ॥ बभूवुरिंद्रसेनेति देहैक्येन सुसंगताः ॥१२१ ॥ तदासीन्मुद्गलो नाम मुनिस्तपसि संस्थितः ॥ चकमे पुत्रिकां ब्रह्मेत्यश्रुणोत्स कथांतरे ॥ १२२ ॥ ॥ ॥

वात्स्वभर्तृसंयोगंनामस्वभर्त्रासहतयाविष्णोरनंतप्रीतिसंयोगःप्रार्थितःहरिणासएववरोदत्तः अन्यासांतुकेवलं स्वभर्तृसंयोगएवरुद्रेणदत्तइतिहृदयम् ॥११९॥१२१॥ ततः वरप्राप्त्यनंतरम् । ताःदेव्यःतदैवशीघ्रंदेहंविप्रकन्यादेहंविसृज्य सुसंगताःसम्यगेककार्यबुद्धयःदेहैक्येनइंद्रसेनेतिनाम्नानलनंदिनीनलनाम्नःपुत्रीबभूवुः । देवीनांबहुत्वाद्बभूवुरितिबहुवचनं । नलनंदिनीदेहस्यैकत्वान्नलनंदिनीत्येकवचनम् । नचात्रनलनंदिनीइंद्रसेनाख्यंदेहद्वयमितिशंक्यम् । इंद्रसेनेतीतिकरणेननलनंदिन्यामिंद्रसेनशब्दाभिधेयत्वस्यप्रतीतेःपदार्थविपर्यासेहिइतिकरणःप्रयुज्यते । मृत्तिकेत्येवसत्यमितिवत् । नलनंदिनीदेहस्यकार्यांतरानुक्तेश्च तस्मान्नलनंदिन्याएवइंद्रसेनेतिसंज्ञा नतुदेहद्वयम् ॥१२०॥ चकमेअकामयत् । कथांतरेकस्यांचित्कथायाम् ॥ १२२ ॥ ॥ ॥ ॥ ॥ ॥

हेमानिन् अहंकामरहितइत्यभिमानिन् अभूतयेनरकाद्यनर्थप्राप्तये ॥ १२३ ॥ तंब्रह्माणंकंजसमुद्भवःब्रह्मा शापानुग्रहंशापानंतरंशापस्य अनुग्रहस्तमितिवा चक्रे ॥ १२४ ॥ अनुग्रहंस्पष्टयति । नत्वमिति । नैवविबुध्यसेनज्ञास्यसि ॥ १२५ ॥ ततःकारणात्तेपापंदेवांगनासंबंधजन्यदोषोनस्यात् । इत्युक्तेमारुतःएनंमुद्गलमाविशत् । अथप्रवेशानंतरं इंद्रसेनांगृहीत्वाउदूह्य अथतयागृहीगृहस्थोऽभवत् ॥ १२६ ॥ तयाइंद्रसेनया ॥ १२७ ॥ भर्त्राविमुक्ताविमोगंप्राप्ता ॥ १२८ ॥ तद्देहगाभारतीतुशंक

अपाहसत्सोब्जयोनिं शशापैनं चतुर्मुखः ॥ भारताद्याः पंचदेवीर्गच्छमानिन्नभूतये ॥ १२३ ॥ इतीरितस्तं तपसा तोषयामास मुद्गलः ॥ शापानुग्रहमस्याथ चक्रे कंजसमुद्भवः ॥ १२४ ॥ न त्वं यास्यसि ता देवीर्मारुतस्त्वच्छरीरगः ॥ यास्यसि त्वं तदा मूर्छां गतो नैव विबुध्यसे ॥ १२५ ॥ न च पापं ततस्तेस्यादित्युक्ते चैनमाविशत् ॥ मारुतोथेंद्रसेनां च गृहीत्वाथाभवद्गृही ॥ १२६ ॥ रेमे च स तया सार्धं दीर्घकालं जगत्प्रभुः ॥ ततो मुद्गलमुद्बोध्य ययौ च स्वनिकेतनं ॥ १२७ ॥ ततो देशांतरं गत्वा तपश्चक्रे स मुद्गलः ॥ सेंद्रसेना वियुक्ताथ भर्त्रा चक्रे महत्तपः ॥ १२८ ॥ तद्देहगा भारती तु केशवं शंकरे स्थितं ॥ तोषयामास तपसा कर्मैक्यार्थं हि पूर्ववत ॥ १२९ ॥ उमाद्या रौद्रमेवात्र तपश्चक्रुर्यथा पुरा ॥ प्रत्यक्षे च शिवे जाते तद्देहस्थे च केशवे ॥ १३० ॥ पृथक् पृथक् स्वभर्त्राप्त्यै ताः पंचाप्येकदेहगाः ॥ प्रार्थयामासुरभवत्पंचकृत्वो वचोहितत् ॥ १३१ ॥ शिवदेहस्थितो विष्णुर्भारत्यै तु ददौ पतिं ॥ अन्यासां शिव एवाथ प्रददौ चतुरः पतीन् ॥ १३२ ॥ ॥ ॥ ॥

रस्थंकेशवंपूर्ववत् कर्मैक्यार्थंतोषयामास ॥ १२९ ॥ उमाद्यायथापुरातथाचक्रुः ॥ १३० ॥ स्वभर्त्राप्त्यैवरंपृथक्पृथक्प्रार्थयामासुः । तद्वचःपंचानांतासांस्वस्वपतियोगप्रार्थनारूपं पंचकृत्वःपंचवारंअभवत् । हियस्मात्तस्मात्पतिरस्त्वितिवचोपि पंचकृत्वोभवदितिवाक्यशेषः ॥ १३१ ॥ विष्णुःभारत्यैपतिंपत्यासहविष्णोःअनंततोषणरूपंवरंपूर्ववद्ददौ । अन्यासांशिवएवचतुरःचतुःसंख्याकान्पतीन्प्रददौ ॥ १३२ ॥ ॥ ॥ ॥

अमुनारुद्रेणवरेदत्तमात्रे दत्तएवसतिचतस्रःपार्वत्याद्याःदेवानामवतारार्थंवयंपृथक्पंचदेव्यःस्मइतिनाजानन्नज्ञासिषुः । तत्कुतःएकदेहत्वात्‌चिद्योगात्‌ जीवचितांपरस्परं संश्लेषात्‌अहमेकैवेतिज्ञानाद्रोदनं तेनेंद्रस्यरुद्रशापस्ततोरुद्रस्यमृषावचनं । तेनरुद्रस्यब्रह्मदत्तःशापस्ततोर्जुनाश्वत्थामादिरूपेण देवानामवतारार्थं अज्ञानंतासामित्यर्थः ॥ १३३ ॥ ताःदेव्यःदेहेविभारति नचिरात्‌शीघ्रंस्वपतिंप्राप्स्यसि ॥ १३४ ॥ इतिभारतींप्रतिविष्णूक्तंचतथा पृथक्चत्वारःपतयःभविष्यंतिइतिशंकरोक्तंचपंचकृत्वउ त्पन्नंवचनंश्रुत्वा अथतद्वचनश्रवणानंतरं । एकस्याःपंचभर्तृतांमेनिरइत्यन्वयः ॥ १३५ ॥ अस्मिन्देहेअहमेकैवेतिस्थिता एवंपृथक्पृथक्मन्वानाएकदेहस्थाउमाद्यारु

देव्यश्चतस्रस्तु तदा दत्तमात्रे वरेमुना ॥ देवानामवतारार्थं पंचदेव्यःस्म इत्यथ ॥ १३३ ॥ नाजानन्नेकदेहत्वाच्चिद्योगात्क्षीरनीरवत् ॥ ताः श्रुत्वा स्वपतिं देवि न चिरात्प्राप्स्यसीति च ॥१३४॥ विष्णूक्तं शंकरोक्तं च चत्वारः पतयः पृथक् ॥ भविष्यंतीत्यथैकस्यां मेनिरे पंचभर्तृतां ॥ १३५ ॥ रुरुदुश्चैकदेहस्था एकैवाहमिति स्थिताः ॥ अथाभ्यगान्महेंद्रोत्र सोत्रवीत्तां वरस्त्रियं ॥ १३६ ॥ किमर्थं रोदिषीत्येवं साब्रवीद्बटुरूपिणं ॥ शंकरं दर्शयित्वैव पंचभर्तृत्वमेष मे ॥ १३७॥ वरार्थमर्थितः प्रादादिति तं शिव इत्यथ ॥ अजानन् शक्रआहोच्चैः किमेतद्भुवनत्रये ॥ मत्पालिते योषितं त्वं वृथा शपसि दुर्मते ॥ १३८ ॥ इतीरिते शिवः प्राह पत मानुष्यमाप्नुहि ॥ १३९ ॥ अस्याश्च भर्ता भवसि त्वामेवैषा वरिष्यति ॥ १४० ॥ पश्यात्र मदवज्ञानात्पतितांस्त्वादृशान् सुरान् ॥ गिरेरधस्तादस्यैवेत्युक्तो सौ पाकशासनः ॥ उद्बबर्ह गिरिं तं तु ददर्शात्र च तान्सुरान् ॥ १४१ ॥ ॥ ॥

रुदुः ॥ १३६ ॥ बटुरूपिणंशंकरंदर्शयित्वावरार्थंस्वभर्त्राप्तिवरदानार्थंप्रार्थितःएषःमेपंचभर्तृत्ववरं प्रादादितिअब्रवीत् ॥ १३७ ॥ शक्रःतंबटुरूपिणंशिवइतिअजानन्उच्चैराह । एतत्किमन्याय्यंभवनीत्यर्थः । एतदित्युक्तंदर्शयति । योषितमिति । वृथाअपराधंविनाशपसिशप्स्यसि ॥ १३८ ॥ शिवःप्राह किमिति । पतस्वर्लोकादितिशेषः । मानुष्यंमनुष्यदेहं ॥ १३९ ॥ वरिष्यतिवरियिष्यति ॥ १४० ॥ मदवज्ञानात्ममद्रोहात् त्वादृशान्त्वत्सदृशान्प्राप्तेंद्रपदानित्यर्थः । पाकशासनःइंद्रःउद्बबर्हउच्चाटितवान् । अत्रगिरेरधःतान्सुरान्ददर्श ॥ १४१ ॥ ॥ ॥ ॥ ॥

तानित्युक्तंविवृणोति । पूर्वेंद्रानिति ॥ पूर्वेंद्रान्पूर्वमन्वंतरेषुइंद्रान्अतएवत्वादशानित्युक्तं वृषोयमइतिचतुरःचतुःसंख्यान्रहसिएकांते मंत्रंविचारंकुर्वतःकुर्वाणान् ॥ १४२ ॥ वरेण्यंउत्तमैःप्राप्यं । तपसाआराधयित्वा तत्प्रसादाद्विष्णोःप्रसादात्नरांशेननरस्यहरिवायुशेषांशेन ॥ १४३ ॥ इदानींमृषोक्तेःशिवस्यब्रह्मदत्तशापप्रकारमाह । मदवज्ञेति । सुरान्प्रतिमदवज्ञानिमित्तेन ममद्रोहनिमित्तेन एतेपतिताइतिमृषावादीरिति ब्रह्माशिवंशशाप ॥१४४॥ किमिति । त्वंमानुषेषुमनुष्यलोकेषु क्षिप्रंप्रजातःसन् नरतनोः नरेषूत्पन्नादर्जुनस्वरूपाच्छक्रात्पराभवंपराजयंयासियास्यसि । तत्कारणमाह । यस्मादिति । यस्मैशक्रायमृषाअवदःअवादीः॥ १४५ ॥ मयासहअविचार्यमच्छप्तानांच

पूर्वेंद्रान्मारुतवृषनासत्यांश्चतुरास्थितान् ॥ मानुषेष्ववताराय मंत्रं रहसि कुर्वतः ॥ १४२ ॥ ततो वरेण्यं वरदं विष्णुं प्राप्य स वासवः ॥ तत्प्रसादान्नरांशेन युक्तो भूमावजायत ॥१४३॥ मदवज्ञानिमित्तेन पतिता इति तान्सुरान् ॥ मारुतादीन्मृषावादीरिति ब्रह्मा शिवं तदा ॥ १४४ ॥ शशाप मानुषेषु त्वं क्षिप्रजातः पराभवं ॥ शक्रान्नरतनोर्यासि यस्मै त्वं तु मृषावदः ॥ १४५ ॥ मच्छप्तानां च देवीनामविचार्य मया यतः ॥ पतियोगवरं प्रादान्नावाप्स्यसि ततः प्रियां ॥ १४६ ॥ मानुषेषु ततः पश्चाद्भारतीदेहनिर्गतां ॥ स्वलोके प्राप्स्यसि स्वार्थे वरोयं ते मृषा भवेत् ॥ १४७ ॥ एषा सा द्रौपदीनाम पंचदेवीतनुर्भवेत् ॥ मृषा वाग्येषु ते प्रोक्ता मारुताद्यास्तु तेऽखिलाः ॥ १४८ ॥ तासां पतित्वमाप्स्यंति भारत्यैव तु पार्वती ॥ संयुक्ता व्यवहारेषु प्रवर्तेत न चान्यथा ॥ १४९ ॥ ॥

देवीनांपतियोगवरंप्रादाःयतः अतोमानुषेषुस्थितस्त्वंप्रियांनयास्यसि । इतिब्रह्मातदाशिवंशशाप ॥ १४६ ॥ ततःपश्चात्उमायाःमानुषत्वनिवृत्यनंतरं । भारतीदेहनिर्गतांउमां स्वलोकेकैलासेरुद्रभूतस्त्वमितिभावः । प्राप्स्यसिस्वार्थेस्वविषये तेअयंत्वयादत्तोवरःउमायाःपतियोगवरःमृषाभवेत् ॥ १४७ ॥ पंचदेवीतनुःसैषामृषात्वयादत्तवरा एषाइंद्रसेनाद्रौपदीनामभवेत् । येषुयेषांविषयेमारुतादीनुद्दिश्येतिभावः । तेत्वयामृषावागसत्यवाणी प्रोक्तास्ते अखिलामारुताद्यावायुयमाद्याःतासांभारत्यादीनांपतित्वंआप्स्यंति ॥ १४८ ॥ पार्वतीभारत्यासंयुक्ताव्यवहारेष्वेव हानोपानादिव्यवहारेष्वेवप्रवर्तेत । अन्यथाइतरदेवीवत्पतिप्राप्तिवत्याचनप्रवर्तेत ॥ १४९ ॥ ॥

ननु मदवज्ञानतस्तेषांजन्मकिंनस्यात्ममृषावाक्त्वंकुतोवगतमित्यतः श्रुतिरेवेत्याह । एतइति गौरवान्महत्वात् तत्रत्वदवज्ञाकरणंन इतिश्रुतिरस्तिअतः अत्रतेषांमानुषजन्मनितेअवज्ञाकरणंन ॥ १५० ॥ ततस्त्वंदीर्घकालंमनुष्येषुस्थितिंअवस्थानमाप्स्यसि इत्युक्त्वाब्रह्माप्रययौ ॥ १५१ ॥ एषाइंद्रसेनादेवकीतिशामलायाश्चतुर्थंजन्मचित्रांगदेतिशच्याःजरासंधकन्यारूपंउषायाएवंपार्वत्याअपिचतुर्थंजन्मास्तीतिबोध्यं । अन्यथाद्रौणेःस्त्रीवियोगलक्षणशापोनस्यात् सत्यांस्त्रियांतदलाभस्यैवस्त्रीवियोगत्वात् पतियोगप्राप्तिरूपवरद्वयस्यद्रौपदीदेहेदेवक्यादिपृथगवतारेचफलंज्ञेयं ॥ १५२ ॥ इममर्थंप्रमाणेनस्थापयति । वेदेष्वित्यादिना । पुराणैःसहितेषुवेदेषुभारतेचउक्तोर्थः ।

एते हि मारुताद्यास्ते देवकार्यार्थगौरवात् ॥ जाता इति श्रुतिस्तत्र नावज्ञा तेत्र कारणं ॥१५०॥ दीर्घकालं मनुष्येषु ततस्त्वं स्थितिमाप्स्यसि ॥ इत्युक्त्वा प्रययौ ब्रह्मा सोश्वत्थामा शिवोभवत् ॥ १५१ ॥ पंचदेवीतनुस्त्वेषा द्रौपदीनाम चाभवत् ॥१५२॥ वेदेषु सपुराणेषु भारते चावगम्यते ॥ उक्तोर्थः सर्व एवायं तथा पूर्वोदिताश्च ये ॥१५३॥ मुमुदुः सर्वपांचाला जातयोः सुतयोस्तयोः ॥१५४॥ मानुषान्नोपभोगेन संसर्गान्मानुषेषु च ॥ मनुष्यपुत्रतायाश्च भावो मानुष एतयोः ॥ अभून्नातितरामासीत्तदयोनित्वहेतुतः ॥१५५॥ याजोपयाजौ तावेव दयिता द्रुपदस्य च ॥ मातृस्नेहार्थमनयोर्ययाचे ददतुश्च तौ ॥ १५६ ॥ जातमात्मनि हंतारं भारद्वाजो निशम्य तं ॥ यशोर्थमस्त्राणि ददावग्रहीत्सोपि लोभतः ॥ १५७ ॥ ॥ ॥ ॥

देवीनांशापादन्यगात्वजन्माद्यर्थोवगम्यते । तथायेर्थाःपूर्वोदिताःसृष्ट्याद्यास्तेचउदिताइत्यर्थः ॥ १५३ ॥ सुतयोःसुताचसुतश्चतौतयोःजातयोःसतोः ॥ १५४ ॥ मानुषान्नोपभोगेनमानुषान्नस्यउपभोगेनसेवनेन तथामानुषेषुसंसर्गात् मनुष्यैःसहावस्थानात् मनुष्यपुत्रतायाश्च इष्टिंकृत्वापुत्रत्वेनमनुष्यलब्धत्वाच्च एतयोःकृष्णाधृष्टद्युम्नयोः मानुषोभावःस्वभावःकिंचिदभूत् अतितरांअत्यंतंमानुषोभावोनासीत् तत्रहेतुमाह । तदिति तदयोनित्वहेतुतःमनुष्ययोन्यभावत्वहेतोः ॥ १५५ ॥ अनयोःकृष्णाधृष्टद्युम्नयोःमातृस्नेहार्थंमातरिस्नेहार्थं ॥ १५६ ॥ भारद्वाजोद्रोणःआत्मनिहंतारंआत्मनःस्वस्यनिहंतारंघातकंधृष्टद्युम्नंजातंनिशम्य । यशोर्थंददौ ॥ १५७ ॥ ॥

सर्वीर्यवानपिधृष्टद्युम्नोपि रामास्त्राणांरामात्प्राप्तास्त्राणांत्रिदशेष्वपिदेवेष्वपिदुर्लभत्वात्लोभतोग्रहीत् ॥ १५८ ॥ पांडवानांप्राहिणोत्सकाशमितिशेषः । प्रभुःकृष्णः ॥ ॥ १५९ ॥ सोपिकृतवर्मापिपांडवान्संमान्यसत्कृत्य तैःपांडवैर्मानितःसत्कृतः पांडवसत्कारेकारणमाह । कृष्णभक्त्याभ्रातृत्वाच्चेति । कृष्णेभक्तिमंतःपांडवाःकृतवर्मा तदीयइतिमानितइत्यर्थः । कृतवर्माकथंपांडवानांभ्रातेत्यतआह । शूरानुजसुतासुतइति । शूरपुत्रीकुंतीतदनुजसुताकृतवर्ममाताएवंमातृभगिनीसुतत्वात् भ्रातेत्युक्तंभव ति । सहरिंकृष्णंप्रतिययौपरावृत्येतिशेषः ॥ १६० ॥ देवपक्षाःभूपाभैमार्जुनबलं भीमार्जुनयोःसंबंधिभैमार्जुनंतच्चतत्बलंचेति ॥ १६१ ॥ एषुपांडवेषु ननु देवपक्षास्ते

रामास्त्राणां दुर्लभत्वात्रिदशेष्वपि वीर्यवान् ॥ भीजार्जुनाभ्यां बद्धं तं श्रुत्वा पांचाचलभूपतिं ॥ १५८ ॥ प्राहि णोत्कृतवर्माणं पांडवानां जनार्दनः ॥ पांडवेष्वतुलां प्रीतिं लोके ख्यापयितुं प्रभुः ॥ १५९ ॥ संमान्य पांडवान्सो पि शूरानुजसुतासुतः ॥ तैर्मानितः कृष्णभक्त्या भ्रातृत्वाच्च हरिं ययौ ॥ १६० ॥ ततः प्रभृति संत्यज्य देवपक्षा जरासुतं ॥ पांडवानाश्रिता भूपा ज्ञात्वा भैमार्जुनं बलं ॥ १६१ ॥ विशेषतश्च कृष्णस्य विज्ञाय स्नेहमेषु हि ॥ पराजिताश्च बहुशो कृष्णेनाचिंत्यकर्मणा ॥ १६२ ॥ प्रतापादेव ते पूर्वं जरासंधवशं गताः ॥ १६३ ॥ न स्नेहात्त द्बलं ज्ञात्वा प्रार्थानां केशवस्य च ॥ जन्मांतराभ्यासवशात्स्निग्धाः कृष्णे च पांडुषु ॥ १६४ ॥ जरासंधभयं त्य क्त्वा तानेव ह समाश्रिताः ॥ अपि तं बहुशः कृष्णविजितं नैव तत्यजुः ॥ असुराः पूर्वसंस्कारात्संस्कारो बलावन्य तः ॥१६५॥ देवा हि कारणादन्यानाश्रयंतोपि नांतरं ॥ स्नेहं त्यजंति देवेषु तथान्येष्वपि च स्फुटं ॥ १६६ ॥

पूर्वंजरासंधवशंकथंगताइत्यतआह । पराजिताइत्यादिना । बहुशःकृष्णेनपराजिताःभूपाः ॥ १६२ ॥ पूर्वंजरासंधस्यप्रतापात्पराक्रमात्वशंगताः प्रतापात्संतापाद्वा नतुस्नेहादित्यर्थः ॥ १६३ ॥ तद्बलंपूर्वोक्तबलं स्निग्धाःस्नेहयुक्ताः ॥ १६४ ॥ तानेवपांडवानेव कृष्णविजितंकृष्णेनपराजितं जरासंधंनैवतत्यजुः । कुतःपूर्वसंस्का रात् ॥ १६५ ॥ संस्कारस्यबलवत्वमुपपादयति । देवाइति । कारणादेवकुतश्चित्कारणादेवअन्यान्दैत्यान् आंतरंमानसंस्नेहंतथा अन्येऽसुराःअसुरेषुस्नेहंनत्यजं तीत्यर्थः ॥ १६६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

भीमार्जुनयोर्बलंबहुशःदृष्ट्वा स्वभावेनदेवत्वाच्चसुप्रीतएव धर्मजस्यज्येष्ठत्वात् यौवराज्याभिषेकंचक्रे ॥ १६७ ॥ अथोयुधिष्ठिराभिषेकानंतरं दुर्जयौजेतुमशक्यौ भीमपा
र्थौधृतराष्ट्रस्यकरदान्चक्रतुः ॥ १६८ ॥ सोपिधृतराष्ट्रोपिभीष्मद्रोणमुखाश्चतयोः अतिमानुषकर्मणामनुष्यैःकर्तुमशक्येनकर्मणा तयोःप्रीतःअभूत् प्रीताअभूवन्निति
शेषः ॥ १६९ ॥ यंगंगाजमदग्निजान्वयभवाद्विद्विद्धिरण्याभिधात्पुत्रंप्रापजनार्दनंशा[illegible]तालू ॥ पूर्तितत्स्यकृतौसतांसुखकरोध्यायः किलाष्टादशः[illegible]

धृतराष्ट्रो बलं ज्ञात्वा बहुशो भीमपार्थयोः ॥ देवत्वाच्च स्वभावेन ज्येष्ठत्वाद्धर्मजस्य च ॥ सुप्रीतएव तं चक्रे यौव
राज्येभिषेकिणं ॥ १६७ ॥ भीमार्जुनावथोजित्वा सर्वदिक्षु च भूपतीन् ॥ चक्रतुः करदान् सर्वान् धृतराष्ट्रस्य दुर्ज
यौ ॥ १६८ ॥ तयोः प्रीतो भवत्सोपि पौरजानपदास्तथा ॥ भीष्मद्रोणमुखाः सर्वेप्यतिमानुषकर्मणा ॥ १६९ ॥
इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये भीमार्जुनदिग्विजयोनाम अष्टाद
शोध्यायः ॥ १८ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

महाभारतभावनिर्णयपदार्थोद्दीपिकायामगात् ॥ १८ ॥ ॥ इति श्रीमद्भारततात्पर्यनिर्णयस्य टीकाया पदार्थदीपिकानाम्न्यां जनार्दनभट्टविरचितायामष्टाद
शोध्यायः ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

श्रीगुरुभ्योनमः ॥ एवमिति । शुभाःशुद्धाःउच्चाःउत्तमाःगुणाःएषांसंतीतितेतथा तेषुपांडवेषुअधिकंयथाभवतितथा शुभानिउत्तमानिचरत्सुसत्सुकुर्वाणेषुसत्सु कर्माणीतिशेषः । गुरुदेवतादिसत्सुगुर्वादिविषयेनास्तिक्यनीतिंगुरुर्नास्तिदेवतापिनास्तिइत्यादिप्रतिपादिकांनीतिंनीतिशास्त्रंजगृहुः ॥ १ ॥ एषांनास्तिक्यनीतौकोगुरुरित्यतआह । नाम्नेति । असुरकःकुत्सितोसुरःपूर्वमितिशेषः । अत्रनाम्नाकलिंगइतिद्विजोभूत् । ससुरेतरगुरोःसुरेतराःअसुरास्तेषांगुरोःशुक्रस्यशिष्यः सशकुनेर्गुरुःशकुनेर्वचनतः रहःसमस्तांकुत्सिततमांनीतिंधृतराष्ट्रपुत्रेष्वधात् ॥ २ ॥ दुर्नीतिस्वरूपंलेशतोदर्शयति । छद्मेति । यत्रयस्यांनीतौछद्मैव परमंपरमतात्पर्यगोचरं सर्वप्रकारेणछद्मैवप्राप्यमितिभावः । सुराश्चनपूज्याः यदिपूज्यास्तर्हि स्वार्थेननिमित्तेनपूज्याः जगतःवंचनकृतेअखिलंधर्मादिविहितानुष्ठानं आदिशब्देननिषिद्धत्यागः एतद्द्वयंकार्यमपिकर्तव्यंयस्यपुंसःमहोपाधिःमहान्उपाधिःकपटंस्यात्समहच्छद्मवान् पुरुषःअखिलासुरदैत्यसंघात् असुभिःप्राणिभिःरमंतिभक्षयंति तेअसुराःराक्षसाइत्यर्थः असुराश्चदैत्याश्चतेषांसंघात्समूहात् श्रेष्ठइतियोजना ॥ ३ ॥ समस्तैरज्ञातेसति तेषांदुर्योधनादीनांस्वभावबलतःयोग्यताबलात् सैवदुर्नीतिरेवरुचिताप्रिया अतोपिगुरूक्तादपिकालिंगादपिवा विस्तारिता ॥ ४ ॥ विद्याभ्यासफलमाह । संपूर्णेति । निखिलान्यहानिसर्वकालं परमिकांउत्तमां ॥ ५ ॥ ॥ ॥

ॐ एवं शुभोच्चगुणवत्सु जनार्दनेन युक्तेषु पांडुषु चरत्स्वधिकं शुभानि ॥ नास्तिक्यनीतिमतुलां गुरुदेवतादिसत्स्वं जसैव जगृहुर्धृतराष्ट्रपुत्राः ॥ १ ॥ नाम्ना कलिंग इति चासुरको द्विजोभूच्छिष्यः सुरेतरगुरोः शकुनेर्गुरुः सः ॥ नीतिं स कुत्सिततमां धृतराष्ट्रपुत्रेष्वाधाद्रहो वचनतः शकुनेः समस्तां ॥ २ ॥ छद्मैव यत्र परमं न सुराश्च पूज्याः स्वार्थेन वंचनकृते जगतोखिलं च ॥ धर्मादि कार्यमपि यस्य महोपाधिः स्याच्छ्रेष्ठः स एव निखिलासुरदैत्यसंघात् ॥ ३ ॥ इत्यादिकुत्सिततमां जगृहुः स्म विद्यामज्ञात एव धृतराष्ट्रमुखैः समस्तैः ॥ तेषां स्वभावबलतो रुचिता च सैव विस्तारिता च निजबुद्धिबलादतोपि ॥ ४ संपूर्णदुर्मतिरसौ धृतराष्ट्रसूनुस्तातप्यमानहृदयो निखिलान्यहानि ॥ दृष्ट्वा श्रियं परमिकां विजयं च पार्थेष्वाहेदमेत्य पितरं सह सौबलेन ॥ ५ ॥ ॥ ॥

हृदयप्रजाताऔरसाःअर्हत्वंयोग्यत्वं उतकनीयसःकनिष्ठस्यभ्रातुःपांडोःअन्यैःअन्यपुरुषैःदारजाताःक्षेत्रजाःधर्मादयःराज्यपदवींराज्यमार्गयौवराज्यमित्यर्थः भवतैवत्व यैवनीताःप्रापिताः ॥ ६ ॥ सधर्मसूनुःत्वत्तःत्वत्प्रसादात् अथवा अनुजबलात् प्रसभंबलात्कारेणवा महत्संपूर्णराज्यंसाम्राज्यंसमवाप्स्यति। निजतंतुभिरेवसाकंस्वसंतानैरे वसाकं कुंतीसुतस्यदासाभवेम परतोपिअस्मदनंतरं तदन्वयस्यमदन्वयोदासोभवेत्॥ ७ ॥ आत्मार्थस्वस्यसाम्राज्यप्राप्त्यर्थं अथापितर्हि अतिशुद्धंलोकेप्रसिद्धंयशोय स्यसतथातस्यतव कीर्तिनाशअस्मन्निमित्तंअस्मान्निमित्तीकृत्यस्यादितिममदुःखंअतोहिसर्वेवयंमर्तुंइच्छाम। अथतस्मान्नःअस्माकंअनुज्ञांमरणानुज्ञांकुरुदेहीत्यर्थः॥८॥

ज्येष्ठस्य तेपि हि वयं हृदयप्रजाता नार्हत्वमेव गमिता भवतैव राज्ये ॥ भ्रातुः कनीयस उतापि हि दारजाता अन्यैश्च राज्यपदवीं भवतैव नीताः ॥ ६ ॥ राज्यं महच्च समवाप्स्यति धर्मसूनुस्त्वत्तोथ चानुजबलात्प्रसभं वयं तु ॥ दासा भवेम निजतंतुभिरेव साकं कुंतीसुतस्य परतोपि तदन्वयस्य ॥ ७ ॥ नात्मार्थमस्ति मम दुःखमथातिशुद्धलोकप्रसिद्धयशसस्तव कीर्तिनाशः ॥ अस्मन्निमित्तमिति दुःखमतो हि सर्वेपीच्छाम मर्तुमथ नः कुरु चाप्यनुज्ञां ॥ ८ ॥ एवं स्वपुत्रवचनं स निशम्य राजा प्रोवाच नानुगुणमेतदहो मनस्ते ॥ को नाम पांडुतनयेषु गुणोत्तमेषु प्रीतिं न याति निजवीर्यभवोच्चयेषु ॥ ९ ते हि स्वबाहुबलतोखिलभूपभूतिं मय्याकृषंति न च वः प्रतिषेधकास्ते ॥ तस्माच्छमं व्रज शुभाय कुलस्य तात क्षेमाय नो भवति वो बलवद्विरोधः ॥ १० ॥ एवं ब्रुवत्यपि नृपे पुनराह पाप आश्रित्य सौबलमतं यदि नैव पार्थान् ॥ अन्यत्र यापयसि नागपुरात्परेतान् दृष्ट्वाखिलानपि हि नो मुदमेहि पार्थैः ॥ ११ ॥ ॥ ॥ ॥

तेतवमनःनानुगुणंश्रेयसःअनुकूलंन एतदहोआश्चर्यं निजवीर्यभवोच्चयेषुस्ववीर्येणसंपादितःउत्कर्षोयैस्तेतथा तेषुपांडवेषुकोनामप्रीतिंनयाति। सर्वोपियात्येवेत्यर्थः। कुत्सितःपुरुषोनयाति ॥ ९ ॥ भूतिंऐश्वर्यमपिआकृषंतिसमर्पयंति। प्रतिषेधकाःविरोधिनःकुलस्यशुभायशमंशांतिं ॥ १० ॥ अन्यत्रस्थलांतरंनयापयसिनप्रेषयसि परेतान्परलोकंइतान्प्राप्तान्मृतानित्यर्थः मुदंएहिआप्नुहि ॥ ११ ॥ ॥ ॥ ॥ ॥

गदितंपुत्रोक्तंसुतहार्दपाशैः पुत्रस्नेहपाशैःआकृष्यतआकृष्टोभूत् पुत्रवशोबभूवेत्यर्थः । अरिधरेच्छयाचक्रधरस्यहरेरिच्छया । बलिनोयस्मात्तस्मात् पुरान्नागपुरात् कथंचि यापयितुंनिःसार्यप्रेषयितुंनशक्याःनसमर्थाः ॥ १२ ॥ इहतेषांपुरात्निर्याणविषयेविधिःउपायःसृष्टःनिर्मितःतमुपायंश्रुणुष्व । समाःवर्षाणितावत्कालमारभ्यअयं वक्ष्यमाणएवविधिःमयाइष्टःविचारितः ॥ १३ ॥ पिताद्रोणःअस्यद्रौणेर्मातुलेन कृपेणसाकंसहवशंनीतः एषःनदीप्रसूतश्चभीष्मश्चतमनुद्रोणमनुवर्ततइतिशेषः द्रोणमनु सरतीतिभावः ॥ १४ ॥ अस्त्रेबलेपिसुरेंद्रसूनोरधिकएवसन् एषःकर्णोपिवशंगानितः सपार्थंहनिष्यतीतिभावः ॥ १५ ॥ त्रिंशदधिकंशतंत्रिंशच्छतं केचित्सहस्रत्रयमि तिव्याचक्षते । परमकाउत्तमाअतएवसुदुर्लभाःमनवोमंत्राःअन्यत्रप्रविहिताःनियोजिताःभीमेचार्थवंतःकार्यकरानस्युरितिहेतोःअमूनूमंत्रान् अन्यत्रननियोजयामि । यद्वा

एवन्निशम्य गदितं सुतहार्दपाशैराकृष्यताशु स नृपोरिधरेच्छयैव ॥ प्रोवाच पुत्रमपि ते बलिनो हि पार्थाः शक्याः पुरात्तु न च यापयितुं कथंचित् ॥ १२ ॥ इत्युक्त आह पितरं शकुनिं निरीक्ष्य सृष्टो मया विधिरिहाद्य श्रुणुष्व तं च ॥ आसंस्त्रयोदशसमा नगरं प्रविष्टेष्वेतेषु तावदयमेव विधिर्मयेष्टः ॥ १३ ॥ द्रौणेर्हि नास्ति सदृशो बलवान्प्रतापी सोयं मया बहुविधैः परमैरुपायैः ॥ नीतो वशं वशगतोस्य च मातुलेन साकं पिता तमनुचैष नदीप्रसूतः ॥ १४ ॥ एवं हि सैनिकगणा अपि दानमानैः प्रायो वशं मम गता अपि चैष कर्णः ॥ अस्त्रे बलेप्यधिक एव सुरेंद्रसूनोर्जेष्ये च मंत्रबलतस्त्वहमेव भीमं ॥ १५ ॥ त्रिंशच्छतं परमकाः सुरदुर्लभाश्च दूर्वाससो हि मनवोद्य मया गृहीताः ॥ अन्यत्र ते प्रविहिता नहि वीर्यवंतः स्युर्भीम इत्यत अमून्न नियोजयामि ॥ १६ ॥ ते वीर्यदा विजयदा अपि वन्हिवारिस्तंभादिदाः सकलदेवनिकायरोधाः वृष्ट्याद्यभीप्सितसमस्तकरा अमूभिर्जेष्यामि भीममममुमेकमयातयामैः ॥ १७ ॥ ॥ ॥ ॥ ॥

हियस्मात्तेअन्यत्रप्रविहिताःअतएववीर्यवंतःस्युरितिहेतोः अहंअमूनूभीमेनियोजयामि । भीमादन्यत्रननियोजयामि ॥ १६ ॥ तेमनवःवारिवन्हिस्तंभादिदाःवारिवन्हिस्तंभआदिर्यस्यासौतथोक्तःतंददातीतितथोक्ताआदिशब्देनमृतसंजीवनादिकंग्राह्यं । निकायःसमूहःवृष्ट्याद्यभीप्सितसमस्तकराःवृष्ट्यादिवांछितसकलपदार्थप्रदानूकुर्वंति प्रयच्छंतीतेतथाअयातयामैःअगतसारैःअमूभिःछांदसत्वाद्बहुलं अक्षयाविषुधोदिव्येइतिवत् । मनुशब्दस्योभयलिंगतासूचनार्थं अमूभिरयातयामैरित्युक्तं अतएवस्त्रीपुल्लिंगशेषे मूनिर्वराटकःस्वातिर्वर्णकःपाटलिर्मनुरित्यमरः । अमूभिर्मंत्रैःअमुमेकंभीमंजेष्यामि ॥ १७ ॥ ॥ ॥

एषुपार्थेषुसौहार्दस्नेहं तत्रस्नेहकरगेवारणवतेनगरेवत्स्यंतुवासंकुर्वंतु । तेषांतदेववारणावतमेवराष्ट्रंराज्यंभवतु त्वदर्थंत्वद्वचनकरणेनतवप्रियार्थंममनागपुरंभवतु ॥१८॥ परप्रसवातिपुष्टौपरेभ्योन्येभ्यःप्रसवोयेषांतेतथोक्ताः तेषांपुष्टौवृद्धौ तेपांडवाःबलेजातेअभिवृद्धेतवविरोधकृतश्चस्युःकेवलंस्वार्थमेवस्वप्रयोजनमेवतावत् त्वांअनुयांतिअनुकूलत्वेनवर्तंते ॥ १९ ॥ क्षत्तैकएवविदुरःएकएवतेषांपांडवानामलंपरिपोषकःवृद्धिकरोयतःममाहिद्वेषी अमुष्यविदुरस्यमंत्रबलात्विचारबलात् पौराद्याःमांद्विषंति । तेषुपांडवेषुअतीवदृढसौहृदचेतसःअचलस्नेहयुक्तांतःकरणाः ॥ २० ॥ एतेषुपांडवेषुदूरगमितेषु दूरंप्रापितेषुसत्सुनिराश्रयत्वात् आश्रयरहितत्वात् दुर्बलतयादुर्बलत्वेन परितः

सौहार्दमेषु यदि चातितरां करोषि तत्रापि नैव हि मया क्रियते विरोधः ॥ वत्स्यंतु वारणवते भवतु स्म राष्ट्रं तेषां तदेव मम नागपुरं त्वदर्थं ॥ १८ ॥ एवं स्वपुत्रपरिपालनतो यशस्ते भूयाद्विनश्यति परप्रसवातिपुष्टौ ॥ जाते बले तव विरोधकृतश्च ते स्युः सार्धं हि तावदनुयांत्यपि केवलं त्वां ॥ १९ ॥ क्षत्तैक एव सततं परिपोषकोलं तेषां मम द्विडथ मंत्रबलादमुष्य ॥ पौराश्च जानपदिकाः सततं द्विषंति मां तेष्वतीव दृढसौहृदचेतसश्च ॥ २० ॥ एतेषु दूरगमितेषु निराश्रयत्वान्मामेव दुर्बलतया परितः श्रयंते ॥ भीष्मादयश्च न हि तन्निकटे विरोधं कुर्युर्विनश्यति गतेषु हि सौहृदं तत् ॥ २१ ॥ भेदः कुलस्य भविता कुलनाशहेतुरस्माभिरेषु सहितेषु पुरे वसत्सु ॥ तस्मादुपायबलतः प्रतियापनीयास्ते वारणावतमितो विहितोप्युपायः ॥ २२ ॥ विष्णुर्जयंत इति शंभुसहाय आस्ते देवोत्सवश्च समहान्भवितात्र सुष्ठु ॥ भक्ताश्च ते हि नितरामरिशंखपाणौ त्वच्चोदिताः समुपयांति तमुत्सवं द्राक् ॥ २३ ॥

सर्वप्रकारेणमामेवश्रयंते आश्रयंकुर्युरित्यर्थः । तन्निकटेपांडवसन्निधाने तत्सौहृदंसौहार्दं इदानींविद्यमानाप्रीतिःविनश्यति ॥ २१ ॥ भेदःद्वैधीभावः विरोधइत्यर्थः भवितास्यात्सचकुलनाशहेतुः यद्यस्मात्तस्मात् इतोनागपुरात्यापनीयाःप्रेषणीयाः उपायोविहितःनिर्मितः ॥ २२ ॥ तमुपायंदर्शयति । विष्णुरिति । अत्रवारणावतेजयंतइतिमूर्त्याशंभुःसहायःशिवप्रतिमासहायोयस्यसतथोक्तः विष्णुरास्तेविष्णुस्तिष्ठति भविताभविष्यति तेपांडवाःत्वच्चोदिताःत्वयाप्रेरिताःतंउत्सवंद्राक्शीघ्रंसमुपयांति सम्यक्भक्त्याउपयांतियास्यंति ॥ २३ ॥ ॥ ॥ ॥ ॥ ॥

आज्ञाप्यआनिशम्य तेयथानजानंतितथाकृत्वेतियावत् मदीयैःपुरुषैर्मध्यस्थवत्मध्यस्थैःयथातथा अत्रसभायांतेषांपुरःपांडवाग्रेतत्रवारणावतस्य बहुगुणाउदिताः तेषांगम
नाभिरुचिराकांक्षापुरंद्रष्टुंजाता बहुगुणान्श्रुत्वेतिभावः ॥ २४ ॥ हृदयंअस्मद्गमनंनृपतेरिष्टमितिज्ञात्वा पितेतिपितृवचनंकर्तव्यमितिर्नीतिहेतोःन्यायार्थं ॥ २५ ॥ तदात
दानींभीमः अत्रगमनेसति भैक्ष्यचारःभिक्षाचरणंभविताभविष्यति । क्षत्रायोग्योभैक्ष्यचारइत्यर्थः निजंकर्मनत्याज्यंतुइतिसम्यगनुविद्यैवज्ञात्वैव निजाग्रजायइतिप्रतिज
गादह । वयंगृहान्नतुयामःसनःस्वधर्मोनहि ॥ २६ ॥ नोस्मान्निष्कालयंतिबलान्निःसारयिष्यंति यदितर्हि अत्रैववयोत्स्यामहेअमुंभीमंविरोधेसति ॥ २७ ॥ अथइत्यूचि
वांसंअमुंअग्रजं अनुवृत्त्यैज्येष्ठानुवृत्त्यैअन्वगात् । स्वधर्मनिरूपणंचज्येष्ठानुवृत्तिंचेत्युभयंकिमर्थमकरोदित्यतआह । दोषइति । उभयतःज्ञात्वास्वधर्मानिरूपणात् ज्ये

आज्ञाप्य मत्पुरुषतां पुरुषैर्मदीयैर्मध्यस्थवद्बहुगुणा उदिताश्च तत्र ॥ तेषां पुरोत्र गमनाभिरुचिश्च जाता द्रष्टुं पुरं
बहुगुणं ननु पांडवानां ॥ २४ ॥ इत्युक्तवत्यथ सुते स तथेत्युवाच प्राप्तेषु पांडुतनयेषु तदैव चोचे ॥ ज्ञात्वैव तेपि
नृपतेर्हृदयं समस्तं जग्मुः पितेति पृथया सह नीतिहेतोः ॥ २५॥ भीमस्तदाह भवितात्र हि भैक्षचार इत्येव सम्य
गनुविद्य निजं न कर्म ॥ त्याज्यंत्विति प्रतिजगाद निजाग्रजाय यामो वयं न तु गृहात्सहि नः स्वधर्मः ॥२६॥
निष्कालयंति यदि नो निजधर्मसंस्थान्योत्स्यामहेत्र नहि दस्युवधोप्यधर्मः ॥ इत्यूचिवांसममुमाह च धर्मसूनुः
कीर्तिर्विनश्यति हि नो गुरुभिर्विरोधे ॥२७॥ इत्युक्तवाक्यममुमग्रजमन्वगात्स भीमः प्रदर्श्य निजधर्ममथानुवृत्त्यै॥
दोषो भवेदुभयतो यत एव तेन वाच्यः स्वधर्म उत नः स्थितिरत्र कार्या ॥२८॥ कीर्त्यर्थमेव निजधर्मपरिप्रहाणे
प्राप्तेग्रजस्य वचनात्प्रविहातुमेव ॥ भीमस्य दोषमुभयं प्रविहंतुमीशो ज्येष्ठं चकार हरिरत्र सुतं वृषस्य ॥२९॥

ष्ठाननुवृत्तेश्चेत्युभयतोदोषोभवेदेव यतःतेनतस्मात्ज्ञातस्वधर्मानुक्तिदोषपरिहारार्थंस्वधर्मोवाच्यःज्येष्ठाननुवृत्तिदोषसद्भावादत्रस्थितिरुतनकार्या ॥ २८ ॥ तर्हि गृहत्याग
रूपस्वधर्मत्यागदोषःप्राप्तइत्यतआह । कीर्त्यर्थमिति । कीर्त्यर्थमेवपितृव्याज्ञापरिपालनरूपकीर्त्यर्थमेव निजधर्मपरिप्रहाणेप्राप्तेसति अग्रजस्यवचनात्प्रविहातुमेवस्व
धर्ममितिशेषः । भीमस्यउभयदोषस्थितौ पितृव्योल्लंघनेनकीर्तिनाशः गमनेस्वधर्मत्यागःइत्युभयंदोषंप्रतिहंतुं अन्यथानाशयितुं ईशःसमर्थोहरिःवृषस्ययमस्यसुतंज्येष्ठं
चकारेत्यन्वयः ॥ २९ ॥ ॥ ॥ ॥ ॥ ॥

वृषसुतस्यज्येष्ठकरणेप्रयोजनांतरमत्याह । हंतव्यतामिति । वधयायोग्यापराधिषु सुयोधनादिषु तदैवहंतव्यतामुपगतेषुसत्सुवधादन्योवधाभावःनिजधर्मोनैवभवेत् निजधर्मार्थंवध्यतामितिचेत्तन्नयुक्तं कुतःपूर्ववधेविषदानप्रथमापराधेनैववधेतेषांसमस्तशोदोषाःकरिष्यमाणाःदोषाःविवृर्तिंलोकप्रसिद्धिंनयांति अतःपूर्वंनहंतव्याःवधयोग्यानांचवधस्यस्वधर्मत्वात् तदकरणेस्वधर्महानिःस्यात्अग्रजवचनात् वधाभावेनस्वधर्महानिःस्यादितितदर्थंतोपिहरिःज्येष्ठंचकारेतिसंबंधः ॥ ३० ॥ क्षत्ता विदुरःसुवचःहितवाक्यं अंत्यजभाषयाम्लेंछभाषया । तदुक्तमादिपर्वणि । हितोपदेशश्चपार्थिधर्मराजस्यधीमतः । विदुरेणकृतोयत्रहितार्थंम्लेंछभाषयेति । अवदत्पांडवानामितिशेषः । दर्शनादिभाषासुअंतेजाताअंत्यजा अंतिमागुह्यभाषातथा गुह्यभाषान्यथाभवेदित्युक्तेः आपततःप्रतीतवाक्यार्थान्यार्थयुक्तागुह्यभाषा नतुम्लेंछभाषा नहिकक्षग्रशशि

हंतव्यतामुपगतेषु सुयोधनादिष्वन्यो वधान्नहि भवेन्निजधर्म एव ॥ पूर्वं वधेन हि समस्तश एव दोषास्तेषां प्रयांति विवृतिं च तदर्थतोपि ॥ ३० ॥ क्षत्ताथ चाह सुवचोंत्यजभाषयैव धर्मात्मजं विषहुताशभयात्प्रतीताः ॥ आध्वंत्विति स्म स तथेति वचोभ्युदीर्य प्रायाच्च वारणवतं पृथयानुजैश्च ॥ ३१ ॥ तान्हंतुमेव च तदा धृतराष्ट्रसूनुर्लाक्षागृहं सपादिकांचनरत्नगूढं ॥ कृत्वाभ्ययातयदमुत्र हि विष्णुपद्यां स्वामात्यमेव च पुरोचननामधेयं ॥ ३२ ॥ पूर्वं प्रहस्त इति यस्त्वभवत्सुपापः सोभ्येत्य पांडुतनयानभवच्च मंत्री ॥ दुर्योधनं प्रति विहाय भवत्सकशमायात इत्यवददेषु स कूटवाक्यं ॥ ३३ ॥ दिव्यं गृहं च भवतां हि मयोपनीतं प्रीत्यैव पापमनुयातुमहं न शक्तः ॥ युष्मासु धर्मधृतिमत्सु सदानिवत्स्ये इत्यूचिवांसममुमाहुरहो सुभद्रं ॥ ३४ ॥ ॥ ॥

रग्नश्चेत्यादिम्लेंछभाषा यत्तुभारतेहितार्थंम्लेंछभाषयेति तत्रम्लेंछअव्यक्तेशब्दइतिधातुव्याख्यानात् अर्थतोअव्यक्ताम्लेंछभाषयेतिज्ञेयं । प्रतीताःसावधानाःआध्वंभवद्भितेत्याह ॥ ३१ ॥ गूढंआच्छादितंअमुत्रवारणावतंप्रतिविष्णुपद्यागंगाप्रवाहेणेत्यर्थः ॥ ३२ ॥ पूर्वंयःसुपापःप्रहस्तइतिप्रहस्तनामराक्षसोभवेत् तमेवात्रपुरोचननामधेयंस्वामात्यंअभ्ययातयत्अयातयादितिसंबंधः । समंत्रीअभवत् पांडवानामितिशेषः । भवत्सकाशंयुष्मत्समीपंप्रतिआयातःआगतःयेषुपांडवेषुकूटवाक्यंकपटवाक्यं ॥ ३३ ॥ भवतांअर्थेअनुयातुं अनुकूल्येनवर्तितुं धृतिस्थैर्यंनिवत्स्येस्थास्यामि सुभद्रंअतिमंगलं अहोभवदागमनंआश्चर्यं ॥ ३४ ॥ ॥ ॥

वृषसुतोधर्मः तद्गंधतोलाक्षावसागंधतः वसयामेदसासमेतंजातुषगृहंजातुषालाक्षयानिर्मितंगृहंदृष्ट्वा । तंचपुरोचनंअतिपापंदृष्ट्वाज्ञात्वा । पवमानजातमवदत् । हेसुमुख भीमएषःपुरोचनःनोस्मान् प्रतीतःसावधानोभव ॥ ३५ ॥ क्षत्ताअखिललोकस्यवृत्तंप्रवृत्तिं नीतिबलतःस्वचारमुखतःस्वभृत्यमुखतश्चजानन्सन् । विषहुताशभयात्प्रतीताः आध्वमितिपूर्वोक्तंमदीयंवाक्यंउक्त्वास्मारयित्वा सुदूरंबिलंकुर्विंतिखननायऊचे । खनकमितिशेषः ॥ ३६ ॥ सचखनकःएवंविदुरोक्तप्रकारेणोक्त्वा वृत्तिच्छलेनप्राकारनिर्माणव्याजेनसुदूरंवर्त्मबिलमार्गंचक्रे । छिद्रार्थिनौअंतरंअन्वेषिणौ ॥ ३७ ॥ तस्याग्रजापुरोचनस्यज्येष्ठस्वसा इत्थंविचिंत्यविचार्य प्रसुप्तान्तान् पुरोचनादीन्नि

दृष्ट्वैव जातुषगृहं वसया समेतं तद्गंधतो वृषसुतः पवमानजातं ॥ तं चातिपापमवदत्सुमुखैष पापो हंतुं न इच्छति सदा भव च प्रतीतः ॥ ३५ ॥ क्षत्ताथ नीतिबलतोखिललोकवृत्तं जानन् स्वचारमुखतः खननाय चोचे ॥ उक्त्वैव धर्मतनयाय मदीयवाक्यं पूर्वोक्तमाशु कुरु तत्र बिलं सुदूरं ॥ ३६ ॥ चक्रे स चैवमथ वर्त्म वृत्तिच्छलेन द्वारं च तस्य स पिधाय ययौ गृहं स्वम् ॥ भीमः पुरोचन उभावपि तौ वधाय छिद्रार्थिनौ मिथ उतोषतुरब्दकार्धम् ॥३७॥ तस्याग्रजा च सहिता सुतपंचकेन तत्रागमत्तदनुमाहृतिरेष कालः ॥ इत्थं विचिंत्य स निशाम्य च तान्प्रसुप्तान् भ्रातॄंश्च मातरमथाशु बिले न्यधात्प्राक् ॥ ३८ ॥ तं भागिनेयसहितं भगिनीं च तस्य पापां ददाह सगृहां पवमानसूनुः ॥ साप्यागताहि गरलेन निहंतुमेतान् भीमस्य पूर्वभुजिनो न शशाक चैतत् ॥ ३९ ॥ तप्तं तया स सुतया च तपो नितांतं स्यां सूनुभिः सह बलाददितिस्तथाब्दात् ॥ तस्या अदाच्च गिरिशो यदि पुत्रकैस्त्वं युक्ता न यासि मृतिमेष वरस्तवेति ॥ ४० ॥ ॥ ॥ ॥

शाम्यदृष्ट्वा प्राक्गृहदाहात्पूर्वं ॥ ३८ ॥ भागिनेयसहितंभगिनीपुत्रसहितं एतान्पांडवान् गरलेनविषेणनिहंतुमागतापि सापुरोचनभगिनीपूर्वभुजिनःभ्रातृभोजनात्पूर्वंविषमिश्रखाद्यभोजनात्भीमस्यचजीर्णत्वात् । एतद्धननंकर्तुंनशशाकाहि विषेणेतिशेषः ॥ ३९॥ सपुत्रायास्तस्याहननेकारणमाह । तप्तमिति । बलात्बलात्कारेणसूनुभिः सुतैःसहअदितिःस्यांभविष्यइतिसुतानांदेवत्वंस्यादितियावत् । गिरिशःअब्दात्अब्दमतिक्रम्यसंवत्सरानंतरं प्रसन्नस्तस्यैअदात् ॥ ४० ॥ ॥ ॥

सभीमसेनःइदंसकलंपूर्वोक्तंजानन्नेवसुतैःसहकुबुद्धिंइमांतंपुरोचनंचहत्वा । अबलतांप्रयातान्अशक्तत्वंप्राप्तान् भ्रातॄन्मातरमुदूह्यचस्कंधेआरोप्य ॥ ४१ ॥ कुतस्तेषांभीतिरित्यतआह । ज्ञात्वेति । यदिअभियोधयेयुःयुद्धंकुर्युरित्यर्थः । तर्हि नोस्माकंकिंभवेदिति सुमहद्भयंभीमंऋतेविना पृथायास्तनयान्युधिष्ठिरादिचतुरोविवेश ॥ ४२ ॥ ननु पांडवानांपक्षेबलाढ्ये भीमेसहायेसतिकथंतान्भयंविवेशेत्यतआह । भीमइति । अभयोपिभीमःगुरुभिःभीष्मद्रोणादिभिः स्वमुखेनसाक्षात्स्वयंयुद्धंअप्रीयमाणःनेच्छतियतःअतःकिन्नोभवेदितिभयंपार्थान्विवेशेतिपूर्वेणान्वयः । उतधर्मजवाक्यहेतोः चलनादिप्रवृत्तौअशक्तान्इतोदूरंनयेतियुधिष्ठिरवाक्यनिमित्तात् तान्उरुउत्कृष्टंऊह्यैवस्कंधमारोप्यैवययावित्यर्थः ॥ ४३ ॥ सर्वेधर्मादयःदाशोदिताभिःदाशैःनाविकैःउदिताभिःउदितैरितिलिंगव्यत्यासः । विदुरपूर्ववचोभिःविदुरेणपांडवान्प्रतिविषहुताशभयात्प्रतीताआध्वमितिपूर्वमुक्तंतदादिवचोभिः विश्वासिताःविश्वासंप्रापिताःसंतः क्षत्राविदुरेणनिसृष्टंनिर्मितंजलप्रयाणंनावंअधिरुह्ययुनदींचतीर्त्वा । भीमपृष्ठम

जानन्निदं सकलमेव च भीमसेनो हत्वा सुतैः सह कुबुद्धिमिमां च तं च ॥ भ्रातॄंश्च मातरमुदूह्य ययौ बिलात्स निर्गत्य भीतिवशतो बलतां प्रयातान् ॥ ४१ ॥ ज्ञात्वा पुरोचनवधं यदि भीष्ममुख्यैर्वैचित्रवीर्यतनया अभियोधयेयुः ॥ किन्नो भवेदिति भयं सुमहद्विवेश भीमं ऋते च तनयान्सकलान्पृथायाः ॥ ४२ ॥ भीमोभयोपि गुरुभिः स्वमुखेन युद्धमप्रीयमाण उत धर्मजवाक्य हेतोः ॥ ऊह्यैव तानपि ययौ द्युनदीं च तीर्त्वा क्षत्रा निसृष्टमधिरुह्य जलप्रयाणम् ॥ ४३ ॥ विश्वासिता विदुरपूर्ववचोभिरेव दाशोदिताभिरधिरुह्य च भीमपृष्ठम् ॥ सर्वे ययुर्वनमथाभ्युदिते च सूर्ये दृष्ट्वैव सप्तमृतकान् रुरुदुश्च पौराः ॥ ४४ ॥ ॥ ॥ ॥ ॥

धिरुह्यवनंप्रतिययुरित्यन्वयः केचित्तुतर्हि किन्नोभवेदितिभयंधर्मादिचतुरोविवेश । अभयोपिभीमोगुरुभिःस्वमुखेनयुद्धमप्रीयमाणः उतअद्यधर्मजवाक्यहेतोःकीर्तिर्विनश्यति नोगुरुभिर्विरोधेयतःअतोगुरुभिर्युद्धंनकर्तव्यमिति धर्मजवाक्यनिमित्तात् युद्धमप्रीयमाणःतान्ऊह्यययौ । जलप्रयाणंअधिरुह्ययुनदींतीर्त्वेतिसंबंधः । दाशोदिताभिर्वाग्भिःविज्ञापितैःविदूरपूर्ववचोभिःपार्थायेइदंजलप्रयाणंस्थाप्यतइति एवंरूपैर्विश्वासिताःएवंवाग्भिर्विज्ञापितैरित्यध्याहारेणयोजनीयं । दाशोदिताभिर्विदुरपूर्ववचोभिरितिस्त्रीनपुंसकलिंगयोःकथंसामानाधिकरण्यमितिशंकानिरस्ताभवति । वैय्यधिकरण्येनयोजितत्वादित्याहुः । सूर्येअभ्युदितेसतिपौराःपुरवासिनःसप्तमृतकान्मृतान्दृष्ट्वाअरुदन्रोदनंचक्रुः ॥ ४४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

रोदनंविशदयति । हेति । एषःधृतराष्ट्रःपुरोचनेनपांडवानदहत् । हाकष्टमभूत् । अतएवकुमतिःसएषोपिपुरोचनः विषमःप्रतिकूलः ॥ ४५ ॥ निखिलेनसर्वेणप्रकारेण भीष्ममुख्याःहेतिकष्टमितिऊचुः । वैचित्रवीर्यतनयाःसुयोधनाद्याःमृषैवदुःखंविनारुरुदुः । क्षत्तामृषैवपार्थजीवनंज्ञात्वापिदुर्योधनादीन्वंचयितुंरुरोदेत्यर्थः । अथमृतिश्रवणानंतरं । कर्मस्नानतिलांजल्यादिक्रियांचक्रुः ॥ ४६ ॥ अंबुजपत्रनद्धंकमलपत्रेस्थापितंपानीयंउद्धृत्यआनयदितिशेषः । स्वपतःसुतान्स्वान्भ्रातॄन्दूराद्ददर्शे ॥ ४७ ॥ अभियापयतेअभ्ययापयत् । साहिडिंबीशुभंरूपंसुंदररूपंएत्य साक्षान्मुख्यतयाशुभलक्षणानांसारंस्वरूपं ॥ ४८ ॥ सापूर्वंशच्याअपराशक्रदयितैवसुरेंद्रलोकश्रीरेवइंद्र

हा पांडवानदहदेप हि धार्तराष्ट्रो धर्मस्थितान्कुमतिरेष पुरोचनेन ॥ सोप्येषदग्ध इह दैववशात्सुपापः कोनाम सत्सु विषमः प्रभवेत्सुखाय ॥ ४५ ॥ पौरेभ्य एव निखिलं ननु भीष्ममुख्या वैचित्रवीर्यसहितास्तु निशम्य हेति ॥ ऊचुः सुदुःखितधियोथ सुयोधनाद्याः क्षत्तामृषैव रुरुदुर्युयुजुश्च कर्म ॥ ४६ ॥ भीमोप्युदूह्य वनमाप्य हिडिंबकस्य भ्रातॄन् पृथां च तृषितैरभियाचितश्च ॥ पानीयमुत्तरपुटेंबुजपत्रनद्धं दूरादुदूह्य ददृशे स्वपतोथ तांश्च ॥ ४७ ॥ रक्षार्थमेव परिजाग्रति भीमसेने रक्षः स्वसारमभियापयते हिडिंबीं ॥ सा रूपमेत्य शुभमेव ददर्श भीमं साक्षात्समस्तशुभलक्षणसारभूतम् ॥ ४८ ॥ सा राक्षसीं तनुमवाप सुरेंद्रलोकश्रीरेव शक्रदयिता त्वपरैव शच्याः ॥ शापात्स्पृधा पतिमवाप्य च मारुतं सा प्राप्तुं निजां तनुमयाचत भीमसेनम् ॥ ४९ ॥ तां भीम आह कमनीयतनुं न पूर्वं ज्येष्ठादुपैमि वनितां नहि धर्म एषः ॥ सा चाह कामवशगा पुनरेतदेव स्वावेशयुग्घि मरुदग्र्यपरिग्रहस्य ॥ ५० ॥ ॥

लोकालंकारभूतैवसतीस्पृधाशच्यास्पर्धयापतिंशक्रमवाप शच्याःशापात्राक्षसींतनुंअवाप । एवंराक्षसीभूतासाभीमसेनंमारुतंमरुद्देवावतारंअवगम्य निजांतनुंप्राप्तुंअयाचत । त्वदंगसंगमेदेहीत्ययाचत ॥ ४९ ॥ भीमःकमनीयतनुं कमनीयामनोहरातनुर्यस्याःसातथातां नोपैमिनप्राप्नुयामित्याह । सापुनरेतदेवप्रार्थनारूपंवाक्यमेवाह । अतएवकामवशगाकामवशंप्राता मरुदग्र्यपरिग्रहस्यमरुदग्र्यस्यमुख्यप्राणस्य परिग्रहोभार्याभारतीतस्याःस्वावेशयुक्सम्यगावेशयुक्ताहि ॥ ५० ॥ ॥

साभारतीअमुष्यैहिडिंब्यैस्वावेशंआत्मदयितस्यवायोःसंगमेनांगसंगेनशापाद्विमुक्तिंवरंअदात् तेनकारणेनसापवमानसूनोःसकाशात् निजांतनुंस्वस्वरूपंआप ॥ ५१ ॥ नैजंस्वकीयज्ञानंअभिदर्शयितुंज्ञापयितुं तेतुभ्यं अर्थ्यंवांछितंप्रकाशेषिकरिष्यसि ॥ ५२ ॥ न्ययुङ्क्तप्रेषयामास । साहिडिंबःहिडिंबींस्वभक्षणार्थंपांडवान्नेतुंन्ययुङ्क्त साच समीचीनंरूपंवेषंकृत्वा पांडवान्प्रतिगता ततःकोपात्तामपिहंतुंभीमंप्रतिहिडिंबःसमासदत् ॥ ५३ ॥ सातुभीमंशरणंजगामेत्यर्थः ॥ अवितुंरक्षितुंअपकृष्यनीत्वा ॥ ५४ ॥

सा भारतीवरमिमं प्रददावमुष्यै स्वावेशमात्मदयितस्य च संगमेन ॥ शापाद्विमुक्तिमतितीव्रतपःप्रसन्ना तेनाप सा निजतनुं पवमानसूनोः ॥ ५१ ॥ ज्ञानं च नैजमभिदर्शयितुं पुनश्च प्राहेश्वरोखिलजगद्गुरुरिंदिरेशः ॥ व्यासस्वरूप इह चेत्य परश्च एव मां ते प्रदास्यति तदा प्रकरोषि मेर्थ्यं ॥५२॥ काले तदैव कुपितः प्रययौ हिडिंबो भीमं निहंतुमपि तां च निजस्वसारं ॥ भक्षार्थमेव हि पुरा स तु तां न्ययुङ्क्त नेतुं च तानथ समासददाशु भीमम् ॥ ५३ ॥ सा भीममेव शरणं प्रजगाम तां च भ्रातॄंश्च मातरमथावितुमभ्ययात्तम् ॥ भीमः सुदूरमपकृष्य सहोदराणांनिद्राप्रभंगभयतो युयुधेऽमुना च ॥ ५४ ॥ तौ मुष्टिभिस्तरुभिरश्मभिरद्रिभिश्च युध्द्वा नितांतरवतः प्रतिबोधितांस्तान् ॥ संचक्रतुस्तदनुसोदरसंभ्रमं तं दृष्ट्वैव मारुतिरहन्नुरसि स्म रक्षः ॥ ५५ ॥ तद्भीमबाहुबलताडितमीशवाक्यात्सर्वैरजेयमपि भूमितले पपात ॥ वक्त्रस्रवद्बहुलशोणितमाप मृत्युं प्रायात्तमोंधमपि नित्यमथ क्रमेण ॥ ५६ ॥ हत्वैव शर्ववरराक्षितराक्षसं तं सर्वैरवध्यमपि सोदरमातृयुक्तः ॥ भीमो ययौ तमनु सा प्रययौ हिडिंबी कुंतीं युधिष्ठिरमथास्यकृते ययाचे ॥ ५७ ॥ ताभ्यामनूक्तमपि यन्न करोति भीमः प्रादुर्बभूव निखिलोरुगुणाभिपूर्णः ॥ व्यासात्मको हरिरनंतसुखांबुराशिर्विद्यामरीचिविततः सकलोत्तमोलम् ॥ ५८ ॥ ॥ ॥

अश्मभिःपाषणैःनितांतरवतःउच्चध्वनितःप्रतिबोधितान् प्रतिबुद्धांश्चक्रतुः । तदनुप्रतिबोधनानंतरं । तंसोदरसंभ्रमंभ्रातृभयं । संभ्रमश्चादरेभयइत्यमरः । रक्षःरक्षसःउरसिवक्षसिअहन्जघान ॥ ५५ ॥ तद्रक्षःवक्त्रस्रवद्बहुलशोणितं मुखात्स्रवत्बहुरक्तंयस्यतत्तथा रक्षःमृत्युंआप ॥ ५६ ॥ अस्यकृतेभीमेनस्वपरिग्रहणार्थमित्यर्थः ॥ ५७ ॥ अनूक्तंअन्वनुपुनःपुनःउक्तमपि यदानकरोतितदाहरिःप्रादुर्बभूवेतिसंबंधः ॥ ५८ ॥ ॥ ॥ ॥

परमातिहार्दप्रोत्फुल्लपद्मनयनेनपरमेण अतिहार्देनअतिस्नेहेन प्रोत्फुल्लपद्मवत्विकसितकमलवत् स्थितेनयनेनेत्रेयस्यसतथोक्तः । तेनहरिणासंक्षालिताः संतःउपविष्टाः ॥ ५९ ॥ नतःप्रणतःसुरसद्मशोभांस्वर्लोकालंकारभूतां एषासुतेजातेपति सहसुतासुतेनसहिता प्रतियातुगच्छतु ॥ ६० ॥ ओ मित्युदीर्यंतथास्त्वित्युक्त्वातथैवचकार । तांपरिगृहीतवानित्यर्थः । ऊह्यविबुधाचरितप्रदेशान्देवसंचारयुक्तप्रदेशान् । देवोद्यानवनानीत्यर्थः ॥ ६१ ॥ साहिडिंबीनंदनादिषुनंदनाख्यइंद्रस्यवनंतदादिवनेषु तेनभीमेनसाकंविहृत्यक्रीडित्वा सायंसायंकाले इहवनेएवंक्रीडतोस्तयोःहिडिंबीभीमयोःवत्सरार्धःषण्मासपरिमितःकालोययौ सूनुःजातः ॥ ६२ ॥ सकइत्यतआह । देवइति ।

दृष्ट्वैव तं परममोदिन आशु पार्थाः मात्रा सहैव परिपूज्य गुरुं विरिंचेः ॥ संक्षालिताश्च हरिणा परमातिहार्दप्रोत्फुल्लपद्मनयनेन तदोपविष्टाः ॥ ५९ ॥ तान् भक्तिनम्रशिरसः समुदीक्ष्य कृष्णो भीमं जगाद नत आशु हिडिंबया च ॥ एतां ग्रहाण युवतीं सुरसद्मशोभां जाते सुते सहसुता प्रतियातु चैषा ॥ ६० ॥ एवं ब्रुवत्यगणितोरुगुणे रमेशे ओमित्युदीर्य कृतवांश्च तथैव भीमः ॥ स्कंधेन चोह्य विबुधाचरितप्रदेशान् भीमं प्रयात्युदय एव रवेर्हिडिंबी ॥ ६१ ॥ सा नंदनादिषु वनेषु विहृत्य तेन सार्थं प्रयाति पृथया सहितांश्च पार्थान् ॥ एवं ययावपि तयोरिह वत्सरार्धो जातश्च सूनुरतिवीर्यबलोपपन्नः ॥६२ ॥ देवोपि राक्षसतनुर्निर्ऋतिः पुरा य आवेशयुक्त च गिरिशस्य घटोत्कचाख्यः ॥ पूर्वं घटोपममुष्य शिरो बभूव केशा निमेषत उदासुरतो हि नाम ॥ ६३ ॥ जाते सुते समयतो भगवत्कृतात्स भीमो जगाद ससुतां गमनाय तां च ॥ स्मृत्याभियान उभयोरपि सा प्रतिज्ञां तेषां विधाय च ययौ सुरलोकमेव ॥ ६४ ॥ व्यासोपि पांडुतनयैः सहितो बकस्य रौद्राद्दराज्ञयवधापगतस्य नित्यं ॥ यातो वधाय परमागणितोरुधामा पूर्णाक्षयोरुसुख आशु तदैकचक्राम् ॥ ६५ ॥ ॥ ॥ ॥ ॥

पुरादेवोपिराक्षसतनुर्निर्ऋतिःसघटोत्कचाख्यःसूनुर्जातइतिसंबंधः । घटोत्कचशब्दप्रवृत्तिनिमित्तमाह । पूर्वमिति । पूर्वंउत्पत्तिसमयेएवअमुष्यसूनोःघटोपमंघटसदृशं शिरोबभूव । निमेषतःनिमेषपरिमितकालेनकेशाउदासुःउद्भूताः यतोतःघटइवउत्कचश्चेतिघटोत्कचइतिनामबभूव ॥ ६३ ॥ भगवत्कृतात्पूर्वमुक्तात्समयतःकालनियमात् स्मृत्यास्मरणेनउभयोःमातृपुत्रयोःअभियानेआगमनविषये ॥ ६४ ॥ एकचक्रांनगरं [illegible] ॥ ६५ ॥ ॥

कालेनिर्गमनकालेअनुशास्यआज्ञाप्य अनूच्यअधीत्य ॥ ६६ ॥ [illegible]तस्तु प्रतिहुंकृतेनभक्षितगृहेहुंकारेणसिद्धिंनिर्मितं [illegible]
ज्ञानस्यआशंकया ॥ ६७ ॥ एकदोष्णाएककरेणयतःअतःकुंभकारेणकुशलेन भांडपात्रं वणिक्मूलधनेपात्रेभांडंमूषाश्वमूषयोरितिविश्वः ॥ ६८ ॥ तेधर्मस्यसुनि
यतेः अतिनियतत्वात् बलतश्चबोधःपांडवाःएकचक्रनगर्यांतिष्ठतीतिपरिज्ञानंभूयात् । ततोबोधात्त्वसातिष्ठ नतुव्रजेथाःमागच्छ ॥६९॥ स्वधर्मपरिरक्षणहेतुमौनाःअय.

तान्ब्राह्मणस्य च गृहे प्रणिधाय कृष्णः शिष्या ममैत इति विप्रकुमाररूपान् ॥ आयामि काल इतिताननुशास्य चायात्ते तत्र वासमथ चक्रुरनूच्य वेदान् ॥ ६६ ॥ भिक्षामटत्सु सततं प्रति हुंकृतेन भीमो विशां सदन एव गृहप्रमाणम् ॥ भांडं कुलालविहितं प्रतिगृह्य गच्छत्याशंकयावगमनस्य तमाह धर्मः ॥ ६७ ॥ स्थूलं हि सद्म पृथिवीसहितं त्वरक्ष उद्धृत्य वन्हिमुखतस्तु तदेकदोष्णा ॥ भांडं तदर्थं मुरुकुंभकरेण दत्तं भिक्षां च तेन चरसि प्रतिहुंकृतेन ॥ ॥ ६८ ॥ धर्मस्य ते सुनियतेर्बलतश्च बोधो भूयात्सुयोधनजनस्य ततो भयं मे ॥ मात्रासहैव वस फल्गुनपूर्वकैस्त्वमानीतमेव परिभुंक्ष्व न तु व्रजेथाः ॥ ६९ ॥ इत्युक्त आशु स चकार तथैव भीमस्तेपि स्वधर्मपरिरक्षणहेतुमौनाः ॥ भिक्षां चरंत्यथ चतुर्ष्वपि तेषु यातेष्वेकत्र मातृसहितः स कदाचिदास्ते ॥ ७० ॥ तत्काल एव रुदितं निजवासहेतोर्विप्रस्य दारसहितस्य निशम्य भीमः ॥ स्त्रीबालसंयुतगृहे शिशुलालनादौ लज्जेदिति स्म जननीमवदन्न चागात् ॥ ७१ ॥ जानीहि विप्ररुदितं कुत इत्यतश्च योग्यं विधास्य इति सा प्रययौ च शीघ्रं ॥ सा संवृतैव सकलं वचनं गृहेस्य शु[illegible] विप्रवर आह तदा प्रियां सः ॥ ७२ ॥ ॥ ॥ ॥

चनंस्वधर्मःतद्रक्षणहेतुतःभिक्षांदेहीतिवच[illegible]रहिताःएकत्रएकस्थलेआस्तेआसीत् ॥ ७० ॥ निजवासहेतोःस्ववासस्यकारणभूतस्यविप्रस्यस्त्रीबालसंयुतगृहेशिशुलालनादौ प्रवर्तितुं अन्यपुरुषसंदर्शनेनस्त्रीलज्जेतूलज्जासहिताभविष्यतीतिहेतोःजननीमवदत् । गच्छेतिशेषः । स्वयंनचागत् ॥ ७१ ॥ कुतःकस्माद्धेतोःविप्ररुदितंविप्ररोदनंकिमितिजानीहि । अतःअस्यरोदनस्ययोग्यंप्रतीकारंविधास्येकरोमीत्यवददितिसंबंधः । संवृतालीनाअस्यविप्रस्यगृहेउक्तंवचनं ॥ ७२ ॥ ॥

साक्षाद्गिरिसन्निभभक्षभोज्यःअनुपचरितपर्वतसमानभक्षभोज्यः पुंसापुरुषेणसहितानडुहाअनडुद्भ्यांसहितेनअनसाशकटेनचयुक्तःकरःदातव्यः नोस्माकंतुविशेषेणपुमानेवनास्तिअन्नादिकंतिष्ठतीतिभावः । अप्रददतांपुरुषमप्रयच्छतांनःसमस्तनाशःस्यात् स्त्रीपुत्रादीन्भक्षयिष्यतीत्यर्थः ॥ ७३ ॥ अन्यत्रस्वग्रामादन्यत्रमनोगतंमनसांगीकृतं तेनकारणेनं नभवान्तंमागच्छेत्यर्थः ॥७४ ॥ तवार्थेत्वदर्थेसतीप्रचरितेसतीभिःपतिव्रताभिः प्रचरितेप्राप्तेलोकेअहंस्यांभूयासं तद्दतेत्वदर्थंदेहत्यागाभावात् अधश्चअधोलोकेस्यामित्यर्थःअर्थःप्रयोजनं ॥ ७५ ॥ कुलद्वयस्यमातापितृकुलद्वयस्यतारिणीनरकात्तारिणीउदिता सखाहजायेतिश्रुत्यनुवादेनजायासखेतिवचनंश्रुतिगमित्युक्तासुतश्चआत्मैव आत्मावैपुत्रनामासीतिश्रुत्यनुवादः तेनकारणेनजीवनहेतुतःस्वप्राणरक्षणार्थंधीपूर्वकंबुद्धिपूर्वकंअशनकेनामनुष्यःअशनंभक्ष्यंयस्यासौअशनः

दातव्य एव हि करोद्य हि राक्षसस्य साक्षाद्बकस्य गिरिसन्निभभक्षभोज्यः ॥ पुंसानसा च सहितानडुहा पुमांस्तु नैवास्ति नो प्रददतां च समस्तनाशः ॥ ७३ ॥ अन्यत्र ग्राम इति पूर्वमुदाहृतं मे नैतत्प्रिये तव मनोगतमास ते न ॥ यास्यामि राक्षसमुखं स्वयमेव मर्तुं भार्यैनमाह न भवानहमत्र यामि ॥ ७४ ॥ अर्थे तवाद्य तनुसंत्यजनाद्दहं स्यां लोके सती प्रचरिते तदृते त्वधश्च ॥ कन्याह चैनमहमेमि न कन्ययार्थ इत्युक्त आह धिगिति स्म स विप्रवर्यः ॥ ७५ ॥ कन्योदिता बत कुलद्वयतारिणीति जाया सखेति वचनं श्रुतिगं सुतश्च ॥ आत्मैव तेन ननु जीवनहेतुतोहं धीपूर्वकं अशनके प्रतिपादयामि ॥ ७६ ॥ एवं रुदत्सु सहितेषु कुमारकोस्य प्राह स्वहस्तगतृणं प्रतिदर्श्य चैषां ॥ एतेन राक्षसमहं निहनिष्य एवेत्युक्ते सुवाक्यमनु सा प्रविवेश कुंती ॥ ७७ ॥ पृष्टस्तयाह स तु विप्रवरो बकस्य वीर्यं बलं च दितिजारिभिरप्यसह्यम् ॥ संवत्सरत्रययुते दशके करं च प्रातिस्विकं दशमुखस्य च मातुलस्य ॥ ७८ ॥ ॥ ॥ ॥ ॥ ॥ ॥

स्वार्थेकप्रत्ययः । तस्मिन्नशनकेराक्षसे नप्रतिपादयामि भार्याकन्यासुतान् नप्रयच्छामि ॥७६॥ सहितेषुमिलितेषु अस्यविप्रस्य एषांपित्रादीनां एतेनतृणेन सुवाक्यमनु शुभवाक्यमनु शकुनरूपवाक्यंश्रुत्वैव कुंतीविप्रगृहंप्रविवेशेत्यर्थः ॥७७॥ पृष्टस्तयाहेत्यत्रतयाआहेतिपदच्छेदः । दितिजारिभिःदितिजाःदैत्यास्तेषांअरयःशत्रवोदेवास्तैरपिअसह्यंसोढुमशक्यं संवत्सरत्रययुतेदशकेअतीतेसति प्रातिस्विकंप्रतिप्रतिदातव्यंकरंचाह । त्रयोदशवर्षानंतरं एकैकेनगृहस्वामिनाएकैकस्मिन् दिवसेअन्नात्मकंकरं दातव्यमित्याहेत्यर्थः ॥ ७८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

कुंती रामायणेश्रीरामाविर्क्रातिकाले रामेभुवितिष्ठतीत्यर्थः । रघुवरोरुशरातिभीतं रघुवरस्यरघुनाथस्यउरुशरैरुत्तमबाणैरतिभीतं अत्यंतंभीतियुक्तं अत एवबिलेषुविष्टंप्रविष्टं लीनमित्यर्थः । अथरामावतारानंतरं । नृपान्वशमाशुकृत्वा तैर्नृपैर्भीत्यैवराक्षसभयादेव तदनुदत्तकरं तस्यराक्षसस्य अनुकूलत्वेनदत्तकरंतंबकंश्रुत्वा ननंदेत्यन्वयः ॥७९॥ कुंतीकिमर्थंननंदेत्यतआह । एवमिति । एवमुक्तप्रकारेणइहपुर्यांतमनुभीममनु प्रगृहीतधर्माःप्राप्तधर्माःवयंकीर्तिंधर्मंचयास्यामइतिमत्वाननंदेतिपूर्वेणान्वयः । धरासुरंवि प्रम् ॥८०॥ अद्यनरवैरिमुखायराक्षसमुखाययातुगच्छतु । वध्ययावधेनतवमनःअतिधीरंअत्यंतंधैर्ययुक्तंइत्यर्थः । हंतआश्चर्यं ॥ ८१ ॥ दिक्पतिभिःइंद्रादिलोकपालैःअ

श्रुत्वा तमुग्रबलमत्युरुवीर्यमेव रामायणे रघुवरोरुशरातिभीतम् ॥ विष्टं बिलेष्वथ नृपान्वशमाशु कृत्वा भीत्यैव तैस्तदनुदत्तकरं ननंद ॥ ७९ ॥ एवं बलाढ्यमममुमाशु निहत्य भीमः कीर्तिं च धर्ममधिकं प्रतियास्यतीह ॥ सर्वे वयं च तमनु प्रगृहीतधर्मा यास्याम इत्यवददाशु धरासुरं तं ॥ ८० ॥ संति स्म विप्रवर पंचसुता ममाद्य तेष्वेक एव नरवैरिमुखाय यातु ॥ इत्युक्त आह स न ते सुतवध्ययाहं पापो भवामि तव हंत मनोतिधीरम् ॥८१॥ उक्तैनमाह च पृथा तनये मदीये विद्यास्तिदिक्पतिभिरप्यविषह्यरूपा ॥ उक्तोपि नो गुरुभिरेष नियुंक्त एतां वध्यस्तथापि न सुरासुरपालकैश्च ॥ ८२ ॥ उक्त्वैवमेत्य निखिलं च जगाद भीममुद्धर्ष आस स निशम्य महास्वधर्मं ॥ प्राप्तं विलोक्य तमतीव विघूर्णनेत्रं दृष्ट्वा जगाद यमसूनुरुपेत्य चान्यैः ॥ ८३ ॥ मातः किमेष मुदितो नितरामिति स्म तस्मै च सा निखिलमाह स चाब्रवीत्ताम् ॥ कष्टं त्वया कृतमहो बलमेव यस्य सर्वे श्रिता वयममुं च निहंसि भीमम् ॥ ८४ ॥ ॥ ॥ ॥ ॥ ॥

विषह्यरूपासोढुमशक्यरूपागुरुभिरुक्तोपिप्रेरितोपि एतांविद्यांनोनियुंक्तेनप्रयोजयति तथापिअप्रयोगेपिस्वबाहुबलेनापिसुरासुरपालकैर्देवश्रेष्ठैः ॥ ८२ ॥ भीमेभीमाय निशम्यश्रुत्वा मात्रोक्तमितिशेषः । उद्धर्षःउत्कृष्टसंतोषःकुतइत्यतआह । प्राप्तमहास्वधर्मंदुष्टवधरूपंविलोक्याविचार्य यमसूनुरन्यैरर्जुनादिभिरुपेत्य स्ववासगृहमितिशेषः अतीवअत्यंतंविघूर्णनेत्रं हर्षाद्विकसितनेत्रंदृष्ट्वा जगाद ॥ ८३ ॥ अमुंचएतादृशंभीमंविहंसिहंतुमिच्छसि ॥ ८४ ॥ ॥ ॥

यद्वाहुर्वीर्यपरमाश्रयतः यस्यभीमस्यबाहुपराक्रमस्यपरमाश्रयतः मुख्याश्रयत्वात् । कयाबुद्ध्याप्रस्थाप्यतेप्रेष्यते ॥ ८५ ॥ सुधीरबुद्धिः अतिधैर्ययुक्तस्वभावाकुंती अयंभीमः असुरयोनिभिरसुरैःप्रसूत्यांप्रसूतिसमये ॥ ८६ ॥ मरुत्स्वयमेवनरात्मकएषोमनुष्यावताराभूद्धि । आप्तबलःप्राप्तपूर्णबलःइमंहंतुंकोनामसमर्थः । नकोपीत्यर्थः । इति चेत् एवमस्त्वितितामवदत् । कृतोरुभोगःकृतःअभ्यंगमालाविलेपनादिभिः उरुभोगोयेनसःशकटेनजगाम ॥ ८७ ॥ सपायससुभक्षपयोघटाद्यैः पायसेनसुभक्षैःपयोघटैः दुग्धपूर्णघटैःसहितासपायससुभक्षपयोघटास्तएवआद्याएषांदधिमधुघृतपूर्णघटानांतेसपायससुभक्षपयोघटाद्यास्तैस्तथोक्तैः युक्तंअन्नराशिंनरभक्षितुःराक्षसस्यस्पर्शात्पु

यद्बाहुवीर्यपरमाश्रयतो हि राज्यमिच्छाम एव निखिलारिवधं स्वधर्मम् ॥ सोयं त्वयाद्य निशिचारमुखाय मातः प्रस्थाप्यते वद ममाशु कयैव बुद्ध्या॥८५॥ इत्युक्तवंतममुमाह सुधीरबुद्धिः कुंती न पुत्रक निहंतुमयं हि शक्यः ॥ सर्वैः सुरैरसुरयोनिभिरप्यनेन चूर्णीकृतो हि शतशृंगगिरिः प्रसूत्याम् ॥ ८६ ॥ एष स्वयं हि मरुदेवनरात्मकोभूत्को नाम हंतुमिममाप्तबलो जगत्सु ॥ इत्येवमस्त्विति स तामवदत्परेद्युर्भीमो जगाम शकटेन कृतोरुभोगः ॥ गत्वा त्वरन् बकवनस्य सकाशमाशु भीमः सपायससुभक्षपयो घटाद्यैः ॥ युक्तं च शैलनिभमुत्तममन्नराशिं स्पर्शात्पुरैव नरभक्षितुरत्तुमैच्छत् ॥ ८८ ॥ तेनैव चान्नसमितौ परिभुज्यमान उत्पाट्य वृक्षममुमाद्रवदाशु रक्षः ॥ वामेन मारुतिरपोह्य तदा प्रहारान् हस्तेन भोज्यमखिलं सहभक्ष्यमादत् ॥८९॥ पीत्वा पयो त्वरित एनमवेक्ष्यमाण आचम्य तेन युयुधे गुरुवृक्षशैलैः ॥ तेनाहतोथ बहुभिर्गिरिभिर्बलेन जग्राह चैनमपि भूमितले पिपेष ॥९०॥

रैव पूर्वं अत्तुंअन्नंभोक्तुंऐच्छत् ॥८८॥ समितौसमूहे परिभुज्यमानेपरितःभुक्तवति उत्पाट्य उन्मूल्य अमुंभीमं प्रति आद्रवत् अभ्यधावत् ॥ वामेनहस्तेनप्रहारान्आपोह्य परिहृत्य सहभक्ष्यंभक्ष्यैःसहितंभोज्यंआदत्बुभुजे ॥ ८९ ॥ अत्वरितःवेगरहितःभयरहितइतिभावः । ततोभीमःशनैर्भुक्त्वातदन्नं गुरुगर्भेतिभारते । आचम्यहस्तमुखप्रक्षालनस्योपलक्षणमेतत् । तेनबकेनएनंराक्षसमवेक्ष्यमाणःअपश्यत् गुरुवृक्षशैलैःगुरवःस्थूलाःतैःबलेनबाहुबलेन पिपेषमर्दयामास ॥ ९० ॥ ॥

तस्यबकस्यपादंपादतलेनआक्रम्य परंअपरंपादं हियस्माद्विष्णुद्विट् तस्माच्छनैःक्रमेणअनिवृत्तिपुनरावृत्तिरहितम् ॥ ११ ॥ जगदंतकंजगद्विनाशकंभौमस्यनरकासुरस्यापिवशेनास । पूर्वंरामावतारेभरतस्यश्रीरामानुजस्यराज्ञोपिवशेनास । अग्रेन्यधापयत् । स्थापयामास शकटस्येतिशेषः ॥ १२ ॥ पुरःपुर्याःद्वार्येवद्वारेपार्श्वसमीपंभीतियुताःतेभ्रातरःधर्मादयः तदनुभीमस्यगमनानंतरं । अस्यपरमंकर्मश्रुत्वा मात्रासमेतास्तुतुषुः । पुरस्थाइत्यस्योत्तरश्लोकेनान्वयः ॥ १३ ॥ उरुस्थूलंराक्षसशरीरं हेतुभिःपाषाणक्षेपणादिभिःक्रमशःपरीक्ष्यमृतंचज्ञात्वा तस्यविप्रस्यभीमसेनस्थितगृहस्वामिनोवचनादपिभग्नंहतंनिशम्यश्रुत्वातुतुषुः । तस्मैइत्यस्योत्तरेणान्वयः ॥ १४ ॥

आक्रम्य पादमपि पादतलेन तस्य दोर्भ्यां प्रगृह्य च परं विददार भीमः ॥ मृत्वा स चोरुतम एव जगाम पापो विष्णुद्विडेव हि शनैरनिवृत्तिचोग्रम् ॥११॥ हत्वा तमक्षतबलो जगदंतकं स यो राक्षसो न वश आस जरासुतस्य ॥ भौमस्य पूर्वमपि नो भरतस्य राज्ञो भीमो न्यधापयदमुष्य शरीरमग्रे ॥१२॥ द्वार्येव तत्प्रतिनिधाय पुरः स भीमः स्नात्वा जगाम निजसोदरपार्श्वमेव ॥ श्रुत्वास्य कर्म परमं तुतुषुः समेता मात्रा च ते तदनुभीतियुताः पुरस्थाः ॥१३॥ दृष्ट्वैव राक्षसशरीरमुरुप्रभीता ज्ञात्वैव हेतुभिरथ क्रमशो मृतं च ॥ विप्रस्य तस्य वचनादपि भीमसेनभग्नं निशम्य परमं तुतुषुश्च तस्मै ॥१४॥ अन्नात्मकं करममुष्य च संप्रचक्रुः सोप्येनमाशु नरसिंहवपुर्धरस्य ॥ चक्रे हरेस्तदनु सत्यवतीसुतस्य विष्णोर्हि वाक्प्रणुदिताः प्रययुस्ततश्च ॥१५॥ उत्पत्तिपूर्वककथां द्रुपदात्मजायाः व्यासो ह्यनूच्य जगतां गुरुरीश्वरश्च ॥ यातेत्यचोदयदथाप्यपरे द्विजाग्र्यास्तान् ब्राह्मणा इति भुजिर्भवितेति चोचुः ॥१६॥

अमुष्यबकस्यअन्नात्मकंकरंतस्मैभीमायसंप्रचक्रुःददुरित्यर्थः ॥ सोपिनृसिंहवपुर्धरस्यश्रीनृसिंहस्वरूपिणोहरेःएनंकरंपूजार्थंचक्रे । ददावित्यर्थः । विष्णोर्व्यासस्यवाक्प्रणुदिताःवाचासंतोषिताःततःएकचक्रतः ॥ १५ ॥ अनूच्यउक्त्वाअचोदयत्प्रेरयामास । अथअपरेद्विजाग्र्यास्तान्पांडवान्ब्राह्मणाइतिज्ञात्वाभुजिर्भोजनंभविताभविष्यति । इत्यूचुःद्रुपदगृहेइतिशेषः ॥ १६ ॥ ॥ ॥ ॥ ॥

द्रौपदीस्वयंवरंवक्ष्यन्तत्कर्तृद्रुपदस्याभिप्रायमाह । पूर्वमित्यादिना । जतुगेहदग्धान्लाक्षागृहेमृतान्इमान्पार्थान्श्रुत्वा अतिदुःखितमनाःसन् । पुनरेवपार्थायदातुंकन्या
द्रुपदस्य भूयादित्यभिप्रायेण याजोपयाजमुखनिःसृतःयाजोपयाजयोःमुखाभ्यांनिसृतःनिर्गतःएषःमंत्रःअसत्यताहोंव्यर्थत्वंनार्हतिइतिनिश्चित्य एषुजीवनंमेने ॥ ९७ ॥
निलीनरूपाःगुप्तवेषाइतिस्म अस्मात्कारणात्फल्गुनकारणेन अर्जुनार्थंकृतप्रतिज्ञाकारणेन । सराजाईश्वरात् अन्यैरधार्यंअनारोपितमितिभावः । पार्थादितिशेषः ।
चक्रेसंपादयामास ॥ ९८ ॥ कृष्णःपार्थान्मृतान्निशम्य पार्थजीवनादिकंसंपूर्णनैजपरिबोधतःपरिपूर्णस्वाभाविकज्ञानाज्जानन्नपिअथकतिपयकालानंतरमेव तत्काले
स्वयंवरविघोषणकाले कुल्यहेतोःजगामस्म । हस्तिनपुरमितिशेषः । मृतस्यपुंसोबंधूनांसांत्वनंकुल्यम् ॥९९॥ धृतराष्ट्रपुत्रान्संवंचयन् भीष्मादिभिःसहतदनुसारिकथा

पूर्वं हि पार्थेत इमान् जतुगेहदग्धान् श्रुत्वातिदुःखितमनाः पुनरेव मंत्रः ॥ याजोपयाजमुखनिःसृत एवमेष नासत्य
तार्ह इति जीवनमेषु मेने ॥ ९७ ॥ यत्र क्वचित्प्रतिवसंति निलीनरूपाः पार्था इति स्म सतु फल्गुनकारणेन ॥ चक्रे
स्वयंवरविघोषणमाशु राजा त्वन्यैरधार्यं धनुरीश्वराच्च चक्रे ॥ ९८ ॥ तत्काल एव वसुदेवसुतोपि कृष्णः संपूर्णनैज
परिबोधत एव सर्वं ॥ जानन्नपि स्म हलिना सहितो जगाम पार्थान्निशम्य च मृतानथ कुल्यहेतोः ॥ ९९ ॥ संप्रा
प्य हस्तिनपुरं धृतराष्ट्रपुत्रान् संवंचयन् तदनुसारिकथाश्च कृत्वा ॥ भीष्मादिभिः परिगतो प्रियवज्जगाम द्वारव
तीमुदितपूर्णसुनित्यसौख्यः ॥ १०० ॥ तस्यांतरे हृदिकसूनुरनंतरं स्वं श्वाफल्किबुद्धिबलमाश्रित इत्युवाच ॥ सत्रा
जिदेष हि पुरा प्रतिजज्ञ एनामस्मत्कृते स्वतनयां मणिना सहैव ॥ १०१ ॥ ॥ ॥ ॥ ॥

श्चकृत्वा भवतांकष्टमभूदित्याद्युक्तेतिभावः । भीष्मादिभिःपरिगतःकिंचिद्दूरं अनुगतः । अप्रियवत्दुःखितइवजगाम । परिगताप्रियवदितिपाठे भीष्मादिभिःसहप्रात
प्रियवदित्यर्थः । दुःखाभावेकोहेतुरित्यतआह । उदितेति ॥ १०० ॥ तस्यहास्तिनपुरद्वारवत्योर्गमनस्यच अंतरेमध्येहृदिकसूनुःकृतवर्मास्वंस्वकीयंअनंतरंअनुजं शत
धन्वानंश्वाफल्किःअक्रूरः तस्यबुद्धिबलंआश्रितइतिउवाच । किमिति । एषःसत्राजित्सत्राजिद्राजापुराआदौएनांसत्यभामांअस्मत्कृतेअस्मदर्थेप्रतिजज्ञेप्रतिज्ञाम
करोदित्यर्थः । दातुमितिशेषः ॥ १०१ ॥ ॥ ॥ ॥ ॥ ॥

नोस्मान् अवमत्यतिरस्कृत्य नौआवांउपयाहि कृष्णस्यविरोधेदानपतिनाअक्रूरेणसहसाह्यंसाहाय्यमित्यर्थः । एमि ॥ १०२ ॥ शत ग्न्वनःनियकर्मणिकथंप्रवृत्तिरभूदि त्यतआह । सहीति । सतुपूर्वदेहेयतोदैत्यःअतःतन्निंद्यकर्मअकरोत् । अथसत्राजिद्वधानंतरं । आनंदसंविदपिसुखज्ञानवत्यपिसत्यभामातद्देहंसचासौदेहश्चततद्देहः तंमृतशरीरंपितुरितिशेषः । तिलजेतिलतैले । अस्यनिक्षिप्य ॥१०३॥ स्वांपुरीमायातेआगच्छतिसतितु एतस्मिन्नेवक्षणेतंमहोत्सवंनिशम्यतत्पुरींपांचालपुरीमगात् ॥१०४॥

सर्वांश्च नः पुनरसाववमत्य कृष्णायाद्दात्सुतां जहि च तं निशि पापबुद्धिं ॥ आदाय रत्नमुपयाहि च नौविरोधे कृष्णस्य दानपतिना सह साह्यमेमि ॥१०२॥ इत्युक्त आशु कुमतिः स हि पूर्वदेहे दैत्योतस्तदकरोदथ सत्यभामा ॥ आनंदसंविदपि लोकविडंबनाय तद्देहमस्य तिलजे पतिमभ्युपागात् ॥ १०३ ॥ श्रुत्वा तदीयवचनं भगवान् पुरीं स्वामायात एव तु निशम्य महोत्सवं तम् ॥ पांचालराजपुरुषोदितमाशु वृष्णिवर्यैरगान्मुसलिना सह तत्पुरीं च ॥ ॥ १०४ ॥ भीमोपि रुद्रवररक्षितराक्षसं तं हत्वा तृणोपमतया हरिभक्तवंद्यः ॥ उष्याथ तत्र कतिचिद्दिनमच्युतस्य व्यासात्मनो वचनतः प्रययौ निजैश्च ॥ १०५ ॥ मांगल्यमेतदतुलं प्रतियात शीघ्रं पांचालकान्परमभोजनमत्र सिध्येत् ॥ विप्रैरितस्तत इतीरितवाक्यमेते शृण्वंत एव परिचक्रमुरुत्तराशाम् ॥ १०६ ॥ षण्णां च मध्यगमुदीर्णभुजं विशालवक्षःस्थलं बहुलपौरुषलक्षणं च ॥ दृष्ट्वैव मारुतिमसावुपलप्स्यतीह कृष्णामिति स्म च वचः प्रवदंति विप्राः ॥ १०७ ॥ रात्रौ दिवा च सततं पथि गच्छमानाः प्रापुः कदाचिदथ विष्णुपदीं निशायां ॥ सर्वांश्च रक्षितुमगादिह पृष्ठतश्च भीमोग्र एव शतमन्युसुतोंतरेन्ये ॥ १०८ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तंबकंतत्रउष्यारि त्वा ॥ १०५ ॥ एतस्मांगल्यमुत्सवःअतुलंभवतिपांचालकान् पांचालविषयान्प्रति यातगच्छध्वं अत्रपरमंभोजनंसिध्येत्प्राप्स्यते इतस्ततःविप्रैरीरितंवाक्यंशृण्वंतएवतेपार्थाः परिचक्रमुःजग्मुः ॥ १०६ ॥ असौभीमःकृष्णांउपलप्स्यतिप्राप्स्यति ॥ १०७ ॥ इहगंगायांशतमन्युसुतःइंद्रपुत्रःअन्येधर्माद्याअंतरेमध्येजग्मुः ॥ १०८ ॥ ॥ ॥ ॥ ॥ ॥

उल्मुकधरेज्वलत्काष्ठधरेऽर्जुनेअर्धरात्रेगंगांप्राप्तेसत्येव इहगंगायांगंधर्वराजश्चित्ररथःक्षत्रात्मजाइतिज्ञात्वा विप्ररहितान्दृष्ट्वा । धर्षयितुमगाद्विप्ररहितान्दृष्ट्वाइत्यनेनावि
प्रेषुसत्सुगंधर्वयक्षादीनांबाधनसामर्थ्याभावउक्तः ॥ १०९ ॥ मर्त्यसंचरणायमनुष्यसंचरणाय वःयुष्मान्हंतास्मि । हंतुंप्राप्तइत्यर्थः । तेसकाशात् अस्त्रविदुषांअस्त्रज्ञाना
मस्माकं भयंनास्ति ॥ ११० ॥ तेबलंअस्त्रविदिअस्त्रज्ञेप्रयुक्तंफेनवत् नार्थप्रदंव्यर्थंभवतीत्यर्थः ॥ १११ ॥ अस्यरथोदग्धःचशब्दात्स्वयंचदग्धइत्यर्थः । अग्निनापरिगृ

प्राप्ते तदोल्मुकधरेर्जुन एव गंगां गंधर्वराज इह चित्ररथोर्धरात्रे ॥ दृष्ट्वैव विप्ररहितानुदकांतरस्थः क्षत्रात्मजा
इति हि धर्षयितुं स चागात् ॥ १०९ ॥ हंतास्मि वो ह्युपगतानुदकांतमस्या नद्याश्च मर्त्यचरणाय निषिद्धकाले ॥
इत्थं वदंतममुमाह सुरेंद्रसूनुर्गंधर्व नास्त्रविदुषां भयमस्ति तेद्य ॥ ११० ॥ सर्वं हि फेनवदिदं बहुलं बलं ते ना
र्थप्रदं भवति चास्त्रविदि प्रयुक्तं ॥ इत्युक्तवंतममुमुत्तमयानसंस्थो बाणान् क्षिपन्नभिससार सुरेंद्रभृत्यः ॥ १११ ॥
आग्नेयमस्त्रमभिमंत्र्य तदोल्मुके स चिक्षेप शक्रतनयोस्यरथश्च दग्धः ॥ तं चाग्निना परिगृहीतमभिप्रगृह्य केशेषु
संप्रविचकर्ष सुरेंद्रसूनुः ॥११२॥ पार्थेन संधर्षितः शरणं जगाम धर्मात्मजं तमपि सोथ निजास्त्रमुग्रं ॥ संजह्र एव
तत आस च नामतोसावंगारवर्ण इति वर्णविपर्ययेण ॥ ११३ ॥ गंधर्वमुल्बणसुरक्ततनुः स भूत्वा स्वर्णावदात
उत पूर्वमुपेत्य सख्यं ॥ पार्थेन दुर्लभमहास्त्रमिदं ययाचे जानन्नपि स्म न हि तादृशमेष वेद ॥ ११४ ॥ ॥

हीतंपरिवेष्टितंतमेवसंचकर्ष रथस्तुदग्धएवेतिभावः ॥ ११२ ॥ तमपिअर्जुनमपिसोर्जुनःसंजह्रेसंहरणंचक्रे । असौगंधर्वःततःअग्न्यस्त्रप्रतापात्जातेनवर्णविपर्ययेण
पूर्ववर्णवैपरीत्येननाम्नाअंगारवर्णइत्यभवत् ॥ ११३ ॥ पूर्ववर्णवैपरीत्यमेवोपपादयति । गंधर्वइति । पूर्वस्वर्णावदातोपिसुवर्णवत्शुद्धोपि गौरवर्णइत्यर्थः । उल्बणसुर
क्ततनुर्भूत्वा इदमग्न्यस्त्रंगंधर्वःजानन्नपि अग्न्यस्त्रमितिशेषः । तादृशंनहिवेद । अर्जुनेनयथाज्ञातंतथानवेदेत्यर्थः ॥ ११४ ॥ ॥ ॥

तदेवविवृणोति । विद्येति । हियस्मात्सुरेंद्रसूनौविद्याआग्नेयास्त्रविद्यासुशिक्षिततमाअतिशयेनसुशिक्षिता अतःअसौअर्जुनस्तांविद्यांअस्यगंधर्वस्यअवदत् । असावपिगंधर्वोपिगंधर्वगांअदृश्यविद्यांअस्मैअर्जुनायकालतःकालांतरेअन्वगनुकूलतया अर्जुनानुसारेणेत्यर्थः । अवदत् । तदानीमेवकस्मान्नावददित्यतआह । पश्चादिति । पश्चात्कालांतरेगृहीष्यामीति पुरुहूतसुतस्यवाक्यात् कालांतरेददाविति भावः ॥ ११५ ॥ अर्जुनःपश्चादितिकिमर्थमववददित्यतआह । आधिक्यतइति । संविदःविद्यायाः आधिक्यतएवोत्तमत्वादेव अत्रगंधर्वस्वविद्ययोःनिमयंदानादानरूपंव्यत्यासंनैवेच्छतिस्म । कुतःयतःउभेविद्येसाम्येसमेस्यातांस्वविद्यांदत्वा तदानीमेवगंधर्वविद्यापरिग्रहणे उभयोःविद्ययोःसाम्यमेवस्यात् । तच्चन । स्वविद्यायाआधिक्यात्तस्मात्तदानीमेवगंधर्वविद्यांनाग्रहीदिति भावः ॥ सोर्जुनःतस्मैगंधर्वायतांस्वविद्यांधर्मार्थमेवपरिदायदत्वा का

विद्या सुशिक्षिततमा हि सुरेंद्रसूनौ तामस्य चावददसावपि कालतोस्मै ॥ गंधर्वगामवददन्वगदृश्यविद्यां पश्चादितिस्म पुरुहूतसुतस्य वाक्यात् ॥ ११५ ॥ आधिक्यतः स्वगतसंविद एव साम्ये नैवेच्छतिस्म निमयं स धनंजयोत्र ॥ धर्मार्थमेव स तु तां परिदाय तस्मै कालेन संविदममुष्य च धर्मतोयात् ॥ ११६ ॥ पार्थेन सोपि बहु लाप्य कथाः कथित्वा धौम्यस्य संग्रहणमाह पुरोहितत्वे ॥ दास्यामि दिव्यतुरगानिति सोर्जुनाय वाचं निगद्य दिवमारुहदप्यगुस्ते ॥ ११७ ॥ ते धौम्यमाप्य च पुरोधसमुत्तमज्ञं विप्रात्मजोपमतया विविशुः परं च ॥ पांचालकस्य निखिलां ददृशुश्च तत्र मूर्धाभिषिक्तसमितिं समलंकृतां च ॥११८॥ राजन्यमंडलमुदीक्ष्य सुपूर्णमत्र कृष्णां प्रगृह्य सहजः प्रगृहीतमालां ॥ तेषां च मध्यमगमत्कुलवीर्यसंपद्युक्तां विभूतिमथ चाह समस्तराज्ञां ॥ ११९ ॥

लेनकालांतरेअमुष्यगंधर्वस्यसंविदंविद्यांधर्मतोधर्मार्थतःअयात्प्राप ॥ ११७ ॥ सगंधर्वःपुरोहितत्वेविषये धौम्यस्यधौम्याचार्यस्यग्रहणंअंगीकारमाह । निगद्यउक्त्वादिवमंतरिक्षंआरुहत्आरुरोह । तेपिपार्थाअपिअगुःययुः ॥ ११७ ॥ उत्तमज्ञंउत्तमश्चासौज्ञश्चेति तंधौम्यंपुरोहितंआप्य । विप्रात्मजोपमतयाविप्रकुमाराणांसादृश्येनविप्रवेषेणेत्यर्थः । पांचालकस्यपुरंविविशुः । तत्रद्रुपदस्यसभायांमूर्धाभिषिक्तसमितिंराज्ञांसमितिंमंडलं ॥ ११८ ॥ सहजोधृष्टद्युम्नःसुपूर्णंसंपूर्णंराजन्यमंडलंराजसमूहंउदीक्ष्य कृष्णांप्रगृह्यतेषांराज्ञांमध्यमगमत्प्राप । समस्तराज्ञांकुलवीर्यसंपद्युक्तांविभूतिमैश्वर्यंआह । द्रौपद्यैइतिशेषः ॥ ११९ ॥ ॥ ॥

सहुताशनांशः अग्न्यवतारोधृष्टद्युम्नः तान्नृपतीन्प्रदर्श्य कृष्णायैइतिशेषः । निधायस्थापयित्वासभायामितिशेषः । दीप्यद्धुताशनवपुःदीप्यमानाग्निवत्त्वपुर्यस्यसतथोक्तः ।
घनतुल्यघोषःमेघेनतुल्योगंभीरोघोषोध्वनिर्यस्यसतथोक्तः नृपतीनाभाष्यस्वस्याभिमुखीकृत्वोच्चैराह ॥ १२० ॥ हेनरेंद्रवीराः तरूपरिस्थमत्स्यावभासं वृक्षोपरिस्थितमत्स्य
स्यप्रतिबिंबं येनपुरुषेणअनुयास्यतिप्राप्स्यति ॥ १२१ ॥ उद्धतमदाउत्कृष्टगर्वाःनैजंस्वकीयंअस्त्रबलंबाहुबलंबहुउत्कृष्टमिति अभीक्षमाणाःअभिमन्यमानाःमिथःस्पर्धंतः

तांश्च प्रदर्श्य सकलान्स हुताशनांशश्चापं च तत्प्रतिनिधाय सपंचबाणं ॥ प्राहाभिभाष्य सकलान्नृपतिनथोच्चैर्दीप्य
द्धुताशनवपुर्घनतुल्यघोषः ॥ १२० ॥ एतेन कार्मुकवरेण तरूपरिस्थमत्स्यावभासमुदके प्रतिवीक्ष्य येन ॥ एतैः
शरैः प्रतिहतो भवतीह मत्स्यः कृष्णानुयास्यति तमद्यनरेंद्रवीराः ॥१२१॥ इत्यस्य वाक्यमनु सर्वनरेंद्रपुत्रा उत्त
स्थुरुद्धतमदाश्चलकुंडलास्याः ॥ अस्त्रं बलं च बहु नैजमभीक्षमाणाः स्पर्धंत एव च मिथः समलंकृतांगाः ॥१२२॥
केचिन्निरीक्ष्य धनुरेत्य न मे सुशक्यमित्येव चापययुरन्यउत प्रचाल्य ॥ तत्राससाद शिशुपाल उरुप्रतापः संगृह्य
तत्समधिरोपणयत्न आसीत् ॥ १२३ ॥ माषांतराय स चकर्षयदेव कोट्या उन्नम्य तत्प्रतिजघान तमेव चाशु ॥
अन्यत्र फल्गुनत एतदशक्यमेवेत्यंजो गिरिशवरतः स ययौ च भग्नः ॥ १२४ ॥ मद्रेश एत्य चकृषे स्थविरोपि
वीर्याच्चेदीशतोप्यधिकमेव स मुद्गमात्रे॥शिष्टेमुना प्रतिहतः प्रययावशक्यं मत्वात्मनस्तदनु भूपतयो विषण्णाः १२५

अहंपूर्वमहंपूर्वमितिस्पर्धांकुर्वंतः उत्तस्थुरुत्थिताः ॥ १२२ ॥ अपययुःपरावृत्त्यययुःतत्रतेषुमध्येतद्धनुःसंगृह्य सम्यगधिरोपणेयत्नःप्रयत्नोयस्यसतथा आसीत् ॥१२३॥
कोट्याःधनुषःकोट्याःमाषांतरायमाषपरिमाणव्यवधानप्रदेशायकर्मणिचतुर्थी । यदाचकर्षतदातद्धनुरुन्नम्यदीर्घीभूय एतद्धनुःफल्गुनतोन्यत्रान्यस्य अशक्यमेवेतिगिरी
शवरतःशिशुपालःअंजःसम्यक्भग्नःसन्ययौ ॥१२४॥स्थविरोपिवृद्धोपिमद्रेशःशल्यःचेदीशतोपि अधिकमेववीर्याच्चकृषे । तदनुतयोर्गमनानंतरं विषण्णाःविषादंप्राप्ताः १२५

सन्नेषुश्रांतेषुअवज्ञयातिरस्कारेण चलपादतलःचलेचंचलेपादतलेयस्यसतथा। बलेनदर्पेणचकर्ष सर्षपमितेसर्षपपरिमितेअवकाशे ॥ १२६ ॥ अस्थिरपदस्थितिमात्रहेतोःअस्थिराभ्यांपदाभ्यांस्थितिः अवस्थानं तावन्मात्रादेवनिमित्तात् अमुष्यजानुनीधरणींययतुः । नत्वयंपपातेतिभावः ॥ जडतांनिश्चलतांभ्रांतत्वमित्यर्थः ॥ १२७ ॥ प्रायःबाहुल्येन प्रायोबाहुल्यशब्दयोरितियादवः । दुर्योधनार्थंस्वस्यसूतत्वाद्रामात् परशुरामादुपात्तशुभशिक्षितमात्रतःप्राप्तंसमीचीनंशिक्षितंशिक्षातन्मात्रेणअंतंअग्रं ॥ ॥ १२८ ॥ विहतेप्रतिहतेतस्मिन्कर्णेनिवृत्तेपरावृत्तेसति प्रतिमानंसदृशंतत्रसदसिधनुरारोपणाशक्तौ मानहानिभियाभयेन विनिवारयत्सुसत्सु नोत्थातव्यमितीतिशेषः ॥

सन्नेषु भूपतिषु मागध आससाद सोवज्ञयैव बलवीर्यमदेन दृप्तः ॥ चापं चकर्ष चलपादतलो बलेन शिष्टे स सर्षपमितेभिहतोमुनैव ॥ १२६ ॥ जानुन्यमुष्य धरणीं ययतुस्तदैव दर्पेण चास्थिरपदस्थितिमात्रहेतोः ॥ रौद्राद्रात्स जडतां गमितोथ राजा राज्ञां मुखान्यनभिवीक्ष्य ययौ स्वराष्ट्रं ॥ १२७ ॥ प्रायो गतास्तदनु भूपतयोथ कर्णो दुर्योधनार्थमनुगृह्य धनुश्चकर्ष ॥ रामादुपात्तशुभशिक्षितमात्रतोसौ रोमावशिष्टमकरोद्धनुषोंतमाशु ॥ १२८ ॥ तस्मिंश्च तेन विहते प्रतिसन्निवृत्ते भीमार्जुनौ द्विजसदस्युपसन्निविष्टौ ॥ उत्तस्थतू रविशशिप्रतिमानरूपौ विप्रेषु तत्र च भिया विनिवारयत्सु ॥ १२९ ॥ विप्राश्च केचिदतियुक्तमिमौ च वीरौ देवोपमाविति वचो जगदुस्ततस्तौ ॥ दृष्ट्वैव कृष्णमुखपंकजमाशु चापसान्निध्यमाययतुरुत्तमवीर्यसारौ ॥ १३० ॥ तत्रार्जुनः पवनजात्प्रियतोप्यनुज्ञामादाय केशवमजं मनसा प्रणम्य ॥ कृत्वा गुणान्वितमदो धनुरश्रमेण यंत्रांतरेण सशरैरधुनोच्च लक्ष्यं॥१३१॥

॥ १२९ ॥ अतियुक्तंएतयोरुत्थानमितिशेषः । यस्माद्देवोपमौजगदुःऊचुः । ततोद्विजोक्त्यनंतरं तौभीमार्जुनौचापसान्निध्यंकार्मुकसमीपंआययतुःप्राप्तौ ॥ १३० ॥ अर्जुनस्तत्रलक्ष्यहननविषये प्रियतःप्रियात्पवनजाद्भीमात् अदःधनुःगुणान्वितंज्यासहितंकृत्वा अश्रमेणअप्रयासेन यंत्रांतरेणयंत्रस्यअंतरेणछिद्रेणजलयंत्रोपरिस्थितछिद्रेणेत्यर्थः । लक्ष्यंतद्रूपरिस्थितमत्स्यावभासं जलेप्रतिवीक्ष्य शरैःपंचबाणैःलक्ष्यंचमत्स्यरूपंअधुनोत्विव्याध ॥ १३१ ॥ ॥ ॥

अस्यार्जुनस्याविदधेन्यधात् अंसइतिशेषः । क्षुब्धःक्षोभंप्राप्तइत्यर्थः । नृपवराब्धिःनृपाख्यमहासमुद्रः राज्ञांबहुत्वात् महासमुद्रइतिभावः । इमौभीमार्जुनौअधावदभ्य धावत् ॥ १३२ ॥ हेवृष्णिवराःअस्माकंगतिःगमनंकेवलंद्रष्टुं नतुकन्याकायाअर्थेहियस्मात्तस्मात् इहस्वयंवरेचार्पनस्पृशंतु इतिवरचक्रधरस्यश्रीकृष्णस्याज्ञयैव यदुप्रवीराःइहस्वयंवरे अत्रअधुनाधनुरारोपणेलिप्सामपिइच्छामपिनैवचक्रुरित्यन्वयः ॥ १३३ ॥ समितिंसमूहंआरुज्यभंक्त्वा सर्वनृपतीनभ्यभितोऽभिमुखेऽतिष्ठत् ॥ १३४ ॥

कृष्णा तदास्य विदधे नवकंजमालां मध्ये च तां प्रतिनिधाय नरेंद्रपुत्रौ ॥ भीमार्जुनौ ययतुरच्युतमाभिनम्य क्षुब्ध स्तदा नृपवराब्धिरिमावधावत् ॥ १३२॥ द्रष्टुं हि केवलगतिर्नतुकन्यकाया अर्थेन चायमिह वृष्णिवराः स्पृशंतु ॥ इत्याज्ञयैव वरचक्रधरस्य लिप्सामप्यत्र चक्रुरिह नैव यदुप्रवीराः ॥ १३३ ॥ भीमस्तु राजसमितिं प्रतिसंप्रयातां दृष्ट्वैव योजनदशोछ्रयमाशु वृक्षं ॥ आरुज्य सर्वनृपतीनभितोऽभ्यतिष्ठद्दृष्ट्वा पलायनपराश्च बभूवुरेते ॥ १३४॥ भीमोयमेष पुरुहूतसुतोन्य एते पार्था इतिस्म हलिने हरिरभ्यवोचत् ॥ दृष्ट्वैव सोपि मुदमाप शिनेश्च पौत्रः खड्गं प्रगृह्य हर्षात्परिपुप्लुवेत्र १३५॥ प्रीतेषु सर्वयदुषु प्रपलायितेषु दुर्योधनादिनृपतिष्वखिलेषु भीमात् ॥ कर्णोऽभ्ययाद्धरिहयात्मजमाशु मद्रराजो जगाम पवनात्मजमेव वीरः १३६ ॥ विप्रेषु दंडपटदर्भमहाजिनानि कोपात्क्षिपत्सुन विनाशनमत्र भूयात् ॥ क्षत्रस्य वैरत इति द्रुपदे च कृष्णां विप्रांश्च याचति स मारुतिरार शल्यं॥ १३७ ॥ ॥

अयंभीमःएषःपुरुहूतसुतोर्जुनः अन्येअवशिष्टाएतेत्रयःपार्थिवाःअभ्यचोदयत् । उवाच । सोपिबलोपिमुदमाप शिनेःपौत्रश्चसात्यकिःमुदमाप । खड्गंप्रगृह्यहर्षात् अत्रकृष्णसन्निधौपरिपुप्लुवेननर्तेतिभावः ॥ १३५ ॥ हरिहयात्मजंहरिहयःइंद्रःतस्यात्मजंपुत्रं ॥ १३६ ॥ विप्रेषुदंडादीनिकोपात्क्षिपत्सुसत्सु अत्रमांगल्यकर्माणि वैरतो विप्रवैरतःक्षत्रस्यक्षत्रियजातेःविनाशनंनाशःनभूयात् । कृष्णांयाचतेशंआरप्राप ॥ १३७ ॥ ॥ ॥ ॥

असौभीमः वृक्षंप्रतिनिधायभुवीतिशेषः । गगनेनिधायउत्तीर्य बंधुस्ततःनाकुलस्याप् भुविशनैःअधस्तेनादधात्स्थापयामास । सशल्यःतस्यभीमस्य ॥ १३८ ॥ तेनधनुषा स्वयंवरेआत्मनाऽऽरोपितधनुषासोपिकर्णोपिअन्नयुद्धेअर्जुनेनाहुतं ....... ॥ अनुपमौअसदृशौचिरमस्यत मितिक्रियापदं । बाणान्क्षिप्त मित्यर्थः । असुक्षेपणइतिधातुः ॥ १३९ ॥ किंवभाषइत्यतआह । त्वमित्यादिना । संपूर्वंफल्गुनःकिमथवा हरिहयइंद्रोवा द्विजानांसत्तमोवा मूर्तोदेहधर्मःफल्गुना द्यन्यतमोभविष्यासि मर्त्यइतिपाठे मनुष्यःअन्यउक्तेभ्योन्यःपुनान्मेप्रमुखतःमदग्रेस्थितिंनेष्टेस्थातुंनसमर्थः । योवाकोपित्वदुक्तेषु योवाकश्चनअस्मि । यदितेक्षमंयोद्धुं

वृक्षं त्वसौ प्रतिनिधाय च मद्रराजं दोर्भ्यां प्रगृह्य जवतो गगने निधाय ॥ बंधुस्ततो भुवि शनैरदधात्स तस्य विज्ञाय वीर्यमगमन्निजराजधानीं ॥ १३८ ॥ पार्थोपि तेन धनुषा युयुधे स्म कर्णं सोप्यत्र बाहुबलमाविरमुत्र चक्रे ॥ तौधन्विनावनुपमौ चिरमस्यतां च सूर्यात्मजोत्र वचनं व्यथितो बभाषे ॥ १३९ ॥ त्वं फल्गुनो हरिहयो द्विजस त्तमो वा मूर्तं न मे प्रमुखतः स्थितिमन्य ईष्टे ॥ यो वास्मि कोपि यदि ते क्षमस्त्र बाणान्मुंचान्यथेहि रणतस्त्वि ति पार्थ आह ॥ १४० ॥ कार्यं न मे द्विजवरैः प्रतियोधनेनेत्युक्त्वा ययौ रविसुतश्च सुयोधनाद्यैः ॥ नागाह्वयं पुरमथद्रुपदात्मजां तामादाय चार्जुनयुतः प्रययौ स भीमः ॥ १४१ ॥ अथोश्विपुत्रसहितः स तु धर्मसूनुः प्राया त्कुलालगृहमन्वपि भीमपार्थौ ॥ भिक्षेतितैरभिहिते प्रजगाद कुंती भुंक्ध्वं समस्तश इति प्रददर्श कन्यां ॥१४२॥ प्रामादिकं च वचनं न मृषा तयोक्तं प्रायो हि तेन कथमेतदितिस्म चिंता ॥ तेषां बभूव वसुदेवसुतो हरिश्च तत्राजगाम परमेण हि सौहृदेन ॥ १४३ ॥ ॥ ॥ ॥ ॥

शक्तिश्चेत् । क्षितिक्षांत्योःक्षमायुक्तेक्षमंशक्तेहितेत्रिष्वित्यमरः तर्हि अयबाणानमुंच अन्यथासामर्थ्याभावेरणतःएहिगच्छइतिपार्थआह ॥ १४० ॥ प्रतियोधनेनयुद्धेन कार्यंन प्रयोजनंनेत्यर्थः ॥ १४१ ॥ भीमपार्थावपिअनुययतुः तैःपार्थैःभिक्षेतिअस्माभिर्भिक्षाप्राप्तेत्यभिहितेउक्तेसति कुंतीसमस्तशःभुंक्ध्वंइतिजगाद । कन्यांददर्श कुंतीतिशेषः ॥ १४२ ॥ तयोक्तंप्रामादिकंच अज्ञानपूर्वकमपिवचनं प्रायोमृषाअसत्यंन नभवतीत्यर्थः हियतस्तेनकारणेन एतत्समस्तैरस्माभिरेकजायापरिग्रहणंकथं भवेदितितेषांचिंताबभूवस्म । तत्रकुलालगृहंप्रतिसौहृदेनःस्नेहेन ॥ १४३ ॥ ॥ ॥ ॥ ॥

संभाष्यसंभाषणंकृत्वा अमासह ॥ १४४ ॥ सधृष्टद्युम्नःभिक्षान्नभोजिनइमान्पार्थान्उतोतत्र पार्थसमीपेअतितृप्तहृदयां अतितृप्तंअत्यंतंप्रसन्नंमनोयस्याःसातथा तां भगिनीमपश्यत्गभीरंगंभीरं ॥१४५॥ तस्यधृष्टद्युम्नस्यजनितुर्जनयितुः ॥१४६॥ विप्रादियोग्यपृथगुक्तपदार्थजातैः विप्रादयोब्राह्मणाद्याश्चत्वारोवर्णाःतेषांयोग्यास्तत्तत्कर्मांगभूताःदर्भादिब्राह्मणवर्णयोग्यं । शस्त्रकवचादिक्षत्रिययोग्यं । धनादिवैश्ययोग्यं । लांगलादिकंशूद्रस्येतिपृथगुक्ताएतेब्राह्मणस्ययोग्याः एतेक्षत्रियस्ययोग्याइत्यादिपृथगुक्तायेपदार्थाःतेषांजातैःसमूहैःपूर्णान्गृहान्तेभ्यःदिदेश । तत्रतेषुमध्येआयुधादिपूर्णगृहं आदिशब्देनकवचादयःक्षत्रिययोग्यमितियावत्॥१४७॥चेष्टा क्षत्रिययोग्यगति

संभाष्य तैः स भगवानमितात्मशक्तिः प्रायान्निजां पुरममा यदुभिः समस्तैः ॥ ज्ञातुं च तान्निशि स तु द्रुपदः स्व
पुत्रं प्रस्थापयत्स च निलीन इमानपश्यत् ॥ १४४ ॥ भिक्षान्नभोजिन उतो भगिनीं निजां च तत्रातितृप्तहृदया
मथ युद्धवार्तां ॥ तेषान्निशम्य नदतां घनवद्गभीरं क्षत्रोत्तमा इति मतिं स चकार वीरः ॥ १४५ ॥ प्रातस्तु तस्य
जनितुर्वचसा पुरोधास्तान् प्राप्य मंत्रविधिना मरुदात्मजेन ॥ संपूजितोतिविदुषा प्रतिगृह्य तांश्च प्रावेशयन्नृपतिगे
हममैव मात्रा ॥ १४६ ॥ तानागतान्समभिपूज्य निजात्मजां च विप्रादियोग्यपृथगुक्तपदार्थजातैः ॥ पूर्णान् गृहां
श्चतुर एव दिदेश राजा तत्रायुधादिपरिपूर्णगृहं च ते ऽगुः ॥ १४७ ॥ चेष्टास्वराकृतिविवक्षितवीर्यशौर्यप्रागल्भ्य
पूर्वकगुणैः क्षितिभर्तृपुत्रान् ॥ विज्ञाय तान् द्रुपद एत्य च धर्मसूनुं पप्रच्छ कोसि नरवर्य वदस्व सत्यं ॥ १४८ ॥
स प्राह मंदहसितः किमिहाद्य राजन् पूर्वं हि वर्णविषयेन विशेष उक्तः ॥ पुत्रीकृते तव सुतेन तु लक्ष्यवेध उ
क्तो नरेंद्रसमितौ स कृतोप्यनेन ॥ १४९ ॥ ॥ ॥ ॥ ॥

व्यापारविशेषः । स्वरःगंभीरत्वादिविशेषयुक्तः । आकृतिःक्षत्रियत्वज्ञापकविशेषयुक्ताविवक्षितं वक्तुमिष्टंवचनाभिप्रायविशेषः वीर्यशौर्ययोःप्रागल्भ्यंप्रौढता एतत्पूर्वकगुणैःक्षितिभर्तृपुत्रान्राजपुत्रान्धर्मसूनुमेत्य सत्यंवदस्वेतिपप्रच्छ ॥१४८॥ मंदहसितःईषद्धास्यमुखइत्यर्थः । सयुधिष्ठिरःप्राह किमिति । हेराजन् मेअद्यइहकोसीतिप्रश्नकरणे किंकिंप्रयोजनमित्यर्थः । अथक्षत्रियायदातुंनेच्छसिचेत्तत्राह । पूर्वमिति । पूर्वंउद्घोषणकाले वर्णविषयेविशेषोनोक्तः इदानींवर्णविषयप्रश्नस्तेअयुक्तइतिभावः । तवपुत्रीकृतेतवसुतेननरेंद्रसमितौराजसन्निधावित्यर्थः । लक्ष्यवेधस्तूक्तःसलक्ष्यवेधःअनेनममभ्रात्राकृतइतियोजना । तस्मात्प्रश्नकरणंअयुक्तमितिभावः ॥ १४९ ॥

राजापृथयासहितंतंयुधिष्ठिरंपुनर्वदेतिययाचे एषःधर्मः पृथापिसर्वमवदतां सराजातेनवयंपार्थाइतिवाक्येनतुष्टःसन् इहकन्यादानविषयेकृतकृत्यआसंजातोस्मीति जगाद ॥ १५० ॥ पार्थार्थमेवअर्जुनार्थमेवएषःप्रयत्नःत्वंवागृहाण फल्गुनोवागृण्हातु । अन्योवाभीमादिषुमध्ये एकोवेत्यर्थः । सुतायाःकरंगृण्हातु । इमंद्रुपदं सर्वेगृण्हीमः इतिमेमनसिप्ररूढं निश्चितमित्यर्थः ॥ १५१ ॥ अत्रसर्वग्रहणेप्रमाप्रमाणंनोपलभ्यते तथापिप्रमाणाभावेपिमेहृदिमनसिसर्वेगृण्हीम इतितत्रमनसिप्रतीतोप्यधर्मःकिंन स्यादित्यतआह । धर्माचलेति । ममममतिर्धर्माचलाहियस्मात्तस्मात् ममप्रतिभातमेवमानंप्रमाणं । सुतेनधृष्टद्युम्नेनसहनैवैच्छत् । पंचभ्योदातुमितिशेषः । अत्रपांचाल नगरंप्रति ॥ १५२ ॥ समःविषमत्वरहितः षम्अवैकल्यइतिधातोर्विच्प्रत्ययेसमइतिरूपं । तेपांडवाद्याःसज्जनाः । यद्वा समस्तइत्येकवचनांतमपिसहिताः मिलिताइ

एवं ब्रुवाणमथ तं पृथया सहैव राजा वदेति पुनरेव ययाच एषः ॥ सर्वं पृथाप्यवदतां स च तेन तुष्टो वाचं जगाद कृतकृत्य इहासमद्य ॥ १५० ॥ पार्थार्थमेव हि मयैष कृतः प्रयत्नस्त्वं फल्गुनोन्य उत वाद्य करं सुतायाः ॥ गृण्हात्वितीरित इमं स तु धर्मसूनुराह स्म सर्व इति मे मनसि प्ररूढं ॥ १५१ ॥ नात्र प्रमा मम हृदि प्रतिभात्यथापि धर्माचला मम मतिर्हि तदेव मानं ॥ इत्युक्तवत्यपि सहैव सुतेन राजा नैवैच्छदत्र भगवानगमच्च कृष्णः ॥ १५२ ॥ व्यासं तमीक्ष्य भगवंतमगण्यपूर्णनित्याव्ययात्मगुणमाशु समस्त एव ॥ नत्वाभिपूज्य वरपीठगतस्य चाज्ञामादाय चोपविविशुः सहितास्तदंते ॥ १५३ ॥ कृष्णस्तदाह नृपतिं प्रति देहि कन्यां सर्वेभ्य एव वृषवायुपुरंदरा हि ॥ नासत्यदस्रसहिता इम एव इंद्राः पूर्वेंच संप्रतितनश्च हरेर्हिपश्चात् ॥ १५४ ॥ ॥

त्यस्याविशेषणं । वेदाःप्रमाणमितिवत् अगण्यपूर्णनित्याव्ययात्मगुणं अगण्याःपूर्णाःनित्याःअव्ययाःआत्मनःस्वरूपभूताःगुणाःयस्यसतथातं । समस्तेछांदसत्वात् । प्रथमाबहुवचनमेतत् सर्वेबहुसज्जनाइत्यर्थः । वरपीठगतस्यासिंहासनेउपविष्टस्याज्ञामादायांगीकृत्य । तदंतेव्याससमीपेउपविविशुः उपविष्टाइत्यर्थः ॥ १५३ ॥ सर्वेभ्य एवपार्थेभ्यएवेत्यर्थः । प्रतिदेहीत्याह । तवसुतायाःपंचदेव्यात्मकत्वात् पतिभूतेभ्योदानंनाधर्मइतिवक्तुंयुधिष्ठिरादीनांस्वरूपमाह । वृषेत्यादिना । हरेःयज्ञनाम्नोहरेः पश्चादनंतरं येनासत्यदस्रसहिताःअश्विभ्यांसहिताःवृषवायुपुरंदराःयमवाय्विंद्राःपूर्वेंद्राः अतीतेंद्राः पश्चात्संप्रतितनइदानींवैवस्वतमन्वंतरे इंद्रःसत्तमपुरंदरःसएवषष्ठः सतमश्चएकएवतेइमेपांडवाहि ॥ १५४ ॥ ॥ ॥ ॥ ॥ ॥

अत्रपंचेभ्योदानेविरुद्धताधर्मविरुद्धतान संवादिनींसंमतयुक्तांधियंबुद्धिंनचकार ॥ १५५ ॥ दिव्यंदर्शनंदिव्यदृष्टिःअयतवदत्तं हियस्मात्तस्मात् दिविस्वर्गेसंस्थितान् मूलरूपेणेत्यर्थः । पांडुतनयान्आशुअविलंबेनपश्य एतांतेदुहितरंचतल्लक्षणैःसहशच्यादिलक्षणवत्तयेतिभावः । तैःमहादेंद्रादिरूपैःसह पृथकुस्थांभारत्यादिपंचरूपां पश्य । ततःदर्शनानंतरं तेयथाइष्टंतथाकुर्वितियोजना ॥ १५६ ॥ तादृशान्व्यासोक्तलक्षणवतःनिशाम्यदृष्ट्वा । तदनादरेणव्यासवाक्याविश्वासेनभीतः ॥ १५७ ॥ भगवान्द्रुपदस्याभयंदत्वा तेनद्रुपदेनकार्ये ओ मितिकुर्यामितिकथितेसतिउक्तेसति वैवाहिकींविवाहसंबंधिनींकृतिंक्रियांव्यदधादकरोत् । निखिलाःपांडवाइत्यर्थः ।

एषां स्त्रियश्च निखिला अपि चैकदेहा पुत्री तवैव न ततोत्र विरुद्धता हि ॥ इत्युक्तवत्यपि यदा द्रुपदश्चकार संवादिनीं न धियमेनमथाह कृष्णः ॥ १५५ ॥ दिव्यं हि दर्शनमिदं तव दत्तमद्य पश्याशु पांडुतनयान् दिवि संस्थितान् त्वं ॥ एतां च ते दुहितरं सह तैः पृथकुस्थां तल्लक्षणैः सह ततः कुरु ते यथेष्टं ॥ १५६ ॥ इत्युक्तवाक्यमनुतान्स ददर्श राजा कृष्णप्रसादबलतो दिवि तादृशांश्च ॥ एतान्निशाम्य चरणौ जगदीशतुश्च भीतो जगाम शरणं तदनादरेण ॥ १५७ ॥ दत्वाऽभयं स भगवान् द्रुपदस्य कार्ये तेनोमितिस्म कथिते स्वयमेव सर्वां ॥ वैवाहिकीं कृतिमथ व्यदधाच्च धौम्ययुक्तः क्रमेण जगृहुर्निखिलाश्च पाणिं ॥ १५८ ॥ पांचालकेषु च महोत्सव आस राजा तुष्टोऽभवत्सह सुतैश्च निजैश्च सर्वैः ॥ पौरैश्च जानपदिकैश्च यथैव रामे दत्वा सुतां जनक आप मुदं ततोनु ॥ १५९ ॥ उद्वाह्य तत्र निवसत्सु च पांडवेषु श्रुत्वैव रामसहितः सह यादवैश्च ॥ आदाय पारिबरुहं बहुलं स कृष्ण आयान्मुदैव पृथया सहितांश्च पार्थान् ॥ १६० ॥ दृष्ट्वैव तं मुमुदुराशु कुरुप्रवीरा आश्लिष्य कृष्णमथ नेमुरसौ च कृष्णां ॥ दृष्ट्वा प्रदाय गृहयोग्यसमस्तभांडं सौवर्णमेभ्य उरुभूषणमच्युतोदात् ॥ १६१ ॥

क्रमेणयुधिष्ठिरादिक्रमेणपाणिंजगृहुः । द्रौपद्याइतिशेषः ॥ १५८ ॥ यथैवेत्युक्त्याजनकद्रुपदयोःसंतोषसाम्यप्रतीतिंनिवारयति । ततोन्विति । ततःजनकादनु ॥ १५९ ॥ पारिबिरुहंउत्सवकालेस्वकीयानांदातुंयोग्यवस्तु ॥ १६० ॥ असावच्युतःकृष्णांदृष्ट्वा सौवर्णगृहयोग्यं समस्तभांडंजलधान्यस्थापनादिपात्रं कृष्णायैप्रदायएभ्यःकृष्णायैचउरुभूषणंअदात् ॥ १६१ ॥ ॥ ॥ ॥ ॥ ॥

अथवत्सरानंतरं उरुबहुभूषणरत्नंच रत्नानिजात्येकवचनं प्रदाय मंत्रंविचारंययुः पांडवान्प्रतियोद्धुमितिशेषः ॥ १७४ ॥ तेषुदुर्योधनादिषुपुनःरथैःयुद्धायप्रयातेषुस
त्सुविदुरः प्राह । एतेदुर्योधनादयःपार्थान्युद्धायएत्यमृत्युमुपयांति । प्राप्स्यंति अत्रमृत्युप्राप्तिविषयेनसंशयः ॥ १७५ ॥ भीमार्जुनौविषहितुंसोढुंसामर्थ्ययुक्प्रभावयुक्ते
चवर्धिताःबलादिनाभिवृद्धाःज्ञात्वैव तेषांप्रवृत्तिमितिशेषः वत्सरतःवत्सरमारभ्यतेषांउपेक्षणकृतःउदासीनकर्तुस्तवमहानधर्मोजातः तत्तस्मात् उपेक्षलक्षणमलंआनीतयेइत्य
त्राप्याकृष्यतेआनयनायनियुंक्ष्वप्रेषयेत्यर्थः । पार्थानामितिशेषः ॥ १७६ ॥ आनीतयेपार्थानानयनार्थंविनियुज्यआज्ञाप्येत्यर्थः । दूतमितिशेषः । सुसांत्वपूर्वंसमाधानपू

श्रुत्वाथ कृष्णमुपयांतमुरु प्रदाय रत्नं च पांडुतनयेषु गतं पुनश्च ॥ तातप्यमानहृदयास्तु सुयोधनाद्याः मंत्रं प्रचक्रुरथ कर्णमुखा ययुश्च ॥ १७४ ॥ युद्धाय तेषु पुनरेव रथैः प्रयातेष्वाहाग्रजं स विदुरोपि नदीजमुख्यान् ॥ एते हि पापतमचेतस एत्य पार्थान् युद्धाय मृत्युमुपयांति न संशयोत्र ॥ १७५ ॥ भीमार्जुनौ विषहितुं नहि कश्चनास्ति सामर्थ्ययुक् सुरवरेष्वपि वर्धितास्ते ॥ ज्ञात्वैव वत्सरत एव महानधर्मस्तेषामुपेक्षणकृतस्तदलं नियुंक्ष्व ॥ १७६ ॥ आनीतये च विनियुज्य सुसांत्वपूर्वमानीय योजय नृपेषु तथार्धराज्यं ॥ एवं कृतं तव भवेत्कुलवृद्धये हि धर्माय चोभयविनाशकरोन्यथा स्याः ॥१७७॥ इत्युक्तवत्यनु तथेत्यवदन्नदीजो द्रोणः कृपश्च विदुरं स नृपोप्युवाच ॥ याह्यानयेति स च वेगवता रथेन तत्रागमत्त्वनुतैराभिपूजितश्च ॥१७८॥ तत्काल एव वसुदेवसुतश्च कृष्णो व्यासश्च तानुपसमेत्य दुरंतशक्ती॥आदाय कुंतिसहितान् विदुरेण युक्तौ नागाव्हयं पुरमितां सह भार्ययैव१७९

र्वंयथाभवतितथाआनीय हेनृपएषुपार्थेषुतथास्वपुत्रवत्प्रीतिपूर्वंअर्धराज्यंयोजयदेहीत्यर्थः । एवंकृतेअकृतेवाकिंफलमित्यतआह । एवमित्यादिना । एवंकृतेकुर्वितितवकुलवृ
द्धयेधर्मायचभवेत् । अन्यथाकरणेनउभयविनाशकरःकुलस्यधर्मस्यविनाशकःस्याःभविष्यसि त्वमितिशेषः ॥ १७७ ॥ इत्युक्तवतिसतिविदुरइतिशेषः । विदुरमनुआ
नय पांडवानितिशेषः । तत्रपांचालनगरंतैःपार्थैः ॥ १७८ ॥ भार्ययासहद्रौपद्यासहितानादाय गृहीत्वापार्थानितिशेषः । इतांप्राप्तौ ॥ १७९ ॥ ॥

उच्चैरत्यंतंमुदिताःगेहंधृतराष्ट्रगेहं ॥१८०॥ तेपांडवाःअत्रधृतराष्ट्रगेहेऊषुः । वसनिवासइतिधातोः । कृष्णानिमित्तंद्रौपदीनिमित्ततःनिजपुत्रकदुर्विनीत्या स्वपुत्रस्यदुर्योधनस्यउत्पथवृत्या भीमात्उरुभीतितिःमहद्भयात्कुंतीमाह । कृष्णासौंदर्येणमोहितंमत्सुतं भीमोनिहन्यादित्युरुभीतितइतिभावः ॥ १८१ ॥ कृष्णात्रिलोकवनिताधिकरूपसारा त्रिलोकेषुविद्यमानस्त्रीभ्यःअधिकरूपेणअधिकसौंदर्येणसाराश्रेष्ठा यस्मात्तस्मात्कारणात् निजपुत्रकदुर्विनीत्याभीमाद्बिभेमि इत्युक्तासा ॥१८२॥ बृहस्पतेरेकैकराशिसंचारेण योवत्सरपरिमितःकालःसपरिवत्सरइत्युच्यते । तादृशपरिवत्सरपंचकंकृष्णायाःपांडवेषुरमणप्रकारमाह । कृष्णेत्यादिना । कृष्णाचयद्यपिएकतनुस्तथापि अभिमानिभेदात्जीवभेदात्निमित्ताच्चतुःस्वरूपा श्यामलादिचतुःस्वरूपा नतुदेहभेदात् तेषुपांडवेषुपृथगेवरेमेएकैकस्मिनदिनेएकैकेनरेमइतिभावः ॥ १८३ ॥ ननु

तेष्वागतेषु सुमहानभवत्प्रहर्षः पौरस्य जानपदिकस्य जनस्य चोच्चैः ॥ भीष्मादिकाश्च मुदिताः प्रतिपूज्य गेहमावेशयन्सह नृपेण महोत्सवेन ॥ १८० ॥ कृष्णामपूजयदतीव च सौबली सा दुर्योधनस्य दयिता सहितात्र तेपि ॥ ऊषुस्ततश्च निजपुत्रकदुर्विनीत्या कृष्णानिमित्तमुरुभीतित आह भीमात् ॥ १८१ ॥ कुंति प्रयाहि सहिता स्नुषया गृहं स्वं भीमाद्बिभेमि निजपुत्रकदुर्विनीत्या ॥ कृष्णा त्रिलोकवनिताधिकरूपसारा यस्मादितिस्म ससुता प्रययौ गृहं सा ॥ १८२ ॥ ऊषुस्तथैव परिवत्सरपंचकं ते पांडोर्गृहे सुसुखिनोखिलभोगयुक्ताः ॥ कृष्णा च तेषु पृथगेव चतुःस्वरूपा रेमे तथैकतनुरप्यभिमानिभेदात् ॥ १८३ ॥ कन्यैव सा भवदतः प्रतिवासरं च जन्माभवच्चाभिमतेः पृथगेव नाशात् ॥ प्रायो हि नाभिमतिनाशमवाप वाणी तस्मान्मरुच्च सकलेष्वभिविष्ट आसीत् ॥ १८४ ॥

अभिमानिभेदेनभेदेप्यभिमन्यमानदेहस्यैकत्वात् देहापेक्षयाऽव्यभिचारःस्यादित्यतआह । कन्यैवेति । यतःजन्माभवत्अतःसाकन्यैवाभवत् नन्वस्याःशरीरनाशाभावात्कथंजन्माभवदित्यतआह । अभिमतेरिति । एकैकस्याःअभिमतेरभिमानस्य पृथक्प्रतिदिनंनाशादेवपूर्वपूर्वशरीरनाशोप्यस्तीत्यर्थः । अभिमानोत्पत्त्यपेक्षया देहस्यप्रतिदिनमुत्पत्तेःदेहापेक्षयापिनव्यभिचारइतिभावः । नन्वितरासामिवभारत्याअपिस्ववासरातिरिक्तकाले सर्वात्मनाभिमतिनाशःकिमित्याशंक्याह । प्रायइति । वाणी भारतीप्रायःसर्वात्मनाऽभिमतिनाशंनाप हियस्मात्तस्मात् प्रायःप्रतिदिनंभारत्याअभिमाननाशाभावान्मरुत्सकलेषुयुधिष्ठिरादिषुचतुर्षु चानुविष्टआसीत् ॥ १८४ ॥

तेष्वाविष्टस्यमरुतोरमणप्रकारमाह । धर्मात्मजादिष्विति । धर्मात्मजादिषुप्रविष्टोमरुत् एषांयुधिष्ठिरादीनांबुद्धिंभारतीविषयेविमोह्य । तयाभारत्यासततंप्रतिदिनंरमते । यद्यस्मात्ततएवधर्मात्मजादिभिःसहावस्थानसमयेपितत्प्रविष्टमरुतैवरमणात्शुद्धैवहितदन्यसंगरहितैवहि । प्रतिवासरंकन्यैवाभवदितियदुक्तंतत्सदृष्टांतमुपपादयति । दिने दिनेइति । दिनेदिनेप्रतिदिनंहइदेहेएकैकस्याःमरणवत्मरणेयथामोहःतथासंमोहतःकन्याभवति ॥ १८५ ॥ अतइतिहेतुंविवृणोति । देहस्यान्यवशत्वतोहीति । सुप्तौ देहस्यान्यवशत्वाभावादत्रतत्सद्भावात्सुप्तिवन्नेतिभावः । हरेःसंस्मृतितःदेहाभिमानरहितानामितरासां हरिसंस्मृतिसद्भावान्मोहोनैव । मूर्छितानांहरिसंस्मृत्यभावादेतासां तत्सद्भावान्मोहवन्नैवेतिभावः । ततएवहरिसंस्मृतिसद्भावादेवआवेशवत् । ग्रहाद्यावेशवच्चन । ततउक्तप्रकारेणसुप्त्यादित्रयवैलक्षण्यादेतद्देहाभिमानवर्जनंमृतेःस्वरूपंमृतिसदृशं अनेनमरणवद्भवतीत्येतत्परिशेषप्रमाणसिद्धिमित्युपपादितंभवति । प्रमाणंतु । एतद्देहाभिमानवर्जनंस्मृतिस्वरूपंभवितुमर्हति । सुप्तिमोहावेशाविलक्षणाभिमानवर्जनत्वात्प्रदृश्यमानमरणवदिति । प्रतिदिनंकन्येवाभवदित्येतदुपपाद्योपसंहरति । अतइति । अतःपूर्वाभिमानराहित्यस्यमरणसादृश्यात्प्रतिदिनंनिरंतरंजननात् अभिमानजननात्कन्याहिकन्यैव ॥१८६॥ धर्मात्मजादिषुमरुत्प्रविष्टइत्युपसंहरति । एवमिति । अनुविष्टयुधिष्ठिरादिभीमात्मना अनुविष्टाःयुधिष्ठिरादयोयेनसःअनुविष्टयुधिष्ठिरादिःअनुविष्टयुधिष्ठिरादिश्चभीमश्चतावेवआत्मास्वरूपंयस्यसःअनुविष्टयुधिष्ठिरादिभीमात्मा तेनयुधिष्ठिराद्याविष्टचतुःस्वरूपैःभीमरूपेणचेतिभावः । ननु युधिष्ठिरदेहेयुधिष्ठिरस्तदाविष्टोमरुच्चेतिद्वौतिष्ठतः एवमर्जुनादिदेहेपिद्वौतिष्ठतः एवंकृष्णादेहेपिभारतीस्वयंस्वस्वदिने शामलादिष्वन्यतमेत्येवंप्रतिदिनंद्वेस्त्रियौतिष्ठतः एवंसतियुधिष्ठिरःभारतीमपोह्यस्वस्त्रियंतेष्वाविष्टोमरुद्भारतींरमतइत्येतत्कथंघटतइत्यत आह । अन्यादृशाहीति । सुरभुक्तिःसुरभोगःअन्यादृशामानुष्यभोगविलक्षणः मनुष्यभुक्तिः अतःसुरभोगात्अन्यरूपाविलक्षणाइतिहेतोरत्रोक्तार्थेनवेतिविचारविषयोनास्ति । निश्चयएवेतिभावः केचिट्टिप्पणीकाराःकृष्णाजन्मनिअपिअन्यगात्वमितिव्याकुर्वंति । तेषामभिप्रायंनजानीमः । त्रिलासंदर्शयामासुरित्यादिना एकस्मिन्जन्मन्यगात्वमितिआचार्यैर्दर्शितं । ब्रह्मणैवहिशतास्मइत्यादिना त्रिषुजन्मस्वेकदेहत्वंदर्शितं

धर्मात्मजादिषु मरुत्प्रतिविष्ट एषां बुद्धिं विमोह्य रमते सततं तया यत् ॥ शुद्धैव सा हि तत एव दिने दिने च
संमोहतो मरणवद्भवतीह कन्या ॥ १८५ ॥ नो सुप्तिवच्चिदमतोन्यवशत्वतो हि देहस्य संस्मृतित एव हरेर्न मोहः ॥
नावेशवच्च तत एव मृतेः स्वरूपमेतत्त्वतः प्रतिदिनं जननाद्धि कन्या ॥ १८६ ॥ एवं स वायुरनुविष्टयुधिष्ठिरादिभीमा
त्मनैव रमते सततं तयैकः ॥ अन्यादृशा हि सुरभुक्तिरतोन्यरूपा मानुष्यभुक्तिरिति नात्र विचार्यमस्ति ॥ १८७ ॥

रमणप्रसंगेपिदेवीनांमरुतःसंगोनदर्शितः । कृष्णाजन्मनिअन्यगात्वंचेत्तर्हि युधिष्ठिररमणदिवसेशामलायाःयुधिष्ठिरेणयुधिष्ठिरस्थवायुनापिसंबंधः । शच्यादीनांवायोः केवलंसंबंधःस्यात् । भीमरमणदिने भीमेनैवसर्वासांच । तथाऽर्जुनरमणदिनेशच्याअर्जुनेनतत्स्थवायोःसंबंधः । शच्यादिसर्वासांतथा नकुलसहदेवयोश्चेत्युपपत्तेः । अभि मतेःपृथगेवनाशादित्युक्तिर्वृथास्यात् । तस्मात्कृष्णाजन्मनिअन्यगात्वंनघटतइतिप्रतीयते ॥ १८७ ॥ तत्रपांडवगेहेअनंतगुणपूर्णसुखात्मकाभ्यांअनंतगुणपूर्णौचतौसु खात्मकौचतथा ताभ्यांयुतसत्कथाभिःअन्योन्यवचनमिश्रितोत्तमकथाभिःपूतत्वंनामपरस्परप्रश्नपरिहारवत्वं ॥ १८८ ॥ पांडवविवाहमुक्त्वादुर्योधनादीनामुद्वाहंवक्तुंपू र्वकथामाह पूर्वमित्यादिना । पूर्वंकृष्णाविवाहात्पूर्वं तेषुपार्थेषुवनगेषुसत्सु हिडिंबवनंप्राप्तेषुसत्सुदृप्तःमत्तः ॥ १८९ ॥ राजगणनेराजसंख्याने मगधाधिराजःपूर्वंप्रथम

वासिष्ठयादववृषावपि केशवौ तौ तत्रोषतुः परमसौहृदतो हि तेषु ॥ ताभ्यामनंतगुणपूर्णसुखात्मकाभ्यां पार्थाश्च ते मुमुदिरे युतसत्कथाभिः ॥ १८८ ॥ पूर्वं हि तेषु वनगेषु बभूव काशिराज्ञः सुता कृत उरुक्षितिपालयोगः ॥ तत्र स्वयंवरगतां धृतराष्ट्रपुत्रः कन्यां बलाज्जगृह आत्मबलातिदृप्तः ॥ १८९ ॥ पूर्वं हि राजगणने मगधाधिराजः संख्यात इत्यतिरुषा प्रगृहीतकन्ये ॥ दुर्योधने नृपतयो युयुधुः स्म तेन भग्नाश्च कर्णसहितेन सहानुजेन ॥ १९० ॥ भग्नेषु तेषु पुनरात्तशरासनेषु कर्णो जगाद धृतराष्ट्रसुतं प्रयाहि ॥ युक्तः सहोदरजनैर्गुरुभीष्ममुख्यैर्युक्तस्य तेनु पुरमेत्य हि धर्षणेशाः ॥ १९१ ॥ एकांततो जयमवीक्ष्य च नानुयाति बार्हद्रथः पुरगतस्य जये न निष्ठा ॥ द्रौणिं हि रुद्रतनुमेष सदा विजानन्नो तेन युद्धमभिवांछति रुद्रभक्तः ॥ १९२ ॥ ॥ ॥

तःसंख्यातःपरिगणितइतिहेतोःअतिरुषादुर्योधनेप्रगृहीतकन्येसति नृपतयःजरासंधाद्यास्तेनदुर्योधनेनयुयुधुःस्म भग्नाश्च ॥ १९० ॥ तेषुजरासंधादिषुपुनरात्तशरासने षुसत्सु कर्णःसहोदरजनैर्युक्तस्त्वंप्रयाहीतिधृतराष्ट्रसुतंजगाद । पुरमेत्यनगरंप्राप्य तेनृपतयःगुरुभीष्ममुख्यैर्युक्तस्यतेधर्षणेनेशाःसमर्थाःन ॥ १९१ ॥ एकांततःनियमेन निश्चयेनेतियावत् जयमवीक्ष्यचनानुयातिशत्रूनितिशेषः । बार्हद्रथःनिवृत्यास्मत्पुरमागमिष्यतीत्यतआह । पुरगतस्येति । पुरगतस्यतेजयेकर्मणिषष्ठीःपुरगतंत्वांजेष्या मीतिनिष्ठान निश्चयोनास्ति । इतोपित्वांजेतुंनागमिष्यतीत्याभिप्रायवानाह । द्रौणिमिति । तेनअश्वथाम्ना ॥ १९२ ॥ ॥ ॥

मयिगतेइदानीमेवान्येमामनुगच्छेयुरित्यतआह । एकोहमिति । प्रतियोधयिष्येअकीर्तिःअपयशः अत्रानुजग्रहणेन ॥ १९३ ॥ ननु मदनुजग्रहणेऽसमर्थोसाविसत आह । भीष्मादयइति । अनेनराज्ञाजरासंधेनभीष्मादयोपि आदिशब्देनभीष्मसमत्वाद्बाल्हीकादयोपिविवक्षिताः । प्रतियोधयितुंयोद्धुंनसमर्थाः । किंत्वल्पसारास्त वानुजाइतिभावः । ततएवअशक्तत्वादेवबाल्हीकोस्यजरासंधस्यभृत्योबभूव । तर्हि भीष्मःकिमर्थमनेननजितइत्यतआह । नेति । अयंजरासंधोभीष्मंयुधेयुद्धार्थं नागात् । शक्तोपिकुतोनागादित्यतआह । राजेति । भीष्मोराजानहिराजपुत्रोपिराज्यपदवींनप्राप्तइतिभावः । इतिहेतोःअतएवतेनभीष्मेणविरोधोनासीत् । जरासंधस्ये

एकोहमेव नृपतीन्प्रतियोधयिष्य एतैर्मयि प्रविजितेपि न तेस्त्यकीर्तिः ॥ एकं च तेनुजमिमं यदि पौरुषेण गृण्ही युरत्र तव कीर्तिरुपैति नाशं ॥ १९३ ॥ भीष्मादयोपि न हि योधयितुं समर्था राज्ञा ह्यनेन तत एव च बाल्हिको स्य ॥ भृत्यो बभूव न हि भीष्ममयंयुधेंगाद्राजा नहीति नच तेन विरोध आसीत् ॥ १९४ ॥ इत्युक्त आशु स विमृश्य ययौ पुरं स्वं कर्णोपि तैः प्रति युयोध जिगाय चैतान् ॥ कर्णस्य वीर्यमगणय्य जरासुतोपि ह्येकैकमेव नृपतिं स दिदेश योद्धुं ॥ १९५ ॥ सर्वेषु तेषु विजितेष्वभिजग्मिवान्स योद्धुं बृहद्रथसुतोप्यमुना रथेन ॥ तं चैव रामवरतो विरथं विशस्त्रं चक्रे स चैनमथमुष्टिभिरभ्युपेतौ ॥ १९६ ॥ संधौ यदेव जरया प्रतिसंधितस्य कर्णो जघान न परत्र तुतोष राजा ॥ न ज्ञातमेतदपि हो हलिना तदेतज्ज्ञातं त्वया भव ततो ममभृत्य एव ॥१९७॥ एवं विधं सुकुशलं बहुयुद्धशौंडं न त्वां हानिष्य उत ते पितुरेव पूर्वं ॥ बाहोर्बलादभिहतं हि मयांगराज्यं तत्त्वं गृहाण युधि कर्मकरश्च मे स्याः ॥१९८॥ ॥ ॥ ॥

तिशेषः ॥ १९४ ॥ विमृश्यविचार्यअगणय्यअनादृत्य ॥ १९५ ॥ अमुनाकर्णेनयोद्धुं रथेनाभिजग्मिवान् तंजरासंधं सजरासुतश्चएनंकर्णंविरथंविशस्त्रंचक्रे ॥१९६॥ जरयाप्रतिसंधितस्यजरासंधस्यसंधौजघाननपरत्रसंधेरन्यत्रनजघानेत्यर्थः । तदाराजातुतोष । हलिनापिएतत् मर्मस्थानंनज्ञातं तत्रामेणाज्ञातमेतन्मर्मस्थानंत्वयाज्ञातं होआश्चर्यंततोमर्मज्ञत्वात् ममभृत्योभवेत्यन्वयः ॥ १९७ ॥ एवंविधंसुकुशलंबहुयुद्धशौंडंबहुप्रकारयुद्धेषुशौंडं प्रौढंत्वांनहनिष्ये । मयातेपितुरधिरथात्पूर्वं अभिहतमं गराज्यंत्वंगृहाणयुधिमेकर्मकरश्चस्याःभव युद्धेममसाहाय्यंत्वंकुर्वितिभावः ॥ १९८ ॥ ॥ ॥ ॥ ॥

कर्णस्तथैवचकार । अंगराज्यांगीकारंचकारेतिभावः । अंगराज्यस्यदुर्योधनेनदत्तत्वात् जरासंधःकथंपुनरदादित्यतआह । पूर्वमिति । पूर्वंनिजराज्यपदैकदेशःनिजराज्य पदस्यअधिरथसंबंध्यंगराज्यैकदेशएकप्रदेशः । दुर्योधनेनास्यकर्णस्यविहितोदत्तः अंगराजस्यपूर्वंकर्णपितृसंबंधित्वान्निजेत्युक्तं । ननु अधिरथाज्जरासंधेनाभिहृतोदुर्योधने नकथंएकप्रदेशोदत्तइत्यतआह । मगधेति । मगधाधिराजंजित्वादिग्विजयइतिशेषः । वृकोदरहृतःपितुरेवधृतराष्ट्रस्यैवदत्तःतद्राज्यंदुर्योधनेनशिक्षासंदर्शनसमयेकर्णायदत्तं अन्यज्जरासंधेनइदानींदत्तमितिभावः ॥ १९९ ॥ अतोजरासंधजयात्अनेनकर्णेनतुल्यंहरिंकृष्णंनाधिजग्मुः । कृष्णादधिकःकर्णइतिमेनिरेइतिभावः ॥ २०० ॥ गिरि जाभिविष्टां अतएवभारते । द्रौपदीवस्त्रहरणादिविषये अस्याःदुःखितत्वोक्तिःसंगच्छते । तदुक्तंसभापर्वणि । धार्तराष्ट्रस्त्रियस्ताश्चनिखिलेनोपलभ्यवै । गमनंपरिकर्षंचकृ

इत्युक्त आशु स तथैव चकार कर्णः पूर्वं हि तस्य निजराज्यपदैकदेशः ॥ दुर्योधनेन विहितो मगधाधिराजं जित्वा वृकोदरहृतः पितुरेव दत्तः ॥ १९९ ॥ अंगाधिराज्यमुपलभ्य जरासुतस्य स्नेहं च सूर्यसुत आशु कुरून् जगाम ॥ दृष्ट्वैव तं मुमुदिरे धृतराष्ट्रपुत्रा नानेन तुल्यमधिजग्मुरतो हरिं च ॥ २०० ॥ उद्वाह्य काशितनयां गिरिजाभिविष्टां साक्षान्नरेषु जनितां प्रथमामलक्ष्मीं ॥ तस्यां सुतं त्वजनयत्पुर आस योक्षः कन्यां पुरा प्रियतमां च षडाननस्य ॥ २०१ ॥ पुत्रो बभूव सतु लक्षणनामधेयः सा लक्षणेत्यधिकरूपगुणा सुकन्या ॥ तस्यानुजाश्च निजयोग्यगुणा अवापुर्भार्याः पुनश्च स सुयोधन आप भार्याः ॥ २०२ ॥ पूर्वं सुरांतक इति प्रथितः सुतो भूद्दुःशासनस्य तदनु प्रतितप्यमानाः ॥ दृष्ट्वैव पार्थबलवीर्यगुणान्समृद्धिं तां चैव ते प्रतिययुः स्म कलिंगदेशं ॥ २०३ ॥ ॥

ष्णायाद्यूतमंडले । रुरुदुःसुस्वरंसर्वाःविनिंदंत्यःकुरून्भृशं ॥ इत्युच्यसुचिरंकालंकरासक्तमुखांबुजाइति । साक्षादलक्ष्मींप्रथमांज्येष्ठांसमुद्रमंथनेलक्ष्म्याःसकाशादादौ जातेतिभावः । नरेषुजनितांउत्पन्नांकाशितनयांकाशिराजसुतांउद्वाह्यविवाह्य पुरायोक्षःअक्षकुमारःआस । तंसुतंतस्यांअजनयत् । पुराषडाननस्यगुहस्यप्रियतमांभा र्यांकन्यांचाजनयत् ॥ २०१ ॥ तस्यदुर्योधनस्यअनुजाःनिजयोग्यगुणाः[illegible] । भार्याःअवापुः ॥ २०२ ॥ सुरांतकइतिप्रथितः[illegible]इतिख्यातः तद नुपांडवागमनानंतरं समृद्धिंतांकृष्णांचदृष्ट्वा ॥ २०३ ॥ ॥ ॥ ॥ ॥

तस्यसुवज्रस्यदृप्तोमत्तः ॥२०४ ॥ पूर्वंकर्णः जरासुतादीन्जितवानयकथंपराजितइत्यतआह । स्पृधेति । यस्मात्पाडोःसुतेपुस्पृधागमदतः ॥ २०५ ॥ नुन्नः प्रेरितः ॥ २०६ ॥ मृतकप्रतीकाःमृतसदृशाः अमीषांदुर्योधनादीनां नृपतिर्धृतराष्ट्रःपुरंदरकृतस्थलंइंद्रेणनिर्मितस्थलं इंद्रप्रस्थमित्यर्थः ॥ २०७ ॥ तत्रस्थित्वाऽर्धराज्यमनुभुंक्ष्व । पुरंदरकृतमित्येतद्विवृणोति । पुराहीति । तत्रइंद्रप्रस्थेअभिषिक्तःउततत्रस्थएवसशक्रःचिरंराज्यंचकार ॥ २०८ ॥ इतःअत्रैवअभिषेचयामि ॥ २०९ ॥

आसीत्स्वयंवर उतात्र कलिंगराजपुत्र्याः सुवज्र इति यं प्रवदंति भूपाः ॥ रौद्राद्वरादविजितस्य च तस्य कन्यां दृप्तो बलात्स जगृहे धृतराष्ट्रसूनुः ॥ २०४ ॥ तत्राथ रुद्रवरतः स जरासुतेन युक्तो बबंध च सुयोधनमाशु जित्वा ॥ कर्णः पराद्रवदिहस्म सुतेषु पांडोर्यस्मात्स्पृधागमदतः स पराजितोभूत् ॥ २०५ ॥ दुर्योधनेनुजजनैः सहिते गृहीते भीष्मांबिकेयविदुराग्रजवाक्यनुन्नः ॥ भीमो विजित्य नृपतीन्स जरासुतांस्तान्हत्वा सुवज्रममुचद्धृतराष्ट्रपुत्रान् ॥ २०६ ॥ तेपि स्म कर्णसहितामृतकप्रतीका नागाव्हयं पुरमथाययुरप्यमीषां ॥ दृष्ट्वा विरोधमवदन्नृपतिश्च धर्मपुत्रं पुरंदरकृतस्थलमाशु याहि ॥ २०७ ॥ तत्रार्धराज्यमनुभुंक्ष्व सहानुजैस्त्वं कोशार्धमेव हि गृहाण पुरा हि शक्रः ॥ तत्राभिषिक्त उत कंजभवादिदेवैस्तत्रस्थ एव स चकार चिरं च राज्यं ॥ २०८ ॥ त्वं वीर शक्रसम एव ततस्तवैव योग्यं पुरं तदित आश्वभिषेचयामि ॥ इत्युक्तआह स युधिष्ठिर ओमितिस्म चक्रे भिषेकमपि तस्य स आंबिकेयः ॥ २०९ ॥ तस्याभिषेकमकरोत्प्रथमं स कृष्णो वासिष्ठनंदन उरुर्भव चक्रवर्ती ॥ यष्टाश्वमेधनिखिलात्मकराजसूयपूर्वैर्मखैः सततमेव च धर्मशीलः ॥ २१० ॥ ॥

प्रथमंवासिष्ठनंदनःसकृष्णःव्यासःसकृष्णइत्यत्रभिन्नंपदं । अश्वमेधनिखिलात्मकराजसूयपूर्वैः अश्वमेधश्चनिखिलात्मकराजसूयश्चसर्वयज्ञात्मकोराजसूयःतत्पूर्वैःमखैः यष्टा उरुःउत्कृष्टःसर्वेभ्यइतिशेषः । चक्रवर्तीधर्मशीलोभवेति ॥ २१० ॥ ॥ ॥ ॥

पार्षतसुतासहितेयुधिष्ठिरेअभिषिक्तेसति । कृष्णोपितथाभ्यषिंचत् । एवंपूर्वोक्तआशीःपूर्वकंएतौकृष्णौमारुतिशिरसि अभिषेकंसंचक्रतुः ॥ २११ ॥ पार्षतसुतासहिते भीमेचधर्मात्मजानुताभ्यामभिषिक्तेसति । अन्यैश्चाभिषेकेसुकृतेसतिसंतोमुमुदुः ॥ २१२ ॥ दिनसप्तकानुवृत्ते दिनसप्तकमनुवृत्तःदिनसप्तकानुवृत्तःतस्मिन्दिनसप्त कानुवृत्ते ॥ २१३ ॥ यदापार्थाःगच्छंतिगताःतदापौराश्चताननुययुः । एषःदुर्योधनःपांडुसुतान् दूरेचकार । ननु हाखेदेबतआश्चर्ये ॥ २१४ ॥ अवलंब्यआश्रि

इत्येव पार्षतसुतासहितेभिषिक्ते कृष्णोपि वृष्णिवृषभः स तथाभ्यषिंचत् ॥ एवं च मारुतिशिरस्यभिषेकमेतौ संच क्रतुः स्म युवराजपदे सभार्ये ॥ २११ ॥ भीमे च पार्षतसुतासहितेभिषिक्ते ताभ्यामनंतसुखशक्तिचिदात्मकाभ्यां अन्यैश्च विप्रवृषभैः सुकृतेभिषेके धर्मात्मजानुमुमुदुर्निखिलाश्च संतः ॥ २१२ ॥ तस्मिन्महोत्सववरे दिनसप्तकानु वृत्ते वशिष्ठवृषभेण च वृष्णिपेण ॥ कृष्णेन ते ययुरमा पृथया तया च पांचालराजसुतया स्थलमिंद्रवासं ॥२१३॥ कोशस्य चार्धसहितास्तु यदैव पार्था गच्छंति ताननु ययुर्निखिलाश्च पौराः ॥ ऊचुश्च हा बत सुयोधन एष पापो दूरे चकार ननु पांडुसुतान् गुणाढ्यान् ॥ २१४ ॥ भीमप्रतापमवलंब्य कलिंगबंधान्मुक्तः सुतामपि हि तस्य पुरं निनाय ॥ द्वेष्ट्येवमप्यतिबलान्हि सदैव पार्थान् यामो वयं गुणिभिरद्य सहैव पार्थैः ॥ २१५ ॥ आज्ञापयत्य पि स भेरिरवेण पार्थान्नैवानुगच्छथ यदि व्रजथानु वोद्य ॥ वित्तं हरिष्य इह सर्वमपीति तच्च पापः करोतु न वयं विजहाम पार्थान् ॥ २१६ ॥ सद्भिर्हि संगतिरिहैव सुखैकहेतुर्मोक्षैकहेतुरुत तद्विपरीतमन्यत् ॥ तस्माद् व्रजेम सह पांडुसुतैर्हि शक्रप्रस्थं त्वितिस्म धृतचेतस आह धर्मः ॥ २१७ ॥ ॥ ॥ ॥ ॥ ॥

त्यद्वेष्टिद्वेषंकरोति ॥ २१५ ॥ यदिअनुव्रजथतथापिपार्थान्नविजहामः । अनुगमेसर्वमपिवित्तंहरिष्यतीतिचेत् पापस्तच्चकरोतु ॥ २१६ ॥ अन्यत्दुःसंगतिःविपरीतं इहदुःखहेतुःपरत्रनरकहेतुरितिस्म इत्येवधृतचेतसःगंतुंनिश्चितांतःकरणान् धर्मजःआह ॥ २१७ ॥ ॥ ॥ ॥

यदिमयिप्रीतिश्चेत् अत्रनागापुरेवःभवतांअनुगमनेनकृतेनापितुरत्ययेननःकीर्तिर्नश्येत् । आंबिकेयंअनुसरध्वं । सेवांकुरुध्वमित्यर्थः ॥ २१८ ॥ निषिद्धाःनिवारिताःवार्ध किंविश्वकर्माणं सोपिविश्वकर्मा ॥ २१९ ॥ रत्नोत्करंरत्नमयं सादृश्यतःसादृश्येन ॥ २२० ॥ नातिजनसंवृतं अतिसंकीर्णतारहितं आल्पजनमितियावत् । अभि पुपूरिरेपूरितवंतःराष्ट्रांतराःअन्यदेशस्थाःशुभाःसज्जनाःवसतीःगृहाणि । वसतीरात्रिवेश्मनोरित्यमरः ॥ २२१ ॥ तत्रहस्तिनपुरे अभिषेकंसाम्राज्याभिषेकं अशांतकामो

प्रीतिर्यदिस्म भवतां मयि सानुजेस्ति तिष्ठध्वमत्र पितुरेव हि शासने मे ॥ कीर्तिर्हि वोनुगमनात्पितुरत्ययेन नश्ये न्न इत्यनुसरध्वमिहांबिकेयं ॥ २१८ ॥ इत्येव तैः पुरजना निखिलैर्निषिद्धाः कृच्छ्रेण तस्थुरपि तान्मनसा त्वगच्छन् प्राप्याथ शक्रपुरमस्मरतां च कृष्णो देवेश वार्धकिमथागमदत्र सोपि ॥ २१९ ॥ वासिष्ठपेन यदुपेन च पांडवानां रत्नोत्करं कुरु पुरं पुरुहूतपुर्याः ॥ सादृश्यतस्त्विति नियुक्त उभौ प्रणम्य सर्वेश्वरौ स कृतवांश्च परं तथैव॥२२०॥ देशं च नातिजनसंवृतमन्यदेशसंस्थैर्जनैरभिपुपूरिर आशु पार्थाः ॥ तेषां गुणैर्हरिपदानतिहेतुतश्च राष्ट्रांतरा इह शुभावसतीः स्म चक्रुः ॥ २२१ ॥ प्रस्थाप्य दूरमनुजस्य सुतान्स राजा चक्रेभिषेकमपि तत्र सुयोधनस्य ॥ दुःशा सनं च युवराजमसौ विधाय मेने कृतार्थमिव च स्वमशांतकामः ॥ २२२ ॥ पार्थाश्च तेमुदिरेत्र वसिष्ठवृष्णिवर्यो दितानखिलतत्वविनिर्णयांस्तु ॥ शृण्वंत एव हि सदा पृथिवीं च धर्मात् भुंजंत आश्रितरमापतिपादयुग्माः॥२२३॥ इति श्रीमदानंदतीर्थ भ० विरचिते श्रीमन्महाभारततात्पर्यनिर्णये पांडवराज्यलाभोनाम एकोनविंशोऽध्यायः ॥१९

अनुपरतविषयेच्छः कृतार्थंकृतकृत्यमिवमेने । अन्यथावनंगच्छेदितिभावः ॥ २२२ ॥ भुंजंतःपालयंतः ॥ २२३ ॥ यगंगाज० ॥ पूर्ततस्यकृतौतदर्थविवृतावेकोनविं शःशुभः श्रीमद्भारत० ॥ १९ ॥ इति श्रीमत्तात्पर्यनिर्णयटीकायां जनार्दनभट्टविरचितायां पदार्थदीपिकानाम्न्यां एकोनविंशोध्यायः ॥१९॥ श्रीकृष्णार्पणमस्तु ॥

श्रीगुरुभ्योनमः ॥ ॐ प्राप्तसाम्राज्यानांपार्थानांव्यापारभेदानाह । यज्ञेत्यादिना । युधिष्ठिरःयज्ञेयज्ञकरणे । उरुदानेषुतुलापुरुषादिमहादानेषु । नरदेववंदितायांनृपाति वंदने । नृपतयोयुधिष्ठिरंनमस्कुर्वंतीतिभावः । प्रश्नेसभायांऋषीन्प्रतितत्त्वप्रश्ने । ऋषिपूजायांअभूत् । अधिकृतोभूत् । भीमःधर्मानुशास्तौ वर्णाश्रमाणांधर्मशिक्षणेहरितत्व शंसनेहरितत्वोपदेशे स्वराष्ट्ररक्षादौस्वराष्ट्ररक्षणे आदिशब्देनप्रजापरिचारकादिरक्षणंगृह्यते आसीत् ॥ १ ॥ कृष्णाद्रौपदीतुस्त्रीधर्मसंशासनभृत्यकोशरक्षाव्ययादौअंतः पुरस्थस्त्रीणांधर्मशिक्षणेभृत्यानांरक्षणे वेतनादिनायोगक्षेमचिंतायामित्यर्थः । कोशस्यरक्षायांव्ययेच । आदिशब्दाद्गृहरक्षणादिविवक्षितं । अंतःपुरस्थस्यजनस्यगुणदोष

ॐ यज्ञोरुदाननरदेववंदिताप्रश्नर्षिपूजासु युधिष्ठिरोभूत् ॥ धर्मानुशास्तिहरितत्वशंसनस्वराष्ट्ररक्षादिषु भीम आ सीत् ॥ १ ॥ स्त्रीधर्मसंशासनभृत्यकोशरक्षाव्ययादौ गुणदोषचिंतने ॥ अंतःपुरस्थस्य जनस्य कृष्णा ह्यासीद्धरेर्ध र्मनिदर्शिनी च ॥ २ ॥ बीभत्सुरासीत्पराष्ट्रमर्दने तेनानियम्यांस्तु जरासुतादिन् ॥ स कीचकादींश्च ममर्द भीमस्त स्यैव ते बलतो नित्यभीताः ॥ ३ ॥ राष्ट्रेषु भीमेन विमर्दितेषु जिताश्च युद्धेषु निरुद्यमास्ते ॥ बभूवुरासीद्धरिधर्म निष्ठः प्रायेण लोकश्च तदीयशासनात् ॥ ४ ॥ आजीविनां वेतनदस्तदासीन्माद्रीसुतः प्रथमोथ द्वितीयः ॥ सं धानभेदादिषु धर्मराजपश्चाच्च खड्गी स बभूव रक्षन् ॥ ५ ॥ धृष्टद्युम्नस्तत्र सेनाप्रणेता शक्रप्रस्थे नित्यमास्ते तिहार्दात् ॥ विशेषतो भीमसखा स आसीद्राष्ट्रं चैषां सर्वकामैः सुपूर्णं ॥ ६ ॥ ॥ ॥

चिंतनेअयमपराधीअयमनपराधीअयंधर्मस्थइत्यादिगुणविवेकेतथा अंतःपुरस्थसर्वजनस्यहरेर्धर्मनिदर्शनी धर्मोपदेशकर्त्रीत्यर्थः । आसीत् ॥ २ ॥ तेनार्जुनेनानियम्यान् नियंतुमशक्यान् तेजरासुतादयःबलतोबलेनआसन्निितिशेषः ॥ ३ ॥ राष्ट्रेषुस्वराष्ट्रेषु भीमेनविमर्दितेषु भीमेनयुद्धेषुजितास्तेनिरुद्यमाःभीमप्रतिनिरुद्यमाबभूवुः । प्रायेणे त्ययोग्यजनव्यावृत्त्यर्थः ॥ ४ ॥ आजीविनांसेवोपजीविन्तां संधानभेदादिषुविप्रतिपन्नानांसंधानंसंधिकरणं अन्योन्यसंमतानांद्विषांभेदःद्वैधीकरणं आदिशब्देनविग्रहायु ज्यते । तेष्वासीत् । सधर्मराजंरक्षन्धर्मराजपश्चाच्चखड्गीबभूव ॥ ५ ॥ सेनाप्रणेतासेनापतिःअतिहार्दात्अतिस्नेहात् । आस्तेतिष्ठति तेषांपांडवानांकामैर्विषयैः ॥ ६ ॥

भीमसेनेशासतितेषांपांडवानांराष्ट्रे व्याधितःव्याधियुक्तः विपर्ययान्मृतिःवृद्धस्यपुरतस्तरुणस्यनाशोनबभूवेत्यर्थः ॥ ७ ॥ दर्शनोत्सुकाःराजदर्शनोत्कंठाःप्रतिग्रहाययाजनाययुधिष्ठिरंयांति । कार्यार्थिनोनैव कुतःवृकोदरेणाखिलानिकार्याणिसिद्ध्यंतिसिद्धिंयांति । यतःअतोनैवयुधिष्ठिरंयांतीत्यर्थः ॥ ८ ॥ गंधर्वाद्याइंद्रंयथातथापार्थान्सेवंते । नृत्यगीतादिभिरितिशेषः । देवाअपिमुनयश्चकृष्णमर्चितुमायांति कृष्णःपांडवस्नेहात्प्रायेणेंद्रप्रस्थेतिष्ठतीतिभावः ॥ ९ ॥ कार्तयुगाःकृतयुगसंबंधिनःतैःप्रवर्तिताः ततःकृतयुगधर्मेभ्योधिकाश्चतस्मात्कृतयुगात् सुवर्णादेःसस्यसंपदामपिवृद्धिरधिकाबभूव ॥ १० ॥ शामलादीनामारभ्यस्पष्टतयापृथक्पृथक्चतुर्थंजन्मदर्शयन् युधि

नावैष्णवो न दरिद्रो बभूव न धर्महानिश्च बभूव कस्य चित् ॥ तेषां राष्ट्रे शासति भीमसेने न व्याधितो नापि विपर्ययान्मृतिः ॥ ७ ॥ युधिष्ठिरं यांत्यथ दर्शनोत्सुकाः प्रतिग्रहायाप्यथ याजनाय ॥ कार्यार्थिनो नैव वृकोदरेण कार्याणि सिद्ध्यंति यतोखिलानि ॥ ८ ॥ गंधर्वविद्याधरचारणाश्च सेवंत एतान्सततं समस्ताः ॥ यथा सुरेंद्रं मुनयश्च सर्वे आयांति देवा अपि कृष्णमर्चितुम् ॥ ९ ॥ तेषां राष्ट्रे कार्तयुगा हि धर्माः प्रवर्तिता एव ततोधिकाश्च ॥ वृद्धिश्च तस्मादधिका सुवर्णरत्नांबरादेरपि सस्यसंपदाम् ॥ १० ॥ अथोपयेमे शिशुपालपुत्रीं युधिष्ठिरो देवकीनामपूर्वां ॥ स्वीयां भार्यां यत्सहजो धृष्टकेतुरनुल्हादः सवितुश्चांशयुक्तः ॥ ११ ॥ तस्यां सुहोत्रो नामतः पुत्र आसीद्यश्चित्रगुप्तो नाम पूर्वं सुलेखः ॥ कृष्णा सैवाप्यन्यरूपेण जाता काशीशपुत्री यां प्रवदंति काली ॥१२॥ सा केवला भारती नान्यदेव्यस्तत्राविष्टास्तत्कृते काशिराजः ॥ स्वयंवरार्थे नृपतीनाजुहाव सर्वांस्तेपि ह्यत्र हर्षात्समेताः ॥ १३ ॥ ॥ ॥ ॥ ॥

ष्ठिरादीनांविवाहांतरमाह । अथेत्यादिना । यत्सहजःयस्याःदेवक्याःसहजोभ्राताधृष्टकेतुःपूर्वंअनुल्हादःप्रल्हादावरजः ॥ ११ ॥ पूर्वंयःसुलेखःसम्यक्लेखनकर्ताचित्रगुप्तोनाम सतस्यांदेवक्यांनामतःसुहोत्रःपुत्रआसीत् । साकृष्णैवअन्यरूपेणापिजाता ॥ १२ ॥ साकालीकेवलाभारती । केवलेत्युक्तंविवृणोति । नेति । तत्रकाल्यां अन्यदेव्यःशच्याद्याःनाविष्टाःएकदेहत्वेनवंचनकृतफलंभारतीसंस्पृष्टतयाजन्मत्रयं । तत्रैकस्मिन्जन्मनिअन्यगात्वमनुभूतमितिभावः । तत्कृतेकालीकृतेआजुहाव आह्वयामास । समेताः मिलिताः ॥ १३ ॥ ॥ ॥ ॥ ॥

एषाकालीतेषांराज्ञांमध्ये भीमसेनांसेभीमसेनस्यस्कंधे मालामधात्स्थापयामास । तत्रतस्मिन्नवसरेवैष्णवेनराज्ञःकन्याऽन्हीयतइतिक्रुद्धाःसंतः विष्णोराश्रितान्वैष्णवान् उपलक्षणमेतत् । विष्णुमपिउच्चैराक्षिपंतःनिंदंतः शिवंशैवांश्चआस्तुवंतःसंतःआसेदुःप्राप्ताः ॥ १४ ॥ सभीमःपूर्वमेवादावेव वेदाःअदोषाःअप्रामाण्यादिदोषरहिताइति संसाधयित्वा संप्रयुक्तैःअपौरुषेयत्वादियुक्तिभिःसाधयित्वा वैदिकैर्वाक्यैर्वेदगतवाक्यैः साधुभिःदोषरहितैःतर्कैःअनुमानैःसदागमैःपंचरात्रेतिहासादिभिः वचोभिस्तानन्य संमतान् जरासुतादीन् । पूर्ववक्ष्यमाणयुद्धापेक्षयाप्रथमतःजिग्यइतिभावः ॥ १५ ॥ शैवशास्त्राणिवेदाधिक्यं वेदानांप्रामाण्यलक्षणमाधिक्यंवेदोज्झितानांवेदप्रामाण्यमनं गीकुर्वतां शैवशास्त्राणिबहुलांबव्हींनिंदामाहुः । तथाशाक्तेयस्कांदसौरादिकानां दर्शनानांनिंदामाहुः तत्रैवप्रमाणतयांगीकृते वेदएवछंदसांविदानांवैष्णवत्वंविष्णोरुत्कर्षप

तेषां मध्ये भीमसेनांस एषा मालामधात्तत्र जरासुताद्याः ॥ क्रुद्धा विष्णोराश्रितानां क्षिपंत आसेदुरुच्चैः शिवमा स्तुवंतः ॥ १४ ॥ पूर्वं वाक्यैर्वैदिकैस्तान्स भीमो जिग्ये तर्कैः साधुभिः संप्रयुक्तैः ॥ वेदास्त्वदोषा इति पूर्वमेव सं साधयित्वैव सदागमैश्च ॥ १५ ॥ वेदाधिक्यं शैवशास्त्राणि चाहुर्वेदोज्झितानां बहुलां च निंदां ॥ तथा शाक्तेयस्कां दसौरादिकानां तत्रैवोक्तछंदसां वैष्णवत्वं ॥ १६ ॥ विष्णोराधिक्यं तानि शास्त्राणि चाहुः शिवादिभ्यः कुत्रचिन्नैव वेदे ॥ विष्णूत्कृष्टः कथितो बौद्धपूर्वाश्चाहुर्विष्णुं परमं सर्वतोपि ॥ १७ ॥ लोकायताश्च क्वचिदाहुरग्र्यं विष्णुं गुरुं सर्ववरं बृहस्पतेः ॥ सर्वागमेषु प्रथितोतएव विष्णुः समस्ताधिक एव मुक्तिदः ॥ १८ ॥ ॥

रमत्वं ॥ १६ ॥ नकेवलंविष्णूत्कर्षोवेदैरुच्यते किंतुशैवशास्त्राण्यप्याहुरित्याह । विष्णोरिति । तानिशास्त्राणिकुत्रचित्प्रसंगेशिवादिभ्यःविष्णोराधिक्यमाहुः । वेदेकुत्राचि त्विष्णूत्कृष्टःविष्णोःसकाशादुत्तमः अन्योनकथितःइंद्रादिशब्दानांविष्णुपरत्वादितिभावः । नकेवलंवैदिकाविष्णुंपरममाहुः । किंत्ववैदिकाश्चतथाहुरित्याह । बौद्धपूर्वाश्चे ति विष्णुंबुद्धरूपिणंसर्वतोपिसर्वेभ्यएवपरममाहुः ॥ १७ ॥ लोकायताश्चार्वाकाःक्वचित्विष्णुंसर्ववरंबृहस्पतेःगुरुंक्वचित्बृहस्पतेरग्र्यमाहुः । अतएवशिवादिभिरपिविष्णो राधिक्यस्यांगीकृतत्वादेवमुक्तिदोविष्णुःसमस्ताधिकइतिसर्वागमेषु एकःप्रथितएवप्रसिद्धएव ॥ १८ ॥ ॥ ॥ ॥

अन्यपक्षेषुशिवादेरुत्तमत्वसिद्धांतेषुतेष्वागमेष्वेवशिवाद्यागमेष्वेव । परस्परंविरुद्धताहि आगमानामन्योन्यविरोधः । एकस्मिन्नप्यागमेपूर्वोत्तरविरुद्धताहि एवमागमैर्विष्णोराधिक्यंप्रसाध्य प्रत्यक्षेणापिसाधयति । प्रत्यक्षतश्चेति । हेभूपाः अत्रविष्ण्वाधिक्यविषये कैमुत्यन्यायेनविष्णुपदाश्रयस्यमेबाह्वोर्बलंप्रत्यक्षतः आशुपश्यध्वं । पश्यतु ॥ १९ ॥ तदेवदर्शयति । पूर्वमित्यादिना । कुरूणांपुरेगंगाममविष्णुपूजाविघ्नार्थमायात् । मेमयावामकरेणनुन्नापराक्षिप्ता परस्तात्परतःकूलादितिशेषः । बहुयोजनंगता । तदाशिवःआगतः ॥ २० ॥ सशिवःकापिलात्मिकांकपिलगोरूपांपरीक्षयन् ममबलमितिशेषः । मेमयागदाप्रहरात् विजितःमूर्छितःसन् लिंगांतरस्थः पाषाणलिंगांतरस्थःआस । पाषाणलिंगविशेषोऽर्थः ॥ २१ ॥ तद्वदन्यत्रस्थलांतरेयुद्धमभूत् तदेवविवृणोति तीरइति । हैमवतेगिरौहिमवत्पर्वतेगोमत्याःगोमतीनाम्न्याःनद्यास्ती



तेष्वागमेष्वेव परस्परं च विरुद्धता ह्यन्यपक्षेषु भूपाः ॥ प्रत्यक्षतश्चात्र पश्यध्वमाशु बलं बाह्वोर्मे विष्णुपदाश्रयस्य ॥ १९ ॥ पूर्वं हि गंगा मम विष्णुपूजाविघ्नार्थमायाद्वामकरेण सा मे ॥ नुन्ना परस्ताद्बहुयोजनं गता पुरे कुरूणां शिव आगत[illegible] ॥ २० ॥ स व्याघ्ररूपी कपिलात्मिकामुमां परीक्षयन् हंतुमिवाद्रवद्द्रुतं ॥ स मे युद्धे विजितो मूर्छितश्च गदाप्रहारादास लिंगांतरस्थः ॥ २१ ॥ व्याघ्रेश्वरं नाम लिंगं पृथिव्यां ख्यातं तदा तद्वदन्यत्र युद्धे ॥ तीरे गोमत्या हैमवते गिरौ हि जितस्तत्राप्यास शार्दूललिंगं ॥ २२ ॥ एवं प्रत्यक्षे विष्णुपदाश्रयस्य बलाधिक्ये किमुवक्तव्यमत्र ॥ विष्णोराधिक्ये क्षत्रियाणां प्रमाणं बलं विप्रे ज्ञानमेवेति चाहुः ॥ २३ ॥ मया केदारे विप्ररूपी जितश्च रुद्रो विशल्लिंगमेवाशु भीतः ॥ ततः परं वेदविदामगम्यतां शापं प्रादाच्छंकरो क्रीडितोऽत्र ॥२४॥

एवमुक्तरीत्याविष्णुबलेप्रत्यक्षेअधिकतयाप्रत्यक्षसिद्धेसति । यस्यमनःप्रतीपंविप्रतिपन्नंसब्रवीतु । आधिक्येविप्रतिपन्नंप्रतिस्वबलमुक्त्वा विष्णुबलइतिकथमुच्यतइतिचे त्सत्यं । स्वबलस्यापिविष्णुबलप्रतिबिंबत्वात्तथेतियुज्यते । क्रोधाधिकश्चेत् निरुत्तरत्वादितिशेषः ॥ २५ ॥ एनंजरासुतं विष्णोःपदोत्थायां पदात्पादात्उत्थायांजा तायांदेवनद्यांभागीरथ्यां प्राक्षिपत्चिक्षेप ॥ २६ ॥ काल्याकालीनाम्न्यासह शक्रसनामकंपुरंशक्रेणसमाननामकंपुरं शक्रप्रस्थमित्यर्थः ॥ २७ ॥ आसंमितायांस

एवं प्रत्यक्षे विष्णुबले प्रतीपं मनो यस्य ह्युत्तरं स ब्रवीतु ॥ क्रोधाधिकश्चेत्क्षिप्रमायातु योद्धुमित्युक्तास्तेभ्या ययुरात्तशस्त्राः ॥ २५ ॥ विद्राव्य तान् बाणसंघैः समस्तान् जरासुतं गदया पोथयित्वा ॥ बाहुभ्यां चैनं परि गृह्याशु विष्णोः पदोत्थायां प्राक्षिपद्देवनद्यां ॥ २६ ॥ स व्रीडितः प्रययौ मागधांश्च भूपैः समेतो भीमसेनो रथं स्वं ॥ आरुह्य काशीश्वरपूजितश्च ययौ काल्या शक्रसनामकं पुरं ॥ २७ ॥ तस्यां त्रिलोकाधिकरूपसद्गुणे रासं मितायां रममाणः सुतं च ॥ शर्वत्रातं नाम्ना जनयत्पुरा यः समानवायुर्बलवीर्ययुक्तः ॥ २८ ॥ कृष्णोपि गत्वा द्वारवतीं सरामः सत्या पितुर्वधकर्तारमेव ॥ शतधन्वानं हंतुमैच्छत्स चैव ययाचेक्रूरं कृतवर्मानुयुक्तं ॥ २९ ॥ तावब्रूतां सर्वलोकैककर्तुर्नावां विरोधं मनसापि कुर्वः ॥ कृष्णस्य सर्वेशितुरित्यनूक्त आरुह्य चाश्वीं भयतः प राद्रवत् ॥ ३० ॥ अन्वेव तं कृष्णरामौ रथेन यातौ शतं योजनानां दिनेन ॥ गत्वा मृतायां वडवायां पदैव संप्राद्रवत्कृष्ण एनं पदागात् ॥ ३१ ॥ छित्त्वा शिरस्तस्य चक्रेण कृष्णो जानन्नक्रूरे मणिमनेन दत्तं ॥ अप्यज्ञ वल्लोकविडंबनाय परीक्ष्य वासोत्र नेत्याह रामम् ॥ ३२ ॥ ॥ ॥

स्यक्प्रासिद्धायां आसमंतात्संमितायांस्वानुरूपायांवा ॥ २८ ॥ गत्वाइंद्रप्रस्थादितिशेषः । सचशतधन्वाययाचे सहायार्थमितिशेषः ॥ २९ ॥ तौअक्रूरकृतवर्माणौ आवांविरोधंमनसापिनकुर्वइतिअब्रूतांइत्यनूक्तः अक्रूरकृतवर्मभ्यांस्ववाक्यमनूक्तइत्यर्थः । अश्वींवडवां ॥ ३० ॥ कृष्णःएनंपदागात् रामंविहायेतिशेषः ॥ ३१ ॥ वासःशतधन्ववस्त्रंपरीक्ष्य मणिरस्तिवानवेतिदृष्ट्वेत्यर्थः । नेत्याहमणिर्नास्तीत्याह ॥ ३२ ॥ ॥ ॥ ॥ ॥

पार्थेभ्यःकेशवस्यआहार्यतांआहर्तुमशक्यतांजानन् बलंबलभद्रंवशीकर्तुंगात्अगात् ॥ ३ ३॥ धार्तराष्ट्रःकेशवस्यअसन्निधानंअसामीप्यंप्रतीक्षन्अपेक्ष्यमाणःसन् । अस्य रामस्यगदायांगदाशिक्षायामित्यर्थः । शिष्योबभूव । यथावशीकर्तुमगात् तथावशीकर्तुमेवशिष्योबभूवेतिभावः । तस्यरामस्यभगिनींसुभद्रां सरामःप्रदानेदातुमित्यर्थः ॥ ३४ ॥ हियस्मात्केशवःएनंज्येष्ठंअग्रजंरामंनातिवर्तेत । अतिक्रमीनभवतीत्यर्थः । धार्तराष्ट्रइतिमेने तस्मात्कारणात्सदुर्योधनःसत्यहेतोःसत्यप्रतिज्ञार्थं दक्षिणंहस्तं जग्राह । रामःअस्मैदुर्योधनायहलांकंहस्तंददौ । क्षत्रियाःआयुधहस्तेनशपथंकुर्वंतीतिसूचयितुं हलांकमित्युक्तं ॥ ३५ ॥ भगिन्याःस्नेहात् कृष्णरामौमेवशंयास्यतइ

अविश्वासात्स तु सक्रोध एव ययौ विदेहानवसत्पंचचाब्दान् ॥ जानन्पार्थेभ्यो हार्यतां केशवस्य वशीकर्तुं धार्तराष्ट्रो बलं गात् ॥ ३३ ॥ बभूव शिष्योस्य तथा गदायामसन्निधानं केशवस्य प्रतीक्षन् ॥ तदा ययाचे भगिनीं च तस्य स च प्रतिज्ञामकरोत्प्रदाने ॥ ३४ ॥ ज्येष्ठं ह्येनं केशवो नातिवर्तेदित्येव मेने धार्तराष्ट्रः स तस्मात् ॥ जग्राह हस्तं दक्षिणं सत्यहेतोर्ददौ स रामः करमस्मै हलांकं ॥ ३५ ॥ रूपेण तस्या मोहितो धार्तराष्ट्रो विशेषतः कृष्णरामौ भगिन्याः ॥ स्नेहाद्वशं यास्यत इत्यगृण्हाद्धस्तं हलांकं हलिनो रिपुघ्नं ॥ ३६ ॥ जाता देवक्यां सा सुभद्रेति नाम्ना भद्रारूपेणानकदुंदुभेस्तां ॥ कृत्वा पुत्रीं रोहिणी स्वामरक्षत्पूर्वं तु यासीत्त्रिजटैव नाम्ना ॥ ३७ ॥ सीतायाः प्राङ् नित्यशुश्रूषणात्सा बभूव विष्णोर्भगिनी प्रिया च ॥ उमावेशाद्रूपगुणोपपन्ना पद्मेक्षणा चंपकदामगौरी ॥ ३८ ॥ एतत्कृत्वा धृतराष्ट्रात्मजः स ययौ कुरून्निवसत्यत्र रामे ॥ कृष्णोक्रूरं विवसंतं भयेन सहार्दिक्यं चानयित्वा जगाद ॥ ३९ ॥ ॥ ॥ ॥

तिविशेषतःमुख्याभिप्रायेणहलिनोहस्तमगृण्हात् ॥ ३६ ॥ पूर्वंयानाम्नात्रिजटाआसीत् सैवानकदुंदुभेः वसुदेवात्देवक्यांजाता । तांसुभद्रांरोहिणीवसुदेवभार्यास्वांपुत्रीं कृत्वाअरक्षत् ॥ ३७ ॥ प्राक्पूर्वं चंपकदामगौरी चंपकमालावत्पीतवर्णा ॥ ३८॥ धृतराष्ट्रात्मजः एतद्भगिनीप्रदानेशपथंकृत्वासंपाद्य । अत्रविदेहपुर्यांरामेनिवसति सतिस्वयंकुरून्ययौ । कृष्णःद्वारवत्याः अन्यत्रभयेनाविवसंतांस्थितं सहार्दिक्यंकृतवर्मणासहितं । अक्रूरंआनयित्वा ॥ ३९ ॥ ॥ ॥ ॥

रामंचआनीयविदेहपुर्याइतिशेषः । समस्तसात्वतांसन्निधानेजगाद । यदाकेशवः हेअक्रूरमणिस्त्वयि आस्तेतिष्ठतिदर्शयेत्यवादीत् । तदाभीतोक्रूरः अस्मैकृष्णायरत्नमदर्शयत् । इतिश्लोकद्वयान्वयः ॥ ४० ॥ अव्याजतांनिष्कपटत्वं तस्यरामस्यसांबस्यमातुःजांबवत्याः ॥ ४१ ॥ अन्यैरधार्योमणिरक्रूरेआस्तांतिष्ठतु समणिःदानपतेःधार्यःधर्तुंयोग्यः कुतःसदायज्ञात्नित्ययज्ञकर्तृत्वादित्यर्थः । सत्यासत्यभामाकृष्णावांछितं कृष्णेनआनाकांक्षितं किंचिदपिनैच्छेत् तथापितस्याःयोग्यइत्याह ॥४२॥ अतंद्रःआलस्यरहितः ॥ ४३ ॥ नदीरूपकांकालिंदींव्यावृत्तयेअन्यामितिपदप्रयोगः । तत्स्वसारंयमुनाभगिनीं ॥ ४४ ॥ तदेवविवृणोति । सेति । कृष्णपत्नीत्वकामा कृ

आनीय रामं च समस्तसात्वतां यदावादीत्केशवः सन्निधाने ॥ मणिस्त्वय्यास्ते दर्शयेत्येव भीतस्तदाक्रूरो दर्शयद्रत्नमस्मै ॥ ४० ॥ अव्याजतामात्मनो दर्शयित्वा हलायुधे केशवस्तस्य जानन् ॥ रत्नाकांक्षामुग्रसेनस्य चैव मातुश्च सांबस्य पुनर्बभाषे ॥ ४१ ॥ आस्तामक्रूरे मणिरन्यैरधार्यः सदा यज्ञाद्दानपतेः सधार्यः ॥ न सत्या कृष्णावांछितं किंचिदिच्छेत्तथापि तस्या योग्य इत्याह कृष्णः ॥ ४२॥ लब्ध्वा रत्नं दानपतिः सदैव संदीक्षितो भूद्यज्ञकर्मण्यतंद्रः ॥ प्रदर्श्य कृष्णो हलिने रत्नमेतच्छक्रप्रस्थं पांडवस्नेहतोगात् ॥४३॥ वसन्नजस्तत्र बहूंश्च मासान् सफल्गुनो यान्मृगयां कदाचित् ॥ हत्वा मृगान्यमुनातीरसंस्थः सोन्यां कालिंदीं ददृशे तत्स्वसारं ॥ ॥ ४४ ॥ सा सूर्यपुत्री यमुनानुजाता तपश्चरंती कृष्णपत्नी त्वकामा ॥ पृष्टार्जुनेनाह समस्तमेतत्पत्नीं च तां जगृहे वासुदेवः ॥ ४५ ॥ ततो गत्वा नग्नजितो गृहं च स्वयंवरे सप्तवृषानगृण्हात् ॥ सर्वैरग्राह्यानसुरान्वरेण शिवस्य यैर्निर्जिता भूमिपालाः ॥ ४६ ॥ ततो नीलां तस्य सुतां च लेभे पूर्वं नीला गोपकन्यापि यासीत् ॥ सा देहेस्याः प्राविशत्पूर्वमेषा यस्मादेकाद्द्विविधा संप्रजाता ॥ ४७ ॥ ॥ ॥ ॥

ष्णस्यपत्नीत्वेकामोयस्याःसा तथाएतत्समस्तंस्वतपःकारणं ॥४५॥ नग्नजितोराज्ञः वरेणाग्राह्यान्गृहीतुमशक्यानसुरान् सप्तवृषान्वृषभान्अगृण्हात् । अवध्यात्यैर्वृषभैः ॥ ४६ ॥ तस्यनग्नजितः सुतांनीलांलेभे । पूर्वंगोपकन्यायशोदाभ्रातृकुंभकनामगोपालस्य कन्यायानीलाकृष्णभार्या सागोपकन्यानीलाअस्याःनग्नजित्सुतायाःदेहेप्राविशत् एषानीलाएकायस्माद्द्विविधाद्विप्रकारेणरूपद्वयेनेत्यर्थः । संप्रजातातस्मादितिसंबंधः ॥ ४७ ॥ ॥ ॥ ५१

पितृष्वसुःराजाधिदेव्याः आसृजत्समर्पयामास । तस्याःमित्रविंदायाःभ्रातरौ धार्तराष्ट्रार्थंदुर्योधनायदातुमितिशेषः । न्यषेधतांनिषेधंचक्रतुः अतएवउग्रौ ॥ ४८ ॥ अवंत्यौअवंतिदेशोद्भवौ विंदानुविंदौनृपतींश्चतत्रागतान्नृपतीन् तांमित्रविंदांद्वितीयांपितृष्वसुःश्रुतकीर्तेस्तनयांभ्रातृभिर्दत्तांभद्रांभद्रानाम्नींअगृण्हात् ॥ ४९ ॥ अस्याःभद्रायाःभ्रातरःपंचकैकयाःकैकयदेशोत्पन्नाःएतेपूर्वंविश्वेषांदेवानामवताराः हियस्मात्तस्माद्धरेश्चभक्ताः पांडवानांचभक्ताःएषांतातोपिकैकयानांपितापि अग्रेपूर्वंऋभुऋस्व्याख्यःकश्चनदेवःअत्रशैब्यनामाएषांकैकयानांवशेतिष्ठतीतिशेषः । अतएवसपितातेनभ्रातृभिर्दत्तामित्युक्तं ॥५०॥ मद्रेषुमद्रदेशेषुलक्षणायाःस्वयंवरःआसीत् । सलक्षणायाः

पितृष्वसुर्मित्रविंदा सुता च कृष्णे मालामासृजद्राजमध्ये ॥ विंदानुविंदौ भ्रातरावेव तस्या न्यषेधतां धार्तराष्ट्रार्थमुग्रौ ॥४८॥ जित्वा[illegible]त्यौ नृपतींश्चैव सर्वानादाय तां प्रययौ वासुदेवः ॥ पितृष्वसुस्तनयां च द्वितीयां भद्रांदत्तामग्रहीत्तद्भ्रातृभिः [illegible] ४९॥ विश्वेषां देवानामवतारा हि पंच ते कैकया भ्रातरोस्या हरेश्च ॥ भक्ता नित्यं पांडवानां च तातो ह्येषां [illegible]शं शैब्यनामा भुरग्रे ॥५०॥ स्वयंवरो लक्षणायास्तथासीद्यथा द्रौपद्याः लक्ष्यवेधात्मकः सः ॥ मद्रेषु तस्याश्च पिता पिनाकं स्वयंवरार्थं जगृहे गिरीशात् ॥ ५१ ॥ लक्ष्यं च तत्सर्वतश्छन्नमेव द्वारं च तस्याप्युपरिस्म लक्ष्यात् ॥ छिन्नेषुणा पातनीयं च तद्धि द्रौपद्यर्थात्तदशक्यं ततोलं ॥ ५२ ॥ तत्राजग्मुर्मागधाद्याश्च सर्वे पार्था अपि द्रष्टुमिहाभ्युपाययुः ॥ दुर्योधनाद्याश्च ससूतपुत्राः सज्जं कर्तुं धनुरप्युत्सहंते ॥५३ ॥ केचिन्निपेतुर्धनुषेव ताडिताः न वै केचिच्चालयितुं न शेकुः॥ दुर्योधनो मागधः सूतपुत्रः सज्जं कृत्वा लक्ष्य वीक्षां न शेकुः॥५४॥

स्वयंवरःद्रौपद्यास्वयंवरोयथातथा लक्ष्यवेधात्मकःतस्याःलक्षणायाःपिताबृहत्सेनः पिनाकंधनुः ॥ ५१ ॥ तल्लक्ष्यंसर्वतःछन्नंपिहितं तस्यलक्षस्यद्वारमापिलक्ष्यादुपरिस्म । लक्ष्यस्योर्ध्वभागेवर्ततइतिशेषः । तल्लक्ष्यंछिन्नेषुणाछिन्नबाणेनपातनीयंद्रौपद्यर्थात्द्रौपदीस्वयंवरार्थं कृताल्लक्ष्यात् ततूलक्षणायाःस्वयंवरे रचितलक्ष्यंततःलक्ष्यस्यसर्वतःछन्नत्वादेःकारणात् अलंअत्यंतं अशक्यंहि दुष्करं ॥ ५२ ॥ अत्रस्वयंवरेमागधाद्याः ससूतपुत्राःसर्वेदुर्योधनाद्याआजग्मुः धनुरपिसज्जंकर्तुंउत्सहंतेप्रयतंते । पार्थाअपिकेवलंइहस्वयंवरंद्रष्टुं लक्षणाकृष्णयोगमितिशेषः ॥ ५३ ॥ लक्ष्यवीक्षांकर्तुं ॥ ५४ ॥ ॥ ॥ ॥

लक्ष्यंऐक्षत्ददर्श । अनिच्छयैवकन्यायाइतिशेषः । तांलक्षणां ॥ ५५ ॥ अरींद्रधारिणःचक्रधरस्ययोग्येकर्मणिआयतनूयत्नवान् । अपराधीस्यामितिअंजःसम्यक्पश्य मानःपश्यतीतिपश्यन्तच्छीलः पश्यमानःताच्छील्यवयोवचनेतिचानश जानन्नित्यर्थः । महात्माभीमःअत्रस्वयंवरे चापंएतल्लक्ष्यंद्रष्टुमपिनैवैच्छत् ॥ ५६ ॥ अचिंत्यः हेतुगर्भविशेषणमेतत् ॥ ५७ ॥ केशवांसेकृष्णस्यस्कंधे अस्यकृष्णस्यउपसमीपेतस्थौ । अथनरेंद्राःअगुःप्रापुः ॥ ५८ ॥ पुरींद्वारावतीं एताःरुग्मिण्याद्याः अष्टमहाम हिष्यःपट्टस्त्रियःदिव्याःअलौकिकाःइष्टाःप्रियाःइत्युक्ताः ॥ ५९ ॥ रुग्मिणीसत्यभामयोःइतरावत्स्वरूपभेदः ताभिःसाम्यंचप्रतीयते अतस्तंनिवारयति । भैष्मीति । मूल

धनंजयः स्वात्मबलं प्रकाशयन्सज्जं कृत्वा धनुरैक्षच्च लक्ष्यं ॥ नैवाददे बाणमनिच्छयैव प्राप्यां जानन् केशवेनैव तां च ॥ ५५ ॥ भीमश्चापं लक्ष्यमप्येतदत्र द्रष्टुं च नैवैच्छदरींद्रधारिणः ॥ योग्ये कर्मण्यायतश्चापराधी स्या मित्यंजः पश्यमानो महात्मा ॥ ५६ ॥ कृष्णश्च तच्चापमधिज्यमाशु कृत्वाचिंत्यश्छिन्नबाणेन लक्ष्यं ॥ अपा तयद्दुंदुभयश्च दिव्याः नेदुः प्रसूनं ववृषुः सुराश्च ॥ ५७ ॥ कृष्णे ब्रह्माद्यैस्तूयमाने नरेंद्रकन्या मालां केशवांसे निधाय ॥ तस्थावुपास्याथ सर्वे नरेंद्रा युद्धायागुः केशवं ह्यात्तशस्त्राः ॥ ५८ ॥ विद्राव्य तान् मागधादीन्स कृष्णो भीमार्जुनाभ्यां ॥ सहितः पुरीं स्वां ॥ ययावेता अष्टमहामहिष्यः कृष्णस्य दिव्या लोकसुंदर्य इष्टाः ॥ ५९ ॥ भै ष्मी सत्या चैकतनुर्द्विधैव जाता भूमौ प्रकृतिर्मूलभूता ॥ तयैवान्याः सर्वदानुप्रविष्टास्तासां मध्ये जांबवती प्र धाना ॥ ६० ॥ रामेण तुल्या जांबवतीप्रियत्वे कृष्णस्यान्याः किंचिदूनाश्च तस्याः ॥ यदावेशो बहुलः स्याद्रमा यास्तदा तासु प्रीयते केशवोलं ॥ ६१ ॥ ॥ ॥ ॥ ॥

भूतासर्वस्यजननीत्वेनकारणभूताप्रकृतिर्लक्ष्मीःअन्याःजांबवत्याद्यास्तयालक्ष्म्यासर्वदानित्यमनुप्रविष्टाःयुक्ताइत्यर्थः । तासांषट्स्त्रीणांमध्ये जांबवतीप्रधानाश्रेष्ठा ॥ ६० ॥ एवंस्वरूपमुक्त्वा तासांरमावेशनिमित्ततारतम्यविशेषमाह । रामेणेति । जांबवतीकृष्णस्यप्रियत्वे रामेणतुल्या । सदारमावेशादितिशेषः । ननु स्वरूपतःअन्याःकालिं द्याद्याःयदारमायाःआवेशोबहुलःस्यात्तदातस्याःजांबवत्याःसकाशात्किंचिदूनाः तदैवतासुकालिंद्यादिषु नुकेशवःअलंप्रीयते ॥ ६१ ॥ ॥

यदाश्रियः आवेशः तत्रतासुह्रासमुपैति । तत्रतस्मिन्कालेप्रद्युम्नतः कृष्णपुत्रप्रद्युम्नात् विंशगुणाधिकाः विंशतिगुणैः अधिकाः स्युः अनादितः अनादिकालतः [illegible]
केशवान्नान्यसंस्थाः हरिंविनाअन्यपुरुषेणनरंतीतितास्ताः । ताभिः[illegible] ॥ ६२ ॥ रैवतकं रैवतनामकंगिरिंनानादेश्याः [illegible] ॥ ६३ ॥
वैदर्भ्यारुग्मिण्या ॥ ६४ ॥ नारदः आकाशात्कृष्णमेत्य त्वंसर्वोत्तमः त्वादृशः कश्चिन्नास्ति । इत्येतदर्थमभिप्रेत्यत्वंधन्यस्त्वमाश्चर्यइत्याह । नारदेनधन्यः आश्चर्यइतिश
ब्दद्वयेउक्तेसत्येव वासुदेवः तंनारदं ॥ ६५ ॥ दक्षिणाभिः साकमित्येवाह । भूपाः धन्यः आश्चर्यइतिऋषिणोक्तंकिं दक्षिणाभिः साकमितित्वयोक्तंकिमिति । कृष्णंपप्रच्छुः स्म

यदावेशो ह्रासमुपैति तत्र प्रद्युम्नतो विंशगुणाधिकाः स्युः ॥ अनादितस्ताः केशवान्नान्यसंस्था रेमे ताभिः केशवो द्वारवत्यां ॥ ६२ ॥ एवं कृष्णे द्वारकामध्यसंस्थे गिरिं भूपा रैवतकं समाययुः ॥ दुर्योधनाद्याः पांडवाश्चैव सर्वे नानादेश्या ये च भूपालसंघाः ॥ ६३ ॥ आत्मानं तान् द्रष्टुमभ्यागतान्सः कृष्णो गिरौ रैवतके ददर्श ॥ नमस्कृते सर्वनरेंद्रमुख्यैः कृष्णे वैदर्भ्या सह दिव्यासनस्थे ॥ ६४ ॥ एत्याकाशान्नारदः कृष्णमाह सर्वोत्तमस्त्वं त्वादृशो नास्ति कश्चित् ॥ इत्याश्चर्यो धन्य इत्येव शब्दद्वये तूक्ते वासुदेवस्तमाह ॥ ६५ ॥ दक्षिणाभिः साकमित्येव कृष्णं पप्रच्छुरेतत्किमितिस्म भूपाः ॥ नारायणो मुनिमूचे वदेति श्रुणुध्वमित्याह स नारदोपि ॥ ६६ ॥ कूर्मो दृष्टो विष्णुपद्यां मयोक्तस्त्वमुत्तमो नास्त्यधिकस्तवेति ॥ ऊचे गंगामुत्तमं सा जलेशमुमामूचे पृथिवीनामिकां सः ॥ ६७ ॥ ॥ ॥ ॥ ॥

नारायणः कृष्णस्त्वदुक्तस्यमदुक्तस्यचार्थंवदेति मुनिमूचे । सनारदोपिमदुक्तस्यभगवदुक्तस्यच मयावक्ष्यमाणमर्थंयूयंशृणुध्वमितिभूपानाह ॥ ६६ ॥ तत्रादौधन्यआश्चर्य इतिस्वोक्तशब्दद्वयार्थमाह । कूर्मइत्यादिना । मयाविष्णुपद्यांकश्चनकूर्मोदृष्टः कूर्मोनामगंगातोयचरः कश्चनदेवस्त्वमुत्तमस्तवसमोनास्तीत्यभिप्रायेण त्वंधन्यस्त्वमाश्चर्य इतिमयोक्तः । कूर्मः गंगामुत्तमामूचे । उपलक्षणमेतत् । आश्चर्यमित्यपिग्राह्यं । मयोक्तासागंगाजलेशंवरुणंधन्यमाश्चर्यमूचे । सजलेशः उमांधन्यांआश्चर्यमूचे जलेशः पृथिवींधन्यामाश्चर्यमूचइतिग्रंथांतरस्याभिप्रायमाह । पृथिवीनामिकामिति ॥ ६७ ॥ ॥ ॥ ॥ ॥

सा पृथिवीनामिकाउमात्वत्तःकथमुत्तमेत्यतआह । याइति । यामादृशाःमत्सदृश्योदेवतास्ताःसर्वशःसर्वाः मदुत्तमाश्चंद्रादींद्राताश्चेत्यर्थः । तयाउमयाधृताःतस्मात्सामदुत्तमेतिभावः । उमायांपृथिवीशब्दप्रवृत्तिनिमित्तमाह । प्रथितत्वादिति । प्रथितत्वात्प्रसिद्धत्वात् । पृथिव्यापृथिवीनाम्न्यातयाउमयादेवताधृताइत्यन्वयः । साउमापिमया त्वंधन्याश्चर्येत्युक्ता शिवंशेषंगरुडंचधन्यानाश्चर्यानाह ॥ पृथिवीस्वाश्रयान्पर्वतान् धन्याश्चर्यानाहेतिग्रंथांतरवचनाभिप्रायं पर्वतशब्दनिरुक्तिपूर्वकमाह । परावनादिति । परावनात्परःपरमात्मातस्यआसम्यक्वनात्ज्ञानात् । वागतिगंधनयोरितिधातुः ल्युडंतःगत्यर्थानांज्ञानार्थत्वात् वनंज्ञानंपरेषांअन्येषांउमादिस्वावराणां आसम्यगवनात्रक्षणादितिवा । अवरक्षणइतिधातुः । पर्वतशब्दस्तुपरशब्दोपपदाभ्यां वागतिगंधनयोःअवरक्षणइत्येताभ्यांधातुभ्यांक्तप्रत्ययांतः । वर्णागमोवर्णविपर्ययश्चेत्यनुशासनात्पर्वतइतिरूपसिद्धिर्द्रष्टव्या ॥ ६८ ॥ शेषादयःकथंत्वदुत्तमाइत्यतआह । तैरिति ॥ अहंमत्समादेव्योवारुण्याःबहुरूपत्वाद्बहुवचनं । अथकांतिर्ग्रांह्यातैःशेषादिभि

**या मादृशा देवताः सर्वशस्ता धृतास्तया प्रथितत्वात्पृथिव्याम् ॥ शिवं शेषं गरुडं चाह सापि परावनात्पर्वतनामधेयान् ॥ ६८ ॥ तैरेवाहं मत्समाश्चैव देव्यो ध्रियंत इत्येव तमूचिरेथ ॥ ब्रह्माणमेवोत्तममाह सोपि वेदात्मिकां प्रकृतिं विष्णुपत्नीम् ॥ ६९ ॥ सैका देवी बहुरूपा बभाषे युक्ता यदाहं ह्येन नारायणेन ॥ यज्ञक्रियामानिनी यज्ञनाम्नी तदोत्तमा तत्प्रवेशात्तदाख्या ॥ ७० ॥ ॥ ॥ ॥ ॥**

रेव ध्रीयंते । धारणपोषणाभ्यांरक्ष्यंतइत्येवहेतोःतेमदुत्तमाः अथाहंतानपिप्राप्ययूयंधन्याआश्चर्याइतिअवदम् । एवंमयोक्तास्तेशेषादयः ब्रह्माणमेवोत्तमंधन्यंआश्चर्यमाहुः । त्वंधन्यस्त्वमाश्चर्यइतिमदुक्तःसोपिवेदात्मिकांवेदाभिमानिनीं अतएववेदनाम्नींविष्णुपत्नींप्रकृतिंधन्यामाश्चर्यामूचे । वेदात्मिकामित्यनेन ब्रह्मावेदानाहेत्युक्तस्यगतिरुक्ता भवति ॥ ६९ ॥ त्वंधन्येत्यादिमदुक्तादेवीएकास्वरूपतःएकाबहुरूपाबहुवेदाभिमानित्वाद्बहुरूपासतीबभाषे । अनेनवेदाऊचुरितिवचनाभिप्रायउक्तोभवति । अहंह्येनेननारायणेनयुक्तायुक्तत्वात् यज्ञक्रियाभिमानिनीयज्ञक्रियाभिमानित्वादितिहेतुगर्भविशेषणं । तत्प्रवेशात्तस्मिन्यज्ञनाम्निविष्णौप्रवेशात् । अंकेस्थितत्वात्तदाख्यायज्ञाख्याइतिहेतुत्रयात् । यज्ञनाम्नीभवामि । यदातदाहउत्तमा तथाचदेव्याअवस्थाद्वयमस्ति । अत्यंतनारायणयुक्तत्वावस्थातदयुक्तत्वावस्थावेदाभिमानित्वंत्ववस्थाद्वयेपिसमानं तथाचायुक्तत्वावस्थापेक्षयायुक्तत्वावस्थाविशिष्टायासाउत्तमा तस्मान्नाहंउत्तमेतिभावः ॥ ७० ॥ ॥ ॥ ॥

आराधितेनब्रह्मणादुर्गाणांअभेद्यत्वंदत्तं । गिरिपाशदुर्गयोरितिज्ञातव्यं । अतार्यताचतर्तुमशक्यताचदत्ता । जलदुर्गस्येतिज्ञातव्यं ॥ ९३ ॥ तस्यपीठादयःपंचजनां ताःयेपंचअमात्यास्तान् लोकपालान् संकल्प्यअहंब्रह्माचतुर्मुखइति ॥ ९४ ॥ तत्रभौमपुरे ॥ ९५ ॥ व्यसून्गतप्राणान् ॥ ९६ ॥ तेषांमुरुपीठादीनांसप्तसप्तसु ताः एकैकस्यसप्तसप्तसुताइत्यर्थः ॥ ९७ ॥ पंचत्रिंशतःपंचोत्तरत्रिंशत्संख्याकान्आरात् समीपेअक्षौहिणीत्रिंशकेन त्रिंशत्संख्यकाऽक्षौहिण्या ॥ ९८ ॥ शेषमुर्वरि

अभेद्यत्वमरिभिरतार्यतां च दत्ता दुर्गाणां ब्रह्मणाराधितेन ॥ ९३ ॥ तस्यामात्याः पीठमुरौ निशुंभहयग्रीवौ पंचजनश्च शूराः ॥ संकल्प्य तान् लोकपालानहं च ब्रह्मेत्यद्धा भाषमाणः स आस्ते ॥ ९४ ॥ हंतुं कृष्णो नरकं तत्र गत्वा गिरिं दुर्गं गदया निर्बिभेद ॥ वायव्यास्त्रेणोदकं शोषयित्वा चकर्त खड्गेन मुरस्य पाशान् ॥ ९५ ॥ अथाभिपेतुर्मुरपीठौ निशुंभहयग्रीवौ पंचजनश्च शूराः ॥ तांश्छैलशस्त्रास्त्रशिलाभिवर्षिणश्चक्रे व्यसूंश्चक्रनिकृंतकंधरान् ॥ ९६ ॥ तेषां सुताः सप्तसप्तोरुवीर्या वराद्वध्या गिरिशस्याभिपेतुः ॥ तानस्त्रशस्त्राभिमुचः शरोत्तमैः समर्पयामास च मृत्यवेच्युतः ॥ ९७ ॥ हत्वा पंचत्रिंशतो मंत्रिपुत्रान् जगाम भौमस्य सकाशमाशु श्रुत्वा भामः कृष्णमायांतमारादक्षौहिणीत्रिंशकेनाभ्ययात्तम् ॥ ९८ ॥ जघ्ने सेनां गरुडः पक्षपातैः पादं शेषं केशवः सायकौघैः ॥ अथाससादाशु भौमोच्युतं तं मुंचन् बाणानस्त्रसंमंत्रितान् द्राक् ॥ ९९ ॥ विव्याध तं केशवः सायकौघैः भौमः शतघ्नीं ब्रह्मदत्तामर्मुचत् ॥ १०० ॥ अच्छेद्योभेद्योनित्यसंवित्सुखात्मा नित्याव्ययः पूर्णशक्तिः स कृष्णः ॥ निर्गीर्यतां देववरः शतघ्नीं नित्याश्रांतो दर्शयच्छ्रांतवच्च ॥ १०१ ॥ ॥ ॥ ॥



तंपादंचतुर्थभागंकेशवःसायकौघैःजघ्ने । गरुडपक्षपातैःभागत्रयंसैन्यंहतमितिभावः ॥ ९९ ॥ शतघ्नींशतघ्न्याख्यांगदां ॥ १०० ॥ देववरःसकृष्णःशतघ्नींनिगीर्यग्रस्य नित्याश्रांतःनित्यंश्रमरहितोपिश्रांतवत्स्वंअदर्शयत् । श्रमःसत्यःकिंनस्यादित्यतआह । अच्छेद्यइत्यादिना । छेदभेदादिरहितस्यश्रमःकुतइत्यर्थः ॥ १०१ ॥

श्रमदर्शनेकारणमाह । बहूनिति । परात्परेशःश्रीकृष्णःअन्येषुअमात्यादिषु अमोघान्सार्थकान् स्वेनबहून्मोघीकृतान्निरर्थकीकृतान्वरान्वीक्ष्य कथंचिन्नरकःअहंब्र ह्मणःपूर्णानुग्रहास्पदइति ब्रह्मणिबहुमानेनसत्कारेणयुक्तोभवेत् । इत्येवकृष्णःस्वंश्रांतवद्दर्शयत् ॥ १०२ ॥ दृप्तंगर्वयुक्तंयतमानंयत्नंकुर्वाणं युद्धायेतिशेषः ॥ १०३ ॥ निकृंतस्कंधंनिकृंतःछिन्नःस्कंधोयस्यसतथा ॥ १०४ ॥ कृष्णावज्ञयाश्रीकृष्णस्यनिंदया तदाविष्टः तस्मिन्नरकेआविष्टः अनेननरकस्यपुराणोक्तकृष्णपदप्राप्तिरुक्ताभवति ।

बहून्वरान्ब्रह्मणोन्येष्वमोघान्मोघीकृतान्वीक्ष्य परात्परेशः ॥ भवेत्कथंचिद्बहुमानेन युक्त इत्येव कृष्णो दर्शय च्छ्रांतवत्स्वम् ॥ १०२ ॥ तदा दृप्तं नरकं वीक्ष्य देवी सत्याददे कार्मुकं शार्ङ्गसंज्ञं ॥ चकार तं यतमानं च भौमं निरायुधं विरथं च क्षणेन ॥१०३॥ आलिंग्य कृष्णः सत्यभामां पुनश्च रथांतरे संस्थितं भौममुग्रम् ॥ सृजंतम स्त्राण्यरिणा निकृंतस्कंधं मृत्योरर्पयामास शीघ्रम् ॥ १०४ ॥ स मंत्रिभिर्मंत्रिपुत्रैः समेतो जगाम कृष्णावज्ञयांधं तमश्च ॥ तदाविष्टो वायुरगाच्च कृष्णमंतःपुरं प्राविशत्सत्ययेशः ॥ १०५ ॥ तदा भूमिः पंचभूताऽवरा या यस्यां जज्ञे नरकः श्रीवराहात् ॥ मूलप्रकृत्यैव भूम्या नितांतमाविष्टायां सागमत्कृष्णपादौ ॥१०६॥ सादित्यास्ते कुंडले संपादयोश्च निधाय पौत्रं भगदत्तसंज्ञम् ॥ समर्पयामास तस्याभिषेकं प्राग्ज्योतिषे कारयामास कृष्णः ॥ १०७ ॥ संस्थाप्य तं सर्वकिरातराज्ये भौमाहृतं वैश्रवणाद्बलेन ॥ शिवेन दत्तं धनदायातिसत्वं भगदत्तेधात्सुप्रतीकं रमेशः ॥ १०८ ॥ ॥ ॥ ॥ ॥ ॥ ॥

सत्ययासहेतिशेषः ॥ १०५ ॥ तदासाभूमिः कृष्णपादौअगमदितिसंबंधः । रमास्वरूपभूदेव्यावर्तयितुंपंचभूतावरेत्युक्तं । यस्यांभूम्यांश्रीवराहातूनरकोजज्ञे । ननु पंचभूताभिमान्याकाशादिषुअवराभूमिर्वराहस्यसंभोगयोग्याकथमित्यतआह । मूलेति ॥१०६ ॥ साभूमिःअदित्याःस्तेकुंडलेभौमापहृते निधायपौत्रंसमर्पयामास । तस्यभगदत्तस्यप्राग्ज्योतिषेपुरे ॥ १०७ ॥ रमेशःतंभगदत्तं वैश्रवणात्कुबेराद्बलेनबलात्कारेणसुप्रतीकंअधात् । न्यधादितिपाठे रमेशइतिपदस्यअध्याहारः॥ १०८॥

तस्मिन्भगदत्ते षट्साहस्रसंख्याकान्चतुर्दंतान् चत्वारोदंतायेषांतेतथातान्प्राहिणोत् प्रेषयामास ॥ १०९ ॥ समंततःसर्वतःशतद्वयंसमृद्धंउन्नतमित्यर्थः ॥ ११० ॥ नैर्ऋतैर्निर्ऋतिसंबंधिभिःप्राहिणोत्॥ १११॥ तान्भूमिपान् द्व्यष्टौसहस्राणिशतंशताधिकाइत्यर्थः॥ रूपशीलोदाराःरूपशीलाभ्यांउत्कृष्टाःअक्षताः अदृष्टरजसःसद्व्रतस्थाः निर्दुष्टव्रतस्थाः ॥ ११२ ॥ भूमिपानांकन्यकाअपश्यदितिसामान्योक्तेरपवादमाह । काश्चइत्यादिना तत्रतासांकन्यकानांमध्येकाश्चिद्देवगंधर्वकन्याःशताधिकषोडश सहस्रकन्याःकाश्चिद्देवकन्याः काश्चिद्गंधर्वकन्याः काश्चिद्राजकन्याइत्यर्थः । तासांदेवगंधर्वराजकन्यानांमध्ये त्वष्टृपुत्रीकशेरुःकशेरुनाम्नीप्रधानागुणाधिका । तासांपूर्व

करींद्रमेकं संनिधायैव तस्मिन्कृत्वा प्रसादं च वसुंधरायाः ॥ चतुर्दंतान् षट्सहस्रान्करींद्रान्पयोब्धिजान्प्राहिणोद्वारवत्यै ॥ १०९ ॥ नराधिपान्देवगंधर्वनागान् जित्वानीतं हेमरत्नोच्चराशिं ॥ शतद्वयं योजनानां समृद्धं समंततः प्राहिणोत्स्वां पुरीं सः ॥११०॥ महावीर्यैर्नैर्ऋतै राक्षसेंद्रैर्भौमानीतैर्निर्ऋतिं योधयित्वा ॥ स प्राहिणोत्सर्वरत्नोच्चराशिं गजांश्च नारायण आदिदेवः ॥१११॥ तत्रापश्यत्कन्यका भूमिपानां भौमानीताः समरे तान्विजित्य ॥ द्व्यष्टौ सहस्राणि शतं च रूपशीलोदारा अक्षताः सद्व्रतस्थाः ॥ ११२ ॥ काश्चित्तत्रासन्देवगंधर्वकन्यास्तासां प्रधाना त्वष्टृपुत्री कशेरुः ॥ पुत्रा अग्नेः पूर्वमासंश्च तेथ स्त्रीत्वप्राप्त्यै चक्रुरुग्रं तपश्च ॥ ११३ ॥ भार्यात्वार्थं वासुदेवस्य योषित्तनुं तासामिच्छतीनां समीरः ॥ आदाद्वरं तपसाराधितः सन् स्त्रीभूतास्ते बदरीं संप्रजग्मुः ॥ ११४ ॥ नारायणं तत्र शिश्रूषमाणाः प्राप्याप्सरस्त्वं राजकुलेषु जाताः ॥ काश्चित्स्वर्गे ता निशम्यैव कृष्णं वव्रुः पतिं सर्वगुणाभिरामम् ॥ ११५ ॥ ॥ ॥ ॥ ॥ ॥

स्वरूपंविविचयन्नाह । पुत्राइति । तेनकन्यात्वंप्राप्ताःपूर्वंअग्नेःपुत्राआसन् अभूवन् ॥ ११३ ॥ अथवासुदेवस्यभार्यात्वार्थंभार्यार्थंयस्त्रीत्वप्राप्त्यैस्त्रीरूपप्राप्त्यैतपश्चक्रुः । समीरस्तपसाआराधितःसन्योषित्तनुंइच्छतीनां तासामितिभाविस्त्रीत्वापेक्षयास्त्रीलिंगं। वरंअदात् । तेअग्निपुत्राः स्त्रीभूताःस्त्रीरूपंप्राप्ताःबदरींसंप्रजग्मुः ॥ ११४ ॥ तत्र बदर्यां नारायणंश्रीवेदव्यासं शिश्रूषमाणाः अप्सरस्त्वंअप्सरस्त्रीत्वंप्राप्यअनंतरं । काश्चिद्राजकुलेषुजाताः भूमावितिशेषः काश्चित्स्वर्गेजाताः देवगंधर्वेष्वितिशेषः । ताःकन्यकाःगुणाभिरामंकृष्णंनिशम्य । पतिंवव्रुरितियोजना ॥ ११५ ॥ ॥ ॥ ॥ ॥

ताःकन्याःस्वभावतःसर्वगुणैःआजानदेवैःसमाःआजानदेवाःजयंतादयः । इंदिरावेशतःअतःआजानदेवेभ्यःगुणाधिकाःताःशिबिकासु आंदोलिकासुआरोपयित्वा आरोप्य ॥ ११६ ॥ प्रवृद्धंउन्नतंविस्तीर्णंवा ॥ ११७ ॥ स्वयंचसमारुहत् गरुडामितिशेषः सचगरुडःअभिप्रयातःअभिमुखंप्राप्तः ॥ ११८ ॥ सादरंप्रीतिसहितंयथाभवतितथा देवैर्मुनिभिश्चवंदितोभूत् ॥ ११९ ॥ सर्वप्रभवौसर्वस्यउत्पादकौजगत्प्रभूजगतिसमर्थौ निर्दोषसौख्यैकतनूनिर्दोषंशुद्धंसौख्यमेवएकामुख्यातनुर्ययोस्तौतथा तौ तंकृष्णंसत्यांचअसुरावेशवशादजानतीसाअदितिःआत्मपुत्रवत् स्वपुत्रस्ययथातथा ताभ्यांसत्याकृष्णाभ्यांआशिषःददौ ॥ १२० ॥ अथोसदानंदचिदा

आजानदेवैः सर्वगुणैः समास्ताः स्वभावतोथेंदिरावेशतोतः ॥ गुणाधिकास्ताः शिबिकासु कृष्ण आरोपयित्वा प्राहिणोद्द्वारवत्यै ॥ ११६ ॥ समं ततो योजनानां शते द्वे प्रवृद्धमिंद्रस्य सरत्नपर्वतम् ॥ नित्यामृतस्त्रावि जलेश्वरस्य छत्रं च दोर्भ्यां गरुडे न्यधाद्धरिः ॥ ११७ ॥ स्वयं च सत्यासहितः समारुहत्स चाश्रमेणैव ययौ त्रिविष्टपम् ॥ अभिप्रयातो खिललोकपालैर्जनार्दनः शक्रगृहं विवेश ॥ ११८ ॥ संपूजितः सत्यभामासहायः शक्रेण शच्या सहितेन सादरम् ॥ ददावदित्या अपि कुंडले शुभे समस्तदेवैर्मुनिभिश्च वंदितः ॥ ११९ ॥ तमासुरावेशवशादजानती सत्यां च सर्वप्रभावौ जगत्प्रभू ॥ निर्दोषसौख्यैकतनू शुभाशिषस्ताभ्यां ददौ सादितिरात्मपुत्रवत् ॥१२०॥ अथो सदानंदचिदात्मदेहः स नंदनोद्यानमजोनुरूपया ॥ अनंतशक्तिः सह सत्यभामया विवेश रंतुं प्रिययाखिलेश्वरः ॥ १२१ ॥ तयाच्युतोसौ कनकावदातया सुकुंकुमादिग्धपिशंगवाससा ॥ पूर्णेंदुकोट्यौघजयन्मुखाब्जया रेमेऽमितात्मा जगदेकसुंदरः ॥ १२२ ॥ ॥ ॥ ॥ ॥

त्मदेहःसत्यौनिर्दुष्टेआनंदचितौआनंदज्ञानेतदात्मा देहोयस्यसतथा सकृष्णःअनुरूपयाअनुकूलरूपयासत्यभामयासह । नंदनोद्यानंनंदनाख्योद्यानंरंतुंक्रीडांकर्तुंविवेश ॥ १२१ ॥ असौअच्युतःकनकावदातयासुवर्णवद्गौरवर्णोयस्याः सातथा सुकुंकुमादिग्धपिशंगवाससा शोभनकुंकुमेनआदिग्धंआलिप्तंपिशंगंपीतवर्णंवासोयस्याः सातथा । तयापूर्णेंदुकोट्यौघजयन्मुखाब्जया पूर्णाःषोडशकलायुक्ताःइंदवस्तेषांकोट्यःतासाममोघःसमूहःतंजयन्तिरस्कुर्वन् मुखाब्जःमुखलक्षणचंद्रः कमलंवायस्याःसातथा तयासत्यभामयारेमे ॥ १२२ ॥ ॥ ॥ ॥ ॥

सर्वर्तुनित्योदितसर्ववैभवे सर्वर्तुषुवसंतादिषुनित्यमहोरात्रं उदितंआविर्भूतंसर्ववैभवंसर्वसंपत् यस्मिन्तत्तथातस्मिन् सदैवनिरंतरं पूर्णेंदुविराजितेपूर्णचंद्रेणदीप्यमाने पवनानुसेवितेमंदवायुजुष्टे सुरत्नचामीकरवृक्षसद्मनेसुरत्नचामीकराणां शोभनरत्नसुवर्णानांवृक्षायस्मिन्तत् सुरत्नचामीकरवृक्षंतच्चतत्सद्मनंच सुरत्नचामीकरवृक्षसद्मनंतस्मिन्तथाहरिःदेव्यासत्यायासहचचार । इतस्ततइतिशेषः ॥ १२३ ॥ अत्रनंदनवनेनिर्दोषासांविज्ञानंतदेवतनुर्यस्याःसातथा पारिजातंपारिजाताख्यंसत्तरुंसद्वृक्षं अमृतार्थंकृतक्षीरसमुद्रमथनजातामित्यर्थः ॥ १२४ ॥ सुस्मितचंद्रिकास्फुरन्मुखारविंदा सुस्मितचंद्रिकेवतयास्फुरन्मुखारविंदंयस्याःसातथा असितलोललोचना असितेकृष्णेलोलेचंचलेलोचनेयस्याः सातथा । कपोलाभ्यांचिल्लिकाभ्यांनिर्भातेदीप्यमानेचलतींचंचलेशोभनेकुंडलेयस्याःसातथा । सतीपतिव्रतासत्यातंपारिजातंद

सर्वर्तुनित्योदितसर्ववैभवे सुरत्नचामीकरवृक्षसद्मने ॥ सदैव पूर्णेंदुविराजिते हरिश्चचार देव्या पवनानुसेविते ॥१२३॥ निर्दोषसंवित्तनुरत्र सत्तरुं ददर्श सत्याऽमृतमंथनोद्भवम् ॥ सा पारिजातं मणिकांचनात्मकं समस्तकामप्रदमार्तिहारिणम् ॥१२४॥ दृष्ट्वैव तं सुस्मितचंद्रिकास्फुरन्मुखारविंदासितलोललोचना ॥ कपोलनिर्भातचलत्सुकुंडला जगाद देवाधिपतिं पतिं सती ॥१२५॥ तरुं जगज्जीवद मे गृहांगणे संस्थापनीयोयमचिंत्यपौरुष ॥ इतीरितस्तां कलशोपमस्तनीमालिंग्य देवो तरुमुद्बवर्ह ॥ १२६ ॥ स तेन वृक्षेण सहैव केशवस्तया च देव्यारुहदग्र्यपौरुषम् ॥ खगेश्वरं तच्च निशम्य शच्या प्रचोदितो वासव आगमत्सुरैः ॥१२७॥ तानासुरावेशयुतान्हरेश्च बलप्रकाशाय समुद्यतान् सुरान् ॥ न्यवारयच्छार्ङ्गशरासनच्युतैर्हरिप्रिया बाणवरैः समस्तशः ॥ १२८ ॥ ॥

ष्ट्वा देवाधिपतिंस्वभर्तारंप्रतिजगाद ॥ १२५ ॥ तरुरुन्मूल्यान्यत्रनयनात् शुष्येदितिअतउक्तं जगज्जीवदेति हेजगज्जीवद अखिलप्राणधारक इंद्रादिभीरक्षितस्यवृक्षस्यनयनेकशक्तिरितिशंकांनिवारयति । अचिंत्यपौरुषेति । हेअचिंत्यपौरुषअद्भुतपराक्रम कलशोपमस्तनींकलशोपमौस्तनौयस्याःसातां उद्बवर्हउत्पाटयामास॥१२६॥ खगेश्वरंगरुडंसुरैःसह ॥ १२७ ॥ हरिप्रियासत्यभामातान्सुरान् हरेर्बलप्रकाशायच्युतैर्न्यवारयत् स्त्रियामथानिवारितेषुहरेर्बलंउत्तममितिकिंवक्तव्यमित्यभिप्रायेणन्यवारयदितिभावः । कांश्चिदसुरावेशयुतान् कांश्चिद्धरेर्बलप्रकाशाय समुद्यताननितिकेचिट्टिपणीकाराः अस्मिन्प्रसंगेकस्यापिअसुरावेशराहित्यंआचार्यैर्नदर्शितम् ॥१२८॥

सत्यावैश्रवणंकुबेरं निरायुधंचकार । गरुडोजलेशंवरुणंचकारान्मकरंचाब्धौचिक्षेप । तदुक्तंदशमे । तंपक्षकोटयागरुडःसमुद्धृत्यजलेश्वरं । पद्भ्यांगृहीत्वामकरंचिक्षेपवरुणालयइति । अस्यार्थः । जलेश्वरंमकरंचवरुणालयेसमुद्रेचिक्षेप । कथंतंवरुणंपक्षकोटयोधृत्यमकरंपद्भ्यांगृहीत्वेतिविशेषः । तेनल्यबंतस्यनानन्वयः नाप्युत्तरासंगतिरिति । हरिःअसुरैःआवेशितानामावेशितान् । वायुवन्हियमादिकानपिस्वकांतनुंस्वस्वरूपं कृष्णरूपमितियावत् । शार्ङ्गोत्थरवैःज्ञापयित्वाअगादित्यन्वयः गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्तासणाविंतिसूत्रेणवायुमित्यादेःकर्मसंज्ञा तेनतेषांस्वतनुंविबोध्येत्यर्थः । तेनसंग्रामेवायुपावकौतमसाधारणंमत्वेत्यादिदशमे

निरायुधं वैश्रवणं चकार चिक्षेप चाब्धौ गरुडो जलेशम् ॥ प्रधानवायोस्तनयं तु वायुं कोणाधिपं वन्हियमादिकानपि ॥ १२९ ॥ निबोध्य शार्ङ्गोत्थरवैः स्वकां तनुमावेशितानामसुरैरगाद्धरिः ॥ ते बोधितास्तेन रणं विसृज्य ययुर्विदित्वा तमनादिपूरुषम् ॥ १३० ॥ शिवं च शक्रार्थमुपागतं हरिर्व्यद्रावयच्छार्ङ्गविनिःसृतैः शरैः ॥ सवाहनोदूरतरे निपातितो गरुत्मता शंभुरगाच्छराहतः ॥ १३१ ॥ विद्राविते बाणगणैश्च शौरिणा हरे हरौ वज्रमवासृजद्द्रुतम् ॥ शक्रोग्रहीत्तं प्रहसन् जनार्दनः करेण वामेन स चापजग्मिवान् ॥ १३२ ॥ अपाहसत्तं जगदेकसुंदरी हरिप्रियाथो जगदेकमातरम् ॥ उवाच शक्रो जगतां जनित्रे प्रदर्शयामो वयमात्मशैशवम् ॥ १३३ ॥ जगाम चाथो शरणं जनार्दनं सुरैर्वृतो देवपतिः क्षमापयन् ॥ शृंगं च दत्वा मणिपर्वतस्य प्रणम्य देव्या सहितं जगद्गुरुम् ॥ १३४ ॥ ययाच एनं परिरक्षणाय शचीपतिः केशवमर्जुनस्य ॥ जगाद कृष्णोपि धरातले स्थिते न मय्यमुं कश्चन जेष्यतीति ॥ १३५ ॥ ॥ ॥ ॥ ॥

ननविरोधः ॥ १२९ ॥ १३० ॥ शराहतःकृष्णेनेतिशेषः । गरुत्मतःसवाहनःसनंदीदूरतरेनिपातितः ॥ १३१ ॥ शौरिणाहरेरुद्रेविद्राविते सति शक्रःहरौवज्रमवासृजत् । वज्रेणाविध्यदित्यर्थः । तंवज्रंसचेंद्रःअपजग्मिवान् पराद्रवत्ययौ ॥ १३२ ॥ जनित्रेपित्रेकृष्णायआत्मशैशवंस्वशिशुत्वं ॥ १३३ ॥ शृंगंशिखरं ॥ १३४ ॥ अर्जुनस्यपरीक्षायमयिधरातलेस्थितेसति अमुमर्जुनंनकश्चनजेष्यति ॥ १३५ ॥ ॥ ॥ ॥ ॥

तंवरं युद्धकर्ताइंद्रोवरादिकंकथंप्राप्तइत्यतआह । महाभागवतइति ॥ १३६ ॥ अभ्यधिकंअत्यंतंव्यरोचतरेजे । व्यरोचनंदर्शयति ॥ किरीटेत्यादिना ॥ १३७ ॥ सदाविरोचमानस्यअच्युतस्यक्वचित्कालेनवैविशेषः । तथापितद्विरोचमानत्वंस्मारयितुंअल्पज्ञमतिंअपेक्ष्यपुराणगंवचोभवेत् ॥ १३८ ॥ सर्वज्ञःपुरींप्रविश्य यादवैःसुपूजितःसन् अंतःपुरमेत्य ॥ १३९ ॥ पृथक्प्रासादसंस्थाभिः भिन्नभिन्नप्रासादेषुसंस्थाभिः ॥ १४० ॥ पृथक्पृथक्एकैकस्यामेवदशदशपुत्रकान् एकैकांकन्यांसर्वशोपिस

तमर्जुनार्थं वरमाप्य वासवः पुनःपुनश्चक्रधरं प्रणम्य ॥ प्रसन्नदृष्ट्या हरिणाभिवीक्षितो ययौ महाभागवतः स्वमालयम् ॥ १३६ ॥ कृष्णोप्यनुज्ञाप्य पुरंदरं पुरीं निजां व्रजन्नभ्यधिकं व्यरोचत ॥ किरीटधारी चलकुंडलोल्लसन्मुखांबुजः पीतपटः सकौस्तुभः ॥ १३७ ॥ विरोचमानस्य सदा जगत्प्रभोर्न वै विशेषः क्वचिदच्युतस्य ॥ तथापि तत्स्मारयितुं वचो भवेदपेक्ष्य चाल्पज्ञमतिं पुराणगम् ॥ १३८ ॥ प्रविश्य चेशः स्वपुरीं सयादवैः सुपूजितोंतःपुरमेत्य चांगणे ॥ तरुं प्रियायान्यदधाद्गृहस्य सहैव शृंगेण च रत्नसद्गिरेः ॥ १३९ ॥ प्रदाय रत्नानि च सर्वसात्वतां यथेष्टतस्ता अपि कन्यकाः प्रभुः ॥ उद्वाह्य रेमे पृथगेव रत्नप्रासादसंस्थाभिरनंतरूपाः ॥ १४० ॥ पृथक् पृथक्तासु दशैव पुत्रकान्यधत्त कन्यामपि सर्वशः प्रभुः ॥ प्रद्युम्नसांबावपि भानुचारुदेष्णौ च तेषां नितरां गुणाधिकाः ॥ १४१ ॥ विवस्वतो योऽवरजोदितेः सुतः ख्यातश्च नाम्ना सवितेति कृष्णात् ॥ जातः स सत्याजठरे स नाम्ना भानुस्तु भैष्म्या अपि चारुदेष्णः ॥ १४२ ॥ स चारुदेष्णोपि हि विघ्नराजो येन्ये च कृष्णस्य सुताः समस्ताः ॥ ते चैव गीर्वाणगणास्तथान्ये ये द्वारकायां निवसंति सर्वे ॥ १४३ ॥ ॥

वांस्वपिन्यधत्तजनयामास ॥ १४१ ॥ प्रद्युम्नसांबौकामकार्तिकेयावितिआवेशपूर्वकं स्वरूपस्यपूर्वोक्तत्वाद्भानुचारुदेष्णयोःस्वरूपमाह । विवस्वतइत्यादिना । यःविवस्वतःसूर्यस्यअवरजःअदितेःसुतःनाम्नासवितेतिख्यातःप्रसिद्धः सकृष्णात्सत्याजठरेसत्यभामायाःउदरेजातः । अत्रकृष्णपुत्रत्वेनाम्नाभानुःभैष्म्याअपिरुक्मिण्याअपिपुत्रोनाम्नाचारुदेष्णोजातः ॥ १४२ ॥ सचारुदेष्णोपिपूर्वंविघ्नराजःगणेशः येन्येसुताःतेगीर्वाणगणाःदेवाइत्यर्थः । येद्वारकायांनिवसंतितेपिगीर्वाणगणाएव ॥ १४३ ॥

तस्यांस्वपुर्यांरौग्मिणेयःप्रद्युम्नः ॥ १४४ ॥ अज्ञानतःकृष्णपुत्राविमाविति अज्ञानात् तैर्भुजंगैः ततःपराभवानंतरं । तेनागाःअमुंप्रद्युम्नंनेमुः ॥ १४५ ॥ मायाविनंरुंधानं मार्गरोधकंमयंपंचअस्त्रवर्षैर्विजित्य अनेनमयेनपूजितः ॥ १४६ ॥ तत्रनाकेकृष्णेनपारिजातेऽपहृतएवनिमित्तमात्रमपि हृतवाजिमिताते एवसंस्पर्धयानुरूपवयसैवयातंजयंतंप्रद्युम्नःअजयत् अमुष्यजयंतस्यअनुजंवृषभंनामसांबोजयत् ॥ १४७ ॥ तौप्रद्युम्नसांबौतयोःजयंतवृषभयोःअस्त्राणिअस्त्रवरैःनिहत्यनिवार्येत्यर्थः । ताभ्यांजयंतवृषभाभ्यांप्रतिदग्धयानौप्रद्युम्नसांबौतौजयंतवृषभौवाणगणैःविद्राव्यसुरेंद्रसंपूजितौसंतौ निजमखेआकाशेययतुः ॥ १४८ ॥ ननु सांबस्यआकाशारोहणविद्यायाअभावात्

तस्यां समस्तैरभिपूज्यमाने देवैः स्वपुर्यां निवसत्यनंते ॥ ययौ कदाचित्स तु रौग्मिणेयः सांबेन साकं भुजगेंद्रलोकम् ॥ १४४ ॥ अज्ञानतस्तैरभियोधितः स जिगाय सर्वानपि वासुकिं च ॥ विद्राव्य बाणौघ रत्नसंचयान्स्वा ददे नेमुरमुं ततस्ते ॥ १४५ ॥ तैः पूजितः सांबसहाय आशु मयं च मायाविनमस्त्रवर्षैः ॥ विजित्य रुंधानमनेन पूजितो ययौ रथे ऽबरगेन नाकम् ॥ १४६ ॥ तत्रैव कृष्णेन तु पारिजाते हृते जयंतं प्रजिगाय वाजौ ॥ संस्पर्धया यातममुष्य चानुजं सांबो जयद्वृषभंनाम शस्त्रैः ॥ १४७ ॥ अस्त्राणि सावत्र्यवरैर्निहत्य तयोश्च ताभ्यां प्रतिदग्धयानौ ॥ विद्राव्य तौ बाणवरैः सुरेंद्रसंपूजितौ ययतुर्विद्यया स्वे ॥ १४८ ॥ स विद्यया सांबमुदूह्य रथ्या प्रदत्तया रुग्मिणीनंदनः पुरीम् ॥ ययौ ततो नारद आगमद्भुतं ज्ञातुं हरेर्बहुभार्यासु वृत्तिम् ॥१४९॥ तं द्व्यष्टसाहस्रगृहेषु दृष्ट्वा तावत्स्वरूपैर्विहरंतमेकम् ॥ सुविस्मितः प्रययौ तं प्रणम्य शक्रप्रस्थं पूजितश्चात्र पार्थैः ॥ १५० ॥ ॥

कथंविद्ययाययतुरित्यतआह । सविद्ययेति । सरुग्मिणीनंदनःसांबंउद्धृत्यस्कंधेनऊढ्वारत्याप्रदत्तयाविद्यया परशुरामदैवतविद्ययापुरींद्वारकांप्रतिययौ । अतःविद्ययाआकाशगमनमुभयोरुपपन्नमितिभावः । ततःप्रवृत्तिर्वर्तनं ॥ १४९ ॥ सहस्रंपरिमाणंयेषांतानिसहस्राणितानिचतानिगृहाणिचद्व्यष्टगुणितानिसाहस्रगृहाणि तेषुतावत्स्वरूपैः शतोत्तरषोडशसहस्रस्वरूपैःअत्रशक्रप्रस्थे ॥ १५० ॥ ॥ ॥ ॥ ॥

सनारदःक्रमाद्भीमएवकेवलमेकसंस्थां एकत्वेनसंस्थायस्याःसातांमुख्यत्वेनस्थितांकृष्णांद्रौपदींकर्तुमाह । पार्थानितिशेषः । शरीरेकृष्णाशरीरेतस्याःभारत्याःकृष्णादेहस्थभारत्याःपूर्णभोगार्थमेव । भीमेनसाकमितिशेषः । नतुदोषबुध्याआहेतिसंबंधः । युधिष्ठिराद्याविष्टवायोर्भोगंहित्वाभीमेनैवअनुदिनंभोगार्थमितिभावः ॥ १५१ ॥ किमिति । भ्रातरौसुंदोपसुंदौसुंदोपसुंदावितिनामानौब्रह्मवाक्याद्ब्रह्मवरादित्यर्थः । परस्परादन्योन्यतःअन्यपुरुषात् नैववध्यौअवध्यावित्यर्थः । दैत्यौतेनब्रह्मणातयोर्दैत्ययोर्वधार्थेसृष्ट्याभावप्रधानोनिर्देशः सृष्टतयासृष्टत्वेनेत्यर्थः । यद्वा सृष्टंधर्मधर्मिणोरभेदात् सृष्टंसर्जनंयापयतिकरोतीतिसृष्टयातःतेनसृष्टयातेनब्रह्मणेति । तिलोत्तमार्थेतिलोत्तमस्वीकारणार्थंपरस्परमन्योन्यंनिहतौ । गदाभ्यामितिशेषः । यतइतिचशेषः ॥ १५२ ॥ अतःपृथग्वत्सरतःएकैकंवत्सरंभवत्सुयुष्मासुक्रमात्ज्येष्ठादिक्रमात् । कृष्णातिष्ठतांतिष्ठत्वित्यर्थः । वःयुष्माकंमध्येयःअन्ययुक्तांपश्येत् युधिष्ठिरयुक्तांभीमःपश्येत् भीमयुक्तांयुधिष्ठिरःपश्येत् अन्योवाअनेनन्यायेन यःपश्येत् । सपुरुषःवत्सरंवत्सरपर्यंतंतीर्थयात्रांकुर्यादितिआहेतिसंबंधः । अथतेतथाचक्रुःस्म ॥१५३॥ शस्त्रागारेशस्त्रगृहेद्राक्शीघ्रं शस्त्रादित्सुःशस्त्राण्यादातुमिच्छुःशस्त्राणिआदातुकामःफल्गुनःधर्मराजेनयुक्तांद्रौपदींदृष्ट्वा दस्यून्हत्वा । तीर्थयात्रोन्मुखोभूदित्यन्वयः । अद्राक्अद्राक्षीत् ॥१५४॥ सौहृदात्स्नेहात् मागच्छेतिवारितोपि सत्यार्थंस्वकृतप्रतिज्ञापालनार्थंययौ । सःअर्जुनःनागवध्वानागस्त्रियामाययाहृतोनीतः ॥ १५५ ॥ तस्याःपिताकश्चननागःगरुडेनआत्तपत्युःआत्तःभक्षणार्थंस्वीकृतःपतिर्यस्याःसातस्याःस्वसुतायाःपुत्राकांक्षीपार्थंचोदयामास । ममकन्यकायांपुत्रमुत्पादयेतिप्रार्थयामासेत्यर्थः । कथंभूतंपार्थं कृष्णाहेतोःपार्थैः संवत्सरंब्रह्मचर्येविषयेसमयेसंकेते साधुवद्धंयंत्रितं संवत्सरपर्यंतंब्रह्मचर्यंनिश्चितमितिभावः ॥ १५६ ॥

स आज्ञया ब्रह्मण आह कृष्णां क्रमात्कर्तुं भीम एवैकसंस्थाम् ॥ अन्या देवीः स्वापयित्वा शरीरे तस्या भारत्याः पूर्णभोगार्थमेव ॥ १५१ ॥ सुंदोपसुंदौ भ्रातरौ ब्रह्मवाक्यात् परस्परादन्यतो नैववध्यौ ॥ तिलोत्तमार्थे निहतौ परस्परं तयोर्वधार्थे सृष्टया तेन दैत्यौ॥१५२॥अतः पृथग्वत्सरतो भवत्सु क्रमात्कृष्णा तिष्ठतां योन्ययुक्ताम्॥पश्येद्योसौ वत्सरं तीर्थयात्रां कुर्यादितिस्माथ चक्रुस्तथा ते ॥१५३॥ ततः कदाचिद्धर्मराजेन युक्तां शस्त्रागारे विप्रगोरक्षणार्थम् ॥ शस्त्रादित्सुः फल्गुनो द्राक् सशस्त्रैर्दस्यून्हत्वा तीर्थयात्रोन्मुखोभूत् ॥ १५४ ॥ युधिष्ठिराद्यैः सौहृदाद्वारितोपि ययौ सत्यार्थं स कदाचिद्द्युनद्याम् ॥ कुर्वन् स्नानं मायया नागवध्वा हृतो लोकं भुजगानां क्षणेन ॥ १५५॥ तस्याः पिता गरुडेनात्तपत्युः पुत्राकांक्षी चोदयामास पार्थम् ॥ संवत्सरं ब्रह्मचर्ये तु पार्थैः कृष्णाहेतोः समये साधुबद्धम् ॥ १५६॥

॥ ॥ ॥ ॥

अस्याःनागकन्यकायाः:पुत्रार्थंपूर्वंकुजांशंमंगलांशंअत्रनाम्नाइरावंतं ॥ १५७ ॥ सतांसमीचीनानांसुतानांप्रायशःपितुर्गुणाःभवंति । प्रद्युम्नादौदृष्टत्वात्मातृजातिर्भवति हनुमदादौदृष्टत्वात् यस्मात्तेनकारणेननागःबभूवेतिशेषः । सत्यवत्यादिव्यावृत्त्यर्थंप्रायइत्युक्तं । सृगाऽपौंड्रकादिव्यावृत्त्यर्थंसतामित्युक्तं । पार्थप्रथमोद्भवत्वात् अर्जुनात्प्रथमंपूर्वंउत्पन्नत्वात् बलीजातइतिशेषः ॥ १५८ ॥ पांड्यान्विषयान्अस्यअर्जुनस्यतनयःइरावान्मात्रानागवध्वासहभुजगैस्त्यक्तःविधवायांमनुष्योत्पन्नत्वात्त्यक्तइतिभावः । संपूजितःसम्यङ्मानितः ॥ १५९ ॥ एवंतर्हि अर्जुनस्यसत्यात्ययाद्दोषइत्यतआह । सत्यात्ययादिति । तेजीयसःमहाज्ञानिनःअर्जुनस्यसत्यात्ययात् दोषःकथंचित्सर्वात्मनानैवचिंतनीयः । तेजीयसांदोषलेशोनास्तीत्युक्तस्यापवादमाह ॥ श्रेष्ठइति । तेजीयसांश्रेष्ठापराधात्स्वोत्तमापराधादन्यदोषस्यलेपोन ॥ १६० ॥ तर्हि

पुनः पुनर्याचमानः स पार्थः पुत्रार्थमस्या भुजगेन तस्याम् ॥ उत्पादयामास सुतं कुजांशं नाम्नेरावंतं वरुणावेशयुक्तम् ॥ १५७ ॥ गुणाः पितुर्मातृजातिः सुतानां यस्मात्सतां प्रायशस्तेन नागः ॥ बली च पार्थप्रथमोद्भवत्वान्मायाविदस्त्री च सुधार्मिकश्च ॥ १५८ ॥ ततो यथावर्जुनस्तीर्थयात्राक्रमेण पांड्यांस्तनयोस्य मात्रा ॥ सह त्यक्तो भुजगैर्देवलोके संपूजितो न्यवसद्देवतैश्च ॥ १५९ ॥ सत्यात्ययान्नैव दोषोर्जुनस्य तेजीयसश्चिंतनीयः कथंचित् ॥ श्रेष्ठापराधान्नान्यदोषस्य लेपस्तेजीयसां निर्णयोयं हि शास्त्रे ॥ १६० ॥ अतिस्नेहाच्चाग्रजाभ्यां तदस्य क्षांतं सुता पांड्यराजेन दत्ता ॥ संवत्सरांते फल्गुनस्यानुरूपा चित्रांगदा वीरसेनेन तोषात् ॥ १६१ ॥ स वीरसेनस्त्वष्टुरंशो यमस्याप्यावेशयुक् सा च कन्या शची हि ॥ तारादेहे सूर्यजस्यांगसंगात्स्वर्गं नागादंतरिक्षादिहासीत् ॥ १६२

अर्जुनस्यापिअग्रजाभ्यांकृतस्यब्रह्मचर्यलक्षणसमयस्यातिक्रमणात् श्रेष्ठापराधःप्राप्तइत्यतआह । अतीति । अग्रजाभ्यांधर्मभीमाभ्यां अस्यअर्जुनस्यतद्ब्रह्मचर्यातिक्रमणं क्षांतंइदमर्जुनस्यअनर्थप्रदंनाभूदितिक्षांतमित्यर्थः । पांड्यराजेननाम्नावीरसेनेन अनुरूपाअर्जुनरूपस्यअनुकुलंरूपंयस्याःसा ॥ १६१ ॥ त्वष्टुःत्वष्टुनाम्नासूर्यदेवस्यअंशःतारादेहेवालिभार्यातारारूपे सूर्यजस्यसुग्रीवस्यअंगसंगात् रमणापराधान्निमित्तात्स्वर्गनागात् शच्याएकीभावंनप्राप्तेतिभावः । अंतरिक्षाद्भुवर्लोकात् इहपांड्यराजेआसीत् ॥ १६२ ॥ ॥ ॥ ॥ ॥ ॥

हेतोःहेतुनातृतीयार्थेपंचमी । तेनहेतुनासुग्रीवस्यांगसंगदोषेणतस्याश्चित्रांगदायाःपार्थेअतिसामीप्यंसंततसहवासःनासीत् । तस्यांचित्रांगदायांपुत्रिकापुत्रधर्मात् अपुत्रेण मयाकन्यादीयतेतवभोवर । एतस्यांजायतेपुत्रःसमेपुत्रोभविष्यतीतिवचनोक्तप्रकारात् अर्जुनेननाम्नाबभ्रुवाहोजातः । सपूर्वंकइत्यतआह । पूर्वमिति । पूर्वंजयंतःइंद्रपुत्रः नाम्नाजयंतःसःकामदेवांशयुक्तःसन् बभ्रुवाहोजातइतिसंबंधः ॥ १६३ ॥ अतःपांड्यविषयात्गच्छन् शापतःविप्रशापात्ग्राहदेहाःग्राहोजलचरविशेषः तद्देहंप्राप्ताइत्यर्थः । पंचाप्सरसःअमूमुचन्शापतइतिशेषः । किंकृत्वाताभिःग्राहदेहंप्राप्ताप्सरोभिःगृहीतःसन् तीरंप्रतिप्रविकृष्य ॥ १६४ ॥ प्रविकर्षणेनिमित्तमाह । एवमिति । आन



तेनैव हेतोर्नातिसामीप्यमासीत्तस्याः पार्थे पुत्रिकापुत्रधर्मात् ॥ तस्यां जातो बभ्रुवाहोर्जुनेन पूर्वं जयंतः काम देवांशयुक्तः ॥ १६३ ॥ पुत्रं वीरं जनयित्वार्जुनोसौ गच्छन् प्रभासं शापतो ग्राहदेहाः ॥ अमूमुचन्नाप्सरसः स पंच ताभिर्गृहीतः प्रविकृष्य तीरम् ॥ १६४॥ एवं हि तासां शापमोक्षः प्रदत्तो यदाखिला वो युगपत्संप्रकर्षेत् ॥ एकस्तदा निजरूपाप्तिरेवेत्यलं तुष्टेन ब्राह्मणेनानतानाम् ॥ १६५॥ विप्रापहासात्कुत्सितयोनितस्ताः कन्यातीर्थे पांडवः संप्रमोच्य ॥ प्राप्तः प्रभासं वासुदेवानुजातां शुश्राव रामेण सुयोधनोद्यताम् ॥ १६६ ॥ विचिंत्य कार्यं यतिरूपं गृहीत्वा कुशस्थलीं प्रययौ तं समीपे ॥ प्राप्तं कृष्णः प्राहसत्संविजानन् सत्यासहायः शयनीयाधिरूढः ॥ १६७ ॥ सर्वज्ञा सा लीलया हासहेतुमपृच्छत्तं सोपि तस्यै बभाषे ॥ लीलाभाजौ दर्शनार्थं पुनस्तावगच्छतां रैवतं शैलराजम् ॥ १६८ ॥ ॥ ॥ ॥ ॥

तानांशरणंप्राप्तानां तासांअप्सरसांयुगपत् एकदैव ॥ १६५ ॥ शापनिमित्तमाह । विप्रेति । पांडवोर्जुनःविप्रापहासात् विप्रस्यपहासान्निमित्तात् कुत्सितयोनितःग्राहयोनितःताःअप्सरसःकन्यातीर्थेसंप्रमोच्य प्रभासंप्राप्तःसन् वासुदेवानुजातांकृष्णभगिनींसुभद्रांरामेणसुयोधनोद्यतांदुर्योधनायदातुमुद्यतांशुश्राव ॥ १६६ ॥ कार्यंविचिंत्यस्वस्यसुभद्राप्तिर्यथास्यात्तथा कार्यंविचिंत्येत्यर्थः । शयनीयाधिरूढःमंचकारूढःरात्रावितिशेषः । समीपेप्राप्तंतमर्जुनंसंविजानन् कृष्णःप्राहसत् ॥ १६७ ॥ सासत्यालीलयाविनोदेनसोपिकृष्णोपिबभाषे । अर्जुनस्यागमनमितिशेषः । तौअगच्छतांपार्थंद्रष्टुमितिशेषः ॥ १६८ ॥ ॥ ॥ ॥

असौरैवतःआक्रीडःक्रीडास्थानंतत्ररैवतेअस्मैअर्जुनायस्वसुःसुभद्रायाःदानेदानविषये अथदानप्रतिज्ञानंतरं कृष्णःआसदत्प्राप ॥ १६९ ॥ यतींद्रवेषवद्वेषोयस्यतं फलगुनोपिगुणज्येष्ठःज्ञानभक्त्यादिगुणैःश्रेष्ठोसीति स्वावराणांगुरुत्वेप्राप्ते मर्यादार्थंतुतेपूज्याइतिजानन्नर्जुनःस्वस्ययत्याश्रमाभावाद्गुणज्येष्ठोसीतिव्याजेनप्रणामंचक्रइतिअपिशब्दाभिप्रायः । अन्यथास्वावराणामितिवचनस्याप्रामाण्यापत्तिः ॥ १७० ॥ कन्यागारेकन्यागृहेवासंकारयेतिकृष्णमाह । दोषवादीआरोपितवादीत्यर्थः केशवोनैवेत्यूचे ॥ १७१ ॥ केशवोक्तदोषान्स्पष्टयति । युवेत्यादिना । दर्शनीयःरूपीत्यर्थः । कन्यागारवासंकर्तुंअयंयतिःयोग्योनेतिसंबंधः । रामःकृष्णमाह । आप्तविद्ये

आक्रीडोसौ भोजवृष्ण्यंधकानां तत्रापश्यत्केशवः फल्गुनं तम् ॥ स्वसुर्दाने स प्रतिज्ञां रहोस्मै चक्रे कृष्णोथासदत्सर्ववृष्णीन् ॥ १६९ ॥ दृष्ट्वा गिरौ रौहिणेयो यतींद्रवेषं पार्थं ज्ञातियुक्तः प्रणम्य ॥ चक्रे पूजां फल्गुनोपि प्रणामं गुणज्येष्ठोसीति चक्रे बलाय ॥ १७० ॥ सर्वज्ञं तं वाग्मिनं वीक्ष्य रामः कन्यागारे वर्षकाले निवासम् ॥ सत्कारपूर्वं कारयेत्याह कृष्णं नैवेत्यूचे केशवो दोषवादी ॥ १७१ ॥ युवा बली दर्शनीयोतिवाग्मी नायं योग्यः कन्यकागारवासम् ॥ इत्युक्तवंतं राम आहाप्तविद्ये नास्मिन् शंकेत्येव लोकाधिनाथम् ॥१७२॥ नास्मन्मते रोचते त्वन्मतं तु सर्वेषां नः पूज्यमेवास्तु तेन ॥ इत्युक्त्वा तं केशवः सोदरायै शुश्रूषस्वेत्याह संतं यतींद्रम् ॥ १७३ ॥ नित्याप्रमत्ता साधु संतोषयेति प्रोक्ता तथा साकरोत्सोपि तत्र ॥ चक्रे मासान्वार्षिकान्सत्कथाभिर्वासं वाक्यं श्रद्दधानो हरेस्तत् ॥ १७४ ॥ संयाचितः फल्गुनेनाह वाक्यं यद्वासुदेवस्तन्न जानाति कश्चित् ॥ ऋते पित्रोर्विपृथोः सात्यकेर्वा सुभद्रां ते प्रददानीति सत्यं ॥ १७५ ॥ ॥ ॥ ॥

आप्ताप्राप्ताविद्यातत्वविद्यायेनतस्मिन्तथा अस्मिन्यतौनैवशंकाइत्याहेतिसंबंधः ॥ १७२ ॥ अस्मन्मतेनरोचतेनप्रशस्यतेत्वन्मतंनःसर्वेषांपूज्यमेव । तेनकारणेनअस्तुवासंकरोतु । केशवःतंरामंप्रतिइत्युक्त्वासंतंस्थितंयतींद्रंशुश्रूषस्वेतिआह ॥ १७३ ॥ नित्याप्रमत्ताप्रमादरहिताहरेःकृष्णस्यतद्वाक्यं सुभद्राप्रदानविषयेउक्तंवाक्यंश्रद्दधानःविश्वासंकुर्वन् सोपिअर्जुनःतत्रकन्यागारेवार्षिकान्मासान्श्रावणादिचतुरोमासान् सत्कथाभिःरमन्नितिशेषः । वासंचक्रे ॥ १७४ ॥ फाल्गुनेनसंयाचितःवासुदेवःसुभद्रांतेप्रददानीतियत्सत्यंवाक्यमाह तत्पित्रोर्देवकीवसुदेवयोःविपृथोःसात्यकेःऋतेवाअन्योवाकश्चिन्नजानाति ॥ १७५ ॥ ॥ ॥

पित्रोःस्वकृतप्रतिज्ञाकथनंयुक्तमेव सात्यकिविपृथोःकथनेकारणमाह । अस्त्रइति ॥ १७६ ॥ तर्हिअन्येभ्यःकिमर्थंनाकथयदित्यतआह । अन्यइति । अन्येउद्धवादि यादवाःरामेणादिष्टाःआज्ञापिताःसंतः जिष्णोःअर्जुनस्यनैवदित्संतिनैवदातुमिच्छंति ॥ १७७ ॥ ततूदुर्योधनस्यसुभद्राप्रदानं हरेःअप्रियंजानमानाअपि रामप्रियार्थंदुर्योधनेदुर्योधनार्थंदातुमिच्छंति । तत्कारणमाह । राक्षसेति । तस्मादुद्धवादीन्वंचयामासेत्यर्थः ॥ १७८ ॥ केवलमुद्धवाद्यावंचिताइतिन । किंतुप्रद्युम्नसांबप्रमुखाःपुत्राश्च वंचिताः । तीर्थार्थंतीर्थयात्रार्थंपिंडोद्धारंप्रतियियुः । तत्रपिंडोद्धारेस्वावर्तयत्सुसम्यक्प्रवर्तमानेषुकाचित्कस्मिंश्चित्समयेसुभद्राऊचे । यतिंप्रतीतिशेषः ॥ १७९ ॥ हेयतेत्वं तीर्थानिआचरन्पर्यटन् पार्थान् क्वचित् अद्राक्षीःकिंदृष्टवानसि । कुंतींकृष्णांचेतिसंबंधः । इतिपृष्टःपार्थ ओमित्याह । दृष्टवानस्मीत्याह । एषांपार्थानामनामयंक्षेममा

अस्त्रे शस्त्रे तत्वविद्यासु चैव शिष्यः शैनेयो वासुदेवेंद्रसून्वोः ॥ तस्मादस्मै कथयामास कृष्णः स्वशिष्यत्वा द्विपृथोश्चापि सर्वम् ॥ १७६ ॥ अन्ये च सर्वे वासुदेवस्य पार्थान् प्रियान्नित्यं जानमाना अपि स्म ॥ रामेणादिष्टा उद्धवोथाहुकाद्या हार्दिक्याद्या नैव दित्संति जिष्णोः ॥ १७७ ॥ दुर्योधने दातुमिच्छंति सर्वे रामप्रियार्थं जानमाना हरेस्तत् ॥ अप्यप्रियं राक्षसावेशयुक्तास्तस्मात्सर्वान्वंचयामास कृष्णः ॥ १७८ ॥ प्रद्युम्नसांबप्रमुखाश्च वंचिता ययुस्तीर्थार्थं रामयुक्ताः समग्राः ॥ पिंडोद्धारं तत्र महोत्सवेषु स्वावर्तयत्सु क्वचिदूचे सुभद्रा ॥ १७९ ॥ यते तीर्थान्याचरन्बांधवांस्त्वमद्राक्षीर्नः क्वचिदिष्टान्स्म पार्थान् ॥ कुंतीं कृष्णां चेत्याह पृष्टः स पार्थ ओमित्येषामाह चानामयं सः ॥ १८० ॥ भूयः सावादीद्भगवन्निंद्रसूनुर्गतस्तीर्थार्थं ब्राह्मणेभ्यः श्रुतो मे ॥ क्वचिद्दृष्टो भवतेत्योमिति स्म पार्थोप्यूचे क्वेति सापृच्छदेनम् ॥ १८१ ॥ अत्रैवेति स्मयमानं च पार्थं पुनःपुनः पर्यपृच्छच्छुभांगी ॥ सोप्याहोन्मत्ते सोस्मिहीति स्मयंस्तां फुल्लाक्षी तं सा ददर्शातिहृष्टा ॥ १८२ ॥ ॥

ह ॥ १८० ॥ भूयःसाअवादीत् । किमिति । हेभगवन्यते इंद्रसूनुःतीर्थार्थंतीर्थयात्रार्थंगतइति । मेमयाब्राह्मणेभ्यःश्रुतःभवतात्वयाक्वचित्तीर्थेदृष्टःकिमितिसंबंधः । पार्थः ओमितिस्मऊचे सापिक्वेतिकुत्रेति एनंयतिरूपंपार्थमपृच्छत् ॥ १८१ ॥ शुभांगीमंगलांगीअत्रैवदृष्टइतिस्मयमानं विस्मयप्रापकंपार्थंपुनःपुनःपर्यपृच्छत् । सोपि आह । किमिति । हेउन्मत्तेज्ञानहीने अत्रैवेतिपुनःपुनरुक्तेपिबोधोनभवतीतिउन्मत्तइतिसंबोधनं । सोर्जुनःअहमास्मिइतिस्मयन् विस्मयंकुर्वन्तांसुभद्रांआहेतिसंबंधः । फुल्लाक्षीविकासितनेत्रासातमर्जुनंददर्श । फुल्लाक्षित्वेकारणमाह । अतिहृष्टेति ॥ १८२ ॥ ॥ ॥

ततःअयमर्जुनइतिज्ञानानंतरं । हर्षादुत्पलाक्षीपार्थंनौआवयोःउद्वाहार्थेकामाविष्टःकामयुक्तःअयंकालःमुख्योस्तुइत्याहोतिसंबंधः । साएनमाह ॥ १८३ ॥ अतिक्रमः उल्लंघनंतेनवासुदेवेनसमुद्वहस्वीकुरु । सोर्जुनःकृष्णंदध्यौसस्मार ॥ १८४ ॥ फल्गुनेनस्मृतःसन् तत्रद्वारावतींप्रतिअगात् ॥ १८५ ॥ कृष्णःपुरुहूतेनसाकं मातापितृभ्यांसात्यकिनामुनींद्रैःयुक्तःसन् अन्याविदितेउक्तेभ्योन्यैरविदितेअज्ञातेमहोत्सवेतयोर्विवाहंकारयामास ॥ १८६ ॥ स्वंस्यंदनंतद्रजन्यां तस्यामेवरात्र्यांकृष्णःप्रययौ । तद्रजन्यांशक्रेगतेसति प्रातःपार्थःरथमारुरोह ॥ १८७ ॥ गृहीतचापेसति द्वारवत्यांरावःकोलाहलःआसीत् । एतत्किंकिमिदंभवतिकिंभवतीतिकेचिदाहुः । केचिदेषःत्रि

ततो हर्षाल्लज्जया चोत्पलाक्षी किंचिन्नोचे पार्थ एनामुवाच ॥ कामाविष्टो मुख्यकालो ह्ययं नावुद्वाहार्थेऽस्त्विति सा चैनमाह ॥ १८३ ॥ नातिक्रमो वासुदेवस्य युक्तस्तस्मात्तेन स्वपितृभ्यां च दत्ताम् ॥ युक्तो निजैर्बंधुभिश्चोत्सवे मां समुद्वहेत्यथ कृष्णं स दध्यौ ॥ १८४ ॥ मातापितृभ्यां सहितोथ कृष्णस्तत्रैवायाद्वासवश्चाथ शच्या ॥ समं मुनींद्रैः फल्गुनेन स्मृतः स तत्रैवागात्प्रीतियुक्तो निशायाम् ॥ १८५ ॥ कृष्णस्ततः पुरुहूतेन साकं तयोर्विवाहं कारयामास सम्यक् ॥ मातापितृभ्यां सात्यकिनापि युक्तो महोत्सवेन्याविदिते मुनींद्रैः ॥ १८६ ॥ ततः कृष्णः स्यंदनं फल्गुनार्थे निधाय स्वं प्रययौ तद्रजन्याम् ॥ गतेथ शक्रे रथमारुरोह प्रातः पार्थः सहितो भार्ययैव ॥ १८७ ॥ सर्वायुधैर्युक्तरथे समास्थिते गृहीतचापे फल्गुने द्वारवत्याम् ॥ आसीद्रावः किंकिमेतत्त्रिदंडी कन्यां हरत्येष कोदंडपाणिः ॥ १८८ ॥ ततस्तु तं सतनुत्रं महेंद्रदत्ते दिव्ये कुंडले वाससी च ॥ दिव्यानि रत्नानि विभूषणानि दृष्ट्वा बिभ्राणं रक्षिणो वारयंस्म ॥ १८९ ॥ ततः स आवद्धतलांगुलित्रः सतूणिरश्चापमायम्य बाणैः ॥ चक्रेंतरिक्षं प्रदिशोदिशश्च निरंतरं शिक्षया विद्यया च ॥ १९० ॥ ॥ ॥ ॥ ॥

दंडीयतिःकोदंडपाणिःसन् दंडंत्यक्त्वाधनुःपाणिःसन् कन्यांहरतिइतिआहुरित्यर्थः ॥ १८८ ॥ ततःकोलाहलानंतरं । रक्षिणःपुररक्षिणःसतनुत्रंसकवचं भूषणानिबिभ्राणंतंपार्थंअवारयंस्म १८९ ॥ तलंचअंगुल्यश्चतलांगुल्यःताःकरतलांगुलीःत्रायतेतत् तलांगुलित्रं आवद्धंतलांगुलित्रंयेनसतथोक्तः सतूणीरःइषुधिसहितःसचापमायम्यअरोप्य निरंतरंव्यवधानरहितम् ॥ १९० ॥ ॥ ॥ ॥ ॥

सोर्जुनःशिक्षयाशरौघैःतान्भटान्भीषयित्वाविद्रा
केशवेनैतदर्थंअर्जुनस्यसारथ्यार्थंसुशिक्षितासुभद्रा तस्यपार्थस्यसारथ्यंचक्रे । तयासुभद्रयावारितःपार्थःक्रीडमानःसन्
व्य कंचित्कंचनवीरं भिन्नत्वचंभिन्नात्वक्यस्यसःभिन्नत्वक्तंभिन्नत्वचंनकृतवान् ॥ १९१ ॥ पुर्याःनिर्गत्यबहिर्गत्वा सन्नियुक्तंआज्ञापितं ॥ १९२ ॥ व्याजेनछद्म
नाकृष्णादेशात्कृष्णाज्ञयारोधंनिरोधं छलेनव्याजेन ॥ १९३ ॥ असौविपृथुःमरुतांमध्येएकःकश्चनसौम्यनामा सव्यसाचीअर्जुनःतंयादवंविपृथुं यथाक्षतंनभवेत्तथाववर्ष
॥ १९४ ॥ पार्थोविरथंनिरायुधंविपृथुंचक्रे । तस्यविपृथोःसेनांनवाहनत् निरायुधांविरथामितिवापाठः । विपृथुःतस्याजुंनस्यतीक्ष्णान् त्वचोपिनच्छेदकान्शरान्दष्ट्वा ।

तया पार्थो वारितो नैव कंचिद्भिन्नत्वचं कृतवान्
चक्रे सारथ्यं केशवेनैतदर्थं सुशिक्षिता तस्य सम्यक् सुभद्रा ॥ तया पार्थो वारितो नैव कंचिद्भिन्नत्वचं कृतवान् क्रीडमानः ॥ १९१ ॥ सुशिक्षयात्यद्भुतया शरौघैर्विद्राव्य तान् भीषयित्वैव सर्वान् ॥ निर्गत्य पुर्या विपृथुं ददर्श रामेण पुर्या रक्षणे सन्नियुक्तम् ॥ १९२ ॥ प्रियं कुर्वन्निव रामस्य सोपि व्याजेन पार्थं सेनयैवावृणोत्तम् ॥ कृष्णादेशान्नैव पार्थस्य चक्रे सम्यग्रोधं युयुधे च छलेन ॥ १९३ ॥ एको ह्यसौ मरुतां सौम्यनामा शुश्रूषार्थं वासुदेवस्य जातः ॥ तं यादवं शरवर्षैर्ववर्ष यथा क्षतं न भवेत्सव्यसाची ॥ १९४ ॥ निरायुधं विरथंचैव चक्रे पार्थः सेनां तस्य नैवाहनच्च ॥ दृष्ट्वा शरांस्तस्य तीक्ष्णांस्त्वचोपि न च्छेदकान्विपृथुस्तं तुतोष ॥ १९५ ॥ शिक्षां पार्थस्याधिकां मानयानः उपेत्य पार्थं च शशंस सर्वाम् ॥ आज्ञां विष्णोः सन्नियुध्यन्निवास्मै कृतायुधः फल्गुनेनैव पूर्वम् ॥ १९६ ॥ ततः पराजितवच्छीघ्रमेत्य शशंस सर्वं हलिनेथ सोपि ॥ प्रद्युम्नसांबादियुतोथ कोपादायात्पुरीं हंतुकामोर्जुनं च ॥ १९७ ॥ कृष्णोपि सर्वं विपृथोर्निशम्य प्राप्तः सुधर्मां विमना इवासीत् ॥ अवाङ्मुखस्तत्र यदुप्रवीराः प्रद्युम्नाद्या आहुरुच्चैर्नदंतः ॥ १९८ ॥ ॥ ॥ ॥ ॥

अतएवसन्नियुध्य
तंशस्त्राभिज्ञमर्जुनंचदृष्ट्वा तुतोष । संतुतोषेतिवापाठः ॥ १९५ ॥ पार्थस्यअधिकांउत्तमांशिक्षांमानयानःपार्थमुमेत्य पूर्वंफल्गुनेनकृतायुधःछिन्नायुधः
न्निवमुष्टियुद्धंकुर्वन्निव विष्णोःकृष्णस्यसर्वांआज्ञांअस्मैपार्थायशशंस ॥ १९६ ॥ ततःविपृथुएत्यपिंडोद्धारकामितिशेषः । अथहलिनेशशंस अथसोपिरामोपिपुरींप्रतिआयात्
॥ १९७ ॥ कृष्णोपिविपृथोःसकाशात्सर्वंनिशम्यसुधर्मांसुधर्माख्यांसभांप्राप्तःसन् विमनाइवव्यग्रांतःकरणइवअवाङ्मुखःअधःकृतमुखःआसीत् । तत्रसभायाम् ॥ १९८ ॥

मायाव्रतंमाययैवव्रतंयस्यसतथातं पार्थयांतुगच्छंतु ॥ १९९ ॥ एतस्यकृष्णस्यमतंअभिप्रायंपुरस्तात्पूर्वंज्ञातव्यं । हरेर्विरोधेकृतेसतिवःयुष्माकंजयोनभवेत् । आनम्यनमस्कृत्य ॥ २०० ॥ मयापुरैवतत्उक्तं । तत्किं । असौमायाव्रतःकन्यकायाःसन्निधिस्थितिंसन्निधौसमीपेस्थितिंअवस्थानंनार्हति । कर्तुमितिशेषः ॥ २०१ ॥ अयमग्रजोरामःबहून्दोषान्व्याहरतःब्रुवतःमेतांवाचंनाग्रहीयतःअतःअनुल्लंघ्यत्वात्उल्लंघितुमशक्यत्वात् मयापिकूटबुद्धेःकपटबुद्धेःकन्यागृहेवासनेऽवस्थानविषयेअग्रजःअनुप्रवृत्तः ॥ २०२ ॥ अयंकार्ययोगःसुभद्रानयनलक्षणकार्ययोगःअतीतःअतिक्रांतःनोस्माकंअसमक्षंपरोक्षंकन्याहृतायतःअतःअत्रआस्मिन्विषयेनोस्माकं का मानहानिःमानभंगोनकोपीत्यर्थः। भूयस्तरांअतितरांमानिनःवीरत्वमानिनःतस्यपार्थस्यसामानहानिःस्यात् विपृथोःसकाशात्अस्ययतेःपार्थताअर्जुनतावःयुष्माकं युष्माभिःज्ञाता

मायाव्रतं तं विनिहत्य शीघ्रं वयं सुभद्रामानयामः क्षणेन ॥ इत्युक्तवाक्यानवदद्धलस्तान् कृष्णाज्ञया यांतु न स्वेच्छयैव ॥ १९९ ॥ ज्ञातव्यमेतस्य मतं पुरस्ताद्धरेर्विरोधे न जयो भवेद्वः ॥ इत्युक्तवाक्ये हलिनि स्म सर्वे पप्रच्छुरानम्य जनार्दनं तम् ॥२००॥ अथाब्रवीद्वासुदेवोमितौजाः शृण्वंतु सर्वे वचनं मदीयम् ॥ पुरैवोक्तं तन्मया कन्यकाया मायाव्रतोसौ नार्हति सन्निधिस्थितिम् ॥ २०१ ॥ तां मे वाचं नाग्रहीदग्रजोयं बहून् दोषान्व्याहरतोप्यतो मया ॥ अनुल्लंघ्यत्वादग्रजोनुप्रवृत्तः कन्यागृहे वासने कूटबुद्धेः ॥ २०२ ॥ अतीतश्चायं कार्ययोगो समक्षं हता कन्या नोत्र का मानहानिः ॥ भूयस्तरां मानिनस्तस्य सा स्यात् ज्ञाता च वो विपृथोः पार्थतास्य ॥ २०३ ॥ देया च कन्या नास्ति पार्थेन तुल्यो वरोस्माकं कौरवेयश्च पार्थः ॥ पौत्रश्च कृष्णस्य सुपूर्णशक्तेः पैतृष्वसेयो वीरतमो गुणाढ्यः ॥ २०४ ॥ अर्थ्योस्माभिः स्वयमेवाहरत्स शक्रात्मजो नात्र नः कार्यहानिः ॥ अनुद्रुत्यैनं यदि वः स्यात्पराजयो हानिर्दृढं यशसो वो भवेत ॥ २०५ ॥ ॥ ॥ ॥

॥ २०३ ॥ सुभद्रामानयामइति यदुक्तंतदयुक्तमित्याह । देयेत्यादिना । कन्यादेयाचअन्यस्मैदातव्यैवतर्हि अस्माकंपार्थेनतुल्यःवरोनास्ति । अतुल्यत्वंविवृणोति । कौरवेयइत्यादिना । पार्थःकौरवेयश्चकुरुकुलोत्पन्नइतिकुलीनत्वमाह । कृष्णस्यश्रीवेदव्यासस्यपौत्रइत्यादिना । वरस्यगुणांतराण्याह । पैतृष्वसेयइति । संबंधयोग्यत्वमाह ॥२०४॥ अतएवईदृशोवरःअस्माभिःअर्थ्यःअर्थनीयःसशक्रात्मजःस्वयमेवाहरत् । कन्यामितिशेषः । अत्रकन्याहरणविषयेनोस्माकंकार्यहानिःनकापीत्यर्थः । एनमर्जुनंअनुद्रुत्यअनुगत्वा यदिवःयुष्माकंपराजयःस्यात्तर्हि वःयशसःहानिःस्यात्दृढंसत्यं ॥ २०५ ॥ ॥ ॥ ॥

एनंयदिजित्वेत्यनेनार्जुनजयःअशक्यइत्याह । कथंचिज्जित्वाकन्यकाआहृताचेत् परामृष्टांकश्चिन्नैवलिप्सेत् नेच्छेत् । मेमह्यंनरोचतेनशोभतेनप्रशस्यते मनसीतिशेषः नेष्टं ॥ २०६ अस्यकृष्णस्यचित्तंविदितंमनोभिप्रायःज्ञातइत्यर्थः मायातमागच्छध्वं अस्यकृष्णस्यअनुवृत्तिःअनुकूलत्वेनवर्तनंनःविजयायशुभाय शांत्यैवुध्यैनिर्दुष्टतायैस्यादिहेतिशेषः परतश्चमुक्त्यै ॥ २०७ ॥ ततोर्जुनःयत्रयस्मिन्कृष्णरथेकश्चित्पुरुषःतिष्ठन्सन् कृष्णाज्ञयापराजयंनैवयाति । तेनैवरथेनययौ । सभार्यःशक्रप्रस्थं

जित्वाचैनं कन्यका चाहृता चेत्परामृष्टां नैव कश्चिद्विलिप्सेत् ॥ अतो न मे रोचते वोनुयानमित्यूचिवानास तूष्णीं परेशः ॥ २०६ ॥ श्रुत्वा हली कृष्णवाक्यं बभाषे मा यात चित्तं विदितं मयास्य ॥ अस्यानुवृत्तिर्विजयाय नः स्याच्छुभाय शांत्यै परतश्च मुक्त्यै ॥ २०७ ॥ ततोर्जुनो यत्र तिष्ठन्न कश्चित्पराभवं याति कृष्णाज्ञयैव रथेन तेनैव ययौ सभार्यः शक्रप्रस्थं चाविशद्भ्रातृगुप्तम् ॥ २०८ ॥ संभावितो भ्रातृभिश्चाभितुष्टैरूचेथ सर्वं तेषु यच्चात्मवृत्तम् ॥ शांतेषु वाक्यादात्मनो यादवेषु कृष्णो युक्तो हलिनागाच्च पार्थान् ॥२०९॥ सार्धं ययौ शकटै रत्नपूर्णैः शक्रप्रस्थं पूजितस्तत्रपार्थैः ॥ ददौ तेषां तानि रामेण युक्तस्तथा कृष्णायै भूषणानि स्वसुश्च ॥ २१० ॥ मासानुषित्वा कतिचिद्रौहिणेयो ययौ पुरीं स्वां केशवोत्रावसच्च ॥ बहून्वर्षान्पांडवैः पूज्यमानः प्रीतिं तेषामादधानोधिकां स्वाम् ॥ २११ ॥ आसन्कृष्णायाः पंच सुता गुणाढ्या विश्वेदेवाः पंच गंधर्वमुख्यैः ॥ आविष्टास्ते चित्ररथाभिताम्रकिशोरगोपालबलैः क्रमेण ॥ २१२॥ प्रतिविंध्यः श्रुतसोमः श्रुताख्यकीर्तिः श्रुतानीक उत श्रुतक्रियः ॥ युधिष्ठिराद्यैः क्रमशः प्रजातास्तेषां द्वयोश्चावरजोभिमन्युः ॥ २१३ ॥ ॥ ॥ ॥ ॥

आविशत् ॥ २०८ ॥ आत्मवृत्तंस्वप्रवृत्तिंआत्मनःकृष्णस्येत्यर्थः ॥२०९॥ शकटैःसार्धंशक्रप्रस्थमगादितिसंबंधः ॥ २१०॥ अत्रशक्रप्रस्थेआदधानःकुर्वन् ॥२११॥ कृष्णायाःपूर्वंपंचविश्वेदेवाःयेतेसुताःआसन् । चित्ररथाद्यैर्गंधर्वमुख्यैःक्रमेणाविष्टाः ॥२१२॥ अत्रनाम्नाप्रतिविंध्यादयःयुधिष्ठिराद्यैः क्रमशःप्रजातास्तेषांपंचानांमध्येद्वयोर्युधिष्ठिरभीमपुत्रयोःप्रतिविंध्यश्रुतसोमयोः अवरजःअभिमन्युः अभिमन्योरुत्पत्त्यनंतरं । श्रुताख्यकीर्तिःअर्जुनात् कृष्णायांउत्पन्नइतिभावः ॥ २१३ ॥

असौअभिमन्युःपूर्वबुधःअतितरामत्यंतं चंद्रांशेनयुक्तःसुभद्राजठरेउदरेअर्जुनेनजातःउत्पादितः धर्मस्ययमस्यइंद्रस्यवायोःशक्रस्यचांशैर्युक्तः अश्विनोश्चांशयुक्तइत्यर्थः। कृष्णस्यचदेवकीनंदनस्यचसन्निधानेनविशेषावेशेनयुतः ॥२१४॥ चंद्राद्यावेशफलमाह सर्वेपीति । अभिज्ञाःसम्यक्परिचयवंतः सात्वतीनंदनेनसात्वतांयादवानांस्त्रय पत्यत्वात्सात्वतीसुभद्रातस्याः नंदनेनाभिमन्युना ॥ २१५ ॥ चिक्रीडिषूक्रीडांकर्तुकामौरथेनयातौ ॥ २१६ ॥ तयोःकृष्णार्जुनयोःस्त्रीरत्नाभ्यांस्वैरंस्वेच्छया मंदवाता नुजुष्टेमंदवायुसेविते प्रसूनस्तबकैःपुष्पगुच्छकैःउरुराजिते । स्याद्गुच्छकस्तुस्तवकःकुड्मलोमुकुलोस्त्रियामित्यमरः । अत्रवनेतिग्मद्युतिःसूर्यःतस्यकन्यकायमुनातस्याः

चंद्रांशयुक्तोतितरां बुधोसौ जातः सुभद्राजठरेर्जुनेन ॥ धर्मेंद्रशक्रांशयुतोश्विनोश्च तथैव कृष्णस्य च सन्निधान युक् ॥ २१४ ॥ सर्वेपि ते वीर्यवंतः सुरूपा भक्ता विष्णोः सर्वशास्त्रेष्वभिज्ञाः ॥ मोदं ययुः पांडवास्तैः सुतैश्च विशेषतः सात्वती नंदनेन ॥ २१५ ॥ ततः कदाचित्खांडवं कृष्णपार्थौ चिक्रीडिषू सत्यभामासुभद्रे ॥ आदाय यातौ परिचारकैश्च रथेन गंधर्ववरानुगीतौ ॥२१६॥ स्वैरं तयोस्तत्र विक्रीडितोश्च स्त्रीरत्नाभ्यां मंदवातानुजुष्टे ॥ वने प्रसूनस्तबकोरुराजिते जले च तिग्मद्युतिकन्यकायाः ॥ २१७ ॥ भूत्वा विप्रस्तौ ययाचेन्नमेत्य कृशानुरूचे नुमते रमेशितुः ॥ पार्थः कीदृक् तेन्नमिष्टं वदेति स चावादीद्वन्हिरहं वनार्थी ॥ २१८ ॥ प्रयाजान्देवाननुयाजां श्च शुल्कं हविर्दाने देवतानामयाचिषम् ॥ बलह्रासस्तव भूयादितिस्म शप्त्वैव ते तांश्च ददुः पुरा मम ॥ २१९ ॥ पुनः पूर्तिः केन मे स्याद्बलस्येत्यब्जोद्भवं पृष्टवानस्मि नत्वा ॥ यदा वनं खांडवं हि त्वमत्सि तदा बलं ते भव तीति सोब्रवीत् ॥ २२० ॥ ॥ ॥ ॥ ॥

जलेचिक्रीडतोःसतोः ॥२१७॥ कृशानुःअग्निःविप्रोभूत्वा तौएत्यअन्नंययाचे । पार्थःरमेशितुःअनुमतःअनुमतेनऊचे । किमिति । तेतत्रकीदृक्अन्नंइष्टंवदेतिसंबंधः। सचाग्निःअहंवन्हिःवनार्थीत्यवादीत् ॥२१८॥ वनार्थित्वंविविच्याह । प्रयाजानित्यादिना । अहंदेवतानांहविर्दानेविषयेप्रयाजाननुयाजांश्चतुरआहुतिविशेषान् शुल्कं वेतनमयाचिषं तेदेवाःतान्आहुतिविशेषान् ॥ २१९ ॥ आत्सिभक्षयिष्यसि । भवतिभविष्यति ॥ २२० ॥ ॥ ॥

तर्हि वनंभक्षयामीतिकिमर्थमावयोः प्रार्थनंक्रियतइतितत्राह । शक्रस्येति । येनकारणेनइदंखांडवंशक्रस्यतदीयमित्यर्थः । तेनकारणेनअसाविंद्रोविघ्नंकरोति । तेनकारणेनवांभवंतौप्रार्थयामि । अथतर्हि रथधनुषोःप्राप्त्यनंतरं । शक्रंनिरोत्स्ये ॥ २२१ ॥ पार्थआत्मनोमूलरूपेणेंद्रेणकथंविरोधमैच्छदित्यतआह । नरावेशादिति । नरावेशादित्यनेनरोधनसामर्थ्यंसूचितं । अन्नदानप्रतिश्रवात् सत्पात्रेअन्नदानान्महत्फलंसूचितं स्वस्यापिस्वमूलरूपस्यापिविरोधमैच्छत् । शक्रस्यविरोधेअन्यत्कारणंदर्शयति । कृष्णेति । पार्थःकृष्णस्यप्रेरणाच्चैवविरोधमैच्छदितिसंबंधः । वन्हिःकृष्णस्यप्रेरणात्पार्थंययाचेइतिटिप्पणीकाराः । तेषांमतेनप्रेरितोविष्णुनातस्यरोधंपार्थःकुर्यादितिउत्तरश्लोकविरोधोदृश्यते । प्रकृतमनुसरति । वन्हिरिति ॥ २२२ ॥ कृष्णार्जुनयोरुभयोःप्रार्थनेनिमित्तमाह । नहीति । सशक्रःस्वदत्तस्यपुनःवैरंनकुर्याद्यस्मात्पार्थःस्वयमिंद्रःतस्मादितिसंबंधः । विष्णुनाप्रेरितःपार्थःतस्यशक्रस्यविरोधंनकुर्यादितिकृष्णंययाचे । विष्णुरेवकृष्णइतिनिबोद्धव्यं ॥२२३॥ शक्रस्यरोधनेकृष्णप्रार्थनेनिमित्तांतरंचाह । नचेति । केशवेनकृष्णेनायुक्तःकृष्णसहायरहितः एषपार्थःनैवशक्तःरोद्धुमितिशेषः । इतिकृष्णंभूयोपिययाचेस्मेतिसंबंधः । कृष्णस्यार्जुनेनप्रेरणार्थंपूर्वंयाचितत्वात्पुनः सहायकरणार्थयाचनाद्भूयइत्युक्तं । कृष्णादनुज्ञामाप्य वनभक्षणार्थमितिशेषः बदर्यामितस्तहरेःअर्जुनःनारायणात्केशवेदप्याप ॥२२४॥ अग्निदत्तंचक्रंप्राक्तनंचगोमंतेप्राप्तंचएकधाएकमासीत् ॥२२५॥ अथेत्यनंतरं अब्जजस्यगांडीवंधनुश्चपार्थो ।अदादितिशेषः । सततंयेनगांडीवेनअखिलसंयतिंअखिलयजमानःसंयतिंसंयमनंकरोति । अग्निनागांडीववरुणादानीतमितिग्रंथांतरोक्तिःतदन्नलक्षणःकथमित्यतआह । अंशेनेति । तद्गांडीवंअंशेनएकांशेन उमापत्यादीनांदत्तं महाणेतिशेषः ॥ २२६ ॥

शक्रस्येदं खाण्डवं तेन विघ्नं करोत्यसौ तेन वां प्रार्थयामि ॥ इत्युक्ते तं पार्थ ऊचे यदि स्याद्रथो धनुश्चाथ शक्रं निरोत्स्ये ॥२२१॥ नरावेशादन्नदानप्रतिश्रवात्स्वस्यापि शक्रस्य विरोधमैच्छत् ॥ पार्थः कृष्णः प्रेरणाच्चैव वन्हिः पार्थं ययाचे शक्रविरोधशांत्यै ॥२२२॥ न हि स्वदत्तस्य पुनः स वैरं शक्रः कुर्यात्स्वयमिंद्रो हि पार्थः ॥ नारायणेरितो विष्णुना तस्य रोधं पार्थः कुर्यादिति कृष्णं ययाचे ॥२२३॥ न चायुक्तः केशवेनैव शक्त इतीश्च कृष्णादपि भूयोप्ययुक्तान् ॥ ययौ समीपं च हरेर्बदर्यामादाय चक्रं चानुतः केशवेदात् ॥२२४॥ चक्रं गोमंते कृष्णनामाप्ति पूर्वं [illegible] केशवेदात्पुनस्तत् ॥ चक्रं च विष्णोर्विहुधा [illegible] तदग्निदत्तं प्राक्तनं चैकधासीत् ॥२२५॥ धनुश्च गांडीवमब्जजस्य करोति येनाखिलसंयतिं सः ॥ अंशेन दत्तं तदुमापतेश्च शक्रस्य सोमस्य जलेशितुश्च ॥ २२६ ॥

॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

अथोधनुःप्राप्त्यनंतरंयेभ्योयेभ्योदत्तंतेतोशिवाद्याः तेनैवगांडीवेनैवअब्जयोनेःप्रसादतः जगत्त्रयंजिग्युः । प्रसादस्तुक्रमशइतिक्वचित्पाठः । लक्षभारेणलक्षसंख्याभारेणसमं भारोनामविंशतितुला । गुंजाःपंचाद्यमाषकः । तेषोडशाक्षःकर्षोस्त्रीपलंकर्षचतुष्टयं । तुलास्त्रियांपलशतंभारःस्याद्विंशतिस्तुलाइत्यमरः । अतएवअनन्यधार्यंविजयावहं विजयप्रदंशुभावहंधनुरितिसंबंधः ॥ २२७ ॥ हनुमदंकंरामस्यश्रीरघुपतेर्ध्वजंचसर्वंगांडीवादिवरुणादादाय अर्जुनेअर्जुनायादात् ॥ २२८ ॥ गांडीवादिभ्योध्वजस्यहे तुपूर्वकविशेषंदर्शयति ।विशेषतइति । हनूमतिध्वजसंस्थेसति रथस्यविशेषतःजयप्रदत्वं गांडीवादिभ्योविशेषात् अजेयतास्यात् अतःयतोहनूमान्जयरूपःतत्सर्वंदिव्यंले

तेनैव ते जिग्युरथो जगत्त्रयं प्रसादतस्ते क्रमशोऽब्जयोनेः ॥ अनन्यधार्यं विजयावहं च भारेण लक्षस्य समं शुभावहम् ॥२२७॥ रथं च शुभ्राश्वयुतं शुभावहं तूणी तथा चाक्षयसायकौ शुभौ ॥ ध्वजं च रामस्य हनूमदंक मादाय सर्वं वरुणादर्जुनेदात् ॥ २२८ ॥ विशेषतो ध्वजसंस्थे हनूमत्यजेयता स्याज्जयरूपो यतोसौ ॥ सर्वं च तद्दिव्यमभेद्यमेव विद्युत्प्रभा ज्या च गांडीवसंस्था ॥ २२९ ॥ गांडीवमप्यास कृष्णप्रसादाच्छक्यं धर्तुं पांडव स्याप्यधार्यम् ॥ देवैश्च तैर्ब्रह्मवराद्धृतं तद्ब्रह्मैव साक्षात्प्रभुरस्य धारणे ॥ २३० ॥ इंद्रस्य दत्तश्च वरं स्वयंभुवा तेनापि पार्थस्य बभूव धार्यं ॥ इंद्रो ह्यसौ फल्गुनत्वेनजातस्ततः सोस्त्रैःशरशालां चकार ॥२३१॥ आयोजनद्वादशका भिविस्तृतं पुरं चकाराशु पुरंदरात्मजः ॥ हुताशनोप्याशु वनं प्रगृह्य प्रभक्षयामास समुद्धतार्चिः ॥ २३२ ॥

क्षविलक्षणं अतएवअभेद्यं गांडीवस्थाज्याचविद्युत्प्रभा अभेद्यत्वंचज्यांवर्जयित्वेतिज्ञातव्यं । गुरोःसुतःचिच्छेदच ज्यांयुधिगांडीवस्येतिअग्रेवक्ष्यमाणत्वात ॥२२९॥अ न्यैरधार्यंचेत्अर्जुनेनकथंधृतमित्यतआह । गांडीवमिति । अधार्यमपिब्रह्मणोन्यैरितिशेषः । गांडीवंतैर्देवैःशिवाद्यैः प्रभुःसमर्थः ॥२३०॥ अर्जुनस्यधार्यत्वेनिमित्तांतर माह । इंद्रस्येति । तेनकारणेनपार्थस्यापि ततःधनुरादिप्राप्त्यनंतरं । अस्त्रैर्मंत्रैःशरशालांवासस्थानं । वासःकुटीद्वयोःशालासभेत्यमरः ॥ २३१ ॥ तदेवविशदयति । आयोजनइति । योजनद्वादशकेभ्यःआमर्यादीकृत्य अभितःसमंतात् विस्तृतंपुरंसमुद्धताःवृद्धाःअर्चिषःज्वालायस्यसतथा ॥ २३२ ॥ ॥ ॥

कक्षंवनं आशुशुक्षणिं वह्निं ईक्ष्य बहुलेक्षणःसहस्राक्षःआक्षुब्धमनाःसन् आईषत्क्षुब्धंक्षोभितंमनोयस्यसतथा। अक्षोपमाभिःअक्षःरथचक्रधाविष्टकाष्ठविशेषः। तेनउपमाभिःस्थौल्येनसदृशाभिरंभसांधाराभिःक्षयायनाशाय उद्धतज्वालायाइतिशेषः॥ नत्वग्नेःअतएवआईषदित्युक्तं। संधुक्षयामासक्लेशयामास। निरोधमकरोदितिभावः। धुक्षधिक्षसंदीपनक्लेशनजीवनेष्वितिधातुः॥ २३३॥ कृष्णःपार्थश्चउभौअस्त्रैर्वृष्टिनिवारकवायव्याद्यैर्वृष्टिंविनिवार्य सुरपूगयुक्तंसुरसमूहयुक्तं शक्रंअयुध्यतांसोपींद्रोपिपराजितःसन् आत्मनःपार्थात्मकस्यस्वस्यताद्दिशिष्टंबलंदृष्ट्वाप्रीतोभूत्॥ २३४॥ तादृशंपूर्वोक्तंबलम्॥ २३५॥ निर्विशेषः आनंदादिगुणैर्विशेषरहितः। कृष्णादिति

प्रभक्ष्यमाणं निजकक्षमीक्ष्य संधुक्षयामास तदाशुशुक्षणिम्॥ अक्षोपमाभिर्बहुलेक्षणोंभसां धाराभिराक्षुब्धमनाः क्षयाय ॥२३३॥ अस्त्रैस्तु वृष्टिं विनिवार्य कृष्णः पार्थश्च शक्रं सुरपूगयुक्तम्॥ अयुध्यतां सोपि पराजितोभूत्प्रीतश्च दृष्ट्वा बलमात्मनस्तत्॥२३४॥ स्नेहं च कृष्णस्य तमर्जुने धृतं विलोक्य पार्थस्य बलं च तादृशम्॥ निवर्त्य मेघानतितुष्टचित्तः प्रणम्य कृष्णं तनयं समाश्लिषत्॥ २३५॥ विष्णुश्च शक्रेण सहैत्य केशवं समाश्लिषन्निर्विशेषोप्यनंतः॥ स केवलं क्रीडमानः सशक्रः स्थितो हि पूर्वं युयुधे न किंचित्॥ २३६॥ ब्रह्मा च शर्वश्च समेत्य कृष्णं प्रणम्य पार्थस्य च कृष्णनाम॥ संचक्रतुश्चापि शिक्षाप्रकर्षाच्चक्रुश्च सर्वे स्वास्त्रदाने प्रतिज्ञाम्॥२३७॥ अनुज्ञातास्ते प्रययुः केशवेन क्रीडार्थमिंद्रो युयुधे हि तत्र॥ प्रीत्या कीर्तिं दातुमप्यर्जुनस्य ततस्तुष्टः सह देवैर्ययौ स्वः॥२३८॥

शेषः। एकएवेतिभावः अनंतःदेशादिपरिच्छेदशून्योविष्णुः उपेंद्रःकेशवंकृष्णंपूर्वंशक्रार्जुनयुद्धसमयेकेवलंक्रीडमानःसशक्रःसवामनःस्थितोहि केवलमित्यस्यैवायमर्थः। नकिंचिदपियुयुधइति॥ २३६॥ पार्थस्यशिक्षाप्रकर्षात्शिक्षातिशयात् कृष्णनामचक्रतुः सर्वेब्रह्माद्याःस्वास्त्रदानेस्वेषांअस्त्रदाने प्रतिज्ञांचक्रुःपार्थायेतिशेषः॥२३७॥ तेब्रह्मेंद्रादयः केशवेनअनुज्ञाताःसंतःप्रययुः। ननु पूर्वमिंद्रःस्वदत्तस्यविरोधंनकुर्यादित्युक्तं तर्हि कृष्णार्जुनाभ्यांकथंयुद्धंकृतवानित्यतआह। क्रीडार्थमिति। इंद्रःअत्रखांडवदाहेक्रीडार्थंकेशवेनयुयुधे। नत्वसुरावेशेनेतिभावः। प्रीत्याअर्जुनस्यापिकीर्तिंदातुमर्जुनेनयुयुधइतिसंबंधः। ततःपरजयानंतरं स्वःस्वर्लोकम्॥ २३८॥

ताभ्यांकृष्णार्जुनाभ्यां ॥ २३९ ॥ तेषांकेनप्रकारेणमोक्षोभूदित्यतआह । अयमग्नेइत्यादिना । प्रातिलोम्येनप्राणसंबंधरूपोत्पत्तेःप्रायःशिरःपूर्वकत्वेन प्राणवियोगरूप नाशस्य पादपूर्वकत्वेनग्रसनस्यापिनाशप्रतिनिधित्वात्तत्प्रातिलोम्येनशिरःप्रभृतिग्रस्तइत्यर्थः । यद्वा इत्थंभूतलक्षणेतृतीया यथामातुःकंठप्रदेशेअश्वसेनस्यपुच्छंभवति अस्यकंठप्रदेशेमातुःपुच्छंभवति । तथाग्रस्तःअंतरिक्षेपतंत्याःउत्पतंत्याःतस्याःतक्षकभार्यायाःअर्जुनेनकंठेछिन्नेसति छिन्नपुच्छःअश्वसेनःशक्रेणआवितोरक्षितः । तूणी रगःइषुधिस्थितोभूत्इषुधिगतबाणेषु कस्मिंश्चिद्बाणेगतोभूदितिभावः । बाणगतश्चनागइतिवक्ष्यमाणत्वात् ॥ २४१ ॥ कृष्णःअतिमायंमयमेनंपार्थार्थंनजघान । स्वभ

दैत्याश्च नागाश्च पिशाचयक्षा हताश्च सर्वे तद्वनस्था हि ताभ्याम् ॥ ऋते चतुःपक्षिणश्चाश्वसेनं मयं च नान्यत्किंचिदासात्र मुक्तम् ॥ २३९ ॥ अयमग्नेजरितेत्यादिमंत्रैः स्तुत्वा वह्निं पक्षिणो नैव दग्धाः ॥ स चाश्व सेनः पुत्रकस्तक्षकस्य मात्रा ग्रस्तः प्रातिलोम्येन कंठे ॥ २४० ॥ छिन्नेर्जुनेनांतरिक्षे पतंत्यास्तस्याः शक्रेणा वितो छिन्नपुच्छः ॥ वधान्मातुः पुच्छभंगाच्च रोषाद्धतुं पार्थं कर्णतूणीरगोभूत् ॥ २४१ ॥ मयः कृष्णेनात्तचक्रेण दृष्टो ययौ पार्थं शरणं जीवितार्थी ॥ पार्थार्थमेनं न जघान कृष्णः स्वभक्तश्चेत्यतिमायं रमेशः ॥ २४२ ॥ देवारिरि त्येव मयि प्रकोपः कृष्णस्य तेनाहमिमं पुरंदरम् ॥ पार्थात्मकं शरणं यामि तेन कृष्णप्रिय स्यामिति तस्य बुद्धिः ॥ २४३ ॥ प्राणोपकृत्प्रत्युपकारमाशु किंते करोमीति स पार्थमाह ॥ कृष्णप्रसादाद्धि भवान्विमुक्तस्तस्मै क रोत्वित्यवदत्स पार्थः ॥ २४४ ॥ ॥ ॥ ॥ ॥ ॥

क्तश्चइतिकारणान्नजघान ॥ २४२ ॥ पार्थशरणंगच्छतस्तस्याभिप्रायमाह । देवारिरिति । मयिकृष्णप्रकोपःनत्वभक्तइतिभावः । तेनकारणेनअहंपार्थात्मकं इमंपुरंदरं इंद्रंशरणंयामि । तेनदेवारित्वापगमेन कृष्णस्यप्रियःस्यामितितस्यबुद्धिरभिप्रायइत्यन्वयः ॥ २४३ ॥ अहंप्राणोपकृत्प्रत्युपकारंप्राणोपकृतः प्राणरक्षणलक्षणोपकारस्य प्रत्युपकारंतेकिंकरोमीतिपार्थमाह । सपार्थःइत्यवदन्मयामितिशेषः । किमिति । भवान् कृष्णप्रसादाद्विमुक्तःहियस्मात्तस्मात् तस्मैकृष्णायकरोतु उपकारमितिशेषः २४४

कृष्णोपिराज्ञेधर्मजायसभाकृतौसभायाःकरणेआदिशाद्दिदेश । स मयःतांसभांचक्रे अन्येकिमर्थंहताइत्यतआह । अनिर्गममिति । हुताशनेनप्राणिनामनिर्गमनंनिर्गमना भावंप्रार्थितौतौकृष्णार्जुनौविधायजग्मतुः । अनिर्गममितिशेषः ॥२४५॥ एतद्वनदहनं प्रभवःप्रभुत्वं औदार्यंदातृत्वम् ॥२४६॥ यंगंगाजमदग्निजान्वयभवाद्दिदद्धिरण्या

कृष्णोपि राज्ञेतिविचित्ररूपसभाकृतावादिशत्तां सचक्रे ॥ अनिर्गमं प्राणिनामर्थितौ तौ हुताशनेनाथ विधाय जग्मतुः ॥ २४५ ॥ दृष्ट्वा च तौ पांडवाः सर्वएव महामुदं प्रापुरेतन्निशम्य ॥ कृष्णोपि पार्थैर्मुमुदेनंतशक्तिः सुखज्ञानप्रभवौदार्यवीर्यः ॥ २४६ ॥ इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये खांडवदाहोनाम विंशोध्यायः ॥ २० ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥

भिधात्पुत्रंभापजनार्दनंशमदमस्वाध्यायसंपद्युतात् ॥ पूर्तितस्यकृतौसतांसुखकरोध्यायःशुभोविंशकःश्रीमद्भारतभावनिर्णयपदार्थोद्दीपिकायामगात् ॥ २० ॥ इति श्रीमद्भारततात्पर्यनिर्णयटीकायां पदार्थदीपिकायां जनार्दनभट्ट विरचितायां विंशोध्यायः ॥ २० ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥

श्रीगुरुभ्योनमः ॥ ॐ समस्तैःकौतुकैःआश्चर्यकरैःकृतिविशेषैःश्रेष्ठाम् ॥ १ ॥ कासौगदेत्यतआह । सइति । सभीमःअस्यवायोःप्रसादतः यौवनाश्वभूभृतामुचकुं
दराजेनलंभितांप्राप्ताम् ॥ २ ॥ अस्यकृष्णस्यवियोजनेवियोगेअक्षमैःअसमर्थैः ॥ ३ ॥ स्यमंतपंचकंकुरुक्षेत्रम् ॥ ४ ॥ हरेःप्रियाप्रियाःभक्ताःअप्रियाःअरयःमध्यमाश्च
तेचययुः ॥ ५ ॥ सदारगोपगोपिकःदाराःयशोदागोपाःगोपालकाःगोपिकाःगोपस्त्रियःताभिःसहितोनंदगोपकः अत्रकुरुक्षेत्रेप्रजाःनानादेशस्थजनाः ॥ ६ ॥ रमे
शितुःयेप्रियाःहरिभक्तास्तेव्यासकृष्णपरशुरामात्मकंत्रिरूपंहरिंएत्य वसिष्ठवृष्णिनंदनौभृगूत्तमंरामं तथाशब्दःसमुच्चयेअर्चयन् ॥ ७ ॥ भृगूद्वहोत्थतीर्थके रविग्रहेसमा

ॐ जनार्दनाज्ञया मयः समस्तकौतुकोत्तराम् ॥ सभां विधाय भूभृते ददौ गदां वृकोदरे ॥१॥ स वायुधारितां गदां हि यौवनाश्वभूभृता ॥ प्रसादतोस्य लंभितामवाप्य मोदमाप ह ॥ २ ॥ पुनश्च वत्सरद्वयं समुष्य केशवो ययौ समर्चितश्च पांडवैर्वियोजनेस्य चाक्षमैः ॥ ३ ॥ ततोवसत्स्वपुर्यजः क्वचिद्रविग्रहे हरिः ॥ सदारपुत्रबांधवः स्यमंतपंचकं ययौ ॥ ४ ॥ पृथासुताश्च सर्वशः सदारपुत्रमातृकाः ॥ क्षितीश्वराश्च सर्वशः प्रियाप्रियाश्च ये हरेः ॥५॥ तथैव नंदगोपकः सदारगोपगोपिक ॥ मुनीश्वराश्च सर्वशः समीयुरत्र च प्रजाः ॥ ६ ॥ प्रियाश्च ये रमेशितुर्हरिं त्रिरूपमेत्य ते ॥ वसिष्ठवृष्णिनंदनौ भृगूत्तमं तथार्चयन् ॥७॥ कृतार्थतां च ते ययू रमेशपाददर्शनात् ॥ रविग्रहे समाप्लुता भृगूद्वहोत्थतीर्थके ॥८॥ अनुग्रहं विधाय स स्वकेषु केशवस्त्रिवृत् अयाजयच्च शूरजं मखैः समाप्तदक्षिणैः ॥ ९ ॥ समस्तलोकसंस्थितात्मभक्तिमज्जनस्य सः ॥ सुकालदर्शनात्परं व्यधादनुग्रहं हरिः ॥ १० ॥ ॥

प्लुतास्तेनृपाद्याःरमेशपाददर्शनात् कृतार्थतांकृतकृत्यतांययुः ॥ ८ ॥ त्रिवृत्त्रिभिर्वर्ततइतित्रिवृत् व्यासादित्रिरूपवान् केशवःकृष्णःस्वकेषुदेवक्यादिषुअनुग्रहंविशदय
ति । अयाजयदिति । समाप्तदक्षिणैःसंपूर्णदक्षिणैः ॥ ९ ॥ समस्तलोकसंस्थितश्चासौआत्माच समस्तलोकसंस्थितात्मातस्मिन् । भक्तिमांश्चासौजनश्चतस्यसुकाल
दर्शनात् रविग्रहाख्यपुण्यकालदर्शनात् परंउत्कृष्टंमोक्षाख्यं अनुग्रहंव्यधात् समस्तलोकसंस्थितइत्यनेनमाहात्म्यज्ञानंसूचितं । माहात्म्यज्ञानपूर्वस्तुसुदृढःसर्वतोधिकः
स्नेहोभक्तिरितिप्रोक्तस्तयामुक्तिर्नचान्यथेतिवचनात् । कृष्णःभक्तजनस्यमुक्तिंददावित्यर्थः ॥ १० ॥ ॥ ॥

आह्निकंएकाहानिवर्त्यं ॥ ११ ॥ दिनस्यपादमात्रतःएकयामात् ॥ १२ ॥ तैःकृष्णपुत्रैःहयःदिव्यःदिव्यत्वाल्लोकविलक्षणत्वादाययौ यामादितिशेषः ॥ १३ ॥ दिनाश्वमेधसिद्धयेकृष्णनिर्मितोहयः ॥ १४ ॥ हरिंकृष्णं तृणावहःतृणपाणिरित्यर्थः । रुरावअरौदीत् ॥ १५ ॥ जन्मनःजननस्यअनुअनंतरं यामिरक्षिष्यामि ॥ १६ ॥ कार्ष्णेयाःप्रद्युम्नाद्याःकृष्णरामाभ्यांसहिताःसकृष्णरामाःसकृष्णरामाश्चतेकार्ष्णेयाश्चतैःअत्रअदर्शनात् नपालिताःतेअत्रअदर्शनाद्रक्षणेशक्तिःक्वेतिसद्विजःअमुमर्जुनंजगाद

ततो ययौ स्वकां पुरीं पृथासुतैः सहाच्युतः ॥ चकार तत्र चाह्निकं क्रतुं महाश्वमेधिकम् ॥ ११ ॥ हयं स भीमफल्गुना हरेरथं समास्थिताः ॥ व्यचारयन्हरेः सुता दिनस्य पादमात्रतः ॥ १२ ॥ जिताः समस्तभूभृतो जरासुतादयः क्षणात् ॥ वृकोदरादिभिस्तुतैर्हयश्च दिव्य आययौ ॥ १३ ॥ हयश्च कृष्णनिर्मितो दिनेन लक्षयोजनं ॥ क्षमो हि गंतुमंजसा दिनाश्वमेधसिद्धये ॥ १४ ॥ पराशरात्मजो हरिर्हरिं यदा त्वदीक्षयत् ॥ तदा ससाद हि द्विजस्तृणावहो रुराव च ॥१५॥ व्रजंति जन्मनो नु मे सदा सुता अदृश्यताम् ॥ इतीरितोर्जुनोब्रवीदहं हि यामि ते सुतान् ॥ १६ ॥ सकृष्णरामकार्ष्णिभिः सुता न मेत्र पालिताः ॥ क्व तेत्र शक्तिरित्यमुं जगाद सोर्जुनं द्विजः ॥ १७ ॥ तदा जगाद फल्गुनोसुरैर्विदूषितात्मना ॥ न विप्र तादृशोस्म्यहं यथैव केशवादयः ॥१८॥ मया जिता हि खांडवे सुरास्तथा सुरानहम् ॥ निवातवर्मनामकान्विजेष्य उत्तरत्र हि ॥ १९ ॥ उदीर्य चेति केशवं स ऊचिवान् व्रजाम्यहम् ॥ इतीरितोवदद्धरिस्तवात्र शक्यते नु किम् ॥ २० ॥ विलज्जमानमीक्ष्य तं जगाद केशवोरिहा ॥ व्रजेति स प्रतिश्रवं चकार सोप्यरक्षणे ॥ २१ ॥ वह्निं प्रवेक्ष्यं शक्तश्चेदित्युक्त्वा सर्वयादवैः ॥ ययौ न रामप्रद्युम्नावनिरुद्धं च केशवः ॥ न्ययोजयत्तत्साहाय्ये यशस्तेष्वभिरक्षितुम् ॥ २२ ॥ ॥

॥ १७ ॥ असुरैर्विदूषितात्मना विदूषितांतःकरणेनजगाद । यथायादृशाः ॥ १८ ॥ उत्तरत्रअग्रेनिवातवर्मनामकान् असुरान्विजेष्ये ॥ १९ ॥ इत्युदीर्यसमार्थःतव अत्ररक्षणेशक्यतेनुकिं शक्तिःस्यात्किंनवेतिवितर्कः ॥ २० ॥ विलज्जमानंकृतप्रतिज्ञाभवेद्दानवेतिशेषः । सोर्जुनोपिअरक्षणेविषयेरक्षणाभावविषये प्रतिश्रवंप्रतिज्ञांचकार ॥ २१ ॥ प्रतिज्ञांदर्शयति । वह्निमिति । अशक्तश्चेद्यादवैःसहययौ । तत्साहाय्येपार्थसाहाय्यार्थं रामादीन्न्ययोजयत् तेषुरामादिषु ॥ २२ ॥ ॥

तमनुराममनुसुतःप्रद्युम्नःअनिरुद्धः कार्ष्णिमनु प्रद्युम्नमनुप्रियोयोनिरुद्धःप्रद्युम्नात्स्वयंवरेआहृतायांरुग्मपुत्र्यांरुग्मवत्यां अजनिष्ठजातः । सःकृष्णस्यप्रियइतिसंबंधः ॥
॥ २३ ॥ रुग्मवतीपूर्वंकेत्यतआह । रतिरिति । यारुग्मवतीपूर्वंरतिरेव तस्यांरुग्मवत्यांअनिरुद्धोजातः । असौपूर्वमपिअनिरुद्धाख्यःकामनंदनः । तन्नाम्नःअनिरुद्ध
नाम्नःविष्णोरावेशयुक्तःयस्मात्तस्माद्बलादिगुणवान् ॥ २४ ॥ तस्मादात्मप्रियत्वात्तान्रामादीन्ऋतेन्ययोजयत् अन्यानितिशेषः । सूतिकालेप्रसूतिकाले ॥ २५ ॥
विषण्णःश्रांतःदुःखीबभूवेत्यर्थः ॥ २६ ॥ अधिक्षिप्तःतिरस्कृतःश्रियःपतिःकृष्णः ॥२७॥ विविक्षंतंप्रवेष्टुमिच्छंतंउदीचीमाशामुत्तरदिशं ॥२८॥ अंधंतमःविदार्यभित्त्वाअ

प्रियो हि नितरां रामः कृष्णस्यानु च तं सुतः ॥ अनिरुद्धः कार्ष्णिमनु प्रद्युम्नाद्योजनिष्ट हि ॥ रुग्मपुत्र्यां रुग्मवत्यामाहृतायां स्वयंवरे ॥ २३ ॥ रतिरेव हि या तस्यां जातोसौ कामनंदनः ॥ पूर्वमप्यनिरुद्धाख्यो विष्णोस्तन्नाम्न एव च ॥ आवेशयुक्तो बलवान् रूपवान्सर्वशास्त्रवित् ॥ २४ ॥ तस्मात्तांस्त्रीनृते कृष्णः पार्थसाहाय्यकारणात् ॥ न्ययोजयत्सूतिकाले ब्राह्मण्याःस च फल्गुनः ॥ २५ ॥ अस्त्रैश्चकार दिग्बंधं कुमारोथापि तत्क्षणात् ॥ अदर्शनं ययौ पार्थो विषण्णः सह यादवैः ॥ २६ ॥ अधिक्षिप्तो ब्राह्मणेन ययौ यत्र श्रियःपतिः ॥ २७ ॥ अग्निं विविक्षंतममुं निवार्य ययौ सविप्रः सहफल्गुनो हरिः ॥ आशामुदीचीं बृहता रथेन क्षणेन तीर्त्वैव च सप्तवारिधीन् ॥ २८ ॥ ददुश्च मार्गं गिरयोब्धयस्तथा विदार्य चक्रेण तमोंधमीशः ॥ घनोदकं चाप्यतितीर्य तत्र ददर्श धाम स्वमनंतवीर्यः ॥ २९ ॥ संस्थाप्य दूरे सरथं सविप्रं पार्थं स्वरूपे द्विचतुष्कबाहौ ॥ समस्तरत्नोज्ज्वलदिव्यभूषणे विवेश नित्योरुगुणार्णवे प्रभुः ३० ॥ सहस्रमूर्धन्युरुशेषभोग आसीनरूपेऽमितसूर्यदीधितौ ॥ रमासहाये तडिदुज्ज्वलांबरे मुक्तैर्विरिंचादिभिरर्चिते सदा ॥ ३१ ॥ ॥ ॥ ॥ ॥ ॥

तितीर्यतीर्त्वा स्वंधामअनंतासनम् ॥२९॥ दूरेसरथंसविप्रंपार्थंसंस्थाप्य मुक्तस्थानंप्रवेष्टुमयोग्यत्वात्संस्थापयामासेतिभावः । स्वरूपेस्वमूलरूपेविवेश । स्वरूपंविशिनष्टि ।
द्विचतुष्केति । द्विचतुष्कबाहौद्वाभ्यांगुणितंचतुष्कंबाहवोयस्यतत्तथा । तस्मिन्समस्तरत्नैःउज्ज्वलानिदिव्यानिभूषणानियस्यतत्तथा । तस्मिन्नित्यैरुरुभिर्गुणैरर्णवइवतथा
तस्मिन् ॥ ३० ॥ सहस्रंमूर्धानोयस्यससहस्रमूर्धातस्मिन् उरुश्चासौशेषभोगश्चतथातस्मिन् आसीनंरूपंयस्यतत्तथातस्मिन् अमितसूर्याणांदीधितिरिवदीधितिर्यस्यतत्तथा
तस्मिन् रमायाःसहाये तडिद्वत्उज्ज्वलेअंबरेयस्यतत्तथा । तस्मिन्मुक्तैर्विरिंचादिभिःसदाअर्चिते ॥ ३१ ॥ ॥ ॥

ईश्वरःकृष्णःएकरूपेणस्वरूपैक्येनमुहूर्तंस्थित्वा तेविप्रकुमाराःपूर्वंसुनंदनंदादयोवैष्णवाःविष्णुसंबंधिनःपार्षदाःभूमितलेप्रजाताः ॥ ३२ ॥ तान्पार्षदान्किमर्थमनयदित्य तआह । दर्पमिति । हरेर्महतीप्रीतिरर्जुनेअस्ति । यतःअतःसकृष्णःएनंअर्जुनंसंशिक्षयामास बोधयामासेत्यर्थः॥ ३ ३॥लक्षादधिकाइतिअधिलक्षाःअधिलक्षाश्चतेसूर्याश्चे तिसूर्याधिकलक्षाःतेषांदीधितिरिवदीधितिर्यस्यतत्तथा तस्मात् लक्षाधिकसूर्याणांप्रकाशवत् प्रकाशवतः अधिकंचतत्लक्षंचतथासूर्याणामधिकलक्षंवा । अप्राकृतात्चेतनप्रकृ तिस्वरूपात्सदनात् निःसृत्यनिर्गत्यसपार्थविप्रःपार्थविप्राभ्यांसहितःद्वारकामगात् । द्विजायसुतान्चतुःसंख्याकान्ददौ । तदुक्तंहरिवंशे । चतुरोबालकान् गृह्यब्राह्मण

स्थित्वैकरूपेण मुहूर्तमीश्वरो विनिर्ययौ विप्रसुतान् प्रगृह्य ॥ सुनंदनंदादय एव पार्षदास्ते वैष्णवा भूमितले प्र जाताः ॥ ३२ ॥ दर्पं निहंतुं हरिरर्जुनस्य समानयद्विप्रसुतान्परेशः ॥ प्रीतिर्महत्येव यतोर्जुने हरेः संशिक्षयामास ततः स एनम् ॥ ३३ ॥ अप्राकृतात्सदनाद्वासुदेवो निःसृत्य सूर्याधिकलक्षदीधितेः ॥ रथं समारुह्य सपार्थविप्रः अ गात्सुतांश्चैव ददौ द्विजाय ॥ ३४ ॥ लोकशिक्षार्थमेवासौ प्रायश्चित्तं च चालने ॥ चक्रे सार्धमुहूर्तेन समागम्य पुनर्मखम् ॥ ३५ ॥ ब्रह्मादीनागतांश्चैव सदा स्वपरिचारकान् ॥ पूजयित्वाभ्यनुज्ञाय ब्राह्मणानभ्यपूजयत् ॥ ३६ ॥ सस्नाववभृथं कृष्णः सदारः स सुहृज्जनः ॥ आयांतं द्वारकां कृष्णं दंतवक्रो रुरोध ह ॥ ३७ ॥ जघान गद या कृष्णस्तत्क्षणात्सविदूरथम् ॥ विदूरथस्तमोगच्छद्दंतवक्रे च योऽसुरः ॥ ३८ ॥ ॥ ॥

स्यात्मजांस्तथा । प्रददौब्राह्मणायाशुपुत्रान्सर्वान्जनार्दनः । त्रयःपूर्वंहतायेचसद्योजातश्चबालकइतिच ॥ ३४ ॥ असौकृष्णःसार्धमुहूर्तेनअर्धमुहूर्तेनसहितैकमुहूर्तेन घटिकात्रयेणेत्यर्थः । मुहूर्तमल्पकालेस्याद्घटिकाद्वितयेपिचेतिशब्दार्णवे । समागत्यद्वारकामितिशेषः । लौकिकशिक्षार्थमेव नतुप्रत्यवायपरिहारार्थं । चालनेमखंहित्वा अन्यत्रगमनविषयेप्रायश्चित्तंचक्रेपुनःमखंचचक्रे ॥ ३५ ॥ स्वपरिचारकान्स्वसेवकान् अभ्यनुज्ञायअनुज्ञांदत्वा ॥ ३६ ॥ आयांतंस्नात्वेतिशेषः ॥ ३७ ॥ सविदूरथं विदूरथाख्यभ्रात्रासहवर्तमानंदंतवक्रंविदूरथःतमःअगच्छत् । दंतवक्रेयःअसुरःअभूत्सोपितमोगच्छदितिसंबंधः । भ्रातरंनिहतंदृष्ट्वादंतवक्रंविदूरथमितिभागवते ॥ ३८ ॥

पार्षदोविजयःहरिंकृष्णमेव ॥ ३९ ॥ अस्मात्कृष्णात्स्वरूपतः विजयरूपेणनिःसृत्यबहिर्निर्गत्य स्वरूपेणस्वस्यरूपंयस्यसतथा । तेनद्वारपेणद्वारपालकविजयेन एकीभावंऐक्यंगमिष्यति ॥ ४० ॥ ततःदंतवक्रवधानंतरं रमापतिःकृष्णःपुरीमेत्य दृष्टमेतत्किमितितेनपार्थेनपृष्टःसन् फल्गुनंबोधयामास ॥ ४१ ॥ अयंद्वीपःजंबुद्वीपःसागरश्चलवणसमुद्रःएतौलक्षयोजनविस्तृतौविशालौ तदन्येताभ्यांजंबूद्वीपलवणसागराभ्यांअन्येप्लक्षादयःषट्द्वीपाःइक्षुसुरासमुद्रादिषट्समुद्राः क्रमेणैवद्विगुणेनोत्तरोत्तराः प्लक्षात्शाल्मलःइक्षुसमुद्रात्सुरासमुद्रःअनेनप्रकारेणउत्तरोत्तरंविस्तीर्णाइत्यर्थः ॥४२॥ अंत्यात्शुद्धोदकाख्यसागरात् परतः अध्यर्धंस्थलं अध्यर्धंअर्धेनअधिकं पूर्वोक्तचतुःषष्टिलक्षयोजनानामर्धेनद्वात्रिंशल्लक्षयोजनपरिमाणेन अधिकंचतुःषष्टिलक्षयोजनपरिमाणंस्थलंहैमंसुवर्णमयंषण्णवतिलक्षयोजनविस्तीर्णंहैमस्थलमित्यर्थः। बाह्यतः बहिर्भागेवज्रलेपकंवज्राख्यरत्नसंबंधिहैमस्थलंबाह्यतःरत्नप्रचुरमित्यर्थः । चतुःपंचाशल्लक्षाधिककोटिद्वययोजनसंख्याकाःसर्वेपिद्वीपसमुद्राःषण्णवतिलक्षयोजनविस्ती

हरेश्च पार्षदः क्षिप्रं हरिमेव समाश्रितः ॥ ३९ ॥ कृष्णे प्राप्ते स्वलोकं च निःसृत्यास्मात्स्वरूपतः ॥ एकीभावं स्वरूपेण द्वारपेण गमिष्यति ॥ ४० ॥ ततः कृष्णः पुरीमेत्य बोधयामास फल्गुनम् ॥ किमेतद्दृष्टमित्येव तेन पृष्टो रमापतिः ॥ ४१ ॥ अयं द्वीपः सागरश्च लक्षयोजनविस्तृतौ ॥ तदन्ये तु क्रमेणैव द्विगुणेनोत्तरोत्तराः ॥ ४२ ॥ अंत्याध्यर्धंस्थलं हैमं बाह्यतो वज्रलेपकम् ॥ एतत्सर्वं लोकनाम ह्येतस्माद्द्विगुणं तमः ॥ ४३ ॥ अंधं यत्र पतंत्युग्रा मिथ्याज्ञानपरायणाः ॥ घनोदकं तद्द्विगुणं तदंते धाम मामकम् ॥ ४४ ॥ यत्तदृष्टं त्वया पार्थ तत्र मुक्तै रजादिभिः ॥ सेव्यमानः स्थितो नित्यं सर्वैः परमपूरुषः ॥ ४५ ॥ लोकालोकप्रदेशस्तु पंचाशल्लक्षविस्ततः ॥ स पंचाशत्सहस्रश्च तस्यापि गणनं तथा ॥ ४६ ॥ ॥ ॥ ॥ ॥

र्णंहैमस्थलंएवंसर्वंमिलित्वासार्धकोटित्रयपरिमाणमुक्तं । एतत्सर्वंतमसोर्वाक्अयंद्वीपइत्याद्युक्तं । लोकनामलोकसंज्ञकंसर्वंहिप्रसिद्धं पुराणादाविति शेषः । एतस्माल्लोकशब्दवाच्यात् द्विगुणंअंधंतमःसप्तकोटियोजनपरिमाणंविस्तीर्णंअंधंतमः ॥ ४३ ॥ यत्रअंधेतमसितद्द्विगुणं तमसोद्विगुणंद्विलक्षन्यूनचतुर्दशकोटियोजनविस्तीर्णंघनोदकं । हेपार्थ तदंतेघनोदकस्यांते अंत्यप्रदेशइत्यर्थः । त्वयायत्दृष्टंतत्मामकंमदीयंधाम अनंतासनाख्यंस्थानम् ॥४४॥ तत्रधाम्निसेव्यमानःपरमपुरुषःस्थितः अहमिति शेषः ॥ ४५ ॥ हैमस्थलतमसोर्मध्यस्थलपरिमाणंपूर्वमनुक्तत्वात्तदाह । लोकालोकेति लोकालोकप्रदेशस्तुसपंचाशत्सहस्रःपंचाशत्सहस्रयोजनैःसहितःपंचाशल्लक्षविस्तृतःपंचाशल्लक्षयोजनैर्विस्तीर्णःविशालःअपितथापि पंचाशल्लक्षादुपरिपंचाशत्सहस्रयोजनपरिमितत्वेपि तस्यलोकालोकपर्वतस्य गणनंपरिगणनं तथापंचाशल्लक्षप

रिमितिइतिभागवतादौश्रूयतइतिशेषः। भागवतादौअधिकपरिमाणस्य ऊनपरिमाणतयागणनंकथंघटतइतिचेत् । दशयोजनात्किंचिदधिकस्यापि ग्रामादेर्दशयोजनादिव्य वहारस्य लोकेदर्शनात्पंचाशल्लक्षविस्तृतइतिघटते । अस्यतुतात्पर्यग्रंथत्वाद्यथावस्तुकथनमेवकृतामितिभावः ॥ ४६ ॥ जंबूद्वीपस्यमध्यएवमेरुपर्वतास्तिष्ठति। मेरोःसका शाच्चतुर्दिक्षु जंबूद्वीपःपंचाशत्सहस्रयोजनविस्तीर्णःअतएवमेरुपर्वतादंधंतमःपर्यंतंलोकालोकपर्वतपरिमाणेनसहकोटिचतुष्टयंभवति। लक्षन्यूनंकोटिसप्तकपरिमाणं तमः द्विलक्षन्यूनंचतुर्दशकोटिपरिमाणंघनोदकं। त्रिलक्षपरिमाणंअनंतासनं एवंमेरुपर्वतमारभ्यअंडपर्यंतंपंचविंशत्कोट्योभवंति तदेवाह। योजनानामिति ॥ ४७ ॥ अंडाव रणमाह । अबग्नीति । अप्जलं अग्निःतेजःईरोवायुःनभःआकाशःअहंकृत्अहंकारतत्त्वं महत्तत्त्वंतमोरजःसत्वमितिगुणाःएतैर्नवावरणैःक्रमात् दशोत्तरैःदशगुणपरि माणाधिकैःएतद्ब्रह्मांडं आवृतंआवृतत्वेनयुक्तमित्यर्थः। ब्रह्मांडांतर्गतपरिमाणात् द्विगुणपरिमाणमंडखर्परंसैवावरणभूताभूरित्युच्यते । भूमेर्दशगुणाआपःअद्भ्योदशगु णंतेजःइत्याद्यवगंतव्यं। तदुक्तंमात्स्ये। शतार्धकोटिविस्तारापृथिवीकृत्स्नशःस्मृता। लोकविस्तारमात्रंतुपृथिव्यर्धंतुबाह्यतः। अंडाद्बहिःसमंतात्तुउदकेनावृतंमहत् । भू

**योजनानां पंचविंशत्कोटयो मेरुपर्वतात् ॥ चतसृष्वपि दिक्षूर्ध्वमधश्चांडं प्रकीर्तितम् ॥ ४७ ॥ अबग्नीरनभोहंकृ न्महत्तत्त्वगुणत्रयैः ॥ क्रमाद्दशगुणैरेतदावृतं परतस्ततः ॥ ४८ ॥ ॥ ॥ ॥ ॥**

मेर्दशगुणाह्यापःसमंतात्प्लावयन्महीं। अद्भ्योदशगुणश्चाग्निःसर्वतोधारयत्यपइत्यादि । यद्वा दशलक्षयोजनपरिमितंखर्परंभिन्नं । तद्भिन्नातदावरणभूताशतकोटिविस्तृ ताभूस्ततोदशगुणाआपइत्यादिज्ञेयं तदुक्तंवाराहे। दशलक्षंयोजनानांकटाहघनतास्मृतेति। तृतीयस्कंधतात्पर्येपृथिवीआवरणत्वेनास्तीत्युक्तं। अत्रकथनेतुदशगुणत्वाभा वात्। तथाहि पृथिवीविशेषइत्याहुःशब्दादीनांबहुत्वतः । सासूक्ष्मात्वावृणोत्यंडंद्विगुणात्तुदशोत्तरा। अबादयःप्रकृत्यंताइति । तदेवोक्तंतत्त्वसंख्याने। असंसृष्टंमहानहं। बुद्धिर्मनःखानिदशमात्राभूतानिपंचच। संसृष्टमंडंतद्ब्रह्मसमस्तंपरिकीर्तितमिति। प्राकृताद्यंशैरुपचयमात्रतद्राहित्येऽसंसृष्टसंसृष्टशब्दार्थत्वेनाभिमते।तदर्थं विशेषाविशे षाभ्यांआधाराधेयभावंचाह। मात्स्ये। महांस्ततोह्यनंतेनाव्यक्तेनैवतुधार्यते। एवंपरस्परोत्पन्नाधार्यंतेचपरस्परं। आधाराधेयभावेनविकारास्तेविकारिणः। पृथ्व्यादयोवि कारास्तेपरिच्छिन्नाःपरस्परं। मत्प्रविष्टाश्चतेन्योन्यंतस्मात्तेस्थिरतांगताः। आसंस्तेह्यविशेषास्तुविशेषान्योन्यवेशनात्। पृथ्व्यादयस्तुब्राह्मांतःपरिच्छिन्नास्तुतत्रताइति। अतएवखर्परपरिमाणमागमादावनेकधोक्तं। ततःपरतःसावरणब्रह्मांडाद्बहिरित्यर्थः ॥ ४८ ॥ ॥ ॥ ॥ ॥

सर्वगःसर्वत्रअंतर्यामित्वेनविद्यमानःअनंतःकालतोगुणतश्चनाशरहितःअनंतरूपःअसंख्यातरूपःनिरंतरःअनंतरूपत्वेपि परस्पररूपभेदरहितः ४९ पुनश्चपुरुषसूक्तप्रतिपाद्यरूपमाह । अनंतशीर्षेत्यादिना । अनंतगुणाःमाहात्म्यंयस्यसतथा । चिदानंदौशरीरंयस्यसतथा । स्वार्थेकप्रत्ययः । ईदृशोहंव्याप्तःद्वीपादिचेतनाचेतनात्मकंसर्वं व्याप्तःसन् तिष्ठामीत्यर्थः । यत्पर्वतादिकंदृष्टंतत्सर्वमहमेवेतिहरिवंशोक्तार्थस्यतात्पर्यं । व्याप्तोहमित्यादिना आहेतिभावः ॥ ५० ॥ यदर्थमयंद्वीपइत्याद्युक्तंतदाह । मद्दशाइति । सर्वेलोकास्तद्धर्माश्चत्वंचअन्येचजीवसंघाश्चमद्दशाएव हेधनंजय बलंविजयश्च अखिलगुणाश्च मत्प्रसादादेवसर्वेषांभवंतीतिशेषः ॥ ५१ ॥ यस्मात्तस्मात् सर्वस्यमदधीनत्वात् । हेअनघत्वयाविस्मयःत्वद्विषयेअन्यविषयेवाश्चर्यबुद्धिर्नकार्या । दर्पश्चअहंजितवानस्मि जेष्येचेत्यहंकारश्चनकार्यः । पुनस्तंशिक्षयति । मन्मनाइत्या

व्याप्तोहं सर्वगोनंतोनंतरूपो निरंतरः ॥ ४९ ॥ अनंतशीर्षोनंताक्षोनंतपादकरांबुजः॥ अनंतगुणमाहात्म्यश्चिदानंदशरीरकः ॥ ५० ॥ मद्दशा एव सर्वेपि त्वं चान्ये च धनंजय ॥ मत्प्रसादाद्बलं चैव विजयश्चाखिला गुणाः ॥ ५१ ॥ तस्मान्न विस्मयः कार्यो न दर्पश्च त्वयानघ ॥ मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ॥५२॥ मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोसि मे ॥ इत्युक्तः प्रणिपत्यैनं क्षमस्वेत्याह फल्गुनः ॥ ५३ ॥ उषित्वा कतिचिन्मासान्ययुः सर्वेपि पांडवाः ॥ अनुज्ञाताः केशवेन भक्तिनम्रधियोच्युते ॥ संभाविताः केशवेन सौहार्देनाधिकेन च ॥ ५४ ॥ ततः कदाचित्प्रवरे सभातले धर्मात्मजो राजभिर्भ्रातृभिश्च ॥ वृतो निशम्यैव सभाः सुराणां यथास्थिता नारदमन्वपृच्छत् ॥५५॥ अंतरिक्षं त्वया प्रोक्तं लक्षयोजनमुच्छ्रितं॥अर्धकोट्युच्छ्रितः स्वर्गो विमानावलिसंकुलः ५६

दिना । यतःमेप्रियोसिअतस्तेतुभ्यंसत्यंप्रतिजाने प्रतिज्ञांकरोमीत्यर्थः ॥ ५२ ॥ ५३ ॥ उषित्वास्थित्वाययुः इंद्रप्रस्थमितिशेषः । अधिकेनसौहार्देनस्नेहेनकेशवेनसंभाविताःसंमानिताःपांडवाः ॥ ५४ ॥ राजसूयकरणंवक्ष्यन् तदुपयुक्तप्रस्तावांतरं उपचक्रमे । ततइत्यादिना । धर्मात्मजःयथास्थिताःविस्तारादिनायथावत्स्थिताःसुराणांसभाःनिशम्य नारदादितिशेषः अनुक्तानुवादपूर्वकंनारदंहरिश्चंद्रःऐंद्रसभातलंकथंप्राप्तःअस्मत्पितापांडुःकथंनप्राप्तइत्यपृच्छत् । इत्युत्तरेणसंबंधः ॥ ५५ ॥ अंतरिक्षंत्वयालक्षयोजनमुच्छ्रितं लक्षयोजनैरुच्छ्रितं उन्नतंभूम्याइतिशेषः । अर्धकोट्युच्छ्रितःअत्रापिभूम्याइतियोज्यं ॥ ५६ ॥

भुवःअंतरिक्षलोकःस्वर्गश्चोभावपियोजनानांकोट्याप्रविस्तृतौ कोटियोजनविस्तीर्णौ । महर्जनःतपश्चत्रयोलोकाःक्रमात्अध्यर्धयोजनाःस्वर्गलोकपरिमाणात् पंचविंशल्लक्षयोजनपरिमाणाधिकोमहर्लोकःपंचसप्ततिलक्षयोजनोच्छ्रितोमहर्लोकः स्वर्गादितिशेषः । एवंमहर्लोकपरिमाणात् अर्धाधिकोजनोलोकःअनेनक्रमेणतपोलोकः ॥ ५७ ॥ समस्तशःमहदादिलोकत्रयाणांपंचाशत्कोटिविस्तारउक्तइतिशेषः । महदादयःपंचाशत्कोटियोजनविस्तीर्णाइत्यर्थः । एतेअंतरिक्षादयोलोकाःमिलिताःयुक्ताःसंतःयावंतःयावत्परिमाणाःतत्परिमाणःतेषामंतरिक्षादिपंचलोकानांप्रमाणःपरिमाणोच्छ्रयः ॥ ५८ ॥ सत्याख्यःसत्यलोकउदीरितःयत्रसत्यलोकेततःसत्यलोकात् सनातनःशश्वदेकप्रकारः ॥ ५९ ॥ सर्वेभुवर्लोकादिषट्लोकाःसुखेविषयेअनंतजनसंपूर्णाअपिहरेरिच्छयाअवकाशवंतःदिव्यत्वात् कदाचननपूर्यंतेपूर्णानभवंति । उज्ज्वलाः

भुवः स्वर्गश्च कोट्यैव योजनानां प्रविस्तृतौ ॥ महर्जनस्तपश्चैवं क्रमादध्यर्धयोजनाः ॥ ५७ ॥ पंचाशत्कोटिविस्तारो योजनानां समस्तशः ॥ यावंत एते मिलितास्तत्प्रमाण उदीरितः ॥ ५८ ॥ सत्याख्यो ब्रह्मलोकस्तु यत्र ब्रह्मा विराजते ॥ ततश्च द्विगुणः प्रोक्तो विष्णुलोकः सनातनः ॥ ५९ ॥ उत्तरोत्तरतः सर्वे सुखे शतगुणोत्तराः ॥ अनंतजनसंपूर्णा अपि ते हीच्छया हरेः ॥ ६० ॥ अवकाशवंतो दिव्यत्वात्पूर्यंते न कदाचन ॥ सर्वकामसुखैः पूर्णा दिव्यस्त्रीपुरुषोज्ज्वलाः ॥६१॥ दिव्यरत्नसमाकीर्णं तथा पातालसप्तकम् ॥ अधस्ताच्छेषदेवेन बलिना समधिष्ठितम् ॥ ६२ ॥ कामभोगसमायुक्ता बहुवर्षसहस्रिणः ॥ सप्तद्वीपेषु पुरुषा नार्यश्चोक्ताः सुरूपिणः ॥ ६३ ॥ एषां च सर्वलोकानां धाता नारायणः परः ॥ विष्णुलोकस्थितो मुक्तैः सदा सर्वैरुपास्यते ॥ ६४ ॥ सेवका ब्रह्मणश्चैव वेदा देवाश्च सर्वशः ॥ शक्रस्य मुनयः सर्वे हरिश्चंद्रश्च भूमिपः ॥ ६५ ॥ ॥ ॥ ॥

प्रकाशवंतः ॥ ६० ॥ तथायथाअंतरिक्षादयउक्तास्तथापातालसप्तकं त्वयोक्तमितिशेषः । अधस्तात्पातालसप्तकस्येतिशेषः ॥ शेषदेवेनसमधिष्ठितंशेषस्यसर्वलोकधारणेकशक्तिरित्यतआह । बलिनेति । बलमस्यास्तीतिबलीतेनबलिना ॥ ६१ ॥ ६२ ॥ सप्तद्वीपेषुअधस्थसप्तलोकेषु । नतुजंब्वादिद्वीपेषुजंबुद्वीपेयुगानुसारेणआयुर्भोगाद्यल्पत्वात् । कामभोगसमायुक्ताः इच्छाभोगसमायुक्ताःवर्षाणांसहस्राणिवर्षसहस्राणिबहूनिवर्षसहस्राणिविद्यंतेयेषांतेतथा बहुवर्षसहस्रायुषइत्यर्थः । सुरूपिणःपुरुषानार्यश्चोक्ताः ॥ ६३ ॥ एषांप्राणिनांसर्वलोकानांचधाताधारकःपोषकःविष्णुलोकस्थितःसएवउपास्यतेपूज्यते ॥ ६४ ॥ वेदाःवेदाभिमानिनःसर्वशःसर्वेदेवाश्च मुनयःहरिश्चंद्रश्चशक्रस्यसेवकाः ॥ ६५ ॥ ॥ ॥ ॥ ॥

अखिलाअपिराजानःअस्मत्पितापांडुश्वयमस्यैवानुगाः ॥ ६६ ॥ रामोरघुपतिः ॥ ६७ ॥ प्रादुर्भावाःहरेरवताररूपाणि तत्रवरुणसभातलेमत्स्याकृतिःमीनरूपः ॥६८॥ गंधर्वाःधनदस्यापिअनुगाः ॥ ६९ ॥ हेअनघदोषरहितनारद इत्यादिपूर्वोक्तंसर्वरत्नमयानिस्थलानियेषुतेतथातान् प्रभाषत यत्त्वयोक्तं ॥ ७० ॥ तत्रतथापिमेभूयान्संशयोभवतीतिशेषः । संशयंदर्शयति । हरिश्चंद्रेति । हेमुनेहरिश्चंद्रःऐंद्रंसभातलंकथंप्राप्तःअस्मत्पितापांडुःकथंनप्राप्तः ॥ ७१ ॥ इत्युक्तोनारदःप्राह । धर्मात्मजमितिशेषः ।

अखिला अपि राजानः पांडुश्चास्मत्पिता मुने ॥ यमस्यैवानुगाः प्रोक्ता राजर्भिस्तैर्यमेन च ॥ ६६ ॥ उपास्यमानो भगवान् रामो यमसभातले ॥ ६७ ॥ उक्त इंद्रेण चोपास्यो वामनात्मा जनार्दनः ॥ प्रादुर्भावाश्च निखिला ब्रह्मणोपासिताः सदा ॥ वरुणस्यानुगा नागास्तत्र मत्स्याकृतिर्हरिः ॥ ६८ ॥ गंधर्वा धनदस्यापि तत्र कल्की हरिः प्रभुः ॥ रुद्रस्योग्राणि भूतानि नृसिंहात्मा शिवेन च ॥ ६९ ॥ उपास्यते सदा विष्णुरित्याद्युक्तं त्वया नघ ॥ सर्वरत्नस्थलान् दिव्यान् देवलोकान्प्रभाषत ॥ ७० ॥ तत्र मे संशयो भूयान्हरिश्चंद्रः कथं नृपः ॥ ऐंद्रं सभातलं प्राप्तः पांडुर्नास्मत्पिता मुने ॥ ७१ ॥ इत्युक्तो नारदः प्राह राजसूयकृतोन्नतिम् ॥ हरिश्चंद्रस्य तां दृष्ट्वा पिता मां प्राह पांडव ॥ ७२ ॥ करोतु राजसूयं मे पुत्रो ज्येष्ठोनुजार्चितः ॥ पालितो वासुदेवेन किं तस्यासाध्यमत्र हि ॥ ७३ ॥ एतच्छ्रुत्वा धर्मसुतो भ्रातृभिः सहितो वशी ॥ अवाप्तिं राजसूयस्य मंत्रयामास धर्मवित् ॥ ७४ ॥ सुकार्यमेतदित्यलं निशम्य सोदरोदितम् ॥ अयातयत्स्वसारथिं स केशवाय भूपतिः ॥ ७५ ॥

किमिति । पितातवेतिशेषः । पांडुःहरिश्चंद्रस्यराजसूयकृतोन्नतिंराजसूयमखेनकृतां उन्नतिंइंद्रलोकप्राप्तिलक्षणोत्कर्षंदृष्ट्वा मांप्रतिआह ॥ ७२ ॥ किमिति । ज्येष्ठपुत्रःराजसूयंकरोत्विति राजसूयकरणेसामर्थ्यंदर्शयति अनुजार्चितइत्यादिना । अत्रराजसूयकरणेवशीसर्ववशेतिष्ठतीत्यर्थः । वशविषयेअनुजार्चितत्वादितिहेतुर्ज्ञातव्यः ॥ ७३ ॥ ७४ ॥ अयातयत्प्रेषयामास ॥ ७५ ॥ ॥ ॥ ॥ ॥

तदैवतस्मिन्नेवकालेकेशवस्ययाःस्त्रियःशताधिकषोडशसहस्रस्त्रीषुमध्ये राजकुलोत्पन्नायास्त्रियःतदीयतातकैःतासांतातकैःजनकैःसहोदरैश्च तासामितिशेषः । यापितःप्रेषितः काश्चिद्गंधर्वादिषुजातास्तत्पितृव्यावृत्त्यर्थंयाइत्युक्तं ॥ ७६ ॥ तेविवाहबांधवाःश्वशुरायाःमागधेनगिरौ पर्वतलिंगेरोधिताः ॥ ७७ ॥ हेप्रभोत्वयिस्थितेपि प्रभौत्वयिसत्यपीत्यर्थः । नृपायुतद्वयेननृपाणामयुतद्वयेन अष्टाविंशकैःशतैःअष्टशताधिकाद्वाविंशतिसहस्रसंख्याकैःनृपैरित्यर्थः । त्रिलोचनंयियक्षुःयष्टुमिच्छुः सआस्तइतिशेषः ॥ ७८ ॥ मागधेश्वरंनिहत्य तान्नृपान्विमोचयस्व । अवैदिकंवेदोक्तकर्मबाह्यं विलुंपनाशय ॥ ७९ ॥ निशाम्यदृष्ट्वातद्वचःसारथिवचः ॥ ८० ॥ मखायमखार्थं ॥ ८१ ॥ जगत्सुखकरंवचोदर्शयति । क्रतुरित्यादिना । यथाविधानतःविधानमनतिक्रम्यकृतःक्रतुःयागः तत्पदेब्रह्मपदेसुयोग्यमेवअधिकारयोग्यमेव पारमेष्ठ्यकंपदं

तदैव केशवस्ययाः स्त्रियस्तदीयतातकैः ॥ सहोदरैश्च यापितः स दूत आप माधवम् ॥ ७६ ॥ प्रणम्य केशवं वचः स आह मागधेन ते ॥ विवाहबांधवारणे विजित्य रोधिता गिरौ ॥ ७७ ॥ नृपायुतद्वयेन सोऽष्टविंशकैः शतैरपि॥ यियक्षुरुग्ररूपिणं त्रिलोचनं त्वयि स्थिते ॥ ७८ ॥ विमोचयस्व तान्प्रभो निहत्य मागधेश्वरम् ॥ अवैदिकं मखं च तं विलुंप धर्मगुप्तये ॥ ७९ ॥ इतीरितेथ सारथिं निशाम्य धर्मजस्य च ॥ निशम्य तद्वचस्तदा जगाम पांडवालयम् ॥ ८० ॥ स पांडवैः समर्चितो मखाय धर्मजेन च ॥ प्रपृष्ट आह माधवोवचो जगत्सुखावहम् ॥८१॥ क्रतुर्यथा विधानतः कृतो हि पारमेष्ठ्यकं ॥ पदं नयेत तत्पदे सुयोग्यमेव नान्यथा ॥ ८२ ॥ अयोग्यकान्महापदे विधातुरेष हि क्रतुः ॥ समानयोग्यता गणात्करोति मुक्तिगंवरम् ॥ ८३ ॥ पुरातिमुक्तितोधिकं स्वजातितः करोति च ॥ अतस्त्रिशंकुपुत्रको नृपानतीत्य वर्तते ॥ ८५ ॥ ॥ ॥ ॥

नयेत अन्यथाअयोग्यंनप्रापयेदित्यर्थः ॥ ८२ ॥ विधातृपदायोग्यैःकृतस्यक्रतोःफलमाह । अयोग्यकान्महापदइति । अत्रअयोग्यकादितिपदच्छेदः । एषःमहाक्रतुःविधातुःमहापदेअयोग्यकात् समानयोग्यतागणात्समानयोग्यतया युक्तश्चासौगणश्चतथातास्मिन् स्वस्यसमानयोग्यगणादित्यर्थः । स्वकर्तारंपुरुषंमुक्तिगंमुक्तौवरंआविर्भूतानंदाधिक्ययुक्तंकरोति । क्वचिदयोग्यकमिति द्वितीयैकवचनांतःपाठः ॥ ८३ ॥ मुक्तितःपुरामुक्तिप्राप्तेःपूर्वंस्वजातितःस्वसमानयोग्यतागणात् अधिकंउत्तमलोकंप्राप्तं करोति यतःअतःत्रिशंकुपुत्रःहरिश्चंद्रःनृपान्स्वसमानयोग्यतायुक्तान् अतीत्यअतिक्रम्यवर्तते । यमलोकस्थान्नृपानतिक्रम्यस्वर्गेतिष्ठतीतिभावः ॥ ८४ ॥ ॥

राजसूयतःराजसूयंविनात्रिशंकुजाद्दरत्वमाप्तुं अद्यनशक्ष्यतिसमर्थोनभविष्यति ॥ ८५ ॥ समर्थःकुतोनभविष्यतीत्यतआह । तपइति । नतूत्थितःअभ्युत्थाननचकारेत्य र्थः । सइंद्रःशशाप ॥ ८६ ॥ किमिति । मानुषींतनुंव्रजस्व ततःमनुष्यदेहप्राप्त्यनंतरं मृतःसन् पुनर्दिवंनगच्छासिइतिक्रियाध्याहारः । गतोपिपुत्रकगुणादिकारणवि शेषाद्दिवंगतोपिअत्रदिविस्वकांतनुं मरुत्स्वरूपंपुनःप्रवेष्टुंनेशसेनसमर्थोभविष्यसि । तदास्वस्वरूपप्रवेशाभावदशायांत्वत्त्वत्तःत्रिशंकुजःअधिकोभविष्यतीति ॥ ८७ ॥ अथशापप्राप्त्यनंतरं क्षमापितोवासवोजगाद । किमिति । राजसूयतःराजसूयकरणात् भवान्त्रिशंकुजाधिकःसन् स्वकांतनुंमूलस्वरूपंअवाप्स्यतिप्राप्स्यति । यतः ॥ ८८ ॥ अतःतेत्वयासुकार्यएवविधिपूर्वकंकर्तव्यएव अमुनाराजसूयेन भवद्भिरपियुष्माभिरपिअखिलास्वयोग्यतासंपूर्णयोग्यतावाप्यते ॥ ८९ ॥ वायुवाहनोवायुप्रणे

**सुरांशकोपि ते पिता विना हि राजसूयतः ॥ न शक्ष्यति त्रिशंकुजाद्दरत्वमाप्तुमद्य तु ॥ ८५ ॥ तपश्चरन्समागते शचीपतौ पिता तव ॥ मरुद्गणोत्तमःपुरा नतूत्थितः शशाप सः॥८६॥ व्रजस्व मानुषीं तनुं ततो मृतः पुनर्दिवम् ॥ गतोपि च स्वकां तनुं प्रवेष्टुमत्र नेशसे ॥ ततोधिकस्त्रिशंकुजो भविष्यति त्वदित्यथ॥८७॥ क्षमापितश्च वासवो ज गाद राजसूयतः ॥ त्रिशंकुजाधिको भवानवाप्स्यसि स्वकांतनुम् ॥ ८८ ॥ अतः सुकार्य एव ते युधिष्ठिर क्रतूत्तमः ॥ भवद्भिरप्यवाप्यते स्वयोग्यतामुनाखिला॥८९॥उदीर्य चैवमीश्वरः क्रतोरमुष्य योग्यता ॥ वृकोदरे यतोखिला चतु र्मुखत्वयोग्यतः ॥९०॥ ततः सुपूर्णमस्य तत्फलं विधातुमंजसा ॥ जगाद वायुवाहनो वचो युधिष्ठिरं त्विदम् ॥९१॥ क्व राजसूय अद्य ते जरासुतेद्य जीवति ॥ जयेत्क एव तं युधा मृतो न योपि सीरिणा ॥ ९२ ॥ विरिंचशर्ववा क्यतः समस्तलोकजायिनि ॥ स्थिते तु ते जरासुते न सेत्स्यति क्रतूत्तमः ॥ ९३ ॥ ॥ ॥ ॥**

ताईश्वरःएवंपूर्वमुक्तमुदीर्ययुधिष्ठिरंप्रतितुपुनःइदंवक्ष्यमाणंवचोजगाद । किंकर्तुं अमुष्यक्रतोःराजसूयस्य अखिलायोग्यता मुख्याधिकारित्वं वृकोदरेतिष्ठतीतिशेषः । यतः मुख्याधिकारित्वेहेतुमाह । चतुर्मुखत्वेति । चतुर्मुखत्वयोग्यतः भाविचतुर्मुखपदाधिकारयोग्यत्वात् ततःअस्यभीमस्यसुपूर्णफलं ब्रह्मपदाधिकाररूपफलं अंज साविधातुं ॥ ९० ॥ ९१ ॥ कृष्णःकिमितिजगादेत्यतआह । क्वेति । कएवकःपुरुषःयुधायुद्धेनतंजयेत्नकोपीत्यर्थः । तत्कुतःयोमागधःसीरिणापिबलभद्रेणापिनमृतः नमारितः बलोपिहंतुंनसमर्थइतिभावः ॥ ९२ ॥ समस्तलोकजायिनिसर्वलोकजयनशीलेतेतवनसेत्स्यतिनासिध्यति ॥ ९३ ॥ ॥ ॥

क्रतोःसकाशात् मनोनिवर्तितं अमुनाक्रतुनाअलंपूर्णमित्यर्थः ॥ ९४ ॥ पुराभूभृतोबभूविरेबभूवुः । आधिराज्यंचक्रवर्तित्वंपदंनापिरेनप्रापुः प्रायइतिशेषः । यदाचकेच नचक्रवर्तिनःअभूवन् तदाईदृशाःजरासंधसदृशाःशत्रवोनवभूवुः ॥ ९५ ॥ अमुनायुधिष्ठिरेणचतुर्मुखस्यपदंवा ब्रह्मपदमपिप्रयत्नतः सुसाध्यमेवसम्यक्साधयितुंशक्य मेव ॥ ९६ ॥ निजानुभाववर्जिताःस्वरूपसामर्थ्यरहिताःउज्झिताःरहिताः महाप्रयत्नवर्जिताः पुरुषस्यकर्तव्यमहाप्रयत्नरहिताः जनाःउन्नतिंउत्कर्षंनजग्मुः ॥ ९७ ॥ मेस्थिरोनुभावएवनिश्चलसामर्थ्यमेव अस्तीतिशेषः अनुग्रहोत्ति भूतिंऐश्वर्यं ॥ ९८ ॥ अमुनावृकोदरेणइतीरितेसति हरिःप्रधानतःमुख्यतःसमुद्यमात् प्रधानयत्नात् यज्ञकारणेयज्ञकारणभूते वृकोदरेस्थितेसत्येव हिप्रसिद्धत्वेनेत्यर्थः । जगाद ॥ ९९ ॥ अथइदानींसमस्तसद्विरोधिनांबलं सर्वेअसुराःमागधबलाश्रयाइत्यर्थः । कले

इतीरिते रथांगिना जगाद धर्मनंदनः ॥ निवर्तितं मनः क्रतोरलं ममामुना प्रभो ॥ ९४ ॥ बभूविरे च भूभृतो न चाधिराज्यमापिरे ॥ यदा च चक्रवर्तिनस्तदेदृशा न शत्रवः ॥ ९५ ॥ इतीरितेमुनावदत्प्रधानमारुतात्मजः ॥ पदं चतुर्मुखस्य वा सुसाध्यमेव यत्नतः ॥ ९६ ॥ निजानुभाववर्जिता हरेरनुग्रहोज्झिताः ॥ महाप्रयत्नवर्जिता जनानजग्मुरुन्नतिम् ॥ ९७ ॥ स्थिरोनुभाव एव मे महाननुग्रहो हरेः ॥ प्रयत्नमेकमग्रतो निधाय भूतिमाप्नुमः ॥ ९८ ॥ इतीरितेमुना हरिः समुद्यमात्प्रधानतः ॥ स्थिते हि यज्ञकारणे वृकोदरे जगाद ह ॥ ९९ ॥ स एक एव पूरुषो जरासुतोद्य वर्तते ॥ समस्तसद्विरोधिनां बलं कलेरनंतरः ॥ १०० ॥ यथा सतां समाश्रयो यदुद्भवाः सतां गुणाः ॥ स एक एव तादृशस्त्वया विचिंत्य यात्यताम् ॥ १०१ ॥ यदि स्म तेन मागधो निहन्यते सतां जयः ॥ विपर्ययेण चासतामितिस्म विद्धिनान्यथा ॥ १०२ ॥ स पारमेष्ठ्यसत्पदं प्रयात्यसंशयं युधि ॥ य एव हंति मागधं स एव धर्मपालकः ॥ १०३ ॥ ॥ ॥ ॥

रनंतरःतमसिदुःखभोक्तृत्वइत्यर्थः ॥ १०० ॥ यथाजरासुतः तथासतांसमाश्रयःसतांगुणाःज्ञानभक्त्यादयोगुणाः यदुद्भवाःयस्माद्उद्भवोयेषांतेतथा भीमादुत्पन्नाइतिभावः। तादृशःसएकएवविचिंत्याविचार्ययात्यतांप्रेषणीयः ॥ १०१ ॥ तेनपुरुषेणविपर्ययेणजरासंधजयेन असतांअसुराणां जयइतिशेषः। इतिस्मविद्धि । हेभूप त्वमितिशेषः। अन्यथान प्रकारांतरंन ॥ १०२ ॥ यएवंहंतिसःअसंशयंयथाभवतितथासत्पदंप्रयाति । सएवधर्मपालकः वेदधर्मपालकइतिक्वचित्पाठः । वेदाश्चधर्माश्चवेदधर्माः। तेषांपालकः ॥ १०३ ॥ ॥ ॥ ॥ ॥ ॥

यःनिहंतिसएषःवैष्णवंजगत् विष्णुभक्तियुक्तमित्यर्थः । यतःसःशर्वपालितःशैवइत्यर्थः ॥ १०४ ॥ यएवशैवानांनायकंश्रेष्ठं सएषः वैष्णवाग्रणीःवैष्णवेषुमुख्यःभावसंयुते भीमएवजरासंधवधायप्रेषणीयइत्यभिप्रायगर्भितेअजेकृष्णेइतिवदतिउक्तवतिसति नृपःअबिभेत्सभययुक्तोभूदित्यर्थः ॥ १०५ ॥ मेमखेनालंपूर्णमित्यर्थः ॥ मखं नकरोमीतिभावः ॥ १०६ ॥ अहंचभीमफल्गुनौइतिवयंत्रयः व्रजामहेगच्छामः ॥ १०७ ॥ सेत्स्यतेसिध्यति ॥ १०८ ॥ शौरिणाकृष्णेनइतीरितेसति हरेःशूरसेनमंडलप्रहाणतःहरिकृतशूरसेनविषयपरित्यागान्निमित्तात् जरासुतस्यकृष्णादपिबलाधिक्यंमत्वा त्रसन्सधर्मनंदनोजगाद ॥ १०९ ॥ किमिति । भवंतएववयूयमपियस्य

निहंति मागधेश्वरं स एव वैष्णवं जगत् ॥ करोति शर्वपालितो यतः स बारुहद्रथः ॥ १०४ ॥ निहंति शैवनायकं य एव वैष्णवाग्रणीः ॥ इति स्म भावसंयुते वदत्यजे बिभेन्नृपः ॥१०५ ॥ युधिष्ठिरे ब्रुवत्यजं मखेन मे त्वलं त्विति ॥ तमाह मारुतात्मजो निहन्मिमागधं रणे ॥ १०६ ॥ इतीरिते वदद्धरिर्व्रजामहे वयं त्रयः ॥ अहं च भीमफल्गुनौ निहंतुमेव मागधम् ॥ वृकोदरेण हन्यते यदि स्म मागधाधिपः ॥ १०७ ॥ मखश्च सेत्स्यते ध्रुवं जगच्च ते वशे भवेत् ॥ १०८ ॥ इतीरिते तु शौरिणा जगाद धर्मनंदनः ॥ स शूरसेनमंडलप्रहाणतो हरेस्त्रसन् ॥ १०९ ॥ भयाद्धि यस्य माथुरं विहाय मंडलं गताः ॥ भवंत एव सागरं ततो बिभेम्यहं रिपोः ॥ ११० ॥ इमौ हि भीमफल्गुनौ ममाक्षिणी सदा प्रभो ॥ मनोनिभो भवान्सदा न वो विनास्म्यहं पुमान् ॥ १११ ॥ अतो न जीवितात्प्रियानहं रिपोर्बलीयसः ॥ सकाशमात्महेतुतः प्रयातयामि वः प्रभो ॥ ११२ ॥ ॥

मागधस्यभयात् माथुरंमथुरासंबंधिमंडलंविषयंविहायहित्वा सागरंप्रतिगताः यतःअतः अहंरिपोःसकाशात्मागधस्यसकाशाद्बिभेमि । इतिजगादेतिसंबंधः ॥ ११० ॥ इमौभीमार्जुनौअक्षिणीनयनस्थानीयौमनोनिभःजीवसदृशः अंतःकरणनिभइतिवा । वोविनाऽहंपुमान्नास्मियतः ॥ १११ ॥ अतःजीविताज्जीवनात् प्रियान्वःयुष्मान् बलीयसः बलिष्ठस्यआत्महेतुतःस्वाभीष्टहेतोःनयातयामिनप्रेषयामि ॥ ११२ ॥ ॥ ॥ ॥ ॥

इतियुधिष्ठिरेणईरितेसति अरिकक्षभुक्शत्रुलक्षणवनभुक् अग्निरूपइत्यर्थः । रमाविरिंचशर्वपूर्वकाःयदीयनेतृकाः यदीयंश्रीविष्णुसंबंधिइच्छादिकंनेतृकंप्रेरकंयेषांतेतथोक्ताः ॥ ११३ ॥ सुरासुरोरगादिनां तत्प्रसिद्धंवलंयस्यवशेअस्तीतिशेषः ॥ ११४ ॥ हरिप्रणायकस्यहरिःप्रणायकःप्रेरकोयस्यसतथातस्यमेअधृष्यंअसह्यं नेतरिप्रेरकेप्रभौसमर्थेकृष्णेसर्वशक्तितासर्वविषयशक्तिमत्वं ॥ ११५ धरातलेस्थितेमध्यमुंचकश्चननजेष्यतीति हरेर्वरोद्भवा अजेयतास्तिहियतःअतःप्रयामः ॥ ११६ ॥ पुरः अग्रेहनिष्यएव अहमितिशेषः ॥ ११७॥ प्रयातयामःप्रेषयामः ॥११८॥ सजरासुतः मयानहतइति तेत्वयाभयंनकार्यमेव स्वयमात्मनामयानीतिहेतुतःरिपुःनहन्यते

इतीरितेवदत्पुनर्वृकोदरोरिकक्षभुक् ॥ यदीयनेतृका रमाविरिंचशर्वपूर्वकाः ॥ ११३ ॥ वशे च यस्य तद्बलं सुरासुरोरगादिनाम् ॥ स एष केशवः प्रभुः क्वचास्यवारुहद्रथः ॥ ११४ ॥ अधृष्यमस्ति मे बलं हरिप्रणायकस्य च ॥ समस्तलोकनेतरि प्रभौ हि सर्वशक्तिता ॥ ११५ ॥ अजेयता तथार्जुने हरेर्वरोद्भवास्ति हि ॥ अतो वयं त्रयोद्यतं प्रयाम मागधं रिपुम् ॥ ११६ ॥ हनिष्य एव मागधं हरेः पुरो न संशयः ॥ इतीरितेमुना हरिर्जगाद धर्मनंदनम् ॥ ११७ ॥ वयं त्रयः समेत्य तं प्रयातयाम मृत्यवे ॥ हनिष्यति स्फुटं रणे वृकोदरो जरासुतम् ॥ ११८ ॥ भयं न कार्यमेव ते मया हतः स नेति ह ॥ मया हि नीतिहेतुतः स्वयं न हन्यते रिपुः ॥११९॥ स शर्वसंश्रयाग्रणीर्मदाश्रयोत्तमेन तु ॥ निहन्यते यदा तदा प्रकाशितं हि मे बलम् ॥ १२० ॥ अतो न शंकितं मनः कुरुष्व भूपते क्वचित् ॥ प्रदर्शयामि ते नुजौ निहत्य मागधेश्वरम् ॥ १२१ ॥ इतीरितः स विष्णुना विचार्य तद्गुणान्परान् ॥ तथेति चाह ते त्रयः प्रतस्थुराशु मागधान् ॥ १२२ ॥ समेत्य मागधांस्तु ते शिवोरुलिंगमित्यलम् ॥ सुमाल्यवस्त्रभूषणैः समर्चितं गिरिं ययुः ॥ १२३ ॥ ॥ ॥

॥ ११९ ॥ नीतिंदर्शयति । सइति । समागधःशर्वसंश्रयाग्रणीःमदाश्रयोत्तमेनमद्भक्तोत्तमेन प्रकाशितंस्यादितिशेषः ॥ १२० ॥ क्वचित्कदाचित्मद्विषये भीमार्जुनविषयेचमरिष्यंतिवाजेष्यंतिवेतिशंकितंशंकायुक्तंमनःनकुरुष्व ॥ १२१ ॥ विचार्यमनसीतिशेषः । तथेतितथास्त्वितिप्रतस्थुःजग्मुः ॥ १२२ ॥ शिवोरुलिंगंइदंशिवस्योरुलिंगमितिलिंगाकारंगिरिंययुः ॥ कथंभूतंअलंअर्चितं ॥ १२३ ॥ ॥ ॥ ॥ ॥ ॥ ॥

आदतंमानितंतेकृष्णादयःतंगिरिंअस्यजरासंधस्य उत्तमांगवत्मस्तकवत्न्यपातयंत ॥ १२४ ॥ तेकृष्णादयःअद्वारतःभित्तिंपातयित्वेतिभावः । नगरंप्रविश्यन्यक्कृतमाग धेशः । न्यक्कृतःतिरस्कृतःमागधेशोयैस्तेतथा तेसंतःमाषस्यमाषनाम्नोसुरस्य नालेनकंठनालेनकृताःपुष्टिप्रदाःयावद्देशंस्वनादःतावद्देशेप्रजासुपुष्टिप्रदाःपुष्टिकराइत्यर्थः । त स्यमागधस्यकीर्तिशास्त्रोपमाःकीर्तिप्रतिपादकगद्यपद्यरूपनिबंधसदृशाः कीर्तिशास्त्रवत्मागधप्रसिद्धिकराइतिभावः । त्रिभेरीःबिभिदुःभेदितवंतइत्यर्थः । मुष्टिप्रदाइतिपा ठे मुष्टिंप्रददंतीतिमुष्टिप्रदाइति कृष्णादीनांविशेषणं मुष्टिभिःबिभिदुरितिभावः ॥ १२५ ॥ तथाआपणेभ्योबहुमाल्यगंधान्माल्यानिपुष्पाणिगंधाश्चतान्बहून्प्रसह्यबला

स्वशीर्षतोपि चादतं जरासुतेन ते गिरिम् ॥ न्यपातयंत बाहुभिस्तमस्य चोत्तमांगवत् ॥ १२४ ॥ अद्वारतस्ते नगरं प्रविश्य माषस्य नालेन कृतास्त्रिभेरीः ॥ पुष्टिप्रदा बिभिदुस्तस्य कीर्तिशास्त्रोपमा न्यक्कृतमागधेशाः ॥ १२५ ॥ तथापणेभ्यो बहुमाल्यगंधान्प्रसह्य संगृह्यशुभांश्च दध्रुः ॥ अद्वारतस्तस्य गृहं च सस्रुः भो शब्दतस्तं च नृपं प्र सस्रुः ॥ १२६ ॥ तान्विप्रवेषान्स निशाम्य राजा महाभुजान्स्नातकवेषसंयुतान् ॥ द्वितीयवर्णान्प्रविचिंत्य बा हून् ज्याकर्कशान्वीक्ष्य बभाष एतान् ॥१२७॥ केष्ठाथ किंहेतुत आगताश्च कुतश्च मे पर्वतालिंगभेदनम् ॥ कृतं भवद्भिः कुत एव दुर्नयाः कृतास्तथान्ये द्विजवर्यवेषैः ॥ १२८ ॥ इति ब्रुवाणं भगवानुवाच कार्यं हि शत्रोररिव लं प्रतीपम् ॥ इत्युक्त ऊचे न हि विप्रशत्रुरहं कुतो वो मम शत्रुता भवेत् ॥ १२९ ॥ ॥ ॥

त्कारेण संगृह्यअपहृत्यदध्रुः गृहंचससृःप्रापुःभोशब्दतःभोजरासंधेतिवदंतःतंप्रसस्रुःप्रापुः सृगतावितिधातुः ॥ १२६ ॥ स्नातकवेषयुक्तान् स्नातकःतीर्थयात्राव्रतधरः तस्यवेषवद्वेषःतेनयुक्तान्द्वितीयवर्णान्क्षत्रियान् प्रविचिंत्यज्ञात्वा । द्वितीयवर्णत्वज्ञानेनिमित्तमाह । ज्येति । ज्याकर्कशान्ज्ययामौर्व्याकर्कशान्कठिणान् बाहून्वीक्ष्य एता न्कृष्णादीन्बभाषे ॥१२७॥ केष्ठयूयंकेभवथ अस्तेर्धातोर्लण्मध्यमपुरुषबहुवचनं । सुशामादिषुपरिगणितत्वात् षत्वंष्टुत्वंच । किंहेतुतःकस्माद्धेतोःआगताःकुतश्चमेपर्वत लिंगभेदनं पर्वताकारलिंगस्योत्पाटनंकृतं । भवद्भिःतथाअन्येदुर्नयाःअन्यायाःकुतःकृताः ॥१२८॥ उत्तरमाह । कार्यमिति । कुतःकस्माद्वःयुष्माकंममशत्रुताभवेत् १२९

अतःस्वापकर्षश्रुत्वाअनुक्तत्वात् एतदर्थंभीमेबलाधिक्यप्रसिध्यर्थं ॥ १४६ ननु कृष्णंकिमर्थंनाह्वयदित्यतआह । जानन्निति । घोरंक्रूरंअतएवाविषह्यंसोढुमशक्यं प्रभुं बलादिनासमर्थंगोपइतिकुत्सयान्निंदयन् भयादेव ॥ १४७ ॥ तर्हि भीमवलंघोरंकिंनस्यादित्यतआह । आह्वयामासेति । मेजीवनंस्याद्वापाक्षिकंजीवनंस्यात् इतिभीममाह्वयामास ॥ १४८ ॥ हनिष्यत्येवेति भयंमृतिभयं आसीद्यस्मात्तस्मात् ॥ १४९ ॥ ननु जीवनापेक्षयाअर्जुनंकिमर्थंनाह्वयदित्यतआह । अर्जुनइति ॥ १५० ॥ त्रयाणांमध्येमल्लाज्ञात्वा कथंचिज्जीवितंस्याद्वायशोनश्यतिइति भीमसेनंआह्वयामास ॥ १५१ ॥ इतिउक्तहेतोरेवप्रतियोधनाययुद्धार्थंसंगृह्यअंगीकृत्य । आत्मजंपुत्रं

अतो भीमे बलाधिक्यं सुप्रसिद्धमभून्महत् ॥ एतदर्थं हि कृष्णेन समानीतः स फल्गुनः ॥ १४६ ॥ जानन् कृष्णे बलं घोरमविषह्यं स मागधः ॥ कुत्सयन् गोप इति तं भयान्नैवाह्वयत्प्रभुम् ॥ १४७ ॥ आह्वयामास भीमं तु स्याद्वा मे जीवनं त्विति ॥ १४८ ॥ हनिष्यत्येव मां कृष्ण इत्यासीन्नृपतेर्भयम् ॥ तस्मात्तं नाह्वयामास वासुदेवं स मागधः ॥ १४९ ॥ अर्जुने तु जिते कृष्णभीमौ मां निहनिष्यतः ॥ त्रयाणां दुर्बलाह्वानान्नश्येत्कीर्तिश्च मे ध्रुवम् ॥ १५० ॥ इति मत्वाह्वयामास भीमसेनं स मागधः ॥ कथंचिज्जीवितं वा स्यान्नतु नश्यति मे यशः ॥१५१॥ इतीक्ष्य भीमं प्रतियोधनाय संगृह्य राजा स जरासुतो बली ॥ राज्ये निजे चात्मजमभ्यषिंचत्पुराख्यातं पत्रतापाख्यरुद्रम् ॥ १५२ ॥ बलं भीमे मन्यमानोधिकं तु गदाशिक्षामात्मनि चाधिकां नृपः ॥ भीतो नियुद्धेस्य ददौ गदां सः भीमाय चान्यां स्वयमग्रहीद्बली ॥ १५३ ॥ तदर्थमेवाशु गदां प्रगृह्य भीमो ययौ मागधसंयुतो बहिः ॥ पुरात्स कृष्णार्जुन एव तत्र त्वयुध्यतां केशवपार्थयोः पुरः ॥ १५४ ॥ वाचाजयत्तं प्रथमं वृकोदरः शिवाश्रयं विष्णुगुणप्रकाशया ॥ ततो गदाभ्यामभिपेततुस्तौ विचित्रमार्गानभिदर्शयंतौ ॥ १५५ ॥ ॥ ॥

सहदेवंराज्येसाम्राज्येअभ्यषिंचत् । सपूर्वंकइत्यतआह । पुरेति ॥ १५२ ॥ भीमेअधिकंशारीरबलं आत्मनिअधिकांगदाशिक्षांमन्यमानःनियुद्धेमुष्टियुद्धेअस्यभीमस्य सकाशात् भीतःसन् ॥ १५३ ॥ तदर्थमेवजरासंधाभिलषितासिध्यर्थमेव पुराद्वहिःपुरःअग्रे ॥ १५४ ॥ प्रथमंआदौविष्णुगुणप्रकाशया विष्णुगुणान्प्रकाशयतीतिविष्णुगुणप्रकाशा तयावाचावेदेन विचित्रमार्गान् मंडलप्रचाराभिसारादीविचित्रमार्गविशेषान् अभिपेततुःपरस्परंप्राप्तावित्यर्थः ॥ १५५ ॥ ॥

अशनिसन्निकाशेवज्रसदृशे तेगदेदेहमहाद्रढिम्नादेहस्यातिकठिनत्वेन भीमजरासंधयोर्देहौअतिकठिनावितिभावः । कथंभूतेगदेअन्योन्ययोर्भीमजरासंधयोर्वक्षसिपरस्प रंपातितेभीमजरासंधाभ्यामितिशेषः । कयोःकाविव अश्मनोःपाषाणयोःपांसुपिंडौधूलिपिंडौ सुमुक्तौसुतरांबलेनमुक्तौक्षिप्तौ यथातथेतिसंबंधः॥१५६॥ संचूर्णितगदौसंचू र्णितेगदेयाभ्यांतौतथा ब्रह्मांडस्फोटसंकाशैः ब्रह्मांडंस्फोटयंतीतिब्रह्मांडस्फोटाःशब्दाःतैःसंकाशैःसदृशैःमुष्टिभिः ब्रह्मांडस्फोटनसमर्थशब्देनसदृशैरितिभावः ॥१५७॥ कुलाचलाःपर्वताः समस्तवारांपतयइत्येकंपदं । षष्ठ्याअलुक् । अलंविचुक्षुभुःकलुषत्वंप्राप्ताइत्यर्थः । नभःआकाशंआसदन्आययुः॥१५८॥असुराद्या आद्यशब्देन

तयोर्गदे तेऽशनिसन्निकाशे चूर्णीकृते देहमहाद्रढिम्ना ॥ अन्योन्ययोर्वक्षसि पातिते रुषा यथाश्मनोः पांसुपिंडौ सुमु क्तौ ॥ १५६ ॥ संचूर्णितगदौ वीरौ मुष्टिभिर्जघ्नतुर्मिथः ॥ ब्रह्मांडस्फोटसंकाशैर्यथा केशवकैटभौ ॥ १५७ ॥ चचाल पृथ्वी गिरयश्च चूर्णिता कुलाचलाश्चेलुरलं विचुक्षुभुः ॥ समस्तवारांपतयः सुरासुरा विरिंचिशर्वादय आ सदन्नभः ॥ १५८ ॥ सुरास्तु भीमस्य जयाभिकांक्षिणस्तथासुराद्या मगधाधिपस्य ॥ पश्यंति सर्वे क्रमशो ब लं स्वं समाददे मारुतनंदनोपि ॥ १५९ ॥ मानयित्वा वरं धातुर्दिवसान्दशपंच च ॥ वासुदेवाज्ञया भीमः श त्रुं हंतुं मनो दधे ॥ १६० ॥ स प्रणम्य हृषीकेशं हर्षादाश्लिष्य फल्गुनम् ॥ रिपुं जग्राह मुकुटे वारणं मृगराडि व ॥ १६१ ॥ पृष्ठेस्य जानुमाधाय कूर्मदेशं बभंज ह ॥ मृतिकाले पुनर्देहं विददार यथा पुरा ॥ १६२ ॥ मर्म ण्येव न हंतव्यो मयायमिति मारुतिः ॥ स्वपौरुषप्रकाशाय बभंजैनममर्मणि ॥ १६३ ॥ भज्यमाने शरीरेस्य ब्रह्मांडस्फोटसन्निभः ॥ बभूव रावो येनैव त्रस्तमेतज्जगत्त्रयम् ॥ १६४ ॥ ॥ ॥ ॥ ॥

राक्षसाःपिशाचाःग्राह्याः । जयाभिकांक्षिणइतिउभयत्रसंबध्यते । सर्वेदेवाअसुराःपश्यंति मारुतनंदनःस्वमपिस्वकीयमेवबलंक्रमशःक्रमेणआददे । मूलरूपेविद्यमानंब लमित्यर्थः ॥ १५९ ॥ पंचदशदिवसान्एकपक्षं दधे दध्रे॥१६०॥ सभीमःमुकुटेकिरीटेजग्राह । कःकमिव मृगराट्सिंहःवारणमिवगजमिव ॥१६१॥ आधायनि धायकूर्मदेशंकटिप्रदेशं । पुराजन्मकाले यथाशकलद्वयमभूत् । तथापुनःविददार भीमइतिशेषः ॥ १६२॥ अयंमागधःमर्मणिमर्मस्थानेइतिमारुतिःस्वपौरुषप्रकाशाय एनंमागधंअमर्मणिमर्मरहितस्थले कूर्मदेशइत्यर्थः बभंज ॥१६३॥ ब्रह्मांडस्फोटसन्निभःब्रह्मांडस्फोटेयःशब्दःतेनसन्निभःसदृशोरावः शब्दःयेनशब्देनत्रस्तंभीतं१६४

कृष्णस्यरिपुंद्वेषिणंअर्चनंपूजनंहरेःहरयेसमर्पयामास । अजःकृष्णोभीमेनकृतांतांशत्रुवधरूपांसमर्चनांसमक्षंप्रत्यक्षं आदातुंस्वीकर्तुंइहागतः ॥ १६५ ॥ भीमंदृढंस माश्लिष्यप्रीतोबभूवेतिशेषः । अर्जुनेनप्रणतोभीमःपुनःकृष्णंननाम । नितांतंप्रीतमितिशेषः ॥ १६६ ॥ दीनतराःअत्यंतदुःखिनःसतः दीनतरत्वेकारणमाह । बला दिति । वृकोदरेणबलात्स्वाभाविकबलात् उमेशस्यवरेउपलक्षणमेतत् । ब्रह्मदूर्वाससोर्वरेपीत्यर्थः ॥१६७॥ अस्यजरासंधस्य धीमान्ज्ञानीसुतःसहदेवः ॥ १६८ ॥ जरासंधस्यरथप्राप्तिःकथमित्यतआह । रथोहीति । असौरथःसहदेवदत्तरथःवसुनाराज्ञा शक्रांतराशक्रव्यवधानेन अंतरेत्यव्ययं । वासुदेवान्नारायणादाप्तोहि जरासंधस्यत्र सुवंशजत्वात् वसुराज्ञःकुलोत्पन्नत्वात्आस वृकोदरस्तंरथंतस्मैकृष्णायप्रार्पयामास ॥१६९॥ सगरुडःध्वजेभूत् पांडवाभ्यांभीमार्जुनाभ्यां सभीमःआत्मनःअनुजस्य

निहत्य कृष्णस्य रिपुं स भीमः समर्पयामास तदर्चनं हरेः ॥ कृतां हि भीमेन समर्चनां तां समक्षमादातुमिहागतो ह्यजः ॥१६५॥स्वीकृत्य पूजां च वृकोदरस्य दृढं समाश्लिष्य च तं जनार्दनः॥ प्रीतो नितांतं पुनरेव कृष्णं ननाम भीमः प्रणतोर्जुनेन ॥ १६६ ॥ जग्मुः सुराश्चातितरां प्रहृष्टा ब्रह्मादयो दीनतराश्च दैत्याः ॥ बलादुमेशस्य वरे प्रभग्ने वृकोदरेणाच्युतसंश्रयेण ॥ १६७॥ सुतो ययौ शरणं तान् रमेशभीमार्जुनान्सहदेवोस्य धीमान् ॥ रथं स्वसारं च ददौ स मारुतेर्ननाम कृष्णं परयैव भक्त्या ॥ १६८ ॥ रथो ह्यसौ वसुना वासुदेवाच्छक्रांतराप्तो वसुवंशजत्वात् ॥ जरासुतस्यास वृकोदरस्तं हरे रथं प्रार्पयामास तस्मै ॥१६९ ॥ कृष्णोस्मरद्गरुडं स ध्वजेभूद्रथं कृष्णोप्यारुहत्पांडवाभ्याम् ॥ भीमः कन्यां सहदेवस्य हेतोः समग्रहीदनुजस्यात्मनः सः ॥१७०॥ नकुलस्यादान्मद्रराजो हि पूर्वं स्वीयां कन्यां सा तथैषाप्युषा हि ॥ एका पूर्वं तेश्विनोश्चैव भार्या यमौ रेमाते यदुषा अश्विभार्या ॥ १७१ ॥ ॥

सहदेवस्यार्थे कन्यांसमग्रहीदिति ॥१७० ॥ सहदेवस्यद्वितीयविवाहोक्तिप्रसंगात् नकुलस्यापिद्वितीयंविवाहंदर्शयति । नकुलस्येत्यादिना । मद्रराजःपूर्वंनकुलस्यस्वीयां कन्यामदाद्धि । पूर्वंसाकेत्यतआह । सेति । साजरासंधस्यकन्यातथाएषापिमद्रराजस्यकन्याउषाहि । तेजरासंधशल्यकन्येपूर्वंएकैव पूर्वंअश्विनोर्भार्याएव हिशब्दौप्रसि द्धिवाचकौयमौरेमाते ताभ्यामितिशेषः । ननुउषाअनिरुद्धभार्याअतोअश्विभार्याकथमुच्यतइत्याशंक्याह । यदुषाइति । यद्यस्मात्सकारांतोषःशब्दवाच्योषाअश्विभार्या तस्मात्सकारांतोषःशब्दवाच्यायाःउषसःआकारांतोषाशब्दवाच्याऽनिरुद्धभार्याअन्याइतिवाक्यशेषः । यद्वा उषाएकैवअश्विभार्यातस्मात् नकुलसहदेवभोगार्थंरूपद्वयेन संप्रजातेतिवाक्यशेषः ॥ १७१ ॥ ॥ ॥ ॥ ॥ ॥

ततःद्वितीयविवाहानंतरं अग्रजभ्रातृभार्यावृत्तिं ज्येष्ठभ्रातुर्भार्यायां यावृत्तिःप्रवर्तनंतांचक्रतुः । स्वनियतवत्सरे कृष्णादेहस्थस्वभार्यासंगंनचक्रतुरितिभावः । अनुज्ञयाकृष्णादीनामितिशेषः । ययौरणस्थानात्स्वगृहमितिशेषः ॥ १७२ ॥ तदाज्ञयाकृष्णायाज्ञया पितृकर्मणिजरासंधमुद्दिश्यतिलांजलिपिंडदानादिकृत्यानिकृत्वा । तदाज्ञयैवतान् पशुत्वेकल्पितान् नृपानमुंचत् । तैराजभिःयथावत्स्वयोग्यतानुसारेणसंस्तुतः सम्यक्माहात्म्यज्ञानपूर्वकंयथाभवतितथास्तुतःसन्ययौ ॥ १७३ ॥ सहदेवेनजरासंधपुत्रेणसम्यक् संभाविताःमानिताःतेसर्वेराजानः कृष्णंभीमसेनंचप्रशस्यप्रशंसनंकृत्वा प्रणम्येतिक्वचित्पाठः । असिपत्राद्यनेकनरकभोगक्रमेणापतत् ॥ १७४ ॥ पार्थौ भीमार्जुनौराजायुधिष्ठिरःतेषांकृष्णभीमार्जुनानां शंखध्वनिसंबोधितात्माशंखानांध्वनिभिःसंबोधितःसम्यक्बोधितःआत्मामनोयस्यसतथा पूर्वंशंकितमनाइतिभावः॥ १७५

ततः कृष्णायामग्रजभ्रातृभार्यावृत्तिं हि तौ चक्रतुर्माद्रिपुत्रौ ॥ जरासुतस्यात्मजः केशवादीन् रत्नैः समभ्यर्च्य ययावनुज्ञया ॥ १७२ ॥ तदाज्ञया पितृकार्याणि कृत्वा तदाज्ञयैवामुचत्तान्नृपांश्च ॥ तैः संस्तुतः केशवो भीमपार्थयुक्तो ययौ भक्ति[illegible]र्यथावत् ॥ १७३ ॥ संभावितास्ते सहदेवेन सम्यक् प्रशस्य कृष्णं भीमसेनं च सर्वे ॥ ययुर्गृहान् स्वानपतत्केशवद्विट् जरासुतोंधे तमसि क्रमेण ॥ १७४ ॥ कृष्णश्च पार्थौ च तथैकयानं समास्थिता धर्मजमन्वगच्छन् ॥ तेषां शंखध्वनिसंबोधितात्मा राजा प्रीतश्चातितरां बभूव ॥१७५ ॥ द्वैपायनोथ भगवानाविगम्य पार्थाना ज्ञापयत्सकलसंभृतिसाधनाय ॥ तं राजसूयसहितं परमाश्वमेधयज्ञं समादिशदनन्यकृतं विरिंचात् ॥१७६ ॥ कर्ता हि तस्य परमेष्ठिपदं प्रयाति यद्यन्यसद्गुणवरैः परमेष्ठितुल्यः भीमे मखस्य फलमभ्यधिकं विधातुं व्यासः क्रतुं तमदिशद्गुरुरब्जजस्य ॥ १७७ ॥ ॥ ॥ ॥ ॥

अथकृष्णादीनामागमनानंतरं सकलसंभृतिसाधनाय यज्ञांगभूतनिखिलसाधनस्य संपादनायविरिंचाद्ब्रह्मणःसकाशादनन्यकृतंअन्यैर्नकृतं विरिंचादन्यस्यायोग्यमितिभावः राजसूयसहितंराजसूययज्ञेनसहितं तंविरिंचयोग्यमितिप्रसिद्धं परमाश्वमेधयज्ञंपरमःउत्तमकल्पसाध्यःअश्वमेधःअश्वमेधाख्योयोयज्ञः तंअश्वमेधयज्ञंअदिशत् व्यासइतिशेषः॥ १७६॥ यदि अन्यसद्गुणवरैःराजसूयादन्यैर्ज्ञानभक्त्यादिसद्गुणोत्तमैःपरमेष्ठितुल्यस्तर्हि तस्यराजसूयस्यकर्तापरमेष्ठिपदंप्रयाति। हिःयस्मात्तस्मादन्यसद्गुणवरैःपरमेष्ठितुल्यत्वाद्भीमेमखस्यअधिकंअतिपूर्णफलं ब्रह्मपदप्राप्तिरूपफलं विधातुंअब्जजस्यब्रह्मणःगुरुर्हितोपदेष्टाव्यासःअतएवतंक्रतुंराजसूयाख्यंअदिशत् आज्ञापयामास ॥ १७७ ॥ ॥ ॥ ॥ ॥ ॥

यस्यकर्मणःअसाधारणहेतुःमुख्यहेतुर्यश्चेतनोजीवःपुरुषइत्यर्थः । सएवतस्यकर्मणःतत्कर्मजनितंपूर्णंमुख्यंफलंभुङ्क्ते अन्यःसाधारणहेतुःअल्पकर्मकरणानुसारि भुंङ्क्ते फलमितिशेषः इतिस्थितिःनिर्णयः शास्त्रेष्वितिशेषः ॥ १७८ ॥ तर्हिसर्वत्रअयंनिर्णयश्चेत् विष्णोःसाधारणहेतुत्वात् तस्यैवसर्वकर्मफलंमुख्यंस्यादित्यतआह । विनेति । सविष्णुःकर्मफलोज्झितः प्रेरकत्वेनमुख्यकर्तापिकर्मफलेनपापपुण्ययोःफलेनस्वर्गनरकादिभोगोज्झितोरहितः ॥१७९ ॥ देवाःपापस्यहेतवोपिकर्तारोपिप्रेरकत्वेनप्रायः बाहुल्येनफलभागिनोन । भीष्मादिव्यावृत्त्यर्थंप्रायइत्युक्तं । दैत्याःपुण्यस्यहेतवोपिप्रायःफलभागिनोन । बलिप्रल्हादादिव्यावृत्त्यर्थंप्रायइत्युक्तं । इतिअध्याहारेणयोज्यं । मानुषास्तुद्विभागिनःशुभाशुभकर्मफलभागिनः तुशब्देनविशेषात्मनुष्यमध्यमाविवक्षिताः तेषांत्रिदिवनिरयगोचरत्वात् ॥१८०॥ अस्तुनिर्णयोस्त्वस्यअसाधारणकारण

असाधारणहेतुर्यः कर्मणो यस्य चेतनः ॥ स एव तत्फलं पूर्णं भुङ्क्तेन्योल्पमिति स्थितिः ॥ १७८ ॥ विना विष्णुं निर्णयोयं स हि कर्मफलोज्झितः ॥ हेतवोपि हि पापस्य न प्रायः फलभागिनः ॥ १७९ ॥ देवाः पुण्यस्य दैत्याश्च मानुषास्तु द्विभागिनः ॥ असाधारणहेतुश्च भीम एव प्रकीर्तितः ॥ १८० ॥ एतस्यास्य जरासंधवधात्कर्णजयादपि ॥ जयाच्च कीचकादीनां अन्यैर्जेतुमशक्यतः ॥ १८१ ॥ द्वितीयः फल्गुनश्चैव तृतीयस्तु युधिष्ठिरः ॥ तस्माद्ब्रह्मपदप्राप्त्यै व्यासो भीमस्य तं क्रतुम् ॥ [illegible]क्रतुमादिश्य दिशां विजयमादिशत् ॥१८२ ॥ अथाब्रवीद्धनंजयो धनुर्ध्वजो रथो वरः ॥ ममास्ति तादृशो जयो ममैव वांछितः प्रभो ॥ १८३ ॥ ॥

स्यमुख्यंफलंभीमस्य राजसूयेअसाधारणहेतुत्वंकुतइत्यतआह । अस्ययज्ञस्यअसाधारणहेतुः भीमएवप्रकीर्तितःउक्तःतत्रहेतुमाह । जरासंधेत्यादिना । अस्तुजरासुतवधादसाधारणहेतुत्वं भीमस्यकर्णादिजयादप्येतत्कुतः कर्णादेरर्जुनादिभिरपिजेतुंशक्यत्वादित्यतआह । अन्यैरिति । अशक्यतःअशक्यत्वादित्यर्थः ॥ १८१ ॥ फल्गुनोद्वितीयःयुधिष्ठिराद्यपेक्षयामुख्यहेतुरित्यर्थः । तुतथातृतीयःकर्ताहितस्यपरमेष्ठिपदंप्रायःपार्थान् इत्याद्युक्तंउपपाद्योपसंहरति । तस्मादिति । तस्मादसाधारणहेतुत्वाद्ब्रह्मपदाधिकारत्वाच्चक्रतुमादिश्यपार्थान्कुरुध्वमित्याज्ञाप्यविजयंकुरुतेत्यादिशत् ॥ १८२ ॥ तत्तस्मान्ममैववांछितः अपेक्षितोस्तीतिशेषः ॥ १८३ ॥

इदंधनुरादिसत्यमित्यर्धांगीकारः तदेवविवृणोति । अस्तीत्यादिना । तेसमस्तसाधनोन्नतिरस्ति तेमहद्वीर्यंचास्ति ॥ १८४ ॥ तथापीत्यादिनासर्वदिग्विजयंप्रतिषेधति ॥ १८५ ॥ कर्णतःत्वंबलाधिकोसि यद्यपितथापि अमृतःजीवन्कर्णःअतिस्पृधाअतिस्पर्धया तेकरंनददातिहि । तर्हि हनिष्यामीत्यतआह । नवध्यइति एषःकर्णःतेत्वया अवध्यइदानीं ॥ १८६ ॥ तत्रनिमित्तमाह । सवर्मेति । सवर्मकुंडलत्वतः कवचकुंडलैःसहितत्वात् नवध्यःयततःतस्मात्कारणात् तेपितुःप्रियांदिशंइंद्रदेवतांपूर्वांदिशमित्यर्थः । भरतखंडापेक्षयेतिभावः । अन्यथाद्वीपान्सप्तचाशेषदिक्ष्वित्युत्तरश्लोकविरोधः ॥ १८७ ॥ अनेनभीमेनसंयुगेजितश्च पूर्वमितिशेषः । जीवग्राहभयात्जीवतोग्राहःग्रहणंतद्भयात् जितमात्मानंभीमोग्रहिष्यतीतिभयादित्यर्थः ॥ १८८ ॥ चेदिपःशिशुपालः ॥ १८९ ॥ भीमात्कृतान्मागधपातनात्एषांकीचकादीनांजीवग्राहभयं

इतीरितोखिलप्रभुर्जगाद सत्यमस्ति ते ॥ समस्तसाधनोन्नतिर्महच्चवीर्यमस्ति हि ॥ १८४ ॥ तथापि कीचकाद यो वृकोदरादृते वशम् ॥ न यांति नापि ते वशं प्रयाति कर्ण एव च ॥१८५॥ बलाधिकोसि कर्णतस्तथापि नामृतः करम् ॥ ददाति ते ह्यतिस्पृधा न वध्य एष तेद्य च ॥१८६॥ सवर्मकुंडलत्वतो न वध्य एव सर्वथा ॥ ततो वृकोदरो दिशं प्रयातु ते पितुःप्रियाम् ॥१८७॥ जीवग्राहभयात्कर्णो ददाति करमंजसा ॥ भीमाय नात्र संदेहो जितोनेन च संयुगे ॥१८८॥ अजेयौ शर्ववचनाद्रणे कीचकपौंड्रकौ ॥ वशं प्रयातो भीमस्य तथावध्योपि चेदिपः ॥१८९॥ जीवग्राहभयं ह्येषां भीमान्मागधपातनात् ॥ तस्मात्करं प्रयच्छंति जिता वा पूर्वमेव वा ॥ १९० ॥ प्रयाहि च त्वं धनदप्रपालितां दिशं द्वीपान्सप्त चाशेषदिक्षु ॥ नागांश्च दैत्यांश्च तथाधरस्थान्विजित्य शीघ्रं पुनरेहि चात्र॥१९१॥

हियस्मात्तस्माज्जिताःसंतः पूर्वमेववाजयादितिशेषः ॥ १९० ॥ धनदप्रपालितांदिशंउदीचींदिशं । इंद्रोवन्हिःपितृपतिर्नैर्ऋतोवरुणोमरुत् । कुवेरईशःपतयःपूर्वादीनां दिशांक्रमादित्यमरः । अर्जुनःदिग्विजयेयातएवदिशमुत्तरांतदेतिप्रथमश्लोकादपिउदीचिदिगितिज्ञेयं । सोमकुवेरावुभावपिउत्तरदिगाधिपतिधनदप्रपालितामित्यत्र ईशानीदिशमितिकेचित् । अशेषदिक्षुसप्तद्वीपान्स्थितानितिशेषः । प्रयाहितथाअधरस्थान् पातालादिसप्तलोकस्थितान्नागान् दैत्यांश्चविजित्य । पुनःपूर्वंनागपुरेविजित्ययथा गतस्तथाअत्रयज्ञस्थलंप्रतिएहि ॥ १९१ ॥ ॥ ॥ ॥ ॥

ननु अर्जुनस्यसप्तद्वीपगमनंकथंघटतइत्यतआह । रथोहीति । अंबरगःअंबरेआकाशेगच्छतीत्यंबरगःएतुप्राप्नोतु ॥ १९२ ॥ तथाइतरेकीचकबाणादिभ्योन्येऽसुराः बलिंकरंप्रयच्छंति । तवेतिशेषः । ननु त्रैगर्तादयोसुराःरुद्रादिवरादजेयाःकथंत्वबलिंप्रयच्छंतीत्यतआह । मदाज्ञयेति । केचित्तथासुराइत्यत्र सुराइतिपदच्छेदंकुर्वंति तत्र सुराबलिंप्रयच्छंति । भीमायेत्यध्याहारेणयोज्यं । अध्वरार्थयज्ञार्थेनकुलःप्रतीचींसहदेवःदक्षिणामितिक्रमशःक्रमेणयोज्यं ॥ १९३ ॥ तयोर्यमयोःस्यादितिकाल्याःसत्यवत्याःसुतेनकृष्णेनश्रीवेदव्यासेनोक्तेसति तेभीमादयःतंव्यासंयथोक्ताःव्यासोक्तप्रकारेणताःदिशःप्रतिययुरित्यर्थः ॥ १९४ ॥ अत्रविराटनगरेततःविराटात् ॥ १९५ ॥

रथो हि दिव्योंबरगस्तवास्ति दिव्यानि चास्त्राणि धनुश्च दिव्यम् ॥येन्ये च बाणप्रमुखा अजेयाः शर्वाश्रयास्तानपि भीम एतु ॥ १९२ ॥ तथासुराश्चापि समस्तशोस्य बलिं प्रयच्छंति मदाज्ञयेतरे ॥ दिशं प्रतीचीमथ दक्षिणां च यातां यमौ क्रमशो ह्यध्वरार्थे॥१९३॥यशश्च धर्मश्च तयोरपि स्यादितिस्म कृष्णेन सुतेन काल्याः ॥ उक्ते ययुस्ते तमभिप्रणम्य दिशो यथोक्ताः परमोरुसद्गुणम् ॥ १९४ ॥ वृकोदरो जयन्नृपान्विराटमाससादह ॥ जितेत्र कीचके रणे समाददे करं ततः ॥ १९५ ॥ ततः क्रमान्नृपान् जित्वा चेदीनां विषयं गतः ॥ मातृवाक्याद्दयाच्चैव शिशुपालेन पूजितः ॥ १९६ ॥ मातृष्वसुर्गृहे चोष्य दिवसान् कतिचित्सुखम् ॥ करं सुमहदादाय ततः पूर्वां दिशं ययौ ॥ १९७ ॥ क्रमेण सर्वान्निर्जित्य पौंड्रकं च महाबलम् ॥ विरथीकृत्य कर्णं च करमादाय सर्वतः ॥ १९८ ॥ हिमवच्छिखरे देवान् जित्वा शक्रपुरोगमान् ॥ क्रीडार्थं युध्यतस्तेभ्यस्तुष्टेभ्यो रत्नसंचयान् ॥१९९॥ बाहुयुद्धेन शेषं च गरुडं च महाबलम् ॥ क्रीडमानो विनिर्जित्य भूषणान्याप तोषतः॥ताभ्यां च दृढमाश्लिष्टः स्नेहविक्लिन्नया धिया॥२००॥

चेदीनांविषयंचेदिदेशं ॥ १९६ ॥ मातृष्वसुःकुंतीभगिन्याःगृहेसुखंयथाभवतितथा कतिचिद्दिवसानुष्यस्थित्वा ततःशिशुपालादादाय ततःचेदिविषयाद्धापूर्वांययौ ॥ १९७ ॥ क्रमेणसर्वान् पूर्वादिदिशिसंस्थितान्नृपान्निर्जित्यजित्वातथामहाबलंपौंड्रकंचविनिर्जित्य तथामहाबलंकर्णंविरथीकृत्य । सर्वतःसर्वेभ्यःकरमादाय ॥ १९८ ॥ क्रीडार्थंअयंभीमइतिज्ञात्वा तद्बलप्रकाशार्थंयुद्धतःयुद्धंकुर्वाणान्देवान्तुष्टेभ्यः भीमबलंदृष्ट्वेतिशेषः । तेभ्यःशक्रादिभ्यःरत्नसमूहानादाय ॥ १९९ ॥ बाहुयुद्धेनक्रीडमानौशेषंचगरुडंचाविनिर्जित्य तोषतःसंतोषात् शेषगरुडयोरितिशेषः । ताभ्यांशेषगरुडाभ्यांभूषणानिआप ताभ्यांचशेषगरुडाभ्यांच विक्लिन्नयाआर्द्रयाआश्लिष्टःआलिंगितःसन्॥ २०० ॥ ॥ ॥ ॥ ॥

ततोंबुधौपोप्लूयमानःबाहुभ्यांप्लवन्नित्यर्थः । अतएवबलीसभीमःबाणस्यबाणनाम्नोअसुरस्य पुरंपुरींजगामच । अत्रबाणपुरेवारणरूपंहस्तिस्वरूपं आस्थितंप्राप्तंक्रीडंतंक्रीडार्थंयुद्धयंतमित्यर्थः । हरंअजयत् एतेनभीमकृतयुद्धेनहरःतोषितःसंतोषंप्रापितः ॥ २०१ ॥ दिग्जयस्यदिशांविजयस्यविस्तरंविस्तारकरणमित्यर्थः । पृष्टोसौभीमःसिंहव्याघ्रादिरूपाःदेवाःयथात्मनानिर्जितास्तदब्रवीत् ॥ २०२ ॥ शंकरोखिलंभीमोक्तंनिशम्य मखस्यप्रसाधकं प्रकृष्टकारणंहरिं कृष्णंश्रीवेदव्यासंचज्ञात्वेतिशेषः । ततः बलेःसुताद्बाणात् रत्नसंचयंददौ आदायेतिशेषः ॥ २०३ ॥ सभीमःबाणदैत्यतःशिवेनदत्तमादायेतिशेषः । रत्नसंचयंप्रगृह्य ॥ २०४ ॥ सभीमःद्विधाद्विरूपेणेत्यर्थः ।

पोप्लूयमानः स ततोंबुधौ बली जगाम बाणस्य पुरं हरं च ॥ रणे जयद्वारणरूपमास्थितं क्रीडंतमेतेन च तोषितो हरः ॥ २०१ ॥ पृष्टश्च गिरिशेनासौ विस्तरं दिग्जयस्य च ॥ सिंहव्याघ्रादिरूपाश्च आत्मना विजिता यथा ॥ गरुत्मच्छेषशक्राद्याः देवाः सर्वे तदब्रवीत् ॥ २०२ ॥ निशम्य शंकरोखिलं मखप्रसाधकं हरिम् ॥ ततो बलेः सुताद्ददौ सुदिव्यरत्नसंचयम् ॥ २०३ ॥ स बाण दैत्यतो महच्छिवेन दत्तमुत्तमम् ॥ प्रगृह्य रत्नसंचयं स्वकं पुरं समाययौ ॥ २०४ ॥ स विप्रयादवेश्वरं द्विधा स्थितं जनार्दनम् ॥ पुरो निधाय तद्वसु प्रभूतमानमत्तदा ॥ २०५ ॥ सोभिवंद्याग्रजं चैव यथा वृत्तं न्यवेदयत् ॥ आत्मनः कृष्णयोः सर्वं धर्मराजाग्रतो मुदा ॥ यथा जिताः कीचकाद्याः एकलव्यसहायवान् ॥ यथाजितः पौंड्रकश्च कर्णाद्याश्च तथापरे ॥ २०७ ॥ यथा सिंहादितनवः शेषवींद्रेंद्रपूर्वकाः ॥ यथा गजतनुः शर्वस्तच्च सर्वमवर्णयत् ॥ २०८ ॥ ॥ ॥ ॥

स्थितंविप्रयादवेश्वरंवेदव्यासकृष्णरूपंजनार्दनंअनमत् । किंकृत्वाप्रभूतंसमग्रं तद्वसुदिग्विजयार्जितद्रव्यंपुरोनिधाय ॥ २०५ ॥ सभीमःअग्रजंअभिवंद्य आत्मनःस्वस्यवृत्तं सर्वं यथायथास्थितंधर्मराजाग्रतःयुधिष्ठिरस्यपुरःकृष्णयोःवेदव्यासवसुदेवसून्वोः मुदान्यवेदयत् ॥ २०६ ॥ उक्तमेवविवृणोति । यथेत्यादिना । एकलव्यसहायवान्पौंड्रकश्चयथाजितः तथापरेकर्णाद्याः ॥ २०७ ॥ यथासिंहादितनवःसिंहव्याघ्रवृकस्वरूपाः तच्चसर्वंअवर्णयत् अब्रवीदित्यर्थः ॥ २०८ ॥ ॥ ॥

संभावितःमानितःभीमःयज्ञांगानि यज्ञस्यसाधनानिसमार्जयत् संपादयामास ॥ २०९ ॥ आत्माज्ञयाभीमकृतं दिग्विजयंप्रशंसन्नेव यज्ञांगसमार्जने तात्पर्यंद्योतयन्पुनरादिशदित्याह । ऊचइति । तंभीमंऊचेकिमिति । हेअरिहन् सर्वराजमंडलंजितं सर्वस्यराजमंडलस्य जयेसति अयंयज्ञःपूर्णोभवति । नान्यथासर्वजयाभावेसति नभवतीत्यर्थः ॥ २१० ॥ पूर्वविरिंचःसर्वजित् इहअस्मिन्कालेत्वंद्वितीयोभवः एवंभीमंयज्ञांगानि यज्ञसाधनभूतपात्रादीनि समादिशन् आज्ञापयामास । तस्माद्देव्यासस्याज्ञया समार्जयदितिसंबंधः ॥ २११ ॥ तस्यभीमस्यसमीयुःपुरमितिशेषः ॥ २१२ ॥ तेषांदिग्विजयंविशदयति । सहदेवइत्यादिना । तत्रदक्षिणायांदिशि ॥ २१३ ॥ नयुयुधेत्यत्रकारणमाह । जितइति । यःरुग्मीपूर्वंरुग्मिणीहरणकाले कृष्णेनजितःसन् रुग्मीतपसातोषिताच्छर्वात् वरंधनुरुत्तमंधनुरपि वरंचापेतिवा । वरदानसमयेशर्वोऽप्याह

संभावितश्च कृष्णाभ्यां राज्ञा च स महाबलः ॥ आज्ञया व्यासदेवस्य यज्ञांगानि समार्जयत् ॥ २०९ ॥ ऊचे तं भगवान्व्यासो जितं सर्वं त्वयारिहन् ॥ जये सर्वस्य यज्ञोयं पूर्णो भवति नान्यथा ॥ २१० ॥ विरिंचः सर्वजित्पूर्वं द्वितीयस्त्वमिहाभवः ॥ इत्युक्त्वैवं समाश्लिष्य यज्ञांगानि समादिशत् ॥ २११ ॥ तदैवान्या दिशो जित्वा समीयुस्तस्य सेनुजाः ॥ सहदेवो दक्षिणाशां जित्वा रत्नान्युपाहरत् ॥ २१२ ॥ तत्र रुग्मी न युयुधे सहदेवेन वीर्यवान् ॥ २१३ ॥ जितः कृष्णेन पूर्वं यः शर्वादपि धनुर्वरं ॥ तपसा तोषितात्कृष्णादन्यानेवामुनाखिलान् ॥ २१३ ॥ विजेष्यसि यदा कृष्णविरोधस्ते तदा धनुः ॥ मामेष्यतीति तेनोक्तो नव्यरुध्यत केशवे ॥ २१५ ॥ स्वसुः स्नेहाच्च कृष्णस्य यज्ञकारयितृत्वतः ॥ भीमार्जुनबलाच्चैव माद्रेयाय ददौ करम् ॥ २१६ ॥

कृष्णादिति । अमुनाधनुषाकृष्णादखिलानन्यानेवविजेष्यसि । नतुकृष्णमितिभावः । यदातेकृष्णविरोधःकृष्णेनसहविरोधो भविष्यतीतिशेषः । तदाधनुःमांएष्यतिइतितेनशंकरेण उक्तोरुग्मीकेशवे नव्यरुध्यतविरोधंनचकार ॥ २१४ ॥ केशवेविरोधाकरणेनिमित्तांतरमाह । स्वसुरिति । सहदेवेनविरोधाकरणेकिन्निमित्तमित्यतआह कृष्णस्येति । कृष्णस्ययज्ञकारयितृत्वतः । यज्ञंकारयतीतियज्ञकारयितातस्यभावःयज्ञकारयितृत्वं । यज्ञकारयितृत्वहेतोरित्यर्थः । सहदेवायकरदानेनिमित्तांतरमाह । भीमार्जुनबलादेवच भीमार्जुनबलादपि ॥ २१५ ॥ २१६ ॥ ॥ ॥ ॥ ॥

बेलनस्वाभाविकबलेन अतएवप्रतापवान् ॥ २१७ ॥ स्मृत्याभियानउभयोरपिसाप्रतिज्ञांतेषांविधायेति पूर्वंहिडिंब्यायथाप्रतिज्ञाकृता तथाप्रतिज्ञानुसारेणस्मृतं सहदेवेने तिशेषः । समागतंसम्यक्हर्षेणागतंघटोत्कचं विभीषणेविभीषणजयविषयेसमादिशत् । सघटोत्कचःययौ असावपिविभीषणोपि अपिशब्दस्तत्पराक्रमसूचकः महाकरं ददौ ॥ २१८ ॥ राघवप्रसादेनजयीविभीषणः किमर्थंघटोत्कचायमहाकरंददावित्यतआह । पुरेति । पुराअस्यविभीषणस्य घटोत्कचेसमागते करंदेहीत्यादिराघवोदितं यत्तदखिलंतदाघटोत्कचागमनकाले सविभीषणःअस्मरद्धीत्यध्याहारः। पुनःकरदानेकारणत्रयंदर्शयति । विचार्येति तंराघवंकेशवंकृष्णमितिविचार्यज्ञात्वेत्यर्थः । भीमपार्थयोःबलंविज्ञायपांडवान्दिवौकसःदेवानवेत्यज्ञात्वा सविभीषणःकरंददौ ॥ २१९ ॥ सःआप्यलब्ध्वामाद्रिनंदनंसहदेवं ययौप्राप । सचसहदेवः ॥ २२० ॥ वीरश्चवीरो

जिग्ये बलेनान्यनृपान्सहदेवः प्रतापवान् ॥ २१७ ॥ तथा स्मृतं समागतं घटोत्कचं विभीषणे ॥ समादिशद्ययौ च सोप्यसौ ददौ महाकरम् ॥ २१८ ॥ पुरा हि राघवोदितं तदस्य सोखिलं तदा ॥ विचार्य केशवं च तं बलं च भीमपार्थयोः ॥ दिवौकसश्च पांडवानवेत्य सोददात्करम् ॥ २१९ ॥ महौघरत्नसंचयं स आप्य भीमसेनजः ॥ ययौ च माद्रिनंदनं स चाययौ स्वकं पुरम् ॥२२०॥ नकुलः पश्चिमाशायां विजिग्येऽखिलभूभृतः ॥ करमाप च वीरोसौ सौहार्दादेव मातुलात् ॥ आययौ च महारत्नसंचयेन स्वकं पुरम् ॥२२१॥ अर्जुनः कपिवरोच्छ्रितध्वजं स्यंदनं समधिरुह्य गांडिवी ॥ यात एव दिशमुत्तरां तदा पार्वतेयकुनृपाः समाययुः ॥ २२२ ॥ त्रैगर्ताः पार्वतेयाश्च सहिताः पांडुनंदनम् ॥ अभ्येत्य योधयामासुर्जानंतस्तच्चिकीर्षितम् ॥ २२३ ॥ ॥ ॥

पिअसौनकुलः सौहार्दादेवस्नेहादेव मातुलाच्छल्यात्करमाप । नतुपराक्रमादितिभावः । महारत्नसंचयेनोत्तमरत्नसमूहेनसहितइतिशेषः ॥२२१॥ कपिवरोच्छ्रितध्वजंकपिवरेणवानरश्रेष्ठेनहनूमताउच्छ्रितःउन्नतःध्वजोयस्मिन्तथा तत्स्यंदनंरथंयदैवयातः तदैवपार्वतेयकुनृपाःपर्वतसंबंधिनःपार्वतेयाःपार्वतेयाश्चतेकुत्सिताश्चतेनृपाश्चेतिपर्वतेविद्यमानाःआभीरनिषादादिकुत्सितनृपाइत्यर्थः । नतुक्षत्रकुलोत्पन्नाःसमाययुः युद्धार्थमितिशेषः ॥ २२२ ॥ त्रैगर्ताःत्रैगर्ताख्यगणाः तच्चिकीर्षितंतस्यअर्जुनस्यकर्तुमिष्टंजानंतःसंतः ॥ २२३ ॥ ॥ ॥ ॥ ॥ ॥

युगपत्सर्वान् एकदैवतांदिशं उदीचींदिशं ऊर्जितंबाहुबलादिनोत्कृष्टं भगदत्तंप्राव्रजत्प्राप । तेनभगदत्तेनअस्यार्जुनस्य ॥ २२४ ॥ सगजः सुप्रतीकाख्यगजसहितःस भगदत्तःश्रांतःसन्नाह । किमिति । तेतवसमरकारणंयुद्धकारणंब्रूहि । इत्याहेतिसंबंधः । अथार्जुनःतुविशेषेणकरंदेहीतिप्राह ॥ २२५ ॥ सोपिभगदत्तोपितवपितावासवः मद्गुरुः इत्यर्जुनंप्रत्युक्तेतिशेषः । सादरंप्रीतिपूर्वकंअमुष्यकरंअदात् । पितुःशिष्योह्यात्माशिष्यइतिवचनादर्जुनोपिमद्गुरुरित्यभिप्रायेणकरंददावितिभावः । इहअस्त्रसत्ता समयेत्वंहरिवरास्त्रतेजसा नरकायश्रीवराहदत्तोत्तमास्त्रतेजसाजेतुंनैवशक्ष्यसि । नशक्तोसि । मामितिशेषः । इत्यवदत् ॥ २२६ ॥ उत्तरंतर्हि परीक्षणंकुर्वित्युत्तरंनैवाह कथंभूतः व्यर्थंकलहंअनिच्छन् करःप्रातः कलहेनाकिंप्रयोजनमित्यभिप्रायवानित्यर्थः । तर्हि स्वापकर्षंश्रुत्वाकथंतूष्णींस्थितइत्यतआह । स्नेहेति । स्नेहयंत्रितःस्नेहबद्धः

तान्विजित्य युगपत्स पांडवः संजयन् क्रमश एव तां दिशम् ॥ प्राव्रजच्च भगदत्तमूर्जितं तेन चास्य समभून्महारणः ॥२२४॥ सोभियुद्ध्य सगजो दिनाष्टकं श्रांत आह पुरुहूतनंदनम् ॥ ब्रूहि ते समरकारणं त्विति प्राह देहि करमित्यथार्जुनः ॥ २२५ ॥ सोप्यदात्करममुष्य वासवो मद्गुरुस्तव पितेति सादरम् ॥ नैव जेतमिह शक्ष्यसि त्वमित्यवदद्धरिवरास्त्रतेजसा ॥ २२६ ॥ स्नेहपूर्वं प्रदत्ते तु करेनैवाह चोत्तरम् ॥ अर्जुनो व्यर्थकलहमनिच्छन्स्नेहयंत्रितः ॥ २२७ ॥ पार्थो जित्वाष्टवर्षाणि षट्द्वीपानपरानपि ॥ अजयच्चतुर्दिशमपि सर्वशस्त्रास्त्रतेजसा ॥ २२८ ॥ पातालसप्तकं गत्वा जित्वा दैतेयदानवान् ॥ बलेश्च विष्णुवचनात्करं जग्राह सामतः ॥ २२९ ॥ जित्वा च वासुकिं भूरि रत्नमादाय सत्वरः ॥ आजगाम पुरं स्वीयं वीरो वत्सरमात्रतः ॥ २३० ॥ ॥ ॥

॥ २२७ ॥ अष्टवर्षाणिभरतखंडोत्तरं जंबूद्वीपस्थाष्टखंडान् अपरान्जंबूद्वीपव्यतिरिक्तान् । षट्द्वीपान्प्लक्षादिषड्द्वीपानपि अपिशब्देनअन्यागम्यत्वंसूचितं । चतुर्दिशमपिचतस्रोदिशोयस्यांक्रियायांतद्यथाभवतितथाअजयत् पूर्वंजंबूद्वीपस्थाष्टखंडापेक्षया सप्तद्वीपांश्चप्रयाहीतिव्यासेनोक्तमितिज्ञापयितुं पार्थइत्यस्मिन्श्लोकस्थतृतीयपादे नवाक्षराणि ॥ २२८ ॥ विष्णुवचनाद्बलिद्वारस्थकपिलाख्यविष्णुवचनात् ॥ २२९ ॥ रत्नमितिजात्येकवचनं अतएवभूरिबह्विितिविशेषणं । सत्वरःत्वरयासहितःवत्सरमात्रतः एकवत्सरमात्रेण ॥ २३० ॥ ॥ ॥ ॥ ॥

चतुर्भिःनकुलसहदेवभीमार्जुनैः । चत्वारोयेसुवर्णरत्नगिरयःसमार्जिताःसंपादिताःआसन् तेदिग्विजयार्जिताः हिशब्दःप्रसिद्धवाची नतुयाञ्चयेत्यर्थः।तेषांप्रमाणमाह ।योजनानामिति । क्रमशःउक्तक्रमेणयोजनानांदशत्रिंशच्छतंतथाचतुःशतंउच्छ्रिताः उन्नताःएकस्तुदशयोजनोच्छ्रितः। अपरःत्रिंशद्योजनोच्छ्रितःअन्यःशतयोजनोच्छ्रितः। इतरस्तुचतुःशतयोजनमुच्छ्रितः । केनकःपर्वतःसंपादितइत्यतआह । प्रतीचीति । प्रतीच्यायपसव्येनप्रतीचीआदिर्यस्यतत्वतदपसव्यंचतेनापसव्येनअप्रदक्षिणेनक्रमात् । दशत्रिंशदादिक्रमात् दिग्भ्यःपश्चिमदक्षिणपूर्वोत्तरदिग्भ्यः समार्जिताःसंपादिताः नकुलसहदेवभीमार्जुनैरितिशेषः ॥ २३१ ॥ २३२ ॥ ननु शक्रप्रस्थेतेषामवस्थानं कथमभूदित्यतआह । विश्वकर्मेति । अंतर्गताःग्राममध्येप्रविष्टाइत्यर्थः । ततेषांप्रवेशनं अद्भुतमिवाभवत् । पश्यतामितिशेषः ॥ २३३ ॥ प्रववृतेप्रवृत्तोभवत्

सुवर्णरत्नगिरयः चतुर्भिस्तैः समार्जिताः ॥ चत्वारो योजनानां हि दशत्रिंशच्छतं तथा ॥ २३१ ॥ चतुःशतं च क्रमश उच्छ्रिता दिग्जयार्जिताः ॥ प्रतीच्याद्यपसव्येन क्रमाद्दिग्भ्यः समार्जिताः ॥२३२॥ विश्वकर्मकृतत्वात्तु पुरस्याल्पेपि च स्थले ॥ अंतर्गतास्ते गिरयस्तदद्भुतमिवाभवत् ॥ २३३ ॥ ततो यज्ञः प्रववृते कृष्णद्वैपायनेरितः ॥ ऋत्विजो मुनयोत्रासन्सर्वविद्यासु निष्ठिताः ॥ २३४ ॥ द्वैपायनोक्तविधिना दीक्षितं चक्रिरे नृपम् ॥ ज्येष्ठत्वाद्याजमान्यं तु प्रणिधाय युधिष्ठिरे ॥ भीमार्जुनादयः सर्वे सह तेन समासिरे ॥ ब्रह्माणीपदयोग्यत्वात्कृष्णैका यज्ञपत्न्यभूत् ॥ २३५ ॥ पदायोग्यतया नान्याः पत्न्यस्तेषां सहासिरे ॥ २३६ ॥ आज्ञयैव जगद्धातुर्व्यासस्यानंततेजसः ॥ २३७ ॥ स्थलमप्यत्र सर्वं हि रत्नहेममयं त्वभूत् ॥ किमु पात्रादिकं सर्वं शिबिराणि च सर्वशः ॥ २३८ ॥

अत्रयज्ञेसर्वविद्यासुनिष्ठिताः तत्वविद्यादिसर्वविद्यासुसुनिष्ठिताःसुतरांकुशलाइत्यर्थः ॥ २३४ ॥ नृपंयुधिष्ठिरंदीक्षितंचक्रिरे । ऋत्विजइतिशेषः । दीक्षायांचाक्रिरइत्यपिपाठः । भीमार्जुनादयःज्येष्ठत्वात् याजमान्यंयजमानत्वंयुधिष्ठिरेप्रणिधाय तेनयुधिष्ठिरेणसहसमासिरेउपासिरेउपविष्टाः ब्रह्माणीसरस्वतीतस्याः ॥ २३५ ॥ तेषांपांडवानांअन्याःपत्न्यः पदायोग्यतयाब्रह्माणीपदस्यअयोग्यतयानसहासिरे तैःसहनोपविष्टाः ॥ २३६ ॥ अत्रयज्ञेव्यासस्याज्ञयैव इच्छयैवेत्यर्थः ॥ २३७ ॥ पात्राणिआदीनियस्यसतथा स्वार्थेकप्रत्ययः । सर्वमासनग्रहोपस्करंसर्वशःशिबिराणियज्ञशालाअश्वशालाश्चकिमुवक्तव्यम् ॥ २३८ ॥ ॥ ॥

पार्थैःभीमादिचतुर्भिर्दिग्जयेदिग्जयसमये आहूतमाकारितं ब्रह्मशर्वशक्रादयःपूर्वकायस्यतत्तथा । सर्वलोकद्विसप्तकंपातालादिसप्तकंपृथिव्यादिसप्तकंचतदायज्ञसमत्रे अत्रयज्ञस्थलंप्रतिअगमत् ॥ २३९ ॥ सहात्मजोधृतराष्ट्रः ॥ २४० ॥ माहिष्यःजांबवत्यादिषट् चशब्देनशताधिकषोडशसहस्रस्त्रियः ॥ २४१ ॥ सर्वजगतांएकत्र संगमःमेलनंयस्मिन्तत्तथा तस्मिन्तत्रयज्ञस्थलेअत्रविवादकथासु व्यासःप्राश्निकःबभूव । प्राश्निकलक्षणंहरिःपरिपूर्णचिद्घनःभगवानितित्रिशेषणत्रयेणदर्शितं । तथोक्तं । अशेषसंशयच्छेत्तानिःसंशयउदारधीः । एकश्चेत्प्राश्निकोज्ञेयःसर्वदोषविवर्जितइति ॥ २४२ ॥ तत्वनिर्णयकथासुतत्समोनास्ति । उत्तमःकुतःएषःपारःप्रकृतिमतीतःउत

आहूतं दिग्जये पार्थैस्तदा लोकद्विसप्तकम् ॥ सर्वमत्रागमद्ब्रह्मशर्वशक्रादिपूर्वकम् ॥ २३९ ॥ भीष्मो द्रोणस्तुविदुरो धृतराष्ट्रः सहात्मजः ॥ सस्त्रीका आययुस्तत्र बाह्लीकश्च सहात्मजः ॥ २४० ॥ तथैव यादवाः सर्वे बलभद्रपुरोगमाः रुक्मिणीसत्यभामाद्या माहिष्यः केशवस्य च ॥ २४१ ॥ तत्र सर्वजगदेकसंगमे तत्वनिर्णयकथा बभूविरे ॥ प्राश्निकोत्र परिपूर्णचिद्घनो व्यास एव भगवान्बभूवह ॥ २४२ ॥ तत्वनिर्णयकथासु निर्णयो वासुदेवगुणविस्तरोभवत् ॥ नास्ति तत्सदृश उत्तमः कुतः पार एष न ततोन्य इत्यपि ॥ २४३ ॥ बादरायणभृगूत्थरामयोः शृण्वतोः परमनिर्णये कृते ॥ मोदमानजनतासमागमेऽपृच्छदत्र नृपतिर्यतव्रतम् ॥ २४४ ॥ जानमानोपि नृपतिः सर्वपूज्यतमं हरिम् ॥ संशयं भूभृतां भेत्तुं भीष्मं पप्रच्छ धर्मवित् ॥ २४५ ॥ नास्ति नारायणसमामिति वादेन निर्णये ॥ कृते ब्रह्मादिभिरपि कृष्णं मर्त्यं हि मेनिरे ॥ २४६ ॥ नृपास्तस्मादयं कृष्णो नारायण इति स्मह ॥ सम्यग्ज्ञापयितुं धर्मसूनुर्भीष्ममपृच्छत ॥ २४७ ॥ ॥ ॥ ॥ ॥

मत्वसीमेतिवा वासुदेवगुणविस्तरःगुणानांविस्तरोभवत् परतत्वनिर्णयोभवत् ततःवासुदेवादन्यः परोनास्तीतिनिर्णयोभवत् ॥ २४३ ॥ मोदमानाचसाजनताचतस्याः समागमेसति अत्रसभायांनृपतिःधर्मजःयतव्रतं भीष्ममपृच्छत् । अग्रपूजार्हःकइतिअपृच्छदित्यर्थः ॥२४४॥ भूभृतांसंशयंकृष्णःनारायणोवानवेतिसंशयंभेत्तुं॥२४५॥ निर्णयेकृतेभूभृतांसंशयःकुतइत्यतआह नास्तीति । ब्रह्मादिभिःनास्तिनारायणसममितिवादेननिर्णयेकृतेसत्यपि नृपाःकृष्णस्यनारायणत्वमजानंतइतिशेषः । कृष्णंमर्त्यं मेनिरे ॥ २४६ ॥ हियस्मात्तस्मादयंकृष्णःनारायणइतिसम्यक्ज्ञापयितुं अपृच्छत राज्ञामितिशेषः ॥ २४७ ॥ ॥ ॥

ननु यदिब्रह्माद्या:अत्रस्थास्तर्हि तान्किमर्थंनापृच्छदित्यतआह । ब्रह्मादयइति । ब्रह्मादयोनृभिर्मर्त्यवद्दृश्यंते यस्मात्तस्मात्तदुक्तौनृणांविश्वासाभावात् तान्नापृच्छदिति भाव: । तर्हि मुनय:किमर्थंनपृष्टाइत्यतआह । नचेति । अत:तान्नापृच्छदित्याशय: ॥ २४८ ॥ तर्हिभीष्मोक्तौकथंविश्वासइत्यतआह । सर्वेति । एतेनृपाअपिजानंति यस्मात्तस्माद्भीष्ममपृच्छत् । भीष्मंप्रष्टुंकारणांतरमाह । कुलेति ॥ २४९ ॥ भीष्मंकिमपृच्छदित्यतआह । पितामहेत्यादिना । अग्रपूजार्ह:अग्रेआदौपूजायांअर्ह:यो ग्य: प्रश्नस्यअभिप्रायमाह । ब्रह्मेत्यादिना । अत्रयज्ञस्थले ॥ २५० ॥ हरिंहर्यात्मकंश्रीकृष्णं पूज्यतममब्रवीत् । पूज्यतमंप्रभुमितिवापाठ: ॥ २५१ ॥ ननु हर्यात्म

ब्रह्मादय: सुरा यस्माद्दृश्यंते मर्त्यवन्नृभि: ॥ न चैवातितराश्यासो नृणामस्ति मुनिष्वपि ॥ २४८ ॥ सर्वशास्त्रविदं भीष्मं जानंत्येते नृपा अपि ॥ तस्माद्भीष्ममपृच्छत्स कुलवृद्धत्वतस्तथा ॥२४९॥ पितामहाग्रपूजार्ह: कोत्र लोकस मागमे ॥ ब्रह्मशर्वादयश्चात्र संति राजान एव च ॥ २५० ॥ इति पृष्टोब्रवीद्भीष्म: कृष्णं पूज्यतमं हरिम् ॥२५१॥ यद्यप्येकस्त्रिधा विष्णुर्व्यासेविप्रभृगुकृष्णेषु ॥ प्रादुर्भूतस्तथाप्येते नृपा हि व्यासरामयो: ॥ विप्रत्वान्नाविरुध्यंते तत ए व हि युक्तताम् ॥२५२॥ मन्यंते न विरोधश्च तेषां तत्र हि तादृश: ॥ २५३ ॥ अविवादे प्रसिद्धिश्च नैवास्य भविता क्वचित् ॥ तस्मात्कृष्णाय दातव्यमिति भीष्मेण चिंतितम् ॥ २५४ ॥ कृष्णाय दत्ते राजानो विवादं कुर्युरंजसा ॥ विवादेन च कीर्ति: स्याद्वासुदेवस्य विस्तृता ॥ तत: कृष्णायाग्रपूजा दत्ता पार्थैर्जगत्पुर: ॥२५५॥ ॥

केव्यासेभार्गवेचसति भीष्म:किमर्थंकृष्णमेवाब्रवीदित्यतआह । यद्यपीत्यादिना । यद्यपिप्रादुर्भूत:तथाएतेनृपा:व्यासरामयोर्विप्रत्वात् पूजार्हावितिनविरुध्यंतेविरोधंनकुर्वं ति ततएवविप्रत्वादेवयुक्ततांमन्यंते अग्रपूजायामितिशेष: तेषांराज्ञांतत्रव्यासरामयोर्विषयेतादृश: तादृशविरोधोन यादृश:कृष्णइत्यर्थ: ॥ २५२ ॥ २५३ ॥ अविवादेस तिअस्यकृष्णस्य प्रसिद्धिर्नैवभविता अयंनारायणइतीतिशेष: । कृष्णायदत्तेसति अंजसाराजानोविवादंकुर्यु: विवादेनचवासुदेवस्य विस्तृताकीर्ति:स्यात्तस्मात्तस्मात्कृष्णा यदातव्यंअग्रार्हणमिति भीष्मेणचिंतितमितियोजना ॥ २५४ ॥ तत:विवादार्थंपुर:अग्रे ॥ २५५ ॥ ॥ ॥

तदनंतरंकृष्णानंतरं व्यासभार्गवयोः अर्घ्यापूजांददुः पांडवाइतिशेषः तत्कुतःसाक्षातदैक्यात्तेनकृष्णेन अत्यंतैक्यात् यथायोग्यंयोग्यताम् अनतिक्रम्येतियथायोग्यं तारतम्येनेति भावः। अन्यानपिब्रह्मादीनपि ॥ २५६ ॥ कृष्णेकृष्णविषये अर्घ्योपहारेअर्घ्याहरणे उपयापितेसमर्पितेसति चेदिराजःशिशुपालः अमुंकृष्णमनिंदत्। तन्निंदकं जगद्गुरुविनिंदकंजगद्गुरुःकृष्णःतस्यविनिंदकं ऋद्धमन्युःअभिवृद्धकोपः ॥ २५७ ॥ कृष्णविनिंदने भीमस्यकोपेकारणमाह । दूरइति। दूरेपिपरोक्षेपिविनिंदनंकरोतीतिविनिंदनकारी केशवविनिंदनकारिणोजिह्वाउच्छेत्स्य उत्पाटयामीइति अस्यभीमस्योरुतरातिशयेनउर्वीदृढाप्रतिज्ञाअस्तीतिशेषः। सरिदात्मजःनदीजोभीष्मःनिजयोः स्वद्वारपयोःकेशववचःकेशवोक्तंवचःभीमस्यसंश्राव्य तंभीमंजगृहे ॥ २५८ ॥ केशवोक्तंस्पष्टयति। मयैवेति। पुराशापकालेकेशवः मयैववध्यौभवतइतिशेषः।

व्यासभार्गवयोः साक्षात्तदैक्यात्तदनंतरम् ॥ अर्घ्यां पूजां ददुश्चान्यान्यथायोग्यमपूजयन् ॥२५६॥ अर्घ्योपहार उपयापित एव कृष्णे कोपादनिंददमुमाशु च चेदिराजः॥ श्रुत्वैव तत्पवनजोभियथो नृपं तं हंतुं जगद्गुरुविनिंदकमृद्धमन्युः ॥ २५७॥ दूरेपि केशवविनिंदनकारिजिह्वामुच्छेत्स्य इत्युरुतरास्य सदा प्रतिज्ञा ॥ भीमस्य तं तु जगृहे सरिदात्मजोथ संश्राव्य केशववचो निजयोर्वधाय ॥२५८॥ मयैव वध्याविति तावाह यत्केशवः पुरा ॥ तच्छ्रुत्वा भीमसेनोपि स्थितो भीष्मकरग्रहात् ॥ २५९ ॥ जानन्नपि हरेरिष्टं स्वकर्तव्यतयोत्थितः॥ भीम एतावदुचितमिति मत्वा स्थितः पुनः ॥ २६० ॥ देवसंघभविनां महानभूद्वीक्ष्य तोष इह केशवेधिकाम् ॥अर्चनां च इह मानुषो जनो मध्य एव स तु संस्थितोभवत्॥ २६१ ॥ ॥ ॥ ॥ ॥

एवकारोन्ययोगव्यवच्छेदकइति तौजयविजयौयदाह तत्श्रुत्वा भीष्मकरग्रहात्भीष्मकृतस्वकरग्रहादित्यर्थः। भीमोपिशत्रूणांभयंकरोपिस्थितः तूष्णीमितिशेष ॥२५९॥ हरेरिष्टंतद्धननाभावःइष्टमितिजानन्नपि स्वकर्तव्यतयाप्रतिज्ञापालनस्यस्वकर्तव्यतया उत्थितोभीमःएतावदुद्योगकरणंउचितं नतुहननमुचितमितिमत्वा स्थितःउपविष्टइत्यर्थः। भीष्मकरग्रहव्याजेनेतिशेषः। पुनःहननोद्योगंनचकारेतिशेषः ॥ २६० ॥ इहकेशवेअस्मिन्कृष्णंअधिकामर्चनांअग्र्यपूजांईक्ष्य देवसंघभविनांदेवसमूहोत्पन्नानांसतामित्यर्थः। महांस्तोषःआनंदोभूत् इहसभायांयोमध्यःमध्यमोमानुषोजनःनित्यसंसारीजनः सतुमध्यएवमध्यावस्थायांसंस्थितोभवत् नित्यसंसारिणःसुखदुःखस्वभावत्वादित्यर्थः मध्यःमध्येइतिएवेत्यव्ययबलेनआवृत्य पदच्छेदः ॥ २६१ ॥ ॥ ॥ ॥ ॥

तत्रकेशवपूजाविषयेविमनसःविरुद्धमनसःचेदिपःअधिकंयथाभवतितथा दुर्वचोभिरितिइत्थंभूतलक्षणेतृतीया । कृष्णंआर्छत्प्राप ऋगतावितिधातुः । उरुसद्गुणार्णवमिति विशेषणेन दुर्वचसामास्पदत्वंनिरस्तं । दुर्वचांसिश्रावयन्प्रापेतिभावः ॥ २६२ ॥ युधेयुद्धार्थअरिणाचक्रेण ॥ २६३ ॥ निकृंतमानकंधरःछिन्नगलःसजयः तंजयंआश्रितोऽसुरःअंधंतमःप्राप्तवानित्यर्थः ॥ २६४ ॥ जयःकेशवंकृष्णंप्रविश्यइदानीमितिशेषः । कृष्णेस्वलोकंप्राप्तेसति पुनःपार्षदःद्वारपालोभवदित्याध्याहारेणयोज्यम् । असौक्रतुःराजसूयःयथोदितःयेनप्रकारेणराजसूयविधिःउक्तःतथापांडवैःप्रवर्तितः ॥ २६५ ॥ उपायनेविषयेसुवर्णरत्नभारकान्उपानयन् अस्यउपायनस्यग्रहेग्रहणेनृपोयु

आसुरा इह सुयोधनादयस्तत्र ते विमनसो बभूविरे ॥ दुर्वचोभिरधिकं च चेदिपः कृष्णमार्छदुरुसद्गुणार्णवम् ॥ ॥ २६२ ॥ समाह्वयच्च केशवं युधे तमाशु केशवः ॥ निवार्य तस्य सायकान् जघान चारिणा प्रभुः ॥ २६२ ॥ निकृंतमानकंधरः स भक्तिमानभूद्धरौ ॥ तमाश्रितश्च योसुरो महातमः प्रपेदिवान् ॥ २६४ ॥ जयः प्रविश्य केशवं पुनश्च पार्षदोभवत् ॥ असौ च पांडवैः क्रतुः प्रवर्तितो यथोदितः ॥ २६५ ॥ सुवर्णरत्नभारकान् बहून्नृपा उपानयन् ॥ उपायने सुयोधनं नृपोदिशद् ग्रहेस्य च ॥२६६॥ अभोजयंस्तथा द्विजान्यथेष्टभोज्यभक्षकैः ॥ सुवर्ण रत्नभारकान् बहूंश्च दक्षिणां ददुः ॥ २६७॥ यदिष्टमास यस्य च प्रदत्तमेव पांडवैः ॥ समस्तमत्र सर्वशोथ सस्नुरुद्धता मुदा ॥ २६८ ॥ नदत्सुरोरुदुंदुभिप्रगीतदेवगायकाः ॥ प्रनृतदिव्ययोषितः सुरापगां व्यगाहयन् ॥ २६९ ॥

धिष्ठिरःसुयोधनंआदिशत् ॥ २६६ ॥ ददुःद्विजेभ्यइतिशेषः २६७ ॥ अत्रयज्ञेअस्यअतिथेःयदिष्टमपेक्षितमास तत्समस्तंपांडवैःप्रदत्तमेव । अथयज्ञसमाप्त्यनंतरं । सर्वशःसबांधवाःपांडवाःमुदाउद्धताःपरिपूर्णाइत्यर्थः । सस्नुः अवभृतस्नानंचक्रुः ॥ २६८ ॥ नदंतःशब्दंकुर्वंतःसुरोरुदुंदुभयोयेषांतेनदत्सुरोरुदुंदुभयःप्रकृष्टंगीतंयेषांतेतथा प्रगीताःदेवगायकाःयेषांतेप्रगीतदेवगायकाःनदत्सुरोरुदुंदुभयश्चतेप्रगीतदेवगायकाश्चेतितथा प्रनृताःनृत्यंकुर्वंत्यःदिव्याःयोषितोयेषांतेतथा पार्थाःसुरापगांगंगांप्रतिगत्वेतिशेषः । व्यगाहयन् स्रष्टारंसर्वलोकानांस्मृत्वेत्याद्यवगाहविधिविशेषविधिनाअवगाहयन् अघमर्षणंचक्रुः ॥ २६९ ॥ ॥ ॥

तेषांर्थाःविगाह्यस्नात्वा पुरंशक्रप्रस्थं सुराःयज्ञार्थमागताःसुराःस्वसद्मस्वलोकम् ॥२७०॥ सर्वराजसुस्वकंपुरंगतेषुसत्सु सभीष्मकेषुसहांबिकेयकेषु सर्वशःस्वकेषुस्वकंपुरंगतेषुसत्सु ॥ २७१ ॥ विचित्ररत्नकारिते मयेनेतिशेषः ॥ २७२ ॥ परिग्रहाःभार्याःतथैवभीमफल्गुनौ हरेरुपकृष्णस्यसमीपेउपाविशन्उपाविष्टाः ॥ २७३ ॥ वायुसूनुनासहैवसहितापार्षतात्मजाद्रौपदी सत्यभामिनींरुग्मिणींउपैवउपविष्टेतिशेषः ॥ २७४ ॥ यमौपार्षतादयःधृष्टद्युम्नादयोबांधवाःआविशन्उपविष्टाःभूभृतोयुधिष्ठिर

समस्तराजसंयुता विगाह्य जान्हवीजले ॥ पुरं ययुः पुनश्च ते स्वसद्म चागमन्सुराः ॥ २७० ॥ गतेषु सर्वराजसु स्वकं पुरं स्वकेषु च ॥ स भीष्मकेषु सर्वशः सहांबिकेयकेषु च ॥ २७१ ॥ विचित्ररत्नकारिते रविप्रभे सभातले ॥ स केशवो वरासने विवेश धर्मनंदनः ॥ २७२ ॥ तथैव रुग्मिणीमुखाः परिग्रहा रमेशितुः ॥ तथैव भीमफल्गुनौ उपाविशन् हरेरुप ॥ २७३ ॥ सहैव वायुसूनुना तथैव पार्षतात्मजा ॥ उपैव रुग्मिणीं शुभां तथैव सत्यभामिनीम् ॥ २७४ ॥ यमौ च पार्षतादयो धनंजयांतिके विशन् ॥ तथैव रामसात्यकी समीप एव भूभृतः ॥ ॥२७५॥ समासतां तु सा सभा व्यराजताधिकं तदा ॥ यथा सभा स्वयंभुवः समाश्रिता च विष्णुना ॥ २७६ ॥ विचित्रहेममालिनः शुभांबराश्च तेधिकम् ॥ स्फुरत्किरीटकुंडला विरेजुरत्र ते नृपाः ॥ २७७ ॥ विशेषतो जनार्दनः सभार्यको जगत्प्रभुः ॥ यथा दिवौकसां सदस्यनंतसद्गुणार्णवः ॥ २७८ ॥ उपासिरे च तं नृपाः समस्तशः सुहृद्गणाः ॥ तदाजगाम खड्गभृत्सुयोधनः सहानुजः ॥ २७८ ॥ ॥ ॥ ॥

स्यसमीपेरामसात्यकीसमासताम् ॥२७५॥ २७६ ॥ विचित्राःआश्चर्याःहेममालासुवर्णमालाविद्यंतेयेषांतेतथा शुभांबराःशुभवस्त्राःस्फुरंतीदीप्यमानानिकिरीटकुंडलानियेषांतेतथा तेप्रसिद्धाःकुलवीर्यज्ञानादिगुणैःप्रसिद्धाइत्यर्थः । तेनृपाःसभायांउपविष्टानृपाःअत्रसभायांअधिकंयथाभवतितथाविरेजुः ॥ २७७ ॥ जनार्दनोविरेजइतिशेषः । दिवौकसांदेवानां ॥ २७८ ॥ नृपाःसुहृद्गणाश्चतंकृष्णंउपासिरे । उपासनंचक्रुरित्यर्थः । तदातस्मिन्नवसरे॥ २७९ ॥ ॥ ॥

ससुयोधनःहरिनीलरश्मिव्यूढं इंद्रनीलमणिदीप्त्याव्यूढंआच्छन्नंसभाद्वारंअजानन्सन् विहायद्वारमितिशेषः संस्फाटिकांसमीचीनस्फटिकनिर्मितां अतएवअभ्यंतराणांभि त्तेः अंतस्थितानांपदार्थानांदर्शिनःदर्शनस्यअविघातिनींअप्रतिबंधिनींभित्तिं सभायाःआवरणभूतांभित्तिं चुचुंबेप्रतिहतवानित्यर्थः । यद्वा दर्शिदर्शनविषयेनोविघातिनीं ॥ ॥ २८० ॥ नृपोपदिष्टौनृपेणयुधिष्ठिरेणउपदिष्टौआज्ञापितौ यमौभुजौगृह्य ल्यप्प्रतिरूपकमव्ययं गृहीत्वादुर्योधनस्येतिशेषः तंसभांप्रवेशयेतांप्रवेशयामासतुः तत्रसभा यांक्षणमात्रंउपविष्टः एषुपार्थेषुदिव्यांअलौकिकांश्रियंसंपदं अमृष्यमाणःअसहमानःदुर्योधनः अन्यतःअन्यत्रागात् ॥ २८१ ॥ तत्रगमनसमयेइंद्रनीलमणिमयभूमौनी रमनसा इदंजलमितिबुध्यास्ववस्त्रंस्वपरिधानवस्त्रं आर्द्रंभविष्यतीतिजगृहेऊर्ध्वंचकार । रत्नानांउरुदीधितिभिःअतिदीप्तिभिः निगूढमाच्छन्नंजलंस्थलमितिमत्वा॥२८२॥

द्वारं सभाया हरिनीलरश्मिव्यूढं त्वजानन्स विहाय भित्तिम् ॥ अभ्यंतराणां दर्शिनो विघातिनीं संस्फाटिकामा शु दृढं चुचुंबे ॥ २८० ॥प्रवेशयेतां च यमौ तमाशु सभां भुजौ गृह्य नृपोपदिष्टौ ॥ तत्रोपविश्य क्षणमन्यतोगा दमृष्यमाणः श्रियमेषु दिव्याम् ॥२८१॥ तत्रेंद्रनीलभुवि रत्नमयानि दृष्ट्वा पद्मानि नीरमनसा जगृहे स्ववस्त्रम् ॥ रत्नोरुदीधितिनिगूढजलं स्थलं च मत्वा पपात सहितोवरजैर्जलौघे ॥ २८२ ॥ तं प्राहसद्भगवता क्षितिभारनाश हेतोः सुसूचित उरुस्वरतोत्र भीमः ॥ पांचालराजसुतया च समं तथान्यैः स्वीयैस्तथानु जहसुर्भगवन्महिष्यः ॥ ॥ २८३ ॥ मंदस्मितेन किल सद्वदनेंदुबिंबो नारायणस्तु मुखमीक्ष्य मरुत्सुतस्य ॥ नोवाच किंचिदथ धर्मसुतो निवार्य प्रास्थापयद्वसनमाल्यविलेपनानि ॥ २८४ ॥ कृष्णा वृकोदरगतं बहुलं निधाय क्रोधं ययौ सशकुनिर्धृ तराष्ट्रसूनुः ॥ सुव्रीडितो नृपतिदत्तवरांबरादीन्न्यक्कृत्य मार्गगत आह स मातुलं स्वम् ॥ २८५ ॥ ॥

अत्रसभायांभूभाररूपदुर्योधनादिनाशहेतोःभगवताकृष्णेनसुसूचितः हासविषयेनेत्रादिनासूचितोभीमःद्रौपद्यासमंतथा अन्यैःस्वीयैःस्वकीयैःसात्यकिधृष्टद्युम्नाद्यैःसमंतंदु र्योधनंउरुस्वरतःउच्चध्वनिनाप्राहसत् तथाअनुभीममनुभगवन्महिष्यःकृष्णभार्याःजहसुः ॥ २८३ ॥ निवार्यहसनमितिशेषः । प्रास्थापयत्प्रेषयामास । दुर्योधनार्थमिति शेषः । जलेपतितस्यपरिधानाद्यर्थंवस्त्रमाल्यगंधान् प्रेषयामासेतिभावः ॥२८४॥ कृष्णावृकोदरगतंद्रौपदीभीमविषयेविद्यमानंक्रोधंनिधाय । स्वमनसीतिशेषः। सुव्रीडितः सन्अत्यंतंलज्जितःसन् नृपतिदत्तवरांबरादीन्युधिष्ठिरदत्तवस्त्रादीन् न्यक्कृत्यनिराकृत्यययौ। स्वपुरमितिशेषः। मार्गगतःपुरमार्गगतःसदुर्योधनःस्वमातुलंशकुनिंआह२८५

यौमांअहसतांअपहासंचक्रतुः । तयोःद्रौपदीभीमयोःसंतापंदुःखंअकृत्वा अहंजीवितुंनउत्सहेनसेहे । जीवनंसोढुमशक्तोहमितिभावः ॥ २८६ ॥ यदिअत्रअस्मिन् अपहासमयेमेशक्तिःस्यात्तर्हि वृकोदरंघातयेयं कृष्णस्यअग्रपूजांविलुंपेयंनसंशयः । शक्त्यभावात्तद्वयंनकृतमितिभावः ॥ २८७ ॥ कइच्छेतनकोपीत्यर्थः ॥ २८८ ॥ पुनःपूर्वंगेहान्निष्कासिताः अतएवपुनरित्युक्तम् । बलिभिःभ्रातृभिस्तैःवैरेणकिंनकिमपीत्यर्थः ॥ २८९ ॥ तान्पार्थान् अनुजीवस्वअनुसृत्यजीव ॥ २९० ॥ अशेषतः

यौ मामहसतां कृष्णाभीमौ कृष्णस्य सन्निधौ ॥ तयोरकृत्वा संतापं नाहं जीवितुमुत्सहे ॥ २८६ ॥ यदि मे शक्तिरत्र स्याद् घातयेयं वृकोदरम् ॥ अग्रपूजां च कृष्णस्य विलुंपेयं न संशयः ॥ २८७ ॥ ईदृशं पांडवैश्वर्यं दृष्ट्वा को नाम जीवितुम् ॥ इच्छंत करदा येषां वैश्यवत्सर्वभूमिपाः ॥ २८८ ॥ इत्युक्तः शकुनिर्वैरं दृढीकर्तुं वचोब्रवीत् ॥ किं ते वैरेण राजेंद्र भ्रातृभिर्बलिभिः पुनः ॥ २८९ ॥ अनुजीवस्व तान् वीरान् गुणज्येष्ठान् बलाधिकान् ॥ इतीरितोथ संवृद्धकोप आह सुयोधनः ॥ २९० ॥ यदि तेषां तदैश्वर्यं न मां गच्छेदशेषतः ॥ सर्वथा नैव जीवेयमिति सत्यं ब्रवीमि ते ॥ २९१ ॥ न तु बाहुबलाच्छक्य आदातुं तां श्रियं क्वचित् ॥ नेंद्रोपि समरे शक्तस्तान् जेतुं किमु मानुषाः ॥ २९२ ॥ इतीरितः पापतम आह गांधारको नृपः ॥ पापिनामखिलानां च प्रधानं चक्रवर्तिनाम् ॥ २९३ ॥ यां यां श्रियं प्रदीप्तां त्वं पांडवेषु प्रपश्यसि ॥ तामक्लेशत आदास्ये क्रीडन्नक्षैस्त्वदंतिके ॥ २९४ ॥ इतीरितः प्रसन्नधीः सुयोधनो बभूव ह ॥ प्रजग्मतुश्च तावुभौ विचित्रवीर्यजं नृपम् ॥ २९५ ॥ ॥

समस्तंसर्वथानिश्चयेन ॥ २९१ ॥ बाहुबलात्तांश्रियंआदातुंनशक्यनसमर्थइत्यर्थः । किंतुकेनाप्युपायेनहंतव्याइतिभावः । तत्कुतःइंद्रोपिनशक्तःमानुषाःकिमु ॥ २९२ ॥ नृपःशकुनिःपापिनांप्रधानं मुख्यंदुर्योधनमाह ॥ २९३ ॥ किमितिचक्रवर्तिनांप्रदीप्तांप्रकाशमानांयांयांश्रियंसंपदं पांडवेषुप्रपश्यसि । तांतांअक्लेशतःअप्रयासेन त्वदंतिकेतवसमीपे अक्षैःद्यूतसंबारिकाष्ठविशेषैःक्रीडन् आदास्ये ॥ २९४ ॥ तावुभौशकुनिदुर्योधनौ नृपंधृतराष्ट्रंप्रतिजग्मतुः ॥ २९५ ॥ ॥

द्वापरांशः द्वापरनाम्नोसुरस्यअंशः नास्तिक्यरूपः नास्तिक्याभिमानीशकुनिः विवर्णपूर्ववर्णाद्विपरीतवर्णतदेवाह । हरिणंपांडुरंकृशंदुर्योधनं । धृतराष्ट्रंप्रतिउवाच ॥ २९६ ॥ तच्छ्रुत्वादुर्मनाः विमनाःसन् कुतःकस्माद्धेतोः विवर्णादिकंजातमित्याह । द्वाभ्यांशकुनिदुर्योधनाभ्यांपथियन्मंत्रितंविचारितंतत्तावब्रूताम् ॥२९७॥ सभूमिपःतत् अक्षक्रीडनंश्रुत्वा इदंधर्मस्यविरोधिविनाशकारणं युष्माकमितिशेषः । नैवमाकुरुध्वमित्यवदत् । वःयुष्माकंएतत्कुमंत्रितंकुत्सितविचारःममइष्टंअभीष्टंन हियस्मात्तेपार्थाःस्वबाहुवीर्येणआप्तमहाश्रियःप्राप्तोत्कृष्टसंपदः ॥ २९८ ॥ मास्पृधःस्पर्धामाकुर्वित्यर्थः । विशेषतःभ्रातृभिःमास्पृधः ॥ २९९ ॥ विद्धिजानीहि ॥ ३०० ॥ इहनागपुरंप्रतिदेव

धृतराष्ट्रमथोवाच द्वापरांशोतिपापकृत् ॥ नास्तिक्यरूपः शकुनिर्विवर्णं हरिणं कृशम् ॥२९६ ॥ दुर्योधनं च तच्छ्रुत्वा कुत इत्याह दुर्मनाः ॥ अब्रूतां तौ नृपायाशु द्वाभ्यां यन्मंत्रितं पथि ॥२९७॥ श्रुत्वैव तन्नेत्यवदत्स भूपतिर्विरोधि धर्मस्य विनाशकारणम् ॥ कुमंत्रितं वो न ममैतदिष्टं स्वबाहुवीर्याप्तमहाश्रियो हि ते ॥ २९८ ॥ त्वयापि निर्जित्य दिशो मखाढ्याः कार्या स्पृधो मा गुणवत्तमैस्तैः ॥ विशेषतो भ्रातृभिरध्यपौरुषैरित्युक्त आहाशु सुयोधनस्तम् ॥ २९९ ॥ यदि श्रियं पांडवानां नाक्षैराहर्तुमिच्छसि ॥ मृतमेवाद्य मां विद्धि पांडवैस्त्वं सुखी भव ॥ ३०० ॥ यदि मज्जीवनार्थी त्वमानयाश्विह पांडवान् ॥ सभार्यां देवनायैव न चाधर्मोत्र कश्चन ॥ ३०१ ॥ वेदानुजीविनो विप्राः क्षत्रियाः शस्त्रजीविनः ॥ तृट्यते येन शत्रुश्च तच्छस्त्रं नैव चेतरत् ॥ ३०२ ॥ अतः स्वधर्म एवायं तवापि स्यात्फलं महत् ॥ इत्युक्तो मा फलं मेस्तुतवैवास्त्विति सोब्रवीत् ॥ ३०३ ॥ एवं ब्रुवन्नपि नृप आविष्टः कलिना स्वयम् ॥ पुत्रस्नेहाच्च विदुरमादिशत्पांडवान्प्रति ॥ ३०४ ॥ ॥ ॥ ॥ ॥

नायद्यूतार्थं विरोधिधर्मस्येत्येतत्सोपपत्तिकंपरिहरति । नचेत्यादिना । अत्रद्यूतकर्मणिनाधर्मः ॥ ३०१ ॥ येनशत्रुःतृट्यतेच्छिद्यते तृटिच्छेदनइतिधातुः । तच्छस्त्रमित्युच्यतेइतिशेषः । इतरत्शत्रुच्छेदकादन्यत् नैवशस्त्रंनैवेत्यर्थः ॥ ३०२ ॥ तवापिमहत्फलंस्यात् पुत्रपालनादितिशेषः ॥ ३०३ ॥ नृपःराजाकलिनाआविष्टःसन् पांडवान्प्रत्यादिशत् पार्थानानेतुमितिशेषः ॥ ३०४ ॥ ॥ ॥ ॥ ॥

कलिःयदापुत्रत्वसिद्धये उत्पत्तुंतंआविवेश । प्रथमंपितृप्रवेशःपश्चान्मातृप्रवेशइत्यादिनियमात्तं पितृभूतंआविशत् ततआरभ्ययावद्यदापुरंपरित्यज्यैवधृतराष्ट्रोवनंप्रविवे शतावत्पर्यंतं अस्माद्धृतराष्ट्रात् अंशेननैवापजग्मिवान् ॥ ३०५ ॥ ततःकल्यावेशात् तदंतरापुत्रार्थंकलिप्रवेशकालस्यधृतराष्ट्रवनगमनकालस्यमध्ये तस्यधृतराष्ट्रस्य ॥ ३०६ ॥ तंधृतराष्ट्रंइतिन्यवारयत् इतीतिकिंअयंसमुद्यमःउद्योगःतेतवमहत्पापं पापसाधनंस्यादितिशेषः । कुलस्यापिविनाशकःनाशकरोयस्मात्तस्मात् नकथाःमाक थाःनकुरु तेअयशश्चायंकुलनाशहेतुरित्यपकीर्तिश्चस्यात् ॥ ३०७ ॥ इतिब्रुवाणंधृतराष्ट्रंआहेतिशेषः । किमिति । अत्रअस्मिन् द्यूतेकलहोनस्यात् कुतःवयमेवनिवार

आविवेश कलिस्तं हि यदा पुत्रत्वसिद्धये ॥ अंशेन तत आरभ्य नैवास्मादपजग्मिवान् ॥ ३०५ ॥ यावत्पुरं परित्यज्य वनमेव विवेशह ॥ तदंतरा ततस्तस्य पापयुक्तं मनोभवत् ॥ ३०६ ॥ न्यवारयत्तं विदुरो महामतिः पापं कुलस्यापि विनाशकोयम्॥ समुद्यमो नात्र विचार्यमस्ति कृथा न तस्मादयशश्च ते स्यात् ॥ ३०७ ॥ इति ब्रुवाणं कलहोत्र न स्यान्निवारयामो वयमेव यस्मात् ॥ द्रष्टुं सुतान् क्रीडत एकसंस्थानिच्छामि पार्थांश्च सुयोधनादीन् ॥ ३०८ ॥ अतः क्षिप्रमुपानेयाः पार्था इति बलोदितः ॥ ययौ स विदुरः पार्थान् द्वारकां केशवे गते ॥ ३०९ ॥ गते हि पार्थसन्निधेः सुयोधनेथ नारदः ॥ शशंस धर्मसूनुना प्रचोदितोरिमागतम् ॥ ३१० ॥

यामः । तर्हि द्यूतेनकिंप्रयोजनमित्यतआह । अस्मादिति । एकसंस्थान्एकत्रसंस्थितात् क्रीडतःदेवनक्रीडांकुर्वाणान् पार्थान्सुयोधनादीन्सुतान् द्रष्टुमिच्छामियस्मात्त स्मात् कलहोनस्यादितिसंबंधः ॥ ३०८ ॥ पार्थाःउपानेयाःआनेतव्याइतिबलोदितःबलात्कारेणआनेतुमुदितःविदुरः केशवेइंद्रप्रस्थाद्द्वारकांप्रतिगतेसति पार्थान्प्रति ययौ ॥ ३०९ ॥ कृष्णस्यद्वारकांप्रतिगमनेकारणमाह । गतइति । पार्थसन्निधेःपार्थसमीपात् अथनारदःअत्रागतोनारदःधर्मसूनुनाप्रचोदितःवार्तांवदेतिप्रेरितःपृष्टइ त्यर्थः । आगतंअरिंशत्रुंसाल्वंशशंसअकथयत् । स्वराष्ट्रंप्रतीतिशेषः ॥ ३१० ॥ ॥ ॥ ॥

नारदःशशंसेत्युक्तंविवृणोति । कउद्यमीति । नृपेषुमध्येकउद्यमी उद्योगी विजयायेतिशेषः । इतिपृष्टःनारदआह । युधिष्ठिरेणेतिशेषः । किमिति । ससौभराटसौभपतिः साल्वःशिवाद्वरंअवाप पूर्वमितिशेषः। वृष्णिनिर्जयंरुग्मिणीहरणेवृष्णिनाकृष्णेननिर्जयंपराजयंप्राप्य । अयादवींमहीमिमांकरिष्यइतिप्रतिज्ञांकृत्वा । पांसुमुष्टिंपांसूनानेक मुष्टिंसकृदेकवारंग्रसतीतिग्रासी एतादृशःसाल्वःकृष्णजयेविषयसप्तमी बहूनब्दानूतपश्चरन् हरात्पुनःवरंआप्याजगाम स्वराष्ट्रमितिशेषः । इत्यध्याहारेणश्लोकद्वयस्यान्वयः । वृष्णिनिर्जयेइतिपाठेसत्सप्तमीप्राप्तेसतीतिशेषः ॥ ३११ ॥ ३१२ ॥ विजयंपार्थानामितिशेषः । उद्यमंउद्योगंकरोतीत्याहेतिसंबंधः । धर्मजःतन्नारदोक्तंनिशम्य कृष्णमुखशीतांशुमंडलंकृष्णमुखचंद्रंसमैक्षत् । मुखस्यचंद्रबिंबदृष्टांतेन कृष्णस्यानाकुलत्वंसूचितम् ॥ ३१३ ॥ ३१४ ॥ सगोविंदःअस्तुतथास्तुआगच्छतुकिंकरिष्य

क उद्यमी नृपेष्विति प्रपृष्ट आह नारदः ॥ स सौभराड्वरं शिवादवाप वृष्णिनिर्जयम् ॥ ३११ ॥ पांसुमुष्टिं सकृद्ग्रासी बहूनब्दांस्तपश्चरन् ॥ आजगाम हरादाप्य वरं कृष्णजये पुनः ॥ ३१२ ॥ स श्रुत्वा मागधवधं दिशां विजयमेव च ॥ राजसूयक्रतुं चैव शिशुपालवधं तथा ॥३१३॥ यदून् प्रत्युद्यमं तूर्णं करोतीति निशम्य तत् ॥ समैक्षद्धर्मजः कृष्णमुखशीतांशुमंडलम् ॥३१४॥ अस्त्वित्युक्त्वा स गोविंदः प्रेषयामास यादवान् ॥प्रद्युम्नादीन् दिनैः कैश्चित्स्वयं चागात्सहाग्रजः ॥३१५॥ विदुरस्तु ततो गत्वा धर्मराजमथाह्वयत् ॥ भ्रातृभिर्वार्यमाणोपि पृथया च स धर्मराट् ॥ ३१६ ॥ सार्धं मात्रा भ्रातृभिश्च कृष्णया च ययौ द्रुतम् ॥ ३१७ ॥ ज्येष्ठाज्ञयैव विदुरो आह्वयन्नपि धर्मजम् ॥ नागंतव्यमिति प्राह दोषानुक्त्वाक्षजान्बहून् ॥ ३१८ ॥ इतीह दोषसंचयस्तथापि ते पितुर्वचः ॥ समीक्ष्यतद्द्वयं स्वयं कुरुष्व कार्यमात्मनः ॥ ३१९ ॥ ॥ ॥ ॥

तीत्यर्थः । इत्युक्त्वाकैश्चिद्दिनैःकतिपयदिनैःकालांतरेणेत्यर्थः स्वयंअगात् ॥ ३१५ ॥ ततःकृष्णगमनानंतरं आह्वयत् द्यूतार्थमितिशेषः ॥ ३१६ ॥ वार्यमाणोपितैः सार्धंययौ द्यूतार्थमितिशेषः ॥३१७॥ ज्येष्ठाज्ञयैवाह्वयन्नपिअक्षजान्अक्षक्रीडाजातान् सभामेतिकितवइत्यादिश्रुत्युक्तान्बहून्दोषानुक्त्वा नागंतव्यमितिप्राह ॥३१८॥ इत्युक्तप्रकारेणइहअक्षक्रीडायांदोषसंचयोयद्यपितथापि तेपितुर्वचःअक्षक्रीडाकर्तव्येतिपितुर्वचोस्तीतिशेषः । तद्द्वयंअक्षक्रीडोक्तंदोषसंचयंपितृवचनंचेतिद्वयंस्वयंसमीक्ष्यविचार्य आत्मनःकार्यंकर्तुंयोग्यंकुरुष्व ॥ ३१९ ॥ ॥ ॥ ॥ ॥

पांडवःकलिप्रवेशतःनिमित्तात्समासदत्प्राप ॥ ३२० ॥ गमनेकारणांतरमाह । कल्यावेशादिति । पूर्वमेवशास्त्रसंग्रहणकालेप्रतिजज्ञे किमिति । आहूतोहंदेवनार्थमि तिशेषः । वारितोपिद्यूतकरणात् नैवनिवर्तेयंइतिप्रतिजज्ञेइतिसंबंधः ॥ ३२१ ॥ तेनप्रतिज्ञाकरणेनआयात् किमर्थंनिवारितइत्यतआह । नहीति । द्यूतकृतःपुरुषस्य नधर्मःविशेषतःलोकगुरोःकर्मप्रवर्तकत्वेनलोकगुरोःक्षत्रियस्यनधर्मः हियस्मात्तस्मादितिसंबंधः ॥ ३२२ ॥ वैचित्रवीर्यतनयेनविचित्रवीर्यएववैचित्रवीर्यःस्वार्थेऽण्प्रत्य यकृतेवैचित्रवीर्यःतस्यतनयःविचित्रवीर्यतनयइत्यर्थः तेनधृतराष्ट्रेणतथा तमुपधृतराष्ट्रस्यसमीपेमुखराःमुख्याःआसेदुःप्रापुः ॥ ३२३ ॥ अस्यधृतराष्ट्रस्यतनयाःदुर्योध

इतीरितोपि पांडवो ययौ कलिप्रवेशतः ॥ विचित्रवीर्यजं नृपं समासदत्ससैनिकः ॥ ३२० ॥ कल्यावेशान्नृपतिः प्रतिजज्ञे पूर्वमेव धर्मात्मा ॥ आहूतो द्यूतकरणान्निवर्तेयं नैव वारितोपीति ॥ ३२१ ॥ तेनायात्स सुहृद्भिर्निवार्यमाणो नागपुरमाशु ॥ न हि धर्मो द्यूतकृतो विशेषतः क्षत्रियस्य लोकगुरोः ॥ ३२२ ॥ वैचित्रवीर्यतनयेन तु पांडुपुत्राः ॥ संभावितास्तमुप च न्यवसन्निशायाम् ॥ प्रातस्तु भीष्ममुखराः सकलाश्च भूपाः आसेदुराशु च सभां सह पांडुपुत्रैः ॥ ३२३ ॥ वैचित्रवीर्यनृपतिर्विदुरान्वितोस्य गांधारराजसहितास्तनयाः सकर्णाः ॥ प्राप्ताः सभातलम थाह्वयदत्र धर्मराजं सुतः सुबलकस्य स देवनाय ॥ ३२४ ॥ सर्वांश्च तत्र कलिराविशदेव भीमपूर्वान्विनैव चतुरः स पृथां च कृष्णाम् ॥ क्षत्तारमेव च ततो न हि भीष्ममुख्यैस्ते वारिताः कुलविनाशनकर्मवृत्ताः ॥३२५॥ भीमादिभिः स विदुरेण च वार्यमाणो द्यूते निधाय पणमप्यखिलं स्ववित्तम् ॥ गांधारकेण विदिताक्षहृदा जितो द्राक्पांडोः सुतोथ नकुलं न्यदधात्पणाय ॥ ३२६ ॥ ॥ ॥ ॥ ॥

नायाः गांधारराजसहिताःशकुनिसहिताःअथअत्रसभायांसुबलकस्यसुतःशकुनिःदेवनायद्यूतक्रीडायै ॥ ३२४ ॥ तत्रसभायांभीमादिसप्त चतुरोभ्रातॄन्सपृथांकुंत्यास हवर्तमानां कृष्णांचक्षत्तारंविदुरंविनैव सर्वानाविशदेव ततःकल्यावेशात्कुलविनाशहेतुभूतद्यूतकर्माणि प्रवृत्तास्तेदुर्योधनादयःननिवारिताः ॥ ३२५ ॥ विदिताक्षहृदाज्ञाता क्षाभिप्रायेणगांधारकेणशकुनिना द्राक्शीघ्रंजितःपराजितोभूत् अथनकुलंपणायन्यदधात् ॥ ३२६ ॥ ॥ ॥

सोमकसुतांकृष्णांराजास्वमपिआत्मानमपिनिधाय पणमितिशेषः। विजितःपराजितोभूत् पृषतात्मजपुत्रिकायाःद्रौपद्याःदिदेश । आनयनार्थमितिशेषः ॥३२७॥ सूतः तदंतंद्रौपदीसमीपंगत्वा इमांकृष्णांप्रतिसमकथयत् कथयामास। किमिति । द्यूतमध्येजितासिपणतयोत्सृष्टासि समितिंसमूहंप्रतिआयाहीतिसंबंधः। अथोसाद्रौपदी अब्रवीत्। अहंगुरूणांश्वशुरभीष्मादीनांसमितिंनायास्ये इत्यब्रवीदितिसंबंधः। ससूतःययौ सोपिधार्तराष्ट्रोपिनृपः भीमभीतंबलात्कारकरणेभीमोमांहनिष्यतीतिभीमाद्भीतममुंसूतंज्ञात्वा दुःशासनमदिशत्। कृष्णानयनायेतिशेषः ॥३२८॥ सदुःशासनःकेशपक्षकेकेशभागेप्रगृह्य स्वमातुःपुरःअयुग्मवाससींउत्तरीयवस्त्ररहिताम्॥३२९॥ रजस्वलासतीसमाहृता सभांप्रतीतिशेषः। धर्मिभिःधर्मोविद्यतेयेषांतेधर्मिणः तैस्तथाभवद्विधैःभवत्सदृशैःएषःअधर्मःकथंनवार्यते ॥ ३३० ॥ छलात्मकेछद्मस्वरूपेद्यूते

तस्मिन् जितेथ सहदेवमथार्जुनं च भीमं च सोमकसुतां स्वमपि क्रमेण ॥ राजा निधाय विजितोथ सुयोधनः स्वं सूतं दिदेश पृषतात्मजपुत्रिकायाः ॥ ३२७ ॥ सूतो गत्वा तदंतं समकथयदिमां द्यूतमध्ये जितासि क्षिप्रं चायाहि राज्ञां समितिमुरुतरामित्यथो साप्यवादीत् ॥ नाहं यास्ये गुरूणां समितिमिति ययौ सोप्यमुं भीमभीतं ज्ञात्वा दुःशासनं सोप्यदिशदथ नृपो धार्तराष्ट्रोनुजं स्वम् ॥३२८॥ स पापपूरुषोत्तमः प्रगृह्य केशपक्षके ॥ पुरः स्वमातुरानयत्सभामयुग्मवाससीम् ॥ ३२९ ॥ समाहृता रजस्वला जगाद भीष्मपूर्वकान् ॥ अधर्म एष वार्यते न धर्मिभिर्भवद्विधैः ॥ ३३० ॥ कथं छलात्मके द्यूते जिते धर्मजयो भवेत् ॥ न हि द्यूतं धर्म्यमाहुर्विशेषेण च भूभुजाम्॥३३१॥ ये धर्मं न वदंतीह न ते वृद्धा इतीरिताः ॥ अवृद्धमंडितां नैव सभेत्याहुर्मनीषिणः ॥ ३३२ ॥ ॥

जितेसति धर्मजयःधर्मेणजयःकथंभवेत्। द्यूतमेवधर्मोनभवति छलात्मकंसुतरामधर्मः अतःछलात्मकेनद्यूतेन जयःधर्मजयःकथंभवेत्। द्यूतस्याधर्मत्वमुपपादयति । नहीति। द्यूतंधर्म्यंधर्मादनपेतंनआहुः पंडिताइतिशेषः। धर्ममाहुरितिक्वचित्पाठः। विशेषेणभूभुजांधर्मोनेत्यर्थः। तस्मादधर्मोनिवारणीयइतिभावः ॥ ३३१ ॥ अधर्मानिवारणेदोषमाह। यइति। येविदुषःइहसभायांअधर्मंअधर्ममितिनवदंतिनकथयंति। यद्वा येधर्मंजानंतःसंतःधर्मंनवदंति तेवृद्धान ज्ञानवृद्धानैवेत्यर्थः। इतीरिताविद्वद्भिरितिशेषः । मनीषिणःपंडिताःअवृद्धमंडितांवृद्धैःज्ञानवृद्धैःमंडिताअलंकृताभवतीत्यवृद्धमंडितातांतथा सभामितिशेषः। सभेतिनैवाहुः ॥ ३३२ ॥ ॥

प्राग्जितत्वमभ्युपगम्यतद्धर्मत्वंनेत्युक्तं इदानींजितत्वमेवनास्तीत्येतत्सोपपत्तिकमाह । कथमित्यादिना । अजितेस्वपतौस्थिते अहंकथंद्यूतेजिता । विपश्चितःपंडिताः समानधर्मिणींभार्यामाहुः । यस्मात्तस्मात्कथमहंजितेतिसंबंधः ॥ ३३३ ॥ पतौपत्यौदासेसति भार्ययासहैवकर्मकर्तव्यं ततःकारणात्मद्दासीत्वंपृथक्नस्यात् ॥३३४॥ इत्युक्ताअपिभीष्माद्याःधर्मराजंपृच्छ धर्माधर्माविवितिशेषः ॥ ३३५ ॥ दुर्योधनप्रतीपंकर्तुमितिशेषः कश्चित्पुरुषः नाशकद्यदातदातत्रसभायांविदुरः अयंअधर्मइतिस्फुटंव्यक्तंयथाभवतितथोवाच ॥ ३३६ ॥ तस्यविदुरस्यनजग्राहनांगीचकार यदातदासविदुरःदेवानांस्वाशक्तिंस्वस्याशक्तिंख्यापयन्ऊर्ध्वबाहुःसन्चुक्रोश । द्रौपदींचाह ।

कथं द्युते जिता चाहमजिते स्वपतौ स्थिते ॥ समानधर्मिणीमाहुर्भार्यां यस्माद्विपश्चितः ॥ ३३३ ॥ सहैव कर्म कर्तव्यं पतौ दासे हि भार्यया ॥ दासीत्वं मे पृथङ्न स्याज्जितेपि हि पतौ ततः ॥ ३३४ ॥ इत्युक्ता अपि भीष्माद्याः कल्यावेशेन मोहिताः ॥ पृच्छ धर्मजमित्युक्त्वा तूष्णीमेव बभूविरे ॥ ३३५ ॥ दुर्योधनप्रतीपं हि न कश्चिदशकत्तदा ॥ उवाच विदुरस्तत्र न धर्मोयमिति स्फुटम् ॥३३६॥ न तस्य वाक्यं जग्राह धृतराष्ट्रः सहात्मजः ॥ ऊर्ध्वबाहुः स चुक्रोश देवानां ख्यापयंस्तदा ॥ ३३७ ॥ स्वाशक्तिं द्रौपदीं चाह जिता नैवासि धर्मतः ॥ अधर्मो हि महानेतां सभामाक्रम्य तिष्ठति ॥ ३३८ ॥ एवं तु विदुरेणोक्ते विकर्णः पापकोपि सन् ॥ आह दंभार्थमेवात्र धर्मं वित्त्वंप्रकाशयन् ॥ ३३९ ॥ अधर्म एवायमिति कर्णोथैनमभर्त्सयत् ॥ ३४० ॥ दृष्ट्वा भीमः क्लिश्यमानां च कृष्णां धर्मात्ययं धर्मराजेन दृष्ट्वा ॥ राजा शास्यो युवराजेन धर्माच्चलन्यस्माद्वाक्यमिदं बभाषे ॥ ३४१ ॥ इमां न्यस्तवतो द्यूते धक्षिणी यौ हि ते भुजौ ॥ नैवमित्यर्जुनोवादीत्तमाहाथ वृकोदरः ॥ वक्तव्यं न तु कर्तव्यं तस्मान्न हि मया कृतम् ॥ ३४२ ॥

किमिति । धर्मतःधर्मेणजितानैवासि त्वमितिशेषः ॥ ३३७ ॥ विकर्णःविकर्णनामासुयोधनानुजः धर्मवित्त्वंधर्मज्ञत्वंप्रकाशयन्नाह । स्वस्येतिशेषः । किमिति । अयमधर्म एवेत्याहेतिसंबंधः । एनंविकर्णम् ॥ ३३८ ॥ ३३९ ॥ ३४० ॥ क्लिश्यमानांदुःखमनुभूयमानां धर्मात्ययंधर्मातिलंबनमित्यर्थः । धर्माच्चलन् राजायुवराजेनशास्यः शिक्षणीयोयस्मात् इदंशिक्षारूपंवाक्यंबभाषे । किमिति । इमांकृष्णांद्यूतेपणत्वेन न्यस्तवतःस्थापितवतः तवभुजौधक्षिणीयौ इतिबभाषइत्यर्थः । अर्जुनोनैवंएवं नवक्तव्यंइतिअवादीत् वक्तव्यंवक्तुंयोग्यं नतुकर्तव्यंयस्मात्तस्मात् मयातन्नकृतांक्षिक्षानकृता ॥ ३४१ ॥ ३४२ ॥ ॥ ॥ ॥

वक्तव्यमित्युक्तमुपपादयति । उत्तमइति । उत्तममध्यमाधमापराधिषु भर्त्सनंद्रव्यापहरणं ताडनं क्रमात्कर्तव्यंयस्मात्तस्मायुधिष्ठिरोवाच्यःवक्तुंयोग्यः मयेतिशेषः । इत्याहे तिसंबंधः ॥ ३४३ ॥ अपतिःपतिरहिता पांडवानांपरस्परविरोधार्थंविरोधोत्पादनार्थं इदंद्वेषोत्पादकंवचःदुर्योधनोवदत् ॥ ३४४ ॥ ३४५ ॥ किमिति । युधिष्ठिरःतवदुःखहेतुःएषःयुधिष्ठिरःनोस्माकंनगुरुःपूज्योनइति यदिअन्येभीमादयश्चत्वारः एनंब्रूयुः अथवा भीमपार्थौब्रूयातां एकःभीमोपिवाब्रूयात् । तर्हि इहसदसित्वामुत्सृजेमुंचामि

उत्तमे वचसा शिक्षा मध्यमेर्थापहारणम् ॥ अधमे देहदंडश्च तस्माद्वाच्यो युधिष्ठिरः ॥ ३४३ ॥ अथ कर्णोब्रवीत्कृष्णामपतिर्ह्यसि शोभने ॥ धार्तराष्ट्रगृहं याहीत्यथ दुर्योधनोवदत् ॥३४४॥ परस्परविरोधार्थं पांडवानामिदं वचः ॥ ३४५ ॥ युधिष्ठिरो दुःखहेतुस्तवैको यद्येन मन्ये न गुरुर्न एषः ॥ इति ब्रूयुरथवा भीमपार्थावेकोपि वा भीम इहोत्सृजे त्वाम् ॥ ३४६ ॥ इत्युक्त ऊचे पवमानसूनुः पूज्योस्माकं धर्मजः संशयो न ॥ गुरुश्चाहं वोखिलानां यतो हि बलज्येष्ठं क्षत्रमाहुर्महांतः ॥ ३४७ ॥ बलज्यैष्ठ्ये यदि वः संशयः स्यादुत्तिष्ठध्वं सर्व एवाद्य वीराः ॥ मृत्नामि वः पादतलेन सर्वान्सहानुबंधान्यश्चमां योद्धुकामः ॥ ३४८ ॥ इति ब्रुवन्समुत्थितो नदन्वृकोदरो यदा ॥ विघूर्णिता सभा तदा भयान्न चाह किंचन ॥ ३४९ ॥ भीष्मो द्रोणो विदुराद्याः क्षमस्व सर्वं त्वयोक्तं सत्यमित्येव हस्तौ ॥ गृहीत्वैनं स्थापयामासुरस्मिन् स्थिते शांतिं चापिरे धार्तराष्ट्राः ॥ ३५० ॥ निवारितो धर्मजेन गुरुभिश्चापरैस्तदा माननार्थं गुरूणां तु भीमस्तान्न जघान ह ॥ ३५१ ॥ ॥ ॥ ॥ ॥

॥ ३४६ ॥ इत्युक्तेसतिधर्मजःअस्माकंपूज्यःगुरुश्च अहंवःयुष्माकंगुरुर्यतःमहांतःबलज्येष्ठंक्षत्रंक्षत्रियंक्षत्रियाणांगुरुमाहुः ॥ ३४७ ॥ हेवीराःवीरंमन्यमानाःममबलज्यैष्ठ्ये वोयुष्माकंयदिसंशयःस्यात्तर्हि । उत्तिष्ठध्वंसन्नद्धाःभवध्वं युद्धार्थमितिशेषः । वःयुष्मान्मृत्नामिमर्दयिष्यामि यःपुरुषःमांप्रतियोद्धुकामः तंमृत्नामीत्यर्थः ॥ ३४८ ॥ विघूर्णिताचंचलेत्यर्थः । किंचनकिमपिनचाह ॥ ३४९ ॥ एवंभीमेस्थितेसतिउपविष्टेसति शांतिंस्वास्थ्यमित्यर्थः ॥ ३५० ॥ अपरैःसभोपविष्टैः ॥ ३५१ ॥

भीमः ज्येष्ठवृत्तिं ज्येष्ठमनुवर्तनं दर्शयन्सन् । तेषांपापाभिवृध्यर्थं ज्येष्ठं नातिवर्तते नातिक्रमते ॥ ३५२ ॥ ऊरुं अंकं ॥ ३५३ ॥ बिभेत्स्य भेत्स्यामि ॥ ३५४ ॥ मृदिष्ये मर्दिष्ये मृत्नामि ॥ ३५५ ॥ परोक्षतोपि परोक्षेपि यो हरिं विनिंदयन् स्वार्थे णिच् । विनिंदेत् स एव वध्य एवेति मारुतेः सदा प्रतिश्रुतं प्रतिज्ञा हि प्रसिद्धिः ॥ ३५६ ॥ तर्हि किमर्थं न जघानेत्यत आह । पुनरिति विकर्तनः सूर्यः तस्यात्मजः कर्णः सोमकात्मजां कृष्णां नः भूभृतः राज्ञः दुर्योधनस्य पांडवाः न संति तवेति शेषः ॥ ३५७ ॥ अनु भीमम् अनु अपरे



नैवात्यवर्तते ज्येष्ठं धर्मात्मानं युधिष्ठिरम् ॥ तेषां पापाभिवृध्यर्थं ज्येष्ठवृत्तिं च दर्शयन् ॥ ३५२ ॥ अथ दुर्योधनः पापो भीमसेनस्य पश्यतः ॥ ऊरुं संदर्शयामास कृष्णायै भीम आह तम् ॥ ३५३ ॥ तवोरुमेनं गदयोरुवेगया बिभेत्स्य इत्येव पुनः सुयोधनः ॥ ऊचे नान्यद्भवतामस्ति वित्तं द्यूते कृष्णां स्थापयध्वं पणाय ॥ ३५४ ॥ अथा ब्रवीद्वृकोदरः कृतेवमानने हरेः ॥ निपात्य भूतले हि ते शिरो मृदिष्य इत्यलम् ॥ ३५५ ॥ स वध्य एव मे सदा परोक्षतोपि यो हरिम् ॥ विनिंदयेदिति ध्रुवं प्रतिश्रुतं हि मारुतेः ॥३५६॥ पुनश्च पापवृद्धये तदैव नो जघान तम् ॥ विकर्तनात्मजः पुनर्जगाद सोमकात्मजाम् ॥ ३५७ ॥ प्रयाहि भूभृतो हि नो गृहं न संति पांडवाः ॥ इतीरिते समुत्थितो वृकोदरोनु चार्जुनः ॥ उभौ च तौ युधिष्ठिरो न्यवारयत्तथा परे ॥ ३५८ ॥ ततो निषण्णयो स्तयोः सुयोधनो वचोब्रवीत् ॥ दुःशासनैषां वासांसि दासानां नो व्यपाकुरु ॥ ३५९ ॥ इत्युक्तो भ्यगमत्पार्था न्स्ववासांस्यथ ते ददुः ॥ ते चीरवसना भूत्वा तानशिष्टान्प्रकाश्य च ॥ निषेदुश्च क्षमायांते क्षमामालंब्य विस्तृताम् ॥ ३६० ॥ ॥ ॥ ॥ ॥ ॥



भीष्मादयः ॥ ३५८ ॥ निषण्णयोः उपविष्टयोः सतोः व्यपाकुरु अपहर । अथ ते वासांसि ददुः दुःशासनस्येति शेषः ॥३५९ ॥ ते तान् दुर्योधनादीन् अशिष्टान् अपवित्रान् प्रकाश्य विस्तृतां महतीं क्षमां शांतिम् आलंब्य स्वीकृत्य क्षमायांते इत्येकं पदं आयः आयतिर्नाम विस्तारः क्षमायाः आयः क्षमायः क्षमायस्य अंते समाप्तौ सभातलस्थभूमेः प्रांतभागे इति भावः । निषेदुः उपविष्टा इत्यन्वयः । क्षितिक्षांत्योः क्षमेत्यमरः । सभायांत इति वा पाठः ॥ ३६० ॥ ॥ ॥

पुनरुक्तःकृष्णायाअपिवस्त्रंअपहरेति उक्तोदुःशासनइतिशेषः । यदाचकर्षतदाअवादीत् ॥ ३६१ ॥ किमिति । पूर्वस्यआद्यस्यमुख्यस्येत्यर्थः वंशेअधमस्य ॥ ३६२ ॥ कृष्णावसनेविकृष्यमाणेतुविकृष्यमाणेऽत्यपि कृष्णंसुविशेषतोपिसस्मारेत्युक्त्या महापद्यपितस्याःमनोभगवन्नियतमेवेत्युक्तंभवतिनत्वापन्निवृत्यर्थंतत्स्मरणंतस्याःशुद्धभागवतधर्मनिरतत्वेनकाम्यानुष्ठानरहितत्वात् तदान्यद्वसनविकर्षणावसरे तस्मात्पूर्वपरिधानवसनात् दिव्यंउत्तमंकनकावदातं कनकवत्अवदातोयस्यतत्तथा पीतमित्यर्थः । अन्यद्वसनमासीत् ॥ ३६३ ॥ खिन्नगात्रःखेदयुक्तदेहः ॥ ३६४ ॥ नोस्माकंचिरेणविलंबेनाकिंकिंप्रयोजनमित्यर्थःइतिप्राह ॥ ३६५ ॥ हंतेतिलुट् ॥ ३६६ ॥

पुनर्दुर्योधनेनोक्तः पार्थानामेव पश्यताम् ॥ चकर्ष वासो द्रौपद्यास्तदावादीद्वृकोदरः ॥ ३६१ ॥ पापेषु पूर्वस्य तथाऽधमस्य वंशे कुरूणामुरुधर्मशीलिनाम् ॥ दुःशासनस्यास्यविदार्य वक्षः पिबामि रक्तं जगतः समक्षम् ॥ ३६२॥ विकृष्यमाणे वसने तु कृष्णा सस्मार कृष्णं सुविशेषतोपि ॥ तदान्यदासीद्वसनं च तस्या दिव्यं सुसूक्ष्मं कनकावदातम् ॥ ३६३ ॥ पुनः पुनश्चैव विकृष्यमाणे दुःशासनेन्यानि च तादृशानि ॥ बभूवुरंतं न जगाम पापः श्रांतोन्यपीदखिन्नगात्रः सभायाम् ॥ ३६४ ॥ वस्त्रोच्चये शैलनिभे प्रजाते दुर्योधनः प्राह संजातकोपः ॥ प्रवेशयैनां गृहमेव शीघ्रं किन्नश्चिरेणेति सुमंदबुद्धिः ॥ ३६५ ॥ तच्छ्रुत्वा वचनं कृष्णा प्रतिज्ञामकरोत्तदा ॥ भीमो दुर्योधनं हंता कर्णं हंता धनंजयः ॥ ३६६ ॥ शकुनिं त्वक्षकितवं सहदेवो हनिष्यति ॥ इत्युक्ते तत्तथेत्याह भीमसेनः सभातले ॥ ३६७ ॥ प्रतिज्ञामकरोत्पार्थस्तां माद्रीनंदनस्तथा ॥ नकुलः प्रतिजज्ञेथ शाकुनेयवधं प्रति ॥ ३६८ ॥ ततः सुयोधनानुजश्चकर्ष पार्षतात्मजाम् ॥ गृहाय तां निशाम्य तु क्रुधाह मारुतात्मजः ॥ ३६९ ॥ अर्जुनार्जुन नैवात्र क्षमा मे तात रोचते ॥ पतितस्यास्य देहस्य काष्ठविष्टासमस्य च ॥ फलानि त्रीणि शिष्यंते विद्याकर्मसुता इति ॥ ३७० ॥ ॥ ॥

अक्षकितवंद्यूतधूर्तंतत् कृष्णावचनंतथा यथोक्तंतथाभविष्यतीत्यर्थः ॥ ३६७ ॥ तांप्रतिज्ञांकृष्णाकृतप्रतिज्ञां माद्रीनंदनःसहदेवःशकुनेरपत्यंशाकुनेयः तस्यवधंप्रति ॥ ३६८ ॥ गृहायकर्मणिचतुर्थी गृहंप्रतिनेतुमितिशेषः । निशाम्यदृष्ट्वाक्रुधाकोपेनाह ॥ ३६९ ॥ अर्जुनार्जुनेतिसंभ्रमाद्द्विरुक्तिः । अत्रआत्मजायोपहतिप्राप्तिसमयेपतितस्यमृतस्येत्यर्थः । काष्ठविष्ठासमस्य दाहेकाष्ठसमःस्याददाहेविष्ठासमःस्यात् । एतादृशस्यअस्यदेहस्यविद्याकर्मसुताइतित्रीणिफलानि शिष्यंतेअवशिष्यंते॥ ३७०॥

इतिवेदोदितंवाक्यमस्तीतिशेषः । दारधर्षणेसति नसुतःसुताख्यंफलंनस्यादित्यर्थः । दारधर्षणेदोषांतरमाह । दुष्टेति । दुष्टदाराःदुष्टाःदूषिताः दाराःयस्यसतथा लोकानुत्तमलोकान्नाप्नोति कुतःहियस्मात्अर्धःधामार्धःदूषितःतस्मादितिसंबंधः ॥ ३७१ ॥ तर्हि परित्यागेलोकाभावोनभवेदित्यतआह । अरक्षणादिति । अरक्षणान्निमित्तात् रक्षणविषयेशक्त्यभावादितिभावः ॥ ३७२ ॥ अतःक्षमायाःअनुचितत्वात् । ओजसास्वरूपसामर्थ्येन ॥ ३७३ ॥ निःशेषान्कर्तुंबुद्ध्याव्यवसितः कृतनिश्चयःघोरंक्रूरंपरिघंआयुधविशेषं ददर्शव्यलोकयत् ॥ ३७४ ॥ शिवाःगोमायवःववाशिरेकुत्सितशब्दंचक्रुः । वाशृशब्दकुत्सयामितिधातुः । गेहतःगेहेसार्वविभक्तिकस्तसिः । तथैवतत्पितुःधृतराष्ट्रस्यगेहेबहुभयानकं भयंकरंनिमित्तमितिशेषः ॥ ३७५ ॥ कुपितेसतितिनिमित्तानिदृष्ट्वा । एषांनिमित्तानां ॥ ३७६ ॥ नशिष्यंतिअवशिष्टानभविष्यंति ॥ ३७७ ॥ त्वंकिंजितंकिंजितमितिअर्भकवत्बालकवत्क्रीडसे । अर्भकवत्तुवाउकतुल्यस्त्वं विवेकरहितत्वादितिशेषः । अत्रद्यूते ॥ ३७८ ॥ स्त्रीषु दत्तंद्यूतेषुवादत्तं मदांधेननरेणवादत्तं विद्वांसोज्ञानिनःदत्तंन.हुः । तस्यबंधुभिःपुनराहार्यमेवआहर्तुंयोग्यंइत्याहुश्च ॥ ३७९ ॥ तथापितवपुत्राणांअशिष्टतांदुष्टतांख्यापयद्भिः ख्याप्रकथनइतिधातुः पांडवैःतत्पुनराहरणंनकृतम् ॥ ३८० ॥ ॥ ॥ ॥

इति वेदोदितं वाक्यं न सुतो दारधर्षणे ॥ दुष्टदारो न चाप्नोति लोकानर्धो हि दूषितः ॥ ३७१ ॥ अरक्षणाद्दूषितायां न त्यागाच्च शुभं भवेत् ॥ ३७२ ॥ अतोद्य सानुबंधकान्निहन्मि धार्तराष्ट्रकान् ॥ इति ब्रुवन्व्यलोकयद्रिपून् दहन्निवौजसा ॥ ३७३ ॥ ददर्श च महाघोरमादातुं परिघं रुषा ॥ कर्तुं व्यवसितो बुद्ध्या निःशेषान् धार्तराष्ट्रकान् ॥३७४॥ तदा शिवा ववाशिरे सुयोधनाग्निगेहतः ॥ तथैव तत्पितुर्गृहेप्यभूद्भयानकं बहु ॥ ३७५ ॥ निमित्तान्यतिघोराणि कुपिते मारुतात्मजे ॥ दृष्ट्वांबिकेयो विदुरं पप्रच्छैषां फलं द्रुतम् ॥ ३७६ ॥ आह तं विदुरो ज्येष्ठं क्षणेस्मिन् तव पुत्रकाः ॥ सानुबंधा न शिष्यंति वृकोदरबलाहताः ॥ ३७७ ॥ क्रीडसेर्भकवत्त्वं हि किं जितं किंजितं त्विति ॥ अत्र मैण जितानत्र जितान् पश्यसि पांडवान् ॥ ३७८ ॥ स्त्रीषु द्यूतेषु वा दत्तं मदांधेन नरेण वा ॥ न दत्तमाहुर्विद्वांसस्तस्य बंधुभिरेव च ॥ ३७९ ॥ आहार्यं पुनराहुश्च तथापि न तु पांडवैः ॥ तत्कृतं तव पुत्राणां ख्यापयद्भिरशिष्टताम् ॥ ३८० ॥ ॥ ॥ ॥ ॥ ॥

इत्युक्तःविदुरेणोक्तःफलंकथंनभवेदित्याह । पप्रच्छसविदुरःद्रुतंशीघ्रंकृष्णाविमोच्यतामितिप्राह ॥ ३८१ ॥ एनांकृष्णांवरैःतोषयस्व । अन्यथामदुक्तस्याकरणेनिष्पिष्टा न्मर्दितानित्यर्थः । अत्रपुत्राणांमृतिविषयेतेसंशयोमाभवेदितिपूर्वेणान्वयः ॥ ३८२ ॥ नैवधक्ष्यंतिनदहंति तेनकारणेन ॥ ३८३ ॥ यद्यपितेसुताःजीवंतितथापि ॥ ३८४ ॥ तर्हि छंदयामासतोषयामास ॥ ३८५ ॥ तेनधृतराष्ट्रेणवरैःछंदितासंतोषितासाकृष्णा आत्मनःअर्थेवरान्नवव्रे कथंभूताभागवतेधर्मेस्थितेति हेतुगर्भविशेषणं तेषांपार्थानां ॥ ३८६ ॥ अस्याःकृष्णायाः ॥ ३८७ ॥ आत्मार्थंकोमितिवरान्नवव्रेइत्यतआह । भर्तुरिति । भर्तुःस्वभर्तुःविष्णोश्चान्यस्माद्वरस्वीकारो नेष्यतेनप्रशस्यते । एवंभगवद्धर्मः

इत्युक्त आहांबिकेयो निमित्तानां फलं कथम् ॥ न भवेदिति स प्राह द्रुतं कृष्णा विमोच्यताम् ॥३८१॥ तोषय स्व वरैश्चैनामन्यथा ते सुतान्मृतान् ॥ विद्धि भीमेन निष्पिष्टान् नात्र ते संशयो भवेत् ॥ ३८२ ॥ कृष्णा च पांडवाश्चैव तपोवृद्धिमभीप्सवः ॥ तपसा नैव धक्ष्यंति तेन जीवंति ते सुताः ॥ ३८३ ॥ तथापि यदि कृष्णां त्वं नमोचयसि ते सुतान् ॥ हनिष्यति न संदेहो बलेनैव वृकोदरः ॥३८४॥ इतीरिते विनिर्भर्त्स्य पुत्रं दुःशासनं नृपः ॥ अमोचयद्वरैश्चैनां छंदयामास पार्षतीम् ॥ ३८५ ॥ छंदिता सा वरैस्तेन धर्मे भागवते स्थिता ॥ नैवात्मनो वरान् वव्रे वव्रे तेषां विमोक्षणम् ॥ ३८६ ॥ युधिष्ठिरस्य सभ्रातुः सराष्ट्रस्य विमोक्षणम् ॥ ददौ नृपोस्या न पुन श्छंद्यमानापि सावृणोत् ॥ ३८७ ॥ भर्तुर्विष्णोश्च नान्यस्माद्वरः स्वीकारयिष्यते ॥ एवं हि भगवद्धर्मस्तस्मात्सा नावृणोत्परम् ॥ ३८८ ॥ अधर्मतो हतत्वात्तु तद्दानं न वरो भवेत् ॥ इति मत्वा पांडवानां वव्रे कृष्णा विमोक्षणम् ॥ ३८९ ॥ श्वशुरादैहिकवराः क्षत्रियायास्त्रयो यतः ॥ उक्ता शतं च विप्रायाः धर्मे भागवते ततः ॥ हेतुना तेन वव्रे सा नान्यत्किंचिदतः परम् ॥ ३९० ॥ ॥ ॥ ॥ ॥

हियस्मात्तस्मात् परंअन्यद्वरंनावृणोत् ॥ ३८८ ॥ तर्हियुधिष्ठिरादिविमोक्षणरूपवरस्वीकारोपि कथंकृतइत्यतआह । अधर्मतइति । तद्विमोक्षणंदानराष्ट्रदानम् ॥ ३८९ ॥ वरस्वीकारेकारणांतरमाह । श्वशुरादिति । यतःकारणात्क्षत्रियायाःत्रयःऐहिकवराःश्वशुरादुक्ताः[illegible]ततःश्वशुरात् शतंशतसंख्याकाःऐहिकवराःब्राह्मणाइतिभागवते धर्मेउक्ताः तेनहेतुनासावव्रेअतःदत्तेभ्यःवरेभ्यःपरमुपरिअन्यत्किंचिदभीष्टंनवव्रे ॥ ३९० ॥ ॥ ॥ ॥ ॥

स्वपुरंइंद्रप्रस्थं दुर्योधनानंतरजःदुःशासनः ॥ ३९१ ॥ पुनःसमागतांवारणावतगमनापेक्षया पुनःवधः भवेद्यतः ॥ ३९२ ॥ अतःनःकृते अस्मदर्थंसमाह्वयस्व । समानयस्वेतिवापाठः । जिताःपराजिताःवनंप्रयांत्विति जितानांवनप्रयाणंदेवनःकर्तव्यइतिभावः ॥३९३॥ समाहूतःसम्यक्मानपुरःसरआहूतःदुर्योधनादिप्रियकाम्ययेतिशेषः ॥ ३९४ ॥ दुर्योधनःदुःशासनोक्त्याबुद्ध्यापणंचक्रे । पणस्वरूपंनिरूपयति । द्वादशाब्दमिति । द्वादशाब्दंवनेवासं एकवत्सरंअज्ञातं अज्ञातवासंपणंचक्रइतिसंबंधः ॥ ३९५ ॥ अज्ञातवासेविशेषंदर्शयति । वासमित्यादिना । प्रसिद्धनृपतेःपुरेवासं तत्रापिअतिदूरतोनैव नागपुरादितिशेषः ॥ ३९६ ॥ अज्ञातवासिनांअज्ञातवासंकुर्वतां

ततो विमुक्ताः प्रययुश्च पार्था गुरून्प्रणम्य स्वपुरं सकृष्णाः ॥ दुर्योधनानंतरजो जगाद तातं निजं पापकृतां प्रधानः ॥ ३९१ ॥ समस्तपांडवाश्रियं समागतामहो पुनः ॥ व्यमोचयो वृकोदराद्वधश्च नो ध्रुवं भवेत् ॥३९२॥ अतः पुनश्च पांडवान्समाह्वयस्व नः कृते ॥ पुनश्च देवनं भवेज्जिता वनं प्रयांतु च ॥ ३९३ ॥ तेनोक्तः स तदा राजा पांडवान्पुनराह्वयत् ॥ पुनः पित्रा समाहूतो देवनाय युधिष्ठिरः ॥ ३९४ ॥ भ्रातृभिर्वार्यमाणोपि कृष्णया चागमत्सभाम् ॥ द्वादशाब्दं वने वासं त्वज्ञातं त्वेकवत्सरम् ॥ ३९५ ॥ वासं प्रसिद्धनृपतेः पुरे नैवातिदूरतः ॥ ३९६ ॥ कृष्णायाः पांडवानां वा दर्शनेज्ञातवासिनाम् ॥ एकस्यापि समस्तानां द्वादशाब्दं पुनर्वनम् ॥ ३९७ ॥ वत्सराज्ञातवासं च त्यागेप्युक्तविधेस्तथा ॥ दुर्योधनः पणं चक्रे बुद्ध्या दुःशासनोक्त्या ॥ ३९८ ॥ गांधारेण पुनश्चाक्षहृदयज्ञेन धर्मजः ॥ पराजितो वनं यातुमैच्छत्सभ्रातृको यदा ॥ ३९९ ॥ तदा ननर्त पापकृत्सुयोधनानुजो हसन् ॥ वदंश्च मारुतात्मजं पुनः पुनश्च गौरिति ॥ ४०० ॥ उवाच च पुनः कृष्णां नृत्यन्नेव सभातले ॥ अपतिर्ह्यसि कल्याणि गच्छ दुर्योधनालयम् ॥ ४०१ ॥ ॥ ॥

पांडवानांकृष्णायावादर्शनेसति एकस्यापिपांडवानांमध्ये एकस्यदर्शनेसत्यपि समस्तानांपांडवानांपुनर्द्वादशाब्दपर्यंतंवनंवनवासम् ॥ ३९७ ॥ वत्सराज्ञातवासं वत्सरपर्यंतंअज्ञातवासं उक्तविधेस्त्यागे अतिवनवासेनगरप्रवेशः अज्ञातवासेअतिदूरवासःअप्रसिद्धनृपतेःपुरेवासइत्याद्युक्तविधेःत्यागेसति तथापुनःवनवासादिपूर्वोक्तवत् ॥ ३९८ ॥ अक्षहृदयज्ञेनअक्षाभिप्रायंअक्षहृदयविद्यांवा जानतागांधारेणपराजितःसन् यातुमैच्छद्यदा ॥ ३९९ ॥ तदासुयोधनानुजःपुनःपुनःगौरितिवदन् मारुतात्मजंहसन्ननर्त ॥ ४०० ॥ आलयंगृहम् ॥ ४०१ ॥ ॥ ॥ ॥

पार्थेषुसत्सुअपातिर्ध्वंसीतिकथमाहेत्यतआह । एतइति । एतेखिलाःपार्थाःषंढतिलाःसंतःनिर्वीर्याःसंतः तमोंधंप्राप्ताःएषांपुनःउत्थितिर्नस्यात् । तमोंधंप्राप्तानांयथाऊर्ध्वंग
तिर्नभवेत्तथा तेषामप्येतदापन्निवृत्तिःकदापिनभविष्यतीतिभावः । इतिब्रुवाणोदुःशासनःभीममनुचकार भीमगमनाद्यनुसारगमनादिनाअनुचकार । तदासर्वेधार्तराष्ट्राः
अहसन्सर्वेचशकुनिकर्णादयश्चेतिवा ॥ ४०२ ॥ हंतास्मिहनिष्यामि। द्रोणमेवनान्यमित्यर्थः । एवकारोन्ययोगव्यवच्छेदः ॥४०३॥ किमभिप्रायेणद्रोणमेवशरणंजग्मुरि
त्यतआह । यत्रेति । पुत्रःअश्वत्थामातानतिक्रम्यहनिष्यतीत्यतआह । नचेति । भीमःगुरून्नातिक्रम्य[illegible] ॥ ४०४ ॥ भवतांकृतेभवदर्थे ॥४०५॥

एतेखिलाः षंढतिलास्तमोंधमाप्ता न चैषां पुनरुत्थितिः स्यात् ॥ इति ब्रुवाणोनुचकार भीमं तदा हसन् धार्तराष्ट्रा
श्च सर्वे ॥ ४०२ ॥ तदाकरोद्भीमसेनः प्रतिज्ञां हंतास्मि वो ह्यखिलान्संगरेहम् ॥ इतीरिते शरणं द्रोणमेव जग्मुः
समस्ता धृतराष्ट्रपुत्राः ॥ ४०३ ॥ यत्र द्रोणस्तत्र पुत्रस्तत्र भीष्मः कृपस्तथा ॥ न चातियेति गुरून् भीम इति तं
शरणं ययुः ॥ ४०४ ॥ अब्रवीद्धार्तराष्ट्रांश्च द्रोणो विप्रोपि सन्नहम् ॥ सपुत्रः सकृपः शस्त्रं गृह्णीष्ये भवतां कृते ॥४०५॥
रक्षणे भवतां चैव कुर्यां यत्नं स्वशक्तितः ॥ न तु भीमाद्रक्षितुं वः शक्तः सर्वं ब्रवीम्यहम् ॥ ४०६ ॥ ततो ययुः
पांडवास्ते सभाया वनाय कृष्णासहिताः सुशूराः ॥ गत्यानुचक्रे युवसिंहखेलागतिं भीमं धार्तराष्ट्रोपहास्य ॥
॥ ४०७ ॥ दृष्ट्वा सभाया अर्धनिष्क्रांतदेहो व्यावृत्य भीमः प्राह संरक्तनेत्रः ॥ ऊरुं तवान्यं च रणे बिभेत्स्ये
इत्युक्त्वासौ निर्गतो सत्सभायाः ॥ ४०८ ॥ प्रयातानतु तान्कुंती प्रययौ पुत्रगृद्धिनी ॥ रोरुद्यमानां विदुरः स्थापया
मास तां गृहे ॥ ४०९ ॥ प्रणम्य तां ययुः पार्थाः सकृष्णाः शीघ्रगामिनः ॥ युधिष्ठिरोवाग्वदनो ययौ न क्रोधचक्षु
षा ॥ दहेयं कौरवान्सर्वानिति कारुणिको नृपः ॥ ४१० ॥ ॥ ॥ ॥

वोयुष्मान् ॥ ४०६ ॥ युवसिंहखेलागतिं युवसिंहवत्खेलाचतुरागतिःगमनंयस्यसतथातं अपहस्यप्रहस्य गत्यागमनेनअनुचक्रेअनुकारंकृतवान् ॥ ४०७ ॥ सभायाः
अर्धनिष्क्रांतदेहः अर्धनिष्क्रांतःअर्धनिर्गतःदेहोयस्यसतथा भीमः । व्यावृत्यदृष्ट्वा अनुगमनंहासंचेतिशेषः । प्राहअन्यंद्वितीयंबिभेत्स्ये असत्सभायाःदुर्योधनादिसज्जन
युक्तत्वात्सभाअसतीत्यर्थः । निर्गतःनिर्ययौ ॥४०८॥ प्रयातान्प्रयातुमारब्धान् गच्छतः आदिकर्मणिनिष्ठाःकर्तरिक्तप्रत्ययः । तान्पार्थान् पुत्रगृद्धिनीपुत्रस्नेहवती । विदुरः
रोरुद्यमानां भृशंरुदंतींतांकुंतींगृहेस्वगृहे ॥४०९ तांकुंतींकारुणिकःकृपावान् नृपोधर्मराजःक्रोधचक्षुषाक्रोधदृष्ट्यानदहेयंइत्यभिप्रायेण अवाग्वदनोऽधोमुखःसन्ययौ४१०

आभ्यांबाहुभ्यांहंतुंशक्तइत्यभिप्रायेण बाहूउद्धृत्यप्रययौ ॥ ४११ ॥ मुक्तकेशाःभविष्यंति दुःखान्मृतपतीनालिंग्येतिशेषः । इतिअबद्धकेशा अबद्धाःकेशाःयस्याःसातथा ॥ ४१२ ॥ पांसून्धूलीःसायकान्बाणान् ॥ ४१३ ॥ अस्यामवस्थायांदुःखावस्थायांआवयोर्मुखंनपश्यंत्वितिधृतचेतसौ धृतंचेतोयाभ्यांतौतथा ॥ ४१४ ॥ धौम्यःधौम्यनामापार्थपुरोधाः क्रियाःप्रेतसंस्कारकर्माणिमयाकार्याइत्यभिप्रायेण अग्रतःपांडवाग्रतःययौ ॥ ४१५ ॥ सूताःसारथयःपरिचतुर्दशैःपरितःचतुर्दशएवयेतेतथातैःचतुर्दशोपरथयुक्तैःरथैःप्रधानरथैःसह एकैकरथस्यपरितश्चतुर्दशचतुर्दशोपरथाःआसन्नितिभावः तान्पार्थान्अनुययुः सूदाःपाककारिणः पौरोगवास्तदध्यक्षाःयेआप्तकारिणःमेवां

उद्धृत्य बाहू प्रययौ बाहुशाली वृकोदरः ॥ आभ्यामेवाखिलांच्छत्रूंच्छक्तो हंतुमहं त्विति ॥ ४११ ॥ अबद्धकेशा प्रययौ द्रौपदी सा सभातलात् ॥ मुक्तकेशा भविष्यंति धार्तराष्ट्रस्त्रियस्त्विति ॥ ४१२ ॥ वर्षन् पांसून् ययौ पार्थः इत्थं शत्रुषु सायकान् ॥ वर्षयामीत्यभिप्रायः परमास्त्रविदां वरः ॥ ४१३ ॥ यमाववाङ्मुखौ यातौ नावयोः शत्रवो मुखम् ॥ पश्यंत्वस्यामवस्थायां इत्येव धृतचेतसौ ॥ ४१४ ॥ प्रेतसंस्कारसूक्तानि पठन् धौम्योग्रतो ययौ ॥ हतेषु धार्तराष्ट्रेषु मया कार्याः क्रिया इति ॥ ४१५ ॥ तानथानुययुः सूता रथैः परिचतुर्दशैः ॥ सूदाः पौरोगवाश्चैव भृत्या ये त्वाप्तकारिणः ॥ ४१६ ॥ ततस्ते जान्हवीतीरे वने वटमुपाश्रिताः ॥ न्यषीदन्नागतान् दृष्ट्वा समस्तान् पुरवासिनः ॥ ४१७ ॥ ततस्तु ते सर्वजगन्निवासं नारायणं नित्यसमस्तसद्गुणम् ॥ स्वयंभुशर्वादिभिरर्चितं सदा भक्त्या स्मरन् भक्तभवापहं प्रभुम् ॥ ४१८ ॥ इति श्रीमदानंदतीर्थ भ०विरचिते श्रीमन्महाभारत तात्पर्यनिर्णये पांडववनप्रवेशोनाम एकविंशोध्यायः ॥ २१ ॥ ॥ ॥ ॥ ॥

कुर्वंतितेकारिणः आताश्चतेकारिणश्चतेसेवकाइत्यर्थः । तेएवानुययुः ॥ ४१६ ॥ ततःसभातलाद्गमनानंतरं जान्हवीतीरेस्थितेवनेस्थितंवटमुपाश्रिताःसंतःन्यषीदन्उपविष्टाः किंकृत्वापुरवासिनःनागपुरवासिनःदृष्ट्वावारयितुमितिशेषः ॥ ४१७ ॥ तेपार्थाःनारायणंभक्त्यातुविशेषेणअस्मरन् कथंभूतंभक्तभवापहं भक्तानांसंसारनाशकं सदा संसारावस्थायांमुक्तौचअर्चितंपूजितं ॥ ४१८ ॥ यंगंगाजम० पूर्तैतस्य[illegible]सतांसुखकरोध्यायेकविंशःशुभःश्रीमद्भारत० ॥ २१ ॥ इति श्रीमद्भारत तात्पर्यनिर्णयटीकायां जनार्दनभट्टविरचितायां पदार्थदीपिकानाम्न्यां एकविंशोध्यायः ॥ २१ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥

श्रीगुरुभ्योनमः ॥ ॐ आगंतुमिति । गहनंदुष्प्राप्यंवनंप्रविष्टाःसंतः अथोनराशंनरभक्षकंकिर्मीरं किर्मीराख्यंराक्षसं आसेदुःप्राप्ताः ॥ १ ॥ असौकिर्मीरःसदारसोदर्यं दारसोदर्यैःसहितं भीमंनिहंतुकामःअतिप्रसस्रे अभिमुखमगच्छत् । सृगताविति धातुः ॥ २ ॥ सभीमःतेनकिर्मीरेणसहसंप्रहारंयुद्धंकृत्वा रक्षःराक्षसंनिहत्ययुद्धाख्येय ज्ञेपशुंचक्रे ॥ ३ ॥ वनमध्यसंस्थाअभूवन् । तदायतीनामयुतैरयुतसंख्याभिःसमेताः अयुतसंख्याकयतिभिःसमेताइत्यर्थः । दशांशयुक्तैःअष्टसहस्रयुक्तैःअशीतिसह स्रमुनिप्रवीरैः सहिताः अष्टसहस्राधिकाशीतिसाहस्रसंख्याकऋषिश्रेष्ठैःसमेताइत्यर्थः ॥ ४ ॥ पार्थाव्यचिंतयन् । तेषांयोगक्षेमार्थंविचारयामासुरितिभावः ॥ भरणाय

ॐ आगंतुकामान्पुरवासिनस्ते संस्थाप्य कृच्छ्रेण कुरुप्रवीराः ॥ रात्रौ प्रविष्टा गहनं वनं च किर्मीरमासेदुरथोनरा शम् ॥ १ ॥ बकानुजोसौ निखिलैरजेयो वराद्गिरीशस्य निहंतुकामः ॥ सदारसोदर्यमतिप्रसस्रे भीमं महावृक्षगि रीन्प्रमुंचन् ॥ २ ॥ स संप्रहारं सह तेन कृत्वा भीमो निपात्याशु धरातले तम् ॥ चक्रे मखे संगरनामधेये प्रसह्य नारायणदैवते पशुम् ॥ ३ ॥ निहत्य रक्षो वनमध्यसंस्थास्तदा यतीनामयुतैः समेताः ॥ अशीतिसाहस्रमुनिप्रवी रैर्दशांशयुक्तैः सहिता व्यचिंतयन् ॥ ४ ॥ विचिंत्य तेषां भरणाय धर्मजः संपूज्य सूर्यस्थिमच्युतं प्रभुम् ॥ दिने क्षयान्नं पिठरं तदाप रत्नादिदं कामवरान्नदं च ॥ ५ ॥ बभार तेनैव युधिष्ठिरस्तान्प्रत्येकशस्त्रिंशतदासदासि कान् ॥ सुवर्णपात्रेषु हि भुंजते ये गृहे तदीये बहुकोटिदासके ॥ ६ ॥ ॥

पोषणायदिनेदिवा । अक्षयान्नंबहून्नं नकेवलमोदनमात्रदं किंतुकामवरान्नदंअपेक्षितवरान्नदम् । तर्हि वस्त्रादिदंनभवतीतिन किंतुरत्नादिदं । रत्नानिआदिशब्देनसुवर्ण वस्त्रादीनिददातीतिरत्नादिदं तत्अन्नादिदातृत्वेनप्रसिद्धं । पिठरंस्थालीमाव ॥ ५ ॥ युधिष्ठिरःयेमुन्यादयःबहुकोट्योदासाःयस्मिंस्ततथा । तस्मिन्स्वार्थेकप्रत्ययः । त दीयेयुधिष्ठिरसंबंधिनिगृहे सुवर्णपात्रेषुभुंजंते ॥ पूर्वमिंद्रप्रस्थइतिशेषः । प्रत्येकशःप्रत्येकंदासाश्चदासिकाश्चदासदासिकाःत्रिंशत्संख्यायेषांतेत्रिंशानाः अर्शआदित्वादच् । त्रिंशत्संख्याकादासदासिकाःयेषांतेतथातान् । तेनैवपिठरेणैव बभारपुपोष ॥ ६ ॥ ॥ ॥

सत्संगमाकांक्षिण एवमद्भिःसहमेलनमेवाकांक्षिणः । नत्वन्यप्रयोजनवंतइत्यर्थः । तेपूर्वोक्ताःअन्येउक्तेभ्योन्येमुनींद्रवृंदाःमुनिश्रेष्ठसमूहाः एभ्यःपार्थेभ्यःपरमार्थसाराःपरमार्थःउत्तमार्थःभगवदुत्कृष्टस्वरूपोत्तमार्थप्रतिपादनेनसाराःश्रेष्ठाःकथाःस्वयंशृण्वंतः तथापुरातनाःकथाःस्वयंवदंतःसंतः पार्थैःसहावसन्वासंचक्रुः ॥ ७ ॥ वृंदशःवृंदात्मकान् नरांश्चभृत्यांश्चावसृज्य वनेयथासुखंभवतितथाविजह्रुः ॥ ८ ॥ भारोनामविंशतिस्तुलाः ॥ ९ ॥ यातेषुवनंप्रतीतिशेषः ॥ अत्रेदानींआहूयपार्थानितिशेषः ॥ प्रतिपादयेतिएनमग्रजंप्रतिप्राह । आंबिकेयःधृतराष्ट्रः ॥ १० ॥ कोपोक्तिविशदयति ज्ञातमिति ममात्मजानांपुत्राणांप्रतीपोसि द्विट्असित्वमितिशेषः । इतिमेमयाज्ञातं

सत्संगमाकांक्षिण एव ते वसन् पार्थैःसहान्ये च मुनींद्रवृंदाः ॥ शृण्वंत एभ्यः परमार्थसाराः कथा वदंतश्च पुरातनास्तथा ॥ ७ ॥ एवं गजानां बहुकोटिवृंदांस्तथा रथानां च हयांश्च वृंदशः ॥ विसृज्य रत्नानि नरांश्च वृंदशो वने विजह्रुर्दिवि देववत्सुखम् ॥ ८ ॥ गवां लक्षं प्रददाति नित्यशः सुवर्णभारांश्च शतं युधिष्ठिरः ॥ सभ्रातृकोसौ वनमाप्य शक्रवन्मुमोद विप्रैः सहितो यथासुखम् ॥ ९ ॥ पार्थेषु यातेषु किमत्रकार्यमिति स्म पृष्टो विदुरोग्रजेन ॥ आहूय राज्यं प्रतिपादयेति प्राहैनमाहाथ रुषांबिकेयः ॥ १० ॥ ज्ञातं प्रतीपोसि ममात्मजानां न मे त्वया कार्यमिहास्ति किंचित् ॥ यथेष्टतस्तिष्ठ वा गच्छवेति प्रोक्तो ययौ विदुरः पांडुपुत्रान् ॥ ११ ॥ तस्मिन् गते भ्रातृवियोगकर्शितः पपात भूमौ सहसैव राजा ॥ संज्ञामवाप्यादिशदाशु संजयं जीवामि चेदाशु ममानयानुजम् ॥ १२ ॥ इतीरितः संजयः पांडवेयान्प्राप्यानयद्विदुरं शीघ्रमेव ॥ सोप्यागमत्क्षिप्रमपास्तदोषो ज्येष्ठं ववंदेथ स चैनमाश्लिषत् ॥ १३ ॥ अंकं समारोप्य स मूर्ध्नि चैनमाघ्राय लेभे परमां मुदं तदा ॥ क्षत्तारमायांतमुदीक्ष्य सर्वे ससौबला धार्तराष्ट्रा अमर्षात् ॥ संमंत्र्य हंतुं पांडवानामुतैकं छन्नोपधेनैव ससूतजा ययुः ॥ १४ ॥ ॥

इहमत्समीपेत्वयाकिंचित्कार्यंनास्ति । यथेष्टतःइच्छानुसारेणातिष्ठवा स्वगृहइतिशेषः । गच्छवापुरंत्यक्त्वान्यत्रेतिशेषः । इतिप्रोक्तःआक्षेपपूर्वकमुक्तोययौ ॥ ११ ॥ तस्मिन्विदुरे । कर्शितःकृशत्वंप्राप्तःसहसाअकस्मात् आशुममानुजंआनयचेद्यदिआनयसितर्हिजीवामि । इत्युक्त्वाआशुसंजयमादिशत् । आनेतुमितिशेषः ॥ १२ ॥ अपास्तदोषःनिरस्तक्रोधःववंदे । सचराजाएनंविदुरं ॥ १३ ॥ क्षत्तारंविदुरंअमर्षात् । अक्षमात्... विदुरेराज्ञा... तयावत् । समंत्र्यविचार्य पांडवानांमध्येएकमुतएकमपिवाहंतुंछन्नोपधेनैव । उपधिःछद्म । तथाचआच्छादितछद्मनैवययुः ॥ १४ ॥ ॥ ॥

व्यासःतेषांदुर्योधनादीनांगमनंगमनप्रयोजनंविज्ञाय । आंबिकेयंधृतराष्ट्रमभिगम्य तवसुतंनिवारयेत्यवदत् अन्यमनस्थितंकथंव्यासेनज्ञातमित्यतआह । समस्तलोकांतरात्मेति । अस्यांतर्यामित्वेकथंशक्तिरित्यतआह । परमेति । तस्माद्विज्ञायेतिसंबंधः ॥ १५ ॥ किमित्यवददित्यतआह । अवाप्येति । अयंतेसुतःपार्थानवाप्य अथमृत्युंगमिष्यति । हियस्मात्तस्मादाशुनिवारयेतिअवददितिसंबंधः । इतीरितेसतिव्यासेनेतिशेषः । तेनधृतराष्ट्रेणत्वंनिवारयेतिप्रोक्तोहरिरवदत् । किमिति । आह तैःसहनसंवदे । दोषिणांनामोच्चारणात् दोषप्राप्तिरितिस्मरणात् स्वयंदोषहीनोपितैरित्यूचे । दुष्टैःसहसंवादोनकर्तव्यइति अहंनसंवदेसद्बुद्धिंनवदिष्ये । इत्यूचे । ननुत्रोधनेऽशक्तत्वादिति भावः ॥ १६ ॥ किंतुमैत्रेयःमैत्रेयाख्यमुनिःइहआयास्यति । सशिक्षार्थंवाचमेतेष्वभिधास्यति । वदिष्यति तवएषसुतःतांवाचंकरोतिचेत्तर्हि अस्यदुर्योधनस्यभद्रंमंगलं

विज्ञाय तेषां गमनं समस्तलोकांतरात्मा परमेश्वरेश्वरः ॥ व्यासोभिगम्यावददांबिकेयं निवारयाश्वेव सुतं तवेति ॥ १५ ॥ अवाप्य पार्थानयमद्य मृत्युं सहानुबंधो गमिता ह्यसंशयम् ॥ इतीरिते तेन निवारयेति प्रोक्तो हरिः प्राह न संवदे तैः ॥ १६ ॥ मैत्रेय आयास्यति सोपि वाचं शिक्षार्थमेतेष्वभिधास्यतीह ॥ तां चेत्करोत्येष सुतस्तवास्य भद्रं तदा शप्स्यति त्वन्यथा सः ॥ १७ ॥ उक्त्वेति राजानमनंतशक्तिर्व्यासो ययौ तत्र गतेषु तेषु ॥ सुयोधनाद्येषु हतेषु पार्थैर्भूभारहानिर्न भवेदिति प्रभुः ॥ १८ ॥ सर्वाश्च चेष्टा भगवन्नियुक्ताः सदा समस्तस्य चितोचितस्य ॥ तथापि विष्णुर्विनिवारयेत्क्वचिद्वाचा विधत्ते च जनान्विडंबयन् ॥ १९ ॥ ॥

स्यात् । अन्यथानकरोतिचेत् समैत्रेयःशप्स्यति । शापंप्रदास्यति ॥ १७ ॥ व्यासःइत्युक्त्वाययौ । व्यासःकिमर्थंनिवारयेत्यवददित्यत आह । तत्रेति । तत्रप्रतिगतेषुतेषु सुयोधनाद्येषुपार्थैस्तत्रतत्रनेहतेषुसत्सु भूभारहानिःसर्वभूभारहारःनभवेदितिमत्वा प्रभुःव्यासःनिवारयेत्यवददितिसंबंधः ॥ १८ ॥ नन्वीश्वरोंतर्यामित्वेनप्रेरकःसन् किमर्थं न्यवारयदित्यतआह । सर्वाश्चेति । समस्तस्यचितःचेतनस्यसमस्ताचितोजडस्येतिसर्वजगतइत्यर्थः । सर्वाश्चेष्टासर्वेव्यापाराःसदासकलदेशकालेषु भगवन्नियुक्ताः भगवताप्रेरिताःयद्यपितथापिसकलचेष्टाप्रवर्तकोपिविष्णुर्जनान्विडंबयन् क्वचिद्वाचानिवारयेत् एवंमाकुर्वितिनिवारयेत् क्वचिद्वाचाविधत्ते एवंकुर्विति ॥ १९ ॥ ॥

अथभूपतिःधृतराष्ट्रःसमैत्रेयःपांडवान्प्रशंसन्राज्यंदातुंआह पांडवानामितिशेषः ॥ २० ॥ मुनींद्रःकिर्मीरनाशादिभिःप्रतापंवदन् विशेषतःभीमबलंप्रशशंस । तद्भी मबलप्रशंसनंश्रुत्वा हसन्हसमानोधृतराष्ट्रपुत्रःनिजोरुंस्वांकंआस्फालयामास । ताडयामास । अतएवउग्रःक्रूरः ॥ २१ ॥ एनंसुयोधनं । धृतराष्ट्रानतोपिधृतराष्ट्र स्कृतोपित्वंराज्यदोनचेत्तर्हि तथाऊरुभेदनंभवेदित्युक्ताययौ ॥ २२ ॥ स्वपित्रा दुर्योधनपित्रा पृष्टंक्षत्रा विदुरेणोक्तंकिर्मीरवधंश्रुत्वा सधार्तराष्ट्रःअत्रसत् अबिभेत् । कृष्णे कृष्णाय । कृष्णेत्युपलक्षणंपांचालादिष्वपीतिग्राह्यम् ॥ २३ ॥ सकृष्णआयात् । येसंबंधिनःतेप्याययुरितिशेषः । तदीयान्कृष्णसंबंधिनोगुणानुच्चैःउत्कृष्टस्वेनगृणंतःस्तुवं

मैत्रेय अगादथ भूपतिश्च पुत्रान्समाहूय सकर्णसौबलान् ॥ संपूजयामास मुनिं स चाह दातुं राज्यं पांडवान्सं प्रशंसन् ॥ २० ॥ विशेषतो भीमबलं शशंस किर्मीरनाशादि वदन्मुनींद्रः ॥ श्रुत्वा हसंस्तद्धृतराष्ट्रपुत्र आस्फालयामास निजोरुमुग्रः ॥ २१ ॥ शशाप चैनं मुनिरुग्रतेजाः स्तदोरुभेदाय भवेत्सुयुद्धम् ॥ इत्यूचिवान्धृतराष्ट्रा नतोपि ययौ न चेद्राज्यदस्त्वं तथेति ॥ २२ ॥ श्रुत्वा तु किर्मीरवधं स्वपित्रा पृष्टं क्षत्रोक्तं सोत्रसद्धार्तराष्ट्रः ॥ वने वसंतोथ पृथासुतास्तं वार्तां स्वकीयां प्रापयामासुराशु ॥ २३ ॥ कृष्णो सोपि द्रुतमायात्ससत्यः संबंधिनो ये च पांचालमुख्याः ॥ क्रुद्धं कृष्णं धार्तराष्ट्राय पार्थाः क्षमापयामासुरुच्चैर्गृणंतः ॥ २४ ॥ गुणांस्तदीयानमितान्प्रणम्य तदा रुदंती द्रौपदी चाप पादौ ॥ सा पादयोः पतिता वासुदेवमस्तौत्समस्तप्रभुमात्मतंत्रम् ॥ २५ ॥ अचिंत्यनित्याव्ययपूर्णसद्गुणार्णवैकदेहाखिलदोषदूर ॥ रमाब्जजेशेशसुरेंद्रपूर्ववृंदारकाणां सततामिवंद्य ॥ २६ ॥ ॥ ॥

तः पार्थाःदुर्योधनाय । क्रुधद्रुहेत्यादिनाकर्मणिचतुर्थी । दुर्योधनंप्रतिक्रुद्धंकृष्णं प्रणम्यक्षमापयामासुः ॥ २४ ॥ पादौकृष्णस्येतिशेषः । आत्मतंत्रंस्वतंत्रं ॥ २५ ॥ स्तुतिंविवृणोति । अचिंत्येत्यादिना । अचिंत्यःरमयापिसाकल्येनध्यातुमशक्यःनित्यःनाशरहितःअव्ययःह्रासरहितः । पूर्णसद्गुणार्णवएवएकःमुख्यःदेहोयस्यसतथा तस्यसंबुद्धिः । पारतंत्र्याद्यखिलदोषदूर । रमालक्ष्मीःअब्जजःब्रह्माईशोवायुःईशःशिवःसुरेंद्रःइंद्रः एतत्पूर्वदेवानांसततामिवंद्य सततंसंततं मुक्तामुक्तावस्थायांअभिवंद्य ॥ २६ ॥

समस्तस्यजगतःचेष्टाप्रदव्यापारप्रद । सर्वजीवसर्वेषांप्राणधारक । जीवप्राणधारणइतिधातुः । प्रभोसमर्थ । विमुक्तानांमुक्तानामाश्रय । सर्वेभ्यःरमादिभ्यःपाग्उत्तम । इतिब्रुवंतीएवंस्तुवंतीसकलानुभूतं केशाकर्षणवस्त्रहरणाद्यनुभूतं अच्युतस्यनाशरहितस्यकृष्णस्यजगाद । जीवोपिनाशरहितःकृष्णस्तथा चेत्सोपितेषांकिंकरिष्यतीत्यतआह । सर्वेति । सर्वेशितुःसर्वेषांशिक्षणेसमर्थस्येत्यर्थः ॥ २७ ॥ ननु पांचालादिषुसत्सु कृष्णस्यकिमर्थंजगादेत्यतआह यस्येति स्वयंद्रौपदीशेषेशविपादिकेभ्यः शेषरुद्रगरुडादिदेवेभ्यः यस्यकृष्णस्याधिकानुग्रहपात्रभूता हियस्मात्तस्मादितिसंबंधः । तेषांसुयोधनादीनांभार्याः दर्शयेदर्शयिष्यामि । कथंभूताःभीमहतान्पतीन्आलिंग्यविमुक्तकेशाःविकीर्णकेशाः । नान्यथाउक्तस्यवैपरित्यंनभवतीतिसंबंधः ॥ २८ ॥ मधुरैःमनोहरैःइमांप्रतिजगाद ॥ २९ ॥ किमिति । यद्यहंइहभवतांसमीपेस्थितःस्यांतर्हि एवंनभवितानाभविष्यदिति । अहंसाल्वराजंप्रत्ययोधयंयुद्धंकृतवानस्मि । असौसाल्वःहतश्चमयेतिशेषः ॥ ३० ॥ ननु यदीहाहंस्थितस्तदानैवंभवितेत्युक्तं । तथाचकृष्णस्य देशकालतोव्याप्तिर्नास्तीत्यागतमित्यतआह । सन्निधानइति सन्निधानेअतिसामीप्येविद्यमानेऽक्षिपक्ष्मणि दूरेपर्वताग्रवर्तिघटादौ कालव्यवहितेअतीतादिकालेनव्यवहितेघटादौ वस्तुव्यवहितेवस्तुनामित्यादिनाव्यवहितेवटादौ ॥ ३१ ॥ विष्णोःअशक्तिःज्ञानाद्यसामर्थ्यंनविद्यते । कुतःनित्याव्यवहितत्वतःनित्यंसर्वदासर्वगतत्वात् । तथाचानेन देशकालव्याप्तिरुक्ताभवति । तथापि सर्वदासकलज्ञानशक्तिमत्वेपि । प्रभुःनरलोकस्यानुकृतिंअनुकरणंकरोति ॥ ३२ ॥ ॥ ॥

समस्तचेष्टाप्रद सर्वजीव प्रभो विमुक्ताश्रय सर्वसार ॥ इति ब्रुवंती सकलानुभूतं जगाद सर्वेशितुरच्युतस्य ॥ २७ ॥ यस्याधिकानुग्रहपात्रभूता स्वयं हि शेषेशविपादिकेभ्यः ॥ श्रुत्वा समस्तं भगवान्प्रतिज्ञां चकार तेषामखिलाश्च योषाः ॥ पतीन्समालिंग्य विमुक्तकेशाः भीमाहतान्दर्शये नान्यथेति ॥ २८ ॥ तां सांत्वयित्वा मधुरैः सुवाक्यैर्नारायणो वाचमिमां जगाद ॥ २९ ॥ यदीहाहं स्थितो नैवं भविताहं त्वयोधयम् ॥ साल्वराजं दुरात्मानं हतश्चासौ सुपापकृत् ॥ ३० ॥ सन्निधानेथ दूरे वा कालव्यवहितेपि वा ॥ स्वभावाद्वा व्यवहिते वस्तुव्यवहितेपि वा ॥ ३१ ॥ नाशक्तिर्विद्यते विष्णोर्नित्याव्यवहितत्वतः ॥ तथापि नरलोकस्य करोत्यनुकृतिं प्रभुः ॥ ३२ ॥ ॥

एवंचेच्छ्रीकृष्णःस्वभक्तपराभवं किमित्युपेक्षमाणोस्तीत्यतआह । दुष्टानामित्यादिना । दुष्टानांदोषवृद्ध्यर्थंपांडवानांपराभवेनदुःखसद्भावज्ञानेन भीमादीनांगुणोन्नतेःगुणान्नमुन्नत्यर्थं । वस्त्रहरणादिसमये क्षमायाअवलंबितत्वात् । युधिष्ठिरेइतिवृद्धंयोग्यतामतिक्रम्यवृद्धं । राजसूयादिसंभवं राजसूयादियज्ञज्ञानादिभ्यःसंभवंजातंधर्मंयोग्यताक्रमतः भीमादीनांयोग्यतानुसारेण कृष्णायांअनुजेषुचसंक्रामयितुं युधिष्ठिरकृतापराधसोढृत्वादितिभावः इच्छयाइत्थंपराभवादिकमचीक्लृपत् । अकरोत् ॥ ३३ ॥ ॥ ३४ ॥ ननु भगवान्योग्यतातिक्रमतः । अनुष्ठितंधर्मंमन्यत्रांकिमर्थंसंक्रामयतीत्यतस्तत्स्वभावएवेत्यभिप्रायेणाह । एधमानेति । स्वयोग्यतायाःएधमानानां जीवानांयोग्यताधिकधर्मादिनाशयतीति एधमानाद्विडितिविष्णोर्वैदिकंनामहीति वैदिकप्रसिद्धिंद्योतयति ॥ ३५ ॥ नकेवलंयुधिष्ठिरगतंधर्मादिसंक्रामयितुमित्थमचीक्लृपत् । किंतुभीष्मादिगतमप्यधिकंधर्मादिकंपार्थेषुसंक्रामयितुमपीत्याह । स्वयोग्यतायाइति । अधर्मएषवार्यतेनधार्मिभिर्भवद्भिर्धैरितिकृष्णयाउक्तोपि भीष्मादयोयतस्तुष्णीमवभूवुः ।

दुष्टानां दोषवृद्ध्यर्थं भीमादीनां गुणोन्नतेः ॥ युधिष्ठिरेतिवृद्धं तु राजसूयादिसंभवम् ॥ ३३ ॥ धर्मं च संक्रामयितुं कृष्णायामनुजेषु च ॥ योग्यता क्रमतो विष्णुरिच्छयेत्थमचीक्लृपत् ॥ ३४ ॥ एधमानद्विडित्येव विष्णोर्नाम हि वैदिकम् ॥३५॥ स्वयोग्यताया अधिकं धर्मज्ञानादिजं फलम् ॥ भीष्मद्रोणाम्बिकेयादेः पार्थेष्वेव निधापितुम् ॥३६॥ पुनश्च पापवृद्ध्यर्थमजो दुर्योधनादिषु ॥ व्यासोम्बिकासुतं प्राह पार्था मेऽभ्यधिकं प्रियाः ॥ ३७ ॥ तेषां प्रवासनं चैव प्रियं न मम सर्वथा ॥ इति दुर्योधनादीनां पापवृद्ध्यर्थमेव सः ॥ प्रिया इत्येव कथनात्पांडवानां शुभोन्नतेः ॥३८॥

अतःभीष्मद्रोणांबिकेयादेःभीष्मद्रोणधृतराष्ट्राः आदयोयस्यसतथा । तस्यसज्जनसमूहस्यस्वयोग्यतायाःअधिकंयद्धर्मज्ञानादिभ्यःजातंफलंपुण्यं तत्पार्थेष्वेवनिधापितुं । इकोयणचीतिवदागमशासनस्यानित्यत्वादिडभावः । स्वायंभुवइतिवत्संज्ञापूर्वकोविधिरनित्यइतिवचनाद्गुणाभावः । णेरनिटीत्यत्रव्यवस्थितविकल्पानुवृत्तेर्णिलोपाभावः । निधापयितुमित्थमचीक्लृपदितिसंबंधः ॥ ३६ ॥ भीष्मादीनांधर्मंपांडवेषुस्थापयितुं दुर्योधनादीनांपापवृद्ध्यर्थं स्वासन्निधानमचीक्लृपदित्युक्तं तत्प्रसंगात्पांडवानांनिर्गमनानंतरं धृतराष्ट्रंप्रतिव्यासोक्तिप्रयोजनंचाह । पुनश्चेत्यादिना । अजःव्यासःपुनश्चकृष्णस्याऽसन्निधानेन जातपुण्यपापवृद्ध्यपेक्षयापुनरित्युक्तं । दुर्योधनादिषुपापवृद्ध्यर्थं अंबिकासुतंप्राह । किमिति । पार्थाःमेऽभ्यधिकंअत्यंतंअधिकंयथाभवतितथाप्रियाः ॥ ३७ ॥ तेषांपार्थानांप्रवासनंवनंप्रतिप्रेषणंममसर्वथाप्रियंनैव । प्रियाइतिकथनादेव पांडवानांशुभोन्नतेःपुण्योत्कर्षार्थं । गुणोन्नतेरितिक्वचित्पाठः। दुर्योधनादीनांपापवृद्ध्यर्थमेव पापवृद्धिप्रकटनार्थमेव । सव्यासःइतिप्राहेतिपूर्वेणान्वयः ३८

अर्जुनादीनां द्यूते क्षमा भीमसेनस्य धार्तराष्ट्रैःकृतापराधस्यक्षमाधर्मः क्षमारूपोधर्मःअतिधर्मस्वरूपः अत्यंतंधर्मरूपोन कुतःभीमसेनस्यगुरुत्वात् । बलज्येष्ठत्वादग्रजत्वाच्च भीमोगुरुर्यस्मात्तस्माद्दुर्ववज्ञाविषये कृताक्षमाअतिधर्मस्वरूपानेतिभावः । अत्रद्यूतेभीमेधर्मःनिरौपधःनिर्व्यभिचारइत्यर्थः । धर्मइत्यस्योभयत्रसंबंधः । युधिष्ठिरोदुःखहेतुस्त्वैकइत्यादिना । युधिष्ठिरावज्ञायांकृतायां पूज्योस्माकंधर्मजःसंशयोनेत्यादिना परिहारस्योक्तत्वात् । कृष्णांद्यूतेस्थापयध्वंपणायेत्यादिनापिकृष्णावज्ञायां । निपात्यभूतलेहितेशिरोमृदिष्यइति चोक्तत्वाद्भीमेधर्मोनिरौपधइतिभावः । नातिधर्मस्वरूपोक्षेइतिक्वचित्पाठः अक्षेद्यूते ॥ ३९ ॥ द्रौपद्याअप्यतिक्लेशात् ल्यब्लोपनिमित्तापंचमी । अतिक्लेशमनुभूयक्षमामहान् धर्मःअभूत् । साद्रौपदीशापोनकार्यःनदेयइतिभीममनःभीममनोभिप्रायं अलंवेद हियस्मात्तस्मात्क्षमाधर्मोऽभूदितिसंबंधः।

गुरुत्वाद्भीमसेनस्य क्षमा द्यूतेर्जुनादिनाम् ॥ नातिधर्मस्वरूपोत्र धर्मो भीमे निरौपधः ॥ ३९ ॥ द्रौपद्याअप्यतिक्लेशात्क्षमा धर्मो महानभूत् ॥ सा हि भीममनो वेद न कार्यः शाप इत्यलम् ॥ ४० ॥ तस्माद्यथायोग्यतया हरिणा धर्मवर्धनम् ॥ कृतं तत्रासन्निधानं कारणं केशवोब्रवीत् ॥ ४१ ॥ साल्वं श्रुत्वा समायांतं रौग्मिणेयादयो मया ॥ प्रस्थापिता हि भवतां सकाशे ते ययुः पुरीम् ॥ तदा साल्वोपि सौभेन द्वारकामर्दयद्भृशम् ॥४२॥ प्रद्यूम्न आशु निरगादथ सर्वसैन्यैरन्यैश्च यादवगणैः सहितोनुजैश्च ॥ साल्वोवगम्य तनयं मम तद्विमानात्पापोवरुह्य रथमारुहदत्र योद्धुम् ॥ ४३ ॥ कृत्वा सुयुद्धममुना मम पुत्रकोसावस्त्राणि तस्य विनिवार्य महास्त्रजालैः ॥ दत्तं मया शरममोघमथाददे तं हंतुं नृपं कृतमतिस्त्वशृणोद्वचः खे ॥ ४४ ॥ ॥ ॥ ॥ ॥

शापसामर्थ्येसत्यपिद्रौपद्याःक्षमाभीमवदेवमहान्धर्मोभूदितिभावः ॥ ४० ॥ युधिष्ठिरेऽतिवृद्धमित्याद्युक्तमुपसंहरति । तस्मादिति । तस्मात्कारणाद्यथायोग्यतया योग्यतानुसारेण हरिणाधर्मवर्धनंधर्मवृद्धिःपार्थेष्वितिशेषः ॥ ४१ ॥ यदीहाहंस्थितोनैवंभविताहंत्वयोधयंइत्यादिनासंक्षेपेणोक्तंस्वासन्निधानकारणंविविच्याह । साल्वमित्यादिना । भवतांसकाशेसाल्वंआयांतंश्रुत्वा रौग्मिणेयादयः प्रद्युम्नाद्याःप्रस्थापिताःप्रेषिताः तेप्रद्युम्नाद्याःयदापुरींद्वारकांप्रतिययुः । तदासौभेनसहितःसन् अर्दयत्पीडयामास ॥ ४२ ॥ अथनिरगात्निर्गतोभूत् । पुर्याइतिशेषः । साल्वः ममतनयमवगम्यज्ञात्वा अत्रास्मिन्प्रद्युम्नेनिर्बलत्वंमन्यमानःसन्नितिशेषः । तद्विमानात्सौभविमानादवरुह्य योद्धुंरथंअरुहत्आरुरोह ॥ ४३ ॥ मयादत्तंशरमाददे । हंतुंकृतमतिःकृतनिश्चयःप्रद्युम्नःखेआकाशे अशरीरिवचइतिभावः ॥ ४४ ॥ ॥

क्रिमित्यश्रुणोदित्यतआह । नारायणेनेति । उपगम्यप्राप्यनिहन्मीत्येवाभिक्लृप्तंसंकल्पितं तेनकारणेनहरिणापिभार्गवेणस्वमनोनुसारतःस्वेच्छानुसारात् साल्वःविद्रावितोननिहतः ॥ ४५ ॥ हियस्मात्तस्मात्कारणात्अयंसाल्वःत्वयावध्योन । अयंत्वद्धस्तगतोबाणः दयितःप्रियः तेनकारणेनतंशरंमामुंच । हृदिस्थितोहंइमंसाल्वंविनिवर्तयइतिईरणेनवायुनाईरितमुक्तंवचः खेअश्रुणोदितिपूर्वेणान्वयः ॥ ४६ ॥ संजहेउपसंहृतवान् । सौभमारुह्यबालकलहेन बालेनसहकृतकलहेनकिंकार्यं अत्रबालकलहेजयपराजयौनस्तइतिशेषः । कृष्णेनसहसंगरःयुद्धंस्यादितिव्याजेनययौ ॥ ४७ ॥ मंत्रिगणैःसहसहितःतदीयांसाल्वसंबंधिनीं अहमपितत्रचतस्मिन्नेवक्षणेसपदिशीघ्रंअगमं । तैःप्रद्युम्नाद्यैःउक्तमशेषंसाल्वकृतदुराचरणंश्रुतवान् ॥४८॥ यस्मिन्मदीयेशरेकरगतेकरस्थेसति मत्तेजसामत्सामर्थ्येनध्रुवःविजयःस्यात् । तदनुसंग्रहणात्

नारायणेन हि पुरा मनसाभिक्लृप्तं कृष्णावतारमुपगम्य निहन्मि साल्वम् ॥ इत्येव तेन हरिणापि स भार्गवेण विद्रावितो न निहतः स्वमनोनुसारात् ॥ ४५ ॥ वध्यस्त्वया न हि ततोयमयं च बाणश्चक्रायुधस्य दयितो नितराममोघः मा मुंच तेन तमिमं विनिवर्तयेहं साल्वं हृदि स्थित इतीरितमीरणेन ॥ ४६ ॥ श्रुत्वा वचः सपवनस्य शरं त्वमोघं संजहे आशु स च साल्वपतिः स्वसौभम् ॥ आरुह्य बालकलहेन किमत्र कार्यं कृष्णेन संगर इति प्रययौ स्वदेशम् ॥४७॥ प्रद्युम्नसांबगदसारणचारुदेष्णाः सेनां निहत्य सह मंत्रिगणैस्तदीयाम् ॥ आह्लादिनः स्वपुरमाययुरप्यहं च तत्रागमं सपदि तैः श्रुतवानशेषम् ॥४८॥यस्मिंश्छरे करगते विजयो ध्रुवः स्यान्मत्तेजसा तदनुसंग्रहणात्सुतान्मे ॥ यातं निशम्य रिपुमात्मपुरीं च भग्नां दृष्ट्वैव तेन तदनुव्रजनं कृतं मे ॥ ४९ ॥ तं सागरोपरिगसौभगतं निशाम्य मुक्ते च तेन मयि शस्त्रमहास्त्रवर्षे ॥ तं संनिवार्य च मया शरपूगविद्धो माया युयोज मयि पापतमः स साल्वः ॥ ५० ॥ ॥

तस्यबाणस्यानुसंग्रहणाद्धारणान्निमित्तात् मेसुतात्प्रद्युम्नात् यातंगतंरिपुंनिशम्य पराजयंप्राप्येतिशेषः । तेनसाल्वेनभग्नांनाशितांआत्मपुरींदृष्ट्वामेमयातदनुव्रजनंतस्यानुगमनंकृतम् ॥ ४९ ॥ सागरोपरिगच्छतीतिसागरोपरिगंतच्चतत्सौभंचतस्मिन्गतःतथातंसाल्वंनिशाम्यदृष्ट्वा । तेनसाल्वेनमयिशस्त्रमहास्त्रवर्षे शस्त्राणिचमहास्त्राणिचशस्त्रमहास्त्राणि तेषांवर्षस्तस्मिंस्तथामुक्तेसति तं अस्त्रवर्षसन्निवार्य मयाशरपूगविद्धःशरसमूहेनताडितःससाल्वःमयिमायाःऐंद्रजालिकमायाःयुयोज युजुर्योगइतिधातुः। अतएवपापतमः अतिपापी ॥ ५० ॥ ॥ ॥ ॥ ॥

अहंताःमायाःक्षणंक्षणमात्रंक्रीडयाविनोदेनेत्यर्थः । समरेनिशाम्यदृष्ट्वा ज्ञानास्त्रतःविज्ञानास्त्रेणमायाःप्रतिविधूयनिरस्य दैत्यांश्चहत्वा ज्ञानास्त्रेणेतिशेषः । गिरिंद्रवर्षिणंतंसा ल्वंवाधौसमुद्रेन्यपातयं अरींद्रविभिन्नबंधंअरींद्रेणचक्रेणविभिन्नाःविदारिताःबंधाःयस्यतत्तथा तत्सौभंचन्यपातयम् ॥ ५१ ॥ अथोसमुद्रोपरिनिपातनानंतरं । विभुजं विगतौभुजौयस्यासौतथातम् ॥ ५२ ॥ तस्मात्कार्यतःसाल्वकार्यवशात् मेविप्रकर्षाद्वियोगात् इदंवनवासादिव्यसनंदुःखमित्यर्थः आस । भवतामितिशेषः । इतिनि गद्यउक्त्वापुनःअत्रवनेदिनानिकतिचिद्दिनानिउवासासत्याचोवास॥५३॥पांडवान्अन्वेवसहैववनंप्रतियाताः अत्रैववनेसंस्थिताः॥५४॥ततःवनंप्रतिगमनानंतरं समनुज्ञातः

ताः क्रीडया क्षणमहं समरे निशाम्य ज्ञानास्त्रतः प्रतिविधूय बहूंश्च दैत्यान् ॥ हत्वाशु तं च गिरिवर्षिणमाशु सौ भं वार्धौ न्यपातयमरींद्रविभिन्नबंधम् ॥५१॥ तं स्यंदने स्थितमथो विभुजं विधाय बाणेन तद्रथवरं गदया विभि द्य ॥ चक्रेण तस्य च शिरो विनिकृत्य धातृशर्वादिभिः प्रतिनुतः स्वपुरीमगां च ॥ ५२ ॥ तस्मादिदं व्यसनमास हि विप्रकर्षान्मे कार्यतस्त्विति निगद्य पुनश्च पार्थान् ॥ कृष्णां च सांत्वयितुमत्र दिनान्युवास सत्या च सोमक सुतामनु सांत्वयंती ॥५३॥ पांडवानां च या भार्याः पुत्रा अपि च सर्वशः ॥ अन्वेव पांडवान्याता वनमत्रैव संस्थि ताः ॥ ५४ ॥ धृष्टद्युम्नस्ततः कृष्णां सांत्वयित्वैव केशवम् ॥ प्रणम्य समनुज्ञातो भागिनेयैः पुरं ययौ ॥ ५५ ॥ धृष्टकेतुश्च भगिनीं काशिराजः सुतामपि ॥ पुरं ययतुरादाय कुंत्यैवान्याः सह स्थिताः ॥ ५६ ॥ पार्वती नकुल स्यासीद्भार्या पूर्वं तिलोत्तमा ॥ पूर्वोक्ते चैव यमयोर्भार्ये कुंत्या निवारिताः ॥ ५७ ॥ सुभद्रामभिमन्युं च रथमा रोप्य केशवः ॥ पांडवानभ्यनुज्ञाय सभार्यः स्वपुरं ययौ ॥ ५८ ॥ कंचित्कालं द्रौपदेया उष्य पांचालके पुरे ॥ ययुर्द्वारावतीमेव तत्रोषुः कृष्णपालिताः ॥ ५९ ॥ ॥ ॥ ॥

गृहीतानुज्ञःसन् भागिनेयैःभगिनीपुत्रैःद्रौपदीपुत्रैरित्यर्थः सह पुरंपांचालपुरम् ॥ ५५ ॥ धृष्टकेतुश्चभागिनींयुधिष्ठिरभार्यांदेवकीमादाय काशिराजःसुतांभीमभार्यांका लीमादायपुरंस्वं स्वपुरंप्रतिययतुःअन्याःपार्थानांभार्याःकुंत्यासहस्थिताः विदुरगेहइतिशेषः ॥५६ ॥ पूर्वयातिलोत्तमासापार्वतीनाम्नीभूत्वा नकुलस्यभार्याआसीत् साच पूर्वोक्तेयमयोभार्येशल्यमागधयोःकन्येकुंत्यावारिताःवनंप्रतिमागच्छथमितिवारिताः हियस्मात्तस्मात्कुंत्यासहस्थिताइतिसंबंधः ॥ ५७ ॥ पांडवानभ्यनुज्ञाय अन्वागता नितिशेषः ॥ ५८ ॥ द्रौपदेयाःद्रौपदीसुताःतत्रद्वारकायाम् ॥ ५९ ॥ ॥ ॥ ॥ ॥

ततःपरं द्यूतक्रीडानंतरं स्वकृतेनद्यूतक्रीडापराधेननिर्विण्णःव्यथितःसन् धर्मराजःकृष्णांभ्रातृभार्यापदे भ्रातुर्भीमस्यभार्यापदेपत्नीस्थाने सर्वदास्थापयामास । द्रौपदीसंगं तत्याजेतिभावः ॥ ६० ॥ मुनिशेषान्नभोजिनःमुनीनांभोजनानंतरं उर्वरितान्नंभुंजंतइत्यर्थः । अनुजेषुभुक्तवत्सुसत्सुस्वयंभुङ्क्ते ॥६१॥ तदाज्ञायाःयुधिष्ठिराज्ञायाःपूर्वभोजिनःअग्रजभोजनात्पूर्वंभुंजानाः । तस्ययुधिष्ठिरस्यानंतरं ॥ ६२ ॥ विष्णुपरायणानांविष्णुःपरमयनं अश्रयोयेषां तत्प्रार्पणान्नैकभुजां तस्मिन्विष्णौप्रार्पणंसमर्पणंयस्य तत्तथा तथाभूतमन्नंएकंकेवलंभुंजंतइति तथातेषांतत्प्रार्पणान्नैकभुजांपार्थानांतत्रवने संवत्सरएकवत्सरःप्रयातःगतःतत्रसंवत्सरानंतरं सुवेत्रीशोभननीतिज्ञाकृष्णाभीमाज्ञया धर्मजंप्रतिजगाद ॥ ६३॥ ननु भीमःवनवासमज्ञातवासंचाकृत्वाप्रतिज्ञांविहायकृष्णांकथंवक्तुं आज्ञापयामासेत्यतआह अतिमार्दवेत्यादिना अतिमार्दवयुक्तत्वा

ततः परं धर्मराजो निर्विण्णः स्वकृते न ह ॥ भ्रातृभार्यापदे कृष्णां स्थापयामास सर्वदा ॥ ६० ॥ ऊषुर्वने च ते पार्थाः मुनिशेषान्नभोजिनः ॥ भुक्तवत्स्वेवानुजेषु भुङ्क्ते राजा युधिष्ठिरः ॥ ६१ ॥ अलंघ्यत्वात्तदाज्ञाया अनुजाः पूर्वभोजिनः ॥ तस्यानंतरमेवैका भुङ्क्ते सा पार्षतात्मजा ॥ ६२ ॥ एवं सदा विष्णुपरायणानां तत्प्रार्पणान्नैकभुजां प्रयातः ॥ संवत्सरस्तत्र जगाद कृष्णा भीमाज्ञया धर्मराजं सुवेत्री ॥ ६३ ॥ अतिमार्दवयुक्तत्वाद्धर्मराजश्चतुर्दशे॥ अपि वर्षे गुरुभयात् राज्यं नेच्छेदिति प्रभुः ॥ मारुतिः प्रेषयामास कृष्णां प्रस्तावहेतवे ॥ ६४ ॥ क्षमा सर्वत्र धर्मो न पापहेतुश्च दुर्जने ॥ राज्ञां सामर्थ्ययुक्तानामिति संस्थाप्य शास्त्रतः ॥ ६५ ॥ हत्वा चतुर्दशे वर्षे धार्तराष्ट्रानराज्यदान् ॥ ६६ ॥ कर्तुं राज्यं पुरो गंता भवानीत्यग्रजेन ह ॥ कारयन्सत्यशपथं विवादस्य क्रमेच्छया ॥ आदिशत्प्रथमं कृष्णां भीमः सा नृपमब्रवीत् ॥ ६७ ॥ ॥ ॥ ॥

न्निमित्तात् धर्मजश्चतुर्दशेवर्षेपिगुरुभयात् भीष्मधृतराष्ट्रादिगुरुभयात् राज्यंनेच्छेदितिबुध्या प्रभुःअंतर्यामित्वेनराज्यकर्तारंकर्तुंसमर्थोपिमारुतिःप्रस्तावहेतवे स्वविवक्षितं वक्तुंप्रसंगारंभरचनार्थंकृष्णांप्रेषयामास ॥ ६४ ॥ किंकरिष्यन्प्रेषयामासेत्यतआह । क्षमेति । सर्वत्रसज्जनासज्जनेषुक्षमाधर्मोन । सामर्थ्ययुक्तानांराज्ञांदुर्जनेपापहेतुश्चेतिशास्त्रतःसंस्थाप्य । युधिष्ठिरंप्रतिसमर्थयित्वास्वयंनिश्चित्येतिवा ॥ ६५ ॥ चतुर्दशेवर्षेवत्सरेराज्यंददतीतिराज्यदास्तथानभवंतीत्यराज्यदास्तान् धार्तराष्ट्रान्हत्वा ॥६६॥ राज्यंकर्तुंपुरःअग्रतोगंताभवानि इतिअग्रजेनसत्यशपथं सत्यप्रतिज्ञांकारयन् कारयिष्यन्सन् भीमःविवादस्यक्रमेच्छया प्रारंभक्रमेच्छया प्रथमंआदौकृष्णामादिशत् । सानृपमब्रवीत् ॥ ६७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

किमिति । नैवेति । नृपस्यसामर्थ्ययुक्तस्यनृपस्येत्यर्थः । कुजनतासुदुष्टजनसमूहेषुक्षमाधर्मोनैव । त्वंसार्वकालंसर्वदासुजनदुर्जनेषुतांक्षमांवृथैवधृतवानासि । इत्युक्तो नृपतिराह । किमिति । सर्वत्रसर्वप्राणिषुक्षमैवपरमामुख्योधर्मइत्यर्थः । समस्तंजगत् तद्विधृतमेवतयाक्षमयाविधृतंरक्षितंसन्नृपौरीतिशेषः ॥ ६८ ॥ सर्वत्रक्षमाकर्तव्येत्ये तदुपपादयन्नाह कर्ताचेति । इहलोकेस्यजगतःसर्वसुखदुःखजन्मादिसर्वंतदनुदत्तंतेनभगवताऽनुयोग्यतानुसारेण दत्तंहियस्मात्तस्मात् नारायणश्चनारायणएवसर्वजगतःसु खदुःखयोःकर्ता । तस्मान्नारायणस्यैवकर्तृत्वात्कुतश्चहेतोः कश्चित्पुरुषः कोपविषयःपुरुषोनास्ति । क्षमैवपरमेत्याद्युक्तमुपपाद्योपसंहरति । तस्मादिति । तस्मादीश्वरस्य कर्तृत्वात् सकलेषुसर्वप्राणिषु अस्यपुरुषस्य क्षमैवपरमोधर्मः ॥ ६९ ॥ पार्वतीआह । किमिति । यदिक्षमाधर्मःतर्हि राज्ञानकृत्यं सर्वत्रक्षमाधर्मश्चेत् दुष्टशिक्षणाभावा त् राज्ञाप्रयोजनंनास्तीतिभावः । राजाभावेलोकयात्रालोकस्यजनस्ययात्रा गमनागमनकृषिवाणिज्यादिव्यवहारःनचनैवभवेत् । जगत्कापुरुषैःचोरादिदुष्टपुरुषैर्विनश्येत्

नैव क्षमा कुजनतासु नृपस्य धर्मस्तां त्वं वृथैव धृतवानसि सार्वकालम् ॥ इत्युक्त आह नृपतिः परमा क्षमैव सर्वत्र तद्विधृतमेव जगत्समस्तम् ॥६८॥ कर्ता च सर्वजगतः सुखदुःखयोर्हि नारायणस्तदनुदत्तमिहास्य सर्वम् ॥ तस्मान्न कोपविषयोस्ति कुतश्च कश्चित्तस्मात्क्षमैव सकलेषु परोस्य धर्मः ॥ ६९ ॥ इत्युक्तवंतं नृपमाह पार्वती यदि क्षमा सर्वनरेषु धर्मः ॥ राज्ञा न कृत्यं न च लोकयात्रा भवेज्जगत्कापुरुषैर्विनश्येत् ॥ ७० ॥ सत्यं च विष्णुः सकलप्रव र्तको रमा विरिंचेशपुरःसराश्च ॥ काष्ठादिवत्तद्वशगाः समस्तास्तथापि न व्यर्थता पौरुषस्य ॥ ७१ ॥ तदाज्ञया पुरुषश्चेष्टमानश्चेष्टानुसारेण शुभाशुभस्य ॥ भोक्ता न तच्चेष्टितमन्यथा भवेत्कर्ता तस्मात्पुरुषोप्यस्य वश्यः॥७२॥

॥ ७० ॥ सर्वकर्तृत्वंविष्णोराज्ञायाद्युक्तंतदंगीकृत्याह । सत्यंचेति । विष्णुःसकलप्रवर्तकइतियदुक्तंतत्सत्यंचसत्यमेव । काष्ठादिवदित्यादिशब्देन कंथादयोगृह्यंते यथा काष्ठादिकंपुरुषाधीनं तथातद्वशगाःविष्णुवशवर्तिनइतिसत्यमेव । तथापिविष्णोःसकलप्रवर्तकत्वेपिपौरुषस्यपुरुषप्रयत्नस्यव्यर्थतानिष्फलतान ॥ ७१ ॥ पौरुषस्याऽव्यर्थ तामुपपादयति । तदाज्ञयेति । तदाज्ञयाभगवदाज्ञयापुरुषःचेष्टमानःकर्मकुर्वाणःचेष्टानुसारेणकर्मानुसारेणशुभाशुभस्येतिद्वंद्वैकवद्भावः । पुण्यपापयोःभोक्ताफलमितिशे षः । तच्चेष्टितंतेनपुरुषेणचेष्टितंकृतंकर्मअन्यथा अजागलस्तनवदसमर्थंनभवेत् अफलंनभवेदित्यर्थः । एवंकर्तृत्वमुपपाद्योपसंहरति । कर्तातस्मादिति । तस्माद्भोक्तृत्वा त्पुरुषःकर्ता । अत्रायंप्रयोगः । जीवःकर्ताभोक्तृत्वात् यःकर्तानभवतिसभोक्तापिनभवति । यथाघटइति । ईश्वरस्यापिकर्तृत्वेनसपक्षत्वात्तत्रभोक्तृत्वाभावादसाधारणानैका तिकइतिनाशंकनीयं । अस्वतंत्रकर्तृत्वसाधनादित्याह । अपीति । कर्तापिअस्यभगवतःवश्यःअधीनः ॥ ७२ ॥ ॥ ॥ ॥

ननु भोकृत्वादितिहेतुरस्तुकर्तृत्वंसाध्यंमास्तु विपक्षेबाधकाभावादितितत्राह । वृथेति । यदिपौरुषंपुरुषप्रयत्नोवृथास्यात् यदिपुरुषःकर्तानस्यादितियावत् । तर्हि समस्त वेदगः विधिःअहरहःसंध्यामुपासीतेत्यादिर्विधिर्निषेधश्चनसुरांपिबेत्नपलांडुंभक्षयेदित्यादिनिषेधश्चकस्यहेतोः कस्यार्थेकमुद्दिश्यप्रवृत्तावितिसमस्तवेदगइत्यनेनविधिनिषेधयोःप्रामाणिकत्वंसूचितं । तथाचविधिनिषेधगोचरतया जीवोपिकर्तैवेतिभावः । ननु पुमान्विधिनिषेधगोचरोन अतःकर्तापिनेत्यतआह । विधेरिति । यदिपुमान् विधेर्निषेधस्यनैवगोचरःविषयोनैवस्यात्तर्हि तौविधिनिषेधौहरेर्भवतः ॥ ७३ ॥ हरेर्विधिनिषेधगोचरत्वंभवत्वित्यतआह । तेनेति । तेनैवविधिनिषेधगोचरत्वेनैव अमुष्यविष्णोःपुण्येनपापेनचलेपोभवेत् । तन्निबंधनसुखदुःखभोक्तृत्वंचस्यादितिभावः । भवतुपुण्यपापलेपइत्यतआह । नैवेति । असौहरिःताभ्यांपुण्यपापाभ्यांनैवलिप्येत । पुण्यपालेपाभावेहेतुमाह । परमःस्वतंत्रइति । तस्मादीश्वरस्यपुण्यपापलेपाभावात् जीवःकर्तेतिभावः । उक्तार्थमुपसंहरति । कर्तेति । ततःईश्वरस्यपुण्यपापलेपाभावादस्यहरे

वृथा यदि स्यात्पौरुषं कस्य हेतोर्विधिर्निषेधश्च समस्तवेदगः ॥ विधेर्निषेधस्य च नैव गोचरः पुमान्यदि स्याद्भवतो हितो हरेः ॥ ७३ ॥ तेनैव लेपश्च भवेदमुष्य पुण्येन पापेन च नैव चासौ ॥ लिप्येत ताभ्यां परमः स्वतंत्रः कर्ता ततः पुरुषोप्यस्यवश्यः ॥७४॥ इतीरितो धर्मजः कृष्णयैव निरुत्तरत्वं गमितस्त्वभर्त्सयत् ॥ कुतर्कमाश्रित्य हरेरपि त्वमस्वातंत्र्यं साधयसीति चोक्त्वा ॥७५॥ छलेन तेन प्रतिभर्त्सिता सा क्षमापयामास नृपं यतः स्त्री॥ वाचालता नातितरां हि शोभते स्त्रीणां ततः प्राह वृकोदरस्तम् ॥ ७६ ॥ राजन्विष्णुः सर्वकर्ता न चान्यस्तत्तंत्रमेवान्यदसौ स्वतंत्रः ॥ तथापि पुंसा विहितं स्वकर्म कार्यं त्याज्यं चान्यदत्यंतयत्नात् ॥ ७७ ॥ ॥ ॥ ॥

वैश्योपिपुरुषः कर्ता ॥ ७४ ॥ अभर्त्सयत् । कृष्णामितिशेषः । किंकृत्वाइत्युक्त्वा । इतीतिकिंकुतर्कं । बाधितानुमानम् ॥७५॥ यतःस्त्रीअतःक्षमापयामास । हेत्वंतरमाह । वाचालतेति । ततःद्रौपदीक्षमापनानंतरं । तंराजानम् ॥७६॥ विष्णोर्यत्सर्वकर्तृत्वंस्वातंत्र्यंचयुधिष्ठिरेणोक्तं तदंगीकृत्य विशेषंवक्तुंद्रौपद्युक्तंजीवस्यापिकर्तृत्वमस्वातंत्र्यंचतावदनुवदति । राजन्निति । हेराजन् विष्णुःसर्वकर्ताअन्योजीवःसर्वकर्तानचैवभवति । अन्यत्तत्तंत्रमेवतस्यविष्णोस्तंत्रमधीनमेव असौहरिःस्वतंत्रःतर्हि मन्मतमेवांगीकृतमित्यतःद्रौपद्युक्तंविधिनिषेधगोचरतयाजीवस्यकर्तृत्वंस्मारयति । तथापीति । तथापिहरेःसर्वकर्तृत्वेपि पुंसापुरुषेणविहितंवर्णाश्रमाणांवेदविहितंस्वकर्मस्ववर्णाश्रमयोग्यंकर्मकार्यंकर्तव्यं । अन्यत् । अविहितंनिषिद्धमितियावत् । त्याज्यंनकर्तव्यमित्यर्थः । अत्यंतयत्नादित्युभयत्रसंबध्यते ॥ ७७ ॥ ॥ ॥

जीवकर्तृत्वेप्रत्यक्षंप्रमाणमाह । प्रत्यक्षमिति । एतद्भोजनादिनानारूपंपुरुषस्यकर्मप्रत्यक्षं पुरुषनिष्ठतयाप्रत्यक्षसिद्धं । तेनअहंकरोमीतिस्वस्वसाक्षिप्रत्यक्षसिद्धेन क्वचिन्न प्रतिहतेनकर्तृत्वेनकेशवस्यप्रेरणा कर्तृत्वस्येतिशेषः अनुमेया विनतंकर्तृत्वमीश्वराधीनं । क्वचित्प्रतिहतत्वात् । राजपुरुषकर्तृत्ववदित्यनुमानेनज्ञातव्या । कर्तृत्वस्यकेशव प्रेरितत्वंज्ञानिप्रत्यक्षसिद्धमेवेत्याह । स्वकर्मेति । विष्णुनाविहितं । श्रुतिस्मृतीममैवाज्ञेइतिवचनात् । विष्णवाज्ञारूपश्रुतिस्मृतिविहितंस्वकर्मकृत्वा तत्प्रेरणैवविष्णुप्रेरणैव कर्मकरणेअनुअनुकूलेतिबुधःज्ञानीमन्यतेजानाति ॥ ७८ ॥ तेनज्ञानेनास्यविष्णोःसम्यग्गतिंसमीचीनांगतिंएति । अशुभोजनःदैवमेवकर्तृइतिमत्वा । एवकारोन्ययोगव्य वच्छेदे ममकर्तृत्वंनास्तीतिमत्वेतिभावः । स्वकंस्वविहितंकर्महित्वा तामसींतमःसंबंधिनींगतिंप्रयाति । तस्माज्जीवस्यकर्तृत्वसद्भावात् विहितकर्मत्यागेनदुर्गतिसद्भावाच्चस्व कर्मकार्यमेव ॥ ७९ ॥ कर्मकरणेइतिकर्तव्यतामाह । ज्ञातव्यमिति । अस्यकर्मकर्तुर्जीवस्यविष्णोर्वशत्वंचज्ञातव्यमेव । तर्ह्यहंकर्तानेतिज्ञात्वा स्वकर्मनहातव्यमित्याह ।

प्रत्यक्षमेतत्पुरुषस्य कर्म तेनानुमेया प्रेरणा केशवस्य ॥ स्वकर्म कृत्वा विहितं हि विष्णुना तत्प्रेरणेत्येव बुधोनु मन्यते ॥ ७८ ॥ तेनैति सम्यग्गतिमस्य विष्णोर्जनो शुभो दैवमित्येव मत्वा ॥ हित्वा स्वकं कर्म गतिं च ता मसीं प्रयाति तस्मात्कार्यमेव स्वकर्म ॥ ७९ ॥ ज्ञातव्यं चैवास्य विष्णोर्वशत्वं कर्तव्यं चैवात्मनः कार्यकर्म ॥ प्र त्यक्षेषा कर्तृता जीवसंस्था तथागमादनुमानाच्च सर्वम् ॥ ८० ॥ विष्णोर्वशे तत्र हेयं द्वयं च जानन् विद्वान् कुरुते कार्यकर्म ॥ तत्प्रेरकं विष्णुमेवाभिजानन् भवेत्प्रमाणत्रितयानुगामी ॥ ८१ ॥ ॥ ॥

कर्तव्यमिति । आत्मनःकार्यकर्तुर्योग्यंकर्मकर्तव्यमेव । जीवकर्तृत्वस्यविष्णवधीनत्वंपुनःसप्रमाणकंदर्शयति । प्रत्यक्षेति । यथाजीवसंस्थाजीवगताएषाकर्तृता प्रत्यक्षाप्र त्यक्षसिद्धा । कुर्वन्नेवेहकर्माणिजिजीविषेदित्यागमात् विप्रतिपन्नःकर्ताभोक्तृत्वात् व्यतिरेकेणघटवदित्यनुमानाच्चसिद्धा । तथासर्वंजीवगतकर्तृत्वादिकंयोगिप्रत्यक्षात् न ऋतेत्वत्क्रियतेइत्यागमाद्दिमतंकर्तृत्वं ईश्वराधीनंकार्यत्वादंकुरवदित्यनुमानाच्चविष्णोर्वशेवर्ततइतिशेषः । तद्द्वयंजीवस्यकर्तृत्वादिकं तस्येश्वराधीनत्वंचनहेयंनत्याज्यमि तिजानन् । ममकर्तृत्वमीश्वराधीनंवर्ततइतिविद्वान्ज्ञानीकार्यकर्मविहितंकर्मकुरुते । एवंजीवगतकर्तृत्वादिकमीश्वराधीनमितियः जानन्सएवप्रमाणत्रितयानुगामीभवति । नान्यइत्याह । तत्प्रेरकमिति । यःतत्प्रेरकंजीवकर्तृत्वप्रेरकंविष्णुमेवाभिजानन्कार्यकर्मकुरुतइतिशेषः । सप्रमाणत्रितयानुगामी प्रत्यक्षादिसिद्धांतांगीकारवान्भवे दित्यर्थः ॥ ८० ॥ ८१ ॥ ॥ ॥ ॥ ॥ ॥

ननु जीवेश्वरग्राहकप्रमाणानांभिन्नाविषयत्वंवा एकविषयत्वेप्यन्यस्याप्रमाणत्वंवास्यात्प्रमाणात्रितयानुगामित्वंकिमर्थंमित्यतआह । पूर्णमिति । तत्त्रयंप्रत्यक्षादित्रयं अवि रोधेनपरस्परविरोधाभावेन एकत्रस्थंएकार्थप्रतिपादकंचेत्तर्हीतिशेषः । तत्पूर्णप्रमाणंमुख्यंभवेदितिशेषः । तत्त्रयंअविरोधिपरस्परंविरोधरहितं पृथगीश्वरस्यजगदादिकर्तृ त्वमागमविषयं जीवस्यभोजनादिकर्तृत्वंप्रत्यक्षविषयमितिभिन्नविषयंचेत्तर्हि तन्मध्यंमध्यमंप्रमाणंभवेत् प्रमाणानांप्राबल्याभावेन विरोधाभावेनचाप्रामाण्यशंकाविषयत्वा दितिभावः । तत्त्रयंविरोधिएकस्मिन्नर्थेपरस्परविरोधयुक्तंचेत्तर्हि तदधमंप्रमाणंभवेदितिशेषः । परस्परविरोधेनैकस्यापि निःशंकतयार्थानिश्चायकत्वादितिभावः तस्मादेवं स्थितत्वात् तत्त्रयंप्रमाणत्रयंएकत्राविरोधेन एकार्थविषयतयाकार्यंयोज्यम् ॥ ८२ ॥ उक्तप्रमाणेषुकः किंप्रमाणमंगीकरोतीत्यतआह। अज्ञइति । अज्ञःविपरीतज्ञानीप्रत्यक्षं प्रत्यक्षसिद्धं जीवकर्तृत्वमपहायत्यक्त्वा दैवमेवकर्तृमत्वास्वात्मकमस्वविहितकर्मप्रजह्यात् । नकरोतीत्यर्थः । विद्वान्सम्यग्ज्ञानीजीवंविष्णुवशेविदित्वा जीवमित्युपलक्षणं जीवकर्तृत्वमपि । अजस्रंनिरंतरं कर्तव्यमेवस्वविहितमेवकर्मकरोति । तथाचाज्ञोधमंप्रमाणमंगीकरोति विद्वांस्तुपूर्णप्रमाणमितिभावः ॥ ८३ ॥ ननु ज्ञान्यज्ञयोर्नानावि

**पूर्णप्रमाणं तत्त्रयं चाविरोधे नैकत्रस्थं तत्त्रयं चाविरोधि ॥ पृथङ् मध्यं चाप्रमाणं विरोधि स्यात्तत्तस्मात्त्रयमेक त्र कार्यम् ॥ ८२ ॥ अज्ञः प्रत्यक्षं त्वपहायैव दैवं मत्वा कर्तृ स्वात्मकर्म प्रजह्यात् ॥ विद्वान् जीवं विष्णुवशं विदि त्वा करोति कर्तव्यमजस्रमेव ॥ ८३ ॥ स्वभावाख्या योग्यता या हठाख्या यानादिसिद्धा सर्वजीवेषु नित्या ॥ सा कारणं प्रथमं तु द्वितीयमनादिकर्मैव तथा तृतीयः ॥ ८४ ॥ जीवप्रयत्नः पौरुषाख्यस्तदेतत्त्रयं विष्णोर्वशगं सर्वदैव ॥ स कस्य चिन्न वशे वासुदेवः परात्परः परमोसौ स्वतंत्रः ॥ ८५ ॥ ॥ ॥**

धकर्मप्रवृत्तौकिंकिंकारणमित्यतआह । स्वभावेति । पुनःपुनःप्रसार्यमाणमपिपूर्वावस्थांप्राप्नुयाच्छैवलादिकमिवानिवार्यत्वाद्धठइत्युच्यते । स्वभावाख्याहठाख्यास्वभावःह ठइतिपर्यायनामवती यायोग्यताजीवानामितिशेषः । यायोग्यतासर्वजीवेषुअनादिसिद्धानित्याअनादिनित्याजीववदित्यर्थः । सायोग्यताप्रथमकारणंमुख्यंकारणं जीवानां नानाविधकर्मप्रवृत्ताविति शेषः । अनादिकर्मतु अनाद्यदृष्टंहिद्वितीयमेवद्वितीयकारणमेव योग्यतापेक्षयानंतरकारणं पौरुषाख्यःपौरुषमितिनामाजीवप्रयत्नः । तृतीयःयोग्य तापेक्षयातृतीयकारणमित्यर्थः । तथाशब्दःसमुच्चये । ननु योग्यतादीनांजीवप्रवृत्तिकारणत्वे विष्णोरस्वातंत्र्यमागतमित्यतआह । तदिति । तदेतत्त्रयंयोग्यतादित्रयंविष्णोः सर्वदासंसारेमुक्तावस्थायांचवशगमेवअधीनमेव । ननु जीवकर्तृत्वादिविष्ण्वधीनंयथातथाकिंविष्णोरन्याधीनत्वमित्याशंक्यसयुक्तिकंपरिहरति । सकस्यचिदित्यादिना । सवासुदेवःकस्यचिदपिपुरुषस्यवशेन कुतइत्यतआह । परादिति । असौपरात्परःउत्तमादप्युत्तमः । परमःस्वतंत्रःमुख्यस्वतंत्रः ॥ ८४ ॥ ८५ ॥ ॥

ननु सर्वजीवगतोहठःएकप्रकारोवर्ततेचेत्तर्हि जीवानामुच्चावचफलानुपपत्तिरित्याशंकांयोग्यतातारतम्यांगीकारेणपरिहरति । हठश्चेति । असौहठःजीवगतयोग्यता । हिशब्दएवार्थे । कुतोहठादेःप्रथमादिकारणत्वमित्यतआह । हठाच्चेति । यतोहठादेःकर्मादिर्भवति अतोहठादिःप्रथमादिकारणमित्यर्थः । यत्नःतात्कालिकःपुरुषप्रयत्नः कर्मजःपूर्वःकर्मणोजातःकारणत्वेनहठादेःप्राथम्यमुक्त्वा हठपूर्वकर्मनिष्ठफलजननशक्त्यभिव्यंजकत्वेनहठकर्मप्रयोक्तृत्वरूपंयत्नस्यातिशयमाह । हठेति । यत्नइत्यनुषज्यते । पुरुषप्रयत्नहठकर्मप्रयोक्ताहठःयोग्यताकर्मपूर्वकर्मतयोःशक्तेःअभिव्यंजकः ॥ ८६ ॥ कुतोयत्नस्तच्छक्तेरभिव्यंजकइत्यतआह । विनेति । यत्नंविनाहठोन कर्मापि न फलदानोन्मुखमित्यर्थः । ननु यत्नादेवयोग्यतादेःफलसंभवात्ईश्वरेणाकिंकार्यमित्यतआह । फलप्रदइति । वासुदेवःअखिलस्यहठादेःफलप्रदः । ननु यत्नाद्यन्वयव्यतिरेकानुवि[illegible]त्वात्फलस्यवासुदेवःकुतःफलप्रदइत्यतआह । स्वातंत्र्येति । यत्नादिनिष्ठफलजननशक्तिंप्रतीश्वरस्यस्वातंत्र्यात्सफलप्रदइत्यर्थः । तस्यस्वातंत्र्ये

**हठश्चासौ तारतम्यस्थितो हि ब्रह्माणमारभ्य कलिश्च यावत् ॥ हठाच्च कर्माणि भवंति कर्मजो यत्नो यतो हठ कर्मप्रयोक्ता ॥ ८६ ॥ विना यत्नं न हठो नापि कर्म फलप्रदो वासुदेवो खिलस्य ॥ स्वातंत्र्यशक्तेर्विनियामको हि तथाप्येतान् सोप्यपेक्ष्यैव युंजेत् ॥ ८७ ॥ एतानपेक्ष्यैव फलं ददानीत्यस्यैव संकल्प इति स्वतंत्रता ॥ नास्यापगच्छेत्स हि सर्वशक्तिर्नाशक्तता क्वचिदस्य प्रभुत्वात् ॥ ८८ ॥ ॥ ॥ ॥**

हेतुमाह । विनियामकइति । हठादेर्विनियामकः प्रेरकोहियस्मात्तस्मात्स्वतंत्रइत्यर्थः । ननु यत्नादिनिष्ठशक्तेरीश्वरस्वतंत्रत्वे ईश्वरःस्वातंत्र्यशक्त्याफलप्रदश्चेत्किंयत्नादिनेत्यतआह । तथापीति । तथापिस्वातंत्र्यशक्त्याफलप्रदोपिसर्वस्यनियामकोपिसवासुदेवः । एतान्हठादीनपेक्ष्यैव अनुसृत्यैवयुंजेत् फलेनयोजयेत् ॥ ८७ ॥ ननु हठादिकमपेक्ष्य फलप्रदश्चेन्नस्वातंत्र्यशक्तिरित्यतआह । एतानिति । एतान्हठादीन् अपेक्ष्यैवानुसृत्यैवफलंददानीत्यस्यविष्णोःसंकल्पइच्छाविशेषइतियस्मात्तस्मादस्य विष्णोःस्वतंत्रतास्वतंत्रकर्तृतानापगच्छेत् । स्वाधीनंहठादिकमपेक्ष्यैवफलंददानीतिस्वसंकल्पानुसारेण फलदातृत्वान्नस्वातंत्र्यहानिरितिभावः । ननु हठादिकमनपेक्ष्यफलदानेऽसमर्थत्वाद्धठादिकमपेक्षतइतिकिंनस्यादित्यतआह । सहीति । सहरिःसर्वशक्तिःसर्वसृष्ट्यादिकर्तृत्वविषयेशक्तिर्यस्यसतथा हियस्मात्तस्मात्प्रभुत्वाच्चातिसमर्थत्वाच्चअस्यहरेः क्वचित्कस्मिंश्चिद्विषयेऽशक्तताअसमर्थतानास्तीतिशेषः ॥ ८८ ॥ ॥ ॥ ॥

तथापिपुंसाविहितंस्वकर्मेत्यादिनाजीवस्येश्वराधीनकर्तृत्वमुपपाद्योपसंहरति । तस्मादिति । तस्माज्जीवकर्तृत्वसद्भावात् तेनविष्णुनाक्लृप्तंवर्णाश्रमविशेषनिष्ठतयाक्लृप्तं कल्पितंस्वकर्मस्ववर्णाश्रमोचितंकर्म तत्पूजार्थंश्रीविष्णुपूजार्थंअहंकरोमीतिसंकल्पपूर्वकंकार्यं । तेनपूजात्मककर्मणातत्प्राप्तिरेवभवेत् । योग्यतानुसारेणचतुर्विधमोक्षःस्यादितिभावः । अतःविहितकरणात् अन्यथाविहितकर्माकरणात् अविहिताचरणादित्यर्थः । निरयःस्यात् । तस्मात्स्वविहितंयत्नेनैवकार्यमितिभावः । तत्रकस्यकिंकर्मेतिजिज्ञासायांवर्णविभागेनाह । स्वकर्मेत्यादिना । विप्रस्यजपोपदेशौजपःअध्ययनंउपदेशःअध्यापनंस्वकर्मस्वविहितकर्म उक्तमितिशेषः ॥८९॥ येनकारणेनविष्णोर्मुखाद्विप्रजातिःप्रवृत्ताउत्पन्नेत्यर्थः । तेनकारणेनसविष्णुःअस्यविप्रस्यमुखोत्थितंकर्मअदात् ॥ ९० ॥ क्षत्रियःबाह्वोःविष्णुबाह्वोःसकाशात् जातः । तेनकारणेनास्यक्षत्रियस्यबाह्वोःसंबंधिपापप्रतिवारणं दुष्टशिक्षणंसाधुधर्मस्यवैष्णवधर्मस्यप्रवर्तनंचाददाद्धि । क्षत्रियस्यकर्मांतरमाह । मुखस्येति । अस्यक्षत्रियस्यमुखस्यबाह्वोश्चविष्णोरितिशेषः । अतिसामीप्यतःअतिसामीप्यात् विष्णुःजपोपदेशौअपिधर्मौचक्रे । विप्रस्याप्यानुषंगिकंकर्माह । यज्ञेति । मुखबाहुसामीप्यात् मुखजेविप्रेबाहुजेयज्ञकर्मापिधर्मंचक्रे ॥ ९१ ॥ ९२ ॥ यस्माद्वैश्यऊरुजःविष्णोरंकजः तेनकारणेनतस्यतज्जंऊरुजंकर्मप्रजावृद्धिरेवधर्मउक्तः । तत्सादृश्यात्उत्पादनपालनलक्षणप्रजासादृश्यात् स्थावराणांसस्यादीनांचवृद्धिर्धर्मइत्युक्तः । करयोरूर्वोःसन्निकृष्टत्वहेतोःसामीप्यहेतोर्विष्णुस्तस्यवैश्यस्यवार्तात्मकं कृषिवाणिज्यरूपंकर्मधर्मंचकार । शूद्रःअंघ्रिजःविष्णोःपदाभ्यांजातइत्युक्तः तेनगतिप्रधानंगमनागमनप्रधानंशुश्रूषणाख्यंविप्रादित्रिवर्णानांसेवाख्यं कर्मशूद्रस्यधर्मः । हस्तपदोःहस्तपादयोःअंगुल्यादिनासादृश्यतःतथैववैश्यवत् हस्तोद्भवंकृषिवाणिज्यरूपंकर्म तस्यापिशूद्रस्यापिधर्मः ऊरुपदोःसमीपगत्वात्संतानवृद्धिश्चप्रजावृद्धिश्चधर्मः ॥ ९३ ॥ ९४ ॥ ॥ ॥

तस्मात्कार्यं तेन क्लृप्तं स्वकर्म तत्पूजार्थं तेन तत्प्राप्तिरेव ॥ अतोन्यथा निरयः सर्वथा स्यात्स्वकर्म विप्रस्य जपोपदेशौ ॥ ८९ ॥ विष्णोर्मुखाद्विप्रजातिः प्रवृत्ता मुखोत्थितं कर्म तेनास्य सोदात् ॥ ९० ॥ बाह्वोर्जातः क्षत्रियस्तेन बाह्वोः कर्मास्य पापप्रतिवारणं हि ॥ प्रवर्तनं साधुधर्मस्य चैव मुखस्य बाह्वोश्चाति सामीप्यतोस्य ॥ ९१ ॥ जपोपदेशौ क्षत्रियस्यापि विष्णुश्चक्रे धर्मौ यज्ञकर्मापि विप्रे ॥ वैश्यो यस्मादूरुजस्तेन तस्य प्रजावृद्धिस्तज्जकर्मैव धर्मः ॥ ९२ ॥ तत्सादृश्यात्स्थावराणां च वृद्धिः करोरूर्वोः सन्निकृष्टत्वहेतोः ॥ वार्तात्मकं कर्म धर्मं चकार विष्णुस्तस्यैवांघ्रिजः शूद्र उक्तः ॥९३ ॥ गतिप्रधानं कर्म शुश्रूषणाख्यं सादृश्यतो हस्तपदोस्तथैव ॥ हस्तोद्भवं कर्म तस्यापि धर्मः संतानवृद्धिश्च समीपगत्वात् ॥ ९४ ॥ ॥ ॥ ॥

क्षत्रियस्यधर्मांतरमाह । भुजाविति । भुजौउरःवक्षःबलस्यस्थानं हृदयंमनःज्ञानस्यस्थानं यद्यस्मादतःनृपाणांबलंज्ञानंचउभयंधर्मउक्तः । पाणौकेवलंकृतीनांकर्मणांकौशलंनिपुणता । केवलशब्देनपाणिःभुजवद्बलस्थानंनभवतीतिभावः । हियस्मात्तस्मात्पाण्योःऊरुपदोःउपस्थितेःसमीपस्थितत्वात् विट्शूद्रकौकर्मणांकौशलेतौ कौशलेननिपुणतयाइतौयुक्तौ ॥ ९५ ॥ नन्वेवंचेद्विप्रादेःसंतानवृद्धिर्धर्मोनभवेदित्यतआह । प्राधान्यतइति । एषःपूर्वोक्तःविशेषोधर्मःप्राधान्यतःमुख्यत्वेनोक्तःविप्रादीनामितिशेषः । सामान्यतःअमुख्यत्वेन अखिलानांविप्रादीनांसर्वएवप्रागुक्ताःसर्वेधर्माउक्ताइत्यर्थः। वयंमनुष्यधर्मानुसारिणोनेत्याह । वयंहीति नीचसेवादिव्यावृत्त्यर्थंप्रायेणेत्युक्तम्॥ ९६॥ पूर्वक्लृप्तैःआदिसृष्टौकल्पितैः अखिलानांविप्रादिश्वपचांतानां ॥ ९७ ॥ विष्णुरेवाभिपूज्यइत्यत्रहेतुमाह । पितेति । यस्मात्पितातेनकारणेनसएवविष्णुरेवपूज्यः । तारतम्येनलक्ष्म्यादिदेवतापूजापिधर्मइत्याह । तद्भक्तत्वादिति । तद्भक्तत्वाद्विष्णुभक्तत्वान्निमित्तात् देवताश्चरमाद्याःअभिपूज्याः । तेषुरमादिदेवेषुमध्येयेऽत्यंतभक्ताःतेविशेषतः

**भुजावुरो हृदयं यद्बलस्य ज्ञानस्य च स्थानमतो नृपाणाम् ॥बलं ज्ञानं चोभयं धर्म उक्तः पाणौ कृतीनां कौशलं केवलं हि ॥ तस्मात्पाण्योरूरुपदोरुपस्थितेर्विट्शूद्रकौ कर्मणां कौशलेतौ ॥ ९५ ॥ प्राधान्यतो धर्मविशेष एषः सामान्यतः सर्वएवाखिलानाम् ॥वयं हि देवास्तेन सर्वं हि कर्म प्रायेण नो धर्मतामेति शश्वत् ॥९६॥एतैर्धर्मैर्विष्णुना पूर्वक्लृप्तैः स वैर्वर्णैर्विष्णुरेवाभिपूज्यः ॥ तद्भक्तिरेवाखिलानां च धर्मो यथायोग्यं ज्ञानमस्यापि पूजा॥९७॥ पिता गुरुः परमं दैवतं च विष्णुः सर्वेषां तेन पूज्यः स एव॥तद्भक्तत्वाद्देवताश्चाभिपूज्या विशेषतस्तेषु येत्यंतभक्ताः॥९८॥ संपूजितो वासुदेवः स मुक्तिं दद्यादेवापूजितो दुःखमेव ॥ स्वतंत्रत्वात्सुखदुःखप्रदोसौ नान्यः स्वतंत्रस्तद्वशा यत्समस्ताः ॥९९॥ स्वतंत्रत्वात्सुखसज्ज्ञानशक्तिपूर्वैर्गुणैः पूर्ण एषोखिलैश्च ॥ स्वतंत्रत्वात्सर्वदोषोज्झितश्च निःसीमशक्तिर्हि यतः स्वतंत्रः॥१००॥**

अभिपूज्याः ॥ ९८ ॥ संपूजितःसम्यक्सर्वोत्तमत्वादिज्ञानपूर्वकं पूजितोवासुदेवोमुक्तिंदद्यादेव । अपूजितःसएवदुःखमेवदद्यात् । विष्णोःफलदानेकथंसामर्थ्यमित्यतआह । स्वतंत्रत्वादिति । असौविष्णुःसुखदुःखप्रदःसतामसतामितिशेषः । कुतःस्वतंत्रत्वात् । अन्यःब्रह्मादिजीवसमूहःस्वतंत्रोन समस्ताःजीवराशयःतद्वशाःविष्णवधीनाःयद्यस्मात्तस्मात्सुखदुःखप्रदइतिसंबंधः ॥ ९९ ॥ एषःविष्णुःस्वतंत्रत्वात् सुखसज्ज्ञानशक्तिपूर्वैःसत्योनिर्दोषैचतेज्ञानशक्तीचसुखंचसज्ज्ञानशक्तीचताःपूर्वाःएषांतेसुखसज्ज्ञानशक्तिपूर्वास्तैस्तथा अखिलैःसृष्टिस्थित्याद्यैर्गुणैःपूर्णः । स्वतंत्रत्वात्सर्वदोषोज्झितश्च विष्णोःस्वतंत्रत्वेहेतुमाह । निःसीमेति यतोनिःसीमशक्तिःनिःसीमामर्यादारहिताअनंतेत्यर्थः तादृशीशक्तिर्यस्यसतथा । अतएवस्वतंत्रः ॥ १०० ॥ ॥ ॥ ॥

विष्णोःस्वतंत्रत्वमस्तु तावतादोषोज्झितत्वगुणपूर्णत्वं कथमित्यत आह । दोषेति । यस्माद्विष्णोर्दोषास्पृष्टौदोषाणामसंसर्गेगुणपूर्तौचशक्तिर्निःसीमत्वाद्विद्यतेयस्य तस्माद्दोषास्पृष्टत्वा
दिकंयुक्तमेवेतिवाक्यशेषः । ननु विष्णुनिष्ठशक्तिर्दोषास्पृष्टत्वादिविषयाकुतइत्यतआह । निःसीमत्वादिति । शक्तेरित्युपस्कर्तव्यं । तथाचशक्तेरसंकुचितत्वाद्दोषास्पृष्ट्या
दिविषयत्वमपियुज्यतएवेत्यर्थः । उक्तमेवोपसंहरति । एवमिति । एवमुक्तप्रकारेण अखिलैरपिगुणैःपूर्णोनारायणःअखिलैर्वर्णाश्रमवज्जनैर्वा स्वधर्मैःवर्णाश्रमोचितधर्मैःपूज्य
तमःअतिशयेनपूज्यः । यद्यस्मात्तेनकारणेनास्माकमतिक्षमाधर्मोनैव दुष्टेष्वितिशेषः । दुष्टानांवारणंनिवारणंहननंकार्यमेव ॥ १०१ ॥ एतत्करणेफलमाह । हन्यादिति ।
यःक्षत्रियःदुष्टान् भगवद्विमुखान् क्षत्रियान्हन्यात् । विशेषतःयुद्धगतान्युद्धेप्राप्तान् क्षत्रियान्हरिंस्मरन् । युद्धाख्ययज्ञेनहरिंप्रीणयामीतिस्मरन्निितिभावः ॥ १०२ ॥

दोषास्पृष्टौ गुणपूर्तौ च शक्तिर्निःसीमत्वाद्विद्यते तस्य यस्मात् ॥ एवं गुणैरखिलैश्चापि पूर्णो नारायणः पूज्यतमः स्वधर्मैः ॥ १०१ ॥ अस्माकं यत्तेन नातिक्षमैव धर्मो दुष्टानां वारणं ह्येव कार्यम् ॥ हन्याद्दुष्टान्यः क्षत्रियः क्षत्रियांश्च विशेषतो युद्धगतान्स्मरन्हरिम् ॥१०२॥ स्वबाहुवीर्येण च तस्य बाहू चैतन्यमात्रौ भवतः सदेहौ ॥ पापाधिकांश्चैव बलाधिकांश्च हत्वा मुक्तावधिकानंदवृद्धिः ॥ १०३॥ प्रीतिश्च विष्णोः परमैव तत्र तस्माद्धंतव्याः पापिनः सर्वथैव ॥ ये त्वक्षधूर्ता ग्रहणं गता वा पापास्तेन्यैर्घातनीयाः स्वदोर्भ्याम् ॥ राजानं वा राजपुत्रं तथैव राजानुजं चाभियातं निहन्यात् ॥१०४॥ राज्ञः पुत्रोप्यकृतोद्वाहको यः स पातनीयो न स्वयं वध्य एव ॥ क्रूरं चान्यद्धर्मयुक्तं परैस्तत्प्रसाधनीयं क्षत्रियैर्न स्वकार्यम् ॥ १०५ ॥ ॥ ॥ ॥

स्वबाहुवीर्येणहन्यात् । सदेहौतस्यबाहूचैतन्यमात्रौज्ञानरूपौभवतः स्वरूपानंदाविर्भावो भवतीतिभावः पापाधिकाःसंतोयेबलाधिकाःतांश्चैवहत्वा । तत्रबलाधिकपापि
हननविषयेप्रीतिर्यस्मात्तस्माद्धंतव्याएवास्माभिरितिशेषः । दुष्टहननेपिविशेषमाह । यइति । येत्वक्षधूर्ताःद्यूतकपटिनःग्रहणंगताःयुद्धेहस्तप्राप्तायेते अन्यैर्भृत्याद्यैर्घातनीयाः ।
अभियातंयुद्धार्थंआगतंस्वदोर्भ्यांनिहन्यात् ॥ १०३ ॥ १०४ ॥ राजपुत्रमित्यस्यापवादमाह । राज्ञइति । अकृतोद्वाहकःअकृतविवाहो यःसःघातनीयःअन्यैरितिशेषः ।
एषःअकृतोद्वाहकोराज्ञःपुत्रःस्वयंस्वस्यवध्योन । धर्मयुक्तंचधर्मयुक्तमपिक्रूरंनिंद्यं अन्यद्यत्कर्मदुष्टस्त्रीवधादिकंतत्क्षत्रियैःपरैः अन्यपुरुषैः प्रसाधनीयंकारयितव्यं । नस्व
कार्यंस्वयंनकार्यमित्यर्थः ॥ १०५ ॥ ॥ ॥ ॥ ॥ ॥

एवमनेनप्रकारेणोक्तोधर्मः वेदेविहितएव । विष्णोःश्रीवेदव्यासस्य तादृगुक्तार्थविधायकंवाक्यंपंचरात्रेषुवर्ततइतिशेषः । अक्षद्यूतंअक्षैःद्यूतेसंचारिकाष्ठविशेषैः यत्द्यूतंदेवनंनिकृतिकूटात्मकं अतएवपापंपापसाधनं अतएवगर्हितंजुगुप्सितं । एतादृशमपित्वयासौबलेनसहकृतम् ॥१०६॥ अस्यद्यूतस्यविधिःकर्तव्यताकुत्रचिद्वेदशास्त्रेषुनास्ति । तेनकारणेनद्यूतहृतंद्यूतेऽपहृतंयत्तद्दत्तमितिनवदंति । वेदविदइतिशेषः । द्यूतदत्तमाहार्यमितिप्रसंगात्अन्यदप्याहार्यविशेषमाह । भीतेनेति ॥ १०७ ॥ पुनराहार्यमेवेत्यस्यापवादमाह । द्यूतइति । द्यूतेस्त्रियांचदत्तमितिशेषः । स्त्रियांदत्तंअल्पंनाहार्यमित्यस्यापवादमाह । यद्येषामिति ॥ १०८ ॥ पुरुषस्यकामिपुरुषस्यनिवारणेनिवारणविषयेतुसर्वथाऽशक्तौसत्यांभ्रात्रादीनामितिशेषः । तदीयंतस्याइदंतदीयंकामिपुरुषदत्तत्वेनतस्याःकामिन्याइदंसंबंधिअल्पंचअल्पमपिएषांकामिपुरुषभ्रात्रादीनां भोग्यंभो

एवं धर्मो विहितो वेद एव वाक्यं विष्णोः पंचरात्रेषु तादृक् ॥ अक्षद्यूतं निकृतिः पापमेव कृतं त्वया गर्हितं सौबलेन ॥ १०६ ॥ न कुत्रचिद्विधिरस्यास्ति तेन न तद्दत्तं द्यूतहृतं वदंति ॥ भीतेन दत्तं द्यूतदत्तं तथैव दत्तं कामिन्यै पुनराहार्यमेव ॥ १०७ ॥ एवं धर्मः शाश्वतो वैदिको हि द्यूते स्त्रियां नाल्पमाहार्यमाहुः ॥ यद्येषां वै भोग्यमल्पं तदीयं भोगेन तद्बंधुभिस्तच्च हार्यम् ॥ १०८ ॥ निवारणे पुरुषस्य त्वशक्तौ तद्राज्यं नः पुनराहार्यमेव ॥ त्वं धर्मनिष्ठश्चाग्रजश्चेति राजन्भूतेनुज्ञां न मया तत्कृतं च ॥ १०९ ॥ दातास्यनुज्ञां यदि तान्निहत्य त्वय्येव राज्यं स्थापयाम्यद्य सम्यक् ॥ सत्यं पापेष्वपि कर्तुं यदीच्छा तथापि मासा द्वादश नः प्रयाताः ॥ ११० ॥ वेदप्रामाण्याद्वत्सरास्ते हि मासैः सहस्राब्दं सत्रमुक्तं नराणाम् ॥ अज्ञातमेकं मासमुष्याथ शत्रून्निहत्य राज्यं प्रतिपादयामः ॥१११॥

गार्हद्रव्यं । वैनिश्चयेनयदिचेत्तर्हि तद्बंधुभिःकामिपुरुषभ्रात्रादिभिःभोगेनभोगव्याजेनतत्स्वसंबंधिकामिपुरुषदत्तमल्पद्रव्यंहार्यं यस्मात्तस्मान्नोस्माकंराज्यंपुनराहार्यमेव । तर्हि किमर्थमपहरणंनकृतमित्यतआह । त्वमिति । धर्मनिष्ठःधर्मेस्थिरःअनुज्ञांऋतेतवेतिशेषः । तद्राज्यापहरणम् ॥१०९॥ पापेषुदुर्योधनादिषुसत्यंकर्तुंद्यूतसमयेवनवासाद्युक्तसमयमितिशेषः । यद्यपीच्छातवास्तीतिशेषः । तथापिनःद्वादशमासाःप्रयाताःअतीताः ॥ ११० ॥ तेमासाःवेदप्रामाण्यात्वत्सराहि अतएवमासैःसहस्रमासैरित्यर्थः । नराणांसहस्राब्दंसहस्रमब्दायस्यतत्तथा । सहस्रवर्षपरिसमाप्यंसत्रमुक्तंवेदइतिशेषः । अतएवद्वादशमासैःद्वादशाब्दवनवासप्रतिज्ञाजातेतिभावः । अज्ञातंअज्ञातवासंएकंमासमुष्यउषित्वास्थित्वा प्रतिपादयामःसाधयामः ॥ १११ ॥ ॥ ॥ ॥

तापकःदुःखकरःअमित्राणांशत्रूणांनंदकःआनंदकरः । अरीणांमूर्ध्निज्वलस्व प्रकाशयस्व । अग्निवदितिशेषः । मित्राणिआल्हादयन्आनंदयन् वासुदेवंकृष्णम् ॥ ११२ ॥ प्रकृतेःलक्ष्म्याः हेराजन् वासुदेवस्यकृष्णस्यस्वतंत्रत्वंअद्येदानींदृश्यते । कादिवरैःब्रह्मादिवरैः । अजेयान्जरासुतादीन् यस्मात्कुंत्याअर्थितःरैवतपर्वतेअजयत् ॥ ११३ ॥ प्रकृतेःलक्ष्म्याः तद्वशत्वंवासुदेववशत्वं नोस्माभिरित्यर्थः । बहुशःबहुवारंव्यासदेहेव्यासस्वरूपेदृष्टंहि । पाराशर्यःश्रीवेदव्यासःनोस्माकंदिव्यदृष्टिंअलौकिकज्ञानंप्रदाय सर्वलोकेसर्वलोक विषयेस्वातंत्र्यमदर्शयत् । स्वस्येतिशेषः । तस्माद्वासुदेवस्यस्वतंत्रत्वंप्रत्यक्षतोदृश्यतइतिपूर्वेणान्वयः ॥ ११४ ॥ उपसंहरति तस्मादिति अभिनिर्याहिनिर्गच्छ । एवंचम

मा मित्राणां तापकस्त्वं भवेथास्तथाऽमित्राणां नंदकश्चैव राजन् ॥ ज्वलस्वारीणां मूर्ध्नि मित्राणि नित्यमाह्लादयन्वासुदेवं भजस्व ॥ ११२ ॥ स्वतंत्रत्वं वासुदेवस्य सम्यक् प्रत्यक्षतो दृश्यते ह्यद्य राजन् ॥ यस्मात्कृष्णोव्यजयच्छंकरादीन् जरासुतादीन् कादिवरैरजेयान् ॥ ११३ ॥ ब्रह्मादीनां प्रकृतेस्तद्वशत्वं दृष्टं हि नो बहुशो व्यासदेहे ॥ पाराशर्यो दिव्यदृष्टिं प्रदाय स्वातंत्र्यं नो दर्शयत्सर्वलोके ॥ ११४ ॥ तस्माद्राजन् अभिनिर्याहि शत्रून् हंतुं सर्वान् भोक्तुमेवाधिराज्यम् ॥ एवं च ते कीर्तिधर्मौ महांतौ प्राप्यौ राजन्वासुदेवप्रसादात् ॥ ११५ ॥ एवमुक्तोऽब्रवीद्भीमं धर्मपुत्रो युधिष्ठिरः ॥ त्रयोदशाब्दस्यांतेहं कुर्यामेव त्वदीरितम् ॥ ११६ ॥ सत्यमेतन्न संदेहः सत्ये नात्मानमालभे ॥ लोकापवादभीरुं मां नातोन्यद्वक्तुमर्हसि ॥ ११७ ॥ ॥ ॥ ॥

योक्तप्रकारेणकृतवतस्तेप्राप्यौस्यातामितिशेषः ॥ ११५ ॥ अंतेसमाप्तौ । त्वदीरितंदुष्टनिग्रहरूपंकर्मकुर्याम् ॥ ११६ ॥ एतन्मेवचःसत्यंनसंदेहः । सत्येनसत्यशपथेने त्यर्थः आत्मानंमांआलभेस्पृशामि । ममवचनमन्यथाचेत्तर्हि । आत्महननदोषप्राप्तिःस्यादितिभावेनआत्मानमस्पृशादितिभावः । लोकापवादभीरुंप्रतिज्ञाहानिरभूदिति योलोकापवादःतेनभीरुंभयशीलंमांप्रति । अतःनैवक्षमाकुजनताखित्यादिकृष्णयात्वयायदुक्तंतस्मादन्यद्वाक्यंवक्तुंनार्हसि ॥ ११७ ॥ ॥

हेभीमयदिएवमपिसत्यशपथेकृतेपि मांवदेः पुनःपुनःइदानीमेवगंतव्यमित्यादिरूपावाचोवदेस्तर्हि मांअतिवाचा अतिक्रूरवचसातुदसे। तुदव्यथनइतिधातुः। तुदेरितिलि ङ्प्रयोगेवक्तव्येतुदसेइतिलटप्रयोगे त्रयोदशाब्दात्पूर्वंत्वद्वचनंनकुर्यामितिभावः। तदैवप्रतिज्ञावधिसमाप्त्यनंतरमेवत्वदुक्ताकरणेसति । मेऽत्ययः अतिक्रमःकार्यः। शत्रवः हंतव्याश्च । इदानींप्रतिज्ञावधिपूर्वं एतादृशैःइदानीमेव गंतव्यंइत्यादिनिष्ठुरैर्वाक्यैःबाधितुंदुःखमुत्पादयितुंनार्हसि यद्वा तदैवद्यूतकरणसमयएवमेऽत्ययःकार्यःत्वयेतिशेषः इदानींप्रतिज्ञानंतरम् ॥ ११८॥ अस्माकंनिर्बलत्वादिदानींयुद्धावसरोनेत्याह । भीष्मेति । ननिवार्याःकुतइत्यतआह । पूज्याइति । भीष्माद्याःपूज्याःगुरुत्वादितिशेषः। अ तएवबाहुयुद्धेननिवार्याःगुरुभिःसहबाहुयुद्धंनकर्तव्यमितिभावः ॥ ११९ ॥ तर्हि अस्त्रयुद्धंकरिष्यामीतिभीमाभिप्रायमाशंक्य निराकरोति । अस्त्राणीति । हियस्मात्तस्मात्

तुदसे चातिवाचा मां यद्येवं भीम मां वदेः ॥ तदैव मेऽत्ययः कार्यो हंतव्याश्चैव शत्रवः ॥ नैतादृशैरिदानीं तु वाक्यैर्बाधितुमर्हसि ॥ ११८ ॥ भीष्मद्रोणादयोस्त्रज्ञा निवार्याश्च कथं युधि ॥ पूज्यास्ते बाहुयुद्धेन न निवार्याः कथं च न ॥ ११९ ॥ अस्त्राणि जानन्नपि त्वं प्रयोजयसि न क्वचित् ॥ तस्मात्तदैव गंतव्यं विज्ञातास्त्रे धनंजये ॥ १२० ॥ इत्युक्तो भीमसेनस्तु स्नेहभंगभयात्ततः ॥ नोवाच किंचिद्वचनं स्वाभिप्रेतमवाप्य च ॥ १२१ ॥ अभिप्रायो हि भीमस्य निश्चयेन त्रयोदशे ॥ युधिष्ठिरस्य राज्यार्थं गमनार्थे प्रतिश्रवः ॥ १२२॥ अन्यथातिमृदुत्वात्स न गच्छेद्भिन्नधीः परैः ॥ कृतकृत्ये तदा भीमे स्थिते धर्मात्मजो हि सः ॥ १२३ ॥ भीष्मद्रोणादिविजयः कथं स्यादिति चिंतयन् ॥ निवारणं गुरूणां हि भीम इच्छति न क्वचित् ॥ १२४ ॥ ॥ ॥ ॥

धनंजयेविज्ञातास्त्रेसति तदैवतस्मिन्नेवकालेगंतव्यम् । तदैवत्रयोदशेवर्षेऽतीतेसतीतिवा ॥१२०॥ ततःतदैवगंतव्यमितिप्रतिज्ञानंतरं । स्नेहभंगभयात् युधिष्ठिरस्येतिशेषः। स्वाभिप्रायमवाप्यनोवाच ॥ १२१ ॥ कोस्याभिप्रायइत्यतआह । अभिप्रायोहीति । त्रयोदशेवर्षेअतीतेसतीतिशेषः । राज्यार्थंराज्यंकर्तुंनिश्चयेनगमनार्थेयुधिष्ठिरस्य प्रति श्रवःप्रतिज्ञाभवेदितिभीमस्याभिप्रायोहि ॥ १२२ ॥ प्रतिज्ञांकारयितुंहेतुमाह । अन्यथेति । अतिमृदुत्वात् अतिमृदुचित्तत्वात् । परैःशत्रुभिःभिन्नधीःस्वचिकीर्षितप्रतिकूलमनाःसयुधिष्ठिरः । अन्यथाप्रतिश्रवाभावेसति नगच्छेत् राज्यंप्रतीतिशेषः । तस्मात्प्रतिश्रवंराज्ञाकारयामासेत्यर्थः। स्वाभिप्रायानुसारेणप्रतिज्ञाकरणरूपकृत्यं कृतवतिसति ॥ १२३ ॥ गुरूणांभीष्मादीनांनेच्छति यस्मात्तस्मात् तेभीष्माद्याःअर्जुनेनैवनिवार्या इतिचिंतयन् ॥ १२४ ॥ ॥॥ ॥ ॥ ॥

भीमःआपद्येवतान् भीष्मादीन्निवारयति । अन्यथानापदिननिवारयति । अतएवकथंस्यादितिचिंतयदितिसंबंधः ॥ १२५ ॥ कृष्णद्वैपायनःव्यासःयुधिष्ठिरंविज्ञायैवागमत् ॥ १२६ ॥ किमितिबोधयामासेत्यत्रआह । इममिति । इमंमंत्रं [illegible] विशेषः । [illegible] ॥ १२७ ॥ सर्वदैवतदृष्टिदंसर्वदै[illegible]तानांअपरोक्ष[illegible] जनकमित्यर्थः । यतःफलाधिक्यंभवेत्साक्षाद्[illegible]तोविशेषः । [illegible]पार्थायनावदत् ॥ १२८ ॥ ननु तर्हि भीष्मादिविजयःकथंस्यादित्यतआह । भीष्मे ति । एतावद्वीर्यमेवहि [illegible]अलम् । अतःभीष्मद्रोणादिविज[illegible] कुतो[illegible]आह । एतावदिति । अस्यपार्थस्यएतावत्भीष्मादिवि[illegible]सामर्थ्यं

तस्मात्ते ह्यर्जुनेनैव निवार्या इत्यचिंतयत् ॥ आपद्येव हि भीमस्तान्निवारयति नान्यथा ॥१२५॥ एवं चिंतासमाविष्टं विज्ञायैव युधिष्ठिरम् ॥ सर्वज्ञः [illegible] कृष्णद्वैपा[illegible]ोऽगमत् ॥ नृपालं बो[illegible]मास चिंताव्याकुलमानसम् ॥१२६॥ इमं मंत्रं वदिष्यामि ये[illegible] [illegible] फल्गुनः ॥ भीष्मद्रोणादिकान् सर्वान् [illegible] वद धनंजये ॥१२७॥ इत्युक्त्वैवावदन्मंत्रं सर्वदैवतदृष्टिदम् ॥ [illegible] पार्थे फलाधिक्यं यतो भवेत् ॥१२८॥ भीष्मद्रोणादिविजय एतावद्वीर्यमेव हि ॥ अलं [illegible] च ॥ फल्गुनस्येति [illegible] ह्यवदन्मनुम् ॥१२९॥ गते व्यासे भगवति सर्वज्ञे सर्वकर्तरि ॥ [illegible]वदन्मंत्रं फल्गुनाय रहस्यसौ ॥१३०॥ तमवाप्य फल्गुनो मंत्रं ययौ ज्येष्ठौ प्रणम्य च ॥१३१॥ यमजौ च समाश्लिष्य गिरिमिंद्रकीलकम् ॥१३२॥ तपश्चचार तत्रस्थः शंकरस्थं हरिं स्मरन् ॥ षण्मासेऽतिगतेऽपश्यन्मूकं नामासुरं गिरौ ॥१३३॥ ॥ ॥

वत् योग्यंचयोग्यमेव । इतिहेतोःस्वयंभगवान्व्यासःफल्गुनस्यमनुं [illegible]नावददि ॥ १२९ ॥ [illegible]मंत्रं[illegible]सिफुकांतेऽवदत् ॥ १३० ॥ ज्येष्ठौयुधिष्ठिरभीमौ । इंद्रकीलकंइंद्रकीलकनामगिरिंययौ ॥ १३१ ॥ १३२ ॥ तत्रस्थः [illegible] । [illegible]शंकरस्थमितित[illegible]रितिवचनं[illegible]आह । शंकरस्थमिति । षण्मासात्[illegible] ककालेऽतीतेऽतिक्रांतेसति षट्सुमासेष्वतिक्रांतेष्वितिभावः ॥ १३३ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ननु धरातलस्थितइत्यादि श्रीकृष्णदत्ताजेयत्ववरेण वेदव्यासदापितवैष्णवमंत्रबलेनचार्जुनस्यरुद्रादजेयत्वंअस्तु । विजयाःस्युर्मयापितेइत्यादि रुद्रप्रार्थिताजेयत्ववरस्तु अर्जुनादन्यविषयेभविष्यतीतिकथंरुद्रेणार्जुनोजितइत्यतआह । केवलानिति । वैष्णवानित्यत्र देवार्थकतद्धितेनदेवतांतरनिरपेक्षविष्णुदेवताकत्वेसिद्धेपिकेवलानीतियद्वि शेषणं तद्विष्णवर्षित्वज्ञापनार्थं तथाचविष्णवर्षित्वेसतिविष्णुदेवताकत्वकेवलवैष्णवमंत्रत्वं । व्यासस्तुकेवलान्वैष्णवान्मंत्रान्नोददौ । किंतुहरिदेवताकान्रुद्रर्षिकानेवद दावित्यर्थः । तस्मात्केवलवैष्णवमंत्ररहितोर्जुनोरुद्रेणजितइतियुक्तमितिभावः । ननु केवलवैष्णवमंत्रानभिज्ञोर्जुनःकथंभीष्मादीन्जयेदित्यतआह । एतावतेति । चिदघ नःज्ञाननिबिडःव्यासःभीष्मादेर्जयार्थं एतावतासाधारणमंत्रेणअलमित्यभिप्रायेण केवलवैष्णवमंत्रान् नोददावितिसंबंधः ॥ १४४ ॥ पुनःव्यासाभिप्रायांतरमाह । केव

केवलान्वैष्णवान्मंत्रान् व्यासः पार्थाय नो ददौ ॥ एतावतालं भीष्मादेर्जयार्थमिति चिद्घनः ॥ १४४ ॥ केवलैर्वै ष्णवैर्मंत्रैः स्वदत्तैर्विजयावहैः ॥ अतिवृद्धस्य पार्थस्य दर्पः स्यादिति चिंतयन् ॥ १४५ ॥ पार्थः संज्ञामवाप्याथ जयार्थ्याराधयच्छिवम् ॥ व्यासोदितेन मंत्रेण तानि पुष्पाणि तच्छिरः ॥ १४६ ॥ आरुहन्स तु तं ज्ञात्वा रुद्र इत्येव फल्गुनः ॥ नमश्चक्रे ततः प्रादादस्त्रं पाशुपतं शिवः ॥ ॥ १४७ ॥ अस्त्रं तद्विष्णुदैवत्यं साधितं शंकरेण यत् ॥ तस्मात्पाशुपतं नाम स्वान्यस्त्राण्यपरे सुराः ॥ ददुस्तदैव पार्थाय सर्वे प्रत्यक्षगोचराः ॥ १४८ ॥ इंद्रोर्जु नं समागम्य प्राह प्रीतोस्मि तेनघ ॥ १४९ ॥ रुद्रदेहस्थितं ब्रह्म विष्ण्वाख्यं तोषितं त्वया ॥ तेन लोकं समा गच्छ प्रेषयामि रथं तव ॥ १५० ॥ ॥ ॥ ॥ ॥

लैरिति । विजयावहैःविजयंआवहंतीतितितथातैः मंत्रोपासकानांजयोभवत्येवेत्यर्थः । अतिवृद्धस्यजयादिनाअतिवृद्धियुक्तस्यपार्थस्यदर्पःगर्वः ॥ १४५ ॥ जयार्थीपार्थ मंत्रेणाशिवंआराधयत् अपूजयत् । तानिपार्थसमर्पितानिपुष्पाणितच्छिरःकिरातरूपधरस्यशिवस्याशिरःआरुहन् तंकिरातंरुद्रइतिज्ञात्वैवनमश्चक्रे ॥ १४६ ॥ १४७ ॥ ननु विष्णुदैवतस्यास्त्रस्यपाशुपतमितिनामकथमभूदित्यतआह अस्त्रंतदिति तदस्त्रंध्येयदेवताविष्णुर्यस्मात्तस्माद्विष्णुदैवत्यं शंकरेणसाधितंशंकरर्षिकं यस्मात्तस्मात्पाशुपतं नामेत्यर्थः तदाप्रत्यक्षगोचराःअपरोक्षीभूताःसर्वेअपरेरुद्रादन्येसुराःस्वान्यस्त्राणिस्वस्वदैवत्यान्यस्त्राणिददुः ॥१४८ ॥ समागम्यसमागत्यप्राह । किमिति । तोषितंयस्मा त्तेनकारणेन प्रीतोस्मीतिसंबंधः । लोकंसमागच्छ आयाहि ॥ १४९ ॥ १५० ॥ ॥ ॥ ॥ ॥

तद्रथेनइंद्रस्यरथेनसह मातलिःमातलिनामाइंद्रस्यसारथिःआयात् । तातनिकेतनंतातःइंद्रःतस्यनिकेतनंस्वर्गम् ॥१५१॥ इंद्रेणअभिनिवेशितः स्वसिंहासनइतिशेषः । तेनइंद्रेणसार्धंउपासीदत्उपविष्टोभूत् ॥ १५२ ॥ शक्रःआत्मनःस्वस्यद्वितीयांतनुं द्वितीयरूपंकुरुप्रवीरंअर्जुनं प्रीत्यास्नेहेनसमाश्लिष्यआलिंग्यतस्यार्जुनस्यमुखंईक्षन्पश्यन्मुमोद । सोपिअर्जुनस्तस्यइंद्रस्यमुखंईक्षन्मुमोद । अपिहिशब्दयोर्लाभवदाव्ययोज्यं । तस्मिंल्लोकेस्वर्गलोके पंचवत्सरानुवास ॥ १५३ ॥ तदाउर्वशीतंपार्थंसंप्राप्य पार्थसंगप्राप्त्यर्थं पार्थप्रार्थयामासेतिशेषः । मानुषेणभावेनस्वयंमनुष्यइतिज्ञानेन कुलस्यस्वकुलस्यमातेतिनिराकृतानिषिद्धाभूत् । पार्थेनेतिशेषः । उर्वशीपुरूरवसःभा

इत्युक्त्वा प्रययाविंद्रस्तद्रथेनैव मातलिः ॥ आयात्पार्थस्तमारुह्य ययौ तातनिकेतनम् ॥ १५१ ॥ पूजितो दैवतैः सर्वैरिंद्रेणाभिनिवेशितः ॥ तेन सार्धमुपासीदत्तस्मिन्नैंद्रे वरासने ॥ १५२ ॥ प्रीत्या समाश्लिष्य कुरुप्रवीरं शक्रो द्वितीयां तनुमात्मनः सः ॥ इक्षन्मुखं तस्य मुमोद सोपि ह्युवास तस्मिन्वत्सरान्पंच लोके ॥ १५३ ॥ अस्त्राणि तस्मा अदिशच्च वासवो महांति दिव्यानि तदोर्वशी तम् ॥ संप्राप्य भावेन तु मानुषेण माता कुलस्येति निवारिताभूत् ॥ १५४ पंढो भवेत्येव तथाभिशप्ते पार्थे शक्रोनुग्रहं तस्य चादात् ॥ संवत्सरं षंढरूपी चरस्व न षंढता ते भवतीति धृष्णुः ॥ ॥ १५५ ॥ ततोवसत्पांडवेयो गांधर्वं वेदमभ्यसन् ॥ गंधर्वाच्चित्रसेनात्तु तथास्त्राणि सुरेश्वरात् ॥ १५६ ॥ सुभद्रयाभिमन्युना सह स्वकां पुरीं गतः ॥ जनार्दनोत्र संवसन्कदाचिदित्थमैक्षत ॥ १५७ ॥ मया वरो हि शंभवे प्रदत्त आस पूर्वतः ॥ वरं गृहीष्य एव ते सकाशतो विमोहयन् ॥ १५८ ॥ ॥ ॥ ॥

र्यैतिहयेजायेमनसातिष्ठवोरेइत्यादिश्रुतिप्रसिद्धत्वात् । स्वस्यपुरूरवसःकुलोत्पन्नत्वात् । कुलस्यमातेतिनिराकृतेतिभावः ॥ १५४ ॥ धृष्णुःधर्षणशीलः शापरोधनसामर्थ्यस्वभावइत्यर्थः । शक्रःतस्यपार्थस्यअनुग्रहं शापपरिहाररूपमनुग्रहं अदात्अकरोदित्यर्थः । संवत्सरंएकवत्सरंषंढरूपीसन् नपुंसकःसन् चरस्व । संवत्सरात्परंतेनवषंढतानपुंसकतानभवतीति अनुग्रहंअदादितिसंबंधः ॥ १५५ ॥ गाधर्वंवेदंगानविद्याम् ॥ १५६ ॥ श्रीकृष्णःसुभद्रादियुतो द्वारकांप्रतिगत्वा किमकरोदित्यत आह । सभद्रयेति । अत्रपुर्यांवसन्इत्थमैक्षत्विचारयामास ॥ १५७ ॥ किमिति । पूर्वतःपूर्वंविमोहयन् असुरानितिशेषः। तेतवसकाशतोवरंगृहीष्यएवेतिमयावरःशंभवेप्रदत्तःआसहि १५८

वरंगृहीष्यइत्युक्तमर्थंपुराणगतवचनेनापिविशदयन्नाह । त्वामिति । मानुषादिपुकल्पाअंशेनभूत्वाअवतीर्य वरंगृहीष्यामि ॥ १५९ ॥ कल्पितैःकृतकैःस्वागमैःशिवागमैः त्वंजनान्मद्विमुखान्दुष्टजनान्मयिस्नेहरहितान् । मांगोपयआच्छादय येनमद्विमुखीकरणेन एषासृष्टिःअसुरसृष्टिःउत्तराऊर्ध्वलोकगमनोन्मुखाअधराअधोलोकगमनोन्मुखास्यात् ॥१६०॥ इति कृष्णेनोक्तमिति पार्वतींप्रतिरुद्रवचनमितिपूर्वोक्तवाक्यंकृष्णवाक्यंऋतंसत्यंकर्तुं अभिप्रायंकृष्णाभिप्रायंविजज्ञुषी । ब्रह्मादिभ्योविशेषेण जानतीरुग्मिणीवेद । वासुदेवस्यप्रीत्यर्थंवाक्यमब्रवीत् ॥ १६१ ॥ पुत्रेजातेसत्यपिपुत्रार्थंपुत्रोत्पादनार्थं मनोगतंकृष्णमनसिविद्यमानंअभिप्रायंसारुक्मिणीवेद हियस्मात्तस्मादब्रवीदितिसंबंधः । किमित्यब्रवीदित्यतआह । पुत्रइति । उत्तमोभक्त्यादिगुणैरितिशेषः ॥ १६२ ॥ स्वीयंस्वकीयमित्यनेनवेदव्यासेनैक्यंसूचितम् ॥ १६३ ॥ सुरद्वि

त्वामाराध्य तथा शंभो गृहीष्यामि वरं सदा ॥ द्वापरादौ युगे भूत्वा कलया मानुषादिषु ॥१५९॥ स्वागमैः कल्पितैस्त्वं च जनान्मद्विमुखान्कुरु ॥ मां च गोपय येन स्यात्सृष्टिरेषोत्तराधरा ॥ १६० ॥ इति वाक्यमृतं कर्तुमभिप्रायं विजज्ञुषी ॥ प्रीत्यर्थं वासुदेवस्य रुक्मिणी वाक्यमब्रवीत् ॥१६१॥ जातेपि पुत्रे पुत्रार्थं सा हि वेद मनोगतम्॥ पुत्रो मे बलवान्देव स्यात्सर्वास्त्रविदुत्तमः ॥ १६२ ॥ इत्युक्तो भगवान्देव्या संमोहाय सुरद्विषाम् ॥ ययौ सुपर्णमारुह्य स्वीयं बदरिकाश्रमम् ॥ १६३ ॥ एष मोहं सृजाम्याशु यो जनान्मोहयिष्यति ॥ त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ॥ १६४ ॥ अतथ्यानि वितथ्यानि दर्शयस्व महाभुज ॥ प्रकाशं कुरु चात्मानमप्रकाशं च मां कुरु ॥ १६५ ॥ ॥ ॥ ॥ ॥ ॥

षांसंमोहाय ययावित्युक्तार्थेवराहपुराणगतवाक्यं संमतित्वेनोदाहरन्नुत्तरकथामाह । एषइत्यादिना । एतद्वाक्यंशंकरंप्रतिविष्णूक्तं एषोहंमोहंमुह्यतेऽनेनेतिमोहः मोहकंशास्त्रंसृजामिकल्पयामि यःमोहकग्रंथःजनान्असुरजनान्मोहयिष्यति । हेरुद्रत्वंमोहकशास्त्राणिचशब्दःकुर्वित्यर्थवाचकःकारय । दधीच्यादिभिरितिशेषः । रुद्रस्यमोहकशास्त्रकरणसामर्थ्यंसूचयितुंमहाबाहोइतिसंबोधनम् ॥ १६४ ॥ अतथ्यानिकुत्राप्यविद्यमानानिवितथ्यानिविविकरणत्वेनाविद्यमानानि । सर्वोपास्यत्वस्वतंत्रत्वादीनिमयिविद्यमानान्यन्योपासकत्वानीशत्वादीनित्वयिदर्शयस्व । आत्मानंप्रकाशंप्रसिद्धंकुरु मामप्रकाशंअप्रसिद्धंकुरु ॥ १६५ ॥ ॥ ॥

लोकसंमोहनोत्सुकः असुरलोकसंमोहनेउत्सुकःउत्कंठितःअहंत्वांपूजयामि । रुद्रंप्रत्युक्तकार्यप्रयोजनमाह । तमइति अन्यथामोहशास्त्राकरणेअसुराःतमोनयांति । हि यस्मात्तस्मात्एततूमोहशास्त्रकरणंममतंसंमतम् ॥ १६६ ॥ इतिपूर्वंकेशवेनशिवाययद्वचनंउक्तंतद्वचनंसत्यंकर्तुं बदरिकाश्रमंप्रतिआयांतंकृष्णंसर्वेमुनयःज्ञात्वेतिशेषः । अ तएवसर्वज्ञाःप्रभुंपूजयांचक्रिरे । प्रभुमित्यनेनसर्वाभीष्टप्रदातृत्वसामर्थ्यंकृष्णस्यैवसूचितम् ॥१६७॥ प्रविष्टेसतिउपविष्टेसति घंटाकर्णःकर्णनामाइतिद्वावपिपिशाचौ कृष्णं द्रष्टुंगिरीशेनप्रदिष्टौयुवयोःकृष्णदर्शनेनपिशाचत्वमोक्षोभविष्यतीतिआज्ञापितौ कृष्णंद्रष्टुंद्वारकांप्रतिगंतुकामौसमायातौ बदरिकाश्रममितिशेषः ॥ १६८ ॥ तौपिशाचौ

अहं त्वां पूजयिष्यामि लोकसंमोहनोत्सुकः ॥ तमोसुरा नान्यथा हि यांतीत्येतन्मतं मम ॥ १६६ ॥ इत्युक्तं वच नं पूर्वं केशवेन शिवाय यत् ॥ तत्सत्यं कर्तुमायांतं कृष्णं बदरिकाश्रमम् ॥ सर्वज्ञा मुनयः सर्वे पूजयांचक्रिरे प्रभुम् ॥ १६७ ॥ रात्रौ कृष्णे मुनिमध्ये प्रविष्टे घंटाकर्णः कर्णनामा पिशाचौ ॥ समायातौ गिरिशेन प्रदिष्टौ कृष्णं द्रष्टुं द्वारकां गंतुकामौ ॥ १६८ ॥ तौ दृष्ट्वा मुनिमध्यस्थं केशवं तदबोधतः ॥ कृत्वा स्वजातिचेष्टाश्च ध्यानेनैनमपश्य ताम् ॥ १६९ ॥ दृष्ट्वा हृदि स्थितं तौ तु कौतूहलसमन्वितौ ॥ स्तुत्वा भक्त्या प्रणामं च बहुशश्चक्रतुः शुभौ ॥ ॥ १७० ॥ तयोः प्रसन्नो भगवान् स्पृष्ट्वा गंधर्वसत्तमौ ॥ चकार क्षणमात्रेण दिव्यरूपस्वरान्वितौ ॥ १७१ ॥ ताभ्यां पुनर्नृत्यगीतसंस्तवैः पूजितः प्रभुः ॥ ययौ कैलासमद्रीशं चकारेव तपोऽत्र च ॥ १७२ ॥ स्वीयानेव गुणा न्विष्णुर्भुञ्जन्नित्येन शोचिषा ॥ शार्वं तपः करोतीव मोहयामास दुर्जनान् ॥ १७३ ॥ ॥ ॥

तदबोधतः तस्यकृष्णस्याबोधतःअपरिज्ञानात् स्वजातिचेष्टाःपिशाचचेष्टाः ध्यानेन अरिशंखवराभयान्दोर्भिर्दधानमित्यादिकृष्णध्यानेन एनंकृष्णंअपश्यतांहृदिस्थितमिति शेषः ॥ १६९ ॥ बहुशःबहुवारंप्रणामंचक्रतुः । अतएवशुभौ ॥ १७० ॥ स्पृष्ट्वाहस्तेनेतिशेषः । गंधर्वसत्तमौचकार ॥ १७१ ॥ अत्रकैलासेतपः शैवंतपश्चकारेवाद र्शयदितिशेषः ॥ १७२ ॥ तपश्चकारेवादर्शयदित्युक्तस्याभिप्रायमाह । स्वीयानिति विष्णुःनित्येनशोचिषाज्ञानेनस्वीयान्स्वरूपभूतान्गुणान् आनंदादिगुणान् भुंजन्अ नुभवन्स्वस्वरूपंध्यायन्नितिभावः ॥ १७३ ॥ ॥ ॥ ॥ ॥

अंजसालोकानसुरान्मोहयतातेनहरिणा सुराःगतज्वराःसंतु इत्यभिप्रायेणअसुराणांमोहाय अहंतु अहमपि द्वादशवत्सरंद्वादशवत्सरपर्यंततवत्वत्संबंधितपःकुर्यामितिशर्वं प्रतितत्तपश्चरणंपूर्वमुदितं यद्यस्मात्तस्माद्वादशवत्सरं तपसःकर्तव्यत्वात्कृष्णः तदातपश्चरणकालेद्वादशवत्सरान् कर्तुमेकाहेनएकदिवसेनबृहस्पतिंआज्ञयास्वाज्ञयाद्वादश राशिषुक्षिप्रंचारयामासेत्यन्वयः। तेनद्वादशराशिषुबृहस्पतिसंचारमात्रेण तदहःतद्दिनंकेशवाज्ञया द्वादशाब्दंद्वादशवत्सरात्मकमभूत् ॥ १७४ ॥ १७५॥ १७६ ॥ भगवान्कृष्णःएकस्मिन्अह्निदिने राशिंबृहस्पतिसंचरणपर्याप्तकालंवत्सरंकल्पयित्वा उपवासादीन्नियमानपिमनसामनोनुसारेणकल्पयित्वा स्वभक्तानांद्वादशाब्दव्रताप्तये मनसैवस्वमनोनुसारेणैव सार्धशतश्वासकालैःमासव्रतंमासात्मकंव्रतंअकल्पयत् ॥ तत्रायमर्थः। एकवत्सरस्यद्वादशमासाःभवंति द्वादशवत्सराणांचतुश्चत्वारिंशदधिकशतं

पूर्वं तेनोदितं यत्तल्लोकान्मोहयतांजसा ॥ शर्वं प्रति तवाहं तु कुर्यां द्वादशवत्सरम् ॥ १७४ ॥ तपोऽसुराणां मोहाय सुराः संतु गतज्वराः ॥ इति तस्मात्तदा कृष्ण एकाह्नेन बृहस्पतिम् ॥ १७५ ॥ स्वाज्ञया चारयामास क्षिप्रं द्वादश राशिषु ॥ द्वादशाब्दमभूत्तेन तदहः केशवाज्ञया ॥१७६ ॥ एकस्मिन्नह्नि भगवान् राशिं राशिं च वत्सरम् ॥ कल्पयित्वोपवासादीन् मनसा नियमानपि ॥ १७७ ॥ मासव्रतं सार्धशतश्वासकालैरकल्पयत् ॥ मनसैव स्वभक्तानां द्वादशाब्दव्रताप्तये ॥ १७८ ॥ तत्रास्य गरुडाद्यास्तु परिचर्यां स्वपार्षदाः ॥ चक्रुर्होमादिकाश्चैव क्रियाश्चक्रे जनार्दनः ॥ स्वात्मानं प्रति पापानां शिवायेति प्रकाशयन् ॥ १७९ ॥ एवंस्थितं तमरविंददलायताक्षं ब्रह्मेंद्रपूर्वसुरयोगिवरप्रजेशाः ॥ अभ्याययुः पितृमुनींद्रगणैः समेता गंधर्वसिद्धवरयक्षविहंगमाद्याः ॥ १८० ॥ ॥

मासाःभवंति। तेमासाःश्वाससंख्याभिःकल्पनीयाः। एकस्मिन्दिनेएकविंशत्सहस्रादुपरिषट्शतश्वासाःभवंति । अब्दोष्टादशशतसंख्याकैःश्वासैःएकवत्सरोभवति। सार्धशतश्वासैर्मासोभवति। पंचश्वासैःएकदिनंभवति। एवंश्वासविभागेनवत्सराःमासाःदिनानि च परिकल्पनीयाः ॥ १७७ ॥ १७८ ॥ तत्रतस्मिन्कालेगरुडाद्याःस्वपार्षदाःअस्यकृष्णस्यपरिचर्यांसेवांचक्रुः। जनार्दनःपापानांशिवायेतिशिवमुद्दिश्यकरोमीतिप्रकाशयन् होमादिकाःक्रियाःस्वात्मानंप्रतिस्वमुद्दिश्यचक्रे ॥ १७९ ॥ एवंउक्तप्रकारेणस्थितंतपसीतिशेषः। योगिवराःसनकाद्याःप्रजेशाःदक्षाद्याः पितरःअग्निकव्यवाहनादयः विहंगमाद्याःचतुर्मुखवाहनहंसाद्याः अभ्याययुः ॥ १८० ॥ ॥

शर्वोपिआत्मगृहसान्निधिंस्वकैलासमीपंआयांतंआगतंआशुअवेत्यज्ञात्वा निजगणैःस्वप्रमथगणैःसहितः भक्त्याअतिसंभ्रमगृहीतसमर्हणाग्र्यःअग्र्यंचतत्समर्हणंचेति समर्हणाग्र्यं अतिसंभ्रमेणगृहीतंसमर्हणाग्र्यंउत्तमपूजासाधनंयेनसतथा। अभ्याययौ ॥ १८१ ॥ अभ्येत्यआगत्यपूर्णषाड्गुण्यविग्रहविदोषमहाविभूतेःषड्गुणाएवषाड्गुण्यंपूर्णषाड्गुण्यंविग्रहोयस्यासौतथोक्तः। सचासौविदोषश्चासौमहाविभूतिश्चतथातस्य विभूतिर्भूतिरैश्वर्यमित्यमरः ॥ १८२ ॥ कृष्णोपिअयोग्यजनमोहनं ज्ञानभक्त्याद्ययोग्यजनस्यमोहनंवांछन् रुद्रहृदिअंतर्यामित्वेनविद्यमानंरुद्रनामकंनिजरूपमेवतुष्टाव । रुद्रस्तत्स्तवनंनिशम्यश्रुत्वा सुरान्प्रत्युवाच किमिति हेसुराः अहं वाक्यंसत्यंवदामि अयमदीयंवचःशृणुत ॥ १८३ ॥ विष्णुःसमस्तसुजनैःपरमउत्कृष्टइतिअभ्युपेयःज्ञेयः । तत्प्राप्तयेतस्यविष्णोःप्राप्तयेअपरोक्षप्राप्तयेअहंअनिलोवायुः

शर्वोऽपि सर्वसुरदैवतमात्मदेवमायांतमात्मगृहसन्निधिमाश्ववेत्य ॥ अभ्याययौ निजगणैः सहितः सभार्यो भक्त्यातिसंभ्रमगृहीतसमर्हणाग्र्यः ॥ १८१ ॥ अभ्येत्य पादयुगलं जगदेकभर्तुः कृष्णस्य भक्तिभरितः शिरसा ननाम॥ चक्रे स्तुतिं स परमां परमस्य पूर्णषाड्गुण्यविग्रहविदोषमहाविभूतेः ॥ १८२ ॥ कृष्णोऽप्ययोग्यजनमोहनमेव वांछंस्तुष्टाव रुद्रहृदिगं निजमेव रूपम् ॥रुद्रो निशम्य तदुवाच सुरान्समस्तान्सत्यं वदामि शृणुताद्य वचो मदीयम् ॥ १८३ ॥ विष्णुः समस्तसुजनैः परमोऽभ्युपेयस्तत्प्राप्तयेऽहमनिलोऽथ रमाभ्युपेया ॥ एष ह्यशेषनिगमार्थविनिर्णयोऽर्थो यद्विष्णुरेव परमो मम चाब्जयोनेः ॥१८४ ॥ अव्यक्ततः सकलजीवगणाच्च नित्यमित्येव निश्चय उतैतदनुस्मरध्वं ॥ इत्युक्तवत्यखिलजीवगणा गिरीशे कृष्णं प्रणेमुरतिवृद्धरमेशभक्त्या ॥ १८५॥ ॥ ॥

अथरमाअभ्युपेयाः। समीचीनोपायाःभगवदपरोक्षज्ञानसंपादकत्वेन द्वारभूताइत्यर्थः। मुक्तास्तुमानुषा देवान् देवाइंद्रंसशंकरं। सब्रह्माणंक्रमेणैवतेनयांत्यखिलाहारिभिःतिद्वारविवेकोज्ञेयःएषोर्थःअशेषनिगमार्थविनिर्णयःसर्ववेदार्थनिर्णयरूपःमम चममसकाशात्अब्जयोनेः ॥ १८४ ॥ अव्यक्ततःमहालक्ष्म्याःसकलजीवगणाच्चनित्यंसंसारेमुक्तौचविष्णुरेवपरमःउत्तमःयद्यस्मात्तस्मात् विष्णुःसमस्तसुजनैःपरमोभ्युपेयइतिपूर्वेणसंबंधः । इत्येवमुक्तप्रकारेणैवंविनिश्चयःनिर्णयःएतदुतएतदेवविष्णोःसर्वोत्तमत्वमेव अनुस्मरध्वंअनुनिरंतरंस्मरध्वंस्मरतेत्यर्थः। गिरीशेइत्युक्तवतिसति कृष्णंप्रणेमुः ॥ १८५ ॥ ॥ ॥ ॥

इंद्रादिदेवताः तत्त्वविनिर्णयैः तत्त्वनिर्णायकैः कृष्णस्यैवगुणाख्यानैः गुणानांआख्यानंयैस्तानितथा तैः उक्तैः पूर्वमुक्तैः। अन्यैश्चगिरिशवाक्यैः पुरागिरीशोक्तैः पुराज्ञानिनोपि अधि
कंयथाभवतितथा पुनःज्ञानाभिवृद्धिमगमन् ॥ १८६ ॥ पुरापिज्ञानिन इत्युक्तंविवृणोति । सर्वेति । तंविष्णुंतथात्वसर्वदेवोत्तमत्वज्ञानेसत्यपितत्प्रमाणानांविष्णूत्तमत्वप्र[illegible]
पादकप्रमाणानांबहुत्वात् आपाततोविरुद्धत्ववत्प्रतीतियुगपदणुत्वमहत्त्वादिबहुगुणप्रतिपादकत्वात् [illegible]प्रमाणेषुविमतोनाणुःमहत्त्ववत्त्वादित्यादियुक्तिमात्रात्पूर्वोत्तरविरो[illegible]
स्फोरकशुष्कयुक्तिमात्रात् येसंशयाःतेपिरुद्रवाक्यादपगताः। एवंचयुक्तिभिःप्रमाणैःतत्[illegible]र्थोत्तमत्वावधारणात् तज्ज्ञानाभिवृद्धिमगमन्नित्युक्तमितिभावः ॥१८७॥ ततःरुद्र
गमनानंतरं कृष्णःअहंत्वत्तःसुतवरंश्रेष्ठपुत्रंआदास्येगृहीष्येइतिपूर्वंशिवंप्रतियदुक्तवान् तत्सत्यंकर्तुंतदातपश्चरणकाले पुत्रंदेहीतिअब्रवीत् ॥ १८८ ॥ १८९ ॥

उक्तैरन्यैश्च गिरिशवाक्यैस्तत्त्वविनिर्णयैः ॥ कृष्णस्यैव गुणाख्यानैः पुनरिंद्रादिदेवताः ॥ ज्ञानाभिवृद्धिमगमन्पु
रापि ज्ञानिनोधिकम् ॥ १८६ ॥ सर्वदेवोत्तमं तं हि जानंत्येव सुराः सदा ॥ तथापि तत्प्रमाणानां बहुत्वाद्यत्र सं
शयाः ॥ १८७ ॥ युक्तिमात्रात्तेपि रुद्रवाक्यादपगतास्तदा ॥ १८८ ॥ ततः कृष्णः सुतवरं त्वत्त आदास्य इत्य
जः ॥ तदुक्तं वांछितं पूर्वं सत्यं कर्तुं तदब्रवीत् ॥ १८९ ॥ पुत्रं देहीति सोप्याह पूर्वमेव सुतस्तव ॥ जातः प्रद्यु
म्ननामा यः स मद्दत्तः प्रवादतः॥१९०॥ पुरा दग्धो मया कामस्तदायाचत मां रतिः ॥ देहि कांतं ममेत्येव तदा
तामहमब्रुवम् ॥ १९१ ॥ उपत्स्यते वासुदेवाद्यदा त्वं पतिमाप्स्यसि ॥ इत्यतोसौ मया दत्तइव देव त्वदाज्ञया
॥ १९२ ॥ दासोस्मि तव देवेश पाहि मां शरणागतम् ॥ इत्युक्त्वाभिप्रणम्यैनं पुनराह सुरान्हरः ॥ १९३ ॥ ॥

सोपिरुद्रआह । किमिति । यःप्रद्युम्ननामासुतःपूर्वमेवतवजातः। सप्रद्युम्नःप्रवादतःमद्दत्तःलोकमध्येमद्दत्तइतिप्रवादःस्यात्। वस्तुगत्यामद्दत्तोनैवेतिभावः ॥१९०॥ प्रवा
दतोमद्दत्तइत्युक्तमेवविवृणोति। पुरेत्यादिना। पुरामयायदाकामोदग्धःतदारतिःरतिनाम्नीकामभार्याममकांतंपतिंदेहीतिमामेवअयाचत। अहंतामित्यब्रुवम् ॥ १९१ ॥
इतीतिकिं । वासुदेवाद्यदाउत्पत्स्यतेकामइतिशेषः। तदातंमद्दत्तपतिंतवपतिंआप्स्यसित्वमितिशेषः। इतिअहंतामब्रुवमितिसंबंधः। अतःकारणात्हेदेव त्वदाज्ञयाअ
सौप्रद्युम्नःमद्दत्तइवस्यादितिशेषः ॥ १९२ ॥ एनंकृष्णं हरःसुरान्प्रतिपुनराह ॥ १९३ ॥ ॥ ॥ ॥

किमिति । हेअमराःदेवाः यदर्थंयत्प्रयोजनार्थंआयातःतत्प्रयोजनंशृणुत । शृणुध्वमित्यर्थः । मत्तइतिशेषः ॥ १९४ ॥ तदाजातात्वक्रनाम्नोसुरस्यहननकालपूर्वक्षणे जातात् सद्यःउत्पन्नादित्यर्थः । वासुदेवपुत्रात् कृष्णपुत्रात्कामात् कामावतारप्रद्युम्नात् ऋतेविनाक्वचिद्ब्रह्मणोवरात् । अवध्यःवक्रनामायःअसुरःआसीत् ॥ १९५ ॥ तंअसुरंहंतुमेवस्वंस्वकीयंपुत्रंप्रद्युम्नंउदरेहृदिअर्प्यसंस्थाप्य । इहमदाश्रमंप्रतिआयातःसन् स्वोदरात्स्वहृदयात् सुतंप्रद्युम्नंनिःसारयित्वानिष्कास्य बहिर्गतंकृत्वेत्यर्थः कक्षं चइदंदृश्यमानंवनंतंचापिवक्रनामानमसुरमपिददाह । हेदेवताःदग्धंकक्षंवनंपश्यत । असुरोहतइत्यत्रदग्धंकक्षमेवज्ञापकमितिभावः ॥ १९६ ॥ सकेशवःज्वालामाला करालेन ज्वालास्वाभाविकप्रद्युम्नदेहगततेजोविशेषः । तस्यमालापंक्तिःसमूहइतियावत् । तयाकरालेनक्रूरेण स्वतेजोवर्धितेनस्वस्यकृष्णस्यतेजसादैत्यहननसामर्थ्यवि

यदर्थमेष आयातः केशवः शृणुतामराः ॥ १९४ ॥ योसुरो वक्रनामासीदवध्यो ब्रह्मणो वरात् ॥ तदा जाताद्वासु देवपुत्रात्कामादृते क्वचित् ॥ १९५ ॥ तं हंतुमेव पुत्रं स्वं प्रद्युम्नमुदरेर्प्य च ॥ आयात इह तं चापि ददाह स्वो दरात्सुतम् ॥ निःसारयित्वा कक्षं च दग्धं पश्यत देवताः ॥ १९६ ॥ ज्वालामालाकरालेन स्वतेजोवर्धितेन च ॥ प्रद्युम्नेनैव तं दैत्यं दग्ध्वा वनसमन्वितम् ॥ पुनश्च स्वोदरे पुत्रं स्थापयामास केशवः ॥१९७॥ सद्यो गर्भं पुनस्तं च रुग्मिण्यां जनयिष्यति ॥१९८॥ पूर्ववत्क्षणमात्रेण युवा च स भविष्यति ॥ दृष्टमेतन्नारदाद्यैर्मुनिभिः सर्वमेव च ॥१९९॥ एवं क्रीडत्ययं देवः पूर्णैश्वर्येण केवलम्॥ इत्युक्ते केशवं नेमुर्देवाः शक्रपुरोगमाः॥२००॥ततो हरिर्ब्रह्मभु रेंद्रमुख्यैः सुरैः स्तुतो गरुडस्कंधसंस्थः ॥ पुनःपुनः प्रणतः शंकरेण स्तुतस्तृतीयेह्नि निजां पुरीमगात् ॥ २०१ ॥

शेषेणवर्धितेनपूरितेनेत्यर्थः । प्रद्युम्नेनकरणेनपुत्रंप्रद्युम्नम् ॥ १९७ ॥ सद्योगर्भंतस्मिन्नेवक्षणेगर्भीभूतंतंप्रद्युम्नंजनयिष्यति । कृष्णइतिशेषः ॥ १९८ ॥ सप्रद्युम्नःपूर्ववत् वक्रासुरहननार्थंक्षणमात्रेणजननक्षणएवयथायुवाअभवत् तथाभविष्यतीत्यर्थः । नतुपूर्ववदित्यनेनशंबरासुरगृहवदितिविवक्षितं । तत्रचतुर्भिरेववत्सरैर्युवाभवदित्युक्तत्वादत्र क्षणमात्रेणेतिकथनविरोधात् ॥ १९९ ॥ कक्षंचदग्धंपश्यतेत्यनेनअनुमानप्रमाणमुक्त्वाप्रत्यक्षप्रमाणमाह । दृष्टमिति । पूर्णैश्वर्येणपरिपूर्णचिदानंदाद्यैश्वर्येण ॥२००॥ ततःद्वारकानिर्गमनदिनापेक्षयातृतीयेह्नितृतीयदिने ॥ २०१ ॥ ॥ ॥ ॥ ।

पुरद्विषःपुरारेःहरस्यनिलयंस्थानंकैलासंप्रतिप्रयातेगतेरात्रौद्वितीयदिनरात्रौ पौंड्रोवासुदेवः। पौंड्रवासुदेवः निजेनमातुःपित्रास्वमातामहेनकाशिराजेनतथाअक्षौहिणीकत्रयेण अक्षौहिणीत्रयेणसहअगमत्। द्वारकामितिशेषः॥ २०२ ॥ प्रभंजंतंनाशयंतंअमुंपौंड्रकं रामशैनेयाभ्यांबलसात्यकिभ्यांसहिताःयदुप्रवीराःविदित्वाज्ञात्वा॥२०३॥ तदस्त्रशस्त्रैःएकलव्यास्त्रशस्त्रैः विगतप्रदीपाःनाशितप्रकृष्टदीपाःयदुप्रवीराःसहसाएकलव्येनविषण्णाःश्रांताःसंतः रामेणशिनेश्चनप्त्राचपौत्रेणसात्यकिनासहैवस्वांपुरंस्वपुरीं समाविशन् ॥२०४॥ समाधायकृत्वाविनिःसृतानिर्यताःकेचित्पुरुषेणधर्षिताःरोधिताःसिंहाःसमीचीनगुहायाःसकाशात् यथानिर्यांतितथापुर्याःनिःसृताइत्यर्थः ॥२०५॥

कृष्णे प्रयाते निलयं पुरद्विषो रात्रौ पौंड्रो वासुदेवः समागात् ॥ सहैकलव्येन निजेन मातुः पित्रा तथाक्षोहिणीकत्रयेण ॥ २०२ ॥ पुरीं प्रभंजंतममुं विदित्वा सरामशैनेययदुप्रवीराः ॥ संयोधयामासुरथाभ्यवर्षच्छरैर्निषादाधिप एकलव्यः ॥ २०३ ॥ तदस्त्रशस्त्रैः सहसा विषण्णा यदुप्रवीरा विगतप्रदीपाः ॥ सहैव रामेण शिनेश्च नप्त्रा समाविशन्स्वां पुरमेव सर्वे ॥ २०४ ॥ पुनः समादाय तथोरुदीपिका अग्रे समाधाय च रौहिणेयम् ॥ विनिःसृता आत्तशस्त्राः स्वपुर्याः सिंहा यथा धर्षिताः सद्गुहायाः ॥ २०५ ॥ अथाससादैकलव्यं रथेन रामः शैनेयः पौंड्रकं वासुदेवं अयुध्यतां तौ सात्यकिपौंड्रकश्च तथान्योन्यं विरथं चक्रतुश्च ॥ २०६ ॥ ततो गदायुद्धमभूत्तयोर्द्वयोस्तथा रामश्चैकलव्यश्च वीरौ ॥ कृत्वान्योन्यं विरथं तौ गदाभ्यामयुध्यतां जातदर्पौ बलाढ्यौ ॥ २०७ ॥ तस्मिन्काले केशवो वैनतेयमारुह्यायाद्यत्र ते युद्धसंस्थाः ॥ दृष्ट्वा कृष्णं हर्षसंपूरितात्मा रामो हंतुं चैकलव्यं समैच्छत् ॥ २०८ ॥ उद्यम्य दोर्भ्यां स गदां जवेन यदापतद्रौहिणेयो निषादम् ॥ बलं कोपं चास्य दृष्ट्वैकलव्यः पराद्रवज्जीवितेच्छुः सुदूरम् ॥ २०९

रामः एकलव्यंआससाद ॥ २०६ ॥ तयोःसात्यकिपौंड्रकयोःजातदर्पौअहंबलवानहंबलवानितिलब्धगर्वावित्यर्थः ॥ २०७ ॥ वैनतेयंगरुडंयत्रतेयदुप्रवीराःयुद्धसंस्थाः युद्धार्थसंस्थिताः सम्यक्कवचास्त्रादिनासंनद्धाःस्थिताइत्यर्थः। तत्रआयात् हर्षेणसंपूरितः आत्मामनोयस्यसतथा ॥ २०८ ॥ निषादंएकलव्यंयदाअपतत् अस्यराम स्यदृष्ट्वाज्ञात्वा जीवितेच्छुर्जिजीविषुः ॥ २०९ ॥ ॥ ॥ ॥ ॥ ॥ ॥

विद्रावयन्सन् एकलव्यंअन्वयात् । पृष्ठतइतिशेषः । वेलांतंसमुद्रतीरपर्यंतं अत्रतीरेअतएवअदीनसत्त्वःउत्कृष्टज्ञानबलःज्ञानबलयोःसमाहारः सत्वं अर्जुनादिभ्यइतिशेषः अनुयांतंअनुगच्छंतंराममत्वा पुनश्चवेलागमनापेक्षयापुनःसमुद्रेपोपूयमानइतिवाक्यशेषः योजनानामशीतिंअतीत्यजलइतिशेषः । द्वीपंसमुद्रमध्यगतस्थलविशेषंअधिरुह्य पश्चात्पृष्ठतऐक्षत् आयातिवानवेतीतिशेषः ॥ २१० ॥२११॥ अवज्ञायनिर्बलेनाकिंयुद्धमितितिरस्कृत्य ॥ २१२ ॥ व्यायुधंविगतायुधं सपौंड्रः ॥ २१३ ॥ पुनः पुरप्रवेशानंतरं एकःअद्वितीयः अहमेववासुदेवोस्मिनान्यइत्यभिप्रायः मदीयलिंगानिसुदर्शनश्रीवत्सादिमत्संबंधिचिन्हानिविसृज्यविहाय अनंतंनाशरहितंमांचमामेवश

विद्रावयन् रौहिणेयोन्वयात्तं भीतोपतच्चैकलव्योंबुधौ सः ॥ वेलांतं तं द्रावयित्वात्र तस्थौ रामो गदापाणिरदीनसत्त्वः ॥ २१० ॥ सुपापोसावेकलव्यः सभीतो रामं मत्वैवानुयांतं पुनश्च ॥ समुद्रेशीतिं योजनानामतीत्य पश्चादैक्षद्द्वीपमेवाधिरुह्य ॥ २११ ॥ रामो विजित्यातिबलं रणे रिपुं मुदैव दामोदरमाससाद ॥ पौंड्रस्त्ववज्ञाय शिनिप्रवीरं निवार्यमाणोभिययौ जनार्दनम् ॥ २१२ ॥ तं केशवो विरथं व्यायुधं च क्षणेन चक्रे स ययौ निजां पुरीम् ॥ प्रस्थापयामास पुनश्च दूतं कृष्णायैको वासुदेवोहमस्मि ॥ २१३ ॥ मदीयलिंगानि विसृज्य चाशु समागच्छेथाः शरणं मामनंतम् ॥ तद्दूतोक्तं वाक्यमेतन्निशम्य यदुप्रवीरा उच्चकैः प्राहसन्स्म ॥ २१४ ॥ कृष्णः प्रहस्याह तवायुधानि दातास्म्यहं लिंगभूतानि चाजौ ॥ इत्युक्तोसौ दूत एत्याह तस्मै स चाभ्यगाद्योद्धुकामो हरिश्च ॥ २१५ ॥ तं शातकौंभे गरुडे रथस्थे स्थितं चक्रादीन् कृत्रिमान्संदधानम् ॥ श्रीवत्सार्थे दग्धवक्षस्थलं च दृष्ट्वा कृष्णः प्राहसत्पापबुद्धिम् ॥ २१६ ॥ ॥ ॥ ॥ ॥

रणंआशुअविलंबेनसमागच्छेथाः । सम्यग्भक्तिपुरःसरंआगच्छेथाः आजेतिदूतंप्रस्थापयामासप्रेषयामास । प्राहसन् जहसुः ॥ २१४ ॥ आजौरणेइत्युक्तःकृष्णेनेतिशेषः । एत्यपौंड्रकमितिशेषः । तस्मैपौंड्रकायआह । कृष्णोक्तमितिशेषः । सचपौंड्रकःअभ्यागात् हरिश्चाभ्यागात् योद्धुमितिशेषः ॥ २१५ ॥ रथस्थेरथोपरिस्थापितेशातकौंभेहेमनिर्मितेगरुडेस्थितंउपविष्टं कृत्रिमान्सुवर्णकारितांश्चक्रादीन्संदधानं श्रीवत्सार्थेदग्धवक्षस्थलं प्राहसत्जहास ॥ २१६ ॥ ॥ ॥

वासुदेवः तंपौंड्रकंविजित्य अरिणाचक्रेण तत्कंधरंतस्यपौंड्रकस्यकंधरंगलंचकर्त । अनुपौंड्रकमनुतस्यपौंड्रकस्यमातामहस्यकाशिराजस्यसायकेनअच्छिनत् गलमितिशे षः ।। २१७ ॥ सईश्वरःकृष्णःकाशीश्वरस्यशिरःतेनसायकेनवाराणस्यांकाश्यांअपातयत् सपौंड्रकःतत्प्रसिद्धंतमोगात् ॥ २१८ ॥ अस्यपौंड्रकस्यसाहाय्यकृत् सकाशि राजोऽपिअंधंतमः तथाअपतत् तथाकथंयथैवकिर्मीरादयः अन्येजरासंधादयोदैत्याःअपतन्।तत्रहेतुःपापबुद्धिः पापबुद्धिरित्यनेनजरासंधसाहाय्यकारिणांशल्यबाल्हीका



ततोऽस्त्रशस्त्राण्यभिवर्षमाणं विजित्य तं वासुदेवोऽरिणैव ॥ चकर्त तत्कंधरं तस्य चानु मातामहस्याच्छिनत्साय केन ॥ २१७ ॥ अपातयच्चाशु शिरः स तेन काशीश्वरस्येश्वरो वाराणस्याम् ॥ स च ब्रह्माहं वासुदेवोऽस्मि नित्य मिति ज्ञानादगमत्तत्तमोंऽधम् ॥ २१८ ॥ साहाय्यकृच्चास्य च काशिराजो यथैव किर्मीरहिडिंबसाल्वाः ॥ अन्ये च दैत्या अपतंस्तमोऽधं तथैव सोऽप्यपतत्पापबुद्धिः ॥ २१९ ॥ निहत्य तौ केशवो रौग्मिणेयं पुनर्वैदर्भ्यां जनयामास सद्यः ॥ स चैकलव्यो रामजितः शिवाय चक्रे तपो जेयतां चाप तस्मात् ॥ २२० ॥ स शर्वदत्तेन वरेण दृप्तः पुनर्योद्धुं कृष्णमेवाससाद ॥ तस्यास्त्रशस्त्राणि निवार्य केशवः चक्रेण चक्रे तमपास्तकंधरम् ॥ २२१ ॥ स चाप पापस्तम एव घोरं कृष्णद्वेषान्नित्यदुःखात्मकं तत् ॥ एवं यदूनामृषभेण सूदिते पौंड्रे तथा काशिराजे च पापे ॥ २२२ ॥ काशीशपुत्रस्तु सुदक्षिणाख्यस्तपोऽचरच्छंकरायोरुभक्त्या ॥ प्रत्यक्षगं तं शिवं पापबुद्धिः कृष्णा भावं याचते दुष्टचेताः ॥ २२३ ॥ ॥ ॥ ॥ ॥



दिभक्तानां तमःप्राप्तिर्नास्तीतिसूचितम् ॥ २१९ ॥ वैदर्भ्यांरुग्मिण्यांरौग्मिणेयंप्रद्युम्नंजनयामास शिवायशिवमुद्दिश्येत्यर्थः । तस्माच्छिवादजेयतांवरमाप ॥ २२० ॥ दृप्तःमत्तःअपास्तकंधरं अपास्तःछिन्नःकंशिरःतद्धरतीतिकंधरःगलोयस्यसतथातंचक्रे ॥ २२१ ॥ सूदितेहतेसति ॥ २२२ ॥ कृष्णाभाववरंयाचतेअयाचत ॥२२३॥

शिवोपिदैत्यावेशान्निमित्तात् आवृतात्माआच्छादितमनाःसन् दक्षिणाग्नौकृत्यांदक्षिणाग्निस्वरूपभूतं भूतविशेषंउत्पाद्येतिशेषः । अस्मैसुदक्षिणायाददात्अदात् ॥२२४॥ सदक्षिणाग्निश्चकृत्यात्मादक्षिणाग्निरपिअसुरावेशयुक्तःसन् काशिराजात्मजेनसंपूजितः उमेशस्यवरात् विवृद्धशक्तिःअभिवृद्धशक्तिः सन् यत्रअनंतशक्तिःकृष्णःअभूत्तत्र ययौ॥ २२५ ॥ तस्यदक्षिणाग्नेःप्रतिघातार्थं निवारयितुंचक्रमादिशत् । तत्सुदर्शनंअमुंवन्हिंदाक्षिणाग्निंव्यद्रावयत् ॥२२६॥कृत्यात्मकःभूतस्वरूपः असौवन्हिःदक्षिणाग्निःप्रधानाग्नेःपुत्रःचक्रविद्रावितःवन्हिः अथपलायनानंतरं तंसुदक्षिणंभस्मीचकारसुदक्षिणमपिसुदर्शनमेवभस्मीचकारेतिकेचित् तत्रभागवतब्रह्मपुराणोक्तेर्विरोधोदृश्यते कृत्यानलःप्रतिहतःसरथांगपाणेरस्त्रौजसानृपविभग्नमुखोनिवृत्तः । वाराणशींप्रतिसमेत्यसुदक्षिणंतंसर्त्विग्जितंसमदहत्स्वकृतोभिचारः । चक्रंचविष्णोस्तदनुप्रविष्टं वारा

कृत्यामस्मै दक्षिणाग्नौ शिवोपि दैत्यावेशाददादावृतात्मा ॥ २२४ ॥ स दक्षिणाग्निश्चासुरावेशयुक्तः संपूजितः काशिराजात्मजेन ॥ वरादुमेशस्य विवृद्धशक्तिर्ययौ कृष्णो यत्र संपूर्णशक्तिः ॥ २२५ ॥ कृष्णस्तस्य प्रतिघातार्थमुग्रं समादिशच्चक्रमनंतवीर्यः॥ जाज्वल्यमानं तदमोघवीर्यं व्यद्रावयद्वह्निमिमं सुदूरम् ॥ २२६ ॥ कृत्यात्मको वह्निरसौ प्रधानवह्नेः पुत्रश्चक्रविद्रावितोथ ॥ सहानुबंधं च सुदक्षिणं तं भस्मीचकाराशु सपुत्रभार्यम् ॥२२७॥ दग्ध्वा पुरीं वारणाशीं सुदर्शनं पुनः पार्श्वं वासुदेवस्य चागात् ॥ सुदक्षिणोसौ तम एव जग्मिवान् कृष्णद्वेषात्सानुबंधः सुपापः ॥ २२८ ॥ कृष्णः क्रीडन् द्वारवत्यां सुपूर्णनित्यानंदः क्वचिदाह स्म भैष्मीम् ॥ विडंबयन् गृहिणामेव चेष्टां नित्याविरोधोपि तया विदोपया ॥ २२९ ॥ ॥ ॥ ॥

णसींसाट्टसभालयापणाम् । सगोपुराट्टालककोष्ठसंकुलांसकोशहस्त्यश्ववरूथमंदिरां । दग्ध्वावाराणसींसर्वां विष्णुचक्रंसुदर्शनं । भूयःपार्श्वमुपातिष्ठत्कृष्णस्याक्लिष्टकर्मणइतिभागवतोक्तेः । आभिचारःकृत्याग्निःतदनुसुदक्षिणदहनानंतरमितिविजयध्वजटीकायाम् ॥ २२७ ॥ सुदर्शनंवारणासींपुरींदग्ध्वा पुनःवासुदेवस्यपार्श्वंसमीपंअगात् ॥ २२८ ॥ कृष्णः क्रीडन्सन् विदोषयापत्यवज्ञादिदोषशून्ययातयारुग्मिण्यासह नित्याविरोधोपिनित्यंविरोधशून्योपि गृहिणामेवगृहस्थाश्रमरतानामेवचेष्टाःस्त्रियासहपरिहासादिकर्माणिविडंबयन् अनुकुर्वन् क्वचिद्भैष्मींरुग्मिणींप्रत्याह ।। २२९ ॥ ॥ ॥ ॥

परिहासपूर्वकसंभाषणप्रकारंदर्शयन्कृष्णःकिमित्याहेत्यतआह । त्वयेति । त्वयाममकिंचाकिंचनकार्यंसाध्यंनास्तियद्यपितथापीतिवाक्यशेषः। हेभद्रेकल्याणि मयाअरीणां मानभंगार्थमेवशिशुपालप्रदानविषयेयःअहंकारःतत्खंडनार्थमेवसमाहृतासीत्याहेतिसंबंधः । सारुग्मिणीसदाआत्मनःस्वस्याःकृष्णेनावियोगमेववेत्त्यपिजानंत्यपि स्त्रियाभर्तुःभेतव्यंभयेनतूष्णींस्थातव्यमित्येवसतींधर्मंविज्ञापयंतीदेवीव्रीडादिगुणविशिष्टारुग्मिणीदुःखितेवास । नतुतस्याःदुःखमभूदितिभावः ॥२३०॥२३१॥ कृष्णादिष्टः कृष्णेनआज्ञापितः तत्रगोकुलेनंदयशोदांदृष्ट्वा तत्पूजितःयशोदानंदगोपाभ्यांपूजितः कृष्णवार्ताकृष्णकृतकर्मवृत्तांतंपृष्टः ताभ्यामितिशेषः ॥ २३२ ॥ तत्रगोकुलेमा



त्वया न कार्यं मम किंच भद्रे मयारीणां मानभंगार्थमेव ॥ समाहृतासीति सा चावियोगं सदा कृष्णेनात्मनो प्येव वेत्ति ॥ २३० ॥ स्त्रिया भेतव्यं भर्तुरित्येव धर्मं विज्ञापयंती दुःखितेवास देवी ॥ तां सांत्वयामास गृहस्थ धर्मं विज्ञापयन् देवदेवोप्यदुःखाम् ॥ २३१ ॥ एवं क्रीडत्यब्जनाभे रमायां कृष्णादिष्टो गोकुलं रौहिणेयः ॥ प्रायाद्दृष्ट्वा तत्र नंदं यशोदां तत्पूजितः कृष्णवार्तां च पृष्टः ॥ २३२ ॥ मासौ तत्र न्यवसद्गोपिकाभिः रेमे क्षीबो यमुनामाह्वयच्च ॥ मत्तोयमित्येव नदीमनागतां चकर्ष रामोलांगलेनाढ्यवीर्यः ॥ २३३ ॥ पुनस्तया प्रणतः संस्तुतश्च व्यसर्जयत्तामथ नंदगोपम् ॥ आपृच्छ्यचागाद्द्वारकां केशवाय न्यवेदयन्नंदगोपादिभक्तिम् ॥२३४॥ तदैव मैंदो विविदश्च भौमे हते सखाये दानवावेशयुक्तौ ॥आनर्तराष्ट्रं वासुदेवप्रतीपौ व्यनाशयेतां वासुदेवोथ चोचे॥२३५॥

सौमासद्वयंन्यवसत् गोपिकाभिःगोपस्त्रीभिःरेमे । क्षीबःमत्तःसन् मधुमैरेयपानेनेतिशेषः । यमुनामाह्वयत् भोगार्थमितिशेषः । अयंमत्तइतिबुध्द्वैवअनागतांचकर्ष ॥ २३३ ॥ व्यसर्जयत् अमूमुचत् । अथनंदगोपंआपृच्छ्यपृष्ट्वा आदिशब्देनगोपीगोपालाःविवक्षिताः तेषांभक्तिंकृष्णेविद्यमानामितिशेषः ॥ २३४ ॥ तदैवरामागमनकालएव दानवावेशयुक्तौमैंदाविविदाख्यौवानरौ सखायेस्वमित्रेहतेनिमित्तसप्तमीयं वासुदेवप्रतीपौआनर्तराष्ट्रं रैवतप्रदेशस्थानर्ताख्यंदेशंव्यनाशयेताम् ॥ २३५ ॥

अथअब्जनाभःसवासुदेवःरामायइतिवरंअदात् । इतीतिकिंविरिंचस्यवरात्तथा अमृताशनात् अमृतापानात् उभौमैंदविविदौ अवध्यावपितेत्वयाएतौमैंदविविदौवध्यौभव तांस्यातांइतिवरमदादितिसंबंधः । व्रजेतिऊचेराममितिशेषः ॥ २३६ ॥ सरामःगत्वारैवतंप्रतीतिशेषः । क्रोधात्युद्धायआगतंप्रथमंज्येष्ठंमैंदंरैवताग्रेरैवतपर्वतोपरिजघान । प्रथमंआदौवाप्रथमदिनेवा । अग्र्यकर्मापूज्यकर्मारामःपरस्मिन्दिने द्वितीयेह्निशिलाःवर्षंतंविविदंमुसलेनजघान ॥ २३७ ॥ २३८ ॥ पुनःरामप्रहिमानंवक्तुं तदुपयुक्तांस्वयंवरकथामाह । दुर्योधनस्येत्यादिना । पूर्वंनाम्नायारतिःसाकांतरूपामनोहररूपानाम्नालक्षणापुत्रीआस । सालक्षणाएनंसांबं अनुरक्ताप्रीतियुक्ताआस ॥

रामाय सोदाद्वरमब्जनाभो वध्यावेतौ भवतां तेप्यवध्यौ ॥ वराद्विरिंचस्य तथामृताशनादुभौ च मैंदो विविदो व्रजेति ॥२३६॥ गत्वा स मैंदं प्रथमं जघान क्रोधाद्युद्धायागतं रैवताग्रे ॥ दिने परस्मिन्विविदं जघान शिलाव र्षं तं मुसलेनाग्र्यकर्मा ॥ २३७ ॥ तयोराविष्टौ तावसुरौ तमोंधं प्राप्तौ च तावश्विनौ स्वं च लोकम् ॥ २३८ ॥ दुर्योधनस्यास पुत्री रतिर्या पूर्वं नाम्ना लक्षणा कांतरूपा ॥ स्वयंवरस्थां तां बलेनैव सांबो जग्राह सा चैनमासानुरक्ता ॥२३९॥ बलाद्गृहीतां वीक्ष्य तां कर्णमुख्या दुर्योधनाद्या युयुधुः क्रोधदीप्ताः ॥ कृच्छ्रेण तं विरथीकृत्य चैकं सर्वे समेता जगृहुर्धार्तराष्ट्राः ॥ कर्णेन भूरिश्रवसा च सार्धं बाह्वोर्बलादेव दुर्योधनस्य ॥ २४० ॥ श्रुत्वैतद् वृष्णयः सर्व एव समुद्यमं चक्रिरे कौरवेषु ॥ निवार्य तान्बलभद्रः स्वयं ययौ सहोद्धवः कौरवेयाञ्शमार्थी ॥२४१॥ पुरस्य बाह्योपवने स्थितः स प्रस्थापयच्चोद्धवं कौरवार्थे॥आगत्य सर्वे कुरवोस्य पूजां चक्रुः स चाहोग्रसेनस्य चाज्ञाम्॥२४२॥

॥ २३९ ॥ कर्णेनभूरिश्रवसाचसार्धं दुर्योधनस्यबाह्वोर्बलात्समेताःमिलिताः । सर्वेएकंसांबंकृच्छ्रेणप्रयासेनविरथीकृत्यजगृहुः ॥ २४० ॥ तत्सांबग्रहणंसमुद्यमंउद्योगं शमार्थीसंधानार्थीबलभद्रःसहोद्धवःउद्धवसहितःसन्ययौ ॥ २४१ ॥ पुरस्यनागपुरस्य बाह्योपवनेबहिर्विद्यमानोपवनेस्थितःसरामः । अस्यरामस्य सरामःउग्रसेनस्यआज्ञांआह ॥ २४२ ॥ ॥ ॥ ॥ ॥ ॥

आज्ञांविवृणोति आज्ञापयदिति । वःयुष्माकंनृपतिःयुष्मान्आज्ञापयत्स्म । किमिति । नोस्माकंकुमारकःबालकःसमेतैर्मिलितैःबहुभिःभवद्भिःएकःअसहायइत्यर्थः। प्रगृहीतइतियावत् ततूअपराधरूपंकार्यंनःअस्माभिःबांधवार्थंबंधुत्वात् क्षांतं सांबंआश्वेवमुंचतेतिआज्ञापयदितिसंबंधः ॥ २४३ ॥ वःयुष्मान् आज्ञापयामासेत्युक्तमेवनिशम्यबलंबलभद्रं दुष्टवचनानिसंश्राव्य पुरंनागपुरंसमाविविशुः अत्रपुरप्रवेशसमयेरामश्चुकोप ॥ २४४ ॥ सरामःनिपातयन्सन् प्रणम्यनिवारितः ॥२४५ ॥स रामःसभार्यंलक्षणयासहितंपुत्रकंसांबंआप्य पारिबर्हंविवाहकालेदीयमानंवस्त्रालंकारादिचआप्य ॥ २४६ ॥ अच्युतावेशिनःशेषस्यशेषावतारस्यरामस्यअलंकर्माणि

आज्ञापयद्वो नृपतिः स्वयं नः कुमारकः प्रगृहीतो भवद्भिः ॥ एकः समेतैर्बहुभिर्बांधवार्थं क्षांतं तन्नो मुंचताश्वेव सांबम् ॥२४३॥ आज्ञापयामास च उग्रसेन इत्युक्तमेव तु निशम्य कुरुप्रवीराः ॥ संश्राव्य दुष्टवचनानि बलं पुरं स्वं क्रोधात्समाविविशुरत्र चुकोप रामः ॥ २४४ ॥ स्वलांगलेन तत्पुरं विकृष्य जाह्नवीजले ॥ निपातयन्निवारितः प्रणम्य सर्वकौरवैः ॥२४५॥ सभार्यमाशु पुत्रकं सुयोधनाभिपूजितं ॥ सपारिबर्हमाप्य च प्रजग्मिवान्स्वकं पुरम् ॥ २४६ ॥ इत्यादिकर्माणि महांति रामस्यासञ्छेषस्याच्युतावेशिनोलम् ॥ यस्याच्युतावेशविशेषकालं ज्ञात्वा भीमोप्यस्य नोदेति युद्धे ॥ २४७ ॥ क्रीडायुद्धे बहुशो रौहिणेये व्यक्तिं विष्णोर्भीमसेनो विदित्वा ॥ तात्कालिकीं पीड्यमानोपि तेन नैवोद्यमं कुरुते विष्णुभक्त्या ॥ २४८ ॥ तदा जयी प्रभवत्येष रामो नातिव्यक्तस्तत्र यदा जनार्दनः ॥ तदा भीमो विजयी स्यात्सदैव विष्णोः केशावेशवान्यत्स रामः ॥ २४९ ॥ ॥ ॥

आसन् । भीमोपियस्यरामस्य अच्युतावेशविशेषकालं अच्युतस्यशुक्लकेशात्मनोहरेःआवेशस्यअभिव्यक्तेःविशेषकालंज्ञात्वा अस्यरामस्ययुद्धेक्रीडायुद्धेनोदेति उद्योगं नकरोतीत्यर्थः ॥ २४७ ॥ तदेवविवृणोति । क्रीडेति । भीमसेनःबहुशःक्रीडायुद्धेसतिरामेणेतिशेषः । विष्णोःशुक्लकेशात्मकस्यतात्कालिकींतत्काले भवांव्यक्तिंविशेषाविर्भावमित्यर्थः । विदित्वा तेनरामेणपीड्यमानेपिविष्णुभक्त्या उद्यमंरामपीडनविषयेउद्योगंनैवकुरुते ॥ २४८ ॥ तदाविशेषावेशकालेएषःरामःजयीभवति यदाजनार्दनःतत्ररामेनातिव्यक्तः तदाविशेषावेशाभावे भीमोविजयीस्यात् सरामःसदाविष्णोःकेशावेशवान् अतएवनातिव्यक्तइत्यत्रअतिशब्दःप्रयुक्तः ॥ २४८ ॥ ॥

एतादृशेनउक्तमहिम्नायुक्तेनद्वार्वत्यांनिवसतिसति बाणात्मजाबाणासुरपुत्रीउषानाम्नाउषाकदाचित्स्वप्नेअनिरुद्धेनरतारमणंप्राप्तासती स्वप्नेमयासहयःरतः तमानयेतिचित्रलेखामुवाच ॥ २५० ॥ अथसाचित्रलेखाचित्रवस्त्रेधातुरागेणपुरुषादिजीवलेखनेनयच्चित्रवस्त्रंतस्मिन्लोकान्लोकगतपुरुषान्प्रदर्श्यतमनिरुद्धंसमदर्शयत् । उपायैइतिशेषः । तस्याःउषायाःवचनात् स्वप्नदृष्टोयमेवेतिवचनात् कृष्णस्यपौत्रंविदित्वा स्वयंचित्रलेखेतिशेषः । रात्रौतमनिरुद्धंतत्रकन्यागृहंप्रतिआनयत् माययेतिशेषः॥२५१॥ उदारंउत्कृष्टम् ॥ २५२ ॥ गूढंलीनंसबाणः अस्यअनिरुद्धस्यग्रहणेग्रहणार्थम्॥ २५३ ॥ निहत्यताडयित्वा स्वयमसुरोबाणासुरः ॥ २५४ ॥ सबाणासुरःकृच्छ्रेण

एतादृशेनैव रामेण युक्ते कृष्णे द्वार्वत्यां निवसत्यब्जनाभे ॥ स्वप्नेऽनिरुद्धेन रता कदाचिद्बाणात्मजोषा चित्रलेखामुवाच ॥ २५० ॥ तमानयेत्यथ सा चित्रवस्त्रे प्रदर्श्य लोकान्समदर्शयत्तम् ॥पौत्रं विदित्वा वचनाच्च तस्याः कृष्णस्य तं चानयत्तत्र रात्रौ ॥ २५१ ॥ अनिरुद्धं गुणोदारमानीतं चित्रलेखया ॥ प्राप्य रेमे बाणसुता दिवसान्सुबहूनपि ॥ ॥ २५२ ॥ गूढं कन्यागृहे तं तु ज्ञात्वा कन्याभिरक्षिणः ॥ ऊचुर्बाणायादिशच्च किंकरान् ग्रहणेस्य सः ॥ २५३ ॥ अगतानिरुद्धस्तान् परिघेण महाबलः ॥ निहत्य द्रावयामास स्वयमायात्ततो सुरः ॥ २५४ ॥ स तु युध्द्वातिकृच्छ्रेण नागास्त्रेण बबंध तम् ॥२५५॥ अथ कृष्णः समारुह्य गरुडं रामसंयुतः ॥ प्रद्युम्नेन च तत्रागात् प्रथमं तत्र वन्हिभिः ॥ २५६ ॥ युध्द्वा चांगिरसा चैव क्षणाद्विद्राव्य तान्हरिः ॥ विद्राव्य शर्वप्रमथानाससाद ज्वरं ततः॥२५७॥ तेन भस्मप्रहारेण ज्वरितं रोहिणीसुतम् ॥ आश्लिष्य विज्वरं चक्रे वासुदेवो जगत्प्रभुः ॥२५८॥ ॥

बबंध ॥ २५५ ॥ तत्रबाणनगरंप्रति तत्रतस्मिन्युद्धे प्रथमआदौवन्हिभिःअग्निरूपरुद्रभूतैः युध्द्वाअंगिरसाचैवअंगिरसाग्निविशेषेणचयुध्द्वा तानग्नीन्विद्राव्य शर्वप्रमथान्वेतालादिरुद्रप्रमथान्विद्राव्य ततःज्वरंज्वराभिमानिनंप्रथमंआससाद ॥ २५६ ॥ २५७ ॥ भस्मप्रहारेण भस्मायुधवतातेनज्वरेणज्वरितंज्वरोपेतं विज्वरंविगतज्वरम् ॥ २५८ ॥ ॥ ॥ ॥ ॥ ॥

तेनज्वरेणविक्रीड्य मुष्टिभिःमुष्टिप्रहारैः शैवंज्वरंस्वयंनिष्पिष्यसंचूर्ण्य तज्जयार्थंअन्यंवैष्णवंज्वरम् ॥ २५९ ॥ ननु कृष्णएवशैवंज्वरं किमर्थंनजिगायेत्यतआह । स्वयामिति । प्रभुःजेतुंसमर्थोपिस्वयंजित्वापिअलंनभवतिश्लाघ्योनभवतीतिहेतोः स्वभृत्येनैवजेतव्यइत्यभिप्रायेण तदानिष्पेषानंतरं शैवज्वरजयार्थंअन्यंवैष्णवंज्वरंससृजे॥२६० असौबाणमुक्तोज्वरःपीडितःसन् ग्रासार्थंभक्षयितुंउपनीतःवैष्णवज्वरेणभक्षणार्थं मुखसमीपंप्रापितइतिभावः । हरिंशरणंजगाम स्वरक्षणार्थमितिशेषः ॥ तेनज्वरेण ॥ ॥ २६१ ॥ ननु भगवान्कृष्णोयदिवैष्णवंज्वरंनास्रक्ष्यत्तर्हि शैवज्वरादव्यथिष्यत अतोवैष्णवज्वरनिर्माणेनैवाप्राप्तव्यथःसन् शैवज्वरमजैषीदित्याद्यर्थकवाक्यानिसंति इत्यतःकथंस्वयंजित्वापीत्याद्युक्तमित्यतआह क्रीडार्थमिति । अजःसकृष्णःप्रभुरपिस्वयंसमर्थोपि क्रीडार्थंअत्यल्पजनेषु वह्निज्वरादिनीचपुरुषेषु युद्धार्थंप्रवृत्तःस

स्वयं विक्रीडय तेनाथ कंचित्कालं जनार्दनः ॥ निष्पिष्य मुष्टिभिश्चान्यं ससर्ज ज्वरमच्युतः ॥ २५९ ॥ स्वयं जित्वापि गिरिशभृत्यं नालमिति प्रभुः ॥ स्वभृत्येनैव जेतव्य इत्यन्यं ससृजे तदा ॥ २६० ॥ ज्वरेण वैष्णवेनासौ सुभृशं पीडितस्तदा ॥ ग्रासार्थमुपनीतश्च जगाम शरणं हरिम् ॥ तेन स्तुतः स भगवान् मोचयामास तं प्रभुः ॥२६१॥ क्रीडार्थमत्यल्पजनेष्वपि प्रभुः कथंचिदेव व्यजयद्व्यथां विना ॥ इत्यादि मोहाय स दर्शयत्यजो नित्यस्वतंत्रस्य कुतो व्यथादयः ॥२६२॥ यदा ज्वराद्या अखिलाः प्रविद्रुतास्तदा स्वयं प्राप हरिं गिरीशः ॥ तयोरभूद्युद्धमथैनमच्युतो विजृंभयामास विजृंभणास्त्रतः ॥ २६३ ॥ विजृंभिते शंकरे निष्प्रयत्ने स्थाणूपमे संस्थिते कंजजातः ॥ दैत्यावेशाद्वासुदेवानभिज्ञं संबोधयामास सदुक्तिभिः प्रभुः ॥ प्रगृह्य शर्वं च विवेश विष्णो स तू दरं दर्शयामास तत्र ॥ २६४ ॥

न्नितिवाक्यशेषः । कथंचिदेववैष्णवज्वरसर्जनादिमहताप्रयत्नेनैवव्यथांविनाअप्राप्तव्यथःसन् शैवज्वरंव्यजयदित्यादिमोहनायदर्शयति । ननु शैवज्वराद्व्यथामप्राप्तुं वैष्णवज्वरसर्जनादिप्रयत्नमकरोदितिकिंनस्यादित्यतआह नित्यस्वतंत्रस्येति ॥ २६२ ॥ तयोःशंभुकृष्णयोःअच्युतःएनंरुद्रंविजृंभणास्त्रतः स्तंभनकरास्त्रेणविजृंभयामासस्तंभयामास ॥ २६३ ॥ विजृंभितेस्तंभितेनिष्प्रयत्नेचलनेक्षणादिप्रयत्नरहिते अतएवस्थाणूपमेजडनिभेशंकरे लोकस्यसुखकरेशिवेसंस्थितेसति कंजजातिःब्रह्मा दैत्यावेशान्निमित्तात् वासुदेवानभिज्ञंवासुदेवस्यकृष्णस्यअनभिज्ञंअजानंतंरुद्रंसदुक्तिभिःविष्णूत्कर्षसाधनसमर्थैर्वचनैःसंबोधयामास । निष्प्रयत्नस्थाणूपमंकथंसंबोधयामासेत्यतआह । प्रभुरिति । सब्रह्मातत्रविष्णूदरेस्तंभितंस्तंभनास्त्रेणस्तंभितं शिवस्वरूपंशिवस्यतादृशंरूपांतरंदर्शयामास ॥ २६४ ॥ ॥ ॥

बिल्वनाम्निबिल्वसंज्ञेवनेगिरिशेनैवरुद्रेणैव अच्युतात्शैवंपदंप्राप्तुंयत्तपःकृतंपूर्वमितिशेषः । कंजजःतत्तपश्चरणंचशंकरस्यावदत् ॥ १६५ ॥ वृषध्वजःवृषोनंदीसएवध्वजे यस्यसतथा । रुद्रःअथबोधनानंतरं अपेतमोहःगतमिथ्याज्ञानःसन् तुष्टावअभिससारप्राप । बाहुसहस्रंबाहूनांसहस्रं पुनः अरिंचक्रंतच्छिरोर्थंतस्यबाणस्याशिरोर्थेशिर श्छेदनार्थंस्वभक्तंकृत्वा गतासुरावेशंकृत्वेतिभावः ॥ २६६ ॥ २६७ ॥ स्कंदंरुद्रस्तंभनानंतरं युद्धार्थमागतंषण्मुखं ॥ २६८ ॥ सर्वलोकहरःसर्वलोकसंहारकोहरःअय त्नेनप्रयत्नरहितेन येनकृष्णेनविजितःपराजितः अयत्नेनयत्नंविनेतिवा । अनंतस्यबलादिनाअवधिरहितस्यतस्यविष्णोः ज्वरादिविजयःज्वरादीनांजयःआश्चर्यकरइतिकिं

शिवस्वरूपं स्तंभितं बिल्वनाम्नि वने गिरीशेन च यत्तपः कृतम् ॥ शैवं पदं प्राप्तुमेवाच्युताच्च तच्चावदत्कंजजः शंकरस्य ॥२६५॥ अपेतमोहोथ वृषध्वजो हरिं तुष्टाव बाणोभिससार केशवम् ॥ तस्याच्युतो बाहुसहस्रमाच्छिन त्पुनश्चारिं जगृहे तच्छिरोर्थे ॥२६६॥ तदा शिवेन प्रणतो बाणरक्षणकाम्यया ॥ कृत्वा स्वभक्तं बाणं तं ररक्ष द्विजू जीकृतम् ॥ २६७ ॥ मोचयित्वानिरुद्धं च ययौ बाणेन पूजितः ॥ एवमग्नींनंगिरसं ज्वरं स्कंदमुमापतिम् ॥ बाणं चायत्नतो जित्वा प्रायाद्द्वारवतीं प्रभुः ॥ २६८ ॥ येनायत्नेन विजितः सर्वलोकहरो हरः ॥ किं ज्वरादिजयो विष्णो स्तस्यानंतस्य कथ्यते ॥ २६९ ॥ ईदृशानंतसंख्यानां शिवानां ब्रह्मणामपि ॥ रमाया अपि यद्वीक्षां विना न [illegible] लितुं बलम् ॥ २७० ॥ न च ज्ञानादयो भावा न चास्ति त्वमपि क्वचित् ॥ अनंतशक्तेः कृष्णस्य न [illegible] जयः ॥ २७१ ॥ चित्रलेखासमेतोषान्वितपौत्रसमन्वितः ॥ सरामः ससुतो वींद्रमारुह्य द्वारकां गतः ॥ २७२ ॥

कथ्यते ॥ २६९ ॥ ननु हरजयःकृष्णस्यकथंघटतइत्याशक्य रमादेःप्रवृत्त्यादिकंतस्मादेवेत्याह । ईदृशेति । ईदृशानंतसंख्यानांईदृशानांअस्मिन् [illegible] द्रेणब्रह्मणाचसदृशानां अनंतसंख्यानां अनंतेतिसंख्यायुक्तानां भूतभविष्यत्कल्पस्थानामित्यर्थः । यद्वीक्षांयस्यविष्णोःवीक्षांकृपावलोकनंविना [illegible] लनार्थंबलंन ॥ २७० ॥ ज्ञानादयःज्ञानेच्छादयःभावाःधर्माःनचनसंति क्वचिदपिअस्तित्वंस्वरूपसत्तापिनचनास्ति । अनंतशक्तेःतस्येतिशेषः । [illegible] त्रंनआश्चर्यम् ॥ २७१ ॥ चित्रलेखयासमेतयाउषयाआन्वितःयुक्तःपौत्रःअनिरुद्धःतेनसमन्वितःयुक्तःसरामःससुतःप्रद्युम्नयुतः ॥ २७२ ॥ ॥

वासुदेवासनाग्र्यःवासुदेवस्यआसनेष्वग्र्यइतिवासुदेवस्यश्रेष्ठासनइत्यर्थः । गरुत्मान्महान्ह्रदात् गंभीरसरसःउरगंसर्पंजहारअपाहरत् ॥ २८८ ॥ तत्पक्षवातेनगरुड पक्षवायुना तस्मिन्गिरौगंधमादनपर्वतेविचालितेअतिशयेनचंचलीकृतेसति कृष्णाभीमयोःसन्निधानेसमीपेमंडलाभंमंडलेनकान्तिसमूहेनआभंसदृशंकमलंपपात॥२८९ अस्यभीमस्यदेवदैत्यैरविषह्यंसोढुमशक्यंआनुभावंसामर्थ्यं जानतीद्रौपदी तादृशानितत्सदृशानिकमलानिअयाचत् गदयासहितःसगदःतुंगंउच्चंआरुहत् ॥२९०॥ सुर सिद्धसंघैःप्रशस्यमानःस्तूयमानःसिंहशार्दूलरूपान्दैत्यान्मृद्नन्मर्दयन् तत्रगिरौप्रोद्यदादित्यवद्भासतइतिप्रोद्यदादित्यभासं हनूमदाख्यंहनुमानितिआख्यायस्यतत्तथा । निजंरूपंआसेदिवान्प्राप ॥ २९१ ॥ स्वीयरूपंस्वस्येदंस्वीयंरूपंयस्यसतथा तंएनंहनूमंतंजानन्नपिभीमः यथापरेणअन्यपुरुषेणतथाएतेनहनूमताचिक्रीडेक्रीडांचकार ।

एवं बदर्यां विहरत्सु तेषु क्वचिद्रहः कृष्णया वायुसूनौ ॥ स्थिते गरुत्मानुरगं जहार महान्हदाद्वासुदेवासना ग्र्यः ॥ २८८ ॥ तत्पक्षवातेन विचालिते तु तस्मिन् गिरौ कमलं हैममग्र्यम् ॥ पपात कृष्णाभीमयोः सन्निधा न उद्यद्भानोर्मंडलाभं सुगंधम् ॥ २८९ ॥ दृष्ट्वातिगंधं वरहेमकंजं कुतूहलाद्द्रौपदी भीमसेनम् ॥ बहून्ययाचत्ताद शान्यानुभावमस्याविषह्यं जानती देवदैत्यैः ॥ तयार्थितः सगदस्तुंगमेनं गिरिं वेगादारुहद्वायुसूनुः ॥ २९० ॥ प्रशस्यमानः सुरसिद्धसंघैर्मृद्नन् दैत्यान् सिंहशार्दूलरूपान् ॥ आसेदिवांस्तत्र हनूमदाख्यं निजं रूपं प्रोद्यदा दित्यभासम् ॥ २९१ ॥ जानन्नप्येनं स्वीयरूपं स भीमश्चिक्रीड एतेन यथापरेण ॥ धर्मो देवानां परमो मानुष त्वे स्वीये रूपेप्यन्यवदेव वृत्तिः ॥ २९२ ॥ अनादानं दिव्यशक्तेर्विशेषान्नरस्वभावे सर्वदा चैव वृत्तिः ॥ तस्मा द्भीमो हनुमांश्चैक एव ज्यायः कनीयो वृत्तिमत्राभिपेदे ॥ २९३ ॥ ॥ ॥ ॥

मानुषत्वेमनुष्यजन्मनिप्राप्तेसतीतिभावः । स्वीयेरूपेअन्यवदेववृत्तिर्वर्तनंदेवानांपरमोमुख्योधर्मः ॥२९२॥ नरस्वभावेविशेषात् मूलरूपादित्यर्थः । दिव्यशक्तेःमूलरूपे विद्यमानबलस्य चशब्देनज्ञानमप्युपलक्षितं । मूलस्वरूपशक्तिज्ञानयोरनादानमस्वीकारःसर्वदाआपदनापदोःवृत्तिःपरमोधर्मइतिपूर्वेणान्वयः। हरिंविनाअन्येषांअवताररू पादपिमूलरूपेज्ञानबलादिनाविशेषोवर्ततइतिभावेनमूलरूपादित्यनुक्त्वाविशेषादित्युक्तमितिभावः भीमःहनूमान् एकएवएकःसन्नपितस्मादन्यवदेववृत्तेःदिव्यशक्तेरनादा नस्यचधर्मत्वात् अत्रहनूमान् भीमइतिअवताररूपेज्यायःकनीयोवृत्तिं हनूमान् ज्यायान् ज्येष्ठः भीमःकनीयान् कनिष्ठइतिवृत्तिंवर्तनंअभिपेदेप्राप ॥ २९३ ॥

वायोरतिशयंवक्तुंसर्वदेवसाधारणंन्यायमाह । सर्वइति । सुराणांमानुषत्वेमनुष्यस्वभावेकृतादियुगानुसारात् कृतेअल्पआवृतास्त्रेतायांबहवआवृताइत्येवंरूपेण मूलरूपानुसारात्मूलरूपापेक्षयाक्रमात् मूलरूपेषुउत्तमाधमात्क्रमानुसारात् सर्वेगुणाःज्ञानबलादयःआवृताःअनभिव्यक्ताभवंतीतिशेषः । किंसर्वात्मनाआवृताभवंतिनेत्याह । भागतइति । भागतएकदेशेनावृताइतिपूर्वेणान्वयः । मूलरूपापेक्षयाअवतारेषुकेचिद्गुणाःव्यक्तरूपाःकेचिदनभिव्यक्ताइतिभावः । उत्तमानांदेवानांविशेषमाह । अव्यक्तरूपाइति । सुराणामितित्रर्तंतेभागतइतिच उरूणांउत्तमानांसुराणांयुगानुसारेणमूलरूपापेक्षयाएकदेशेनानभिव्यक्तरूपाअपिगुणाःआदानतःस्वीकारात् अनभिव्यक्तगुणानामितिशेषः । व्यक्तिंअभिव्यक्तिंआयांतिगुणाइतिशेषः ॥ २९४ ॥ ननु विष्णावपिअयमेवनिर्णयः किमित्याशंक्यतथानेत्याह । नैवेति । विष्णोःप्रादुर्भावेषुमत्स्याद्यवतारेषुइहबलज्ञानादिविषये क्वचिदभिव्यक्तिःक्वचिदनभिव्यक्तिःनास्त्येव कुतःअतिसुव्यक्तशक्तेःमारुतस्यइच्छाव्यक्तिःस्वेच्छानुसारेणबलादिव्यक्तिःभवतीतिशेषः । पयो

सर्वे गुणा आवृता मानुषत्वे युगानुसारान्मूलरूपानुसारात् ॥ क्रमात्सुराणां भागतो व्यक्तरूपा आदानतो व्यक्तिमायांत्युरूणाम् ॥ २९४ ॥ नैवाव्यक्तिः काचिदस्तीह विष्णोः प्रादुर्भावेष्वतिसुव्यक्तशक्तेः ॥ इच्छाव्यक्तिः प्रायशो मारुतस्य तदन्येषां व्यक्तता कारणेन ॥ २९५ ॥ तस्माद्भीमो धर्मवृद्ध्यर्थमेव स्वीये रूपेप्यन्यवद्वृत्तिमेव ॥ प्रदर्शयामास तदासुराणां मोहायैवाशक्तवच्छक्तरूपः ॥ २९६ ॥ ॥ ॥ ॥ ॥ ॥

ब्धिमध्यगंचमेसुसद्मचान्यदेववा । यथेष्टतोगमिष्यसिस्वदेहसंयुतोपिसन्निति स्वर्गारोहणसमये हनूमंतंप्रतिरामवचनमेतत् । निरुपाधिकभक्त्यानित्यतुष्टस्यविष्णोर्वरादपिक्वचिद्बलादिव्यक्तिरितिसूचयितुंप्रायशइत्युक्तं । तदन्येषांमारुतादन्येषां शेषादीनांकारणेन व्यक्तताबलादिप्राकट्यंभवतीतिशेषः । संप्राप्यसंज्ञांससुविह्वलोपिसस्माररूपंनिजमेवलक्ष्मणः । शेषंहरेरंशयुतमित्यत्रलक्ष्मणस्यशक्त्याविर्भावेहर्यंशयुक्तशेषस्मरणमेवकारणं विनतस्यसुपर्णस्यतथाशतबलेरपि । तथातत्परिवाराणां कपीनांरामसेविनां अत्यायामसमुद्राणांतरणेशक्तिरूर्जिता । इच्छयारामदेवस्यतदा लोकगुरुणात्मनइतिस्कांदे । विनतादिकपीनांसतद्वीपगमनशक्तिविषयेरामस्येच्छैवकारणमित्येकदेशेनकारणंउदाहरणपूर्वकंदर्शितं ॥ २९५ ॥ तस्माद्दिव्यशक्तेरनादानस्यधर्मत्वात्भीमोधर्मवृद्ध्यर्थमेव स्वीयेरूपेअन्यवदेवअन्यस्मिन्यथातथा वृत्तिंवर्तनंदर्शयामास । तथाऽसुराणांमोहायैवशक्तरूपोपिअशक्तवत्तत्पुच्छोद्धरणविषयेअशक्तत्वंप्रदर्शयामास ॥ २९६ ॥ ॥ ॥

रामस्यकथाःश्रुत्वा रामस्यतद्देहादिषुप्रसिद्धंदिव्यंलोकविलक्षणंचातुरात्म्यंचवासुदेवादिचतुःस्वरूपत्वं रामोवासुदेवएव लक्ष्मणःसंकर्षणाविष्टः भरतःप्रद्युम्नाविष्टः शत्रुघ्नो निरुद्धाविष्ट इतिवासुदेवादिचतुःस्वरूपत्वंचअग्र्यंमुख्यंयस्मिन् युगेयोधर्मोमुख्यः तंचातुर्युगंचतुर्युगेषुभवश्चाहुर्युगस्तं धर्ममपिश्रुत्वैवतेनहनूमताच ॥ २१७ ॥ बीभत्सो रर्जुनस्यध्वजात् हनूमदंकध्वजात् गर्जनेनैवस्वकृतगर्जनमात्रेणशत्रुपराभवेशत्रूणांपराजयेअर्जुनस्यदत्तेसति भीमःअग्र्यरूपंदेवानामग्र्यःश्रेष्ठोवायुःतस्यरूपंअवतारं एनंहनूमंतंप्रणम्य सौगंधिकंवनंययौ ॥ २१८ ॥ नरागम्यांमनुष्यैर्गंतुमशक्यांनलिनींसरोवरंतत्रसरसिपद्मानिदृष्ट्वा नराशैःनृभक्षकैःराक्षसैःवार्यमाणोपिमाणो[illegible]तिनिवार्य

तद्रूपवृद्धिं भीमसेनोत्र दृष्ट्वा श्रुत्वा हनूमन्मुखतः कथाश्च ॥ रामस्य तच्चातुरात्म्यं च दिव्यं चातुर्युगं धर्ममप्यग्र्यमे व ॥२१७॥ ध्वजाद्बीभत्सोर्गर्जितेनैव शत्रुपराभवे तेन दत्तेर्जुनस्य ॥ ययौ प्रणम्यैनमाश्वेव भीमः सौगंधिकं वन मप्यग्र्यरूपम् ॥ २१८ ॥ नरागम्यां नलिनीमेत्य तत्र दृष्ट्वा पद्मान्यद्भुताकारवंति ॥ हैमानि दिव्यान्य[illegible]वंति समासदद्वार्यमाणो नराशैः ॥ २१९ ॥ ते भीममात्तायुधमग्र्यरूपं महाबलं रूपनवावतारम् ॥ न्यवारयन् क्रोधव शाः समेताः शतं सहस्राण्ययुतानि संख्ये ॥ ३०० ॥ वराच्छिवस्यैव परैरजेयाः शस्त्रास्त्रवृष्टिं मुमुचुः सुभीमाम् ॥ भीमेखिलज्ञे तपसां निधाने बलोदधौ शैवशास्त्रं वदंतः ॥ ३०१ ॥ तान्वैष्णवैरेव शास्त्रैः स भीमो विजित्य पूर्वं आ द्यमये संगरे तु ॥ शस्त्रास्त्रवर्षस्य कुर्वन्प्रतीपं जघ्नेखिलान् गदया तेषु वीरान् ॥ ३०२ ॥ ॥ ॥



माणोपिसमासदत्प्राप पद्मानीतिशेषः ॥ २११ ॥ शतंसहस्राणिएकलक्षं,,अयुतानिशतंसहस्राणिदशसहस्रलक्षाणिशतंकोटयइत्यर्थः। एतत्संख्याविशिष्टाःसमेताःमि लितास्तेक्रोधवशाख्यगणोत्पन्नाः। क्रोधाधीनावा राक्षसाः संख्येयुद्धेरूपनवावतारं रूपेणनवःनूतनःअवतारोयस्यसतथा तंअसदृशरूपामित्यर्थः भीमंन्यवारयन् ॥३००॥ परैःशत्रुभिःशैवशास्त्रंशिवस्यसर्वोत्तमत्वप्रतिपादकंशास्त्रंवदंतःशिवसर्वोत्तमत्वंसाधयंतइत्यर्थः । तपसांनिधानेआश्रयेभीमेसुभीमांअतिभयंकराम् ॥ ३०१ ॥ तान्क्रोधव शान्वाद्यमयेवाक्प्रचुरेगभीरेयुद्धेपूर्वंआदौविजित्य शस्त्रास्त्रवर्षस्यप्रतीपरोधनंकुर्वन्तेषुक्रोधवशेषुमध्येअखिलान्वीरान्शूरान्जघ्ने ॥ ३०२ ॥ ॥

भीमस्यअवध्यराक्षसहननसामर्थ्यंनिरूपयति । वातेनेति । वातेनवायुनाअतएवशूरःपराक्रमेप्रतापविषयेशत्रुभिरप्रधृष्यःधर्षयितुमशक्यः ॥३०३॥ तत्रसौगंधिकवने असत्यंमिथ्याभूतंनिरीश्वरंईश्वरकर्तृकंनेत्यर्थः । अप्रतिष्ठंईश्वरापाहितंलोकंजगत्ब्रुवाणान् सिद्धोहमीशोहमितिब्रुवाणान् अपरान्हतावशिष्टेभ्योन्यान् बहून्राक्षसान् विष्णोर्गुणान्ख्यापयन् विष्णुरानंदादिगुणवानितीरयन्नित्यर्थः । सर्वतःक्षराक्षरतःभिन्नमधिकंविष्णुंब्रुवन्सन् वादतःअजैत् अजयत् ॥ ३०४ ॥ जघ्नेऽखिलान्गदयातेपुरीं नितिउक्तं तत्रकतिहताइत्याशंकायामुक्तं । लक्षमिति । एषांक्रोधवशानांमध्येलक्षंलक्षसंख्याकान् प्रवीरानतिबलान्निजघ्ने । तेक्रोधवशाःतस्यभीमस्यपूर्वमेवविद्यमानंविद्याबलंदृष्ट्वा तथैवतेनैवदर्शनोपायेनबाहुबलंचदृष्ट्वा वीर्यंविःपरमात्मातेनेर्यमाणंतात्कालिकंबलंचदृष्ट्वा वीर्यंपराक्रमंविद्याबलं तथैवबाहुबलमितित्रिविधंबलंचदृष्ट्वेतिवा । हत

वातेन कुंत्यां बलवान्स जातः शूरस्तपस्वी द्विषतां निहंता ॥ सत्ये च धर्मे च रतः सदैव पराक्रमे शत्रुभिरप्रधृष्यः ॥ ३०३ ॥ तत्रापरांश्चैव बहूनसत्यं निरीश्वरं चाप्रतिष्ठं च लोकम् ॥ सिद्धोहमीशोहमिति ब्रुवाणान् गुणान्विष्णोः ख्यापयन्वादतोजैत् ॥ ३०४ ॥ भिन्नं विष्णुमधिकं सर्वतश्च ब्रुवन्प्रवीरान् लक्षमेषां निजघ्ने ॥ ते तस्य वीर्यं च बलं च दृष्ट्वा विद्याबलं बाहुबलं तथैव ॥ अशक्नुवंतः सहिताः समस्ताः हतप्रवीराः सहसा निवृत्ताः॥३०५॥विक्रम्य तान् गदयासौ निहत्य विद्राव्य सर्वान्नलिनीं प्रविश्य ॥ पीत्वामृतांभश्च ततोंबुजानि दिव्यानि जग्राह कुरुप्रवीरः ॥३०६॥ अथो कलहशंसीनि निमित्तानि युधिष्ठिरः ॥ दृष्ट्वा कृष्णामपृच्छच्च क्व भीम इति दीनधीः ॥३०७॥ सौगंधिकार्थं यातं तं श्रुत्वा कृष्णामुखान्नृपः ॥ आरुह्य राक्षसश्रेष्ठान् कृष्णया भ्रातृभिः सह ॥ ३०८ ॥

प्रवीराःभीमेनहताःप्रवीराःशूराःयेषांतेतत्तथा । सहिताःसमस्ताःअशक्नुवंतःसंतःयोद्धुमितिशेषः । सहसाअकस्मात् निवृत्ताःपरावृत्यययुः ॥ ३०५ ॥ तान्निवृत्तान्विक्रम्य पृष्ठतःप्राप्येत्यर्थः । गदयानिहत्यपोथयित्वा सर्वान्विद्राव्य नलिनींसरःप्रविश्य । अमृतांभःअमृतेनसदृशंअंभोजलंपीत्वा ततःसरसःदिव्यानिदेवतासंबंधीनि ॥ ३०६ ॥ कलहशंसीनिकलहसूचकानि दीनधीःव्यथितबुद्धिः ॥ ३०७ ॥ कृष्णामुखात् कृष्णामुखान्निर्गतवाक्यादित्यर्थः । कृष्णयाभ्रातृभिःसहयत्रयस्मिन्वनेवृकोदरस्तत्रययौ । नृपस्ययतिमुन्यादयःस्नेहेनभ्रातृतुल्याइतिभ्रातृभिरितिबहुवचनप्रयोगःकृतः । नतुभीमादयोविवक्षिताःअस्मिन्समयेभीमःसौगंधिकवनेतिष्ठति अर्जुनश्चस्वर्गेवर्तते नृपेणसहनकुलसहदेवौद्वावेवभ्रातरौस्तःतस्माद्यतिमुनयएवविवक्षिताः ॥३०८॥ गिरिशकोपतःरुद्रकोपेनभीतःसन् एवमित्थंमाकुर्वितिउवाच । किंकृत्वाअवस्थितमेनं दृष्ट्वा ॥३०९॥

गिरीशकोपेकारणमाह । देवेभ्यइति । तदीयांकुबेरसंबंधिनीं अस्यकुबेरस्य ॥ ३१० ॥ तत्रगंधमादनेकतिपयैर्दिनैःकालांतरेणेत्यर्थः ॥ ३११ ॥ नृभिःअगम्यतःगंतुमशक्यत्वात् कुबेरस्यगृहात्मारुतेनहृतानिआनीतानिपंचवर्णानिशुक्लादिपंचवर्णायेषांतानितथा तानिपुष्पाणिवीक्ष्योवाच ॥ ३१२ ॥ भीमस्ययशोधर्माभिवृद्धयेउवाचेत्युक्तंविशदयति । अगम्यइति । अयंगिरिःगंधमादनःसर्वैःपुंभिःअगम्यःगंतुमशक्यः कुतःकुबेरेणाभिपालितःरक्षितःकुबेरेणरक्षितत्वात् यशोभिवृद्धिःसूचिता । अत्रत्यान् अखिलराक्षसान् । विधूयहत्वेत्यर्थः । राक्षसहननाद्धर्माभिवृद्धिःसूचिता । अथत्वयैवगंतव्यःप्राप्यःगिरिरितिशेषः । एवकारेणअन्यागम्यत्वंसूचितमितिकृष्णोवाचेतिपूर्वेणान्वयः

यथौ वृकोदरो यत्र दृष्ट्वा चैनमवस्थितम् ॥ उवाच मैवमित्येवं भीतो गिरिशकोपितः ॥ ३०९ ॥ देवेभ्यो मरणाद्भीता राक्षसा वित्तपाज्ञया ॥ तदीयां नलिनीं ते हि रक्षन्त्यस्याश्रयो हरः ॥ जानन्वित्तेश्वरो भीममाहात्म्यं न चुकोप ह ॥३१०॥ वसत्सु तत्र पार्थेषु पुनः कतिपयैर्दिनैः ॥ उवाच भीमसेनस्य यशो धर्माभिवृद्धये ॥३११ ॥ पंचवर्णानि पुष्पाणि कृष्णा वीक्ष्याहृतानि तु ॥ मारुतेन कुबेरस्य गृहान्नृभिरगम्यतः ॥ ३१२ ॥ अगम्योयं गिरिः सर्वैः कुबेरेणाभिपालितः ॥ अथ त्वयैव गंतव्यो विधूयाखिलराक्षसान् ॥ ३१३ ॥ इत्युक्त आशु सगदः सधनुः सबाणो भीमो गिरींद्रमजितोरुबलो विगाह्य ॥ प्राप्तं निशम्य बलदैवतसूनुमत्र पद्मत्रयं न्यरुणदुद्धतराक्षसानाम् ॥ ३१४॥ अग्रे निधाय मणिमंतमजेयमुग्रं शंसोर्वराद्विविधशस्त्रमहास्त्रवृष्ट्या ॥ तान्सर्वराक्षसगणान्मणिमत्समेतान् भीमो जघान सपदि प्रवरैः शरौघैः ॥ ३१५ ॥ अवध्यांस्तान् क्षणेनैव हत्वा भीमो महाबलः ॥ वने क्रोधवशान्सर्वानतिष्ठद्गिरिमूर्धनि ॥ ३१६ ॥ ॥ ॥ ॥

॥ ३१३ ॥ गिरींद्रंविगाह्यआरुरोह । उपसर्गेणधात्वर्थोबलादन्यत्रनीयते । अत्रपर्वतेप्राप्तंआगतंनिशम्य उद्धतानांउन्मत्तानांराक्षसानांपद्मत्रयंपद्मंपद्माख्यसंख्याविशेषः । तेषांत्रयं मणिमंतंअग्रेनिधायपुरतःकृत्वा विविधशस्त्रमहास्त्रवृष्ट्यान्यरुणद्रुरोध ॥ ३१४ ॥ भीमःतान्सपदिशीघ्रंशरौघैःजघान ॥ ३१५ ॥ भीमःरणेअवध्यानपितान् पूर्वंसौगंधिकवने हतावशिष्टान्सर्वान् क्रोधवशान्क्षणेनैवक्षणमात्रेणैवहत्वा । गिरिमूर्ध्निपर्वतस्योपरिभागेअतिष्ठत् ॥ ३१६ ॥ ॥ ॥

॥ ३१७ ॥ मिथ्यामातिंमिथ्याज्ञानंआस्तीर्यविस्तीर्य सम्यक्त्वयोग्यतानुसारेणअधिकमितिक्रियाविशेषणं । दुःखाभिवृद्धिर्यथास्यात्तथातमःआप ॥ ३१८ ॥ वैश्रवणःकुबेरः राक्षसानांपद्मत्रयेहतेसति सखाये सहखंसखंएतिप्राप्नोतीतिसखायःतस्मिन्माणिमत्यपिहतेसति वृकोदरंप्रतियोद्धुकामःसन्आरुरोह ॥ ३१९ ॥ तस्यकुबेरस्यसस्वयंवित्तपतिःभीमेनसह ॥ ३२० ॥ घोषंवीरशब्दंभीमःक्कगतइत्येवापृच्छत् । रक्षोंससंस्थःरक्षसःघटोत्कचस्यअंसेस्कंधेसंस्थःउपविष्टःसन् ॥ ३२१ ॥ अत्ररणभूमौकुबेरःभीमंधर्मजंचदृष्ट्वा असुरावेशतःयथाकिंचित्ईषत्आस तथाकिंचित्स्नेहयुक्तःआस ॥ ३२२ ॥ किंचिद्दैत्यावेशाद्धेतोःभीमंधृतायुधमपिईक्ष्य भीमंबहुबलाधिकंनमेने

ते हता भीमसेनेन प्रापुरंधंतमोखिलाः ॥ ३१७ ॥ हतः सौगंधिकवने मणिमांश्च पुनः कलौ ॥ जातो मिथ्यामतिं सम्यक् आस्तीर्यापि तमोधिकम्॥ ३१८ ॥ ततो वैश्रवणो राजा महापद्मत्रये हते ॥ राक्षसानामवध्यानां सखाये मणिमत्यपि ॥ आरुरोह रथं दिव्यं योद्धुकामो वृकोदरम् ॥ ३१९॥ असुरावेशतस्तस्य भीमे क्रोधो महानभूत् ॥ सआजगामभीमेनयोद्धुंवित्तपतिः स्वयम् ॥३२०॥ तस्मिन् काले भीमसेनस्य घोषं श्रुत्वा राजापृच्छदाशु स्म कृष्णाम्॥ क्व भीम इत्येव तयोदितं च श्रुत्वा जगामाशु रक्षोंससंस्थः ॥ ३२१ ॥ सभ्रातृके मुनिभिः कृष्णया च गते राजन्नत्र भीमं कुबेरः ॥ दृष्ट्वासुरावेशतो धर्मजं च किंचिन्मुक्तः स्नेहयुक्तस्तथास॥ ३२२ ॥ धृतायुधं भीममीक्ष्यापि किंचिद्दैत्यावेशाद्बहु मेने न भीमम् ॥ अगस्त्यशापं चावदत्स्वस्य पूर्वं सखायनाशे कारणं राजराजः ॥ ३२३ ॥ दैत्यावेशादुज्झितः शांतभावो ददौ निजस्थानमेषां सुतुष्टः ॥ आवासार्थं तेवसंस्तत्र पार्थास्तथान्येषां देवतानां गृहेषु॥ ३२४ ॥ ॥ ॥ ॥ ॥

भीमंबहुबलंनमेनइतिभावः। तदेवविशदयति । अगस्त्येति । राजराजःकुबेरःस्वस्यपूर्वंसखायनाशे सखायइतिच्छांदसत्वात् सखामणिमान् तस्यनाशेनाशविषये अगस्त्यशापंकारणमवदत् । मणिमतोनाशेशापमेवकारणं नतुभीमसामर्थ्यमित्यवददितिभावः ॥३२३॥ उज्झितःमुक्तःशांतभावःशुद्धस्वभावः सुतुष्टःभीमसामर्थ्येनेतिशेषः । आवासार्थंवासंकर्तुंनिजंस्थानंददौ । तेपार्थाःतत्रकुबेरगृहेअवसन् तथान्येषांच ॥ ३२४ ॥ ॥ ॥ ॥ ॥ ॥

इंद्रः पंचाब्दमितिसमाहारेद्विगुः पचाब्दान्महांति उत्तमान्यस्त्राणि अध्याप्यपार्थमितिशेषः । फल्गुनेनगुर्वर्थंगुरुमुद्दिश्यदीयमानंदक्षिणारूपं । अर्थंआर्थितः गुरुदक्षिणांस्वीकुर्वितिप्रार्थितोभूत् ॥ ३२५ ॥ शत्रूणांनिवातकवचाख्यानांस्वरूपतःस्वावतारात्पार्थात्वधंवव्रे गुरुदक्षिणात्वेनेतिशेषः । पार्थाद्वधस्वीकारेकारणमाह । एषामित्यादिना । ब्रह्माएषांनिवातकवचानांसुरराक्षसाद्यैःअवध्यतांददौ । तैःनृभिःअवध्यत्वंनाकांक्षितमितिभावः । पुनश्वरदानानंतरं इंद्रेणअर्थितःमेवध्याभवत्वितिप्रार्थितोब्रह्मानरदेहवान् मनुष्यावतारवान्त्वंइमान्निवातकवचान् जहीति वरंददावितिशेषः ॥ ३२६ ॥ ३२७ ॥ तेनकारणेनशक्रःस्वात्मानंस्वस्वरूपं नरदेहगंमनुष्यदेहंप्राप्तंअर्जुनंतान् जहीति

तत्रैव तेषां वसतां महात्मनामानंदिनामब्दचतुष्टये गते ॥ पंचाब्दमध्याप्य महांति चास्त्राणींद्रो गुर्वर्थं फल्गुनेनार्थितोभूत् ॥ ३२५ ॥ वधं वव्रे स्वशत्रूणामिंद्रः पार्थात्स्वरूपतः ॥ निवातकवचाख्यानामेषां ब्रह्मा वरं ददौ ॥ ३२६ ॥ अवध्यतां सुरैर्दैत्यैर्गंधर्वैर्यक्षराक्षसैः ॥ पुनरिंद्रेणार्थितोदाज्जहीमान्नरदेहवान् ॥ ३२७ ॥ इति तेनार्जुनं शक्रः स्वात्मानं नरदेहगम् ॥ जगाद तान् जहीत्येवं किरीटं स्वं निबध्य च ॥ ३२८ ॥ ऐंद्रस्यंदनमारुह्य पार्थो मातलिसंयुतः ॥ गांडीवं धनुरादाय ययौ हंतुं महासुरान् ॥ ३२९ ॥ शंखं ददुस्तस्य देवा देवदत्तः स शंखराट् ॥ नादयन् शंखघोषेण धनुर्विस्फारयन्महत् ॥ ३३० ॥ दधानः कुंडले दिव्ये शक्रदत्ते सुभास्वरे ॥ आससाद पुरं दिव्यं दैत्यानामिंद्रनंदनः ॥ ३३१ ॥ तस्य शंखध्वनिं श्रुत्वा गांडीवस्य च निःस्वनम् ॥ अभिसस्रुर्महावीर्याः निवातकवचासुराः ॥ ३३२ ॥ तिस्रः कोट्यो दानवानां स्वयंभूवरगर्विताः ॥ नानायुधै रणे पार्थमभ्यवर्षन्सुसंहताः ॥ ३३३ ॥ तेषां स शिरांसि किरीटमाली निवार्य गांडीवधनुः प्रमुक्तैः ॥ शरैः शिरांसि प्रचकर्त वीरो महास्त्रशिक्षाबलसंप्रयुक्तैः ॥ ३३४ ॥

जगाद किंकृत्वा स्वंस्वकीयंकिरीटंमुकुटंनिधायशिरसीतिशेषः ॥ ३२८ ॥ मातलिःइंद्रसारथिः ॥ ३२९ ॥ सशंखराट्देवैर्दत्तत्वात् नाम्नादेवदत्तइत्यर्थः । शंखघोषेण शंखशब्देननादयन्दिशइतिशेषः । दिक्षुप्रतिशब्दमुत्पादयन्नितिभावः । विस्फारयन्टंकारयन् ॥ ३३० ॥ सुभास्वरेसुतरामुज्ज्वले ॥ ३३१ ॥ निःस्वनंध्वनिं ॥ ३३२ ॥ सुसंहताःसम्यङ्मिलिताः ॥ ३३३ ॥ कीरीटमालीकिरीटंचमालाश्चकिरीटमालाःताःविद्यंतेयस्यमनथा । सोर्जुनःमहास्त्रशिक्षयायुक्तंचतद्बलंचतथा तेनसंपृक्तैःगांडीवधनुषाप्रयुक्तैःशरैः ॥ ३३४ ॥ ॥ ॥ ॥ ॥ ॥

तेनार्जुनेनतेसर्वेदानवाःनिवातकवचाःहताः । सोप्यर्जुनःतथापूर्ववत् अन्यान्निवातकवचेभ्योन्यान् महारथानांसहस्राणिसहस्राणांषष्टिं षष्टिसहस्रसंख्याकान् पौलोमग णःकालेयगणइत्यभिधानाम येषांतेतथातान्ययौ ॥ ३३५ ॥ पाशुपतास्त्रतः पशुपतिनादत्तत्वात्पाशुपतसंज्ञिकेनास्त्रेणद्राक्शीघ्रंसस्वजेस ..श्लिषत् ॥ ३३६ ॥ पितरंश क्रंअनुज्ञाप्यआपृच्छ्य भास्वतादीप्तिमता ऐंद्रेणइंद्रसंबंधिनारथेन वज्रभृतःइंद्रस्यात्मजः सोर्जुनःसोदर्याणांसमानोदराणां भ्रातृणामित्यर्थः ॥ ३३७ ॥ पुनःअर्जुनगमना नंतरं तेपार्थाःमेरौऊषुःवासंचक्रुः ॥ ३३८ ॥ विष्णौरतःप्रीतियुक्तःआत्मामनोयेषांतेतथातेषां ॥ ३३९ ॥ सुखेनतिष्ठतोधर्मराजस्यचतुर्दशाब्दे शत्रुहननरूपंप्रतिज्ञांस्मार यितुंभीमआहेत्याह । नैवेति । राज्ञांक्षत्रियाणांशत्रून्हरिद्वेषयुनशत्रून् कामक्रोधाद्यांतरशत्रून्वा अनुत्साद्यनःशमऊत्वेत्यर्थः । मुख्यगतिःमुख्यस्यश्रेष्ठस्यविष्णोर्गतिःमुख्या

सर्वे हतास्तेन महारथेन ते दानवाः सोपि ययौ तथान्यान् ॥ पौलोमकालेयगणाभिधानान् षष्टिं सहस्राणि म हारथानाम् ॥ ३३५ ॥ तानस्त्रशस्त्राण्यभिवर्षमाणान् धनंजयः पाशुपतास्त्रतो द्राक् ॥ दग्ध्वा ययौ पुनरैंद्रसद्म तं सस्वजे प्रीतियुतश्च शक्रः ॥ ३३६ ॥ ययुरध्वंतमश्वापि सर्वे देवद्विषोसुराः ॥ अथानुज्ञाप्य पितरं रथेनैंद्रेण भा स्वता ॥ सोदर्याणां सकाशं स ययौ वज्रधरात्मजः ॥३३७॥ आयांतमीक्ष्य बीभत्सुं मुमुदुर्भ्रातरोधिकम् ॥ ऊषुश्च चतुरोब्दांस्ते पुनर्मेरौ प्रमोदिनः ॥ ३३८ ॥ कथाभिर्वासुदेवस्य ध्यानेनार्चनेन च ॥ ययौ कालः सुखेनैव तेषां विष्णुरतात्मनाम् ॥ ३३९ ॥ नैव शत्रूननुत्साद्य नानादाय महद्यशः ॥ नाकृत्वा वासुदेवाज्ञां राज्ञां मुख्यगतिर्भवेत् ॥ ३४० ॥ तदन्येषां तु वर्णानां क्षमा बाह्येषु शत्रुषु ॥ प्रायो धर्म इति प्रोक्तो हरेराज्ञाखिलस्य च ॥ ३४१ ॥

चसागतिश्चेत्तिवा विष्णुलोकप्राप्तिरित्यर्थः । नैवभवेत् विष्णुरित्यर्थं विष्णुद्वेषिणोपिहंतव्याइतिभावः । महद्यशःवरादिनाअजेयशत्रुजयरूपयशःअनादायअसंपाद्यनैवमु ख्यगतिःवासुदेवाज्ञांश्रुतिस्मृतिरूपांश्रुतिस्मृतिममैवाज्ञेतिवचनात् श्रुतिस्मृतिविहितानुष्ठानमकृत्वामुख्यगतिर्नैव ॥ ३४० ॥ तदन्येषांतस्मात्क्षत्रवर्णादन्येषांवर्णानांब्राह्मण वैश्यादीनांबाह्येषुबहिस्थितेषुशत्रुषुदुर्जनेपुक्षमाधर्मइतिप्रोक्तःनत्वंतर्गतकामक्रोधादिषु । कचिद्वैदिककर्मनिषेधकत्वेनादिबाह्यशत्रुषुक्षमाधर्मोनैवेतिसूचनार्थं प्रायइत्युक्तं । अखिलस्यचातुर्वर्णिकस्यसर्वाश्रमवतश्च हरेराज्ञाधर्मइतिसंबंधः ॥ ३४१ ॥ ॥ ॥ ॥ ॥ ॥

ससोदर्यःसभ्रातृकः ॥ ३४२ ॥ तेषुपार्थेषुहिमालयस्य याम्याश्रितेषु दक्षिणदिशिविद्यमानेषु पादेषुउपपर्वतेषुनिवसत्सुसत्सु अनुचरन्अनुगच्छन् सहसादैवेच्छया आयोःआयुनाम्नोराज्ञःसुतंआजगरंउरगसंबंधिउरुस्थूलंरूपंयस्यसतथा तंनहुषंनहुपनामानंनृपंआससादह ॥ ३४३ ॥ नहुषस्यअजगररूपप्राप्तिकारणमाह। पूर्वमित्यादिना। वृत्रवधतःवृत्रासुरवधनिमित्तेन शचिप्रणयिनिशक्रेअंबुजनालतंतुसंस्थेसति कमलनालस्थतंतौसंस्थितेसति देवाःप्रविचिंत्यस्वर्लोकाधिपंकंपुरुषंकुर्मइतिविचार्य अस्यनहुषस्यसर्वंअक्षिगोचरंतपःअक्ष्णोःगोचराणांअपरोक्षंप्रातानांपुरुषाणांतपःबलंचतेस्यादितिवरंदत्वा आयुसुतंनहुषंत्रिलोकपतिंचक्रुः। ऐंद्रसिंहासनेस्थापयामासुरिति

इति भीमवचः श्रुत्वा ससोदर्यो युधिष्ठिरः ॥ राक्षसस्कंधमारूढः कृष्णया च ययौ पुनः ॥ ३४२ ॥ पादेषु तेषु निवसत्सु हिमालयस्य याम्याश्रितेषु पवमानसुतः कदाचित् ॥ धन्वी मृगाननुचरन्सहसा ससाद ह्यायोः सुतं नहुषमाजगरोरुरूपम् ॥ ३४३ ॥ पूर्वं हि वृत्रवधतोंबुजनालतंतुसंस्थे शचिप्रणयिनि प्रविचिंत्य देवाः ॥ चक्रुस्त्रिलोकपतिमायुसुतं वरं च दत्त्वाक्षिगोचरतपोस्य बलं च सर्वम् ॥ ३४४ ॥ स सर्वसुरविप्रेंद्रतपश्चबलमक्षयम् ॥ अवाप्य ववृधे नित्यं दर्पादैच्छच्छचीमपि ॥ ३४५ ॥ स इंद्रवचनाच्छच्या महर्षिगणवाहने ॥ नियुक्तो वंचनायैव वाहयामास तानृषीन् ॥ ३४६ ॥ स शचीप्रनिषेधार्थमगस्त्येन महात्मना ॥ वेदप्रामाण्यविषये पृष्टो नेत्याह मूढधीः ॥ प्रमाणमिति तेनोक्ते शिरस्येनं पदाहनत् ॥ ३४७ ॥ ॥ ॥ ॥

भावः ॥ ३४४ ॥ सनहुषःनित्यंतपःबलंचअवाप्य। ववृधे तपोबलाभ्यामितिशेषः। दर्पात्अहमिंद्रइत्यहंकारात् शचीमपिऐच्छत् रमणार्थमितिशेषः ॥ ३४५ ॥ इंद्रवचनात्इंद्रेणशचींप्रतिउक्तवचनात्। शच्यावंचनायैवमहर्षिगणवाहने महर्षीणांगणेनशिविकावाहनेनियुक्तः प्रेरितोनहुषःतान्ऋषीन्अगस्त्यादीन्वाहयामास। स्वशिबिकामितिशेषः। शिबिकावाहकानकरोदितिभावः । त्वंऋषिवाहनेनमांप्रत्यागमिष्यसिचेत्तर्हि त्वयाहंरमइतिशच्याप्रेरितत्वाद्वाहयामासेतिभावः ॥ ३४६ ॥ सनहुषः शचीप्रतिषेधार्थं शचीरमणनिषेधार्थं अगस्त्येनवेदप्रामाण्यविषयेपृष्टोनेत्याह। वेदाःप्रमाणंनेत्याहेत्यर्थः। अतएवमूढधीः। तेनागस्त्येन एनमगस्त्यम् ॥ ३४७ ॥

तदातस्यनहुषस्यअक्षिपथंदृष्टिगोचरत्वमित्यर्थः कदापिनयातंनप्राप्तंतस्यागस्त्यस्यजटासुलीनंभृगुंकंजप्रभवोब्रह्माआविश्य हेपाप आशुअजगरत्वंउरगसंबंधिशरीरंव्रजेतिशशाप । अक्षिपथंनयातमित्यनेन भृगोस्तपोबलाभ्यांयुक्तत्वंसूचयितुमितिभावः ॥ ३४८ ॥ यःपुरुषःषष्ठेकालेसायंकालेत्वयाआसादितःप्राप्तःस्यात् नशक्ष्यसेनेशिषे यदित्वद्गृहीतःसपुरुषःशक्तोपिस्वंमोचयितुमितिशेषः । आत्मानंस्वंनाभिप्रमोचयेत्तदातर्हि अस्यत्वद्गृहीतपुरुषस्यत्वत्तपः अग्र्यंबलंचस्यात् ॥ ३४९ ॥ नकेवलंत्वत्तपः किंतुसर्वदेवमुनींद्राणांत्वामुपाश्रितंयत्तपः तच्चसर्वंतमेवएतिप्राप्स्यति ॥ ३५० ॥ यदाकश्चित्पुरुषःपरिहरिष्यतितदाआजगरींअजगरसंबंधिनींतनुं दिवंगंतासिस्वर्गंप्राप्नोषि ॥ ३५१ ॥ स्मृतिःस्मरणं ॥ ३५२ ॥ पपातभूमावितिशेषः ॥ ३५३ ॥ विपापकःयज्ञकरणंविनैवास्पृष्टब्रह्महननदोषोपींद्रःविष्णुप्रीत्यैवविष्णुंइष्ट्वा स्वंस्थानंस्वर्गंअवाप । एतद्वृत्रवधादिकंवेदनिषिद्धंब्रह्मवधरूपत्वात् अन्यस्यपापमपिशचीपतेः धर्मवृद्ध्यर्थंआसीत् ॥ ३५४ ॥ तत्रहेतुमाह । नहीति । दुष्टदमनेनत्रैलोक्यस्यपालनेभगवतानियुक्तस्य वज्रिणोभगवदाज्ञाकरणंधर्मवृद्ध्यर्थमेवेत्यर्थः । स्वोक्तार्थेप्रमाणत्वेनश्रुतिमुदाहरति । वृत्रमिति वृत्रंहत्वामहानासेत्यनेन इंद्रोवैवृत्रंहत्वामहानभवदितिश्रुतिर्गृहीता वेदपदंवेदवचनंयद्यस्मात्तस्मात् धर्मवृद्ध्यर्थमासेतिसंबंधः ॥ ३५५ ॥ ॥ ॥ ॥

तदा भृगुं तस्य जटासु लीनं कदापि तस्याक्षिपथं न यातम् ॥ आविश्य कंजप्रभवः शशाप व्रजाशु पापाजगरत्वमेव ॥ ३४८ ॥ षष्ठे काले यस्त्वयासादितः स्यात्स ते वशं यातु बलाधिकोपि ॥ यदा गृहीतुं पुरुषं निहंतुं न शक्ष्यसे यदि स त्वद्गृहीतः ॥ शक्तोपि नात्मानमभिप्रमोचयेत्तदा तस्य स्यात्त्वत्तपोग्र्यं बलं च ॥ ३४९ ॥ सर्वदेवमुनींद्राणां यत्तपस्त्वामुपाश्रितम् ॥ तच्च सर्वं तमेवैति नात्र कार्या विचारणा ॥ ३५० ॥ यदा प्रश्नांस्त्वदीयांश्च कश्चित्परिहरिष्यति ॥ दिवं गंतासि च तदा विसृज्याजगरीं तनुम् ॥३५१॥ स्मृतिश्च मत्प्रसादेन सर्वदा ते भविष्यति॥३५२॥ भृगुदेहगतेनैव शप्तः कमलयोनिना ॥ पपाताजगरो भूत्वा नहुषः क्षणमात्रतः ॥ ३५३ ॥ इंद्रोप्यवाप स्वस्थानमिष्ट्वा विष्णुं विपापकः ॥ धर्मवृद्ध्यर्थमेवैतत् पापमासीच्छचीपतेः ॥ ३५४ ॥ न हि लोकावनं पापं त्रैलोक्येशस्य वज्रिणः ॥ वृत्रं हत्वा महानासेत्यादि वेदपदं च यत् ॥ ३५५ ॥ ॥ ॥ ॥

उक्तार्थंस्मृत्योपपादयति क्वचिदिति । क्वचित्पापंचपापम[ि]पुण्यानांवृद्धये तदेवविवृणोति । वृत्रेति ॥ ३५६ ॥ पापंपुण्यंभवतीतिसामान्येनोक्तं विशेषेणदृढीकरोति । देवानामिति । देवानांवामुनीनांवाएवंभवेत् पापंपुण्यं भवेदित्यर्थः । नृणांयत्पापंतत्पुण्यमेवेत्येतन्नैवभवेत् पापंपापमेवपुण्यंपुण्यमेवभवेदितिभावः । असुराणांविलोमतः पापंपुण्यमित्यनेनपुण्यंपापमेवभवेदित्यर्थः । एवमुक्तप्रकारेणस्कांदंस्कंदपुराणवचनंहियस्मात्तस्मात् ॥ ३५७ ॥ चक्रुर्हिलोकपतिमायुसुतमित्यत्रकारणांतरमाह । नान्यस्येति । तदन्यदेवपदाप्रापणंपरंमुख्यं व्रतंयस्मात्तेदेवाईश्वराअपिसमर्थाअपि । स्वर्गाधिपत्यंकर्तुमितिशेषः । नहुषंशक्रपदेविदधुः । स्थापयामासुरित्यर्थः ॥ ३५८ ॥ एवमनेनप्रकारेणअजगरत्वंप्राप्येत्यर्थः । तस्मिन्नहुषेभीमःअष्टाविंशतिमेयुगेद्वापरयुगेउल्बणंअजगरत्वेनक्रूरंतंनहुषंप्राप । तदीयंनहुषसंबंधितत्तपःप्रसिद्धंतपःआदातुंस्वीकर्तुंजानन्नेव

क्वचित्पापं च पुण्यानां वृद्धये भवति स्फुटम् ॥ वृत्रहत्या यथेंद्रस्य जाता धर्माभिवृद्धये ॥ ३५६ ॥ देवानां वा मुनीनां वा भवेदेवं न वै नृणाम् ॥ पापं यत्पुण्यमेवैतदसुराणां विलोमतः ॥ एवं स्कांदं हि वचनं पापं नैतच्छचीपतेः ॥ ३५७ ॥ नान्यस्य पदमाप्स्यंति तद्देवानां व्रतं परम् ॥ तस्मात्ते नहुषं शक्रपदे विदधुरीश्वराः ॥ ३५८ ॥ तस्मिन्नेवं निपतिते ब्रह्मणः शापकारणात् ॥ ३५९ ॥ अष्टाविंशतिमे प्राप युगे भीमस्तमुल्बणम् ॥ जानन्नेव तदीयं तत्तप आदातुमिच्छया ॥ ३६० ॥ यत्तत्सुराणां सर्वेषां मुनीनां च तपःस्थितम् ॥ तद्गृहीतुं वशगवदिच्छयैवास मारुतिः ॥ ३६१ ॥ देवानां हि नृजातानामल्पं व्यक्तं भवेद्बलम् ॥ इच्छया व्यक्ततां याति वायोरन्येषु तच्च न ॥ ३६२ ॥ नित्यं व्यक्ता गुणा विष्णोरिति शास्त्रस्य निर्णयः ॥ एवमन्येपि हि गुणा मानुषादिषु जन्मसु ॥ ३६३ ॥ ॥

अजगरोमांग्रहीष्यतीतिजानन्नेव भीमःइच्छयातंप्रापेतिपूर्वेणान्वयः ॥ ३५९ ॥ ३६० ॥ सर्वेषामित्युभयत्रसंबध्यते सुराणांमुनीनांचतपःस्थितमस्तीत्यर्थः। नहुषइतिशेषः । यद्यस्मात्तत्तस्मान्मारुतिःतत्तपःगृहीतुंइच्छयैववशगवत् नहुषवशंप्राप्तवदास ॥ ३६१ ॥ नन्वशक्तत्वात्तद्वशगोभूदितिकिन्नस्यादित्यतआह । देवानामिति । नृजातानां देवानांमूलरूपापेक्षया अल्पबलंभवेत्तत्रापिविशेषमाह । इच्छयेति । वायोरिच्छयाआदानतःमूलरूपस्थबलंप्राकट्यंयाति । अन्येषुवायोरन्येषुतदिच्छाव्यक्तत्वंनच ॥ ३६२ ॥ विष्णोर्नित्यं देशकालावतारेषु गुणाःबलज्ञानादयोगुणाःव्यक्ताइतिशास्त्रस्यनिर्णयः । एवंबलवत् अन्येगुणाःज्ञानादयःदेवानामित्युभयत्रसंबध्यते ॥ ६३३ ॥

मानुषादौमनुष्यादिजन्मस्वित्यर्थः । शक्येअपिबलायादानविषयेशक्तत्वेसत्यपि अव्यक्तताकृतेःबलादेर्व्यक्ततायाःअकरणात् तेषांदेवानांधर्मवृद्धिर्भवेत् । केशवश्चप्रीतो
भवति ॥ ३६४ ॥ यद्यस्मात्तत्तस्मात् तस्यभीमस्यमानुषेमनुष्यावतारप्रयुक्तेबलो वरात् ब्रह्मदत्तवरात् वारितवत् गृहीतवत्स्थितेसति दैवंमूलरूपसंबंधिबलं व्यक्तंकर्तुंसुश
क्तोपिमारुतिःव्यक्तंनचक्रे ॥३६५॥ आभिभूश्चनहुषकृतप्रश्नपरिहारविषये समर्थोपिप्रश्नान्नव्याजहारनव्याकरोत् कुतइत्यतआह । विद्योति । धर्मो न यतःअतः ॥३६६॥
आत्ममोक्षंकर्तुमितिशेषः ॥ ३६७ ॥ सर्वलोकानामक्षिगोचरसर्वलोकानांबलेनपूर्णोनहुषः । अयतंतमपिमोचयितुंप्रयत्नरहितं एनंभीमंचालनायापिचलनार्थमपिनाशक
त् शक्तोनबभूव । असौनहुषःभीमंवेष्टयित्वास्थितःसन् परंअन्यत्दंशनादिकंनाशकत् कर्तुमितिशेषः ॥ ३६८ ॥ इच्छन्नपियत्नंनचक्रे ॥ ३६९ ॥ यत्नाकरणेकारण

देवानां मानुषादौ तु शक्येप्यव्यक्तताकृतेः ॥ धर्मवृद्धिर्भवत्येषां प्रीतो भवति केशवः ॥३६४॥ तन्मानुषे बले तस्य वराद्वारितवत्स्थिते ॥ दैवं बलं सुशक्तोपि व्यक्तं चक्रे न मारुतिः ॥३६५ ॥ आत्ममोक्षाय तत्प्रश्नान्व्याजहार न चाभिभूः ॥ विद्योपजीवनं धर्मो विप्राणामपि नो यतः ॥ ३६६ ॥ किमुत क्षत्रियस्येति जानन्नपि वृकोदरः ॥ तत्प्रश्नपरिहारेण नात्ममोक्षं समैच्छत ॥ ३६७ ॥ अयतं तमपि ह्येनं चालनायापि नाशकत् ॥पूर्णोपि सर्वलोकानां बलेन नहुषस्तदा ॥ वेष्टयित्वैव तं भीमं स्थितोसौ नाशकत्परम् ॥३६८॥ मातृभ्रात्रादिषु स्नेहात्क्षिप्रमात्मविमोक्षणम् ॥ इच्छन्नपि न मोक्षाय यत्नं चक्रे वृकोदरः ॥३६९॥ सर्वदेवमुनींद्राणां तप आदातुमत्रगम् ॥ मात्रादिषु स्नेहवशान्न स्थातव्यमिहेत्यपि ॥३७०॥ मन्वानः कालतो भंगं स्वयमेवैष यास्यति ॥ आज्ञया वासुदेवस्य दार्ढ्याद्देहस्य मे तथा ॥ ३७१ ॥ स्रस्तांगे पतिते सर्पे यास्यामीति विचिंतयन् ॥ तस्थौ भीमो हरिं ध्यायन् स्वभावान्न तदिच्छया ॥ ॥ ३७२ ॥ तदैव ब्रह्मवचनात्पूर्वोक्तात्केशवाज्ञया ॥ बलं तपश्च सर्वस्य तत्स्थमायाद् वृकोदरम् ॥ ३७३ ॥ ॥

माह । सर्वेति । अत्रगंनहुषेवियमानंनस्थातव्यमितिमन्वानोपिविचारयन्नपि ॥ ३७० ॥ एषःसर्पःकालतःकालांतरेण किंचिद्व्यवधानेनेत्यर्थः । स्वयमेवभंगंमूर्छामि
त्यर्थः । यास्यति तथावासुदेवस्याज्ञया मेदेहस्यदार्ढ्यात्काठिन्यात् ॥ ३७१ ॥ स्रस्तांगेशिथिलांगे सर्पेपतितेसति । यास्यामीतिविचिंतयन् । भीमःस्वभावात्हरिं
ध्यायन्सन् तस्थौ नतदिच्छयाबंधमोक्षेच्छयाध्यानंनाकरोदित्यर्थः ॥ ३७२॥ पूर्वोक्ताद्ब्रह्मवचनात् केशवाज्ञयैव एवकारःसमुच्चये सर्वस्यअक्षिगोचरदेवादेःतत्स्थंनहु
षेस्थितंवृकोदरंभीमंआयात्प्राप ॥ ३७३ ॥ ॥ ॥ ॥ ॥

शनैःशनैःबलादिन्हासानुसारेणेत्यर्थः । स्रस्तभोगःशिथिलितांगः ॥ ३७४ ॥ चलन्मनाःचंचलांतःकरणः ॥ ३७५ ॥ तदूरुवेगात् तस्यभीमस्यऊर्वोःसंस्पर्शवेगात् पतितान्नगेंद्रान्वृक्षश्रेष्ठान्दृष्ट्वा तेनभीमपतितवृक्षसूचितेनपथाययौ । तत्रमार्गेसर्पावृतंभीमंदृष्ट्वा अन्वपृच्छत् नहुषमितिशेषः ॥ ३७६ ॥ सयुधिष्ठिरःकारणंशापादि कंनिवारणेकारणमितिशुश्राव । व्याकरोत् उक्तवानित्यर्थः । तदैवप्रश्नपरिहारकालएवसोप्यजगरोपिस्वर्गलोकमारुहत् ॥ ३७७ ॥ स्वपूर्वेस्वस्यपूर्वेआद्येस्वकुलवृद्धइ त्यर्थः । सःप्रश्नपरिहारत्वेनप्रसिद्धोधर्मराजःभीमश्चआयात् ॥ ३७८ ॥ अतिभक्ताआतिशयेनस्नेहयुक्ताइत्यर्थः । अस्यभीमस्यसर्वेभ्रातरःसर्वेमुनींद्राश्च भीमसेनग्रहेणनहु

पूरिते नहुषस्थेन तपसा च बलेन च ॥ भीमे स नहुषोथासीत्स्रस्तभोगः शनैः शनैः ॥ ३७४ ॥ गते भीमे निमि त्तानि दृष्ट्वा राजा युधिष्ठिरः ॥ पप्रच्छ क्व गतो भीम इति कृष्णां चलन्मनाः ॥ ३७५ ॥ यांतं मृगार्थं स निशम्य त स्यास्तदूरुवेगात्पतितान्नगेंद्रान् ॥ दृष्ट्वा पथा तेन ययौ स तत्र दृष्ट्वा च सर्पावृतमन्वपृच्छत् ॥ ३७६ ॥ स कारणं न हुषात्सर्वमेव शुश्राव तत्प्रश्नमशेषतश्च ॥ भ्रातृस्नेहाद् व्याकरोद्धर्मसूनुस्तदैव सोप्यारुहत्स्वर्गलोकम् ॥ ३७७ ॥ दिव्यांबरे कुंडलिनि स्वपूर्वे गते विमानेन स धर्मराजः ॥ भीमश्चायात्स्वाश्रमायैव सर्वं युधिष्ठिरः कथयामास तत्र ॥ ३७८ ॥ श्रुत्वा कृष्णा भ्रातरश्चास्य सर्वे सर्वे मुनींद्रा भीमसेनेतिभक्ताः ॥ व्रीडां ययुर्भीमसेनग्रहेण तथाब्रुव न्स्नेहतो भीमसेनम् ॥ ३७९ ॥ नैतादृशं साहसं तेनुरूपं शक्तोपि यत्स्वात्मविमोक्षणाय ॥ नैवाकरोयेत्त्वमतो नि जानां महद्दुःखं हृदये प्रार्पयस्त्वम् ॥ ३८० ॥ मैवं पुनः कार्यमिति ब्रुवंतः समाश्लिषन् सर्व एवैत्य भीमम् ॥ त तोहोभिः कैश्चिदापुः कुरूणां राष्ट्रं पार्था मुनिमुख्यैः समेताः ॥ ३८१ ॥ ॥ ॥

षकृतभीमरोधननिमित्तेन व्रीडांलज्जांययुः तथास्नेहतःअब्रुवन् ॥ ३७९ ॥ किमिति । एतादृशंसाहसं अकरणीयमित्यर्थः । तेनानुरूपंयोग्यंन स्वात्मनोमोक्षणाय शक्तोपियत्त्वंनैवाकरोःयद्यस्मादतःयत्नाकरणात् निजानांहृदयेमहद्दुःखप्रार्पयःसमर्पितवानासि ॥ ३८० ॥ एवंअनेनप्रकारेणसाहसंमाकार्यं त्वयानैवकार्यं ततःकुरुयोनि तःनहुषमोचनानंतरं कैश्चिदहोभिःकतिपयैर्दिनैः ॥ ३८१ ॥ ॥ ॥ ॥

ततः कुरुविषयप्राप्त्यनंतरं तैः पार्थैः समेतो युक्तः सन् सौहार्दस्य स्नेहस्य निमित्ताः सत्कथाश्चक्रे ॥ ३८२ ॥ योषिदग्र्ये योषितां मध्ये अग्र्ये श्रेष्ठे द्रौपदीसत्यां प्रतिधर्मानाहेति ग्रंथांतरवचनानां तात्पर्यं दर्शयन्नाह । परीक्षयंत्येत्यादिना । परीक्षयंत्या द्रौपदीमिति शेषः । सत्यया चोदिता स्त्रीणां के धर्माः तान्वदेति प्रेरिता प्राह ॥ ३८३ ॥ तत्र स्त्रीधर्मविषये सत्यां सत्यभामां निर्दोषा संवित् ज्ञानं यस्याः सा तथा तां निर्दोषसंविदं ज्ञात्वापि स्त्रीधर्मान्प्रोवाच एवकारेण सत्याशिक्षणं व्यावर्तयति ॥ ३८४ ॥ सा कृष्णा क्रीडार्थमेव सत्या समीरितं सत्यया उक्तं वचनं कुशलप्रश्नरूपाद्यन्यवचनं ज्ञात्वा वचनाभिप्रायं ज्ञात्वा तस्य सत्यावचनस्यानुसारीणि अनुकूलानि तत्प्रीत्यै सत्याप्रीणनार्थं अब्रवीत् ॥ ३८५ ॥ ततः धर्मकथनानंतरं कतिपयाहानि कतिपयदिनानि अत्र कुरुविषये निरुष्य स्थित्वा पांडवाननुमान्य संमानयित्वा ॥ ३८६ ॥ सकोटिकाश्यः काश्यां प्रभवः काश्यः नाम्ना को-

ततो मितौजा भगवानुपागमन्नारायणः सत्यभामासहायः ॥ संपूजितः पांडवैस्तैः समेतश्चक्रेऽथ सौहार्दनिमित्तसत्कथाः ॥ ३८२ ॥ कृष्णा च सत्या च परस्परं मुदा संभाषणं चक्रतुर्योषिदग्र्ये ॥ परीक्षयंत्या सत्यया सर्ववेत्र्या निर्दोषया चोदिता प्राह कृष्णा ॥३८३ ॥ स्त्रीधर्मानाखिलांस्तत्र सत्यां निर्दोषसंविदम् ॥ ज्ञात्वापि कृष्णा प्रोवाच लोकशिक्षार्थमेव तु ॥ ३८४ ॥ क्रीडार्थमेव वचनं ज्ञात्वा सत्यासमीरितम् ॥ तस्यानुसारवाक्यानि तत्प्रीत्या एव साब्रवीत् ॥३८५॥ ततः कतिपयाहानि निरुष्यात्र जनार्दनः ॥ ययौ सभार्यः स्वपुरीं पांडवाननुमान्य च ॥३८६॥ ततः कदाचिन्मृगयां गतेषु पार्थेषु राजा सैंधवो ह्याससाद ॥ सकोटिकाश्यः सबलश्च तेषां वराश्रमं सोऽत्र ददर्श कृष्णाम् ॥ ३८७ ॥ व्रजन्विवाहार्थमसौ निशाम्य कृष्णां कोटिं प्रेषयित्वैव काश्यम् ॥ आयाहि मामित्यवदत्स पापस्तया निरस्तो जगृहे करे च ॥ ३८८ ॥ ॥ ॥ ॥ ॥

टिः काश्यश्चासौ कोटिश्चेति कोटिकाश्यः तेन सह वर्तमानः सबलः ससैन्यः सैंधवो राजा सिंधुपतिः जयद्रथः तेषां पार्थानां वराश्रमं आससाद अत्राश्रमे ॥ ३८७ ॥ असौ जयद्रथः काश्येयं सुभगा स्त्री कंटकिते रण्ये एकाकिनी तिष्ठति तां विजानीहीति कोटिकाश्यं प्रेषयित्वा कृष्णेति तां विदितवतः कोटिकाश्यस्य वचनात् तां कृष्णां निशाम्य कृष्णेति ज्ञात्वा स्वयमेव कृष्णासमीपं गत्वा मां प्रति आयाहीति कृष्णां अवदत् । विस्तरेणायमेवार्थोऽरण्यपर्वणि दृश्यते । अत एव कोटिकाश्यमुखेनासौ वीरो मां मायाहीति अवददित्यादिव्याख्यानमनादरणीयम् । तया कृष्णया नायास्यामीत्युक्त्या निराकृतः सुपापो जयद्रथः करे जगृहे ॥ ३८८ ॥ ॥ ॥ ॥

तयाकृष्णयाधूतःस्वहस्तकर्षणेनकंपितःसन्निपपात ससंज्ञगतमूर्च्छःसन्पुनःअभ्यगमत् अतएवविलज्जः । कृष्णाअसहायत्वतःसहायरहितत्वात्साग्निःकुंडस्थाग्निनासहि तःमामांअनुयाहिइतिधौम्यायोक्त्वा ॥ ३८९ ॥ सैंधवस्ययानंसमारुहत् किंकृत्वा सुखंनयासीतितंसैंधवंईरयित्वाउक्त्वा निमित्तानिअशुभशंसीनिचिन्हानि निशाम्यदृष्ट्वा ॥ ३९० ॥ अनुयानंपृष्ठतोनुगमनंचक्रुः हेभीमसेनेतिआक्रोशमानं आह्वयंतरुदंतमितिवा क्रुशआह्वानेरोदनेचेतिधातुः धौम्यंदृष्ट्वा तस्यधौम्यस्यअग्रेपुरतः ॥ ३९१ ॥ रथात्अवतरत्अवततार ॥ ३९२ ॥ यःकोटिकाश्यःअग्रेजयद्रथेनकृष्णांद्रष्टुंतांप्रतिप्रेषितःकृष्णांदृष्ट्वा पुनर्जयद्रथंप्रत्यागत्य कृष्णांगृहीत्वातयासमेतःसिंधुदेशान्प्रतिया

तया धूतो निपपाताशु भूमौ पुनः ससंज्ञोभ्यगमद्विलज्जः ॥ ततोसहायत्वत एव कृष्णा धौम्यायोक्त्वा साग्निर न्वेहि मेति ॥ ३८९ ॥ समारुहत्सैंधवस्याशु यानं सुखं न यासीति तमीरयित्वा ॥ तदा निमित्तानि निशाम्य पार्थाः समाययुस्त्वरयैवाश्रमाय ॥ ३९० ॥ श्रुत्वा दासीवचनात्सर्वमेव चक्रुः क्षिप्रं सैंधवस्यानुयानम् ॥ आक्रोशमानं भीमसेनेति धौम्यं दृष्ट्वा तस्याग्रे सैंधवं चातिपापम् ॥ ३९१ ॥ चक्रुर्नादान् सिंहवत्पांडुपुत्राः दृष्ट्वा कृष्णा चावतरद्रथात्तदा ॥ धौम्येन सार्धं सा ययौ स्वाश्रमाय सैन्यं पार्थास्तस्य निजघ्नुरोजसा ॥ ३९२ ॥ अग्रे कृष्णां योवदत्सिंधुराजं याहीति तं कोटिकाश्यं सुपापम् ॥ छित्वा शिरो मृत्यवे भीमसेनो निवेदयामास तमः स चागात् ॥ ३९३ ॥ हत्वा सेनामखिलां सैंधवस्य भीमार्जुनौ सयमं धर्मराजम् ॥ विसृज्य धावं तमथानुजग्मतुर्जयद्रथं विरथं फल्गुनोकः ॥ ३९४ ॥ पद्भ्यां धावंतं भीमसेनो निगृह्य दत्त्वा प्रहारांश्च भृशं तमार्तम् ॥ आदायाधा द्रौपदी पादयोश्च तं मोचयामास च धर्मसूनुः ॥ ३९५ ॥ ॥ ॥ ॥

हीत्यवदत्तंकोटिकाश्यंभीमसेनोमृत्यवेनिवेदयामास । किंकृत्वाशिरश्छित्वा तदुक्तमरण्यपर्वणि । सर्वेषांचैवपार्थानांप्रियाबहुमतासती । तयासमेत्यसौवीरसुवीराभिमुखोव्रजेति॥३९३॥सयमंयमाभ्यांसहितं धर्मराजंविसृज्यविहाय अकःअकरोत् कृधातोर्गुणेकृतेअडागमेचकृतेइतश्चेतिइकारलोपेचाकर्इतिस्थितेखरवसानयोर्विसर्जनीयइतिरेफस्यविसर्जनीयेकृतेअकइतिभवति ॥३९४॥ निगृह्यगृहीत्वा प्रहारान्पादप्रहारान् । दत्वा आर्तंपीडितंजयद्रथंआदायगृहीत्वेत्यर्थः द्रौपदीपादयोःअधःअधात्॥३९५॥

अहमपिद्रौपद्या:दासएवेतितेनैवजयद्रथेनैववाक्येउक्तेसति अमुंचत्मुमोच । व्रीडित:लज्जित:अवाग्वदन:अध:कृतवदन:सजयद्रथ: ॥ ३९६ ॥ बव्ह्र:बह्वी:सप्तसुप्रथमे ति सूत्रात्प्रथमाद्वितीयार्थे सुपांसुलुगित्येनद्वितीयायालोपेनप्रथमावा । अथवा बव्ह्र:बव्हीरित्यत्रछांदसत्वाद्वव्ह्रइत्युक्तं बहुप्रकारा:विचित्रा:आश्चर्यकरा:भाषात्रयसम न्विता:या: कथा:रामकथास्ताअकथयत् ॥ ३९७ ॥ भाषात्रयसमन्विता:कथा:किमर्थमवददित्यतआह । लोकेति । तत्रदर्शनभाषालोकदर्शनभाषापरदर्शनभाषेतित्रिवि धा लोकदर्शनभाषेत्यनेकधा लोकदर्शनंलोकदर्शनभाषामाश्रित्य देवा:मुनयश्चकथाब्रूयु: तथापितत्रतासुकथासुशिक्षाग्राह्या अर्थ:कथंचननग्राह्य: यथा कृष्णोववंदेपितरं भक्त्यापूज्यतमंश्चजइत्यत्रपुत्रेणभक्त्यापितृवंदनंकर्तव्यमित्यादिरूपाशिक्षाग्राह्या कृष्णस्यपूज्यतम:कश्चनपितावर्ततइत्यादिरूपोर्थस्तुनग्राह्य: अयमेवार्थोनग्राह्यइतिसू चयितुंमूलेप्यजइत्युक्तं तथाअन्यदप्युदाहरणं । कृष्णस्यदेहंत्वदहदर्जुन:पतितंभुवीत्यत्र मृतदेहस्यअग्निसंस्कार:कर्तव्यइत्यादिरूपाशिक्षाग्राह्या कृष्णदेहपतनादिरूपो

दासो द्रौपद्या अहमित्येव वाक्ये तेनैवोक्ते भीमसेनोप्यमुंचत् ॥ स व्रीडितोवाग्वदनो ययौ वनं पार्थाश्च तत्रो षुरतिप्रमोदिनः ॥ ३९६ ॥ मार्कंडेयस्तदागत्य तेषामकथयत्कथाः ॥ बव्ह्रश्चैव विचित्राश्च भाषात्रयसमान्वि ताः ॥३९७॥ लोकदर्शनमाश्रित्य देवाश्च मुनयस्तदा ॥ ब्रूयुः कथास्तत्र शिक्षा ग्राह्या नार्थः कथंचन ॥३९८॥ अर्थः समाधिभाषासु ग्राह्यः सर्वोप्यसंशयम् ॥ परदर्शनभाषासु ज्ञेयं तद्दर्शनं तथा ॥ ३९९ ॥ ग्राह्यो नार्थो वै दिकं तु दर्शनं ग्राह्यमेव हि ॥ अन्यार्थो गुह्यभाषासु ग्राह्य एवं विनिर्णयः ॥ ४०० ॥ ॥ ॥

र्थस्तुनग्राह्य:॥३९८॥उक्तोयोमहिमाविष्णो:सतूक्तोहिसमाधिनेतिवचनात् समाधिभाषासुसमाधिभाषावतीषुकथासु अष्टादशपुराणानांकर्तासत्यवतीसुतइत्यादिविष्णुमहि माप्रतिपादकत्वेनउक्तेतिशेष:। सर्वोप्यर्थ:असंशयंयथास्यात्तथाग्राह्य:। दर्शनादिभाषाणांत्रिविधत्वाद्भाषास्वितिबहुवचनं । परदर्शनभाषासु शिवस्कांदसूर्यविनायकशक्तीनां प्रत्येकंसर्वोत्तमत्वप्रतिपादकत्वेन प्रवृत्तासुकथासु प्रवृत्तास्वितिवाक्यशेष:। तद्दर्शनंतेषांशिवादीनांदर्शनंसंप्रदायमित्यर्थ:। तथाताद्दशमितिज्ञेयं । शिवादिसर्वोत्तमत्वप्रतिपाद नं शैवादिसंप्रदायस्वरूपमितिभाव: ॥३९९॥ अर्थ:शिवादिसर्वोत्तमत्वप्रतिपादकोर्थ: । नग्राह्य:शैवादिदर्शनानांअवैदिकमूलकत्वादर्थोनग्राह्यइतिभाव: । ननु दर्शनोक्त: सर्वोप्यर्थोनग्राह्य:किमित्याशंक्यनेत्याह । वैदिकमिति । विष्णु:सर्वोत्तमइत्याद्यर्थप्रतिपादकंवैदिकंवेदार्थप्रतिपादकंदर्शनंदर्शनभाषोक्तंग्राह्यमेव हीतिश्रुत्यादौप्रसिद्धि:गुह्य भाषासुगुह्यभाषयाप्रवृत्तासुकथासु अन्यार्थ:प्रतीयमानार्थादन्योर्थोग्राह्य:यथा उच्छिष्टंशिवनिर्माल्यंवमनंमृतकर्पटं । काकविष्ठासमायुक्तंपंचपूतानिभारतइत्यत्रायमर्थ:।

उच्छिष्टंगोवत्सपीतप्रतिमुक्तस्तनक्षीरं । शिवनिर्माल्यंगंगोदकं । वमनंमाक्षिकंमधु । मृतकर्पटंकौशेयवासः । काकविष्ठासमायुक्तं अश्वत्थवटादिकंगृह्यते । एवमन्यार्थोह्निः एवंउक्तप्रकारेणविनिर्णयः। शास्त्रेष्वितिशेषः॥४००॥ प्रसंगप्राप्तभावत्रयनिर्णयमुक्त्वा प्रकृतमनुसरति । जयद्रथइति पंचशिखीकृतः पंचचूडावान्कृतः अनेनवपनंसूचितं । पांडवरोधनंवव्रे वरमितिशेषः । अर्जुनस्यतपसाशिवःतुष्टः हियतः अतः अर्जुनादृते पांडवरोधनंददावितिवाक्यशेषः ॥ ४०१ ॥ दुर्योधनःराजसूयस्यसंस्पर्धया पौंडरीकाख्यंयज्ञंचक्रे अपितथापिस्पर्धयाकृतोपिअसौयज्ञःतत्कलार्हो न राजसूयस्यषोडशींकलांनार्हतीत्यर्थः ॥ ४०२ ॥ दुःशासनःपांडवानांअवमानायमानभंगायवैभवप्रदर्शनेनेतिशेषः । तत्रयज्ञंप्रतिआगच्छतेति पांडवान्प्रतीतिवाक्यशेषः । प्रेषयामास भीमस्तंदूतंस्वगम्यंरणयज्ञंयुद्धाख्यमखं अवदत् ॥ ४०२ ॥ कैश्चनदिनैःकतिपयदिनेषु याते

जयद्रथस्तु भीमेन यदा पंचशिखीकृतः ॥ तपसा शिवमाराध्य वव्रे पांडवरोधनम् ॥ ऋतेर्जुनादर्जुनस्य तुष्टो हि तपसा शिवः ॥ ४०१ ॥ वने वसत्स्वेव च पांडवेषु चक्रे यज्ञं पौंडरीकाख्यमेव ॥ संस्पर्धया राजसूयस्य राजा दुर्योधनो नाप्यसौ तत्कलार्हः ॥ ४०२ ॥ दुर्योधनस्याज्ञया पांडवानां दुःशासनः प्रेषयामास दूतम् ॥ आगच्छतेत्येवमानाय तं तु भीमोवादीद्रणयज्ञं स्वगम्यम् ॥ ४०३ ॥ ततो दिनैः कैश्च न धार्तराष्ट्राः सकर्णगांधारनृपाः कुमंत्रतः ॥ सभार्यकाः पांडवान् द्रौपदीं च महैश्वर्यं दर्शयित्वावमंतुम् ॥ ४०४ ॥ ते स्यंदनैः कांचनरत्नचित्रैः महागजैस्तुरगैः पत्तिभिश्च ॥ स्वलंकृताश्चित्रमाल्यांबराश्च विनिर्ययुर्द्वैतवनाय शीघ्रम् ॥ ४०५ ॥ गवां दृष्टिच्छद्मना निर्गतांस्तान् ज्ञात्वा शक्रस्तेजसो भंगकामः ॥ तत्सामर्थ्यं वरमस्मै प्रदाय तद्बंधनायादिशच्चित्रसेनम् ॥४०६॥

षुसत्स्वित्यर्थः । गांधारनृपेणशकुनिनासहिताःकुमंत्रतः कुत्सितविचारेणमहदैश्वर्यंदर्शयित्वा पांडवान्द्रौपदींअवमंतुंतिरस्कर्तुमित्यर्थः ॥ ४०४ ॥ कांचनरत्नैःकारितत्वाद्विचित्रैःस्यंदनैःपत्तिभिःपदातिभिःसहेतिशेषः । चित्राणिविचित्राणिमाल्यानि अंबराणिवस्त्राणियेषांतेतथा अतएवस्वलंकृताःसंतः तेधार्तराष्ट्राःद्वैतवनायकर्मणिचतुर्थी । पांडवैरधिष्ठितंद्वैतवनंप्रतिनिर्ययुः । जग्मुरितिश्लोकद्वयस्यान्वयः ॥ ४०५ ॥ गवांदृष्टिच्छद्मनाघोषस्थगोदर्शनव्याजेननिर्गतांस्तान्शक्रःज्ञात्वा तेजसःसामर्थ्यस्यदुर्योधनादीनामितिशेषः । भंगकामःनाशेच्छुःतत्सामर्थ्यंदुर्योधनादीनांतेजोभंगकरणसामर्थ्यरूपंवरंअस्मैचित्रसेनायप्रदाय तद्बंधनायतेषांदुर्योधनादीनांबंधनाय चित्रसेनं आदिशत् ॥ ४०६ ॥ ॥ ॥ ॥ ॥ ॥

षष्टिसाहस्रकोटिसंख्याकैःयूथपैःसेनानायकैःगंधर्वमुख्यैःसंवृतःयुक्तः सचित्रसेनःयस्मिन्सरसिधार्तराष्ट्रःस्नातुंवांछति तत्सरःतदेवसरोवरंअगात् । तदाज्ञयातस्यदुर्योधनस्याज्ञयापुरुषाःदुर्योधनदूताइत्यर्थः । तान्गंधर्वान्ऊचुः ॥ ४०७ ॥ किमिति । तस्यदुर्योधनस्यआज्ञांधारयंतःसंतः शिरसीतिशेषः तीर्थात्तीर्थभूतादस्मात्सरसः निःसरध्वंनिर्गच्छध्वं । इत्युक्ताःगंधर्वाःतान्दूतान् जहसुः ॥ ४०८ ॥ ऊचुश्चकिमिति । वयंयःत्रिलोकानांपतिःशक्रदेवःतदाज्ञांतस्यशक्रस्याज्ञांमानयामः । मानुषाणांचक्रवर्तिनामपि भरतादीनामपि आज्ञांनमानयामः । अल्पसारस्यअल्पशक्तेःसुयोधनस्य आज्ञांनमानयामइतिकिमुवक्तव्यम् ॥ ४०९ ॥ जघानताडयामास तस्यसुयोधनस्यसोदराःएकोनशतभ्रातरःतेचतेपिगंधर्वाः ॥ ४१० ॥ तेषांगंधर्वाणांपुरां भिदेःकुरित्यनुवृत्तौ पृथिदिव्यधिगृधिधृपिदृषिभ्यइतिभिदेःकुप्रत्ययः । तस्यछंदस्युभयथेति

स षष्टिसाहस्रककोटियूथपैर्गंधर्वमुख्यैः संवृतोगात्सरस्तत् ॥ यस्मिन्स्नातुं वांछति धार्तराष्ट्रस्तदाज्ञया पुरुषास्तानथोचुः ॥ ४०७ ॥ स्नातुं समायास्यति धार्तराष्ट्रो राजेश्वरो निःसरध्वं तदस्मात् ॥ तीर्थादाज्ञां धारयंतश्च तस्येत्युक्त्वा गंधर्वा जहसुस्तानथोच्चैः ॥ ४०८ ॥ ऊचुर्वयं मानयामस्तदाज्ञां त्रिलोकानां यः पतिः शक्रदेवः ॥ न मानुषाणामपि चक्रवर्तिनां किंत्वल्पसारस्य सुयोधनस्य ॥४०९॥ इतीरिते कुपितो धार्तराष्ट्रो जघान गंधर्ववराञ्छरौघैः जघ्नुः सकर्णा अपि तस्य सोदरा जघ्नुश्च ते धार्तराष्ट्रस्य सेनाम् ॥४१०॥ मुहूर्तमासीत्सममेव युद्धं तेषां तदा धार्तराष्ट्रस्य चैव ॥ पुरांभिदोवैरतो मायया च गंधर्ववीरा ववृधुस्ततःस्म ॥ ४११ ॥ तेजोभंगं तत्र सुयोधनस्य पार्थोर्थमत्र प्रविधातुमेव ॥ बलं ददावब्जजः केशवश्च गंधर्वाणां तेभ्ययुर्धार्तराष्ट्रान् ॥ ४१२ ॥ ॥

सार्वधातुकसंज्ञायां रुधादिभ्यःश्नम्श्नसोरल्लोपः अनुस्वारस्यययिपरसवर्णःअचःपरस्मिन्पूर्वविधावितिप्राप्तस्यस्थानिवद्भावस्यनपदांतेत्यादिनानिषेधः पुरांशंबरपुराणांभिनत्तीतिभिदुःभेत्ता तस्यपुरंदरस्यवरतःमाययाववृधुः । अभिवृद्धाअभवन् ॥ ४११ ॥ गंधर्वाणांअभिवृद्धौनिमित्तांतरमाह । तेजइति । तत्रतदायुद्धकाले अत्रैवअस्मिन्नेवयुद्धेसुयोधनस्य तेजोभंगंप्रविधातुंप्रकर्षेणकर्तुं अब्जजःगंधर्वाणांबलंददौ केशवश्चददावित्यर्थः । एवकारेणअस्मिन्नेवयुद्धे बलंददौअन्यत्रनेत्यर्थः । तेगंधर्वाःधार्तराष्ट्रानभ्ययुः । अभ्यगमन् ॥ ४१२ ॥ ॥ ॥ ॥ ॥

सचित्रसेनःप्रथमंआदौकर्णमेवयुयोध पार्थस्पर्धयापांडवानांऐश्वर्यसंदर्शनेच्छारूपस्पर्धया तेनचित्ररथेनयुध्यन्कर्णःरामस्यवचनात् स्वधर्मानस्तुयासित्वंपराभूतामितिराम वचनात् । नाशक्नोत्शक्तोनबभूव योद्धुमितिशेषः ॥ ४१३ ॥ भग्नयानःविनाशितरथःसकर्णः विकर्णयानंविकर्णःधृतराष्ट्रसूनुः तस्ययानंरथंआस्थायआरुह्य तस्ययानस्य वाजिनःनियम्यअश्वताडनादिनाप्रेरयित्वा तेनविकर्णेनसहपराद्रवत् ॥ ४१४ ॥ एतेनचित्रसेनेनयुध्यन्सन् सुयोधनःबहुभिरन्यैर्गंधर्वैर्माययैवरथेभग्नेसति भूमितलेस्थितः सन् चित्रसेनेनसंख्ये युद्धेगृहीतःआसीत् ॥ ४१५ ॥ शक्रवराद्विष्णोराज्ञयाचअभिवृद्धेसति चित्रसेनस्यबलइतिशेषः । सधार्तराष्ट्रःमहाबलोपिचित्रसेनेनयदाधृतःगृही

स चित्रसेनः प्रथमं कर्णमेव युयोध्य पार्थस्पर्धया तेन युध्यन्॥ कर्णो नाशक्नोद्वचनाद्भार्गवस्य रामस्य नित्यामितष ड्गुणस्य ॥४१३॥ स भग्नयानश्च विकर्णयानमास्थाय तस्यैव नियम्य वाजिनः ॥ पराद्रवत्तेन सहैव शीघ्रं दुर्यो धनश्चित्रसेनं युयोध ॥ ४१४ ॥ मुहूर्तमेतेन समं स युध्यन्नन्यैर्गंधर्वैर्बहुभिर्माययैव ॥ भग्ने रथे भूमितले स्थितः सन् गृहीत आसीच्चित्रसेनेन संख्ये ॥ ४१५ ॥ महाबलो धार्तराष्ट्रोपि शक्रवराद्विष्णोराज्ञया चाभिवृद्धे ॥ स चि त्रसेनेन धृतस्तदासीद्बद्ध : पाशैर्वैद्युतैरिंद्रदत्तैः ॥ ४१६ ॥ तस्यानुजाः शकुनी राजभार्याः सर्वे बद्धाः शक्रदूतैः प्र णीताः ॥ आदाय तानंबरे संप्रयातेष्वरूरुवन्पांडवान्मंत्रिणोस्य ॥ ४१७ ॥ समीपमागत्य पृथासुतानां पराभूतं वः कुलं शक्रभृत्यैः ॥ धृतः सभार्यः सानुजो धार्तराष्ट्रस्तं मोचयध्वं भ्रातरं भारताग्र्याः ॥ ४१८ ॥ ॥

तः तदाइंद्रदत्तैःवैद्युतैःविद्युद्देवताभिमानकैर्बद्धःआसीत् ॥ ४१६ ॥ शक्रदूतैर्गंधर्वैः तस्यदुर्योधनस्यसर्वेअनुजाःशकुनिःराजभार्याःदुर्योधनादीनांभार्याःप्रणीताःप्रकर्षे णनीताइत्यर्थः । स्वलोकंप्रतीतिशेषः । तान्धृतराष्ट्रादीन्आदायअंबरेगंधर्वेषुयातेषुसत्सु अस्यदुर्योधनस्यमंत्रिणः पृथासुतानांसमीपमागत्यउपेत्य पांडवान्प्रतिअरूरु वन् विचुक्रुशुः ॥ ४१७ ॥ किमिति । पराभूतंपराजितंहेभारताग्र्याः भरतकुलेश्रेष्ठाइति पांडवान्प्रतिसंबोधनं । तंभ्रातरंमोचयध्वमित्यरूरुवन्निति पूर्वेणान्वयः ४१८

इत्युक्तेसतिहेराजन् अथविमर्दःयुद्धंयादृशःयन्निमित्तंतन्निमित्तंजाने । तदेवविवृणोति । ऐश्वर्यमिति । नःतेजसः वज्रबाहुःइंद्रःतेषांदुर्योधनादीनांमंत्रितंविचारितंविज्ञायत द्बंधनादिकंचक्रे । अत्रपराजयविषयेनःकार्यहानिर्न । विरराम तूष्णींबभूव ॥ ४१९ ॥ ४२० ॥ एकाहयज्ञे एकदिनेसमाप्येयज्ञेअमुंचतांअमोचयताम् ॥ ४२१ ॥ वास वेनइंद्रेणउक्तंबंधनादिमातेजोभंगंकुर्वित्युक्तं धार्तराष्ट्रस्यकुमंत्रितंपार्थस्यभीमस्यचाहोवाच । धृतराष्ट्रात्मजः तच्चित्रसेनोक्तं सुव्रीडितःसुतरांलज्जितः ॥४२२॥ अभियां तंधर्मराजं सर्वेभीमादिचत्वारः प्रापुः । सराजाचित्रसेनंसंपूज्यउत्सृज्य गमयित्वादुर्योधनमूचे । किमिति । हेगांधारेगांधारीसूनोपुनःईदृक्स्वाशक्यमित्यर्थः । कार्यंन

इत्युक्त ऊचे भीमसेनोग्रजं स्वं जाने राजन् यादृशोयं विमर्दः ॥ ऐश्वर्यं स्वं दर्शयन्नः समागात् दुर्योधनस्तेजसो भंगमिच्छन् ॥ ४१९ ॥ विज्ञाय तेषां मंत्रितं वज्रबाहुरेतच्चक्रे नात्र नः कार्यहानिः ॥ दिव्यज्ञानं स्वात्मनो दर्शयन्स एतावदुक्त्वा विरराम भीमः ॥ ४२० ॥ एकाहयज्ञे दीक्षितेनैव राज्ञा संप्रेषितो भीमसेनोर्जुनश्च ॥ समाद्रेयौ चित्रसे नं रणे तौ विजित्य दुर्योधनमाश्वमुंचताम् ॥ ४२१ ॥ स चित्रसेनो वासवोक्तं च सर्वं कुमंत्रितं धार्तराष्ट्रस्य चाह॥ पार्थस्य भीमस्य च तन्निशम्य सुव्रीडितो धृतराष्ट्रात्मजोभूत् ॥ ४२२ ॥ समाप्य यज्ञं च ततोभियांतं सर्वे प्रापु र्धर्मराजं स चाशु ॥ संपूज्य तूत्सृज्य च चित्रसेनमुचे गांधारे न पुनः कार्यमीदृक् ॥४२३ ॥ स पांडवैर्मोचितः सानुगश्च सभार्यकः किंचिदतोपगम्य ॥ संमेलनायोपविष्टश्च तत्र सुव्रीडितः सूतपुत्रं ददर्श॥४२४॥ स चाह दिष्ट्या जयसि राजन्निति सुयोधनम् ॥ व्रीडितो नैव तं चोक्त्वा यथावृत्तं सुयोधनः ॥ उक्त्वा प्रायोपवेशं च चक्रे तत्र सुदुःखितः ॥ ४२५ ॥ ॥ ॥ ॥ ॥ ॥

कर्तव्यंनकुर्वित्यर्थः ॥ ४२३ ॥ अतःद्वैतवनात्किंचिन्मार्गंअपगम्यगत्वा तत्रमार्गेसुव्रीडितःसन् संमेलनायविद्रावितस्वसेनायाःमेलनार्थं उपविष्टोदुर्योधनःसूतपुत्रंददर्श ॥ ४२४ ॥ सकर्णःआह किमिति । हेराजन्त्वंदिष्ट्यादैवाज्जयसिजयंप्राप्तोसीतिसुयोधनमाहेतिसंबंधः । व्रीडितःसुयोधनःनेतिजयोनाभूदितितंकर्णंउक्त्वा यथावृत्तंबंध नमोचनादिकंवृत्तंयथातथोक्त्वा तत्रपराभवविषयेसुदुःखितःसुदुःखितःसन् प्रायोपवेशंउपवासंचक्रे ॥ ४२५ ॥ ॥ ॥ ॥

देविनाद्यूतज्ञेनेत्यर्थः । सौबलेनशकुनिनाअन्यैः अनुजादिभिःयाचमानोपिभोजनंकर्तुं पुरंप्रतिगंतुंचेतिवाक्यशेषः । प्रार्थितोपिनैवउत्तस्थौ ॥ ४२६ ॥ असुरैःमंत्रयित्वाकिंकर्तव्यमितिविचारंकृत्वा होमकर्मणिकृत्याभूताविशेषः । निर्मिताउत्पादितेत्यर्थः । कस्मिन्सतिस्वपक्षेअसुरपक्षे प्रविषीदतिखिन्नेसति ॥ ४२७ ॥ मंत्रिषुसुयोधनमंत्रिषु ॥ ४२८ ॥ किमितिसंबोधयामासुरित्यतआह । त्वमिति । अस्माभिःतपसाप्रतोषिताच्छंकरात्त्वंसृष्टः अतएवदिव्यःअलौकिकःपुरुषःवीरःआरब्धसमाप्तिकरः

कर्णदुःशासनाभ्यां च सौबलेन च देविना ॥ अन्यैश्च याचमानोपि नैवोत्तस्थौ सुयोधनः ॥ ४२६ ॥ ततो निशायां प्राप्तायां स्वपक्षे प्रविषीदति ॥ मंत्रयित्वासुरैः कृत्या निर्मिता होमकर्मणि ॥ ४२७ ॥ शुक्रेणोत्पादिता कृत्या सा प्रसुप्तेषु मंत्रिषु ॥ धार्तराष्ट्रं समादाय ययौ पातालमाशु च ॥ अथ संबोधयामासुर्दैत्या दुर्योधनं नृपम् ॥४२८॥ त्वं दिव्यः पुरुषो वीरः सृष्टोस्माभिः प्रतोषितात् ॥ तपसा शंकराद्वज्रकायोऽवध्यश्च सर्वदा ॥ ४२९ ॥ अस्माकं पक्षभूतस्त्वं देवानां चैव पांडवाः ॥ ४३० ॥ इदानीं सर्वदेवानां वरात्त्वं विजितो रणे ॥ वयं तथा करिष्यामो यथा जेष्यसि पांडवान् ॥ ४३१ ॥ कृष्णेन निहतश्चैव नरकः कर्णमाश्रितः ॥ स च कृष्णार्जुनाभावं करिष्यति न संशयः ॥ ४३२ ॥ भीष्मादींश्च वयं सर्वानाविशाम जयाय ते ॥ तपसा वर्धयिष्यामस्त्वां कर्णादींश्च सर्वशः ॥ ४३३ ॥ तस्माद्गत्वा पालयस्व राज्यं राजन्नपेतभीः ॥ इदं कस्यापि नाख्येयं सुगुप्तं भूतिवर्धनम् ॥ ४३४ ॥

वज्रकायः सर्वदाअवध्यः ॥ ४२९ ॥ ४३० ॥ इदानीमद्यविजितःपराजितोसि जेष्यसित्वमितिशेषः ॥ ४३१ ॥ सचनरकाविष्टःकर्णःअभावंनाशम् ॥ ४३२ ॥ तेतवतपसातपश्चरणेनेत्यर्थः । सर्वशःसर्वान्वर्धयिष्यामः बलेनेतिशेषः । तपःकृत्वाबलपूर्तिंकरिष्यामइतिभावः ॥ ४३३ ॥ तस्मात्कारणात् अपेतभीःगतभयःसन् स्वराष्ट्रंप्रतिगत्वापालयप्रजाइतिशेषः । इदंअस्माभिरुक्तं कस्यापिपुरुषस्यनाख्येयंनवक्तव्यं । कुतःसुगुप्तंअतिगोप्यंयतः पुनःकथंभूतं भूतिवर्धनंश्रेयोवृद्धिकरम् ॥ ४३४ ॥

इत्युक्त्वाकृत्ययाभूयःस्वस्थानेपूर्वस्तुतस्थले नृपःसुयोधनःस्थापितः सदुर्योधनःउमयानिर्मितंसृष्टं आत्मार्धंशरीरार्धभागं उत्तरंउत्तरशरीरार्धभागं हरनिर्मितंज्ञात्वैव अवध्य तांचैवस्वस्यावध्यतां ज्ञात्वैव राज्येराज्यकारणविषये बुद्धिंनिश्चितबुद्धिंचकार । तेषुतत्रस्थस्वकीयेषुमध्ये ॥ ४३५ ॥ ४३६ ॥ हेपरंतपवैरितापकरदुर्योधन मोचितोसियस्मात् ॥ ४३७ ॥ तेनकारणेनअधिकंयथास्यात्तथामान्यःपूज्योसि । यद्भृत्याःयस्यदुर्योधनस्यभृत्याःपार्थाःतादृशाएव गंधर्वजयनशीलाइत्यर्थः । त्वंजयीतिकिमुवक्तव्यं हेराजशार्दूलराजसिंह तत्तस्मादुत्तिष्ठगंतुमितिशेषः । स्थिरोभवस्थिरबुद्धिर्भव ॥ ४३८ ॥ तेतवअर्जुनमाहात्म्ये अर्जुनस्यशस्त्रास्त्रबलमाहात्म्ये याशंकासाव्येतुगच्छतु ।

इत्युक्त्वा कृत्यया भूयः स्वस्थाने स्थापितो नृपः ॥ उमया निर्मितात्मार्धमुत्तरं हरनिर्मितम् ॥ ४३५ ॥ ज्ञात्वैवावध्यतां चैव राज्ये बुद्धिं चकार सः ॥ नोवाच कस्यचित्तेषु स्वानुभूतं सुयोधनः ॥ ४३६ ॥ प्रभातायां तु शर्वर्यां पुनः कर्णोब्रवीद्वचः ॥ भृत्यैस्तवैव पार्थैर्यन्मोचितोसि परंतप ॥४३७॥ तेन मान्योधिकं लोके यद्भृत्या एव तादृशाः ॥ किमु त्वं राजशार्दूल तदुत्तिष्ठ स्थिरो भव ॥४३८॥ या च तेर्जुनमाहात्म्ये शंका सा व्येतु मे शृणु ॥ यावन्नैवार्जुनं हन्यां पादौ प्रक्षालये स्वयम् ॥ ४३९ ॥ इत्युक्तोवरजैश्चैव सर्वैः शकुनिना तथा ॥ याचितो रथमारुह्य ययौ नागपुरं द्रुतम् ॥ ४४० ॥ सकुंडलं सकवचं अवध्यं सूर्यनंदनम् ॥ ज्ञात्वेंद्र उभयं तस्मादैच्छदादातुमुत्तमम् ॥४४१॥ तद्विज्ञाय रविः कर्णं स्वप्न उक्त्वा न्यवारयत् ॥ सर्वथा दास्य इत्युक्ते प्राहादेयं वरायुधम् ॥४४२॥

मेसकाशादन्यद्वक्ष्यमाणंशृणु । तत्किमित्यतआह । यावदिति । तेतावत्स्वयंपादौप्रक्षालयेनान्येनेतिशेषः ॥ ४३९ ॥ सर्वैर्याचितः ॥ ४४० ॥ इंद्रःसकुंडलंसहजकुंडलाभ्यांसहितं सकवचंकवचेनसहितंसूर्यनंदनंकर्णंअवध्यंज्ञात्वा तस्मात्कर्णात् उत्तमंसहजत्वादुत्तमं । उभयंकुंडलंजात्येकं कुंडलद्वितयंकवचमित्युभयंआदातुंअंगीकर्तुमैच्छत् ॥ ४४१ ॥ तदिंद्रवांछितंविज्ञायरविःस्वप्नेकर्णंप्रत्युक्त्वा इंद्रःकुंडलकवचानियाचयिष्यतीतिशेषः तदुभयंमादेहीतिन्यवारयत् । सर्वथाकुंडलानिदास्येइतिकर्णेनउक्तेसति इंद्राद्वरायुधंआदेयंग्राह्यमित्यर्थः । इतिरविःप्राह ॥ ४४२ ॥ ॥ ॥ ॥ ॥

द्विजरूपिणंइंद्रंज्ञात्वाअमोघांशक्तिंआदायस्वीकृत्य इंद्रादितिशेषः । कवचकुंडलेस्वदेहादुत्कृत्यनिष्कास्य शचीपतेःददौ कर्णइतिशेषः ॥ ४४३ ॥ सइंद्रःअर्जुनादृते एक मेववधिष्यसीतिउक्त्वाशक्तिंदत्त्वा कवचकुंडलैःसार्धंययावित्यन्वयः अर्जुनादृतेइतिस्वरूपकीर्तनं एकमेववधिष्यसीतिसमयः । तदिदमुक्तमारण्यके । गृहाणकर्णशक्तिंस्व मनेनसमयेनवैइत्युक्त्वा । सेयंतवकरंप्राप्यहत्वैकंरिपुमूर्जितं । गर्जंतंप्रतिपन्नंचमामेवैष्यतिसूतजेत्युक्तंश्रुत्वा । एवमेवाहमिच्छामिरिपुंहंतुंमहाहवे । गर्जंतंप्रतिपन्नंचयतोमम भयंभवेदितिकर्णेनोक्तेन । नतुयंप्रार्थयस्येकंरक्ष्यतेसमहात्मनेतिसकारणकामिंद्रेणोक्तत्वात् । अनयाशक्त्याएकंपांडवसंबंधितिष्ठतिइतिशेषः ॥ ४४४ ॥ सदामुदितामुदं इताःसंतोषंप्रापिताःपार्थाःसहैवएकत्रमिलित्वा वसंतःसंतः । द्विजस्यसहारणीभांडंअरणीभ्यांअग्न्याधारकाष्ठाभ्यांसहितंपात्रं । तदुक्तंविराटपर्वणि । अरणीसहितंभांडं ब्राह्मणायन्यवेदयन्निति अरणीत्युपलक्षणंमंथापिग्राह्यः । अरणीसहितंमंथमित्यारण्यकोक्तेः । मृगेणहृतंनीतंनिशम्यअन्वयुः । मृगमितिशेषः ॥ ४४५ ॥ तस्मिन्मृगेअ

ददौ चोत्कृत्य कवचकुंडले च शचीपतेः ॥ अमोघां शक्तिमादाय ज्ञात्वेंद्रं द्विजरूपिणम् ॥ ४४३ ॥ ऋतेर्जुनादे कमेव वधिष्यस्यनयेति सः ॥ दत्त्वा शक्तिं ययौ शक्रः सार्धं कवचकुंडलैः ॥ ४४४ ॥ पार्था विमुच्यैव सुयोधनं तं वने वसंतो मुदिताः सदैव ॥ सहारणीभांडमथो मृगेण हृतं द्विजस्याशु निशम्य चान्वयुः ॥ ४४५ ॥ तस्मि न्नदृश्ये तृषिता एकैकमुदकार्थिनः ॥ ययुर्युधिष्ठिरमृते सुप्तास्ते धर्ममायया ॥ ४४६ ॥ अदृश्ये नैव धर्मेण वारिता वारिपायिनः ॥ क्षत्रधर्मस्य रक्षार्थं न तत्प्रश्नान्विदांवराः ॥ ४४७ ॥ व्याचक्रुः शक्तिमंतोपि पानीयार्थमरिंदमाः ॥ ४४८ ॥ न विप्राणां च धर्मोयं विद्यया उपजीवनम् ॥ क्षत्रियाणां च किमुत प्रसभं तेन ते पपुः ॥ ४४९ ॥

दृश्येसति तृषिताःसंतःउदकार्थिनोभीमाद्याःयुधिष्ठिरमृतेएकैकं पृथक्पृथक्ययुः सहैवनययुरित्यर्थः । अदृश्येनबकरूपधारित्वाददृश्येन धर्मेणैवयमेनैव वारितामत्प्रश्नप रिहारमकृत्वावारिपानंमाकुरुध्वमितिवारिताअपि वारिपायिनःजलपानशीलाःप्रसभमितिशेषः । तेभीमाद्याःधर्ममाययायममाययासुप्तास्वापंप्रापिताः ॥ ४४६ ॥ अरिंद माःवैरिशिक्षणसमर्थाः विदांज्ञानिनांमध्येवराःश्रेष्ठाः शक्तिमंतोपिप्रश्नपरिहारविषयेशक्तिमंतइत्यर्थः । भीमाद्याःपानीयार्थंउदकार्थंतत्प्रश्नान् धर्मकृतप्रश्नान् नव्याचक्रुः । कुतःक्षत्रधर्मस्यरक्षार्थं ॥ ४४७ ॥ ४४८ ॥ विप्राणांचविप्राणामपिविद्यायाःसकाशात् तेनकारणेनउपजीवनंनधर्मः क्षत्रधर्मस्तुनेतिकिमुतेतिकारणेन तेभीमाद्याःप्रसभं जलंपपुः ॥ ४४९ ॥ ॥ ॥ ॥ ॥ ॥

देवाःमनुष्येषुजाताअपिसुबलिनोहिंयद्यपिअपितथापि केशवात्केशवमृतेमानुषेणस्वभावेनयुक्ताःस्युः ॥ ४५०॥ एषांदेवानांकार्येषुबलादिकार्येषुप्राप्तेषुसत्सु सद्गुणा बला दिगुणाःक्रमेणतेषांतारतम्यक्रमेण व्यक्तिंप्राकट्यंआयांति अतोमानुषस्वभावयुक्तत्वात् भीमार्जुनौधर्मात्यमदेवात् अत्युत्तमबलावपि देवमायांसुप्तिप्रापकदेवताशक्तिविशेषं समाश्रित्य धर्मेणक्षणात्क्षणमात्रं स्वापितौनिद्रांप्रापितौ॥४५१॥ मुहूर्तंअल्पकालम् मुहूर्तमल्पकालंस्याद्घटिकाद्वितयेपिचेत्यभिधानम् । तयोर्भीमार्जुनयोःआच्छादनेबला च्छादनेबलप्राकट्याकरणेइत्यर्थः । क्षमासमर्थाबभूवेतिशेषः । ततःदेवमायाप्रबुद्धयोर्भीमार्जुनयोःशक्तिशतांशभाक्बलसहस्रभागेनतुल्योधर्मोनैवेत्यर्थः ॥ ४५२ ॥ त देतत्सर्वंपूर्वोक्तंसर्वं नसंभाव्यानज्ञेया ॥ ४५३ ॥ उदकांतंजलसमीपंतत्रजलप्रांतेदुःखाभितप्तोपिभ्रातृशोकाभितप्तोपिवारिपातुंइच्छन् बकाकारंबकपक्षिस्वरूपंइतेनप्राप्तेनपि

देवा अपि मनुष्येषु जाताः सुबलिनोपि हि ॥ मानुषेणैव भावेन युक्ताः स्युः केशवादृते॥४५०॥ कार्येष्वेषां क्रमेणैव व्यक्तिमायांति सद्गुणाः ॥ अतो भीमार्जुनौ धर्मादत्युत्तमबलावपि ॥ देवमायां समाश्रित्य धर्मेण स्वापितौ क्षणात् ॥ ४५१ ॥ मुहूर्तमेव सा माया तयोराच्छादने क्षमा ॥ ततः प्रबुद्धयोर्धर्मो नैव शक्तिशतांशभाक् ॥ ४५२ ॥ उक्तं पद्मपुराणे च तदेतत्सर्वमंजसा ॥ तस्मान्नाशक्तिरनयोः संभाव्या भीमपार्थयोः ॥ ४५३ ॥ धर्मात्मजोथाजगामोद कांतं दृष्ट्वा भ्रातॄंस्तत्र दुःखाभितप्तः ॥ इच्छन् पातुं वारि संवारितश्च पित्रा बकाकारमितेन नापात् ॥ ४५४ ॥ अर्थे भ्रातॄणामैच्छदसौ तदीयप्रश्नप्रतिव्याहरणं दयालुः ॥ ततो धर्मो यक्षतनुः स भूत्वा प्रश्नांश्चक्रे व्याकरोत्तान्स पार्थः ॥ ४५५ ॥ ततस्तुष्टो वरमस्मै ददौ स एकोत्थानं भ्रातृमध्ये स वव्रे ॥ यद्येकः स्यान्नकुलोस्त्वित्यथाह तुष्टो धर्मः क थमेतत्कृतं ते ॥ ४५६ ॥ ॥ ॥ ॥ ॥

त्रायमेनसंवारितश्चप्रश्नमनुक्त्वानपिबेतिवारितोराजानापात्नपपौ ॥ ४५४ ॥ असौराजाभ्रातॄणामर्थेउत्थानार्थंतदीयानांधर्मसंबंधिनांप्रश्नानांप्रतिप्रतिप्रश्नं एकैकंप्रश्नंप्र तीत्यर्थः व्याहरणंउत्तरकथनंऐच्छत् । अतएवदयालुस्ततोधर्मःयक्षतनुःयक्षस्वरूपोभूत्वा बकरूपमत्यजदितिभावः । प्रश्नांश्चक्रेसपार्थःयुधिष्ठिरःतान्प्रश्नान् व्याकरोत्प्र श्नोत्तरमवददित्यर्थः ॥ ४५५ ॥ एकोत्थानंएकस्यउत्थापनरूपवरंददौ सराजावव्रे एकोत्थानंवरंवव्रइतिभावः अथवरस्वीकारानंतरं यदिएकउत्थापनीयःस्यात्तर्हि नकु लोस्त्वित्याह राजेतिशेषः । तुष्टःधर्मःतेत्वयाएतत्सपत्नीजननीसुतनकुलोत्थानयाचनंकथंकिमर्थंकृतम् ॥ ४५६ ॥ ॥ ॥ ॥

स्नेहेनचेत्तर्हि भीमएवउत्थापनीयइत्याह । अतीति । इत्युक्तोराजाऊचेकिमिति । नउत्थापनीयः उत्थापनार्होन ॥ ४५७ ॥ एषांपार्थानांअज्ञातवासकाले यथेष्टरूपप्राप्तिं यद्रूपंयस्येष्टंइच्छाविषयःतस्यतद्रूपाप्तिम् । पुनःअज्ञातवासांते स्वकामतःस्वेच्छयानिजरूपाप्तिंयुधिष्ठिरादिस्वरूपप्राप्तिंचादात् ॥ ४५८ ॥ आनृशंस्यात् अक्रौर्यात् प्रीतएव धर्मः अज्ञातवासेसर्वदैव अज्ञातवाससमाप्तिपर्यंतं तेषांपांडवानांअज्ञातता सर्वैरज्ञायमानत्वंददौ । सधर्मःस्वपुत्रइतिकृत्वा स्वात्मभूतोयोयुधिष्ठिरस्तेनात्मनैवस्वस्वरूपभूतयुधिष्ठिरेणैवएवमुक्तरीत्याम्रुगादिरूपेणक्रीडन् आत्मनःस्वस्ययशःधर्मंचवर्धयन् ददावितिपूर्वेणान्वयः ॥ ४५९ ॥ स्वस्ययशआदिवर्धनंकथंस्यादित्यतआह । युधिष्ठिरेति । त

अतिप्रीतिर्भीमसेने तवास्ति बली चासौ राज्यहेतुस्तव स्यात् ॥ इत्युक्त ऊचे माद्रिपुत्रं विहाय कुंतीपुत्रो न मयोत्थापनीयः ॥ ४५७ ॥ स एवमुक्तो नितरां प्रीयमाण उत्थापयामास च तान्समस्तान् ॥ यथेष्टरूपप्राप्तिमेषां पुनश्च स्वकामतो निजरूपाप्तिमादात् ॥ ४५८ ॥ अज्ञातवासेऽज्ञातता सर्वदैव ददौ तेषां प्रीत एवानृशंस्यात् ॥ एवं क्रीडन् पुत्र इत्यात्मनैव यशो धर्मावात्मनो वर्धयन्सः ॥ ४५९ ॥ युधिष्ठिरात्मनस्तस्य यशोधर्माभिवृद्धये ॥ कृत्वारण्यापहारादि पुनर्दत्त्वा च तत्स्वयम् ॥ दातुं विप्राय तद्धस्ते ययौ धर्मो दिवं पुनः ॥ ४६० ॥ ततो राजा भीमसेनार्जुनौ च सार्धं यमाभ्यामरणीं प्रदाय ॥ मुदा युताः कृष्णया सार्धमेव संतुष्टुवुः कृष्णमनंतमच्युतम् ॥ ४६१ ॥ ॥ इति श्रीमदा० विरचिते श्रीमन्महाभारततात्पर्यनिर्णये अरणीप्राप्तिर्नाम द्वाविंशोध्यायः ॥ २२ ॥ श्रीकृष्णार्पणमस्तु ॥

स्ययुधिष्ठिरात्मनःस्वस्येत्यर्थः यशोधर्माभिवृद्धये स्वयंअरण्यापहरादि आदिपदेनप्रश्नकरणंकृत्वा विप्रायपुनःतद्यज्ञपात्रंदातुंतद्धस्ते युधिष्ठिरहस्तेदत्त्वापुनोधर्मोदिवंप्रतिययौ ॥ ४६० ॥ ततोराजाभीमसेनार्जुनौचयमाभ्यांसार्धं अरणींप्रदायविप्रायेतिशेषः कृष्णयासार्धंमुदायुताःसंतःअनंतदेशकालगुणपरिच्छेदशून्यं अच्युतंनाशरहितंकृष्णं देवकीसुतं श्रीवेदव्यासंवा संतुष्टुवुः । सम्यगस्तुवन् ॥ ४६१ ॥ ॥ यंगंगाजमदग्निजान्वयभवाद्विद्वद्धिरण्याभिधात्पुत्रंप्राप्यजनार्दनंशमदमस्वाध्यायसंपद्युतात् ॥ द्वाविंशोस्यकृतौसतांसुखकरोध्यायःसमाप्तिःशुभःश्रीमद्भारतभावनिर्णयपदार्थोद्दीपिकायामगात् ॥ २२ ॥ ॥ इति श्रीमद्भारततात्पर्यनिर्णयटीकायां पदार्थदीपिकायां जनार्दनभट्टविरचितायां द्वाविंशोध्यायः ॥ २२ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥ ॥ ॥ ॥

श्रीगुरुभ्योनमः॥ ॐनारायणेति । तपार्थानारायणानुग्रहतः अनुग्रहेणयथावत् वनवासकालेपुरवासादिनिषिद्धाकरणम् । यथाप्रतिज्ञातंतथैवद्वादशाब्दान् वनेनिस्तीर्यअतिक्रम्य । ततोवनवासानंतरं ब्राह्मणादीनूआदिशब्देनस्वविहिताग्निहोत्रातिथिपूजनक्षत्रंचह्वादीन् । दधुःचक्रुः॥ १ ॥ पुरींपुरसमीपमित्यर्थः शम्यांशमीवृक्षे हेतीःआयुधानिनिधायसंस्थाप्य । छन्नानिआच्छादितानिरूपाणियेषांतेतथा । कथंछन्नरूपाइत्यनस्तद्विविच्याह । यतिरित्यादिना । यतिःप्रसिद्धः सूताद्वैदेह्यांजातःसूदःपाककर्ता । वैश्याच्छूद्र्यांजातोनटःसंगीताद्युपजीवकः पंढःसन्नर्जुनोनटवेषः क्षत्रियाद्ब्राह्मण्यांजातःसूतःरथिकः । वैश्याच्छूद्र्यांजताकरणी वैश्यात्करण्यांजातोगोपः । वैश्यायांक्षत्रियाज्जातोगोपश्रेष्ठोविशांवरः ॥ सूताच्चन्यूनतातस्यवैश्यकर्मरतःसदा । गोरक्षकः वैश्याद्ब्राह्मण्यांजातोवैदेहः क्षत्रियाद्वैश्यायांजातामाहिष्या । वैदेहान्माहिष्यायांजातःकायस्थः शू

ॐ नारायणानुग्रहतो यथावन्निस्तीर्य तान् द्वादशाब्दान्वने ते ॥ विसृज्य च ब्राह्मणादीन्सधौम्यानज्ञातवासाय ततो मनो दधुः ॥१॥ गत्वाविराटस्य पुरीं निधाय हेतीः शम्यां छन्नरूपा बभूवुः॥ यतिः सूदः षंढवेषोथ सूतवेषो गोपो गंधकर्त्री च जाताः॥ २ ॥ सर्वे विराटं ययुरत्र देववत्संभावितास्तेन शुभोरुलक्षणाः ॥ युधिष्ठिरस्यैव शुश्रूषणं ते चक्रुर्हृदा वासुदेवस्य नान्यत् ॥३ ॥ परपाको गृहस्थस्य क्षत्रियस्य विशेषतः ॥न योग्य इतिसूदस्य बभ्रे वेषं वृकोदरः॥ ॥ ४ ॥ वैदिकं व्यवहारेषु ज्ञानाधिक्यप्रसिद्धितः ॥ जानीयुर्भीम इत्येव सूदवेषस्ततोऽभवत् ॥ ५ ॥ ॥

द्राद्वैश्यायांजाता आयोगवी । कायस्थादायोगव्यांजाता सैरंध्रिका सैव गंधकर्त्री । सैरंध्रिकेतिपर्यायशब्दः । स्त्रीणांगंधलेपालक्तकांकनाद्यलंकरणादिकर्मकर्त्री । युधिष्ठिरादिद्रौपद्यंताःपार्थाः यत्यादीनांवेषधारिणोजाताइत्यर्थः । मन्वादिस्मृतिषुअनुलोमजातिविवेकोद्रष्टव्यः ॥ २ ॥ अत्रतेनविराटेनसंभाविनामानिताः । ननु भीमाद्याअन्यशुश्रूषणंकथंचक्रुरित्यतआह । युधिष्ठिरस्येति । तेभीमाद्याः हृदामनसायुधिष्ठिरस्यैववासुदेवस्यैवचशुश्रूषणंचक्रुः । अन्यद्विराटादिसेवनंनैवचक्रुः ॥ ३ ॥ भीमस्यसूदत्वनिमित्तमाह । परपाकइति ॥ सूदस्यपाककर्तुः ॥ ४ ॥ सूदत्वेन्यदपिकारणमाह ॥ वैदिकेति ॥ वैदिकव्यवहारेषुब्राह्मणत्वेवेदसंबंध्यर्थकथनादिव्यवहारेषु ज्ञानाधिक्यप्रसिद्धितःप्रसिद्धेःभीमएवायमितिजानीयुर्यतस्ततः ॥ ५ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

नन्वेषांपरकीयान्नाद्युपजीवनंकथंयोग्यमित्यआह । स्वीयमिति । वेदविदांवेदद्रष्टृणामृषीणामित्यर्थः । सर्वंधनादिकंज्ञानिनांस्वीयंस्वकीयमेवभवति । देवेशानांदेवश्रेष्ठानां स्वीयमितिकिंपुनर्वक्तव्यमित्यर्थः । अतस्तेपार्थाःस्वबलसंश्रयात् बलसंश्रयणादन्याश्रयं स्वस्मादन्यस्यविराटादेराश्रयंनैवचक्रुः ॥ ६ ॥ शापादेवउर्वश्याइतिशेषः । भीमार्जुनौनिमित्तान्नीचजातिवेषधारिणौबभूवतुः ॥ नकुलःसूतजातेःक्षत्रियानंतरत्वात्तथासूतजातिरभवत् । नकुलःस्वस्यक्षत्रियसेवाधिकारार्थंस्वजातेःकिंचिदूनजातिवेषोभूदितिभावः । ब्राह्मण्यांक्षत्रियात्सूतःप्रातिलोम्येनजायते । क्षत्रियाणामसौधर्मंकर्तुमर्हत्यशेषतः।किंचिच्चक्षत्रजातिभ्योन्यूनतातस्यजायते॥ वैश्यधर्मेषुतस्याधिकारःक्वचिद्भवेदितिवचनात् ॥ ७ ॥ तथासहदेवःवैश्यजातेःसूतस्यसूतजातेरनंतरत्वाद्वैश्यजातिरभवत् । तेषुवैश्येषुगोपालःउत्तमोयतः ॥ ८ ॥ ततोगोपालतामापेत्यर्थः यतोयतिः अखिलैः

स्वीयं वेदविदां सर्वं देवेशानां च किंपुनः ॥अतस्तेन्याश्रयं नैव चक्रुः स्वबलसंश्रयात् ॥ ६ ॥ शापादेवार्जुनः षंढवेषोभून्नकुलस्तथा ॥ क्षत्रियानंतरत्वात्तु सूतजातेस्तथाभवत् ॥ ७ ॥ सूतस्यानंतरत्वात्तु वैश्यजातेस्तथाभवत् ॥ सहदेवो वैश्यजातिर्गोपालस्तेषु चोत्तमः ॥ ८ ॥ ततो गोपालतामाप यतिः पूज्योखिलैर्यतः ॥ यतिरासीद्धर्मजोतः सोभ्यासार्थं सदैव च ॥ अक्षासक्तोभवत्पश्चाद्दर्शयिष्यन्स्वशिष्टताम् ॥ ९ ॥ भीमसेनसधर्मार्थं शूद्रा सैरंध्रिकाभवत् ॥ द्रौपदी भर्तृसाधर्म्यं स्त्रीणां धर्मो यतः सदा ॥ १० ॥ अथाजगाम मल्लकः समस्तभूमिमंडले ॥ वरेण योजितो जयी शिवस्य संजगर्ज च ॥ ११ ॥ ॥ ॥ ॥ ॥ ॥

वर्णाश्रमैःपूज्यःअतोधर्मजोयतिरासीत्।सयुधिष्ठिरःसर्वदैवअभ्यासार्थंद्यूतेविस्मृतिःस्यादित्यभ्यासार्थं अक्षासक्तःद्यूतक्रीडायामासक्तोभवत् । द्यूतकरणेनतापंप्राप्तोपिपुनः किमर्थमक्षासक्तोभूदित्यतस्तस्याभिप्रायमाह ।पश्चादिति । पश्चादज्ञातवासानंतरं अहंद्यूतेकुशलःशकुनिस्तुछद्मनामांजिगायेतिस्वशिष्टतांस्वस्यद्यूतक्रीडाभिज्ञतां दर्शयिष्यन् दर्शयितुमित्यर्थः ॥ ९ ॥ द्रौपदीभीमसेनसधर्मार्थंसेवारूपत्वेनसमानधर्मचरणार्थं शूद्रासतीसैरंध्रिकाअभवत्सैरंध्रिकाजात्याशूद्रजातिकल्पेत्यर्थः । भीमःसूदकर्मणासेवाकृदभूत्कृष्णातुसैरंध्रिकात्वेनसेवाकर्त्र्यभूदितिभावः । भर्तृसाधर्म्यंभर्तृसमानधर्मत्वंयतोधर्मस्तथाऽभवदितिपूर्वेणान्वयः ॥ १० ॥ समस्तभूमिमंडलेशिवस्यवरेणयोऽजितः वीरैरितिशेषः । स्वयंजयीवीरजयनशीलःसमल्लकःआजगाम । संजगर्जसिंहनादमकरोदित्यर्थः ॥ ११ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तदाअवदत् ॥ १२ ॥ किमिति । यःसूदोस्तिएषःमल्लंओजसासामर्थ्येननिहत्य तवयशःवर्धयेत्यतोतस्तंसूदं ॥ १३ ॥ निषूदयेहनिष्ये ॥ १४ ॥ महादेवप्रसादतोमेबलंस एवमेजयंविधास्यतीतियंथांतरोक्तिःकथंघटतइत्याशंक्यमहादेवादिशब्दानांहरौप्रवृत्तिमुपपादयंस्तत्तात्पर्यमाह । समस्तेत्यादिना । यःकेशवःसमस्तदेववृंदतःसर्वदेवसमूहात् महान् श्रेष्ठःक्रीडादिगुणरूपत्वाद्देवश्चसएव महांश्चासौदेवश्चेतिनिरुक्तंमहादेवइत्युक्तेरितिभावः । नकेवलंमहादेवशब्दवाच्यः किंतु समस्तदेवनामवाच्यश्चेत्याह । समस्तेति । यःकेशवःसमस्तदेवनामवान् महादेवादिसमस्तदेवनामवाच्यइत्यर्थः । तदीयभक्तितोममइतरेषांचबलं तस्माद्भीमोमहादेवानुग्रहतोनिषूदये इत्याहेत्यभिप्रायः ॥ १५ ॥ विष्णोःसर्वदेवनामवत्त्वाभिधायिकां योदेवानांनामधाएकएवेत्येतांश्रुतिमर्थतोनुवादयति । यएवेति । एषःविष्णुःमहांश्चदेवःमहादेवनामवाच्योयस्मात्तत्तस्मात्सविष्णुःमेजयंवि

तमीक्ष्य सर्वमल्लका विराटराजसंश्रयाः ॥ प्रदुद्रुवुर्भयार्दितास्तदावदद्युधिष्ठिरः ॥ १२॥ य एष सूद आशु तं निहत्य मल्लमोजसा ॥ यशस्तवाभिवर्धयेत्समाह्वयाद्य तं नृप ॥ १३ ॥ इतीरिते समाहुतो जगाद मारुतिर्वचः ॥ प्रसादतो हरेरहं निषूदयेद्य मल्लकम् ॥ १४ ॥ समस्तदेववृंदतो महान्य एव केशवः ॥ समस्तदेवनामवांस्तदीयभक्तितो बलम् ॥ १५॥ य एव देवनामधा इति श्रुतिर्जगाद ह ॥ महांश्च देव एष तत्स मे जयं विधास्यति ॥१६॥ युधिष्ठिराभिधश्च यो युधिष्ठिरे स्थितः सदात्वयि स्थितस्त्वमित्यसौ सदाभिधीयते हरिः॥१७॥इतिब्रुवाणो मल्लं तमभियातो वृकोदरः ॥ अनयन्मृत्युलोकाय बलाढ्यैरपि दुर्जयम्॥ १८॥ ॥ ॥ ॥ ॥

धास्यतिकरिष्यतीतिभीमआहेतिशेषः ॥ १६ ॥ युधिष्ठिरप्रसादत्त्वात्प्रसादाच्च निषूदयेइत्युक्तेर्भावमाह । युधिष्ठिरेति । युधिष्ठिरे सदानिरंतरं ग्रहावेशवन्नेत्यर्थः स्थितो योहरिःसयुधिष्ठिराख्यजीवेनसह युधिष्ठिराभिधः । त्वयीतिपुरोवर्त्युपलक्षणार्थः । पुरोवर्तिनिस्थितःत्वमित्युच्यते ।स्वस्मिन्विद्यमानोहमित्युच्यते । क्वचिद्दूरेविद्यमानःअसावित्युच्यते ।अहंनामाहरिर्नित्यमहेयत्वात्प्रकीर्तितः । त्वंचासौप्रतियोगित्वात्सइत्यपि ।सर्वांतर्यामिणिहरावस्मच्छब्दविभक्तयः । युष्मच्छब्दगताश्चैवसर्वास्तच्छब्दगाअपि । इतिनारायणश्रुतौ । सर्वांतर्यामिकोविष्णुःसर्वनामाभिधीयते । एषोहंत्वमसौचेतिनतुसर्वस्वरूपतःइत्यन्यत्राप्युक्तेः सर्वांतर्गतत्वेनसर्वनामवंतंहरिमभिप्रेत्य महादेवयुधिष्ठिरादिप्रसादतःमल्लंनिषूदयेइतिब्रुवाणोभीमः ॥ १७ ॥ मृत्युर्यमः ॥ १८ ॥

तत्रविराटगृहेद्विमासाभ्यांऊनेसंवत्सरेगतेसति । मत्स्यनृपतेःविराटस्यशालःस्त्रीभ्रातानाम्नाकीचकः ॥ १९ ॥ सकीचकःमनोभवार्तःकामपीडितःसंप्रार्थयामास । मयार मस्वेतिकृष्णांसंप्रार्थयामास । तयाद्रौपद्यानिरस्तःनिषिद्धःकीचकःस्वांभगिनींसुदेष्णां सुदेष्णानाम्नींतदर्थंद्रौपदीरमणार्थं संप्रार्थयामास ॥ २० ॥ तयासुदेष्णयानिषिद्धो विनिराकृतोपितांसुदेष्णाम् । सासुदेष्णाआह । किमिति । मदर्थंसुरांमद्यंसमानय कीचकगृहादितिशेषः । भीताकीचकाद्भीतासाकृष्णा नेतिनयामीत्यवदत् ॥ २१ ॥

एवं निवसतां तत्र पांडवानां महात्मनाम्॥ संवत्सरे द्विमासोने विजित्य दिश आगतः ॥ कीचको मत्स्यनृपतेः शालो बलवतां वरः ॥ १९ ॥ स द्रौपदीमीक्ष्य मनोभवार्तः संप्रार्थयामास तया निरस्तः ॥ मासे गते भगिनीं स्वां सुदेष्णां संप्रार्थयामास तदर्थमेव ॥ २० ॥ तया निषिद्धोपि पुनः पुनस्तां यदा ययाचेऽथ च साह कृष्णाम् ॥ समानयाश्वेव सुरां मदर्थमितीरिता नेति भीताऽवदत्सा ॥ २१ ॥ बलात्तया प्रेषिता तद्गृहाय यदागमत्तेन हस्ते गृहीता ॥ विधूय तं प्राद्रवत्सा सभायै स्मृत्वादित्यस्थं वासुदेवं परेशम् ॥ २२ ॥ अनुद्रुत्यैनां पातयित्वा पदा स संताडयामास तदा रविस्थः॥ नारायणो हेति नामैव रक्षो न्ययोजयत्तदृदृश्यं समागात् ॥ २३ ॥ वायुः समाविश्य तु कीचकं तं न्यपातयत्तां प्रसमीक्ष्यैव भीमः ॥ चुकोप वृक्षं च समीक्ष्यमाणं तं वारयामास युधिष्ठिरोग्रजः ॥ २४ ॥ कृष्णा रात्रौ भीमसकाशमेत्य हंतुं पापं कीचकं प्रेरयत्तम्॥ भीमस्य बुद्ध्या निशि सा कीचकं च जगाद गंतुं शून्यगृहं स चागात् ॥ २५ ॥ तत्रैनमासाद्य च भीमसेनो विजित्य तं बाहुयुद्धे निहत्य ॥ शिरो गुदे पाणिपादौ च तस्य प्रवेशयामास विमृद्य वीरः॥ २६ ॥ ॥ ॥ ॥ ॥ ॥

तयासुदेष्णयातद्गृहायकीचकगृहाय तेनकीचकेन । तंकीचकंविधूय अपहस्तेनदूरीकृत्येत्यर्थः ॥ २२ ॥ एनांकृष्णांअनुद्रुत्यअनुगत्वा । तद्रक्षःअदृश्यंसत् ॥ २३ ॥ तांकृष्णाम् ॥ २४ ॥ भीमस्यबुद्ध्याभीमशिक्षितबुद्ध्येत्यर्थः । साकृष्णानिशिशून्यंगृहं जनरहितगृहंगंतुंजगाद सचसोपिकीचकः ॥ २५ ॥ तत्रशून्यगृहे आसाद्यप्राप्य । विमृद्यनिष्पीड्य पिंडीकृत्येत्यर्थः ॥ २६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तस्यकीचकस्यअनुजानां पंचोत्तरंपंचाधिकंशतम् । तेनकीचकेनसह ॥ २७ ॥ तंरावं महांतंउच्चंवृक्षंउद्धृत्यउत्पाट्येत्यर्थः । स्वंगृहंस्ववासभूतंगृहमित्यर्थः । पुरंचेतिवापाठः ॥ २८ ॥ तैःपंचोत्तरशतभ्रातृभिः एवंमुख्यकीचकवद्वेव यत्नात्प्रयत्नात्कृतेनतपसाऽवध्यताचअवध्यत्ववरःअवाप्तः । षडुत्तराःमुख्यकीचकेनसह षड्भिरधिकाः शतंशतसंख्याकाः तेकीचकाः संख्येयुद्धेहताः ॥ २९ ॥ अहंगंधर्वइतिवदन्निहत्य मुमोदद्रौपदीचमुमोद । भयेनपुनःकिंस्यादितिभयेन सुदेष्णातांकृष्णांयाहीत्यूचे । साद्रौपदीतांसुदेष्णां त्रयोदशाहंत्रयोदशदिनानिपालयेत्याह ॥ ३० ॥ सुदेष्णाभयात्मावसेत्युक्तेकिंस्यादितिभयात् अस्तु त्रयोदशदिनपर्यंतंवासोऽस्त्वित्येनांकृष्णामाह । तदाअ

अवध्यं तं निहतं वीक्ष्य तस्य पंचोत्तरं शतमेवानुजानाम् ॥ सर्वे वराच्छंकरस्य त्ववध्यं सहैव कृष्णां तेन दग्धुं बबंध ॥ २७ ॥ सा नीयमाना कीचकैः संरुराव श्रुत्वैव तं भीमसेनो महांतम् ॥ उद्धृत्य वृक्षं तेन जघान सर्वानादाय कृष्णां पुनरागाद्गृहं च ॥ २८ ॥ एवं यत्नात्तपसा तैरवाप्तो वरः शिवादजयत्वं रणेषु ॥ अवध्यता चैव षडुत्तरास्ते शतं हता भीमसेनेन संख्ये ॥ २९ ॥ गंधर्व इत्येव निहत्य सर्वान्मुमोद भीमो द्रौपदी चाथ कृष्णा ॥ याहीत्यूचे तां सुदेष्णा भयेन त्रयोदशाहं पालयेत्याह तां सा ॥ ३० ॥ अस्त्वित्येनामाह भयात्सुदेष्णा तथाऽवसत्पूर्णमब्दं च तत्र ॥ तदा पार्थान्प्रविचिंत्याखिलायां पृथ्व्यां छन्नान्धार्तराष्ट्रस्य दूताः ॥ अविज्ञाय प्रययुर्धार्तराष्ट्रमूचुर्हतं कीचकं योषिदर्थे ॥ ३१ ॥ तेनादवद्द्रौपदीकारणेन दुर्योधनो निहतं कीचकं तम् ॥ भीमेनागुस्तत्र दुर्योधनाद्या भीष्मादिभिः सह कर्णेन चैव ॥ ३२ ॥ अग्रे ययौ तत्र योद्धुं सुशर्मा स गा विराटस्य समाजहार ॥ श्रुत्वा विराटोऽनुययौ ससेनस्तं पांडवाश्चानुययुर्विनार्जुनम् ॥ ३३ ॥ विजित्य संख्ये जगृहे विराटं तदा सुशर्मा तमयाद्वृकोदरः ॥ स तस्य सेनां विनिहत्य मात्स्यं विमोच्य जग्राह सुशर्मराजम् ॥ ३४ ॥ ॥ ॥ ॥ ॥

वध्यनंतरं छिन्नान्निलीनान्प्रविचिंत्यविमृश्यअविज्ञायअज्ञात्वा योषिदर्थेस्त्रीनिमित्तंकीचकंहतमूचुः ॥ ३१ ॥ तेनकीचकहननवार्ताश्रवणेन द्रौपदीकारणेनभीमेनहतमवदत् दुर्योधनाद्यास्तत्रमत्स्यदेशंप्रति अगुःययुः ॥ ३२ ॥ तत्रतेषुमध्येसुशर्माअग्रेपुरतःययौ ॥ ससुशर्माविराटस्यगाःसमाजहारअपाहरत् श्रुत्वागवामपहारमितिशेषः ॥ ३३ ॥ यद्राजगृहेजग्राह तद्रातंसुशर्माणंअयात्प्राप । सभीमःमात्स्यंविराटम् ॥ ३४ ॥

तंसुशर्माणं ततःसुशर्ममोचनानंतरं तेकौरवाःवास्तःपुराद्बहिरित्यर्थः ॥ ३५ ॥ ततःयुद्धदिनादपरेह्नि द्वितीयेह्नि सर्वैकीचकैःरहितंहीनं मात्स्यंमत्स्यपतिंविराटंशक्यंमत्वा ग्रहीतुमितिशेषः ॥ ३६ ॥ ननु विराटःभीष्माद्यैःअद्यकथंग्रहीतुंशक्यः पूर्वंकथंनशक्यइत्यतआह कीचकस्येत्यादिना कंसादीनांसर्वशःसर्वेषांकीचकादीनाम् ॥ ३७ ॥ नशेकुः यस्मात्तस्मात्तेभीष्माद्याःशांतंमृतंकीचकंश्रुत्वा मात्स्यंप्रतियुद्धेयुद्धार्थंययुः ॥ ३८ ॥ रक्षितुंयतिष्येयत्नंकरिष्यइति स्वकांप्रतिज्ञांसत्यांकर्तुम् ॥३९ ॥ विराटमभिगच्छतांकौरवाणांअभिप्रायमाह यदीति। नचेत्पार्थास्तत्रनस्युस्तदातर्हि अनतमुद्धतंनमयिष्यामहेनम्रंकरिष्यामः ॥ ४० ॥ समंततःअभितः ॥ ४१ ॥ उत्तरःउत्तराख्योविराटपुत्रःतान्

युधिष्ठिरो मोचयामास तं च ततो रात्रौ न्यवसन्बाह्यतस्ते ॥ ३५ ॥ ततोऽपरदिने सर्वे भीष्मद्रोणपुरःसराः ॥ रहितं कीचकैर्मात्स्यं शक्यं मत्वाभिनिर्ययुः ॥ ३६ ॥ कीचकस्य हिडिंबस्य बककिर्मीरयोरपि ॥ जरासंधस्य नृपतेः कंसादीनां च सर्वशः ॥३७॥ न बाधनाय भीष्माद्या अपि शेकुः कथंचन ॥ तस्मात्ते कीचकं शांतं श्रुत्वा मात्स्यं ययुर्मृधे ॥ ३८ ॥ यतिष्ये रक्षितुं भीमाद्धार्तराष्ट्रानिति स्वकाम् ॥ सत्यां कर्तुं प्रतिज्ञां तु ययौ द्रोणः सपुत्रकः ॥३९॥ यदि युद्धाय निर्याति ज्ञाताः स्युः पांडवास्तदा ॥ न चेद्विराटमनतं नमयिष्यामहे वयम् ॥४०॥ इति मत्वा विराटस्य जगृहुर्गाः समंततः ॥ ४१ ॥ तदोत्तरः सारथित्वे प्रकल्प्य पार्थं ययौ तान्निशाम्यैव भीतः ॥ ततोऽर्जुनः सारथिं तं विधाय कृच्छ्रेण संस्थाप्य च तान् ययौ कुरून् ॥ ४२ ॥ आदाय गांडीवमथ ध्वजं च हनूमदंकं सदरोऽग्रतो गाः ॥ निवर्त्य युद्धाय ययौ कुरूंस्तान् जिग्ये सर्वान् द्वैरथेनैव सक्तान् ॥ ४३ ॥ ॥ ॥ ॥

सुयोधनादीन्निशाम्यदृष्ट्वा भीतोभूदितिशेषः। अर्जुनःनिवर्त्यगंतुकाममितिवाक्यशेषः । तंउत्तरंकृच्छ्रेणप्रयत्नेनसंस्थाप्य तमेवोत्तरंसारथिंविधायकुरून्प्रतिययौ ॥ ४२ ॥ आदायशमीवृक्षादितिशेषः। सदरःदेवदत्तशंखसहितोर्जुनः। अग्रतःकौरवसैन्यंविहाय अन्यमार्गेणाग्रेगत्वा तैर्हृताःगाःयुद्धाययुद्धार्थंनिवर्त्यपरावृत्य कुरून्गोष्ठतःस्थितान् कुरून्ययौ । द्वैरथेनद्वयोःरथयोःसमाहारोद्वैरथंतेन । तथासक्तान्युद्धार्थंप्रवृत्तान् तान्सर्वान्कौरवान् भीष्मद्रोणादीन्जिग्ये एवशब्दःसमुच्चयार्थः इत्यध्याहारेण श्लोकस्यान्वयः ॥ ४३ ॥

एकीभूतान्एकत्रमिलितान् पुनरेवपराभवानंतरमेव अनुरवमनुयातान्प्राप्तान्उत्तरीयाणिउत्तरवस्त्राणि । भीष्मस्योत्तरीयंकिमर्थंनजग्राहेत्यतआह । वेदेति । अस्त्राघातंसंमो हनास्त्रप्रतीकारं तथाचभीष्मस्यमोहनास्त्राभिज्ञत्वान्मोहोनाभून् मोहाभावाच्चनद्वस्त्रंनगृहीतमितिभावः ॥ ४४ ॥ जितान्पराजितान् यद्यमुमोद तदायुधिष्ठिरःषंढेनजिता नाह ॥ ४५ ॥ अक्षेणद्यूतपाशेनप्राहरत् अताडयत् तत्ताडनंनिशाम्यदृष्ट्वा ॥ ४६ ॥ किमितिन्यवारयदित्यतआह । निजेति । निजस्वरूपेणयुधिष्ठिरादिरूपेण प्रणिपा तपूर्वकंप्रणामपुरःसरंयथास्यात्तथा यदिनक्षमापयेत्तर्हि असौविराटःवध्यःवधार्हइतिपूर्वेणान्वयः । आत्मरूपंयुधिष्ठिरादित्वस्वरूपंआस्थिताःप्राप्ताःसंतः ॥ ४७ ॥ आ

एकीभूतान् पुनरेवानु यातान् संमोहनास्त्रेण विमोहयित्वा ॥ जग्राह तेषामुत्तरीयाण्यृते तु भीष्मस्य वेदास्त्रघातं स एव ॥ ४४ विधाय भीष्मं विरथं जगाम तदा श्रुत्वा मत्स्यपतिर्जितान्कुरून् ॥ मुमोद पुत्रेण जिता इति स्म तदाह षंढेन जितान्युधिष्ठिरः ॥ ४५ ॥ तदा क्रुद्धः प्राहरत्तं विराटः सोक्षेण तद्भीमधनंजयाभ्याम् ॥ श्रुतं तदा तौ कुपितौ निशाम्य न्यवारयत्तावपि धर्मसूनुः ॥ ४६ ॥ निजस्वरूपेण समास्थितान्नो यदि स्म नासौ प्रणिपातपूर्वकम् ॥ क्ष मापयेद्वध्य इत्यात्मरूपं समास्थितास्तस्थुरथापरे दिने ॥ ४७॥ तदा विराटासनमास्थितं नृपं युधिष्ठिरं वीक्ष्य विरा ट आह ॥ किमेतदित्यूचिवानुत्तरोस्मै तान्पांडवान् गोग्रहणे च वृत्तम् ॥ ४८ ॥ ततो विराटो भयकंपितांगः प्रणम्य पार्थाञ्छरणं जगाम ॥ ददौ च कन्यामुत्तरां फल्गुनाय पुत्रार्थमेव प्रतिजग्राह सोपि ॥४९॥ एवं विराटं मोचयित्वै व गाश्च तमस्यंधे कीचकान्पातयित्वा ॥ प्राप्तो धर्मः सुमहान्वायुजेन तस्यानु पार्थेन च गोविमोक्षणात् ॥ ५० ॥ अयातयन्केशवायाथ दूतान् सहाभिमन्युः सोपि रामेण सार्धम् ॥ अगादनंतानंदचिद्वासुदेवो विवाहयामासुरथा भिमन्युम् ॥ ५१ ॥ आसीन्महानुत्सवस्तत्र तेषां दाशार्हवीरैः सह पांडवानाम् ॥ स पांचालानां वासुदेवेन सार्ध मज्ञातवासं समतीत्य मोदताम् ॥ ५२ ॥

सनंसिंहासनम् । किमेतदाश्चर्यमित्याह । उत्तरःअस्मैविराटायतान्युत्यादीन्पांडवान् एतेपांडवाइ त्याहेत्यर्थः गोग्रहणेवृत्तंच । अर्जुनेनयुद्धंकृतमित्यूचिवानितिभावः ॥४८॥ उत्तरांउत्तराख्यांसोपिपार्थोपि पुत्रार्थेअभिमन्युभार्यार्थे ॥ ४९ ॥ तस्यभीमस्यअनुअनंतरं पार्थे नगोविमोक्षणात् धर्मःप्राप्तःविराटमोक्षणमुख्यधर्मःगोविमोक्षणमुपधर्मइतिभावेनान्वित्युक्तमितिभावः ॥५०॥ अयातयन्प्रेषयामासुः ॥५१ ॥ अज्ञातवासंसमतीत्य अतिक्र म्यवासुदेवेनसार्धंसहितत्वादित्यर्थः । मोदतांआनंदिनांपांचालैःद्रुपदाद्यैःसहितानां दाशार्हवीरैर्यादवश्रेष्ठैःसहसहितानां तेषांपांडवानां तत्र अभिमन्युविवाहेउत्सवआसीत् ५२

सौबलेयःशकुनिः अत्रपांडववनवासविषये ॥ ५३ ॥ नोस्माकंदृष्टःदृष्टिविषयोयस्मात्तस्माद्भीष्मःअभ्यतीतमतिक्रांतं अज्ञातवासमाह द्रोणोपिएवमेवाह ॥ ५४ ॥ अनादृत्यतिरस्कृत्य अत्र अज्ञातवाससमाप्तिविषये विप्राःजानंतीतिधर्मजोवदत् दूतमितिशेषः ॥ ५५ ॥ अज्ञातवासस्यापूर्णतांवदतामभिप्रायमाह । सौरेति सौरमासानुसारेणसंक्रमणावधिःसौरमासः तदनुसारेणापूर्णतामाहुः । संवत्सरस्येतिशेषः । चांद्रेणमासेनकृष्णपक्षप्रतिपदारभ्य पौर्णिमावधिश्चांद्रमासः । शुक्लपक्षप्रतिपदारभ्य दर्शावधिश्चांद्रमासइतिवा चांद्रमासेनेत्यर्थः तेनमासेन अखिलःषष्टिसंख्याधिकत्रिशतदिनात्मकःअसौकालः अज्ञातवासार्थंप्रतिज्ञातःकालःपूर्णोहि । श्रुतिस्मृत्यादौसंवत्सरःपूर्णइतिप्रसिद्धिः । चांद्रेणेत्याचार्याणामुक्तिः । दर्शावधिंमासमुशंतिचांद्रंसौरंतथाभास्करराशिचारात् त्रिंशद्दिनंसावनमाहुरार्यानाक्षत्रमिंदोर्भगणभ्रमाच्चेतिरत्नमालायाम् । चां

दुर्योधनाद्याः सूतपुत्रेण सार्धं स सौबलेयो युधि पार्थपीडिताः ॥ भीष्मादिभिः सार्धमुपेत्य नागपुरं मंत्रं मंत्रयामासुरत्र ॥ ५३ ॥ अज्ञातवासे फल्गुनो नोद्य दृष्टस्तस्मात्पुनर्यांतु पार्था वनाय ॥ इति ब्रुवाणानाह भीष्मोभ्यतीतमज्ञातवासं द्रोण आहैवमेव ॥ ५४ ॥ तयोर्वाक्यं ते त्वनादृत्य पापा वनं पार्थाः पुनरेव प्रयांतु ॥ इति स्म दूतं प्रेषयामासुरत्र जानंति विप्रा इति धर्मजोवदत् ॥ ५५ ॥ सौरमासानुसारेण धार्तराष्ट्रा अपूर्णताम् ॥ आहुश्चांद्रेण मासेन पूर्णः कालोखिलो ह्ययम् ॥ ५६ ॥ दिनानामधिपः सूर्यः पक्षमासाधिपः शशी ॥ तस्मात्सौम्याब्दमेवात्र मुख्यमाहुर्मनीषिणः ॥ ५७ ॥ सौम्यकालं ततो यज्ञे गृह्णंति न तु सूर्यजम् ॥ तदेतदविचार्यैव लोभाच्च धृतराष्ट्रजैः ॥ ५८ ॥ राज्यं न दत्तं पार्थेभ्यो पार्थाः कालस्य पूर्णताम् ॥ ख्यापयंतो विप्रवरैरुपप्लाव्यमुपागमन् ॥ ५९ ॥ सवासुदेवाअखिलैश्च यादवैः पांचालमात्स्यैश्च युताः सभार्याः ॥ उपप्लाव्ये ते कतिचिद्दिनानि वासं चक्रुः कृष्णसंशिक्षितार्थाः ॥ ६० ॥ इति श्रीम० विरचिते श्रीमन्महाभारततात्पर्यनिर्णये विराटपर्वकथानिरूपणो नाम त्रयोविंशोध्यायः ॥ २३ ॥ श्री०

द्रोपिशुक्लपक्षादिकृष्णादिर्वेतिचद्विधा । कृष्णपक्षादिकंमासंनांगीकुर्वंतिकेचन । येपीच्छंतिनतेषामपीष्टोविंध्यस्यदक्षिणेति त्रिकांडमंडने ॥ ५६ ॥ सर्वेभ्यश्चांद्रमासस्यमुख्यत्वात्सएवग्राह्यइत्याह दिनानामिति । मनीषिणःज्ञानिनः अत्रअज्ञातवासाख्यव्रतकर्मणि । तस्माच्चांद्रमासस्यमुख्यत्वात् ॥ ५७ ॥ तदेतन्मासमुख्यत्वम ॥ ५८ ॥ कालस्यसंवत्सरात्मककालस्यपूर्णतांविप्रवरैःख्यापयंतःकीर्तयंतः । उपप्लाव्यनगरंप्रति ॥ ५९ ॥ कृष्णेनसम्यक्प्रीतिपूर्वकंशिक्षिताःअर्थाःधर्मादयोयेषांतेतथा राज्यसाधनादिप्रयोजनानिवा ॥ ६० ॥ यंगंगाज० पूर्तितस्यकृतासतांसुखकरोध्यायस्त्रयोविंशकःश्रीम० ॥ २३ ॥ इति श्रीमद्भारततात्पर्यनिर्णयस्यटीकायांत्रयोविंशोध्यायः ॥

श्रीगुरुभ्योनमः ॥ ॐ कृष्णस्यानुमतेआनुकूल्येइत्यर्थः । धृतराष्ट्राये तेकर्मणिचतुर्थी । शांतयेकौरवपांडव विरोधशांतये ॥ १ ॥ तेत्वया ॥ २ ॥ कुतइत्यत्रआह । यस्येति । नेताप्रेरकः ॥ ३ ॥ तीर्थानिआच्छाद्यपरिवार्यसंस्थिताः ॥ ४ ॥ तिस्रःकोट्यःत्रिकोटिसंख्याकाःमहावीर्याः तीर्थविघ्नकराःतीर्थेस्नानादिकुर्वतांविघ्नकराः निवारकाइत्यर्थः राक्षसाधिपाःहितैषिणाहितमिच्छता भीमेनयथा अप्रयासेनेत्यर्थः निषूदिताःतथातेत्वयाश्रुताः ॥ ५ ॥ ततोहिराक्षसवधानंतरम् ॥ ६ ॥ विप्ररूपेणपां

ॐ ततः संमंत्र्यानुमते कृष्णस्य स्वपुरोहितम् ॥ द्रुपदः प्रेषयामास धृतराष्ट्राय शांतये ॥ १ ॥ स गत्वा धृतराष्ट्रं तं भीष्मद्रोणादिभिर्युतम् ॥ उवाच न विरोधस्ते उत्पाद्यो धर्मसूनुना ॥ २ ॥ यस्य भीमार्जुनौ योधौ नेता यस्य जनार्दनः ॥ श्रुतास्ते भीमनिहता जरासंधादयोऽखिलाः ॥ ३ ॥ यथा ते रुद्रवचनादवध्या राक्षसाधिपाः ॥ तीर्थविघ्नकराः सर्वे तीर्थान्याच्छाद्य संस्थिताः ॥ ४ ॥ तिस्रः कोट्यो महावीर्या भीमेनैव निषूदिताः ॥ ५ ॥ भ्रातॄणां ब्राह्मणानां च लोकानां च हितैषिणा ॥ ततो हि सर्वतीर्थानि गम्यान्यासन्नृणां क्षितौ ॥ ६ ॥ यथा जटासुरः पापः शर्वाणीवरसंश्रयात् ॥ अवध्यो विप्ररूपेण वंचयन्नेव पांडवान् ॥ ७ ॥ ज्ञात्वापि भीमसेनेन विप्ररूपस्य नो वधः ॥ योग्य इत्यहतो भीमे मृगयार्थं गते क्वचित् ॥ ८ ॥ यमौ युधिष्ठिरं कृष्णां चादायैव पराद्रवत् ॥ दृष्टो भीमेन तांस्त्यक्त्वा संसक्तस्तेन संगरे ॥ ९ ॥ निपात्य भूमौ पादेन संचूर्णितशिरास्तमः ॥ जगाम किमु ते पुत्राः शक्या हंतुमिति स्म ह ॥ निवातकवचाश्चैव हताः पार्थेन ते श्रुताः ॥ १० ॥ जानासि च हरेर्वीर्यं यस्येदमखिलं वशे ॥ स ब्रह्मरुद्रशक्राद्यं चेतनाचेतनात्मकम् ॥ ११ ॥ तस्मादेतैः पालितस्य धर्मजस्य स्वकं वसु ॥ दीयतामिति तेनोक्तो धृतराष्ट्रो न चाकरोत् ॥ १२ ॥

डवान्वंचयन् जटासुरःभीमसेनेनैवज्ञात्वापि विप्ररूपस्यवधोनोयोग्यइतिहेतोरहतः ॥ ७ ॥ ८ ॥ तान्यमादीन् तेनभीमेनसंगरेसंसक्तःप्रवृत्तइत्यर्थः । अभूदितिशेषः । निपात्यभीमेनेतिशेषः तेपुत्राःदुर्योधनाद्याःहंतुंशक्याइतिस्मकिमुवक्तव्यम् ॥ ९ ॥ १० ॥ यस्यकृष्णस्य ॥ ११ ॥ स्वकंद्यूतापहृतंयुधिष्ठिरसंबंधीत्यर्थः । वसुराज्याख्यंद्रव्यं तेनद्रुपदपुरोधसा ॥ १२ ॥

युद्धसाहाय्यंयुद्धार्थसाहाय्यं युगपदेककालेययतुः स्वस्ववासस्थानादितिशेषः । तत्रगमनेदुर्योधनःवेगेनार्जुनमजयत् । अर्जुनात्पूर्वमेवकृष्णं गपेतिभावः ॥ १३ ॥ राजराजोहंपादयोरुपनास्येनस्थास्यामीतिदर्पाद्दर्वात् शिरस्थानेआसीनोभूत् ॥ १४ ॥ धनंजयोर्जुनःभक्त्युद्रेकात्प्रह्वोनम्रःसन् पादयोःप्रणम्य तत्रपादस्थानेऽतिष्ठत ॥ १५ ॥ १६ ॥ पूर्वमागतमितिवाक्यशेषः । देवःकृष्णःसुयोधनपूर्वमागतंजानन्नपि प्रथमंतमर्जुनमैक्षत् ॥ १७ ॥ हेफल्गुनस्वागतमित्युक्तेसति अहंपूर्वंआदौआगं

ततः सहैव यदुभिः कृष्णं द्वारवतीं गतम् ॥ युद्धसाहाय्यमिच्छंतौ धार्तराष्ट्रधनंजयौ ॥ युगपद्ययतुस्तत्र वेगेनाजयदर्जुनम् ॥ १३ ॥ दुर्योधनः शिरस्थान आसीनोभूद्धरेस्तदा ॥ दर्पान्नाहं राजराज उपास्ये पादयोरिति ॥ १४ ॥ तयोरागमनं पूर्वं ज्ञात्वैव हि हरिः प्रभुः ॥ असुप्तः सुप्तवच्छिश्ये तत्रातिष्ठद्धनंजयः ॥ १५ ॥ प्रणम्य पादयोः प्रह्वो भक्त्युद्रेकात्कृतांजलिः ॥ १६ ॥ तमैक्षत्प्रथमं देवो जानन्नपि सुयोधनम् ॥ स्वागतं फल्गुनेत्युक्ते पूर्वमागामहं त्विति ॥ १७ ॥ आह दुर्योधनस्तं च स्वागतेनाभ्यपूजयत् ॥ १८ ॥ तयोरागमने हेतुं श्रुत्वा प्राह जनार्दनः ॥ एकः पूर्वागतोत्रान्यः पूर्वदृष्टो मया यतः ॥ १९ ॥ समं करिष्ये युवयोरेकत्राहं निरायुधः ॥ अन्यत्र दशलक्षं मे पुत्राः शूराः पदातयः ॥ २० ॥ इत्युक्ते फल्गुनः कृष्णं वव्रे तद्भक्तिमान्यतः ॥ अन्यस्तत्राभक्तिमत्त्वाद्वव्रे गोपान् प्रयुध्यतः ॥ २१ ॥ पार्थानामेव साहाय्यं करिष्यन्नपि केशवः ॥ तस्याभक्तिं दर्शयितुं चक्रे समवदीश्वरः ॥ २२ ॥ ॥ ७ ॥

आगतोस्मीतिदुर्योधनआह । तंदुर्योधनम् ॥ १८ ॥ अत्रमत्समीपे अन्यःद्वितीयोर्जुनःपूर्वदृष्टोयतः ॥ १९ ॥ अतःयुवयोःसमंकरिष्ये साहाय्यमितिशेषः । साम्यमेवदर्शयति एकत्राहमिति । एकत्रएकस्मिन्पक्षेनिरायुधोहंस्यामितिशेषः । अन्यत्रद्वितीयपक्षेमेपदातयः पादचारिणःसुताःस्युः ॥ २० ॥ अन्यःसुयोधनःतत्रकृष्णेऽभक्तिमत्वाद्द्वेषित्वात् प्रयुध्यतः युद्धकारिणःगोपान् ॥ २१ ॥ तस्यदुर्योधनस्य ईश्वरोपिब्रह्मादिभ्यःसमर्थोपि समवच्चक्रे स्वस्यगोपानामितिशेषः ॥ २२ ॥ ॥ ॥ ॥

तत्स्नेहवानपि तस्मिन्सुयोधनेप्रीतिमानपिसरामःनकरोमीतिप्राह ॥ २३ ॥ कुतइत्यतआह । उपप्लाव्यइति । तत्पक्षीयंदुर्योधनपक्षपातवद्वचोब्रुवन्रामःकेशवस्यसमक्षं पुरतःनिराकृतः निंदितोभूदितिशेषः यतः ॥ २४ ॥ ततःनायात्नागात् सचदुर्योधनःहार्दिक्यःकृतवर्मा ॥ २५ ॥ नानादेश्यैःनानादेशभवैर्नृपैःधार्तराष्ट्रस्यएकादशअक्षौहिण्यः अभवन् पांडुसुतानांमत्स्यादिभिर्युताःसप्ताक्षौहिण्योभवन् ॥ २६ ॥ चेकितानःतन्नामकयादवः ॥ २७ ॥ आवंत्यौअवंतीराजानौविंदानुविंदौ । अन्यकैकयाःदेवपक्षि

ततः पार्थेन सहितः पांडवान् केशवो ययौ ॥ दुर्योधनो ययौ रामं स भयात्केशवस्य च ॥ न सहाय्यं करोमीति प्राह तत्स्नेहवानपि ॥ २३ ॥ उपप्लाव्ये सभायां हि तत्पक्षीयं वचो ब्रुवन् ॥ निराकृतः सात्यकिना समक्षं केशवस्य च ॥ ॥ २४ ॥ ततो दुर्योधनं नायात्स च हार्दिक्यसंयुतः ॥ जगाम हास्तिनपुरमक्षौहिण्यो दशाभवन् ॥ २५ ॥ एका च धार्तराष्ट्रस्य नानादेश्यैर्नृपैर्युताः ॥ सप्त पांडुसुतानां च मत्स्यद्रुपदकैकयैः ॥ २६ ॥ धृष्टकेतुजरासंधसुनकाशिनृपैर्युताः ॥ पुरुजित्कुंतिभोजश्च चेकितानश्च सात्यकिः ॥ २७॥ पांडवान्सेनया युक्ताः समीयुर्देवपक्षिणः ॥ विंदानुविंदावावंत्यौ जयत्सेनोन्यकैकयाः ॥ क्षेमधूर्तिर्दंडधरः कलिंगोंबष्ठ एव च ॥ २८ ॥ श्रुतायुरच्युतायुश्च बृहद्वलसुदक्षिणौ ॥ श्रुतायुधः सैंधवश्च राक्षसोलंबुसस्तथा ॥ अलायुधोलंबलश्च दैत्या दुर्योधनं ययुः ॥ २९ ॥ गत्वा दुर्योधनाहूतो भगदत्तोपि तं ययौ ॥ ३० ॥ सपुत्रपौत्रो बाल्हीको भीष्मद्रोणकृपा अपि ॥ प्रीत्यर्थं धृतराष्ट्रस्य बभूवुस्तत्सुतानुगाः ॥ ३१ ॥ पांड्यश्च वीरसेनाख्यः पांडवानेव संश्रितः ॥ ३२ ॥ शल्यं च पांडवानेव यातं ज्ञात्वा सुयोधनः ॥ सुसभाः कारयामास सर्वभोगसमन्विताः ॥ ३३ ॥ ता युधिष्ठिरकृप्ताः स मत्वा शल्योब्रवीदिदम् ॥ ॥

पंचकैकयेभ्योन्येऽसुरपक्षिणः ॥ २८ ॥ राक्षसोलंबुसःअलंबुसःअलायुधःअलंबलइतित्रिभिरपिप्रत्येकमन्वयः ॥ २९ ॥ गत्वाभगदत्तगृहमितिशेषः । अपिशब्देनभगदत्तस्यदेवत्वेसत्यपीत्यर्थः ॥ ३० ॥ पुत्रादिसहितोबाल्हीकश्चभीष्मादयःधृतराष्ट्रस्यप्रीत्यर्थं तत्सुतस्यदुर्योधनस्यानुगाःअनुसारिणःबभूवुः ॥ ३१ ॥ पांड्यःपांड्यदेशपतिर्वीरसेनाख्यः ॥ ॥ ३२ ॥ पांडवानेवप्रतियांतंगच्छंतम् ॥ ३३ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

सशल्यः ताः सभाः युधिष्ठिरेणकृताः कारिताइतिमत्वा यएताः कारयामास अहंतदभीष्टंतस्यसभाःकारितवतः अभीष्टंकामं करोमीतिइदंवचोब्रवीत् ॥ ३४ ॥ लीनः छन्नोधार्तराष्ट्रःश्रुत्वा शल्योक्तमितिशेषः । वचःसत्यंकुर्वित्यभाषत । किंतेभीष्टमितिशल्येनपृष्टोदुर्योधनइतिवाक्यशेषः । मेयुद्धसाहाय्यंदेहीत्यभाषतेतिसंबंधः । सोपिशल्योपियशः अर्थयन्इच्छन्सन् आत्मवाक्यस्यरक्षार्थंरक्षितुम् ॥ ३५ ॥ ततःसशल्यःपांडवान्प्रतिगत्वा तैःपांडवैरनुज्ञातएव दुर्योधनसाहाय्यार्थंआज्ञापितःसन्नेव धनंजयकृतेअर्जुनस्यजयार्थं कर्णस्यतेजोवधार्थंसामर्थ्यभंगंकर्तुंअर्थितःयाचितः युधिष्ठिरेणेतिशेषः । युद्धसमयेअर्जुनप्रसंगेनकर्णस्यगर्वःतेनकर्णस्यपराजयंकर्तुंअर्थितइतिभावः ॥ धर्मनंदनंप्रतितथाऽस्त्वित्युक्त्वाययौ ॥ ३६ ॥ ३७ ॥ शांतयेविरोधपरिहारार्थं ससंजयःअधर्मपापहेतुयुद्धंप्रत्यपादयत् प्रतिपादयामास ॥ ३८ ॥ निरुत्तरंउत्तररहितंसंजयंचकार ॥ ३९ ॥ तस्यधर्मस्ययुधिष्ठिरोक्तधर्मस्य प्रामाणिकत्वम् ॥४० ॥ ससंजयःप्रणम्यधृतराष्ट्रंप्रतिययौ । तंधृतराष्ट्रंविनिंद्यगृहंस्वगृहम् ॥४१ ॥धर्मंपप्रच्छ । सःपार्थानांराज्यदापनंधर्ममवदत् ॥ ४२ ॥ तद्राज्यदापनंअनिंदितं धर्मरूपमित्यर्थः । ऐहिकस्यभूलोकसंबंधिनःसुखस्यपुत्रधनादिप्राप्तिरूपसुखस्यकारणम् । अन्यथाराज्यदापनाभावेसर्वपुत्राणांनाशंधर्मातिलंघनंधर्मस्यातिलंघनं अतिक्रमणंचात्रददितिपूर्वेणान्वयः ॥ ४३ ॥ तत्रराज्यदापनेभावंचित्तंअकृत्वा अघक्षयंपांडवद्वेषाज्जातस्याघस्यदोषस्यक्षयंनाशं ज्ञानादिच्छन् विष्णोःस्वरूपंपप्रच्छ । सविदुरःसनातनंसनातनाख्यंऋषिंअस्मरत् चिंतयामास । बोधयितुमितिशेषः ॥ ४४ ॥ ॥ ॥

य एताः कारयामास तदभीष्टं करोम्यहम् ॥ ३४ ॥ लीनः श्रुत्वा धार्तराष्ट्रः सत्यं कुर्वित्यभाषत ॥ देहि मे युद्धसाहाय्यमिति सोपि यशोर्थयन् ॥ ३५ ॥ रक्षार्थमात्मवाक्यस्य तथेत्येवाभ्यभाषत ॥ स पांडवांस्ततो गत्वा तैरनुज्ञात एव च ॥ ३६ ॥ तेजोवधार्थं कर्णस्य धनंजयकृतेऽर्थितः ॥ तथेत्युक्त्वा ययौ धर्मनंदनं कौरवान् प्रति ॥ ३७ ॥ संजयं प्रेषयामास धृतराष्ट्रोथ शांतये ॥ पांडवान्प्रत्यधर्मं च युद्धं स प्रत्यपादयत् ॥ ३८ ॥ हठवादेवदद्भीमो यं धर्मं द्रौपदी तथा ॥ तमेवोक्त्वा धर्मजस्तं चकार च निरुत्तरम् ॥ ३९ ॥ कृष्णोपि तस्य धर्मस्य प्रामाण्यं प्रत्यपादयत् ॥ ॥ ४० ॥ ततो निरुत्तरः कृष्णं पांडवांश्च प्रणम्य सः ॥ धृतराष्ट्रं ययौ तं च विनिंद्य प्रययौ गृहम् ॥ ४१ ॥ निंदितः संजयेनासावाहूय विदुरं निशि ॥ पप्रच्छ सोवदद्धर्मं पार्थानां राज्यदापनम् ॥ ४२ ॥ ऐहिकस्य सुखस्यापि कारणं तदनिंदितम् ॥ अन्यथा सर्वपुत्राणां नाशं धर्मातिलंघनम् ॥ ४३ ॥ तत्र भावमकृत्वा स ज्ञानादिच्छन्नघक्षयम् ॥ विष्णोः स्वरूपं पप्रच्छ सोस्मरच्च सनातनम् ॥ ४४ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

ससनातनमुनिःआगत्य विष्णोस्तत्त्वंस्वरूपंअवदत् । मायाविनःकपटिनःशुभागतिःसमीचीनागतिःनचेत्यवदत् ॥ ४५ ॥ तद्धर्मजोक्तंश्रुत्वा भीतोपिपुत्रेषुयःस्नेहःतमनुगः अनुसृतोनृपःराज्यंनादात् । ततःधर्मसुतोनृपःनोस्माकंपिताधृतराष्ट्रःराज्यंनःयदिदित्सतिदातुमिच्छतितदातर्हि त्वमागच्छविदुरोवाआगच्छतु । नचेन्नदित्सतिचेत्तर्हि नचत्व माग च्छविदुरोपिमागच्छतु इतिसंजयायउक्तवान् । यद्यस्मात्तत्तस्मात् । तौसंजयविदुरौनागतौअनागतौज्ञात्वाऽथ शौरिणाकृष्णेनसहमंत्रयामास ॥ ४६ ॥ ४७ ॥ सो पिकृष्णाप्याह । किमिति । अहंगमिष्यामिहस्तिनपुरमितिशेषः । सभायांपथ्यानिहितकराणियुक्तानि शास्त्रसंमतानिवक्ष्येवाक्यानीतिशेषः । यद्यसौदुर्योधनःनग्रहीष्य

स आगत्यावदत्तत्त्वं विष्णोर्मायाविनःशुभा ॥ न गतिश्चेत्यथ प्राप्तः संजयः पांडवोदितम् ॥ अवदद्धृतराष्ट्राय सभा यां कुरुसन्निधौ ॥ ४५ ॥ तच्छ्रुत्वा स तु भीतोपि पुत्रस्नेहानुगो नृपः ॥ राज्यं नादात्पांडवानां ततो धर्मसुतो नृपः ॥ ४६ ॥ यदुक्तवान्संजयाय यदि दित्सति नः पिता ॥ राज्यं तदा त्वमागच्छ विदुरो वा न चेन्न च ॥ तावथाना गतौ ज्ञात्वा मंत्रयामास शौरिणा ॥ ४७ ॥ सोप्याहाहं गमिष्यामि सभायामृषिसन्निधौ ॥ ४८ ॥ वक्ष्ये पथ्यानि युक्तानि यदि नासौ ग्रहिष्यति ॥ वध्यः सर्वस्य लोकस्य स भवेत्सर्वधर्महा ॥ ४९ ॥ इत्युक्तो वैरमात्मोत्थं लोकमध्ये प्रहापयन् ॥ लोकसंग्रहणार्थाय भीमसेनोऽब्रवीद्वचः ॥ ५० ॥ नास्मन्निमित्तं नाशः स्यात्कुलस्यापि वयं कुलम् ॥ रक्षितुं धार्तराष्ट्रस्य भवेमाधश्वरा इति ॥ ५१ ॥ इच्छताप्यखिलान्हंतुं धार्तराष्ट्रान् दृढात्मना ॥ भीमेनोक्तो वासुदे वो लोकसंग्रहणेच्छया ॥ ५२ ॥ वधं तेषां धर्ममेव लोके ख्यापयितुं हरिः ॥ आक्षिपन्निव भीमं तं युद्धाय प्रैरयद्दृढम् ॥ ५३ ॥ ॥ ॥ ॥ ॥ ॥

तिर्हि सदुर्योधनःसर्वस्यलोकस्यवध्यःवधार्हःभवेत् । सर्वधर्महाभवेत् श्रुतिःस्मृत्युक्तार्थःविष्णोराज्ञात स्मात्कृष्णाज्ञायाअकरणात् ससर्वधर्मपरित्यागीभवेदितिभावः ॥ ४८ ॥ ॥ ४९ ॥ भीमसेनः आत्मोत्थंआत्मनिमित्तेनजातंवैरंलोकमध्येप्रहापयन् विमोचयन् लोकसंग्रहणार्थायवचोब्रवीत् ॥ ५० ॥ किमिति । अधश्वराःसेवकाः भवेमइ त्यब्रवीदितिसंबंधः ॥ ५१ ॥ दृढात्मनाअचलांतःकरणेन धार्तराष्ट्रान्हंतुमिच्छतापिभीमेनलोकसंग्रहणेच्छयोक्तोवासुदेवः धर्ममेवधर्मस्वरूपमेव तेषांधार्तराष्ट्राणांवधंख्या पयितुं हरिःभीमंआक्षिपन्निवभर्त्सयन्निव दृढंयथास्यात्तथा युद्धायप्रैरयत् ॥ ५२ ॥ ५३ ॥

केशवस्यअभिप्रायंमयास्वबलकीर्तनंकर्तव्यमित्यभिप्रायंजानन् भीमःनिजंबलंसर्वेषांनाशकरणेसामर्थ्यवत्स्वकीयंबलंराज्ञांमध्येऽवदत् । कृष्णःसत्यैःयथार्थैःसद्वाक्यैःव्याकरणविरोधादिदोषरहितैर्वाक्यैः सद्धर्मसतांधर्मःसंश्वासौधर्मश्चेतिवातंतया सद्धर्मसाधनभूतमित्यर्थः कुरूणांवधंप्रकाशयन् भीमस्यअमितान् क्षमाबलवीर्याद्यसंख्यान्गुणान् प्रकाशयन् राज्ञांमध्ये अभ्यधिकंयथास्यात्तथा तदेवभीमबलमेवशशंसहीत्यन्वयः ॥ ५४ ॥ ५५ ॥ संवादहेतोःसंमत्यर्थंसंवादंआक्षेपसमाधानरूपंअकृतांअकुरुताम् ॥ ५६ ॥ ततःजगत्पतिःकृष्णःसंधिकामुकंसंधानमिच्छंतं अर्जुनंहेतुमद्भिःयुद्धकारणनिमित्तवद्भिः शुभैःयुद्धेनिर्दोषत्वस्थापकैःअनुनीययुद्धार्थमनुकूलयित्वा न

अभिप्रायं केशवस्य जानन् भीमो निजं बलम् ॥ राज्ञां मध्येवदत्तच्च कृष्णोभ्यधिकमेव हि ॥ ५४ ॥ शशंस सत्यैः सद्वाक्यै राज्ञां मध्ये प्रकाशयन् ॥ वधं कुरूणां सद्धर्मं गुणान् भीमस्य चामितान् ॥ ५५॥ नित्यमेकमनस्कौ तावपि केशवमारुती ॥ एवं लोकस्य संवादहेतोः संवादमक्रताम् ॥ ५६ ॥ ततः कृष्णोर्जुनं चैव कृपालुं संधिकामुकम् ॥ हेतुमद्भिः शुभैर्वाक्यैरनुनीय जगत्पतिः ॥ उक्तो मानुषया बुद्ध्या नकुलेन सुनीतिवत् ॥५७॥ शौर्यप्रकाशनायैव युद्धं योजयताद्भवान् ॥ इत्युक्तः सहदेवेन युयुधानेन चाच्युतः ॥ ५८ ॥ दस्यूनां निग्रहो धर्मः क्षत्रियाणां यतः परः ॥ अतो न धार्तराष्ट्रैर्नः संधिः स्यादिति पार्षती ॥ ५९ ॥ जगाद कृष्णं सोप्येनामोमित्युक्त्वा विनिर्ययौ ॥ ६० ॥ ससात्यकिः स्यंदनवर्यसंस्थितः पृथातनूजैरखिलैश्च भूमिपैः ॥ अन्वागतो दूरतरं गिरा तान् संस्थाप्य विप्रप्रवरैः कुरून्ययौ ॥

कुलेनसुनीतिवत् समीचीननीतिज्ञवत् मानुषयाबुध्यामनुष्यस्वभावेनोक्तःशिक्षितइत्यर्थः अभूदितिशेषः । मनुष्यस्वभावेन अयंकृष्णःसर्वज्ञइत्यजानतानकुलेन एवंकुर्विंतिशिक्षितोभूदितिभावः ॥ ५७ ॥ सहदेवेनशौर्यप्रकाशनायैव स्वशूरत्वंप्रकटीकर्तुं भवान्युद्धंयोजयतात् योजयतु इतिअच्युतःउक्तोभूदितिवाक्यशेषः । युयुधानेनचसात्यकिना एवमेवोक्तोभूदित्यर्थः ॥ ५८ ॥ दस्यूनांनिग्रहःजीवग्राहःहननमित्यर्थः । यतोधर्मःअतः ॥ ५९ ॥ ६० ॥

दूरतरं अतिदूरं अन्वागतःसहागतःगिरातिष्ठध्वमितिवाक्येनतान्संस्थाप्य विप्रवरैः सह भार्गवात्माव्यासात्मकश्चेति एकोपिसकृष्णः मुनींद्रैरनुगतःभार्गवव्यासाभ्यांचानुगतो ययौ नन्वेकश्वेद्व्यासभार्गवरूपेण कृष्णमनुकिमर्थंययावित्यतआह ।तदुक्तेरिति तदुक्तेःतस्यकृष्णस्योक्तेःवक्ष्यमाणोक्तेःगुणानभिप्रायान्प्रवेत्तुं सम्यग्ज्ञातुंतंप्रभुंविष्णुंऋतेऽन्यः पुरुषःशक्तोनहिनास्तिः यतःअतोययावितिसंबंधः । एकोपिविष्णुःसचेतिक्वचित्पाठः ॥ ६१ ॥६२ ॥ अब्जजादिभिःसुरैःप्रसूनवर्षैःअभिवर्षितश्च॥६३॥सरसाभियातःस्नेहेन

एकोपि कृष्णः स च भार्गवात्मा व्यासात्मकश्चानुगतो मुनींद्रैः ॥ ६१ ॥ ययौ तदुक्तेर्हि गुणान्प्रवेत्तुं नान्यो हि शक्त स्तम्ऋते यतः प्रभुम् ॥६२॥ स वंद्यमानोखिलराष्ट्रवासिभिः प्रसूनवर्षैरभिवर्षितः सुरैः॥संस्तूयमानः प्रणतोऽब्जजादिभि र्गजाह्वयं प्राप परोऽप्रमेयः ॥ ६३ ॥ स भीष्ममुख्यैः सरसाभियातः सहैव तैः प्रययौ राजमार्गे ॥ दिदृक्षवस्तं ज गदेकसुंदरं गुणार्णवं चाययुरत्र सर्वे ॥ ६४ ॥ संभावितस्तैः परमादरेण विवेश गेहं नृपतेरनंतः ॥ स भीष्ममु ख्यान् पुरतो निधाय वैचित्रवीर्येण समर्चितोजः ॥ ६५ ॥ रौक्मे निषण्णः परमासने प्रभुर्बभौ स्वभासा ककुभोऽ वभासयन् ॥ ६६ ॥ यथोचितं तेषु विधाय केशवो दौर्योधनं प्राप्य गृहं च पूजितः ॥ पूजां तदीयां गुणवद्विड्वि त्यसौ जग्राह नो विदुरं चाजगाम ॥ ६७ ॥ स भीष्मपूर्वैरभियाचितोपि जगाम नैषां गृहमादिदेवः ॥ उपेक्षिता द्रौ पदीत्यप्रमेयो जगाम शीघ्रं विदुरस्य गेहम् ॥ ६८ ॥ ॥

सहितंयथास्यात्तथाभियातः ॥ ६४ ॥ संभावितःमानितः ॥ ६५ ॥ पुरतोनिधायअपेक्ष्य रौक्मेहेममयेनिषण्णःउपविष्टः । स्वभासास्वतेजसाककुभःदिशःअवभा सयन्प्रकाशयन् ॥ ६६ ॥ तेषु भीष्मादिषु यथोचितंयथायोग्यंविधाय मानादिकमितिशेषः । पूजितश्चपूजितोपिअसौसुयोधनःगुणवद्विट्गुणवतांपार्थानांद्विड्वितित दीयांदुर्योधनविहितांपूजांनोजग्राह ॥ ६७ ॥ भीष्मपूर्वैरभियाचितोप्यस्मद्गृहंप्रत्यागंतव्यमितिप्रार्थितोपि द्रौपदीवस्त्राहरणकाले उपेक्षितेति एषांभीष्मादीनां शीघ्र मित्युक्त्याविदुरेप्रीतिविशेषःसूचितः ॥ ६८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

अंतर्गृहस्यांतःभक्त्याऽभिपूर्णेन अतएवससंभ्रमेणविदुरेणसर्वसमर्पणेनदेहेंद्रियपुत्राद्यर्थसमर्पणेन संपूजितोभूदितिशेषः ॥ ६९ ॥ असौकृष्णःपरमार्थोविष्णुःतंवेदिभिःजानद्भिः ॥ ७० ॥ तत्रसभायांयथोचिताःदेशकालोचिताःवार्ताःकथाःविधायप्रोच्य । कलिकल्मषापहःकलिमलनाशकःकृष्णः कालेविवक्षितार्थकथनोचितकालेजगाद ॥ ॥ ७१ ॥ तदैवममप्रसादं आप्नोषिएष्यसि ॥ ७२ ॥ अतःराज्यदानादन्यथायशसःधर्मतश्चहीनःबाह्यःसन् । मेप्रतीपत्वंउपैषियतःअतःप्रदेहीतिपूर्वेणसंबंधः । ममातिवर्तिनंमे

स तेन भक्त्याभिगतः प्रसन्नः प्रविश्य चांतर्गृहमीश्वरोऽजः ॥ भक्त्याभिपूर्णेन ससंभ्रमेण संपूजितः सर्वसमर्पणेन ॥ ६९ ॥ परे दिनेसौ धृतराष्ट्रसूनुना संमानितः संसदि कौरवाणाम् ॥ विवेश दिव्ये मणिकांचनासने सार्धं मुनींद्रैः परमार्थवेदिभिः ॥ ७० ॥ संपूजितो भीष्ममुखैः समस्तैः रराज राजीवसमाननेत्रः ॥ यथोचितास्तत्र विधाय वार्ता जगाद काले कलिकल्मषापहः ॥ ७१ ॥ वैचित्रवीर्यस्वकुलस्य वृद्ध्यै प्रदेहि राज्यं तव सत्सुताय ॥ यशश्च धर्मं परमं प्रसादं ममत्वमाप्नोति तदैव राजन् ॥ ७२ ॥ अतोन्यथा यशसो धर्मतश्च हीनः प्रतीपत्वमुपैषि मे तः ॥ इतीरितः प्राह ममातिवर्तिनं सुतं स्वयं मे प्रतिबोधयेति ॥ ७३ ॥ स वासुदेवेन विबोधितोपि पापाभिसंधिर्धृतराष्ट्रसूनुः ॥ उत्थाय तस्मादनुजैरमात्यैर्नियंतुमीशं कुमतिर्व्यधान्मतिम् ॥ ७४ ॥ ये ये तदा केशवसंयमाय न्यमंत्रयंस्ते विबुधप्रतीपाः ॥ अतो विकर्णप्रमुखा अपि स्म वध्यत्वमायन्नशुभां गतिं च ॥ ७५ ॥ कर्णः सुरांशोपि सुयोधनार्थे न्यमंत्रयद्भावतो नैव दुष्टः ॥ अतो गतिश्चास्य सुशोभनाभूयत्रानुकूलाः परमस्य ते शुभाः ॥ ७६ ॥

सुतं स्वयंभवान् प्रतिबोधयेतिप्राह ॥ ७३ ॥ पापाभिसंधिःपापविषयेअभिसंधिराशयःबुद्धिरितियावत् ॥ तस्मात्सभातलात् नियंतुंबद्धुम् ॥ ७४ ॥ केशवसंयमायबंधनार्थं न्यमंत्रयन्विचारयामासुःविबुधप्रतीपाःदेवद्विषः । अतोपिअस्मादपराधादपिविकर्णप्रमुखाधृतराष्ट्रपुत्राःवध्यत्वंवधार्हत्वंआयन्प्रापुः ॥ ७५ ॥ कर्णःसुरांशोपिसुयोधनार्थं सुयोधनप्रीत्यैन्यमंत्रयत् । सहस्रकवचाख्यासुरावेशादितिभावः । भावतःस्वभावात् । अत्रास्मिन्कालेयेअनुकूलास्तेशुभादेवाःदेवानुकूलाश्च ॥ ७६ ॥ ॥ ॥

वासुदेवात्मकेनकृष्णस्वरूपेणएवंचएवंत्रिरूपेणविष्णुनैवानुशिष्टोपि राज्यंदेहीतिशिक्षितोपिसुयोधनः मुकुंदस्यभवबंधमोचकस्यकृष्णस्यानुबंधनंमंत्रयतेविचारयामास । अतएवदुर्मतिः ॥ ७७ ॥ ७८ ॥ तद्बंधनंकृतवर्माणंरहःएकांतेसंस्थाप्य सात्यकिःअत्रकृष्णसमीपेअभ्येत्य केशवंप्रतिदुर्योधनेनकृतंकृष्णबंधनिश्चयंप्राह ॥ ७९ ॥ सर्वगंव्याप्तंमांपश्येत्यवदत् ॥ ८० ॥ तेनधृतराष्ट्रेणसामात्येमंत्रिसहितेपुत्रेआहूतेसति पुरुषोत्तमःपूर्णषड्गुणं पूर्णाःषड्गुणाः यस्यतत्तथा स्वरूपंदर्शयामास । दिव्यदृ

ऋषिभिर्जामदग्न्येन व्यासेनाप्यमितौजसा ॥ वासुदेवात्मकेनैवं त्रिरूपेणैव विष्णुना ॥ ७७ ॥ मातापितृभ्यां भीष्माद्यैरनुशिष्टोपि दुर्मतिः ॥ दुर्योधनो मंत्रयते मुकुंदस्यानुबंधनम् ॥ ७८ ॥ सात्यकिः कृतवर्मा च तच्छ्रुत्वा तुरंजसा ॥ संस्थाप्य कृतवर्माणं रहः सात्यकिरत्र च ॥ अभ्येत्य केशवं प्राह दुर्योधनविनिश्चयम् ॥ ७९ ॥ जानन्नप्यखिलं कृष्णस्तच्छ्रुत्वा सात्यकेर्मुखात् ॥ वैचित्रवीर्यमवदत्पश्य मामिति सर्वगम् ॥ ८० ॥ अथ तेनाहूते पुत्रे सामात्ये पुरुषोत्तमः ॥ स्वरूपं दर्शयामास सर्वगं पूर्णषड्गुणम् ॥ ८१ ॥ तत्कालसूर्यामितदीप्तिसर्वजगद्भरं शाश्वतमप्रमेयम् ॥ दृष्ट्वैव चक्षूंषि सुयोधनाद्या न्यमीलयन् दीधितिवारितानि ॥ ८२ ॥ पिधाय रूपं पुनरेव तद्धरिर्वैचित्रवीर्येण समर्थितः पुनः ॥ कृत्वांधमेव प्रययौ सुयोधनं सहानुगं पापतमं प्रकाश्य ॥ ८३ ॥ अनंतशक्तिः पुरुषोत्तमोसौ शक्तोपि दुर्योधनचित्तनिग्रहे ॥ नैव व्यधादेनमथोक्तकारिणं निपातयन्नंधतमस्यनंतः ॥ ८४ ॥ ॥ ७ ॥

ष्टिदत्त्वेतिशेषः ॥ ८१ ॥ कालःप्रलयकालःतस्मिन्वर्तमानेयःसूर्यः तदपेक्षयाअमितादीप्तिर्यस्यतत्तथा । जगतिभरंपूर्णंशाश्वतंशश्वदेकप्रकारंनित्यमितियावत् । अप्रमेयंप्रमातुमयोग्यं तद्रूपंदृष्ट्वैवसुयोधनाद्याःदीधितिवारितानि दीप्त्याद्रष्टुमशक्तानिचक्षूंषिन्यमीलयन् ॥ ८२ ॥ वैचित्रवीर्येणधृतराष्ट्रेणसमर्थितःआच्छादयेतिप्रार्थितःपुनःअंधम् ॥ ८३ ॥ चित्तनिग्रहेअंतःकरणनिरोधनेशक्तोपि एनंदुर्योधनंउक्तकारिणंत्ववाक्यकारिणंनैवव्यधात् । कुतइत्यतआह । निपातयन्निति ॥ ८४ ॥

तयाकुंत्याधर्मसुतस्यशिष्टंशिक्षितंउद्योगंकौरवैःसहयुद्धोद्योगंश्रुत्वा सूर्यजंकर्णंआत्मयानेनिधायसंस्थाप्य किंचिद्दूरमितिवाक्यशेषः । ययौ पूर्वदिनेकुंतीगृहंप्रत्यागत्य पार्थानामनामयमुक्त्वातांसांत्वयित्वा परेदिनेविश्वरूपंदर्शयित्वातवपुत्राणांकिंवक्तव्यमितिप्रष्टुंपुनःकुंतीगृहंप्रत्यागतइतिभारतकथासूचनार्थंपुनरित्युक्तम् । तस्यकर्णस्यआत्मजन्मआत्मनःकर्णस्यजन्मकुंत्याःसकाशात्तवजन्मउत्पत्तिर्यतःतिशेषः । अतःपार्थान्प्रत्यायाहीत्यवदत् । सकर्णःतद्वचःकृष्णोक्तंवचःनैवाकरोत् । कुतइत्यत्रआह मानितइति । आत्मयानेकुंतींनिधायसूर्यजंकर्णंप्रतियंयौ । कुंतीआत्मनःसकाशाज्जन्मेतिकर्णस्यावददिति । कुंतीपदाध्याहारेण केषांचिद्व्याख्यानेभारतवाक्यविरोधोदृश्यते । तद्वचःकृष्णवचःनैवाकरोदित्यत्रस्ववचनेपिव्याघातः ॥ ८५ ॥ तंकर्णंसंस्थाप्यअधइतिशेषः । पृथातनूजैःसहमित्रभावंमित्रबुद्धिंकुर्विंतिरहःद्रौणयेवदत् । यावत्पितुःद्रो

पुनश्च कुंतीगृहमेत्य कृष्णस्तथोद्योगं धर्मसुतस्य शिष्टम् ॥ श्रुत्वा ययौ सूर्यजमात्मयाने निधाय तस्यावददात्मजन्म ॥ आयाहि पार्थानिति तद्वचः स नैवाकरोन्मानितो धार्तराष्ट्रैः ॥ ८५ ॥ संस्थाप्य तं भगवान् द्रौणये च रहो वदन्मित्रभावं पृथाजैः ॥ यावत्पितुर्मरणं सोपि मैत्रीं वव्रे पार्थैस्तं विसृज्याथ कृष्णः ॥ ८६ ॥ ययौ कुरून् पूर्वमेवोद्विसृज्य पृथासुतानां स सकाशमीशः ॥ ८७ ॥ संप्रार्थितः पृथया चैव कर्णः पार्थैर्योगं याहि सूनुर्ममासि ॥ तेनाप्युक्ता वासविना विनाहं हन्यां सुतांस्तेव कथं च नेति ॥ ८८ ॥ ततो ययुः कौरवाः पांडवाश्च कुरुक्षेत्रं योद्धुकामाः सकृष्णाः ॥ चक्रुश्च ते शिबिराण्यत्र सर्वे शुभे देशे पांडवाः कृष्णबुद्ध्या ॥ ८९ ॥ इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये उद्योगपर्वकथानिरूपणं नाम चतुर्विंशोध्यायः ॥ २४ ॥ ॥

णस्यमरणंतावत्पार्थैःमैत्रींवव्रे तंअश्वत्थामानंविसृज्य पूर्वमेवकर्णसंवादात्पूर्वमेवकुरूनुद्विसृज्य पृथासुतानांसकाशंययौ ॥ ८६ ॥ ८७ ॥ कृष्णगमनानंतरं गंगातीरेजपकाले प्रणामपूर्वकंकिमर्थमागतासीति पृष्टयापृथयात्वंममसूनुरसि चैव अतएवपार्थैःयोगं संयोगंयाहीतिकर्णःसंप्रार्थितोभूदितिशेषः । तेनापिकर्णेनापिवासविनाऽर्जुनेनविनातेसुतान्कथंच नहन्यामित्युक्ताभूत् ॥ ८८ ॥ ततःनागपुरात्कृष्णगमनानंतरम् । अत्रकुरुक्षेत्रे शिबिराणिआवासस्थानानि तेसर्वेकौरवाःपांडवाश्चचक्रुः । तत्रापिविशेषमाह । शुभइति पांडवाःकृष्णबुद्ध्या कृष्णोक्तबुद्ध्याशुभेदेशे जयप्रदेदेशेशिबिराणिचक्रुः ॥ ८९ ॥ यंगंगाज० पूर्तितस्यकृतौसतांसुखकरोध्यायश्चतुर्विंशकः श्रीमद्भारत० ॥ २४ ॥ इति श्रीमद्भारततात्पर्यनिर्णयटीकायां चतुर्विंशोध्यायः ॥ २४ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥

श्रीगुरुभ्योनमः ॥ ॐ तइति । समरारंभेसमरस्ययुद्धस्यारंभोययोस्तेतथा समेतेसम्यक्आसमंतात् इतेप्राप्तेस्वस्वदेशात्कुरुक्षेत्रमितिशेषः । सागरोपमेबलशिक्षाद्यैरितिशेषः । भीमभीष्मौमुखेअग्रेसरौययोस्तेतथा कुरुपांडवपक्षस्थेसेने बांधवानपश्यत् । सेनयोर्मध्यइतिशेषः । तत्रबंधुनिधनेपापाशंकीपापविषये आशंकाविद्यतेयस्यसतथा । मेपापं स्यादितिशंकावानित्यर्थः । धनुर्विससर्जरथेन्यधादितिभावः । तत्रतदामाधवआह । क्षत्रियस्यधर्मज्ञानानुपालनं धर्मज्ञानरक्षणहेतुरूपं दुष्टनिधनंक्षत्रियस्यस्वधर्मः स्वासा धारणोधर्मः । तंस्वधर्मंदुष्टहननमुत्सृज्य निंदितःधर्मशास्त्रेणेतिशेषः । अधःअधोगतिम् ॥ १ ॥ २ ॥३॥ ननु विष्णुपूजायाः स्वधर्मत्वात्कथंदुष्टनिधनंस्वधर्मइत्यतआह । यतइति । यतःविष्णोःसकाशाद्भूतानांप्राणिनांप्रवृत्तिःसर्वव्यापारः येनपरमात्मनाइदंजगत्ततंव्याप्तम् अतएवप्रवृत्तिर्भवतीतिभावः । स्वकर्मणास्ववर्णाश्रमोचितकर्मणासिद्धिं

ॐ ते सेने समरारंभे समेते सागरोपमे ॥ भीमभीष्ममुखे वीक्ष्य प्राह वासविरच्युतम् ॥ १ ॥ सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ इत्युक्तः स तथा चक्रे पार्थोपश्यच्च बांधवान् ॥ विससर्ज धनुः पापाशंकी तत्राह माधवः ॥ २ ॥ स्वधर्मो दुष्टनिधनं धर्मज्ञानानुपालनम् ॥ क्षत्रियस्य तमुत्सृज्य निंदितो यात्यधो ध्रुवम्॥३॥ यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ॥ स्वकर्मणा तमभ्यर्च्य सिद्धिं विंदति मानवः ॥ ४ ॥ न च शोकस्त्वया कार्यो बंधूनां निधनेच्छया ॥ देहस्य सर्वथा नाशादनाशाच्चेतनस्य च ॥ ५ ॥ सृष्टिस्थित्यप्ययज्ञानबंधमोक्षप्रवृत्तयः॥ प्रकाशनियमौ चैव ब्रह्मेशादिक्षरस्य च ॥ ६ ॥ अक्षरप्रकृतेश्चैव मत्त एव नचान्यतः॥ ७॥

मोक्षंविंदतिप्राप्नोति । स्ववर्णाश्रमोचितकर्मकरणंविष्णुपूजैवेतिभावः ॥ ४ ॥ निधनेच्छयाहननेहेतुभूतेच्छयाकुतःशोकोनकार्यइत्याशंक्य किंदेहनाशनिमित्तोवातवशोकः चेतननाशनिमित्तोवा नोभयथापीत्याह । देहस्येति । देहस्यसर्वथायुद्धादिनिमित्ताभावेसत्यपिनिश्चयेननाशात् चेतनस्यानाशाच्चनित्यत्वाच्च ॥ ५ ॥ ननु मत्कृत युद्धान्वयव्यतिरेकानुविधायिनोबंधुदेहनाशस्यकथंयुद्धादिनिमित्तकत्वाभावइत्यतआह । सृष्टीति । अप्यय.प्रलयः बंधःसंसारबंधः । मोक्षःसंसारमोक्षः । प्रवृत्तिः गमनागमनादिचेष्टा । चेष्टाप्रदश्चसर्वेषामितिविष्णुतत्त्वनिर्णयोक्तेः । प्रकाशःज्ञानंनियमःनियमनम् । अक्षरप्रकृतेश्च लक्ष्म्याअपिमत्तएवभवंतीतिशेषः । नचान्यतःअन्यपुरुषात् । लक्ष्म्याःसृष्ट्यादिषुस्थितिप्रवृत्तिप्रकाशनियमनानिमत्तएवेतिभावः । अप्राकृतदेहत्वात्सृष्टिरप्ययश्चनैव । सर्वज्ञत्वादज्ञानबंधौनस्तः । नित्यमुक्तत्वान्मोक्षोपिनविवक्षितः॥६॥७॥

ननु तवाप्यन्यः कश्चित्सृष्ट्यादिकर्तास्तिकिमित्यतआह । नमइति । कुतश्चित्पुरुषात् । कुतःस्वातंत्र्यात्स्वतंत्रत्वात् । स्वतंत्रत्वमपिकुतः गुणपूर्तितःगुणपूर्णत्वात् अतःगुण पूर्णत्वात्समाधिकाभावःममसमाधिकाभावाच्च सर्वंमद्वशंमदधीनंतुल्योत्तमाभावात् । सर्वस्यमद्वशत्वाच्च ममसर्गाद्याःधर्माः नैवेतिसंबंधः ॥ ८ ॥ एषांबंधूनांनिधनाद्यं आद्यशब्देनसृष्टिस्थित्याद्यम् चशब्दान्मद्वशमेवमदधीनमेवज्ञात्वा जीवादेरादिशब्देनाचेतनम् एतादृशस्यजगतःअस्वतंत्रतांअस्वातंत्र्यंज्ञात्वा निवृत्तौयुद्धमकृत्वापरावृत्य गम नविषये अस्वातंत्र्यात्स्वतंत्रत्वाभावात्तवेतिशेषः । युद्धायुद्धस्वयुद्धंकुरु । मांअनुस्मरयुद्धकर्ताहरिरितिस्मरणंकुरु । दुष्टहननंतवपूजेतिवाऽनुस्मर ॥ ९ ॥ स्वकर्मणा तमभ्यर्च्यसिद्धिंविंदतिमानवइत्युक्तंविवृणोति । येत्विति । मत्पराःअहमेवपरउत्कृष्टइतिबुद्धिर्येषांतेमत्पराः येपुरुषाःकर्माणिकर्मफलानिभगवत्पूजार्थमस्त्वितिमयिसंन्य स्यसमर्प्य अनन्येनविष्णौयथातथाऽन्यत्राविद्यमानेन योगेनभक्तियोगेन मांध्यायंतःममध्यानंकुर्वंतःसंतः उपासतेभजंतीत्यर्थः ॥ १० ॥ हेपार्थमयिआवेशितचेतसां

**न मे कुतश्चित्सर्गाद्याः स्वातंत्र्याद्गुणपूर्तितः ॥ अतः समाधिकाभावात्सर्वं मद्वश्यमेव च ॥ ८ ॥ ज्ञात्वैषां निधनाद्यं च जीवादेरस्वतंत्रताम् ॥ अस्वातंत्र्यान्निवृत्तौ च मामनुस्मर युद्ध्य च ॥ ९ ॥ ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ॥ अनन्येनैव योगेन मां ध्यायंत उपासते ॥ १० ॥ तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ॥ भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥ ११ ॥ मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ॥ मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ १२ ॥ सुपूर्णसत्सर्वगुणदेहोहं सर्वदा प्रभुः ॥ अस्पृष्टाखिलदोषैकनित्यसत्तनुरव्ययः ॥ १३ ॥ इत्युक्तो वासविः प्राह व्याप्तिं ते दर्शयेश मे ॥ १४ ॥ अथ दिव्यदृशं तस्य दत्त्वा व्याप्तं निजं वपुः ॥ देशतः कालतश्चैव पूर्णं सर्वगुणैः सदा ॥ दर्शयामास भगवान्यावत्यर्जुनयोग्यता ॥ १५ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥**

आवेशितंस्थापितं चेतोमनोयैस्तेतथा तेषांमद्भक्तानांनचिरात् शीघ्रेणमृत्युरूपसंसारसमुद्रात् समुद्धर्तासंतारकोभवामि ॥ ११ ॥ अव्यक्ताऽदृश्यामूर्तिःस्वरूपंयस्यसत था तेनमयाततंव्याप्तंमत्स्थानिमदाधारभूतानि अहंतेषुभूतेषुनावस्थितःतदाधारत्वेनस्थितोनैवेतिभावः ॥ १२ ॥ सृष्ट्यादिकर्तृत्वे जगद्व्यापकत्वेचकथंशक्तिरित्यतआह । सुपूर्णेति । सर्वदासर्वकालेषुसुपूर्णाःसंतःनिर्दुष्टाःसर्वगुणाःआनंदाद्यनंतगुणाःयस्यसतथा अस्पृष्टाःसंबंधशून्याःअखिलदोषाः पारतंत्र्याद्यखिलदोषाःयस्याःसा अस्पृष्टाखि लदोषाएकप्रकारानित्यासतीशोभनातनुर्यस्यासौतथा । अव्ययःअतएवअहंप्रभुः सर्वविषयेसमर्थइत्यर्थः ॥ १३ ॥ १४ ॥ अथअर्जुनोक्त्यनंतरम् सदा देशतःकालतः सर्वगुणैश्चपूर्णम् अतएवव्याप्तंवपुःस्वरूपम् यावतीअर्जुनयोग्यताअर्जुनस्यद्रष्टुंयोग्यतातावद्दर्शयामास ॥ १५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

पुनस्तत्प्रार्थितःतेनार्जुनेनव्यामंरूपंआच्छादयेतिप्रार्थितःकृष्णःतत्तदेवव्यामंरूपम् लोकमानतःद्वापरांतस्थमनुष्यप्रमाणेन पूर्ववत्पूर्वंविद्यमानरूपवद्दर्शयामास । पुनश्चस्व रूपदर्शनानंतरमपिपुरुषोत्तमः । ज्ञानसाधनभक्तियोगादिज्ञेयंपरतत्त्वं प्रकृत्याद्यस्वतंत्रत्वंज्ञापयन् एनमर्जुनमशिक्षयत्उपदिदेश । तेनकृष्णेनअनुशिष्टःशिक्षितः ॥ १६ ॥ ॥ १७ ॥ अनीकेषुसैन्येषुव्यूढेषुसत्सु व्यूहस्थितेषुसन्नद्धेष्वित्यर्थः समितिंसमूहंप्रति ॥ १८॥ ससृजुःमुमुचुः । ज्ञातिषुस्वगोत्रजेषु प्रहरत्स्वपिताडयत्स्वपि क्षिप्रंस्वयंनैवप्रहर्त व्यंनैवताडनीयमित्येवाभिप्रायेण शत्रुभिःशरविक्षते शरैःप्रतिहतेऽस्मिन्भीमेऽप्रहरतिसति ॥ १९ ॥ सौभद्रःअभिमन्युःदुरासदांप्राप्तुमशक्यामसह्यामित्यर्थः । वृष्टिंमुमुचुः

तत्प्रार्थितः पुनः कृष्णस्तद्रूपं लोकमानतः ॥ पूर्ववद्दर्शयामास पुनश्चैनमशिक्षयत् ॥ १६ ॥ ज्ञानं ज्ञेयं प्रकृत्यादि ज्ञापयन् पुरुषोत्तमः ॥ तेनानुशिष्टः पार्थस्तु सशरं धनुराददे ॥ १७ ॥ अथ व्यूढेष्वनीकेषु नदन्वायुसुतोऽभ्यगात् ॥ समितिं धार्तराष्ट्राणां ते तं सर्वे न्यवारयन् ॥ १८ ॥ ससृजुः शरवृष्टिं च भीमसेनस्य मूर्धनि ॥ क्षिप्रं नैव प्रहर्तव्यं ज्ञातिषु प्रहरत्स्वपि ॥ इत्येवाऽप्रहरत्यस्मिञ्छत्रुभिः शरविक्षते ॥ १९ ॥ अमुचन् धार्तराष्ट्रेषु शस्त्रवृष्टिं दुरासदाम् ॥ सौभद्रप्रमुखा वीराः सर्वे पांडुसुतात्मजाः ॥ २० ॥ अपीडयंस्ताञ्छस्त्रौघैर्धार्तराष्ट्राः समंततः ॥ २१ ॥ ररक्ष तान् वायुसुतो विसृजञ्छरसंचयान् ॥ २२ ॥ तत्र भीमशरैर्नुन्ना धार्तराष्ट्राः समंततः ॥ भग्नांस्तानथ गांगेयो दिव्यास्त्रविद्धारयत् ॥ अथ द्वंद्वानि युद्धानि बभूवुर्विजिगीषताम् ॥ २३ ॥ द्रोणपार्षतयोश्चैव शैनेयकृतवर्मणोः ॥ दुःशासनेन वीरस्य माद्रेयस्य यवीयसः ॥ नकुलस्य विकर्णस्य कार्ष्णेयैर्दुर्मुखादिनां ॥ २४ ॥ वृत्ते द्वंद्वे महायुद्धे तत्र धर्मजपक्षगाः ॥ २५ ॥ जिता विनैव शैनेयं सोऽजयद्धृदिकात्मजम् ॥ अथ भीष्मद्रोणमुखैर्भगदत्तादिभिस्तथा ॥ २६ ॥

॥ २० ॥ तान् सौभद्रादिपांडवसुतान् समंततःसर्वतः अपीडयन् ॥ २१ ॥ तान्सौभद्रादीन्संचयान्समूहान् ॥ २२ ॥ धार्तराष्ट्राःशरैर्नुन्नाःप्रेरिताःविद्राविताइत्यर्थः । आसन्नितिशेषः । दिव्यास्त्रवित्गांगेयोभीष्मस्तान्धार्तराष्ट्रानधारयद्धारस्थापयामासेत्यर्थः । विजिगीषतांअन्योन्यंजेतुमिच्छताम् ॥ २३ ॥ द्वंद्वयुद्धंविशदयति द्रोणेति । यवीयसःकनिष्ठस्य माद्रेयस्यसहदेवस्य कार्ष्णेयैःद्रौपदीपुत्रैः ॥ २४ ॥ २५ ॥ जिताःपराजिताः ॥ २६ ॥ ॥ ॥ ॥ ॥ ॥ ॥

बाहुवीर्येणाजयत् शस्त्रास्त्रबलेनविनैवेतिभावः ॥ २७ ॥ उत्तरंविराटपुत्रं अनीकिनींसेनाम् ॥ २८ ॥ ससौमदत्तिंसौमदत्तिनासहवर्तमानं वरूथिनींसेनांद्रावयंतं उदीर्णास्त्रंउ त्कृष्टास्त्रंभीष्मम् ॥ २९ ॥ द्युसरित्सुतःद्युसरितःगंगायाःसुतोभीष्मःतत्रयुद्धेविक्रांतंपराक्रमिणंसौभद्रंअतीत्य अनादृत्य सव्यसाचिनोर्जुनस्यपश्यतःसतः । अनादरेषष्ठी ॥ ३० ॥ तस्यभीष्मस्यतद्गौरवानुगंतस्यभीष्मस्यगौरवेणानुकूलम् अपाहरत् शिबिरंप्रतीतिशेषः ॥ ३१ ॥ व्यगर्हयत्अभर्त्सयत् सोर्जुनःपुनःकृष्णाद्यैःसांत्वितोबोधितः । यद्वा युधिष्ठिरःसांत्वितःपूर्वंक्रुद्धइतिशेषः पुनर्निर्ययौ ॥ ३२ ॥ एवमनेनैवप्रकारेण तद्युद्धंअकृतोपमं अन्यैःअकृतानकृताउपमायस्यतत्तथा असदृशंभीष्मकृतयुद्ध

विद्राव्यमाणं स्वबलं स्थापयामास मारुतिः ॥ द्रोणं च भगदत्तं च कृपं दुर्योधनं तथा ॥ केवलं बाहुवीर्येण अज यद्भीमविक्रमः ॥२७॥ हत्वोत्तरं मद्रराजो व्यद्रावयदनीकिनीम् ॥२८॥ अथ भीष्ममुदीर्णास्त्रं द्रावयंतं वरूथिनीम् ॥ ससौमदत्तिं सौभद्रसहायोर्जुन आसदत् ॥ २९ ॥ सौभद्रं तत्र विक्रांतमतीत्य द्युसरित्सुतः ॥ द्रावयामास पांचा लान्पश्यतः सव्यसाचिनः ॥ ३० ॥ तस्य विक्रममालक्ष्य पार्थं तद्गौरवानुगम् ॥ दृष्ट्वा युधिष्ठिरो राजा क्रुद्धः सेनामपा हरत् ॥ ३१ ॥ रात्रौ युधिष्ठिरश्चिंतामाप्य पार्थं व्यगर्हयत् ॥ स कृष्णाद्यैः सांत्वितश्च पुनर्युद्धाय निर्ययौ ॥ ३२ ॥ एवं भीष्मो दशाहानि सेनापत्यं चकार ह ॥ कृत्वा तु पांडवैर्युद्धं तत्कर्तुमकृतोपमम् ॥ कर्णोर्धरथ इत्युक्त्वा तावद्युद्धा त्त्रयापितः ॥ ३३ ॥ यावत्त्वं योत्स्यसे तावन्न योत्स्यामीति निर्गते ॥ ३४ ॥ कर्णेयुतरथानां च नित्यशो वधमा हवे ॥ प्रतिजज्ञे करोत्तच्च पुनश्चास्त्रविदां वरः ॥३५॥ सुसमर्थावपि वधे तस्य भीमधनंजयौ ॥ स्नेहेन यंत्रितौ तस्य गौरवाच्चान्ववर्तताम् ॥ ३६ ॥ बभूवुस्तत्र युद्धानि चित्राणि सुबहूनि च ॥ तान्यंबरे विमानस्था ब्रह्मरुद्रपुरःसराः ॥३७॥

मितियावत् कर्तुं कर्णःअर्धरथ इत्युक्त्वा तावत्त्वसेनापत्यंयावत्तावदित्यर्थः । युद्धात्त्वयुद्धात्त्रयापितःनिष्कासितः ॥ ३३ ॥ ३४ ॥ नित्यशःप्रतिदिनंआहवेयुद्धे रथाः रथिनःअयुतसंख्यानांतेषांवधंप्रतिजज्ञेप्रतिज्ञातवान् तच्चप्रतिज्ञातंअकरोत्पुनश्चप्रतिज्ञातादधिकमकरोदित्यर्थः ॥ ३५ ॥ तस्यभीष्मस्यस्नेहेनयंत्रितौबद्धौगौरवादुरुत्वा त् अन्ववर्ततांआनुकूल्येनप्रवर्तताम् ॥ ३६ ॥ ३७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तानियुद्धानिअंबरेआकाशे ॥ ३७ ॥ ३८ ॥ रणेशत्रुभिरजेयःमहेष्वासःउत्तमकार्मुकःधृष्टद्युम्नः आपगासुतंभीष्मंप्रतिव्यूह्यनिरुध्येत्यर्थः । सुबहूनिसुश्रेष्ठानिबहूनिबहुविधानि ॥ ३९ ॥ तत्रधृष्टद्युम्नप्रभृतिभिःभीष्मयुद्धस्यसमाप्तौ अपिएकत्राहंनिरायुधइत्युक्तवाक्योपि कृष्णःमृदुयोधिनंमृदुयथास्यात्तथायुध्यंतंतंफल्गुनंदृष्ट्वा चक्रंउद्दधारऊर्ध्वंकृत्वाददधार । ततश्चक्रग्रहणानंतरम् । भीष्मायभीष्मार्थं बाहुंचक्रोद्यतबाहुं उद्यम्यऊर्ध्वंकृत्वा ॥ ४० ॥ तेनभीष्मेणस्तुतःफल्गुनेनप्रणम्यगृहीतः हस्तेनेतिशेषः । प्रार्थितःयुद्धार्थमागच्छेतियाचितः पुनःरथमारूढःसन् शंखंअपूरयत् ॥ ४१ ॥ अयत्नेनैवअप्रयासेनैवापगासुतःभीष्मः जितश्चपराजितोपि आजौयुद्धेरथानांरथिकानांबहूनिअयुतानि

अपश्यन्देवताः सर्वा गंधर्वाप्सरसोसुराः ॥ ३८ ॥ धृष्टद्युम्नो महेष्वासः प्रतिव्यूह्यापगासुतम् ॥ चक्रे युद्धानि सुबहून्यजेयः शत्रुभी रणे ॥ ३९ ॥ तत्रोद्दधार कृष्णोपि फल्गुनं मृदुयोधिनम् ॥ दृष्ट्वा चक्रं तथोद्यम्य बाहुं भीष्माय जग्मिवान् ॥ ४० ॥ तेन स्तुतो गृहीतश्च फल्गुनेन प्रणम्य च ॥ प्रार्थितो रथमारूढः पुनः शंखमपूरयत् ॥ ४१ ॥ ततो भीष्मोर्जुनश्चैव शस्त्रास्त्रैरभ्यवर्षताम् ॥ अयत्नेन जितश्चैव फल्गुनेनापगासुतः ॥ अयुतानि बहून्याजौ रथानां निजघान च ॥ ४२ ॥ जिताः सेनापहारं च चक्रुर्भीष्ममुखास्ततः ॥ ४३ ॥ कदाचिदग्रगो भीमो भीष्मद्रोणौ विसारथी ॥ कृत्वा विद्राव्य तानश्वान् भित्त्वा व्यूहं विवेश ह ॥ ४४ ॥ पुनः संस्थापितरथौ विजित्यायत्नतो बली ॥ यतमानौ महेष्वासौ धार्तराष्ट्रान् जघान ह ॥ ४५ ॥ पंचविंशद्धतास्तत्र धार्तराष्ट्रा महाबलाः ॥ भगदत्तद्रौणिकृपशल्यदुर्योधनादयः ॥ सर्वे जिता द्राविताश्च सेना च बहुला हता ॥ ४६ ॥ विरथो व्यायुधश्चैव दृढवेधविमूर्छितः ॥ ४७ ॥ कृतो दुर्योधनः सर्वराज्ञां भीमेन पश्यताम् ॥ ततोपहारं सैन्यस्य जिताश्चक्रुश्च कौरवाः ॥ ४८ ॥ ॥

जघान ॥ ४२ ॥ जिताःपराजिताः ॥ ४३ ॥ कदाचित्कस्मिंश्चिद्युद्धकाले अग्रगःभीमःतान्रथयंत्रितान् व्यूहंसेनासमूहंभित्त्वाविदार्य अंतःप्रविवेश ॥ ४४ ॥ बलीभीमःसंस्थापितरथौस्वयंस्थापितरथौयतमानौप्रयत्नंकृतवंतौ महेष्वासौमहाकार्मुकौ भीष्मद्रोणौपुनर्विजित्य धार्तराष्ट्रान् दुर्योधनानुजानजघान ॥ ४५ ॥ तत्रतस्मिन्युद्धेपंचविंशत्पंचविंशतिः । सर्वेजिताःद्राविताश्च भीमेनेतिशेषः बहुलाबह्वी ॥ ४६ ॥ दृढवेधविमूर्छितःगाढप्रहारेणातिमूर्छितः ॥ ४७ ॥ अपहारंशिबिरंप्रतीतिशेषः ॥ ४८ ॥ ॥

क्षरद्गात्रःक्षरत् रक्तंस्रवत् गात्रंदेहोयस्यसतथा । वयंपांडवान्जीयामजयामहे ॥ ४९ ॥ तेपार्थाःअजेयाःतेपार्थाःदेवाःधरणींगताःभुव्यवतीर्णाः तस्यकृष्णस्यप्रियाः ॥ ५० ॥ देवानामवतारेकिंनिमित्तमित्यतआह । मानसेति ॥ ५१ ॥ सब्रह्माभूमेःभारावतरणाय भाररूपाणांहरिद्विषांअपहर्तुंप्रार्थयामास । विभुःब्रह्मातेनहरिणोक्तं वाक्यंदेवानामवदत् ॥ ५२ ॥ किमिति । भूतलेप्रादुर्भावायअवताराय ॥ ५३ ॥ स्वयंचजन्मरहितोपिस्वयंभविष्यतीत्यवददितिपूर्वेणान्वयः ॥ ५४ ॥ एवमनेनप्रकारेण तेनहरिणाब्रह्मणावासमादिष्टाः सम्यकूसापेक्षपूर्वकंआदिष्टाःआज्ञापिताः सेंद्राःसहमरुद्गणाःधर्मवाय्वादयोखिलाःदेवगंधर्वाद्याःपांडवाद्याः आद्यशब्देनयादवाःशल्यबा

दुर्योधनो निशायां च ययौ यत्र नदीसुतः ॥ पीडितो भीमबाणैश्च क्षरद्गात्रो ननाम तम् ॥ उवाच हेतुना केन वयं जीयाम सर्वदा ॥ ४९ ॥ पांडवाश्च जयं नित्यं लब्ध्वा हर्षमवाप्नुवन् ॥ तमाह भीष्मस्तेऽजेया देवास्ते धरणीं गताः ॥ विशेषतः केशवेन पालितास्तत्प्रियाः सदा ॥ ५० ॥ मानसोत्तरशैले हि पुरा ब्रह्मपुरःसराः ॥ स्थिता देवास्तदाऽपश्यन्ब्रह्मैको हरिमंबरे ॥ ५१ ॥ स्तुत्वा संपूज्य भूमेः स भारावतरणाय तम् ॥ प्रार्थयामास तेनोक्तः देवानामवदद्विभुः ॥ ५२ ॥ अयं नारायणो देवः पूर्णानंतगुणार्णवः ॥ आज्ञापयति वः सर्वान्प्रादुर्भावाय भूतले ॥ ५३ ॥ स्वयं च देवकीपुत्रो भविष्यति जगत्पतिः ॥ ५४ ॥ एवं तेन समादिष्टा धर्मवाय्वादयोऽखिलाः ॥ अभवन् पांडवाद्यास्ते सेंद्राः सहमरुद्गणाः ॥ ५५ ॥ स च नारायणो देवो देवकीनंदनोऽभवत् ॥ तेनैते पालिताः पार्था अजेया देवसर्गिणः ॥ तस्मात्तैः संधिमन्विच्छ यदीच्छस्यपराभवम् ॥ ५६ ॥ इत्युक्तो दंभबुद्ध्यैव नत्वा विष्णुं ततो ययौ ॥ प्रातर्निर्यातयामास सेनां युद्धाय दुर्मतिः ॥ ५७ ॥ दिव्यौषधेन भीष्मस्य भूत्वा स निरुजस्ततः ॥ भीष्ममग्रे निधायैव ययौ युद्धाय दंशितः ॥ ५८ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

ह्लीकादयः अभवन्नुत्पन्नाइत्यर्थः ॥ ५५ ॥ देवसर्गिणःदेवेभ्यःसर्गःउत्पत्तिर्येषांतेतथा । देवस्वभावाःएतेपार्थाःतेनकृष्णेनपालिताःअतएवाजेयाःयस्मात्तस्मात् अपराभवंजयमित्यर्थः । यदीच्छसितर्हि संधिंसंधानंअन्विच्छकुर्वित्यर्थः ॥ ५६ ॥ ततःभीष्मशिबिरात्स्वशिबिरंप्रतिययौ । दंभबुद्ध्यैवेत्युक्तंविवृणोति । प्रातरिति । निर्यातयामासप्रेषयामास ॥ ५७ ॥ भीष्मस्यदिव्यौषधेननिरुजोभूत्वा निरोगोभूत्वानिरुजइतिटापंचैवेत्यजंतः दंशितःकवची ॥ ५८ ॥ ॥ ॥ ॥

अनुयायिनां अनुगतानांयुद्धमासीत् । अनिवर्तिनांयुद्धात्परावृत्तिरहितानां पांडवानांकुरूणांचयुद्धमासीत् ॥ ५९ ॥ तत्रतस्मिन्दिने ॥ ६० ॥ आसदत्प्राप । तंद्रोणं सूतहीनंविधाय शत्रुगणान्व्यद्रावयत् ॥ ६१ ॥ कृतवर्माधृष्टद्युम्नंआसदत् । सधृष्टद्युम्नःअभ्ययात् कृतवर्माणमितिशेषः । तावुभौधृष्टद्युम्नकृतवर्माणौ । तत्रतयोर्मध्येद्रौपदिःधृष्टद्युम्नःतंकृतवर्माणं विरथमकरोत् ॥ ६२ ॥ तस्मिन्कृतवर्मणि जत्रुदेशेकंठोरःसंधौ ॥ ६३ ॥ पूगैःसमूहैःपृतनांसेनाम् ॥ ६४ ॥ विधमन् संतापयन् वैवस्वतसाद

तत्रासीत्सुमहद्युद्धं भीमभीष्मानुयायिनाम् ॥ पांडवानां कुरूणां च शूराणामनुवर्तिनाम् ॥ ५९ ॥ धृष्टद्युम्नस्तत्र भीमानुयायी दुर्योधनस्यावरजैः प्रयुध्यन् ॥ संमोहनास्त्रेण विमोहयित्वा विकर्णपूर्वानहनच्च सेनाम् ॥ ६० ॥ ततो द्रोणस्तान्समुत्थाप्य सर्वान्विज्ञानास्त्रेणासदत्पार्षतं च ॥ तं भीमसेनः सूतहीनं विधाय व्यद्रावयच्छत्रुगणाञ्छरौघैः ॥ ॥ ६१ ॥ अथासदत्कृतवर्मा रथेन धृष्टद्युम्नं सोऽभ्ययात्तावुभौ च ॥ ववर्षतुः शरवर्षैरथोग्रैस्तत्राकरोद्विरथं द्रौपदिस्तम् ॥ ६२ ॥ तस्मिन् जिते रथवीरे स्वयं तं दुर्योधनःपार्षतमाससाद ॥ तं भीमसेनो विरथायुधं च कृत्वा बाणेनाहनज्जत्रुदेशे ॥ ६३ ॥ विमूर्छितं तं रुधिरौघमुच्चैर्वमंतमाशु स्वरथे निधाय ॥ कृपो ययौ मारुतिर्धार्तराष्ट्रीं व्यद्रावयत्पृतनां बाणपूगैः ॥ ६४ ॥ अथेंद्रसूनुः केशवप्रेरितेन रथेन शत्रून्विधमञ्छरौघैः ॥ रथान् रणे पंचविंशत्सहस्रान्निनाय वैवस्वतसादनाय ॥ ६५ ॥ तमन्वगाद्युयुधानः सुधन्वा विद्रावयन्धार्तराष्ट्रस्य सेनाम् ॥ तमभ्ययात्सौमदत्तिस्तयोश्च सुयुद्धमासीदतिभैरवास्त्रम् ॥ ६६ ॥ पुत्रान् दशास्याशु निहत्य वीरः स सात्यकेः सौमदत्तिः सकाशे ॥ समर्दयामास शरीरदारणैः शरैरुभौ तौ विरथौ च चक्रतुः ॥ ६७ ॥ ॥ ७ ॥ ॥ ७ ॥

नायमसदनायनिनायप्रेषयामास ॥ ६५ ॥ तंअर्जुनमनुयुयुधानःसात्यकिःअन्वगात् । सौमदत्तिःभूरिश्रवाःतंसात्यकिंअतिभैरवास्त्रं अतिशयेनभयंकराण्यस्त्राणि यस्मिन्युद्धेतत्तथा ॥ ६६ ॥ सात्यकेःसकाशेअस्यसात्यकेःपुत्रान् शरीरदारणैःशरीरविदारकैःशरैःसमर्दयामास पीडयामास सात्यकिमितिशेषः । तावुभौअन्योन्यं विरथंचक्रतुः ॥ ६७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

महासिः महाखड्गोहस्तेयस्यसतथा । तेनआसादितंप्राप्तंअसिपाणिंखड्गहस्तंयुयुधानंवीक्ष्य । अनिलस्यवायोःसुतोभीमः ॥ ६८ ॥ भीमसेनाद्भीमसकाशात् अपाद्रवत्पलायितःमहेंद्रकल्पःपुरंदरतुल्योवासविरर्जुनः आजौयुद्धे ॥ ६९ ॥ प्रबर्हौश्रेष्ठौसंयतियुद्धे जातदर्पौउत्पन्नगर्वौ अर्जुनभीष्मौमहान्मंत्रौषधैरप्यनिवार्यःआशीविषःसर्पःतेनसन्निकाशैःसदृशैःशरैःनाकसदांदेवानांसमक्षं अपरोक्षंयथास्यात्तथाततक्षतुः ॥ ७० ॥ किरीटिनार्जुनेननिशायांरात्रौ आसादितायांप्राप्तायांसत्यांपांडवाश्चययुः ॥ ७१ ॥ तेसेनेसमीयतुःतदातस्मिन्युद्धकालेपरान्शत्रून् ॥ ७२ ॥ तेनभीमेनरथाःइभाःगजाःवाजिनोश्वाःयेषांतेतथा । रथादिमंतोवीराःनिपातिताःहताः । अवशिष्टाःउर्वरिताःप्रदुद्रुवुः

अथासिपाणिं युयुधानमाशु महासिहस्तेन च सौमदत्तिना ॥ आसादितं वीक्ष्य रथं स्वकीयमारोपयामास सुतोऽनिलस्य ॥ ६८ ॥ सुयोधनः सौमदत्तिं स्वकीयरथे व्यवस्थाप्य च भीमसेनात् ॥ अपाद्रवद्वासविर्भीष्ममाजौ समाससादाशु महेंद्रकल्पः ॥ ६९ ॥ उभौ च तावस्त्रविदां प्रबर्हौ शरैर्महाशीविषसन्निकाशैः ॥ ततक्षतुर्नाकसदां समक्षं महाबलौ संयति जातदर्पौ ॥ ७० ॥ स्वबाहुवीर्येण जितः स भीष्मः किरीटिना लोकमहारथेन ॥ सेनामपास्य ययौ निशायामासादितायामथ पांडवाश्च ॥ ७१ ॥ ततः परेद्युः पुनरेव भीमभीष्मौ पुरस्कृत्य समीयतुस्ते ॥ सेने तदा सारथिहीनमाशु भीष्मं कृत्वा मारुतिरभ्ययात्परान् ॥ ७२ ॥ निपातितास्तेन रथेभवाजिनः प्रदुद्रुवुश्चावशिष्टाः समस्ताः ॥ दुर्योधनाद्येषु पराजितेषु भीष्मद्रोणद्रौणिपुरःसरेषु ॥ ७३ ॥ महागजस्थो भगदत्त आगादायन्बाणान् भीमसेनेऽमुचच्च ॥ तेनातिविद्धे भीमसेनेस्य पुत्र उद्यच्छमानं पितरं निवार्य ॥ घटोत्कचोऽभ्यद्रवदाशु वीरः स्वमायया हस्तिचतुष्टयस्थः ॥ ७४ ॥ स वैष्णवास्त्रं भगदत्तसंस्थं विज्ञाय विष्णोर्वरतो विशेषतः ॥ अमोघमन्यत्र हरेर्मरुत्सुतः पुत्रे याते न स्वयमभ्यधावत् ॥ ७५ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

पराजितेषुभीमेनेतिशेषः ॥ ७३ ॥ आयन्आगच्छन्भगदत्तः । तेनभगदत्तेनभीमसेनेऽतिविद्धेसतिताडितेसति । अस्यभीमस्यपुत्रःस्वमायया हस्तिचतुष्टयस्थःस्वयमेवहस्तिचतुष्टयंभूत्वा तत्रस्थःघटोत्कचाख्यःउद्यच्छमानं योद्धुंप्रयतमानंपितरंनिवार्यअभ्यद्रवत् अभिययौ ॥ ७४ ॥ निवारितोभीमःकिमर्थमतिष्ठदित्यतआह सइति । हरेरन्यत्रअमोघमितिसंबंधः । विष्णोःवराहरूपिणोविष्णोःविशेषतोवरतःभगदत्तसंस्थंवैष्णवास्त्रम् ॥ ७५ ॥ ॥ ॥ ।

स्वजीवनार्थंनगतइतिशंकांपरिहरन्नाह । अनुग्रहादिति । वासुदेवस्यनित्यंअविच्छिन्नंयथाभवतितथा । अभ्यधिकाद्रुद्रादिषुविद्यमानादधिकादनुग्रहात् अवध्यंस्वंजानन्नपितद्भक्तिवैशेष्यतएव विष्णुभक्तिप्राबल्यादेव तस्यवराहस्यअरिं प्रतीतिशेषः ॥ ७६ ॥ आत्मनास्वेनजितोभवेदितिकिंवक्तव्यमितिप्रवेत्तुंप्रवेदयितुं सभगदत्तःविस्मृतास्त्रोभवेत अस्त्रमंत्रविषयेविस्मरणंयदाभवतीत्यर्थः ॥ ७७ ॥ एषभगदत्तः ॥ ७८ ॥ चतुर्गजात्माचत्वारोगजाःआत्मास्वरूपंयस्यसतथा । उपरिगात्मकश्चचतुर्गजानां उपरितःपृष्ठेविद्यमानाः आत्मानःस्वरूपाणियस्यसतथा । चतुर्गजस्वरूपंधृत्वा तेषामुपरिचतुःस्वरूपेणस्वयमेवतिष्ठतीतिभावः । घटोत्कचाख्यःसुप्रतीकंगजंतंभगदत्तंचना

अनुग्रहादभ्यधिकादवध्यं जानन्नपि स्वं वासुदेवस्य नित्यम्॥तद्भक्तिवैशेष्यत एव तस्य सत्यं वाक्यं कर्तुमरिं न चागात् ॥ ७६ ॥ यदा स्वपुत्रेण जितो भवेत्स किं स्वात्मनेत्येव तदा प्रवेत्तुम्॥स विस्मृतास्त्रस्तु यदा भवेत तदा भीमो भगदत्तं प्रयाति॥ ७७॥ ऋते भीमं चार्जुनं नास्त्रमेष प्रमुंचतीत्येव हि वेद भीमः ॥ ७८॥ चतुर्गजात्मोपरिगात्मकश्च घटोत्कचः सुप्रतीकं च तं च ॥ नानाप्रहारैर्वितुदंश्चकार संदिग्धजीवौ जगतः समक्षम्॥ ७९ ॥ गजार्तनादं तु निशम्य भीष्ममुखाः समापेतुरमुं च दृष्ट्वा ॥ महाकायं भीममुष्य पृष्ठगोपं च वाय्वात्मजमत्रसन् भृशम्॥ ॥८० ॥ ते भीतभीताः पृतनापहारं कृत्वाऽपजग्मुः शिबिराय शीघ्रम्॥ ८१॥ दिने परे चैव पुनः समेताः परस्परं पांडवाः कौरवास्ते ॥ तत्रासदन्नागसुतासमुद्भवः पार्थात्मजः शाकुनेयान्षडेकः ॥ ८२ ॥ ॥ ७ ॥

नाप्रकारैःप्रहारैरायुधताडनैःवितुदन्व्यथयन् संदिग्धजीवौजीवनविषयेसंशयवंतौचकार ॥ ७९ ॥ गजस्यआर्तनादंकष्टध्वनिम् । महाकायंस्थूलदेहं भीमंभयंकरम् । अमुंघटोत्कचंअमुष्यघटोत्कचस्य पृष्ठगोपंचपृष्ठतोरक्षकंदृष्ट्वा भृशमत्रसन् अतिभीताआसन् ॥ ८० ॥ पृतनासेना समेताःएकत्रमिलिताः ॥ ८१ ॥ तत्रतद्दिनयुद्धे नागसुतायां उलूपिकायांसमुद्भव पार्थात्मजः इरावानेकःषट्शाकुनेयान् शकुनिपुत्रानासदत् ॥ ८२ ॥ ॥ ॥ ॥ ॥

प्रासहस्तैः शकुनिपुत्रैः क्षतकायः शीर्णगात्रः अतिरूढकोप. प्राप्तकोपः धार्तराष्ट्रेषु उग्रं भयं दधत् धारयन् इरावान् तेषां शाकुनेयानाम् ॥ ८३ ॥ अलंबुसाख्यं रक्षः राक्षसं आर्जुनिं अर्जुनापत्यं जहीति दिदेश । तच्च रक्षः नागसुतासमुद्भवं उलूपिकायां जातम् इरावंतम् आसदत् ॥ ८४ ॥ मायायुजोः मायास्रष्ट्रोः तयोः इरावदलंबुसयोः सराक्षसोलंबुसः ससादिनः अश्वारूढपुरुषैः सहितान् अश्वान् असृजत् । तेसादिनः पार्थपुत्रस्य सादिनोऽहन् जघ्नुः । सुपर्णरूपोलंबुसः अनंताकृतिं सर्पाकृतिं आप्तं अहनत् अहन् ॥ ८५ ॥ उग्रपौरुषः घटोत्कचः

तैः प्रासहस्तैः क्षतकायोतिरूढकोपः स खड्गेन चकर्त तेषाम् ॥ शिरांसि वीरो बलवानिरावान् भयं दधद्धार्तराष्ट्रेषु चोग्रम् ॥ ८३ ॥ दृष्ट्वा तमुग्रं धृतराष्ट्रपुत्रो दिदेश रक्षोलंबुसनामधेयम् ॥ जह्यार्जुनिं क्षिप्रमिति स्म तच्च समासदन्नागसुतातनूजम् ॥ ८४ ॥ तयोरभूद्युद्धमतीवदारुणं मायायुजोर्वीर्यवतोर्महाद्भुतम् ॥ ससादिनोश्वान् स तु राक्षसोस्रजत्ते पार्थपुत्रस्य च सादिनोहन् ॥ ततस्त्वनंताकृतिमाप्तमार्जुनिं सुपर्णरूपोहनदाशु राक्षसः ॥ ८५ ॥ हतं निशम्यार्जुनिमुग्रपौरुषो ननाद कोपेन वृकोदरात्मजः ॥ चचाल भूर्नानदतोस्य रावतः ससागराऽगेंद्रनगा भृशं तदा ॥ ॥ ८६ ॥ अलंबुसस्तं प्रसमीक्ष्य मारुतेः सुतं बलाढ्यं भयतः पराद्रवत् ॥ पराद्रवन् धार्तराष्ट्रस्य सेनाः सर्वास्तमाराथ सुयोधनो नृपः ॥ ८७ ॥ स भीमपुत्रस्य जघान मंत्रिणो महाबलांश्चतुरोऽन्यांस्तथैव ॥ हतावशेषेषु च विद्रवत्सु घटोत्कचोऽभ्याहनदाशु तं नृपम् ॥ ८८ ॥ स पीड्यमानो युधि तेन रक्षसा प्रवेशयामास शरं घटोत्कचे ॥ दृढाहतस्तेन तदा बलीयसा घटोत्कचः प्रव्यथितेंद्रियो भृशम् ॥ तस्थौ कथंचिद्भुवि पात्यमानः पुनः शरानप्यसृजत्सुयोधने ॥ ८९ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

ननाद सिंहनादं चक्रे । नानदतः अतिशयेन शब्दं कुर्वतः अस्य घटोत्कचस्य रावतः शब्दात् सागराश्च अगेंद्राश्च वृक्षश्रेष्ठाश्च नगाश्च पर्वताश्च एतैः सहिता भूः भृशं यदा चचाल तदा ॥ ८६ ॥ तं घटोत्कचं आरप्राप ॥ ८७ ॥ अन्यान् राक्षसान् ॥ ८८ ॥ बलीयसा बलवता सुयोधनेन भृशं प्रव्यथितानि निरंतरं पीडितानीं द्रियाणि यस्य स तथा । घटोत्कचः कथंचिन्महताप्रयासेन भुवि पात्यमानोपि रथादिति शेषः । तस्थौ ॥ ८९ ॥ ॥ ॥ ॥ ॥ ॥ ॥

चिरंप्रयुद्धौप्रकृष्टंयुद्धंययोस्तौप्रयुद्धौ परस्पराजेयतनू अन्योन्यंजेतुमशक्यशरीरिणौतौरणाजिरेरणांगणेवीक्ष्य सुयोधनंरिरक्षिषंतःरक्षितुमिच्छंतः । अमित्रसाहाःअमित्रंसहंतेतेऽमित्रसाहाः । द्वेषिणांपराक्रमंसोढुमीशाइत्यर्थः द्रोणादयःसुयोधनंप्रापुः ॥ १० ॥ सघटोत्कचःगुरुपुत्रगौतमौअश्वत्थामकृपौपरिष्कृतंपरितआवृतं अत्रयुद्धे प्रहितैःविसृष्टैः ॥ ११ ॥ १२ ॥ तान्द्रौणिमुखान् ॥ १३ ॥ तेनघटोत्कचेन तरुप्रमाणैःवृक्षसदृशैःनेदुःचुक्रुशुः ॥ १४ ॥ भीमसेनःघटोत्कचश्चभीष्मंविनारणंहित्वा

चिरं प्रयुद्धौ नृपराक्षसाधिपौ परस्पराजेयतनू रणाजिरे ॥ द्रोणादयो वीक्ष्य रिरक्षिषंतः सुयोधनं प्रापुरमित्रसाहाः ॥ १० ॥ स द्रोणशल्यौ गुरुपुत्रगौतमौ भूरिश्रवःकृतवर्मादिकांश्च ॥ ववर्ष बाणैर्गगनं समाश्रितो घटोत्कचः स्थूलतमैः सुवेगैः ॥ ११ ॥ तमेकमग्र्यै रथिभिः परिष्कृतं निरीक्ष्य भीमोऽभ्यगमत्समस्तान् ॥ द्रोणोत्र भीमप्रहितैः शरोत्तमैः सुपीडितः प्राप्तमूर्छः पपात ॥ १२ ॥ द्रौणिं कृपाद्यान्ससुयोधनांश्च चकार भीमो विरथान् क्षणेन ॥ निवार्यमाणांस्तु वृकोदरेण घटोत्कचस्तान् प्रववर्ष सायकैः ॥ १३ ॥ तेनांबरस्थेन तरुप्रमाणैरभ्यर्दिताः कुरवः सायकौघैः ॥ भूमौ च भीमेन शरौघपीडिताः पेतुर्नेदुः प्राद्रवंश्चातिभीताः ॥ १४ ॥ सर्वांश्च तान् शिबिरं प्रापयित्वा विना भीष्मं कौरवान् भीमसेनः ॥ घटोत्कचश्चानदतां महास्वनौ नादेन लोकानभिपूरयंतौ ॥ १५ ॥ दुर्योधनोऽथ स्वजनैः समेतः पुनश्चा याद्रणभूमिं स भीष्मम् ॥ जयोपायं भैमसेनेरपृच्छत्स्वस्यैव स प्राह न तं व्रजेति ॥ १६॥ प्राग्ज्योतिषं चैव घटोत्कचाय संप्रेषयामास सुरापगासुतः ॥ संप्राप्य हैडिंबमयोधयद्बली स चार्दयामास सकुंजरं तम् ॥ १७ ॥

भीष्मोनगतइतिभावः । शिबिरंप्रापयित्वाआनदतांसिंहध्वनिंचक्रतुः ॥ १५ ॥ सदुर्योधनःस्वस्यभैमसेनेःघटोत्कचस्यजयोपायं भीष्ममपृच्छत् । सभीष्मःतंघटोत्कचंप्रति ॥ १६ सुरापगासुतःभीष्मःप्राग्ज्योतिषंभगदत्तम् सभगदत्तःअयोधयत् बलीसघटोत्कचःकुंजरसहितं तंभगदत्तम् ॥ १७ ॥ ॥ ॥ ॥

तेनघटोत्कचेनआहतःविद्धोभगदत्तः अस्मैभगदत्तायतदाशूलक्षेपणकाले घटोत्कचः वियतिआकाशेऽवप्लुत्यउत्पत्यशूलंप्रगृह्य जानुमारोप्यप्रबभंज । तत्कर्मजहृषुःतुतुषुः ॥ ९८ ॥ सनृपःभगदत्तः तस्यघटोत्कचस्य पादानुगान्पादचारिणःसेवकानित्यर्थः । तंभगदत्तम् । सभगदत्तः । भीमसेनायेतिकर्मणिचचतुर्थी । भीमंप्रति गजंप्राहिणोत्प्रेरयामास । वीरोभीमःतंगजमस्तंभयत् रोधयामास ॥ ९९ ॥ सभगदत्तःअभ्यर्दिताःपीडिताःअश्वायस्यसतथा । सभीमः ॥ १०० ॥ सराजाभीमसेनेनपुरतःअग्र

तेनार्दितः प्राहिणोच्छूलमस्मै वियत्यवप्लुत्य तदा घटोत्कचः ॥ प्रगृह्य शूलं प्रबभंज जानुमारोप्य देवाजहृषुस्तदीक्ष्य ॥ ९८ ॥ तदा स तस्यैव पदानुगान्नृपो जघान तं मारुतिरभ्ययाद्रणे ॥ स प्राहिणोद्भीमसेनाय वीरो गजं तमस्तंभयदाशु सायकैः ॥ ९९ ॥ संस्तंभिते बाणवरैस्तु नागे भीमस्याश्वान्सायकैरर्दयत्सः ॥ सोऽभ्यर्दिताश्वोथ गदां प्रगृह्य हंतुं नृपं तं सगजं समासदत् ॥ १०० ॥ स हंतुकामेन रुषाभिपन्नो भीमेन राजा पुरतः पृष्ठतश्च ॥ कृष्णेनास्त्रं वैष्णवं तद्गृहीतुं सहार्जुनेनापययौ स भीतः ॥ १०१ ॥ तस्मिन् गते भीमसेनार्जुनाभ्यां विद्राविते राजसंघे समस्ते ॥ भीष्मः सेनामपहृत्यैव यातो दुर्योधनस्तं निशि चोपजग्मिवान् ॥ १०२ ॥ संश्रावितः क्रूरवचः स तेन चक्रे प्रतिज्ञां मृत्युभयं विहाय ॥ शक्त्या हनिष्यामि परानिति स्म चक्रे च तत्कर्म तथा परेद्युः ॥ १०३ ॥ तं शक्तितो जुगुपुर्धार्तराष्ट्रास्तेनार्दिताश्चेदिपांचालमात्स्याः ॥ पराद्रवन् भीष्मबाणोरुभीताः सिंहार्दिताः क्षुद्रमृगा इवार्ताः ॥ १०४ ॥

तःअभिपन्नःप्राप्तः । तद्ब्राहदत्तंवैष्णवमस्त्रंग्रहीतुंआदातुंसहार्जुनेन कृष्णेनपृष्ठतश्चाभिपन्नःसभगदत्तःभीतःसन् । अपययौपरावृत्यययौ ॥ १०१ ॥ तंभीष्मम् ॥ १०२ ॥ तेनदुर्योधनेनक्रूरवचःसंश्रावितःसभीष्मः मृत्युभयंस्वमरणभयंविहाय शक्त्याशक्त्यनुसारेण परान्शत्रून्हनिष्यामीतिप्रतिज्ञांचक्रे । परेद्युःअपरदिने तत्कर्महननरूपंकर्मतथा यथाप्रतिज्ञाततथाअकरोत् ॥ १०३ ॥ तंभीष्मंतेनभीष्मेण ॥ १०४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तान्चेदिपांचालादीन् पार्थसूनुंअभिमन्युं अवारयत्निवारयामास । केशवभागिनेयःसुभद्रासूनुःनंअलंबुसंविजित्य भीष्मंप्रतिययौ । धार्तराष्ट्रःअमुंआरप्राप ॥१०५॥ तत्रयुद्धेराजासुयोधनःसहसाप्रयासेन ॥ १०६ ॥ अथधनुश्छेदनानंतरं वीरोदुर्योधनःएनंअभिमन्युं तस्याभिमन्योःआसदत्प्राप ॥ १०७ ॥ सचित्रसेनाःचित्रसेनाख्यो दुर्योधनभ्राता तेनसहिताःविमुखीकृत्यपरावृत्य चित्रसेनायचित्रसेनार्थं चित्रसेनंहंतुमित्यर्थः ॥ १०८ ॥ तांगदांतेद्रोणाद्याःसचित्रसेनःरथात्स्वरथात् अवप्लुतःअवातरत्

संस्थाप्य तान् भीष्ममभिप्रयांतमलंबुसो वारयत्पार्थसूनुम्॥ विजित्य तं केशवभागिनेयो भीष्मं ययौ धार्तराष्ट्रोमुमार ॥ १०५॥ तद्युद्धमासीन्नृपपार्थपुत्रयोर्विचित्रमत्यद्भुतरूपमुग्रम् ॥ समं चिरं तत्र धनुश्चकर्त ध्वजं च राजा सहसाभिमन्योः ॥ १०६ ॥ अथैनमुग्रैश्च शरैर्ववर्ष सूतं च तस्याशु जघान वीरः॥ तदासदद्भीमसेनो नृपं तं जघान चाश्वान्धृतराष्ट्रजस्य ॥१०७॥द्रोणो द्रौणिर्भगदत्तः कृपश्च सचित्रसेना अभ्ययुर्भीमसेनम् ॥ सर्वांश्च तान् विमुखीकृत्य भीमः स चित्रसेनाय गदां समाददे ॥१०८॥ तामुद्यतां वीक्ष्य परादवंस्ते स चित्रसेनश्च रथादवप्लुतः॥ संचूर्णितो गदया तद्रथश्च तज्जीवनेनोद्धर्षिताश्च कौरवाः ॥ १०९ ॥ भीष्मस्तु पांचालकहृशचेदिष्वहन्सहस्राणि चतुर्दशोग्रः॥ रथप्रवर्हानतितिग्मतेजा विद्रावयामास परानवीनिव ॥ ११० ॥ विद्राव्य सर्वामपि पांडुसेनां विश्राव्य लोकेषु च कीर्तिमात्मनः॥ सेनामपाहृत्य ययौ निशागमे संस्तूयमानो धृतराष्ट्रपुत्रैः॥ १११ ॥ द्रोणो विराटस्य पुरो निहत्य शंखं सुतं तस्य विजित्य तं च ॥ विद्राव्य सेनामपि पांडवानां ययौ नदीजेन सहैव हृष्टः॥ ११२ ॥ ॥

तद्रथःचित्रसेनरथःतज्जीवनेनचित्रसेनजीवनेनउद्धर्षिताः उत्कृष्टानंदिनोबभूवुरितिशेषः ॥ १०९ ॥ उग्रोभीष्मः पांचालादिषुमध्येचतुर्दशसहस्राणिअहन्जघान । तिग्मं उग्रंतेजःसामर्थ्यंयस्यसतथा । भीष्मःपरान्अन्यान्रथप्रवर्हान् रथिकाधिकान्विद्रावयामास । कःकानिवअवीनिवमेषानिव वृकइतिशेषः ॥ ११० ॥ विश्राव्यश्रावयित्वा विस्तार्येत्यर्थः॥ १११ ॥ तंविराटम् ॥ ११२ ॥ ॥ ॥ ॥

युधियुद्धेप्रवीरान्महावीरान् भीष्माद्भीतेनयुधिष्ठिरेण ॥ ११३ ॥ स्ववधोपायंस्वस्यभीष्मस्यवधोपायं भीष्ममेवप्रष्टुंभीष्मशिबिरंययौ । कृष्णःतस्यराज्ञोनुजाश्चभीमाद्या स्तंयुधिष्ठिरमनुसहययुः । ननु युधिष्ठिरःशत्रुशिबिरंप्रतिकथंययावित्यतआह । सइति । सभीष्मःपितामहः पांडवानामितिशेषः । यद्यस्मात्तस्माद्ययाविनिसंबंधः ॥११४॥ भीमार्जुनौइमंभीष्मंहंतुं शक्तुवंतावपिसमर्थावपि । अनुज्ञांभीष्मानुज्ञांऋते इमंहंतुंनसमैच्छतांस्म । कुतःभीष्मःपूज्यः पितामहत्वादितिशेषः । यतःअतोनसमैच्छतामितिसं



भीमार्जुनावपि शत्रून्निहत्य विद्राव्य सर्वांश्च युधि प्रवीरान् ॥ युधिष्ठिरेणापहृते स्वसैन्ये भीतेन भीष्माच्छिबिरं प्र जग्मतुः ॥११३॥ युधिष्ठिरो भीष्मपराक्रमेण भीतो भीष्मं स्ववधोपायमेव ॥ प्रष्टुं ययौ निशि कृष्णोनुजाश्च तस्या न्वयुस्तं स पितामहो यत् ॥ ११४॥ भीमार्जुनौ शक्नुवंतावपि स्म नर्तेऽनुज्ञां हंतुमिमं समैच्छताम् ॥ पूज्यो यतो भी ष्म उदारकर्मा कृष्णोप्यायात्तेन हि पांडवार्थे ॥ ११५॥ प्राप्यानुज्ञां भीष्मतस्ते वधाय शिखंडिनं तद्वचसाग्रयायिनम् ॥ कृत्वा परेद्युर्युधये विनिर्गता भीष्मं पुरस्कृत्य तथापरेपि ॥ ११६ ॥ शिखंडिनो रक्षकः फल्गुनोभूद्भीष्मस्य दुःशा सन आस चाग्रे ॥ अन्ये च सर्वे जुगुपुर्भीष्ममेव न्यवारयन् भीमसेनादयस्तान् ॥११७॥ भीष्माय यांतं युयुधा नमाजौ न्यवारयद्राक्षसोलंबुसोथ ॥ तं वज्रकल्पैरतुदद्वृष्णिवीरः शरैः स मायामसृजत्तदोग्राम् ॥ ११८ ॥ अस्त्रेण मायामपनुद्य वीरो व्यद्रावयद्राक्षसं सात्यकिस्तम् ॥ तस्मिन् गते युयुधानो रथेन ययौ भीष्मं पार्थमन्वेव धन्वी ॥ ११९ ॥

बंधः कृष्णःपांडवार्थेतेनापिभीष्मेणापि आज्ञांदापयितुमितिवाक्यशेषः । आयात्हियस्मात्तस्मादुदारकर्मा सर्वेभ्यउत्कृष्टचेष्टकः भीष्मेणस्ववधार्थंकृष्णप्रेरणयाआज्ञाप्रदाना त्कृष्णउदारकर्मेत्युक्तमितिभावः ॥११५॥ तद्वचसाभीष्मवाक्येनशिखंडिनंअग्रयायिनंपुरोगंतारंकृत्वा युधयेयुद्धायअपरेकौरवाः ॥ ११६ ॥ दुःशासनःभीष्मस्यरक्षकः अपेऽभूत् । तान्भीष्मरक्षकान् ॥ ११७ ॥ भीष्मायभीष्मंप्रतियांतं अतुदत्व्यथयामास । सअलंबुसः ॥ ११८ ॥ अपनुद्यविनाश्य तस्मिन्अलंबुसे ॥ ११९ ॥

द्रोणाद्याःसर्वाःसेनाः वायुजेनवारिताः ॥ १२० ॥ सभीमःतान्द्रोणादीन् मुहुःपुनःपुनःविरथीकृत्यद्रावयित्वा फल्गुनंप्रतियोद्धुकामंसगजं प्राग्ज्योतिषंभगदत्तंन्यवारयत् ॥ १२१ ॥ गजाश्वादिवाहनस्थाःपुरुषाःसादिनःवराश्वगेनसादिनांअयुतेनयुतःशकुनिः ॥ १२२ ॥ तेपांडवाःयुधिष्ठिरनकुलसहदेवाःसादिनःअश्वारूढपुरुषान् भीष्मंप्रापुः । द्रौपदेयाःसर्वेविराटाद्याश्चप्रापुः ॥ १२३ ॥ सधृष्टद्युम्नः अश्वसूतमितिद्वंद्वैकवद्भावः । बाणैर्हत्वासगणंकालिकेयगणोपेतं तंसैंधवंद्रावयित्वा हताश्वसूतमितिवापाठः

द्रोणो द्रौणिर्धार्तराष्ट्रश्च राजा भूरिश्रवा भगदत्तः कृपश्च ॥ शल्यो बाल्हीकः कृतवर्मा सुशर्मा सर्वाश्च सेना वारिता वायुजेन ॥ १२० ॥ स तान्मुहुर्विरथीकृत्य वीरः प्राग्ज्योतिषं सगजं द्रावयित्वा ॥ न्यवारयत्फल्गुनं योद्धुकामं पार्थश्च देवव्रतमाससाद ॥ १२१ ॥ युधिष्ठिरं भीष्ममभिप्रयांतं माद्रीसुताभ्यां सहितं नृवीरम् ॥ न्यवारयच्छकुनिः सादिनां च युतोऽयुतेनैव वराश्वगेन ॥ १२२ ॥ तान्सादिनोश्वांश्च निहत्य सर्वान्विजित्य तं शकुनिं पांडवास्ते ॥ प्रापुर्भीष्मं द्रौपदेयाश्च सर्वे तथा विराटद्रुपदौ कुंतिभोजः ॥ १२३ ॥ धृष्टद्युम्नं भीष्ममभिप्रयांतं न्यवारयत्सैंधवस्तं स बाणैः ॥ हताश्व सूतं सगणं द्रावयित्वा समासदद्भीष्ममेवाशु वीरः ॥ १२४ ॥ गुप्तोऽथ पार्थेन रणे शिखंडी भीष्मं समासाद्य शरैरताडयत् ॥ भीष्मः स्त्रीत्वं तस्य जानन्न तस्मै मुमोच बाणान्स तु तं तुतोद ॥ १२५ ॥ शिखंडिनं वारयामास बाणैर्दुर्मर्षणोऽमर्षणविह्वलेक्षणः ॥ नात्येतुमेनमशकच्छिखंडी दुःशासनः पार्थमवारयत्तदा ॥ १२६ ॥

॥ १२४ ॥ गुप्तःरक्षितः तस्यशिखंडिनः तस्मैशिखंडिने । सशिखंडी तंभीष्मंतुतोद । तुदव्यथनइतिधातुः ॥ १२५ ॥ अमर्षणेनकोपेन विह्वलेचंचलेईक्षणेनेत्रेयस्यसतथा । दुर्मर्षणःतन्नामादुर्योधनभ्राता एनंदुर्मर्षणंअत्येतुं अतिक्रम्ययातुंनाशकत् शक्तोनबभूव ॥ १२६ ॥ ॥ ॥ ॥ ॥ ॥ ॥

दुरात्मनापापरूपांतःकरणेन अमुनादुःशासनेनरुद्धःसपार्थः लोकवीरोपिलोकश्रेष्ठोप्येनंदुःशासनमतीत्य भीष्मंप्रतियातुंनाशकत् । अस्यार्जुनस्यपर्वतेष्वप्यसक्ताः अस्थिराइत्यर्थः । पर्वतमपिभित्त्वानिर्गच्छंतीतिभावः । सायकाःबाणाः तस्मिन्दुःशासनेससज्जिरे संश्लेषवंतोबभूवुः । देहंविदार्यननिर्गताइत्यर्थः ॥ १२७ ॥ अमर्षःकोपः पश्यतांसताम् ॥ १२८ ॥ भूर्यादयःदुर्योधनपक्षस्थाः विराटादीन्वारयामासुः ॥ १२९ ॥ तेविराटाद्याःतान्भूर्यादीन् । ततःविराटादीनांभीष्मप्राप्त्यनंतरं अतीत्यउल्लंघ्य धार्तराष्ट्रात्दुर्मर्षणात् शिखंडिनंविमुच्यमोचयित्वा अरिप्रमाथिभिःशत्रुकृंतनशीलैः शरैः आर्च्छत्अपीडयत् ॥ १३० ॥ सभीष्मःतैःसमस्तैर्युधिष्ठिरादिभिः बहुभिःशस्त्रपूगैः

स लोकवीरोपि दुरात्मनामुना रुद्धोशकन्नैनमतीत्य यातुम् ॥ भीष्मं पार्थः सायकाश्चास्य तस्मिन् ससज्जिरे पर्वतेष्वप्यसक्ताः ॥ १२७ ॥ अमर्षयुक्तौ चिरमेव वीरावयुध्यतामर्जुनधार्तराष्ट्रौ ॥ समं तदासीन्महदद्भुतं च दिवौकसां पश्यतां भूभृतां च ॥ १२८ ॥ तदा विराटद्रुपदौ कुंतिभोजं कृष्णासुतान्कैकयांश्चेकितानम् ॥ भूरिः शलः सोमदत्तो विकर्णः सकैकया वारयामासुरुच्चैः ॥ १२९ ॥ जित्वैव तांस्तेभिययुश्च भीष्मं तदार्जुनोतीत्य दुःशासनं च ॥ भीष्मं शैररार्च्छदरिप्रमाथिभिः शिखंडिनं धार्तराष्ट्राद्विमुच्य ॥ १३० ॥ स तैः समस्तैर्बहुभिः शस्त्रपूगैर्भृशं मर्मस्वर्दितश्चापमुक्तैः ॥ शरैः समस्तान्विरथांश्चकार शैनेयपांचालयुधिष्ठिराद्यान् ॥ १३१ ॥ स चेदिपांचालकरूशमुख्यान् रथोदारान्पंचविंशत्सहस्रान् ॥ संप्रेषयामास यमाय बाणैर्युगांतकालाग्निरिव प्रवृद्धः ॥ १३२ ॥ निरिक्ष्य तं सूर्यमिवातपंतं संचोदितो वासुदेवेन पार्थः ॥ चिच्छेद तत्कार्मुकं लोकवीरो रणेर्धचंद्रेण स चान्यदाददे ॥ १३३ ॥ ॥

येषांयेषुअस्त्रशस्त्रेषुअभ्यासः तेषांतेषांशस्त्राणांपूगैःसमूहैः मर्मसुव्यथाजनकस्थानेषु भृशंअर्दितःपीडितःसन् चापमुक्तैःशरैःशैनेयपांचालयुधिष्ठिरादीन् समस्तान्विरथांश्चकार ॥ १३१ ॥ पंचविंशत्सहस्रसंख्याकान् रथैःउदारानुत्कृष्टान् चेदिपांचालकरूशेषुमुख्यान् श्रेष्ठान्बाणैर्यमायसंप्रेषयामास । कथंभूतःप्रवृद्धःएधितः । कइव युगांतकालाग्निरिव युगानामंतकालः प्रलयस्तस्मिन् वर्तमानाग्निरिवेत्यर्थः ॥ १३२ ॥ सूर्यमातपंतमिव लोकतापकरःसूर्यःतमपिईषत्तपंतमिव स्थितंतंभीष्मं अर्धचंद्रेण अर्धचंद्राकारबाणेन तत्कार्मुकंभीष्मधनुः सभीष्मः अन्यद्धनुः ॥ १३३ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

सपाकशासनिःअर्जुनःतच्चतदपिधनुश्चिच्छेद । एवंचएवमेवअष्टौधनूंषिशक्तिंचआयुधविशेषं चर्मशतचंद्रंअसिवरंखड्गश्रेष्ठंचिच्छेद । नृपस्यसुयोधनस्यनृभिःसेवकैःपुरुषैर्द त्तानिपराणिअपराणिधनूंषिसर्वाणिसर्वायुधानिचिच्छेद ॥१३४॥ ततःशरैःविव्याध । युधिष्ठिराद्याःसर्वेपिविविधुरितिशेषः । तथोत्तरायणादित्यत्रतथा । आउत्तरायणादिति पदत्रयंज्ञेयम् । तैरर्जुनाद्यैरर्दितःसन् भूतलेन्यपतत् । सभीष्मःतथाविभूतलेपतितोपि उत्तरायणात् आ उत्तरायणपर्यंतं प्राणान् दधार । तत्रभीष्मपांडवयुद्धस्थानं प्रति तेद्रोणाद्याअगमन्नितिशेषः वीराःपार्थाःपरेअपरेकौरवाःएनंभीष्मम् ॥ १३५ ॥ १३६ ॥ तद्वचनात् शिबिरंप्रतिगच्छध्वमितिभीष्मवचनात् । सर्वेकुरुपांडवाः । भी

चिच्छेद तच्चैवमष्टौ धनूंषि शक्तिं च चर्मासिवरं पराणि ॥ धनूंषि दत्तानि नृभिर्नृपस्य सर्वाणि चिच्छेद स पाकशासनिः ॥ १३४ ॥ ततः शरैः सूर्यकरप्रकाशैर्विव्याध सर्वेपि युधिष्ठिराद्याः ॥ तैरर्दितो न्यपतद्भूतले स प्राणान्दधारापि तथोत्तरायणात् ॥ १३५ ॥ निपातितेऽस्मिन्मारुतिर्द्रोणमुख्यान्विद्राव्य तत्रागमदाशु तेपि ॥ तदायुधानि प्रणिधाय वीराः पार्थाः परे चैनमुपासदन्स्म ॥ १३६ ॥ प्रणम्य तं तद्वचनात्समीयुस्तस्मिन् दिने शिबिराण्येव सर्वे ॥ परे दिने सर्व एवोपतस्थुर्भीष्मं यदूनां पतिना सहैव ॥ १३७ ॥ स पूर्वदिवसे पार्थदत्तबाणोपबर्हणः ॥ तदापि तटूपरीतात्मा योग्यं पेयमयाचत ॥ १३८ ॥ धार्तराष्ट्रैरविज्ञातं तदा विज्ञाय वासविः ॥ वारुणास्त्रेण भित्त्वा स भुवि वारि सुगंधि च ॥ ऊर्ध्वधारामधादास्ये तर्पितोनेन सोवदत् ॥ १३९ ॥ यादृश्यस्त्रज्ञता पार्थे दृष्टात्र कुरुनंदनाः ॥ यादृग्बाहुबलं भीमे संयुगे तु पुनः पुनः ॥ १४० ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

ष्ममुपसमीपेतस्थुः ॥ १३७ ॥ सभीष्मःपार्थेनदत्तं बाणरूपमुपबर्हणंयस्यसतथा । तदाद्वितीयदिनेपि तृट्परीतात्मातृषापरीतःआत्माजीवोयस्यसतथासन् । योग्यंबाणतल्पेतिष्ठतःस्वस्ययोग्यंपेयंजलमित्यर्थः ॥ १३८ ॥ तद्भीष्मोक्तमभिज्ञायज्ञात्वा सुगंधिअतिपरिमलं ऊर्ध्वधारायस्यतत्तथा । वारिआस्येवदनेअधात् अनेनपार्थेनजलेनवातर्पितः । तृप्तिंप्रापित सभीष्मःअवदत् ॥ १३९ ॥ किमिति । हेकुरुनंदनाःकौरवाः । अत्रजलदानादिविषयेसंयुगेसंगरे ॥ १४० ॥ ॥ ॥

अजरंह्रासरहितंमाहात्म्यंविज्ञातमेव वेदशास्त्रैरितिशेषः । सभायांविश्वरूपदर्शनेनदृष्टंच कृष्णबंधनमन्त्रकालइतिशेषः ॥ १४१ ॥ यस्मात्तस्माद्युद्धमुपारमत उपारमय
त । उपपूर्वस्यरमेरंतर्भूतण्यर्थस्यसकर्मकत्वेन उपाच्चेतिनित्यंपरस्मैपदम् । भवत्सहायार्थमागताःभूमिपाःस्वस्वराज्यंप्रतिगत्वासुखिनःसंतु । भूपाःयूयंकुरुनंदनाश्चपांडवेभ्यः
युष्मभ्यंचयथोचितंविभक्तांईश्वरेणविभज्य दत्तांभुवंभुङ्ध्वम् ॥ १४२ ॥ साधारणेनसर्वेषामुक्तत्वात्तदंतर्गतः । ससुयोधनोऽप्येवमुक्तस्तूष्णींययौ ॥ १४३ ॥ पितादुर्योध

याद‍ृशं चैव माहात्म्यमनंतमजरं हरेः ॥ विज्ञातं सर्वलोकस्य सभायां दृष्टमेव च ॥ १४१ ॥ उपारमत तद्युद्धं सु
खिनः संतु भूमिपाः ॥ यथोचितं विभक्तां च भुङ्ध्वं भूपाः सदा भुवम् ॥ १४२ ॥ इत्युक्तः स ययौ तूष्णीं धार्तरा
ष्ट्रः स्वकं गृहम् ॥ १४३ ॥ व्यासदत्तोरुविज्ञानात्संजयादखिलं पिता ॥ श्रुत्वा तदा पर्यतप्यत्पांडवाः कृष्णदेवताः ॥
मुमुदुः शिबिरं प्राप्य सर्वे कृष्णानुमोदिताः ॥ १४४ ॥ ॥ इति श्रीमदा० विरचिते श्रीमन्महाभारततात्पर्यनिर्णये
भीष्मपातो नाम पंचविंशोऽध्यायः ॥ २५ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

नपिता अखिलंयुद्धवृत्तंश्रुत्वा तदाभीष्मपातश्रवणकाले पर्यतप्यद्दुःखितोभूत् । कृष्णेनानुमोदिताःशिक्षिताःसंतोमुमुदुः ॥ १४४ ॥ ॥ यंगंगाजमदग्निजान्व
यभावाद्द्विद्विरण्याभिधात्पुत्रंप्रापजनार्दनंशप्रदस्त्वाध्यायसंपद्युतात् पूर्तिंतस्यचपंचविंशतितमोध्यायःकृतौपुण्यदःश्रीमद्भारतभावनिर्णयोद्दीपिकायामगात् ॥ २५ ॥
इति श्रीमद्भारततात्पर्यनिर्णयटीकायां पंचविंशोऽध्यायः ॥ २५ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥



श्रीगुरुभ्योनमः ॥ ॐ अथेति । अथभीष्मपातानंतरम् । पृथिवीपतीनांराज्ञांआचार्यं अस्त्रविद्याशिक्षकत्वेनगुरुं । रथिनांमध्येअग्र्यंश्रेष्ठं चमूपंसेनापतिम् ॥ १ ॥ पुराभीष्मसेनापतित्वकाले तदसत्कृतःतेनभीष्मेणअसत्कृतः अर्धरथइत्यवज्ञातः कर्णोपितस्मिन् भीष्मेस्थितेसति योद्धुमितिशेषः । अनात्तधनुःअगृहीतधनुः । तदैवद्रोणसेनापतित्वकालएव भीष्मेणानुमतःसंमतः सन् । युद्धोद्यतःयुद्धार्थमुद्योगयुक्तः सन् ।धनुष्मान् प्रशस्तंधनुर्विद्यतेयस्यासौतथा । गृहीतधनुरभूत् । रथंसमास्थायआरुह्य गुरुं समन्वयात् अनुययौ ॥ २ ॥ धार्तराष्ट्रेणधर्मसुतग्रहे युधिष्ठिरधर्षणविषयेद्रोणःवृतःस्वीकृतोभूदितिशेषः । युधिष्ठिरग्रहणार्थंयाचितोभूदितिभावः । तेनद्रोणेनप्रतिश्रवेप्रतिज्ञायांतंप्रतिश्रवंज्ञात्वा । यत्ताःयुधिष्ठिररक्षणार्थंप्रतिज्ञावंतःसंतः युद्धायसमीयुःतत्रतस्मिन्समये ॥ ३ ॥ धनुर्मंडलमंत्रनिःसृतैःधनुषःमंडलंधनुर्मंडलं मंडलाकारंधनुरित्यर्थः । तस्मान्मंत्रैःदेवताप्रार्थनरूपमंत्रैः निःसृतैःनिर्गतैःपतत्रिभिःशरैःशात्रवान्शत्रुसंबंधिनःयदादुधावकंपयामास तत्रतदातंद्रोणं वृकोदर आससाद तंभीमंद्रौण्यादयस्त्रयःआसदन् प्रापुः॥४॥

हरिः ॐ अथाखिलानां पृथिवीपतीनामाचार्यमग्र्यं रथिनां सुविद्यम् ॥ रामस्य विश्वाधिपतेः सुशिष्यं चक्रे चमूपं धृतराष्ट्रपुत्रः ॥ १ ॥ कर्णोपि भीष्मानुमतो धनुष्मान्युद्धोद्यताभूत्तदसत्कृतः पुरा ॥ तस्मिन् स्थितेनात्तधनुस्तदैव रथं समास्थाय गुरुं समन्वयात् ॥ २ ॥ द्रोणो वृतो धार्तराष्ट्रेण धर्मसुतग्रहे तेन कृते प्रतिश्रवे ॥ ज्ञात्वा यत्ताः पांडवास्तं समीयुर्युद्धाय तत्राभवदुग्रयुद्धम् ॥ ३ ॥ पतत्रिभिस्तत्र दुधाव शात्रवान् द्रोणो धनुर्मंडलमंत्रनिःसृतैः ॥ तमाससादाशु वृकोदरो नदन् तमासदन् द्रौणिकृपौ च मद्रराट् ॥ ४ ॥ स तान्विधूयाभ्यपतद्रणेग्रणीर्द्रोणं तमन्वार्जुनिरभ्ययात्परान् ॥ ववार तं मद्रपतिस्तयोरभूद्रणो महांस्तत्र गदां समाददे ॥ शल्योथ भीमोभिययौ गदाधरस्तमेतयोरत्र बभूव संगरः ॥ ५ ॥ ॥ ६ ॥ ॥ ६ ॥ ॥ ६ ॥ ॥ ६ ॥ ॥ ६ ॥

सभीमः तान्त्रीन् विधूयविद्राव्य । तमनुभीममनु आर्जुनिःअभिमन्युः । मद्रपतिःतंअभिमन्युंववारन्यवारयत् । तयोःअभिमन्युशल्ययोः अत्रववारतंमद्रपतिरित्यत्र तच्छब्देन भीमसेनंगृहीत्वा तयोरभवद्रणइत्यत्र भीमशल्ययोरितिकेषांचिद्व्याख्यानमनादेयं ।तस्मादार्तायनेयुद्धंसौभद्रस्यचशशंसमे । संजयः। सादितंप्रेक्ष्ययंतारंशल्यःसर्वायसींगदाम् । समुत्क्षिप्यनदन्क्रुद्धःप्रचस्कंदरथोत्तमात् । तंदीप्तमिवकालाग्निंदंडहस्तमिवांतकम् । जवेनाभ्यपतद्भीमःप्रगृह्यमहतींगदामितिद्रोणपर्वगतवाक्यविरोधात् । तत्रतस्मिन्युद्धेशल्यः गदांसमाददे । अभिमन्युंहंतुमितिशेषः । अथशल्यगदाग्रहणानंतरम् । गदाधरोभीमःतंशल्यंअभिययौ । एतयोर्भीमशल्ययोः । अत्ररणभुविसंगरःयुद्धंबभूव ॥ ५ ॥ ॥

गदिनांमध्येऽनुत्तमौनविद्यतेउत्तमोययोस्तौतथा । बलीयसांबलवतांमध्येप्रवरौ अभिनर्दमानौगर्जंतौ तावुभौभीमशल्यौप्रपश्यतां युद्धद्रष्टॄणांचित्रतमंअतिचित्रंयथास्यात्तथा । मनोहरंयथास्यात्तथाविचेरतुः ॥ ६ ॥ गदाप्रपातेनअंकितंचिह्नितंवज्रमिवगात्रंययोस्तौतथा तौभीमशल्यौ रणेअखिललोकोददर्श ॥ ७ ॥ प्रचलत्पदःकंपमानपदःसहसाबलेन ॥ ८ ॥ तंशल्यंयुद्धार्थमाह्वयंतंभीमंचविलोक्य भीमस्यपुरतः ॥ ९ ॥ निजंरथंप्राप्यआरुह्य समक्षंअपरोक्षम् ॥ १० ॥ द्रोणोविधूयद्रावयित्वेत्यर्थः तंद्रोणम् ॥ ११ ॥

उभावजेयौ गदिनावनुत्तमावतुल्यवीर्यौ बलिनौ बलीयसाम् ॥ विचेरतुश्चित्रतमं प्रपश्यतां मनोहरं तावभिनर्दमानौ ॥ ६ ॥ गदाप्रपातांकितवज्रगात्रौ ददर्श लोकोखिल एव तौ रणे ॥ गदाभिघातेन वृकोदरस्य विचेतनः प्राप तदत्र मद्रराट् ॥ ७ ॥ भीमोपि कोपात्प्रचलत्पदः क्षितौ निधाय जानुं सहसोत्थितः क्षणात् ॥ ८ ॥ विचेतनं पतितं मद्रराजं विलोक्य भीमं च तमाह्वयंतम् ॥ रथं समारोप्य जनस्य पश्यतः पुरश्च भीमस्य कृपोपजग्मिवान् ॥ ९ ॥ विजित्य मद्राधिपमोजसारिहा नदन् रथं प्राप्य निजं स मारुतिः ॥ व्यद्रावयद्बाणगणैः परेषामनीकिनीं द्रोणसमक्षमेव ॥ १० ॥ विद्रावयत्याशु कुरून्वृकोदरे विधूय सौभद्रमुखान्ससात्यकीन् ॥ द्रोणोभिपेदे नृपतिं ग्रहीतुं तमाससादाशु धनंजयो रथी ॥ ११ ॥ स वासुदेवे प्रयते रथे स्थितः शरैः शरीरांतकरैः समंततः ॥ निहत्य नागाश्वरथान्प्रवर्तयन्नदृश्यताश्वेव च शोणितापगाः ॥ १२ ॥ निहन्यमानासु किरीटिना चमूष्वारक्षिते धर्मसुते तथापदः ॥ चमूं च भीमार्जुनबाणभग्नां द्रोणोपहृत्यापययौ निशागमे ॥ १३ ॥ स धार्तराष्ट्रेण युधिष्ठिराग्रहात्संश्रावितः क्रूरवचो निशायाम् ॥ जगाद दूरं समराद्विनीय तां पार्थस्ततो धर्मसुतं ग्रहीष्ये ॥ १४ ॥ ॥ ७ ॥ ॥ ७ ॥

वासुदेवेनप्रयतेप्रवर्तिते शरीरस्यअंतकरैःनाशकरैःसमंततः सर्वतः । कुंजरवाजिरथिकान्निहत्य । शोणितस्यरुधिरस्यआपगाःनदीःप्रवर्तयन्अदृश्यतलोकैर्दृष्टोभूदित्यर्थः ॥ १२ ॥ धर्मसुतेआपदःसकाशात् आसमंताद्रक्षितेसति बाणैर्भग्नांपराभूतांचमूंसेनाम् ॥ १३ ॥ युधिष्ठिरस्याग्रहात् अधर्षणात् ॥ १४ ॥ ॥ ॥ ॥

महारथैः संसप्तकैः सहितः सुशर्मा भीमानुजं पार्थं अतिदूरं प्रणेतुं नयनार्थं दुर्योधनेन क्लृप्तः निह्नवितः आज्ञापितोभूदित्यर्थः । सः सुशर्मा ओमिति तथास्त्विति ॥ १५ ॥ ते सुशर्म संसप्तकाः हुताशस्य दिशं अग्निदेवतां दिशम् । सोर्जुनः तान्प्रत्ययोधयत् युयुधे गजानामनीकं समूहम् ॥ १६ ॥ संघशः समूहेषु गजेषु धार्तराष्ट्रेण अर्थितः याचितः प्राग्ज्योतिषो भगदत्तः तं भीमम् ॥ १७ ॥ नतस्थुः विदुद्रुवुरित्यर्थः । तदनु तदनंतरं तं गजं प्रत्यभ्ययुः आययुः । स गजः तेषां सात्यक्यादीनाम् ॥ १८ ॥ रथोज्झितेषु रथहीनेषु शैनेयपूर्वेषु अवप्लुत्य उत्पत्य

ततः सुशर्मा सहितो महारथैः संसप्तकैर्दूरतरं प्रणेतुम्॥युद्धाय भीमानुजमाशु क्लृप्तो दुर्योधनेनोमिति सोप्यवादीत्॥
॥ १५ ॥ समाह्वयामासुरथोर्जुनं ते प्रातर्हुताशस्य दिशं रणाय ॥ आयोधयत्तांस्स च तत्र गत्वा भीमो गजानीकमथात्र चावधीत् ॥ १६ ॥ निहन्यमानेषु गजेषु संघशो विद्राव्यमाणेष्वखिलेषु राजसु ॥ प्राग्ज्योतिषो धार्तराष्ट्रार्थितस्तं समागमत्सुप्रतीकेन धन्वी ॥ १७ ॥ विभीषिताः सुप्रतीकेन भीमहया न तस्थुस्तदनु स्म सात्यकिः॥ सौभद्रमुख्याश्च गजं तमभ्ययुश्चिक्षेप तेषां स रथानथांबरे ॥ १८ ॥ शैनेयपूर्वेषु रथोज्झितेषु भूमाववप्लुत्य कथंचिदेव ॥ स्थितेषु भीमे च विभीषिताश्वान् संयम्य युध्यत्यपि कृष्ण ऐक्षत् ॥ १९ ॥ संक्लेशितो वैष्णवास्त्रं विमुंचेत्प्राग्ज्योतिषो भीमसेने ततोहम् ॥ याम्यर्जुनेनैव तदस्त्रमात्मनः स्वीकर्तुमन्येन वरादधार्यम्॥२०॥ इति स्म संचिंत्य सहार्जुनेन तत्राययावथ पार्थं त्रिगर्ताः ॥ न्यवारयंस्त्वाष्ट्रमस्त्रं स तेषु व्यवासृजन्मोहनायाशु वीरः ॥ २१॥ तदस्त्रवीर्येण विमोहितास्ते परस्परं कृष्णपार्थाविति स्म ॥ जघ्नुस्तदा वासविस्तान्विसृज्य प्राग्ज्योतिषं हंतुमिवाभ्ययाद्द्रुतम्॥ २२ ॥

कथंचिदेव प्रयासेनैव भूमौ स्थितेषु सत्सु संयम्य नियम्य युध्यति सति ऐक्षत् विचारयामास ॥ १९ ॥ किमिति । भीमसेनेन युद्धे संक्लेशितः पीडितः प्राग्ज्योतिषः भगदत्तः भीमसेने वैष्णवास्त्रं विमुंचेत् मोक्ष्यति ततोहं अर्जुनेन सहैव भगदत्तं प्रतियामि । किं कर्तुं । मम वरान्मदन्येनाधार्यं तत् । आत्मनः ममास्त्रं स्वीकर्तुं ग्रहीतुम् ॥ २० ॥ अथ त्रिगर्ताः त्रिगर्ताख्यासुराः पार्थं न्यवारयन् मध्ये इति शेषः । स पार्थः तेषु त्रिगर्तेषु मोहनाय त्वाष्ट्रं त्वष्टृदैवतम् ॥ २१॥ अयं कृष्णः अयं पार्थ इति बुध्या परस्परं अन्योन्यं यदा जघ्नुः । तदा तान् त्रिगर्तान् ॥ २२ ॥

सभगदत्तःपार्थंययौ । गजस्कंधगतोभगदत्तःतंसुप्रतीकंगजं तत्पार्थस्यरथायरथक्षेपणार्थं संचोदयामास संबोधयामास हरिः एनंरथंगजंवाअपसव्यंचक्रे । गजंमध्येकृत्वारथंभ्रामयामासेतिभावः ॥ २३ ॥ परेणकृष्णेनरथेसंभ्राम्यमाणेसति तंरथंप्राप्तुंनशशाक ॥ २४ ॥ सभगदत्तःवैष्णवास्त्रं अंकुशेऽकरोत् संयोजयामासेत्यर्थः ॥२५॥ तेनभगदत्तेनअमितौजाः अपरिमितपराक्रमः तदस्त्रंदधारातदस्त्रंअस्यकृष्णस्यांसदेशेस्कंधप्रदेशेवैजयंतीमालाबभूव ॥२६॥मयाअखिलंचेतनाचेतनात्मकं जगत्सर्वदासृष्ट्याद्यवस्थासुधार्यते ॥ २७ ॥ मादृशःमत्सदृशःअन्यःपुमान्नास्ति । मत्मत्तःपरःउत्तमःकुतः सोहंसमाधिकरहितोहंचतुर्धावासुदेवादिचतुःप्रकारेण जगतांहितायस्थितोस्मि । स्वमू

विसृज्य भीमं स च पार्थमेव ययौ गजस्कंधगतोगजं तम् ॥ संचोदयामास रथाय तस्य चक्रेपसव्यं हरिरेनमाशु ॥२३॥ मनोजवेनैव रथे परेण संभ्राम्यमाणेन तु तं गजः सः ॥ प्राप्तं शशाकाथ शरैः सुतीक्ष्णैरभ्यर्दयामास नृपं स वासविः ॥ २४ ॥ अस्त्रैश्च शस्त्रैः सुचिरं नृवीरावयुध्यतां तौ बलिनां प्रवहौ ॥ अथो चकर्तास्य धनुः स पार्थः स वैष्णवास्त्रं च तदांकुशेकरोत् ॥ २५ ॥ तस्मिन्नस्त्रे तेन तदा प्रमुक्ते दधार तद्वासुदेवोमितौजाः ॥ तदंसदेशेस्य तु वैजयंती बभूव मालाऽखिललोकभर्तुः ॥ २६ ॥ दृष्ट्वैव तद्धारितमच्युतेन पार्थः किमर्थं विधृतं त्वयेति ॥ ऊचे तमाहाशु जगन्निवासो मयाखिलं धार्यते सर्वदैव ॥ २७ ॥ न मादृशोन्योस्ति कुतः परोमत्सोहं चतुर्धा जगतो हिताय ॥ स्थितोस्मि मोक्षप्रलयस्थितीनां सृष्टेश्च कर्ता क्रमशः स्वमूर्तिभिः ॥ स वासुदेवादिचतुःस्वरूपः स्थितोऽनिरुद्धो हृदि चाखिलस्य ॥ २८ ॥ स एव च क्रोडतनुः पुराहं भूमिप्रियार्थं नरकाय चादाम् ॥ अस्त्रं मदीयं वरमस्य चादामवध्यतां यावदस्त्रं ससूनोः ॥ २९ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

र्तिभिर्वासुदेवसंकर्षणप्रद्युम्नानिरुद्धात्मकचतुःस्वमूर्तिभिः मोक्षोमुक्तिःप्रलयोनाशःस्थितिःपालनं । एषांसृष्टेःउत्पत्तेःक्रमशःमोक्षादीनां वासुदेवादिक्रमेणकर्तास्मि । चतुःस्वरूपेष्वप्यनिरुद्धरूपेविशेषकार्यंचशब्देनाह । सइति । वासुदेवादिचतुःस्वरूपःसोहंअनिरुद्धसंज्ञःसन् अखिलस्यजगतःहृदिहृत्कमलेस्थितश्चस्थितोस्मीत्यर्थः ॥ २८ ॥ सएववासुदेवादिरूपवानेवक्रोडतनुर्वराहरूपोहंपुरा भूमिप्रियार्थंनरकायमदीयमस्त्रमदां । ससूनोःसूनुनासुनेनभगदत्तेनसहितस्यास्यनरकस्य यावन्मदीयमस्त्रंस्थास्यतीतिशेषः । तावदवध्यतांवरंअदां अन्यस्मादितिशेषः अतएवास्त्रेसत्यपि अन्यस्यहंतुमशक्यत्वात् स्वयमेवकृष्णोनरकमहन्निितिभावः । अस्त्रंचसूनोरितिवापाठः । अस्यसूनोर्वरंचादामित्यन्वयः ॥ २९ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

मत्तोन्यःयःकश्चित्पुरुषःकुतश्चकस्माच्चित्कारणादपि अवध्योनास्ति । इतिस्महेतोः तेनैवअस्त्रावध्यत्वेनैव मयातदस्त्रंधृतं तत्तस्मात्अस्त्रहीनंएनंजहि ॥ ३० ॥ केशवेनइ त्युक्तमाकर्ण्यश्रुत्वासोर्जुनः अमज्जयत्रोपयामास । शरःकुंभस्थलेमग्नइत्यर्थः ॥ ३१ ॥ तावुभौभगदत्तगजौ ॥ ३२ ॥ शकुनेःकनीयसौकनिष्ठभ्रातरौनाम्नाअचलंवृ षभंचहत्वा तंशकुनिं मायांअसृजत् । शकुनिरितिशेषः । सपार्थःतांमायांविज्ञानास्त्रेणनाशायनाशप्रयोजनकाम् ॥ ३३ ॥ माहिष्मतीराष्ट्रपतिम् ॥३४॥ तस्यद्रौणेःवाहान् अश्वान् ॥ ३५ ॥ युधिष्ठिरस्यायहात्अधर्षणात् अतिविषण्णरूपःदुःखीसन्नित्यर्थः । दुर्योधनः अत्रपराजयविषये दीनवाक्यानिकृपाजनकवाक्यानि । सोपिद्रोणःनृपंदु

अस्त्रस्य चान्यो न तु कश्चिदस्ति योऽवध्य एतस्य कुतश्च मत्तः ॥ इति स्म तेनैव मया धृतं तदस्त्रं तदेनं जहि चास्त्रहीनम् ॥ ३० ॥ इत्युक्तमाकर्ण्य स केशवेन संमंत्र्य बाणं हृदये मुमोच ॥ प्राग्ज्योतिषस्यापरमुत्तमं शरं गजेंद्रकुंभस्थल आश्वमज्जयत् ॥ ३१ ॥ उभौ च तौ पेततुरद्रिसन्निभौ महेंद्रवज्राभिहताविवाशु ॥ निहत्य तौ वासविरुग्रपौरुषौ मुमोद साधु स्वजनाभिपूजितः ॥ ३२ ॥ अथाचलं वृषभं चैव हत्वा कनीयसौ शकुनेस्तं च बाणैः ॥ विव्याध मायामसृजत्स तां च विज्ञानास्त्रेणाशु नाशाय चक्रे ॥ ३३ ॥ स नष्टमायः प्राद्रवत्पापकर्मा ततः पार्थः शरपूगैश्चमूं ताम् ॥ विद्रावयामास तदा गुरोः सुतो माहिष्मतीपतिमाजौ जघान ॥ ३४ ॥ तदा भीमस्तस्य निहत्य वाहान्व्यद्रावयद्धार्तराष्ट्रीं चमूं च ॥ भीमार्जुनाभ्यां हन्यमानां चमूं तां दृष्ट्वा द्रोणः क्षिप्रमपाजहार ॥ ३५ ॥ प्राग्ज्योतिषे निहते चाग्रहाच्च युधिष्ठिरस्यातिविषण्णरूपः ॥ दुर्योधनोश्रावयद्दुष्टवाक्यान्यत्र द्रोणं सोपि नृपं जगाद ॥ ३६ ॥ पार्थे गते श्वो नृपतिं ग्रहीष्ये निहन्मि वा तत्सदृशं तदीयम् ॥ इति प्रतिज्ञां स विधाय भूयः प्रातर्ययौ युद्धमाकांक्षमाणः ॥ ३७ ॥ पद्मव्यूहं व्यूह्य परैरभेद्यं वराद्विष्णोस्तस्य मंत्रं च जप्त्वा ॥ पार्थाश्च तं प्रापुर्ऋतेऽर्जुनेन संसप्तकैर्युयुधे सोपि वीरः ॥ ३८ ॥

र्योधनम् ॥ ३६ ॥ तत्सदृशंयुधिष्ठिरतुल्यं तदीयंयुधिष्ठिरसंबंधिनंहन्मिवा । सद्रोणःभूयइतिप्रतिज्ञांविधाय प्रातःयुद्धमाकांक्षमाणःययौ ॥ ३७ ॥ तस्यविष्णोर्मंत्रंज प्त्वाविष्णोर्वरादभेद्यं वैष्णवमंत्रजपेनव्यूहेकतेव्यूहोऽभेद्योभवत्वित्येवं विष्णोर्वरस्यसत्त्वात्परैरभेद्यं पद्मव्यूहं पद्माकारेणबलविन्यासंव्यूह्यकृत्वाययौ । व्यूहस्तुबलविन्यास इत्यमरः । तंव्यूहंसोप्यर्जुनः ॥ ३८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तंव्यूहंप्राप्यभेत्तुं उद्यताश्चउद्योगंकुर्वंतोपिनाशकन् ॥ ३९ ॥ भीमःप्रतिभायोगात्स्वाभाविकज्ञानवत्त्वात् जानंश्चव्यूहभेदनंजानन्नपि काम्यंफलोद्देश्यकंमनुंमंत्रंनैवाजपत् तत्रतदायुधिष्ठिरः तज्ज्ञंव्यूहभेदनज्ञंइमंव्यूहंभिंधि ॥ ४० ॥ भित्त्वाव्यूहमितिशेषः । द्विषतांशत्रूणांतांचमूंव्यूहांतर्वर्तिनींसेनांविवक्षवःप्रवेष्टुमिच्छवः ॥ ४१ ॥ रुद्रस्यवरेणैवरुद्धाः आसन्नितिशेषः । अत्रअस्मिन्युद्धेशक्तोपिसैंधवंजेतुमितिशेषः । तदानात्यवर्ततसैंधवमतिक्रम्यनययावित्यर्थः ॥४२॥ वृषध्वजेनरुद्रेणपरेषांवैरिणांउर्वींउत्कृष्टांसेनां विलोडयामासक्षोभयामास ॥४३॥ द्रौणिःअग्रणीर्येषांतेद्रौण्यग्रण्यःतैस्तथा सोभिमन्युःरुद्धश्चरुद्धोपिअभीतोभयरहितः तदनुव्रतानांद्रोणादीननुगतानांशिरांसिकृंतन्

पार्थाः व्यूहं च तं प्राप्य नाशकन् भेत्तुमुद्यताः ॥ ३९ ॥ जानंश्च प्रतिभायोगात्काम्यं नैवाजपन्मनुम् ॥ भीमो युधिष्ठिरस्तत्र तज्ज्ञं सौभद्रमब्रवीत् ॥ भिंधि व्यूहमिमं तात वयं त्वामनुयामहे ॥ ४० ॥ स एवमुक्तो रथिनां प्रवर्हो विवेश भित्त्वा द्विषतां चमूं ताम् ॥ अन्वेव तं वायुसुतादयश्च विवक्षवः सैंधवेनैव रुद्धाः ॥ ४१ ॥ वरेण रुद्रस्य निरुध्यमानो जयद्रथेनात्र वृकोदरस्तु ॥ विष्णोरभीष्टं वधमार्जुनेस्तदा विज्ञाय शक्तोपि न चात्यवर्तत ॥ ४२ ॥ जयद्रथस्थेन वृषध्वजेन प्रयुध्यमानेषु वृकोदरादिषु ॥ प्रविश्य वीरः स धनंजयात्मजो विलोडयामास परोरुसेनाम् ॥ ४३ ॥ स द्रोणदुर्योधनकर्णशल्यद्रौण्यग्रणीभिः कृतवर्मयुक्तैः ॥ रुद्धश्चचारारिबलेष्वभीतः शिरांसि कृंतंस्तदनुव्रतानाम् ॥४४॥ स लक्षणं राजसुतं प्रसह्य पितुः समीपेनयदाशु मृत्यवे ॥ बृहद्बलं चोत्तमवीर्यकर्मा वरं रथानामयुतं पतत्रिभिः ॥ ४५ ॥

छिंदन्अरिबलेषुशत्रुसैन्येषुचचार ॥४४॥ सोभिमन्युःराजसुतंदुर्योधनसुतं नाम्नालक्षणंमृत्यवेयमायानयत् । उत्तमंउत्कृष्टंवीर्यंपराक्रमःकर्मयुद्धादिकर्मयस्यसतथा अभिमन्युःबृहद्बलंचबृहद्बलनामानंराजानंचतथा वरं बलाख्यादिनोत्तमं रथिनांअयुतं मृत्यवेअनयदितिसंबंधः । तथाबृहद्बलंहत्वासौभद्रोव्यचरद्रणइति बृहद्बलंचराजानंस्वर्गेणादौप्रयोज्यहेतिचद्रोणपर्वण्युक्तेः । बृहद्बलमितिअयुतस्यविशेषणमितिकेचित् ॥४५ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

प्रत्यक्षतःप्रत्यक्षेणविगतचापाश्वरथंचक्रुः ॥ ४६ ॥ उक्तमेवविविच्याह । कर्णइत्यादिना । तस्याभिमन्योःविधूयनाशयित्वेतिसर्वत्रसंबध्यते । कर्णादयस्त्रयोपिसायकैः अस्याभिमन्योःसचर्मखड्गं चर्मसहितंखड्गंरथचक्रं चक्रंचभृशमुद्विग्नाःसंचिच्छिदुरनेकधेतिच । रथचक्रंप्रणुद्येतिकचित्पाठः । तत्ररथशब्देनरथचक्रंलक्ष्यते । रथचक्रसदृशंयच्चक्राख्यमायुधंतत्प्रणुद्यच्छित्त्वा हस्तस्थितमेवहस्ताभ्यांस्थितमेवचक्रुः । नतुहतवंतः । तस्थुरितिपाठे हस्तगृहीतंयथातथाकृत्वा तूर्णींतस्थुरित्यर्थः । व्यायुधोभिमन्युश्चक्राख्यामायुधमाददे । तदपिकर्णाद्यैश्छिन्नमितिभावः । आस्थितश्चक्रमुद्यम्येतिद्रोणपर्वण्युक्तेः ॥ ४७ ॥ तेषुकर्णादिषुसत्स्वपि गदीदौःशासनिःगदाआयुधंयस्यसत

द्रोणादयस्तं हरिकोपभीताः प्रत्यक्षतो हंतुमशक्नुवंतः ॥ संमंत्र्य कर्णं पुरतो निधाय चक्रुर्विचापाश्वरथं क्षणेन ॥ ४६ ॥ कर्णो धनुस्तस्य कृपश्च सारथिं द्रोणो हयानाशु विधूय सायकैः ॥ सचर्मखड्गं रथचक्रमस्य प्रणुद्य हस्तस्थितमेव चक्रुः ॥ ४७ ॥ भीतेषु कृष्णादथ तद्वधाय तेष्वाससादाशु गदायुधं गदी ॥ दौःशासनिस्तौ युगपच्च मम्रतुर्गदाभिघातेन मिथोतिपौरुषौ ॥ ४८ ॥ तस्मिन्हते शत्रुरवं निशम्य हर्षोद्भवं मारुतिरुग्रविक्रमः ॥ विजित्य सर्वानपि सैंधवादीन्युधिष्ठिरस्यानुमते न्यषीदत् ॥ ४९ ॥ व्यासस्तदा तानमितात्मवैभवो युधिष्ठिरादीन् ग्लपितानबोधयत् ॥ विजित्य संशप्तकपूगमुग्रो निशागमे वासविराप साच्युतः ॥ ५० ॥ निशम्य पुत्रस्य वधं भृशार्तः प्रतिश्रवं सोपि चकार वीरः ॥ जयद्रथस्यैव वधे निशायां स्वप्नेनयत्तं गिरिशांतिकं हरिः ॥ ५१ ॥ स्वयमेवाखिलजगद्रक्षाद्यमितशक्तिमान् ॥ अप्यच्युतो गुरुद्वारा प्रसादकृदहं त्विति ॥ ५२ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

था तमभिमन्युंमिथः परस्परं गदाभिघातेनयुगपच्चएकस्मिन्नेवसमये मम्रतुःमृतौ ॥४८॥ तस्मिन्नभिमन्यौ अनुमतेअनुकूलेनन्यषीदत्उपविष्टोभूत् ॥४९॥ अमितंआत्मवैभवंस्वरूपभूतज्ञानादिसंपद्यस्यसतथा । ग्लपितान्दुःखितान् साच्युतःअच्युतेनसहितःनिशागमेसायंकाले ॥ ५० ॥ वधेवधविषयेप्रतिश्रवंप्रतिज्ञां हरिःकृष्णः । तमर्जुनंनिशायांस्वप्नेगिरिशांतिकंरुद्रसमीपमनयत् ॥ ५१ ॥ पार्थरक्षणेस्वस्याशक्तेःगिरिशमनयत्किमित्यतआह । स्वयमिति । अखिलजगद्रक्षादौअमितशक्तिमानपि ॥ ५२ ॥

फल्गुनस्यास्त्रगुरुंअस्त्रगिदंगिरिशंप्रतिएनमर्जुनं अंजसानस्त्रत्वेनप्रापयित्वा एतत्प्रसादादेवरुद्रप्रसादादेव तदर्थंअर्जुनरक्षणार्थं उल्बणंवीर्यवदस्त्रं पाशुपतास्त्रंचक्रे । सैंधवस्यशिरः नत्पितुरंकेनिधापयितुंवीर्यवदस्त्रंचक्रइतिभावः । अस्यपार्थस्यतदात्मिकांरुद्रदेवतारूपांरक्षांचक्रे ॥ ५३ ॥ सांत्वयित्वाविदुःस्वांकृत्वा योजयित्वाअश्वैरितिशेषः ॥ ५४ ॥ अर्थितःसैंधवंत्रातुमितिशेषः । द्रोणःअहंसिंधुराजंसैंधवं सर्वथासर्वप्रयत्नेनत्राताशकोस्मि । आतनोदकरोदित्यर्थः ॥ ५५ ॥ सद्रोणःदिव्यंदेवताभिमानिकत्वाद्दिव्यं अतए वाग्र्यंशकटाब्जचक्रंतन्नामकंव्यूहं कर्णाद्यैः परैःसौमदत्तिप्रभृतिभिःगुप्तम् पृष्ठेव्यूहप्रांतभागे अधात्स्थापयामास ॥ ५६ ॥ अग्रतःद्रोणस्याग्रेस्थितंदुर्मर्षणम् ॥ ५७ ॥ का

ज्ञापयन् फल्गुनस्यास्त्रगुरुं गिरिशमंजसा ॥ प्रापयित्वैनमेवैतत्प्रसादादस्त्रमुल्बणम् ॥ चक्रे तदर्थमेवास्य चक्रे रक्षां तदात्मिकाम् ॥ ५३ ॥ सांत्वयित्वा सुभद्रां च गत्वोपप्लाव्यमच्युतः ॥ योजयित्वा रथं प्रातः सार्जुनो युद्धमभ्ययात् ॥ ५४ ॥ श्रुत्वा प्रतिज्ञां पुरुहूतसूनोर्दुर्योधनेनार्थितः सिंधुराजम् ॥ त्रातास्म्यहं सर्वथेति प्रतिज्ञां कृत्वा द्रोणो व्यूह मभेद्यमातनोत् ॥ ५५ ॥ स दिव्यमग्र्यं शकटाब्जचक्रं कृत्वा स्वयं व्यूहमुखे व्यवस्थितः ॥ पृष्ठे कर्णद्रौणिकृपैः सश ल्यैर्जयद्रथं गुप्तमधात्परैश्च ॥ ५६ ॥ अथार्जुनो दिव्यरथोपरिस्थितः सुरक्षितः केशवेनाव्ययेन ॥ विजित्य दुर्मर्ष णमग्रतोभ्ययाद्द्रोणं सुधन्वा गुरुमुग्रपौरुषः ॥ ५७ ॥ प्रदक्षिणीकृत्य तमाश्वगात्ततः कालात्ययं त्वेव विशंकमा नः ॥ रथं मनोवेगमथानयद्धरिर्यथा शराः पेतुरमुष्य पृष्ठतः ॥ ५८ ॥ विजित्य हार्दिक्यमथाप्रयत्नतः स इंद्रसूनुः प्र विवेश तद्दलम् ॥ विलोडयामास च सायकोत्तमैर्यथा गजेंद्रो नलिनीं बलोद्धतः ॥ ५९ ॥ स उच्चकाशोतिरथो रथोत्त मे सवासुदेवो हरिणा यथेंद्रः ॥ चकर्त चोग्रो द्विषतां शिरांसि शरैः शरीरांतकरैः समंततः ॥ ६० ॥ ॥ ७ ॥

लात्ययंविशंकमानःअत्रयुद्धनिसायंकालःस्यादितिशंकमानः पार्थःतंगुरुंप्रदक्षिणीकृत्य ततःगुरोःसकाशात्आशुअगात् । अथहरिःयथाशराः पार्थमुक्तशराः अमुष्यपार्थस्य पृष्ठतःपृष्ठभागे पेतुः तथामनोवेगंरथमनयत् । पार्थमुक्तशरादप्यग्रेरथोगादितिभावः ॥ ५८ ॥ नलिनींसरोवरं सवासुदेवःवासुदेवेनसहितःसपार्थः । रथोत्तमेउच्चकाशेरराज । यथाहरिणाउपेंद्रेणउग्रःअसह्यइत्यर्थः ॥ ६० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

विजयःपार्थःदृढायुंअच्युतायुंहत्वाच पुनर्विंदानुविंदकौअवंतिराजानौ मतुदुर्योधनानुजौ । शराभ्यांहत्वा ॥ ६१ ॥ कांभोजंकांभोजराजस्यसुतंसुदक्षिणम् । तदुक्तंद्रोणपर्वणि । ततःकांभोजराजस्यपुत्रःशूरःसुदक्षिणइति । निहत्य । वरुणान्नदीजातंश्रुतायुधम् ॥ ६२ ॥ यस्यश्रुतायुधस्य ॥ ६३ ॥ तेनश्रुतायुधेनअर्पितःविद्धः सोर्जुनःक्षणाद्विरथंचकार । आरुह्यश्रुतायुधइतिशेषः । अरिधरायचक्रधारिणे कृष्णायतांगदांचिक्षेप । सागदाशतधाबिभेद । शीर्णमस्तिष्कःविशीर्णशिराः ॥ ६४ ॥ एवंकिमर्थमभूदि

दृढायुमच्युतायुं च हत्वा विंदानुविंदकौ ॥ शराभ्यां प्रेषयामास यमाय विजयो युधि ॥६१॥ सुदक्षिणं च कांभोजं निहत्यांबष्ठमेव च ॥ श्रुतायुधं नदीजातं वरुणादाससाद ह ॥ ६२ ॥ यस्यादाद्वरुणो दिव्याममोघां महतीं गदां ॥ ६३ ॥ स तु तेन शरैस्तीक्ष्णैरर्पितो विरथं क्षणात् ॥ चकार पार्थस्य रथमारुह्यारिधराय ताम् ॥ गदां चिक्षेप सा तस्य वारुणेः शिर एव तु ॥ बिभेद शतधा शीर्णमस्तिष्कः सोपतद्भुवि ॥ ६४ ॥ अयुध्यंतं स्वगदया यदि ताडयसि स्वयम् ॥ तया विशीर्णमस्तिष्को भविष्यसि न संशयः ॥ ६५ ॥ अमोघा चान्यथा सेयं गदा तव भविष्यति ॥६६॥ इत्यब्रवीत्तं वरुणः पुरा तेन स केशवे ॥ अयुध्यति गदाक्षेपात्तया शीर्णशिरा अभूत् ॥ ६७॥ हतेषु वीरेषु निजेषु संघशो विद्राविते स्वाकुलितेच सैन्ये ॥ दुर्योधनो द्रोणमुपेत्य दीनमुवाच हा पार्थउपेक्षितस्त्वया ॥ ६८ ॥ इतीरितोऽथेद्यम मुष्य वर्म बद्ध्वा महामंत्रबलात्स विप्रः ॥ जगाद येनैव बलेन पार्थैर्विरुध्यसे तेन हि याहि फल्गुनम् ॥६९॥ इतीरितो धार्तराष्ट्रः स चापमादाय सौवर्णरथोपरिस्थितः ॥ जगाम पार्थं तमवारयच्च शरैरनेकैरनलप्रकाशैः ॥ ७० ॥

त्यतआह । अयुध्यंतमिति । अयुध्यंतंयुद्धमकुर्वंतम् ॥ ६५ ॥ अन्यथाअयुध्यंतंयदिनताडयसितर्हि ॥ ६६ ॥ तंश्रुतायुधंतेनकारणेन । सश्रुतायुधः ॥ ६७ ॥ सैन्येआसमंतात्स्वलितेचंचलीकृते । दीनंकपोतपादकंयथास्यात्तथाउवाच । किमिति । उपेक्षितःद्वारीतिशेषः ॥ ६८ ॥ वर्मकवचंबद्ध्वाजगाद । किमिति येनैवयावताबलेन पार्थैर्धर्मादिचतुर्भिर्विरुध्यसेविरोधंकरिष्यसि तेनतावताबलेनफल्गुनंप्रतियाहि ॥ ६९ ॥ चापंधनुःतंपार्थं अनलवत्अग्निवत्प्रकाशोयेषांतैस्तथातैः । अवारयत्न्यवारयत् ॥ ७० ॥

तेबाणाःतस्यदुर्योधनस्यवर्मभेदनंकवचभेदनंनचक्रुः ॥ ७१ ॥ संधीयमानंबाणेइतिशेषः । तद्दस्त्रं एनंसुयोधनं तलेहस्ततलेऽविध्यत् ॥ ७२ ॥ जयद्रथार्थेसैंधवरक्षणार्थे अद्भुतानिआश्चर्याणिवीर्यकर्माणियेषांतेतथा तेषांद्रौण्यादीनांतद्युद्धं पार्थेनसहक्रियमाणंयुद्धं अद्भुतंपश्यतांवीराणांआश्चर्यकरं अतुल्यंकेनाप्यकृतमित्यर्थः। बभूव ॥७३॥ तेषांपांडवानांरथानांरथिकानां अनीकंसेनाम् ॥७४॥ सद्रोणःस्थविरोपिवृद्धोपि यूनांतरुणानांधन्विनांमध्ये युवेवतरुणइव ॥ ७५॥ ग्रहणंग्रहःनृपस्यग्रहःनृपग्रहःतंइच्छती

विव्याध पार्थोपि तमुग्रवेगैः शरैर्न ते तस्य च वर्मभेदनम् ॥ चक्रुस्ततो वासविर्दिव्यमस्त्रं तद्वर्मभेदाय समाददे रुषा ॥ ७१ ॥ संधीयमानं तु गुरोः सुनस्तच्चिच्छेद पार्थस्तु सुयोधनाश्वान् ॥ हत्वा तले विध्यदथैनमुग्रैर्द्रौणिः शरैः पार्थमवारयद्युधि ॥ ७२ ॥ स द्रौणिकर्णप्रमुखैर्धनंजयो युयोध ते चैनमवारयञ्छरैः ॥ बभूव युद्धं तदतुल्यमद्भुतं जयद्रथार्थेद्भुतवीर्यकर्मणाम् ॥ ७३ ॥ पार्थे प्रविष्टे कुरुसैन्यमध्यं द्रोणोविशत्पांडवसैन्यमाशु ॥ स तद्रथानीकमुदारवेगैः शरैर्विधूय न्यहनच्च वीरान् ॥ ७४ ॥ स वीरवर्यः स्थविरोपि यूनां युवेव मध्ये प्रचचार धन्विनाम् ॥ प्रपातयन्वीरशिरांसि बाणैर्युधिष्ठिरं चासददुग्रवीर्यः ॥ ७५ ॥ नृपग्रहेच्छुं तमवेत्य सत्यजिन्न्यवारयद्द्रौपदिराशु वीर्यवान् ॥ निवारितस्तेन शिरः शरेण चकर्त पांचालसुतस्य विप्रः ॥ ७६ ॥ निहत्य तं वीरतमो रणोत्कटं युधिष्ठिरं बाणगणैः समर्दयत् ॥ ७७ ॥ स्वशक्तितस्तेन विधाय संगरं निरायुधो व्यश्वरथः कृतः क्षणात् ॥ स ऊर्ध्वबाहुर्भुवि संस्थितोपि ग्रहीतुमाजौ गुरुणाभिपन्नः ॥ माद्रीसुतस्यावरजस्य यानमारुह्य वेगादपजग्मिवांस्ततः ॥ ७८ ॥

तिइच्छुः तंद्रोणंअवेत्यज्ञात्वा । द्रौपदिःद्रुपदस्यापत्यंद्रौपदिःसत्यजित् ॥ ७६ ॥ रणोत्कटंयुद्धेउत्कटं स्वशक्त्यासंगरंविधाय स्थितःसयुधिष्ठिरः । तेनसमानकर्तृकतोपपत्तिः ॥ ७७ ॥ तेनद्रोणेनव्यश्वरथःविहताश्वरथःकृतःसन् । ऊर्ध्वबाहुःभुविसंस्थितोपि निरायुधस्ययुद्धमकुर्वतोग्रहणमधर्मइत्यपिशब्दार्थः। गुरुणाग्रहीतुमभिपन्नःप्राप्तः अभिमुखंप्राप्तःसन् । माद्रीसुतस्यनकुलस्य अवरजस्यानुजस्यसहदेवस्येत्यर्थः ततःद्रोणस्यसकाशात् ॥ ७८ ॥ ॥ ॥ ॥ ॥ ॥

ततःयुधिष्ठिरपलायनानंतरम् । सपुत्रःशैशुपालिःशिशुपालपुत्रः पंचकैकया:द्रोणंसमासदन् । सर्वशःसर्वेशिशुपालपुत्राद्याःबाणगणैःसमर्दयंश्चद्रोणंपीडयामासुः ॥ ७९ ॥
तत्रयुद्धेक्रमेण शैशुपालादिक्रमेणनिकृंतकंधरान्छिन्नग्रीवान् ऊर्ध्वरेतसः नैष्ठिकब्रह्मचर्यव्रतनिरताःअर्कमंडलंनिर्भिद्ययंलोकंव्रजंतितंपरंलोकंनिनायप्रापयत् ॥ ८० ॥
पृथासुतानांउरुसैन्ये मारुतिसूनुनाप्रायःहतप्रवीराःहताःप्रवीराःमहावीराःयासांतास्तथा । मृदिताःपराभूताःपरेषांकौरवाणांपृतनाःसेनाःपराद्रवन् ॥ ८१ ॥ तेनभीमेनसुतेज

द्रोणं ततः शैशुपालिः सपुत्रो जारासंधिः काशिराजः सशैब्यः ॥ समासदन्कैकयाश्चैव पंच समर्दयन्बाणगणैश्च सर्वशः ॥ ७९ ॥ स तान् क्रमेणैव निकृंतकंधराञ्छिरोत्तमैस्तत्र निधाय विप्रः ॥ विनाय लोकं परमर्कमंडलं व्रजंति निर्भिद्य यमूर्ध्वरेतसः ॥ ८० ॥ विधूयमाने गुरुणोरुसैन्ये पृथासुतानां पृतनाः परेषाम् ॥ प्रायो रणे मारुतिसूनुनैव हतप्रवीरा मृदिताःपराद्रवन् ॥८१ ॥ अलंबुसो नाम तदैव राक्षसः समासदन्मारुतिमुग्रपौरुषम् ॥ स पीडितस्तेन शरैः सुतेजसैः क्षणाददृश्यत्वमवाप मायया ॥ ८२ ॥ सोऽदृश्यरूपोनुचरानपीडयद्भीमस्य तद्वीक्ष्य चुकोप मारुतिः ॥ अस्त्रज्ञतामात्मनि केशवाज्ञया संदर्शयन्नागतधर्मसंकटम् ॥ ८३ ॥ त्वाष्ट्रास्त्रमादत्त स काम्यकर्महीनोपि भीमस्तत उत्थिताः शराः ॥ ते बाणवर्यास्त्वदृश्यवेधिनो रक्षो विदार्याविविशुर्धरातलम् ॥ ८४ ॥ तद्धन्यमानं प्रविहाय भीममपाद्रवद्दूरतरं सुभीतम् ॥ ततश्च भीमो द्विषतां वरूथिनीं विद्रावयामास शरैः सुमुक्तैः ॥ ८५ ॥ तदैव कृष्णातनयाः समेता जघ्नुः शलं संयति सौमदत्तिम् ॥ अलंबुसं प्राप तदा घटोत्कचः परस्परं तौ रथिनावयुध्यताम् ॥ ८६ ॥

सेःशरैः ॥ ८२ ॥ सराक्षसःभीमस्यानुचरान् आगतंप्राप्तंधर्मसंकटंयस्यसतथा । काम्यकर्महीनोपिसभीमःअस्त्रप्रयोगेकृतेभगवद्धर्महानिः अप्रयोगेस्वानुचरबाधइतिधर्मसंकटमित्यर्थः । केशवाज्ञयाआत्मनिअस्त्रज्ञतांसंदर्शयन्सन् ॥ ८३ ॥ त्वाष्ट्रास्त्रंत्वष्टृदैवतास्त्रं आदत्तआददे । ततःअस्त्रात् शराःउत्थित्ताःउत्पन्नाः अदृश्यवेधिनःतेबाणवर्याःतद्रक्षइत्यन्वयः ॥ ८४ ॥ वरूथिनींसेनाम् ॥ ८५ ॥ संयतियुद्धेसौमदत्तिंसोमदत्तपुत्रंनाम्नाशलम् । रथौविद्येतेययोस्तौरथिनौ ॥ ८६ ॥ ॥ ॥ ॥

खेसंस्थितःघटोत्कचः । खस्थंआकाशेस्थितं अलंबुसंअभियुयोध । शिरसिपदापादेनप्रहारम् ॥ ८७ ॥ भैमसेनिःघटोत्कचः ॥ ८८ ॥ पूर्वंअच्युतःश्रीकृष्णः तस्यकृतव र्मणः स्तुत्याप्रीतःसन् । मुहूर्तेएकमुहूर्तेसर्वजयं मुहूर्तमध्येयुद्धार्थमागतानां सर्वेषांजयंजयरूपंवरंददौहियस्मात् ॥ ८९ ॥ तेनकारणेनसकृतवर्माभीमस्यपुरःअपेयमौविजि त्ये । अथतंभीमंचबाणेनविव्याध । सभीमःतस्मिन्मुहूर्तेनसमभ्ययात् कृतवर्माणमितिशेषः ॥ ९० ॥ तर्हि सात्यकिःकथमजयदित्यतआह । विनेति । वृष्णीन्विनैवसर्वज

घटोत्कचस्तं विरथं विधाय खस्थं ख एवाभियुयोध संस्थितः ॥ ततस्तु तं भीमसुतो निगृह्य निपात्य भूमौ प्रददौ प्रहारम् ॥ ८७ ॥ पदा शिरस्येव स पिष्टमस्तको ममार मध्ये पृथिवीपतीनाम् ॥ तस्मिन्हते भैमसेनिः कुरूणां व्य द्रावयद्रथवृंदं समंतात् ॥ ८८ ॥ तदासदत्कृतवर्मा रथेन सेनां पांडूनां शरवर्षं प्रमुंचन् ॥ ददौ वरं तस्य हि पू र्वमच्युतः प्रीतस्तुत्या सर्वजयं मुहूर्ते ॥ ८९ ॥ स तेन पांचालगणान्विजित्य यमौ च भीमस्य पुरोथ तं च ॥ वि व्याध बाणेन स वासुदेववरं विजानन्न तदा समभ्ययात् ॥ ९० ॥ विनैव वृष्णीन्विजये वरो यदमुष्य तेना स्य हयान्स सात्यकिः ॥ निहत्य बाणैरतुदत्स यानमन्यत्समास्थाय ततोपजग्मिवान् ॥ ९१ ॥ तदा हरिः पांच जन्यं सुघोषमापूरयामास जयेभियुध्यति ॥ कर्णादिभिर्द्रौणिमुखै रिपूणां बलप्रहाणाय परः परेभ्यः ॥ ९२ ॥ स पांचजन्योच्युतवक्त्रवायुना भृशं सुपूर्णोदरनिःसृतध्वनिः ॥ जगद्विरिंचेशसुरेंद्रपूर्वकं प्रकंपयामास युगात्यये यथा ॥ ९३ ॥ गांडीवघोषे च तदाभिभूते युधिष्ठिरो भीतभीतस्तदैत्य ॥ शैनेयमूचे परसैन्यमग्ने पार्थे स्वयं युध्यति केश वः स्म ॥ ९४ ॥ ॥ ॥ ॥ ॥

येसर्वजयविषयेवरोस्तीतिशेषः । यद्यस्मात्तेनकारणेन अस्यकृतवर्मणः सकृतवर्मांततःसात्यकेःसकाशात् ॥ ९१ ॥ जयेपार्थेद्रोणमुखैःकर्णादिभिःअभियुध्यतिसति । परे भ्यःपरोहरिःरिपूणां शत्रूणांबलप्रहाणाय बलनाशार्थं सुघोषंसुतरांघोषोध्वनिर्यस्यसतथा । तंपांचजन्यंआपूरयामास । दध्माविरयर्थः ॥ ९२ ॥ अच्युतस्यवक्त्रस्यमुख स्यवायुनासुपूर्णोदरात् शंखावच्छिन्नाकाशविशेषात् निःसृतोनिर्गतःध्वनिर्यस्यसतथा । युगात्ययेप्रलयकाले ॥ ९३ ॥ तदा अभिभूतेतिरस्कृतेसति शैनेयंएत्यऊचे । किमि ति । पार्थेपरसैन्यैर्वैरिसैन्येमग्नेमृतइत्यर्थः ॥ ९४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

श्रूयतेयद्यस्मात्तस्माद्धाहि कृष्णंप्रतीतिशेषः पार्थंजानीहिजीवतिवानेतीतिशेषः । असहायःसहायरहितः एषोर्जुनःयदिजीवतितर्हि सहायोभवेतिशेषः ॥ ९५ ॥ वित्तैःसःपूज्यतेभ्योविप्रेभ्यः जयाय जयार्थंपरमाशिषःप्रतिगृह्य प्रतिरोधकनिवारणार्थं भीमसेनेनअनुयातइत्यर्थः ॥ ९६ ॥ भीमःयुयुधानंतांचमूंप्रावेशयत् । प्रवेशस्यापिप्राप्तिविशेषत्वाद्गतिबुद्धीतिद्विकर्मता । गतीतिसप्राप्तिकायाःग्रहणं । अन्यथानीवह्योर्नेतिनिषेधोव्यर्थःस्यात् । ससात्यकिःगुरुणाअभ्युपेक्षितःसूतंद्रोणस्यसूतम् ॥ ९७ ॥ तदाव्यूहप्रवेशकालेविप्राशीर्भिः कृष्णवरादपिबलंविवृद्धम् । पुराकृष्णेनतुष्टेनतस्मिन्दिने अर्जुनसहायार्थगमनदिने बलस्यवृद्धिर्यूपकेतुंविहायेतिशेषः । दत्तेतिहिप्रसिद्धिः । हियस्मात्तस्माद्ध

न श्रूयते गांडिवस्याद्य घोषः संश्रूयते पांचजन्यस्य रावः ॥ तद्धाहि जानीहि तमद्य पार्थं यदि स्म जीवत्यसहाय एषः ॥ ९५ ॥ इतीरितः सात्यकिरत्र विप्रान् संपूज्य वित्तैः परमाशिषश्च ॥ जयाय तेभ्यः प्रतिगृह्य सेनामुखं ययौ भीमसेनानुयातः ॥ ९६ ॥ भीमस्तु सेनामुखमाशु भित्त्वा प्रावेशयद्युयुधानं चमूं ताम् ॥ स युध्यमानो गुरुणाभ्युपेक्षितः सूतं निहत्य द्रावयामास चाश्वान् ॥ ९७ ॥ बलं विवृद्धं च तदास्य सात्यकेर्विप्राशीर्भिः कृष्णवरादपि स्म ॥ बलस्य वृद्धिर्हि पुरास्य दत्ता कृष्णेन तुष्टेन दिने हि तस्मिन् ॥ ९८ ॥ ततोधिवृद्धोरुबलात्स सात्यकिः संस्थाप्य भीमं प्रययौ रथेन ॥ तं बाणवर्षैः पृतनां समंतान्निघ्नंतमाजौ हृदिकात्मजोभ्ययात् ॥ ९९ ॥ तयोरभूद्युद्धमतीव दारुणं तत्राकरोत्तं विरथं स सात्यकिः ॥ विजित्य तं सात्यकिरुग्रधन्वा ययावतीत्यैव शिरांसि यूनाम् ॥ १०० ॥ कृतंतकल्पैः शरैस्तं जलसंध आगमद्रणे गजस्कंधगतोभियोद्धुम् ॥ निवारयंतं तमसह्यविक्रमं निहत्य बाणैः समरे स सात्यकिः १०१

लंविवृद्धमितिसंबंधः । तदुक्तंद्रोणपर्वणि । पूर्वमेवहिकृष्णस्यमनोगतमिदंप्रभो । विजेतव्योयथावीरःसात्यकिर्यूपकेतुना । अतीतानागतेराजन्सहिवेत्तिजनार्दनइति ॥ ९८ ॥ तदातस्मिन्दिने ततइतिपाठे कृष्णवरादेरित्यर्थः । विवृद्धोरुबलान्निमित्तात्संस्थाप्य । व्यूहाद्बहिरितिशेषः ॥ ९९ ॥ तंकृतवर्माणंविरथम् । तंकृतवर्माणंविजित्य । अतीत्यवीरानितिशेषः । यूनांतरुणानांशिरांसिशरैःकृंतन्ययौ ॥ १०० ॥ जलसंधः जलसंधनामातंसात्यकिमगमत् ॥ १०१ ॥ ॥ ॥ ॥ ॥

तंजलसंधंनिहत्य गजस्यंदनवाजिपत्तिनः गजादिमतोवीरान्निघ्नन् बलंविलोडयामास ॥ १०२ ॥ पार्वतेयान्पर्वतसंबंधिराजानस्तन्नामकगणान्बली यूपकेतुःभूरिश्रवाःतं सात्यकिंआरराप ॥ १०३ ॥ १०४ ॥ निपात्यनिहत्येत्यर्थः । चर्मवरासिधारिणौ शतचंद्रखड्गधारिणौ ॥ १०५ ॥ वक्षसिपदाअधिरुह्य शिरःअपहर्तुंछेत्तुंखड्गंउदग्रही त् ऊर्ध्वंकृत्वाअग्रहीत् ॥ १०६ ॥ वासुदेवःरणेतद्भूरिश्रवसःकर्मनिरीक्ष्य शैनेयंत्रायस्वेतिजगाद । अन्यत्रयुध्यतःपार्थस्यसारथ्यंकुर्वतोवासुदेवस्य सात्यकेर्दर्शनंकथंघट नइत्याशंक्यतत्रवेदप्रमाणमाह । विश्वतश्चक्षुरिति । विश्वतश्चक्षुर्यतःअतोनिरीक्ष्येत्यन्वयः । विश्वतश्चक्षुरित्येकंपदम् । सोप्यर्जुनःभल्लेनबाणविशेषेण परस्यवैरिणः

विलोडयामास बलं कुरूणां निघ्नन् गजस्यंदनवाजिपत्तिनः ॥ १०२ ॥ स पार्वतेयांश्च शिलाभिवर्षिणो निहत्य विद्राव्य च सर्वसैनिकान् ॥ समासदत्केशवफल्गुनौ च बली तमाराथ च यूपकेतुः ॥ १०३ ॥ तयोरभूद्युद्धमतीव घोरं चिरं विचित्रं च महद्विभीषम् ॥ १०४ ॥ परस्परं तौ तुरगान्निहत्य निपात्य सूतौ धनुषी निकृत्य ॥ समीयतुश्चर्मवरासिधारिणौ विचित्रमार्गानपि दर्शयंतौ ॥ १०५ ॥ स सौमदत्तिर्भुवि सात्यकिं रणे निपात्य केशेषु च संप्रगृह्य ॥ पदास्य वक्ष्यस्यधिरुह्य खड्गमुदग्रहीदाशु शिरोपहर्तुम् ॥१०६॥तद्वासुदेवस्तु निरीक्ष्य विश्वतश्चक्षुर्जगादाशु धनंजयं रणे ॥ त्रायस्व शैनेयमिति स्म सोपि भल्लेन चिच्छेद भुजं परस्य ॥ १०७ ॥ स तेन चोत्कृत्तसखड्गबाहुर्विनिंद्य पार्थं निषसाद भूमौ ॥ प्रायोपविष्टः शरसंस्तरे हरिं ध्यायन्विनिंदन्नसुरप्रवेशात् ॥ १०८ ॥ गते सुरा[illegible]श उतातिभक्त्या ध्यायत्यमुष्मिन् गरुडध्वजं तम् ॥ शैनेय उत्थाय निवार्यमाणः कृष्णार्जुनाद्यैरहरच्छिरोस्य ॥ १०९ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥

॥ १०७ ॥ तेनअर्जुनेनभल्लेनवानिकृत्तःछिन्नःखड्गसहितःबाहुर्यस्यसतथा । सभूरिश्रवाःनिषसादउपविष्टोभूत् ॥ हरिंध्यायनअसुरप्रवेशाद्धरिंकृष्णंविनिंदन् कृष्णोमनुष्य इतिबुद्ध्येतिशेषः । शरसंस्तरेशरशय्यायांप्रायोपविष्टः । निरशनव्रतनिष्ठोभूदितिशेषः ॥ १०८ ॥ असुरावेशेगतेसति अतिभक्त्या उत्कृष्टभक्त्याअमुष्मिन् भूरिश्रवसिगरुडध्वजंतंकृष्णं ध्यायतिसति अस्यभूरिश्रवसःशिरःअहरत्अच्छिनत् ॥ १०९ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

कृष्णः एतदर्थं सात्यक्यर्थं कूबरं संपादितं ससूतं स्वकीयं रथं सात्यकये ददौ । अथ तृषार्दिताः पीडिता तदा स पार्थः वारुणास्त्रं वरुणदेवताकास्त्रमसृजत् ॥ ११० ॥ तेनैव वारुणास्त्रेणैव बाणरूपां बाणात्मकामश्वशालां अश्वार्थशालां चकार । ततो हरिः तत्र शालायां हयान्विमुच्य रथादिति शेषः । अपाययत् तदा परान् शत्रून् आर्दयत् पीडयत् ॥ १११॥ प्रभुः कृष्णः उद्धृताः उत्पाटिताः सायकाः एभ्यस्ते तथा तान् गतश्रमान् तुरगान् अश्वान् पुनः रथे युयोज । तेन कृष्णेन प्रचोदिते प्रेरिते तथैव पूर्ववदेव ॥ ११२ ॥ चिंतया आकुलितः गांडिवध्वनिः न संश्रूयते पांचजन्यरावः संश्रूयते ॥ ११३ ॥ मया नियुक्तः आज्ञापितः तस्य सात्यकेः अधिकं भारं मन्ये । तत्तस्मात् हे भीम त्वं गत्वा यदि तौ जीवतः तर्हि पार्थं

तदा स्वकीयं रथमेतदर्थं कूबरं ददौ सात्यकये ससूतम् ॥ कृष्णोथ पार्थस्य हयांस्तृषार्दितांस्तदासृजद्वारुणास्त्रं स पार्थः ॥ ११० ॥ तेनैव तीर्थं परमं चकार तथाश्वशालामपि बाणरूपाम् ॥ ततो विमुच्यात्र हयानपाययद्धरिस्तदा वा सविरार्दयत्परान् ॥ १११ ॥ युयोज कृष्णस्तुरगान् रथे पुनर्गतश्रमानुद्धृतसायकान्प्रभुः ॥ प्रचोदिते तेन रथे स्थितः पुनस्तथैव बीभत्सुररीनयोधयत् ॥११२॥ शिनिप्रवीरे तु गते युधिष्ठिरः पुनश्च चिंताकुलितो बभूव ह ॥ जगाद भीमं च न गांडिवध्वनिः संश्रूयते पांचजन्यस्य रावः ॥११३॥ मया नियुक्तश्च गतः ससात्यकिर्भारं च तस्याधिकमेव मन्ये ॥ तत्पाहि पार्थं युयुधानमेव त्वं भीम गत्वा यदि जीवतस्तौ ॥ ११४ ॥ इतीरितः प्राह वृकोदरस्तं न रक्षितं वासुदेवेन पार्थम् ॥ ब्रह्मेशानावपि जेतुं समर्थौ किं द्रोणकर्णादिधनुर्भृतोत्र ॥११५॥ अतो भयं नास्ति धनंजयस्य न सात्यकेश्चापि हरेः प्रसादात् ॥ रक्ष्यस्त्वमेवात्र मतो मयाद्य द्रोणो ह्ययं त्वां यतते ग्रहीतुम् ॥ ११६ ॥ इतीरितः प्राह युधिष्ठिरस्तं न जीवमाने युधि मां घटोत्कचे॥धृष्टद्युम्ने चास्त्रविदां वरिष्ठे द्रोणो वशं नेतुमिह प्रभुः क्वचित्॥११७॥

युयुधानं सात्यकिं पाहि रक्ष ॥ ११४ ॥ वासुदेवेन रक्षितं तं पार्थं ब्रह्मेशानावपि जेतुं न समर्थौ । द्रोणकर्णादिधनुर्भृतः द्रोणादिधनुर्धारिणः अत्र पार्थजये असमर्था इति किं वक्तव्यमित्यर्थः ॥ ११५ ॥ अयं द्रोणः त्वां ग्रहीतुं यतते यत्नं करोति हि यस्मादितः कारणात् अत्र द्रोणात् मया त्वं रक्ष्य एव ॥ ११६ ॥ घटोत्कचे धृष्टद्युम्ने च जीवमाने जीवति सति । इह युद्धस्थाने द्रोणो वशं नेतुं मां ग्रहीतुमित्यर्थः । क्वचित्प्रभुर्न ॥ ११७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

दृष्टौअस्मिन्कालेदृष्टौदर्शनेसति संज्ञांसूचनाम् ॥ ११८ ॥ तेनयुधिष्ठिरेणउक्तोभीमः अमुष्यधर्मराजस्यसम्यक्रक्षणेहैडिंबंघटोत्कचंसेनापतिंधृष्टद्युम्नंव्यधात्स्थापयामास ॥ ११९ ॥ अत्ररणभुविनौकेशवार्जुनौयत्रतत्रप्रयाहीत्याह । जीवमानेजीवतिसति नक्षमःनसमर्थः । नाहि त्वांहत्वापहीष्यतीत्यतआह । मृत्युरिति । अहंतस्यद्रोणस्य ॥ १२० ॥ पुनःपुनरितिब्रुवाणंनृपतिंचमूपतिंतंधृष्टद्युम्नं प्रणिधायसंस्थाप्य । यद्वा नृपतिंधर्मजंप्रणिधाय धर्मजंरक्षितुंनिधायेत्यर्थः । निरंतरंअव्यवधानंयथास्यात्तथा बाणपूगान्शरसमूहान् । प्रवमन्सृजन्परानीकं शत्रुसैन्यंययौ ॥ १२१ ॥ शिष्यस्नेहात् ममशिष्यइतिस्नेहात् । वासविःपार्थःतस्यसहायकृद्भविवितिस्नेहात् । सात्यकिश्चम

यदि प्रियं कर्तुमिहेच्छसि त्वं मम प्रयात्याशु च पार्थसात्यकी ॥ रक्षस्व संज्ञामपि सिंहनादात्कुरुष्व मे पार्थशैनेय दृष्टौ ॥११८॥ तथा हते चैव जयद्रथे मे कुरुष्व संज्ञामपि तेन चोक्तः॥भीमस्तु हैडिंबममुष्य रक्षणे व्यधाच्च सेनापतिमिव सम्यक् ॥ ११९ ॥ स चाह सेनापतिरत्र भीमं प्रयाहि तौ यत्र च केशवार्जुनौ ॥ न जीवमाने मयि धर्षितुं क्षमो द्रोणो नृपं मृत्युरहं च तस्य ॥ १२० ॥ इति ब्रुवाणं प्रणिधाय भीमः पुनः पुनस्तं नृपतिं गदाधरः ॥ ययौ परानीकमधिज्यधन्वा निरंतरं प्रवमन्बाणपूगान् ॥ ॥ १२१ ॥ न्यवारयत्तं शरवर्षधारो द्रोणो वचश्चेदमुवाच भीमम् ॥ शिष्यस्नेहाद्वासविः सात्यकिश्च मया प्रमुक्तौ भृशमानतौ मयि ॥१२२॥ स्वीया प्रतिज्ञापि हि सैंधवस्य गुप्तौ मया पार्थकृते विसृष्टा ॥ दास्येन ते मार्गमहं कथंचित्पश्यास्त्रवीर्यं मम दिव्यमद्भुतम् ॥१२३ ॥इत्युक्तवाक्यः स गदां समाददे चिक्षेप तां द्रोणरथाय भीमः ॥ उवाच चाहं पितृवन्मानये त्वां सदामृदुस्त्वांप्रतिनान्यथा क्वचित्॥ १२४ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥

याप्रमुक्तौ । भीमःकिंपार्थसहायकृन्नभवतीत्यतआह । भृशमानताविति । मयिभृशंआनतौअतिनम्रौअतएवमुक्ताविविति संबंधः ॥१२२ ॥ सैंधवस्यगुप्तौरक्षणविषयेस्वीया स्वकीयाप्रतिज्ञापि पार्थकृतेअर्जुनार्थेमयाविसृष्टात्यक्ता ॥ १२३ ॥ इत्युक्तवाक्यःइतिउक्तंवाक्यंयेनसःइत्युक्तवाक्यःभीमःतांगदांचिक्षेपउवाच च । किमिति । अहंत्वांपितृवत् पित्रातुल्यइतिमानयेमानयामिअतएवत्वांप्रतिसदामृदुःक्वचिदन्यथान काठिण्याश्रितःनकरिष्येगुरुत्वादित्यर्थः ॥ १२४ ॥ ॥ ॥ ॥ ॥

अमार्दवेमृदुत्वाभावेसति ममयादृशंबलंतादृशंपश्येत्युवाचेतिपूर्वेणान्वयः । यंत्रंचक्रंकूबरःयुगंधरः सूतादिसहितस्तस्यद्रोणस्यरथःगदायाअभिघातेनपातनेन ॥ १२५ ॥ लाघवतःजवेन । अवप्लुतःपुप्लुवइत्यर्थः । परमन्यम् ॥ १२६ ॥ जगदीरणस्यजगत्प्रेरकस्यवायोः आत्मजःभीमःरथादवप्लुतःसन् शिरःपुरोनिधायतंद्रोणं कथमिववृषोवृष भः ॥ १२७ ॥ मनोजवात्मनोवेगात्तंद्रोणं आप्य रथंहस्तेनगृहीत्वा अंबरेआकाशेआक्षिपत् । किंकर्तुं अहंत्वांहंतुंशक्तोपिगौरवादेवननिहन्मि । इत्यस्यद्रोणस्यतत् स्वबलंसुष्ठुज्ञापयितुंआक्षिपदितिसंबंधः ॥ १२८ ॥ वाजिसूतैःसहितःसरथःक्षितौपतन्सन् विचूर्णितः पतद्विचूर्णितइतिवापाठः । पतंश्चासौविचूर्णितश्चेतिविग्रहः । अ

अमार्दवे पश्य च यादृशं बलं ममेति तस्याशु विचूर्णितो रथः ॥ गदाभिघातेन वृकोदरस्य ससूतवाजिध्वजयंत्र कूबरः ॥ १२५ ॥ द्रोणो गदामापततीं निरीक्ष्य त्ववप्लुतो लाघवतो धरातले ॥ तदैव दुर्योधनयार्पितं रथं परं समास्थाय शरान्ववर्ष ह ॥ १२६ ॥ शरैस्तदीयैः परमास्त्रमंत्रितैः प्रवृष्यमाणो जगदीरणात्मजः ॥ शिरो निधायाशु पुरो वृषो यथा तमभ्ययादेव रथादवप्लुतः ॥ १२७ ॥ मनोजवादेव तमाप्य भीमो रथं गृहीत्वांबर आक्षिपत्क्षणात् ॥ शक्तोप्यहं त्वां न निहन्मि गौरवादित्येव संज्ञापयितुं तदस्य ॥ १२८ ॥ सवाजिसूतः सरथः क्षितौ पतन्विचूर्णितो स्माद्गुरुरप्यवप्लुतः ॥ तदा विशोकस्य रथं समानयत्तमारुहद्भीम उदारविक्रमः ॥ १२९ ॥ द्रोणोपि दुर्योधनदत्तमन्यं रथं समास्थाय युधिष्ठिरं ययौ ॥ ग्रहीतुकामं नृपतिं प्रयांतं न्यवारयत्संयति वाहिनीपतिः ॥ १३० ॥ विद्रावितां द्रोणशरैः स्वसेनां संस्थाप्य भूयो द्रुपदात्मजः शरैः ॥ द्रोणं निवार्यैव चमूं परेषां विद्रावयामास च तस्य पश्यतः ॥ १३१ ॥ तयोरभूद्युद्धमतीव रौद्रं जयैषिणोः पांडवधार्तराष्ट्रयोः ॥ अत्यद्भुतं संततबाणवर्षमनारतं सुचिरं निर्विशेषम् ॥ १३२ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

स्माद्रथात् विशोकः भीमसारथिः । अस्यभीमस्य ॥ १२९ ॥ वाहिन्याःसेनायाःपतिःधृष्टद्युम्नः ॥ १३० ॥ तस्यद्रोणस्यपश्यतःसतः परेषांशत्रूणांचमूंसेनाम् ॥ १३१ ॥ पांडवधार्तराष्ट्रयोःयुधिष्ठिरदुर्योधनयोःजयैषिणोःजयकांक्षिणोः तयोःधृष्टद्युम्नद्रोणयोःअतीवरौद्रं अतिक्रूरं अत्यद्भुतं अत्याश्चर्यंसंततःअंतररहितःबाणवर्षः बाणवृष्टिर्यस्मिं स्तत्तथा । अनारतं अव्यवधानंसुचिरंदीर्घकालं निर्विशेषंसमर्ममित्यर्थः । युद्धमभूत् ॥ १३२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

विंदश्चअनुविंदश्च तावेवप्रमुखौयेषांतेतथा। द्वादशद्वादशसंख्याकाःधार्तराष्ट्राःधृतराष्ट्रपुत्राः पूर्वंपार्थेनआवंत्यौविंदानुविंदौ निहताइमौधृतराष्ट्रपुत्रौ भीमनिषूदिताविविज्ञेयम् ॥ १३३ ॥ तेषांविंदादीनाम् ॥१३४॥ सत्यव्रतादयःपंचधार्तराष्ट्रस्यामात्याः॥१३५॥ सभीमःतैःसत्यव्रताद्यैः पृषत्कैःशरैःअवकीर्यमाणःप्रसार्यमाणः वर्षितइत्यर्थः। भीमः सितांस्तीक्ष्णान्विपाटान् बाणविशेषान्युगपत्समाददे। पंचबाणान्जग्रहइत्यर्थः। तैर्विपाटैःपरेहतावशिष्टाइत्यर्थः ॥ १३६ ॥ क्षुद्रमृगान्अल्पशक्तिमतःसृगालादिमृगान् तेनकृतवर्मणा ॥ १३७ ॥ गाढंदृढंयथास्यात्तथाविद्धःआहतःसकृतवर्मा वरूथिनींसेनांयातःप्राप ॥ १३८ ॥ ताभ्यांकृष्णपार्थाभ्यां उतप्रतिभाषितःउदितः सभीमः

ततः प्रायाद्भीमसेनोमितौजा सृद्रन्छरैः कौरवराजसेनाम् ॥ विंदानुविंदप्रमुखा धार्तराष्ट्रास्तमासेदुर्द्वादश वीरमुख्याः ॥ १३३ ॥ विद्धः शरैस्तैर्बहुभिर्वृकोदरः शिरांसि तेषां युगपच्चकर्त ॥ हतेषु तेषु प्रवरेषु धन्विनां सत्यव्रतः पुरुमित्रो जयश्च ॥ १३४ ॥ वृंदारकः पौरवश्चेत्यमात्याः समासदुर्धार्तराष्ट्रस्य भीमम् ॥ १३५ ॥ स तैः पृषत्कैरवकीर्यमाणः सितान्विपाटान्युगपत्समाददे ॥ जहार तैरेव शिरांसि तेषां हतेषु तेष्वेव परे प्रदुद्रुवुः ॥ १३६ ॥ स सिंहवत्क्षुद्रमृगान्समंततो विद्राव्य शत्रून्हृदिकात्मजं रणे ॥ अभ्यागमत्तेन निवारितः शरैः क्षणेन चक्रे विरथाश्वसूतम् ॥ १३७ ॥ स गाढविद्धस्तु वृकोदरेण रणं विसृज्यापययौ क्षणेन ॥ विजित्य हार्दिक्यमथाशु भीमो विद्रावयामास वरूथिनीं ताम् ॥ संप्रेषयन्सर्वनराश्वकुंजरान् यमाय यातो हरिपार्थपार्श्वम् ॥ १३८ ॥ दृष्ट्वैव कृष्णविजयौ परमप्रहृष्टस्ताभ्यां निरीक्षित उत प्रतिभाषितश्च ॥ संज्ञां नृपस्य स ददावपि सिंहनादाच्छ्रुत्वा परां मुदमवाप स चाग्र्यबुद्धिः ॥ १३९ ॥ भीमस्य नानदत एव महास्वनेन विण्मूत्रशोणितमथो सृतिमापुरेके ॥ भीतेषु सर्वनृपतिष्वमुमाप तूर्णं कर्णो विकर्णमुखरा अपि धार्तराष्ट्राः ॥ १४० ॥ ॥

सिंहनादात्सिंहनादेननृपस्ययुधिष्ठिरस्यसंज्ञांपार्थशैनेयौदृष्टावितिसूचनांददौअकरोदित्यर्थः । अग्र्यबुद्धिःसराजासिंहनादंश्रुत्वा ॥ १३९ ॥ नानदतःअतिशब्दंकुर्वतभीमस्यमहास्वनेनैवमहाध्वनिनैव विट्चमूत्रंचशोणितंचविण्मूत्रशोणितानि तेषांसमाहारःविण्मूत्रशोणितं आपुः । दुर्योधनपक्षिणांगुदलिंगादिद्वारेभ्यो रक्तस्रावोप्यभूदिति भावः । एकेकेचित्सृतिमापुः । तूर्णंशीघ्रंकर्णःअमुंभीममाप । विकर्णमुखराअप्यापुरितिशेषः ॥ १४० ॥ ॥ ॥ ॥ ॥ ॥

सभीमःविकर्णंचित्रसेनंचहत्वा । तत्रयुद्धेअर्कसूनोःकर्णस्यरथंसंचूर्णितंप्रविदधे । भीमाद्भीमसकाशात्अपयानंअपसरणंपलायनमित्यर्थः ॥ १४१ ॥ आश्वास्यविश्राम्य यातिअगात् । तान्धृतराष्ट्रसुतान् तथैवपूर्ववत्विगतानिअश्वायुधानियस्यसतथा ॥ १४२ ॥ कर्णसाहाय्यकारिणःत्रयोविंशतिःधृतराष्ट्रस्यसुताःकर्णस्यपश्यतःसतएवभीम बाणैःकृंताः शिरोधराःगलाःयेषांतेतथा । रथेभ्यःसकाशान्निपेतुः ॥ १४३ ॥ १४४ ॥ संयुगेरणेभीमेनशरैःगाढंदृढंयथास्यात्तथा अभ्यर्दितःपीडितः ॥ १४५ ॥ प्राण

हत्वा विकर्णमुत तत्र च चित्रसेनं संचूर्णितं प्रविदधे रथमर्कसूनोः ॥ घोरैः शरैः पुनरपि स्म स मृद्यमानः कर्णोऽप यानमकरोद्द्रुतमेव भीमात् ॥ १४१ ॥ आश्वास्य चैव सुचिरं पुनरेव भीमं युद्धाय याति धृतराष्ट्रसुतैस्तथान्यैः ॥ तांश्चैव तत्र विनिहत्य तथैव कर्णो व्यश्वायुधः कृत उतापययौ क्षणेन ॥ १४२ ॥ विकर्णचित्रसेनाद्या एवं वीरत माः सुताः ॥ कर्णस्य पश्यतो भीमबाणकृंतशिरोधराः ॥ १४३ ॥ निपेतुर्धृतराष्ट्रस्य रथेभ्यः पृथिवीतले ॥ त्रयोविंश तिरेवात्र कर्णसाहाय्यकारिणः ॥ १४४ ॥ एकविंशतिवारं च व्यश्वसूतरथध्वजः ॥ गाढमभ्यर्दितस्तीक्ष्णैः शरैर्भीमेन संयुगे ॥ १४५ ॥ प्राणसंशयमापन्नः सर्वलोकस्य पश्यतः ॥ रणं त्यक्त्वा प्रदुद्राव रुदन् दुःखात्पुनःपुनः ॥ १४६ ॥ द्वाविंशतिमयुद्धे तु रामदत्तं सुभास्वरम् ॥ अभेद्यं रथमारुह्य विजयं धनुरेव च ॥ १४७ ॥ तद्दत्तमेव संगृह्य तूणौ चाक्षयसायकौ ॥ आससाद रणे भीमं कर्णो वैकर्तनो रुषा ॥ १४८ ॥ सुघोर आसीत्स तयोर्विमर्दो भीमस्य कर्ण स्य च दीर्घकालम् ॥ आकाशमाच्छादयतोः शरौघैः परस्परं चैव सुरक्तनेत्रयोः ॥ १४९ ॥ ॥ ६ ॥

संशयंस्वजीवनविषयेसंशयंआपन्नःदुःखात्पुनःपुनःरुदन् कर्णःसर्वलोकस्यपश्यतःसतः रणंत्यक्त्वाप्रदुद्राव ॥ १४६ ॥ सुष्ठुभास्वरंप्रकाशमानमित्यर्थः ॥ १४७ ॥ तद्दत्तंपरशु रामदत्तंधनुःअक्षयसायकौ । अक्षयाःक्षयरहिताःसायकाःययोस्तौतथा । तौतूणौइषुधीचसंगृह्य विकर्तनस्यसूर्यस्यापत्यंवैकर्तनः ॥ १४८ ॥ विमर्दोरणः ॥ १४९ ॥

सहजाभ्यांकुंडलंचवर्मचकुंडलवर्मणीताभ्यांतथा । कुंडलमितिजात्येकवचनम् । संयुतंत्वांअंजसासम्यक्हंतुंशक्नुयांशक्तोस्मि ॥ १५० ॥ इतिज्ञापयितुंसूचनार्थंतस्यकर्णस्य । इंद्रेणसहजकुंडलकवचानामपहृतत्वात् कुंडलेकवचंचेत्येतानिसहजेभ्योऽन्यानीत्यर्थः । शरैरुत्कृत्यछित्त्वा भूतलेपातयामास ॥ १५१ ॥ एवमनेनप्रकारेणतानिसहजकुंडलवर्माणि अपकृष्यछित्त्वा त्वांहन्यामितिवेदयन्ज्ञापयन्सन् सहजकुंडलादौसति कर्णहननेर्जुनस्यासामर्थ्यात् भीतेनेंद्रेणतानियाचितानिममतुकुंडलादौविद्यमानेपि त्वद्धननेसामर्थ्यमस्तीतिदर्शयितुं अलंकारार्थंधृतं मध्येआगंतुकसहजकुंडलादिकंमयाभुविपातितानीति भीमस्याभिप्रायइत्यर्थः । भीमःपुनश्चैनंकर्णम् ॥ १५२ ॥ ततः भीमस्यतुइत्थंबुद्धिःमननंबभूव । किमिति । अस्पर्धिनःस्पर्धारहितस्यअमुष्यकर्णस्यरामेणसर्वजयोदत्तोहि । अयंकर्णःमयास्पृधास्पर्धयानयुध्यति । अयंकर्णःकृच्छ्रगोहि

ततो भीमो महाबाहुः सहजाभ्यां च संयुतम् ॥ त्वां तु कुंडलवर्मभ्यां शक्नुयां हंतुमंजसा ॥ १५० ॥ इति ज्ञापयितुं तस्य कुंडले कवचं तथा ॥ शरैरुत्कृत्य समरे पातयामास भूतले ॥ १५१ ॥ एवं तान्यपकृष्याहं हन्यां त्वामिति वेदयन् ॥ पुनश्च बहुभिस्तीक्ष्णैः शरैरेनं समर्दयत् ॥ १५२ ॥ ततस्तु भीमस्य बभूव बुद्धिरस्पर्धिनः सर्वजयो हि दत्तः ॥ अमुष्य रामेण न च स्पृधायं कर्णो मया युध्यति कृच्छ्रगो ह्ययम् ॥ १५३ ॥ तथापि मे भगवानत्यनुग्रहाज्जयं ददात्यात्मवचो विहाय ॥ मया तु मान्यं वचनं हरेः सदा तस्माद्दास्ये विवरं त्वद्य शत्रोः ॥ १५४ ॥ एवं स्मृत्वा तेन रंध्रे प्रदत्ते कर्णोस्त्रवीर्येण धनुर्न्यकृंतत् ॥ रश्मीन्हयानां च ततो रथं स तत्याज नैजं बलमेव दर्शयन् ॥ १५५ ॥ न मे रथाद्यैर्धनुषापि कार्यमित्येव संज्ञापयितुं वृकोदरः॥ समुत्पपातोत्तमवीर्यतेजा रथं च कर्णस्य समास्थितः क्षणात्॥ १५६ ॥

कष्टप्राप्तःखलु ॥ १५३ ॥ तथापिकर्णस्यसर्वजयेदत्तेपि भगवान्परशुरामःअत्यनुग्रहात् मयिविद्यमानमहानुग्रहात् । आत्मवचः । अस्पर्धमानंनकथंचनत्वांजेताकश्चिदिति स्ववाक्यंविहायमेजयंददाति तस्मात्कारणादद्यशत्रोः कर्णस्यविवरमवकाशंदास्ये ॥ १५४ ॥ तेनभीमेनरंध्रेऽवकाशेरश्मीन्रज्जून्न्यकृंतत् । ततःसभीमःनैजंस्वाभाविकंबलंवेदयन्वेज्ञापयन्नेवरथंतत्याजअत्यजत् ॥ १५५ ॥ मेरथाद्यैःआद्यशब्देनअस्त्रसैन्यादिकंगृह्यते धनुषापिकार्यंनइत्येवसंज्ञापयितुंख्यापयितुं उत्तमेवीर्यतेजसीपराक्रमबलेयस्यसतथा सवृकोदरःसमुत्पपात क्षणात्कर्णस्यरथंसमास्थितः समारूढोभूदितिशेषः ॥ १५६ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तदाकर्णः भीतःसन् रथकूबरे कूबरस्तुयुगंधरइत्यमरः। कूबरस्याधः चक्रवाजिमध्यप्रदेशइत्यर्थः। व्यलीयतलीनोभूत्। भीमःकिमर्थंकर्णस्यरथमास्थितइत्यतआह। ज्ञापयितुमिति। सवृकोदरःनिरायुधत्वेपि अरिनिग्रहादौवैरिविरोधहननादौ समर्थोस्मीतिस्वशक्तिंज्ञापयितुं कर्णरथमारुह्येतिशेषः अतोरथात्कर्णरथादवप्लुतःअधःप्लुतः ॥ १५७॥ अस्यकर्णस्यरथाद्यपहर्तुं नाशयितुंग्रहीतुंवाहंतुमेववा कर्णमितिशेषः नैच्छत् । पूर्वंद्रोणस्यरथादिकंपरिहर्तुंयद्वत्यथाशक्तःतथा अतीवशक्तोपिकर्णरथादिनाशेशक्तइत्यर्थः। अस्यरामस्यभक्त्यारामवचः अमानयत् ॥१५८॥भीमस्यकर्णाहननेकारणद्वयमाह। सत्यमिति। अहंहन्यामितिवासवेःप्रतिज्ञां सत्यांकर्तुंवैष्णवत्वाच्च भगवद्भक्तत्वा

भीतस्तु कर्णो रथकूबरे तदा व्यलीयताधः स वृकोदरो रथात् ॥ अवप्लुतो ज्ञापयितुं स्वशक्तिं निरायुधत्वेप्यरिनिग्रहादौ ॥ १५७ ॥ नैच्छद्ग्रहीतुं विनिहंतुमेव वा रथं धनुर्वास्य रणेपहर्तुम् ॥ द्रोणस्य यद्वत्पूर्वमतीव शक्तोप्यमानयद्रामवचोस्य भक्त्या ॥ १५८ ॥ सत्यां कर्तुं वासवेश्च प्रतिज्ञां संमानयन्वैष्णवत्वाच्च कर्णम् ॥ दातुं रंध्रं सूर्यजस्य प्रयातः शरक्षेपार्थं दूरमतिष्ठदत्र ॥ १५९ ॥ ततः कर्णो दूरगतं वृकोदरं संमानयंतं रामवाक्यं विजानन् ॥ शरैरविध्यत्स च तानवारयद्गजैर्मृतैस्तांश्च चकर्त कर्णः॥१६०॥ व्यसून् गजान् प्राक्षिपंतं समेत्य संस्पृश्य चापेन वचश्च दुष्टम्॥ संश्रावयामास सुयोधनस्य प्रीत्यै प्रजानन्नपि तस्य वीर्यम् ॥ १६१ ॥ संश्रावयंतं वचनानि रूक्षाण्यपाहनद्वाणगणैस्तदार्जुनः ॥ स वर्महीनः पार्थवाणाभितप्तो ॥ व्यपागमद्भीम आपात्मयानम् ॥ १६२ ॥ ७ ॥ ॥ ७ ॥

त्कर्णस्येतिशेषः। कर्णंसंमानयन् हंतुंनैच्छदितिसंबंधः। सूर्यजस्यशरक्षेपार्थंरंध्रमवकाशंदातुं दूरंप्रयातः किंचिद्व्यवधानप्रदेशेअतिष्ठत् भीमइतिशेषः ॥१५९॥ सभीमःतान् शरान्मृतैर्गजैःमृतगजप्रक्षेपणंकृत्वेतिभावः। अवारयत्तांश्चमृतगजांश्चकर्त ॥ १६० ॥ व्यसून्विगतप्राणान्चापेनधनुषा संस्पृश्यकंठेप्रास्येत्यर्थः। अस्यभीमस्यवीर्यंजानन्नपिदुर्योधनस्यप्रीत्यै दुष्टंक्रूरंवचःवाक्यंसंश्रावयामास ॥१६१॥ रूक्षाणिक्रूराणि अपाहनत्अविध्यत्वर्महीनःभीमेनवर्मणःपातितत्वादित्यर्थः। व्यपागमत् अपससार। आत्मयानंस्वरथम् ॥ १६२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

सकर्णःबीभत्सुतःअर्जुनात् अन्यान्धर्मादिचतुरःनहन्यामितिकुंत्यैयतःप्राह अतःमोक्तुंनैच्छत्यद्यपिशक्तिंमुंचेत्तर्हि सभीमःतयाशक्त्याऽवध्यःवधानर्हः ॥ १६३ ॥ त
याअवध्यइत्युक्तंसयुक्तिकमुपपादयति । नारायणेति । प्रपातितंद्रोणवधानंतरं अश्वत्थाम्नेतिशेषः । तथा अन्यच्चमहदपिअस्त्रशस्त्रमित्यत्रद्वंद्वैकवद्भावः । किंप्रकरोतिनकिम
पीत्यर्थः ॥ १६४ ॥ हैडिंबोघटोत्कचः तस्यमृत्यवेअवेदितिकेशवस्याभिप्रायंजानन् ॥ १६५ ॥ अन्यंरामदत्तादन्यं कृष्णबुद्ध्याकृष्णोऽितबुद्ध्या ॥ १६६ ॥ तामिंद्रदत्तांअयात्

कर्णो भीमे वासवीं नैव शक्तिं विमोक्तुमैच्छन्नैव बीभत्सुतोन्यान् ॥ हन्यामिति प्राह यतः स कुंत्यै यद्यप्यवध्यः स तयापि भीमः ॥ १६३॥ नारायणास्त्रं शिरसि प्रपातितं न यस्य लोमाप्यदहच्छिरःस्थितम् ॥ किं तस्य शक्तिः प्रकरोति वासवी तथान्यदप्यस्त्रशस्त्रं महच्च ॥१६४॥ भीमः कर्णरथं प्राप्तः शक्तिं नादातुमैच्छत ॥ अभिप्रायं केशवस्य जानन्हैडिंबमृत्यवे ॥ १६५ ॥ ततः कर्णोन्यमास्थाय रथमर्जुनमभ्ययात् ॥ दिव्यं रथं धनुश्चैव कृष्णबुद्ध्यार्जुनो हरेत् ॥ १६६ ॥ इति भीतस्तु तां शक्तिमादायार्जुनमृत्यवे ॥ युद्धायायाद्रथं चापं शक्तिं चैकत्र नाकरोत् ॥ १६७ ॥ एकं हृतं चेदन्यत्स्यादिति मत्वा भयाकुलः ॥ बिभेति सर्वदा नीतेः कृष्णस्यामिततेजसः ॥ १६८ ॥ निश्चितो मरणायैव मृतिकाले तु तं रथम् ॥ आरुह्यागाद्धि पूर्वं तु न कालं मन्यते मृतेः ॥ १६९ ॥ शक्तिं तु तद्रथगतां प्रसमीक्ष्य कृष्णः संस्थाप्य पार्थमपि सात्यकिमेव योद्धुम् ॥ दत्त्वा स्वकीयरथमेव विरोचनस्य पुत्रेण सोऽदिशदमुष्य बलं प्रदाय॥१७ ॥

अगात् रथादित्रयमेकत्रनाकरोत् एकस्मिन्युद्धेरथादित्रयं युगपदादायनयातीतिभावः ॥ १६७ ॥ कुतइत्यतआह । एकमिति । नीतेःसकाशाद्बिभेति ॥ १६८ ॥ मृतिकाले
मरणदिने मरणायैवमर्तुमेवनिश्चितःकृतबुद्धिः तंरामदत्तंरथंआरुह्यचापतूणानगृहीत्वेतिज्ञातव्यम् । अगात् हियस्मात्तस्मात्पूर्वंमरणदिनात्पूर्वं मृतेःकालंनमन्यतेननिश्चिनो
ति ॥ १६९ ॥ सकृष्णःअमुष्यसात्यकेः बलंदत्त्वा कर्णजयोपयोगीतिभावः ॥ स्वकीयंरथमेवदत्त्वा विरोचनस्यसूर्यस्य पुत्रेणकर्णेनयोद्धुंसात्यकिमेवादिशत् ॥ १७० ॥

इहयुद्धेमेममप्रतियोधनाय योद्धुंअदादितिसात्यकिमीक्षमाणःमन्यमानांसंस्पर्धयैवयुयुधे । तेनस्पर्धारूपेणकारणेनहरियानसंस्थःकृष्णरथेस्थितःसात्यकिः अमुंकर्णंविरथं विगतःरथोयस्यसःतंचकार ॥ १७१ ॥ हरियानसंस्थइतिविशेषणंस्पष्टयति । नेति । अत्रयुद्धे ॥ १७२ ॥ कर्णःभीमंतूबरइतिदुष्टंवचः किमितिश्रावयामासेत्यतस्तन्निमित्तं दुष्टवचनश्रवणमात्रेणैव भीमकृतकर्णवधोद्योगनिमित्तंचविविच्याह । शस्त्रेति । करोतीतिकृत् धनुर्विद्यायाःपुराकृताप्रथमकर्त्रा जामदग्न्येनपरशुरामेणशस्त्रसंग्रहणकालेशस्त्रा भ्यासकाले कुमाराणांव्रतंभवेदित्युक्तम् ॥ १७३ ॥ व्रतंविशिनष्टि तदिति । शत्रुवधरूपंस्वानिष्टवाचकस्य शत्रोर्वधरूपंपूर्वासिद्धं पूर्वमसिद्धं पूर्वासिद्धम्। केनापिनकृतंगूहितंगो

शिष्यं त्वशक्तमिह मे प्रतियोधनाय पार्थे त्यदादिति स सात्यकिमीक्षमाणः ॥ संस्पर्धयैव युयुधे विरथं चकार तेनैव सात्यकिरमुं हरियानसंस्थः ॥ १७१ ॥ न केशवरथे कश्चित्स्थितो याति पराजयम् ॥ अतश्च सात्यकिनापि कर्णेनात्र पराजयम् ॥ १७२ ॥ शस्त्रसंग्रहकाले तु कुमाराणां व्रतं भवेत् ॥ इत्युक्तं जामदग्न्येन धनुर्विद्यापुराकृता ॥ १७३ ॥ तच्छत्रुवधरूपं च पूर्वासिद्धं च गूहितम् ॥ अविरुद्धं च धर्मस्य कार्यं रामस्य तुष्टिदम् ॥ अनुपद्रवाय लोकस्य त्यक्तो भीमो व्रतं त्विदम् ॥ १७४ ॥ चकार तूबरेत्युक्तो हन्यामिति रहः प्रभुः ॥ १७५ ॥ अनुपद्रवाय लोकस्य सुव्यक्तश्मश्रुमंडलः ॥ सुश्मश्रुं मां न कश्चिद्धि तथा ब्रूयादिति स्फुटम् ॥ तदर्जुनो विजानाति स्नेहाद्भीमोदितं रहः ॥ १७६ ॥ अर्जुनस्यापि गांडीवं देहीत्युक्ते निहन्मि तम् ॥ १७७ ॥ गांडीवस्यागमं पूर्वं जानात्येव हि नारदात् ॥ इति तच्च विजानाति भीम एको न चापरः ॥ १७८ ॥ ॥ ७ ॥ ॥ ॥ ॥ ॥ ॥

प्यम् । धर्मस्याविरुद्धंरामस्यतुष्टिदंलोकस्यानुपद्रवाययत् तद्व्रतंकार्यमितिजामदग्न्येनोक्तमितिसंबंधः ॥ १७४ ॥ अतःरामोक्तत्वात्स्फुटंयथास्यात्तथा । सुश्मश्रुंशोभनश्मश्रुमंडलंमांकश्चित्पुरुषःतथातूबरइतिनब्रूयादितिमत्वा सुव्यक्तंसम्यक्प्रतीयमानं श्मश्रुमंडलंयस्यसतथा । भीमःलोकस्यअनुपद्रवाय तूबरेत्युक्ते हन्यांतूबरंब्रुवंतमितिशेषः । इतीदंव्रतं प्रभुःसमर्थःरहश्चकार ॥ १७५ ॥ १७६ ॥ तद्व्रतंअर्जुनस्यापिव्रतमितिशेषः ॥ १७७ ॥ नन्वर्जुनःशस्त्रसंग्रहणकाले गांडीवाभावात् कथंव्रतंचक्रइत्यतआह । गांडीवस्येति । तदर्जुनव्रतमितिएवमस्तीतिविजानाति ॥ १७८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

फल्गुनेअर्जुनाय प्रतिज्ञांब्रुवतोभीमसेनस्यप्रतिज्ञांशुश्राव । प्रतिज्ञामित्येतदावर्त्ययोजनीयम् । सदुर्योधनः तांप्रतिज्ञाम् ॥१७९ ॥ अतूवरोप्यसौभीमः येनकर्णेनतस्मात्प्रति ज्ञातत्वात् । अलंप्रकोपनायैव कोपमुत्पादयितुमेव तूवरइतिउक्तःसन् । तस्मात्तूवरइत्युक्तत्वात् अर्जुनमब्रवीत् । तूवरोश्मश्रुपुरुषइतिविश्वः ॥ १८० ॥ किमिति त्वप्रतिज्ञाविषये । अत्रइदानींवैकर्तनःकर्णःममहंतव्यतांवधार्हतांप्राप्तोहि ॥ १८१ ॥ त्वयामयैवमयाचउभाभ्यामित्यर्थः॥ १८२ ॥ हिनिश्चयेन अहंत्वदीयः तवशिष्यो

प्रतिज्ञां भीमसेनस्य ब्रुवतः फल्गुने रहः ॥ दुर्योधनस्तु शुश्राव तां च कर्णाय सोब्रवीत् ॥ १७९ ॥ अतूवरोपि ते नासौ तस्मात्तूवर इत्यलम् ॥ उक्तः प्रकोपनायैव तस्मादर्जुनमब्रवीत् ॥ १८० ॥ जानासि मत्प्रतिज्ञां त्वं त्वत्प्रति ज्ञामहं तथा ॥ अतो हंतव्यतां प्राप्तो मम वैकर्तनोत्र हि ॥ १८१ ॥ प्रतिज्ञातो वधश्चास्य त्वयापि मदनुज्ञया ॥ अतस्त्वया मयैवायं हंतव्यः सूतनंदनः ॥ १८२ ॥ इत्युक्तो वासविः प्राह हंतव्योयं मयैव हि ॥ त्वदीयोहं यतस्ते न मत्कृतं त्वत्कृतं भवेत् ॥१८३॥ न त्वत्कृतं मत्कृतं स्याद्गुरुर्मम यतो भवान् ॥ अतो मयैव हंतव्य इत्युक्त्वा कर्णम ब्रवीत् ॥ १८४ ॥ रूक्षा वाचः श्रावितोयं भीमः कृष्णस्य शृण्वतः ॥ यच्चाभिमन्युर्युष्माभिरेकः संभूय पातितः ॥१८५॥ अतस्त्वां निहनिष्यामि त्वत्पुत्रं च तवाग्रतः ॥ इत्युक्तोन्यं रथं प्राप्य कर्ण आवीज्जद्रथम् ॥ १८६ ॥ द्रौणि कर्णाभिगुप्तं तं नाशकद्धंतुमर्जुनः ॥ तत्र वेगं परं चक्रे द्रौणिः पार्थनिवारणे ॥१८७ ॥ नचैनमशकत्तर्तुं यत्नवान पि फल्गुनः ॥ तयोरासीच्चिरं युद्धं चित्रं लघु च सुष्ठु च ॥ १८८ ॥ ॥ ॥ ॥

यतःतेनकारणेन ॥ १८३ ॥ भवान्मद्गुरुःयतःअतःअर्जुनःअब्रवीत् ॥ १८४ ॥ किमिति । शृण्वतःसतःरूक्षाःक्रूराःसंभूयमिलित्वा ॥ १८५ ॥ आवीत्अपात् ॥ १८६ ॥ तत्रतेषुमध्येपरंवेगंमहाचमत्कारम् ॥ १८७ ॥ एनंअश्वत्थामानं तर्तुमतिवर्तितुं लघुहस्तलाघववत् ॥ १८८ ॥ ॥ ॥ ॥ ॥ ॥ ॥

भगवान्कृष्णः तद्दृष्ट्वायुद्धंदृष्ट्वा । भास्करेलोहितायतिरक्तवर्णेजातेसति । अजितेअपराजितेसति । अहतेअमारितेसति ॥ १८९ ॥ गगनेआकाशे तमसाव्याप्तेसति । वि
शश्रमुःविश्रांतिंप्रापुः । हताभग्नाप्रतिज्ञायस्यसतथातस्य ॥ १९० ॥ वह्निंविविक्षन्निव प्रवेष्टुमिच्छन्निव स्थितःदर्शितःदर्शयन्नात्मानमितिशेषः । शक्रसूनुःशिरश्चकर्त
तदाजनार्दनःतमर्जुनं प्रत्याह । ननु कृष्णस्यवरज्ञानंकथमित्यतउक्तम् । दर्शितइति । दृशाविद्यतेयस्यासौज्ञानवानित्यर्थः ॥ १९१ ॥ किमिति । एतच्छिन्नंशिरःएतस्यजय
द्रथस्यशिरोवा । अनुपुंखपुंखैःपुंखमन्वित्यनुपुंखं पुंखमनुपक्षमनुपुंखानियेषांतेतथातैः पुंखलग्नैःपुंखविशिष्टैरित्यर्थः । बाणैर्दधारतमर्जुनम् ॥ १९२ ॥ इदंसैंधवशिरःअस्यपि

तद्दृष्ट्वा भगवान्कृष्णो लोहितायति भास्करे ॥ अजिते द्रोणतनये त्वहते च जयद्रथे ॥ अर्जुनस्य जयाकांक्षी स
सर्ज तम ऊर्जितम् ॥ १८९ ॥ तमोव्याप्ते गगने सूर्यमस्तंगतं मत्वा द्रोणपूर्वाः समस्ताः ॥ विशश्रमुः सैंधवश्चार्जु
नस्य हतप्रतिज्ञस्य मुखं समैक्षत ॥ १९०॥ तदा हरेराज्ञया शक्रसूनुश्चकर्त बाणेन जयद्रथस्य ॥ वह्निं विविक्षन्नि
व दर्शितः शिरः तदा वचः प्राह जनार्दनस्तम् ॥ १९१ ॥ नैतच्छिरः पातय भूतले त्वमितीरितः पाशुपतास्त्रतेजसा ॥
दधार बाणैरनुपुंखपुंखैः पुनस्तमूचे गरुडध्वजो वचः ॥ १९२ ॥ इदं पितुस्तस्य करे निपात्यतां वरोस्य दत्तो हि पुरा
मुनायम् ॥ शिरो निकृत्तं भुवि पातयेद्यस्तवास्य भूयाच्च शिरः सहस्रधा ॥ १९३ ॥ इति स्म वध्योस्य पितापि तेने
त्युदीरिते तस्य संध्यांक्रियस्य ॥ अंके व्यधात्तच्छिर आशु वासविः ससंभ्रमात्तद्भुवि च न्यपातयत् ॥ १९४ ॥

तुःकरेनिपात्यताम् । अंककरयोरतिसामीप्यादंकइतिवक्तव्येकरइत्युक्तम् । ध्यानकालेअंकयोरुपरि उत्तानत्वेनकरौसंस्थाप्य । ध्यायंतीतिहेतोर्वाअंकइत्यत्रकरइत्युक्तम् ।
अन्यथा अंकेन्यधात्तच्छिरआशुवासविरित्युत्तरश्लोकस्य तथाभारतस्यचविरोधः । अमुनाजयद्रथपित्राअस्यजयद्रथस्य । अयंवरोदत्तोहि । वरंविवृणोति । शिरइति ।
हेपुत्र तवनिकृत्तंशिरःभुवियःपातयेत् । अस्यशिरःसहस्रधाभूयात् ॥ १९३ ॥ इतिवरोदत्तःस्म यद्यस्मात्तेनकारणेन अस्यजयद्रथस्यपितापिवध्यः । सपितेतिवापाठः इ
तिकृष्णेनोक्तोवासविःसंध्यासंबंधिनीक्रि[illegible]यस्यसतथोक्तः । तस्यसैंधवपितुःअंकेऊरौशिरःव्यधात् । सपितासंभ्रमाद्भयात्तच्छिरः ॥ १९४ ॥ ॥ ॥

ततःशिरःपातनात् । तमसःलयंनाशंहाहेतिवादः हाहाकारध्वनिः ॥ १९५ ॥ सुभैरवमतिभयंकरंयथास्यात्तथा व्यनदत्सिंहनादंचकार । रिपौजयद्रथेहतेसति शैनेयः सात्य
किःतुष्टोबभूव ॥ १९६ ॥ देवदत्ताख्यंशंखंसहपांचजन्यघोषं पांचजन्यशंखरवेणसहितं भीमस्यनादंध्वनिः ॥ १९७ ॥ भीमःद्रौणिमुखांसेनांप्रतिअभ्यवर्तत योद्धुं
प्रवृत्तोभूत् । पार्थःकर्णमुखांशिष्टांउर्वरितांसेनामभ्यवर्तत । ततस्ताभ्यांभीमार्जुनाभ्यांतद्बलंद्रौणिकर्णसहितंबलमभज्यत । पराजितमभूत् ॥ १९८ ॥ धृष्टद्युम्नपुरोगमाः

ततोऽभवत्तस्य शिरः सहस्रधा हरिश्च चक्रे तमसो लयं पुनः ॥ तदैव सूर्ये सकलैश्च दृष्टे हाहेति वादः सुमहानथा
सीत् ॥१९५॥ भीमस्तदा शल्यदुर्योधनादीन् कृपं च जित्वा व्यनदत्सुभैरवम् ॥ कुर्वन्सहायं फल्गुनस्यैव तुष्टो बभूव
शैनेय उतो हते रिपौ ॥ १९६ ॥ अपूरयत्पांचजन्यं च कृष्णो मुदा तदा देवदत्तं च पार्थः ॥ भीमस्य नादं सह
पांचजन्यघोषं श्रुत्वा निहतं सिंधुराजम् ॥ ज्ञात्वा राजा धर्मसुतो मुमोद दुर्योधनश्चास सुदुःखितस्तदा
॥ १९७ ॥ ततो द्रौणिमुखां सेनां सर्वां भीमोऽभ्यवर्धत ॥ पार्थः कर्णमुखां शिष्टां ततोऽभज्यत तद्बलम् ॥ १९८ ॥
शीर्णां सेनां प्रविविशुर्धृष्टद्युम्नपुरोगमाः ॥ ततस्तं देशमापुस्ते यत्र भीमधनंजयौ ॥ १९९ ॥ तत एकीकृताः सर्वे
पांडवाः सहसोमकाः ॥ परान्विद्रावयामासुस्ते भीताः प्राद्रवन् दिशः ॥ २०० ॥ विद्राव्यमाणं सैन्यं तद्दृष्ट्वा दु
र्योधनो नृपः ॥ जयद्रथवधाच्चैव कुपितोऽभ्यद्रवत्परान् ॥ २०१ ॥ स भीमसेनं च धनंजयं च युधिष्ठिरं माद्रव
तीसुतौ च ॥ धृष्टद्युम्नं सात्यकिं द्रौपदेयान् सर्वानेकः शरवर्षैर्ववर्ष ॥ २०२ ॥ ॥ ७ ॥ ॥

शीर्णांस्फुटितांभग्नामित्यर्थः । भीमार्जुनाभ्यांपराजयंप्राप्य इतस्ततःपलायमानांसेनांप्रविविशुरितिभावः । धृष्टद्युम्नादयः यत्रयस्मिन्देशेभीमधनंजयौतंदेशमापुः ॥१९९॥
ततः भीमार्जुनप्राप्त्यनंतरं एकीकृताःएकीभूताः एकत्रमिलिताइत्यर्थः । सहसोमकाःपांचालैःसहवर्तमानाःसर्वेपांडवाःपंचेत्यर्थः । परान्शत्रून्विद्रावयामासुः । तेयोद्धारः
दिशःदशदिशःप्रति ॥ २०० ॥ वधात् निमित्तात् कुपितःकोपयुक्तः ॥ २०१ ॥ सदुर्योधनःद्रौपदेयान्द्रौपदीपुत्रान् ॥ २०२॥ ॥ ॥ ॥ ॥

तेभीमादयःशिलीमुखैर्बाणैः तंदुर्योधनंविव्यधुर्व्यथयामासुः । सदुर्योधनःतान्शिलीमुखाननादृत्यनिरस्कृत्य महारथानांरथिकानांचित्राणिउत्तमानिधनूंषिसंख्येसंगरेयमौ विरथौ ॥ २०३ ॥ तेमहारथाःशरानचिंतयित्वा अगणय्य । सएकोदुर्योधनः ॥ २०४ ॥ द्विषतांमध्येगाहमानंस्थितमित्यर्थः । अनारतंनिरंतरंयथास्यात्तथा । बाणगणान्सृजंतःवर्षंतः जुगुपुःअरक्षन् ॥ २०५ ॥ वासवेनइंद्रेणसहितैः ॥ २०६ ॥ अतःकारणात् शक्त्यनुसारेण घटामहेउद्योगंकुर्मः । जयःदैवसमाहितःदैवप्रदत्तइत्यर्थः ॥ २०७ ॥

तं विव्यधुस्ते बहुभिः शिलीमुखैः सताननादृत्य चकर्त बाणैः ॥ धनूंषि चित्राणि महारथानां चकार संख्ये विरथौ यमौ च ॥ २०३ ॥ आदाय चापानि पराणि तेपि दुर्योधनं ववृषुः सायकौघैः ॥ अचिंतयित्वैव शरान्स एको न्यवारयत्तानखिलांश्च बाणैः ॥ २०४ ॥ तं गाहमानं द्विषतां बहूनां मध्ये द्रोणद्रौणिकृपप्रधानाः ॥ दृष्ट्वा सर्वे जुगुपुश्चात्तचापा अनारतं बाणगणान्सृजंतः ॥ २०५ ॥ सुयोधनः कर्णमाह जहि भीममिमं युधि ॥ स आह नैष शक्यो हि जेतुं देवैः सवासवैः ॥ २०६ ॥ दैवाज्जीवाम्यहं राजन्युध्यंस्तेनातिपीडितः ॥ अतो घटामहे शक्त्या जयो दैवसमाहितः ॥ २०७ ॥ दुर्योधनो द्रोणमाह सैंधवस्त्वदुपेक्षया ॥ पार्थेन निहतो भीमसात्यकिभ्यां च मे बलम् ॥ २०८ ॥ प्रतिज्ञा च परित्यक्ता पांडवस्नेहतस्त्वया ॥ इत्युक्तः कुपितो द्रोणः प्रतिज्ञामकरोत्ततः ॥ २०९ ॥ इतः परं नैव रणाद्रात्रावहनि वा क्वचित् ॥ गच्छेयं नैव मोक्ष्यामि वर्मबद्धं कथंचन ॥ २१० ॥ मत्पुत्रश्च त्वया वाच्यः पांचालान्नैव शेषय ॥ सदौहित्रानिति प्रोक्त्वा विजगाहे निशागमे ॥ २११ ॥ ॥ ७ ॥ ॥ ७ ॥

त्वदुपेक्षयापार्थेनबलंचनिहतमित्यर्थः ॥ २०८ ॥ ततः दुर्योधनवाक्यश्रवणानंतरम् ॥ २०९ ॥ प्रतिज्ञांविवृणोति । इतइति । इतःपरंएतत्कालानंतरं रणान्नैवागच्छेयं शिबिरं प्रतीतिशेषः ॥ २१० ॥ सदौहित्रान् द्रौपदीसुतसहितान् पांचालान्द्रुपदादीन् । नैवशेषयनि.शे.षान्कुर्वितिभावः । इतिमत्पुत्रःअश्वत्थामावाच्यः । इत्युक्त्वापरेषांचमूंनिशागमेसायंकालानंतरं विजगाहेविलोडयामास । धृष्टद्युम्न.तंद्रोणमभ्यगात् ॥ २११ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तत्रतस्मिन्काले ॥ २१२ ॥ उभयोःसेनयोरपिमध्येसमअक्षौहिण्योनिहताः समानांविभागंविविच्याह । तासामिति । तासांसमाक्षौहिणीनांमध्ये भीमसेनेनतिस्रःअक्षौहिण्योनिहताः । द्वेअक्षौहिण्यौफल्गुनेनचनिहते । भीमार्जुनाभ्यांमिलित्वा कौरवाणां पंचाक्षौहिण्योनिहताइतिभावः ॥ २१३ ॥ भीमार्जुनाभ्यांहताक्षौहिणीष्वपिविभागंदर्शयति । सौभद्रेति । तन्मध्येतयोरर्जुनहतयोर्द्वयोरक्षौहिण्योर्मध्येसौभद्रसात्यकिमुखैः षोडशांशकःषोडशभागोनिहतइत्यर्थः । पंचदशभागाअर्जुनेनहिताइतिभावः । हैडिंबपार्षतमुखैः घटोत्कचधृष्टद्युम्नमुखैः त्रयात्अक्षौहिणीत्रयात् दशमांशकःदशमभागोनिहतः । अक्षौहिणीत्रितयमध्येनवभागाभीमेननिहताः । दशमस्तुहैडिंबाद्यैर्निहतइतिभा

चमूं परेषामभ्यागाद्धृष्टद्युम्नस्तमाशु च ॥ द्रौणिदुर्योधनौ तत्र विरथीकृत्य मारुतिः ॥ द्रावयामास तत्सैन्यं पश्यतां सर्वभूभृताम् ॥ २१२ ॥ अक्षौहिण्यस्तु समैव सेनयोरुभयोरपि ॥ हतास्तासां च भीमेन तिस्रो द्वे फल्गुनेन च ॥ २१३ ॥ सौभद्रसात्यकिमुखैस्तन्मध्ये षोडशांशकः ॥ हैडिंबपार्षतमुखैस्त्रयाच्च दशमांशकः ॥ २१४ ॥ भीष्मद्रोणद्रौणिभिश्च द्वे समं निहते तदा ॥ तदन्यैर्मिलितैः सर्वैस्तच्चतुर्थांश एव च ॥ २१५ ॥ ततो रात्रौ पंचभिश्च पार्थाः षड्भिश्च कौरवाः ॥ अक्षौहिणीभिः संव्यूह्य युद्धं चक्रुः सुदारुणम् ॥ २१६ ॥ भीमं सेनां द्रावयंतं पुनः कर्णः समासदत् ॥ स कर्णपुरतो भीमो दुष्कर्णं कर्णमेव च ॥ २१७ ॥ दुर्योधनस्यावरजौ निष्पिपेष पदा क्षणात् ॥ रथाश्वध्वजसूतैश्च सहितौ न व्यदृश्यताम् ॥ २१८ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

वः ॥ २१४ ॥ तदानस्मिन्काले भीष्मद्रोणद्रौणिभिः पांडवानांद्वेअक्षौहिण्यौसमंसमभागेननिहतेइत्यर्थः । तदन्यैःतेभ्यःभीष्मादिभ्यः अन्यैस्सोमदत्ताद्यैर्मिलितैः सर्वैस्तच्चतुर्थांशःतस्याक्षौहिणीद्वयस्यचतुर्थांशःचतुर्थोभागःनिहतइतिशेषः । अक्षौहिण्योर्मध्येभीष्मेणएकोभागः द्रोणेनएकोभागः अश्वत्थाम्नैकभागः सर्वैरेकोभागइति समत्वेनचतुरोभागानिहताइत्यर्थः ॥ २१५ ॥ प्रकृतमनुसरति । ततइत्यादिना । संव्यूह्यसेनारचनांकृत्वा ॥ २१६ ॥ २१७ ॥ रथाश्वध्वजसूतैश्चसहितौदुर्योधनस्यावरजौ दुष्कर्णकर्णनामानौपदापादेननिष्पिपेष । ममर्देत्यर्थः । लोकेनतत्पुनर्द्वयंनव्यदृश्यत । नव्यदृश्यतामितिपाठेनव्यपश्यतांनव्यदृश्येताम् ॥ २१८ ॥ ॥ ॥

ननु भीमःगदाद्यायुधेषुसत्स्वपि किमर्थंपदानिष्पिपेषेत्याशंक्य तदभिप्रायमाह । निरायुधइति । अहंनिरायुधइतिमांमत्वा त्वंपरुषंनिष्ठुरंवचः आत्थउक्तवानसि । पूर्वं युद्धइतिशेषः ॥ २१९ ॥ तदातस्मिन्क्षणेहंतुमशकं शक्तोस्मीतिकर्णस्यसंज्ञया सूचनेनज्ञापयन् भीमःतौदुष्कर्णकर्णौपदाभुविपिपेष ॥ २२० ॥ मुष्टिनाकालिंगस्यहं तुरभिप्रायमाह । मुष्टिनेति । पदापादेनहंतुंसमर्थत्वेसत्यपि । तदामुष्टिनात्वद्वधायाहंसमर्थइतिकिंवदे ॥ २२१ ॥ तस्मात्कारणात्त्वंमयारक्षितइतिज्ञापयितुं प्रभुर्भीमो मुष्टिनाजघानेतिसंबंधः । चूर्णितोभूदितिशेषः ॥ २२२ ॥ कालिंगवधप्रसंगेन भीष्मद्वितीयदिनहतकलिंगानाह । केतुमानिति । पुराइतःपूर्वंभीष्मेसेनापत्यंप्रकुर्वतिसति द्वितीयदिनेखड्गयुद्धेतस्यकालिंगस्यपिता केतुमान्शक्रदेवःश्रुतायुधइतित्रयः अक्षौहिणीसंख्ययासेनयासहभीमेनपातिताः । तदुक्तंभीष्मपर्वणि । ततःश्रुतायुधःक्रुद्धोरा

निरायुधोहमिति मां त्वमात्थ परुषं वचः ॥ २१९ ॥ निरायुधः पदैवाहं त्वां हंतुमशकं तदा ॥ इति कर्णस्य तौ भीमः संज्ञया ज्ञापयन् भुवि ॥ पदा पिपेष कालिंगं मुष्टिनैव जघान ह ॥ २२० ॥ मुष्टिना त्वद्वधायाहं समर्थ इति किं वदे ॥ २२१ ॥ तस्मान्मया रक्षितस्त्वमिति ज्ञापयितुं प्रभुः ॥ साश्वसूतध्वजरथः कालिंगो मुष्टिचूर्णितः ॥ २२२ ॥ केतुमांश्च पिता तस्य शक्रदेवः श्रुतायुधः ॥ अक्षौहिण्या सेनया च सह भीमेन पातिताः ॥ २२३ ॥ खड्गयुद्धे पुरा भीष्मे सैनापत्यं प्रकुर्वति ॥ कर्णानुजान् ध्रुवाद्यांश्च बहून् जघ्ने स वै निशि ॥ २२४ ॥ संज्ञां भीमकृतां ज्ञात्वा शक्तिं चिक्षेप चापराम् ॥ कर्णः शक्तिर्मया दिव्या न मुक्ता तेन जीवसि ॥ २२५ ॥ ॥ ७ ॥ ॥

ज्ञाकेतुमतासह । आससादरणेभीमं व्यूढानीकेषुचेदिषु । तथा । कलिंगस्तुमहेष्वासः सपुत्रश्चमहाबलः । शक्रदेवइतिख्यातो जघ्नतुः पांडवं रणे । तथा । शक्रदेवाय चिक्षेपसर्वशैक्यायसींगदाम् । सतयानिहतोराजन्कलिंगस्यसुतोरथात् । तथा । केतुमंतंरणेभीमोगमयद्यमसादनमित्यादि ॥ २२३ ॥ सभीमः ध्रुवाद्यान्कर्णानुजान्बहून् निशिरात्रौद्रोणेसेनापतौजघ्ने । तदुक्तंद्रोणपर्वणि । ध्रुवंचास्यंतमनिशंमुष्टिनासमपोथयत् । तथा । ततःशत्रुरथंहत्वाभीमोध्रुवरथंगतइति । तथा । जयरातरथंक्षिप्रंमर्दन्सव्येनपाणिना । तलेननाशयामास कर्णस्याग्रेततःस्थितमित्यादिना ॥ २२४ ॥ कर्णोभीमकृतांसंज्ञांज्ञात्वा इतिज्ञापयितुंभीमस्येतिशेषः । अपरांइंद्रदत्तशक्तितोन्यां शक्तिं चिक्षेप । इतीतिकिंममदिव्याशक्तिः इंद्रदत्तेत्यर्थः । नमुक्तायस्मात्तेनजीवसि ॥ २२५ ॥

भीमःतांकर्णकृतांसंज्ञांज्ञात्वामत्वा सत्वरःवेगसहितःसन् । तदाक्षणात्तस्मिन्नेवक्षणेखमाकाशं प्रत्युत्पत्यगृहीत्वा कर्णक्षिप्तांशक्तिंगृहीत्वाकर्णेचिक्षेप ॥ २२६ ॥ किंक र्तुंचिक्षेपेत्यतआह । यदीति । यदित्वयासाइंद्रदत्ताशक्तिःमुक्तास्याच्चेत् तदातर्हिसाइंद्रदत्ताशक्तिः त्वांचत्वामेवहनिष्यति । अहनिष्यदितिज्ञापयितुंचिक्षेपेतिसंबंधः । कर्णरक्षणकांक्षिणाकर्णस्यरक्षणमिच्छता ॥ २२७ ॥ भीमेनदक्षभुजेकर्णस्यदक्षिणभुजेमुक्ता कर्णस्यनिदर्शनंसंज्ञां दर्शयंतीसाचशक्तिः विदार्यभुजमितिशेषः । तथाधरणीं

इति ज्ञापयितुं तां तु ज्ञात्वा भीमः क्षणात्तदा ॥ खमुत्पत्य गृहीत्वा च कर्णे चिक्षेप सत्वरः ॥ २२६ ॥ यदि त्वया तदा मुक्ता शक्तिस्त्वां सा हनिष्यति ॥ इति ज्ञापयितुं सा च कर्णरक्षणकांक्षिणा ॥ २२७॥ मुक्ता दक्षभुजे साथ विदार्य धरणीं तथा ॥ भित्त्वा विवेश कर्णस्य दर्शयंति निदर्शनम् ॥२२८॥ ततो भीमः पुनस्तं तु रथमास्थाय चापभृत् ॥ कर्णस्य पुरतः शत्रून् द्रावयामास सर्वतः ॥ २२९ ॥ तं कर्णो वारयामास शरैः सन्नतपर्वभिः ॥ भीमः कर्णरथायैव गदां चिक्षेप वेगतः ॥ २३० ॥ स तद्गदाभिघाताय स्थूणाकर्णास्त्रमासृजत् ॥ तेनास्त्रेण प्रतिहता सा गदा भीममाव्रजत् ॥ २३१ ॥ भीमो गदां समादाय कर्णस्य रथमारुहत् ॥ तया संचूर्णयामास कर्णस्य रथकूबरम् ॥ २३२ ॥ एवं त्वच्चूर्णने शक्तो मत्कामात्त्वं हि जीवसि ॥ एवं निदर्शयित्वैव पुनः स्वरथमाव्रजत् ॥ २३३ ॥ पुनः कर्णपुरः सेनां जघान बहुशो रणे ॥ कर्णस्तु तं परित्यज्य सहदेवमुपाद्रवत् ॥ २३४ ॥ स तु तं विरथीकृत्य धनुः कंठेवसज्य च ॥ कुत्सयामास बहुशः स तं निर्वेदमागमत् ॥ २३५ ॥ ॥ ॥ ॥

भित्त्वाविवेशधरणीमितिशेषः ॥ २२८ ॥ आस्थायआरुह्य ॥ २२९ ॥ तंभीमंसन्नतपर्वभिः । सन्नतानिसमानानिपर्वाणियेषांतैस्तथातैःशरैः ॥ २३० ॥ तद्गदायाःभीमगदायाः विघाताय पराभवाय प्रतिहताभग्ना ॥ २३१ ॥ तयागदयारथस्यकूबरंयुगंधरम् ॥ २३२ ॥ मत्कामात्कर्णोजीवत्वितिममकामात्निदर्शयित्वा ज्ञापयित्वेत्यर्थः ॥ २३३ ॥ बहुशःबहुवारंउपाद्रवत्समीपंप्राप ॥ २३४ ॥ तंसहदेवंअवसज्यप्राप्यकुत्सयामास । भर्त्सयामास । सहदेवःनिर्वेदंग्लानिंप्राप ॥ २३५ ॥ ॥ ॥

स्वंवचः अर्जुनाद्न्यंनहन्यामितिस्वंवचः वरूथिनींसेनाम् ॥२३६॥ रणकोविदेनयुद्धकुशलेन । हन्यमानातासेनानाशंलेभे । केनकेव मृत्युनायमेनआर्ताप्रजेव ॥२३७॥ द्रौणिब लेनाभिभूतांपराजितांयुधियुद्धार्थं तंघटोत्कचंआह । किमिति । हेवत्सहेबाल । अलमलंआकारणेनैवेतिशेषः पुत्रस्त्वंतातंमांमांप्रतिनयोधयस्वेति स्वार्थेणिच् ॥ २३८॥ इत्यु क्तोघटोत्कचःत्वंममपितान यद्यपिमेपितुःसखाअसि तथापिशत्रुसंश्रयात्मेऽरिरसीत्यूचे । अश्वत्थामानमितिशेषः । द्रौणिराह । किमिति । यदित्वंमामरिंमन्यसेतर्हिअहंतेतद्व त् अरिवत्करोमि ॥२३९॥ इत्यूचिवान्द्रौणिः शक्रधनुःप्रकाश इंद्रचापवत्प्रकाशोयस्येतिविग्रहः । चापंविस्फार्यविकृष्य शरौघान् प्रकिरन्विस्तारयन् । राक्षसंप्रतिअभ्या

न हंतुमैच्छत्तं कर्णः पृथायै स्वं वचः स्मरन् ॥ तं विसृज्य रणे कर्णो जघ्ने पार्थवरूथिनीम् ॥ २३६ ॥ ततो द्रौणिर्वि विधैर्बाणसंघैर्जघान पार्थस्य चमूं समंततः ॥ सा हन्यमाना रणकोविदेन नाशं लेभे मृत्युनार्ता प्रजेव ॥ २३७ ॥ दृष्ट्वा सेनां द्रौणिबलाभिभूतां तमाह्वयामास घटोत्कचो युधि ॥ द्रौणिस्तमाहालमलं न वत्स पुत्रस्तातं योधयस्वाद्य मां त्वम् ॥ २३८ ॥ इत्युक्त ऊचे न पिता मम त्वं सखा पितुर्यद्यपि शत्रुसंश्रयात् ॥ अरिश्च मेसीति तमाह यद्यरिं मां मन्यसे तद्वदहं करोमि ते ॥ २३९॥ इत्यूचिवाञ्छक्रधनुःप्रकाशं विस्फार्य चापं प्रकिरञ्छरौघान्॥ अभ्यागम द्राक्षसमुग्रवेगः स्वसेनया सोपि तमभ्यवर्तत ॥ २४० ॥ स रक्षसां लक्षसमावृतो बली नृभिश्च वीरैर्बहुभिः सु शिक्षितैः ॥ अक्षौहिणीमात्रबलेन राक्षसः संक्षोभयामास गुरोः सुतं शरैः ॥ २४१ ॥ स तेन बाणैर्बहुभिः सुपीडि तो विभिन्नगात्रः क्षतजाभिप्लुतांगः ॥ व्यावृत्य नेत्रे कुपितो महद्धनुर्विस्फार्य बाणै रजनीं चकार ॥ २४२ ॥ ॥

गमत् । सोपिराक्षसःतंद्रौणिंप्रतिस्वसेनयासहाभ्यवर्तत अभ्यागमत् । उग्रवेगइत्युभयत्रसंबध्यते ॥ २४० ॥ रक्षसांराक्षसानां लक्षेणसमावृतः । सुशिक्षितैःशस्त्रास्त्रविद्यासु सुतरां शिक्षितैःबहुभिर्बहुसंख्याकैःनृभिर्वीरैःमनुष्यभटैश्चसंयुतेनेतिशेषः । अक्षौहिणीमात्रंचतथातेनएकेनैवाक्षौहिणीबलेनैवेत्यर्थः । समावृतःबलीसराक्षसःघटोत्कचःगुरोःसु तंशरैः संक्षोभयामास क्षोभंप्रापयत् ॥ २४१ ॥ तेनघटोत्कचेनबाणैर्विभिन्नगात्रःविशीर्णदेहः क्षतजेनरक्तेनअभिप्लुतं आर्द्रीभूतंस्रवद्रक्तमित्यर्थः । अंगंयस्यसतथा । सु पीडितःसद्रौणिः नेत्रेनयनेव्यावृत्यभ्रामयित्वा कुपितः सन् महाधनुर्विस्फार्यआकृष्य बाणैःरजनींरात्रिंअंधकारमित्यर्थः । चकार ॥ २४२ ॥ ॥ ॥ ॥

महाशरान्क्षरन्वर्षन् तांत्वौरात्मकाक्षौहिणींतान् लक्षसंख्याकान्राक्षसानपि क्षणमात्रतःक्षणेनैव क्षयंनाशंनिनायनाशंप्रापयामास। पुराय:अंजनवर्मनामकोभूदितिशेषः। तंनिष्ठ्यंनिष्ठ्यनामकं घटोत्कचस्यपुत्रंचक्षयंनिनाय॥ २४३ ॥ सेनांपातितांआशुससंज्ञकःसंज्ञासहितः॥ २४४ ॥ तेनबाणेनाभिहतोविद्धः विनष्टासंज्ञाज्ञानंयस्यसत था मूर्छितइत्यर्थः॥ २४५ ॥ अस्यघटोत्कचस्ययुद्धात् युद्धस्थानात्दूरम ॥२४६॥ महारथान्प्रकंपयामास विद्रावयामासच ॥ २४७ ॥ वैकर्तनंकर्णंप्रतिघटोत्कचंप्र

सोक्षौहिणीं तां क्षणमात्रतः क्षरन् महाशरांस्तानपि राक्षसान्क्षयम् ॥ निनाय पुत्रं च घटोत्कचस्य निष्ठ्यं पुरा यों जनवर्मनामकः॥ २४३ ॥ निरीक्ष्य सेनां स्वसुतं च पातितां घटोत्कचो द्रोणसुतं शरेण ॥ विव्याध गाढं स सुविह्वलो ध्वजं समाश्रितश्चाशु ससंज्ञकोभवत् ॥ २४४ ॥ उत्थाय बाणं यमदंडकल्पं संधाय चापे प्रविकृष्य राक्षसे ॥ मुमोच तेनाभिहतः पपात विनिष्टसंज्ञः स्वरथे घटोत्कचः ॥ २४५ ॥ विमूर्छितं सारथिरस्य दूरं निनाय युद्धाज्जगतोभिपश्यतः ॥ द्रौणिश्च सेनां निशितैः शरोत्तमैर्व्यद्रावयत्पांडवसोमकानाम् ॥२४६॥ संज्ञामवाप्याथ घटोत्कचोपि क्रुद्धोविशत्कौरवसैन्यमाशु ॥ विद्रावयामास च बाणवर्षैः प्रकंपयामास महारथांस्तदा ॥ २४७ ॥ तदैव पार्थं प्रति योद्धुमागतं वैकर्तनं वीक्ष्य जगत्पतिर्हरिः ॥ घटोत्कचं प्राहिणोच्छक्तिमुग्रां तस्मिन्मोक्तुं पार्थरक्षार्थमेव ॥ २४८ ॥ स कर्णमाहूय युयोध तेन तस्यानु दुर्योधनपूर्वकाश्च ये ॥ द्रोणेन चैतान्समरे स एको निवारयामास ममर्द चाधिकम् ॥ २४९ ॥ ते बाध्यमाना बहुशो बलीयसा कर्णं पुरोधाय तमभ्ययोधयन् ॥ न विव्यथे तत्र रणे स कर्णः स्ववीर्यमास्थाय महास्त्रवेत्ता ॥ २५० ॥

तिप्राहिणोत्प्रेषयामास। किंकर्तुंपार्थरक्षार्थमेव। उग्रांशक्तिंवासवींशक्तिंतस्मिन्घटोत्कचेमोक्तुंमोचयितुमित्यर्थः॥ २४८ ॥ तस्यकर्णस्यअनुअन्वागताः द्रोणेनसहयेच दुर्योधनपूर्वकाःतांश्चतानपिनिवारयामास अधिकंममर्दच॥ २४९ ॥ बलीयसाबलवताघटोत्कचेन बहुशःबहुवारंबाध्यमानास्तेदुर्योधनादयः कर्णंपुरोधायपुरःकृत्वा तंघटोत्कचंप्रतिअभ्ययोधयन्। तत्रतस्मिन्रणेस्ववीर्यमास्थाय महास्त्रवेत्तासकर्णः नविव्यथेव्यथितोनाभूत्॥ २५० ॥ ॥ ॥ ॥ ॥ ॥

शतमन्योरिंद्रस्यनंदनःपुत्रःपार्थःभीमसुतंघटोत्कचम् ॥ २५१ ॥ घटोत्कचःअलंबलेनयुद्धायुद्धंकृत्वा एनमलंबलं गृह्य भूमितलेनिपात्य असिनाखड्गेनअस्यअलंबल स्यशीर्षं शिरःउत्कृत्यछित्त्वा सुयोधनेऽक्षिपत् शीर्षेणसुयोधनमहनदितिभावः । अत्रघटोत्कचपराक्रमविषये विषेदुःविषादंप्रापुः ॥ २५२ ॥ नराअशनंयस्येतिविग्रहः राक्षसइत्यर्थः । अलायुधःतन्नामा सघटोत्कचःतेनअलायुधेनसह यज्ञपशुंरणाख्ययज्ञेपशुंचकार । यज्ञपशुवत्मुष्टिघातेनजघानेतिभावः ॥ २५३ ॥ उत्कृत्यच्छित्त्वादुर्यो धनस्योरसिवक्षसितेनशिरःक्षेपेणसंभ्रांताःविह्वलाइत्यर्थः । आसन्नितिशेषः ॥ २५४ ॥ समर्थेनापिभीमसेनेनख्यात्यैप्रसिद्ध्यैयोरणेनहतः सअलायुधःभैमसेनिनाघटोत्क

निवारयामास गुरोः सुतं तदा भीमस्त्रिगर्तांञ्छतमन्युनंदनः ॥ अलंबलोनाम तदैव राक्षसः समासदद्भीमसुतं निहं
तुम् ॥ २५१ ॥ युद्धा प्रगृह्यैनमथो निपात्य घटोत्कचो भूमितलेऽसिनास्य ॥ उत्कृत्य शीर्षं तु सुयोधनेऽक्षिपद्विषेदु
रत्राखिलभूमिपालाः ॥ २५२ ॥ अलायुधोथागमदुग्रवीर्यो नराशनस्तं स घटोत्कचोभ्ययात् ॥ युद्ध्वा मुहूर्तं स
तु तेन भूमौ निपात्य तं यज्ञपशुं चकार ॥ २५३ ॥ अथास्य शिर उत्कृत्य क्रोधाद्दुर्योधनोरसि ॥ चिक्षेप तेन सं
भ्रांताः सर्वे दुर्योधनादयः ॥ २५४ ॥ घटोत्कचबलख्यात्यै समर्थेनापि यो रणे ॥ न हतो भीमसेनेन हतेस्मिन् भै
मसेनिना ॥ सर्वे संचोदयामासुः कर्णं शक्तिविमोक्षणे ॥ २५५ ॥ अस्मिन्हते हतं सर्वं किन्नः पार्थः करिष्यति ॥
एवं संचोद्यमानः स धार्तराष्ट्रैः पुनःपुनः ॥ हैडिंबेनार्द्यमानैश्च स्वयं च भृशपीडितः ॥ २५६ ॥ आदत्त शक्तिं विपुलां
पाकशासनसंमताम् ॥ २५७ ॥ तामंबरस्थाय घटोत्कचाय शैलोपमायातुलविक्रमाय ॥ चिक्षेप मृत्यो रसनोपमा
मलं प्रकाशयंतीं प्रदिशो दिशश्च ॥ २५८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

चेनहतः । सर्वेदुर्योधनादयःअस्मिन्घटोत्कचे शक्तिविमोक्षणेवासवशक्तिविमोक्षणविषये कर्णंसंचोदयामासुःप्रार्थयामासुः ॥ २५५ ॥ किमिति । अस्मिन्घटोत्कचेहतेस ति सर्वमरिबलंहतंहतप्रायम् । हैडिंबेनअर्द्यमानैः पीड्यमानैःधार्तराष्ट्रैः एवंपुनःपुनःसंचोद्यमानःप्रेरितः । स्वयंचभृशंपीडितःसन्ःविपुलांमहतीं पाकशासनस्येंद्रस्यसंमतामभि मतांशक्तिं आदत्तआददे ॥ २५६ ॥ २५७ ॥ अंबरस्थायआकाशस्थितायशैलोपमायपर्वतसदृशायअतुलविक्रमायअसदृशपराक्रमायघटोत्कचाय मृत्योःरसनायाः जिह्वायाःउपमांसदृशीं प्रदिशोदिशश्च अलंप्रकाशयंतींतांवासवींशक्तिंचिक्षेप । कर्णइतिशेषः ॥ २५८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तयाशक्त्यानिर्भिन्नंविशीर्णंवक्षोयस्यसतथा । पपात हतोपिशत्रुबलंव्यचूर्णयत् स्वपतनेनेतिशेष । जहृषुःतुतुषुःउच्चुकुशुःउच्चशब्दंचक्रुः । अंबराणिवस्त्राणिदुधुवुःकंपयामासुः । ननर्तनृत्यंचक्रे शंखमाधमनुध्मनयन् ननादसिंहनादंचक्रे । उरुनिःस्वना उच्चध्वनिःजहास ॥ २५९ ॥ २६० ॥ गुडाकेशःअर्जुनःदुर्मनाःसन् दुःखितांतःकरणःसन् हेप्रभोअस्माकंअग्रजेज्येष्ठेसुतेहतेकिमर्थंनंदसि संतुष्यसि । इत्यपृच्छदितिसंबंधः ॥ २६१ ॥ दिष्ट्यादैवेननिहितास्थापिताशक्तिःअस्मिन्विमुक्ता हियस्मात्तस्माज्जीवसीतिमेहर्षइतिवाक्यशेषः ॥ २६२ ॥ दुःखात् अमर्षात् कर्णपराक्रमस्यअसहमानत्वात् कर्णंप्रतिअभ्यवर्तत योद्धुमभियायावित्यर्थः । अथकृष्णद्वैपायनः तंयुधिष्ठिरमाह । यथोक्तंभारते । तंदृष्ट्वासहसायांतं सूतपुत्रंजिघांसया । अभिगम्याब्रवीद्व्यासोधर्मपुत्रंयुधिष्ठिरम् ॥ २६३ ॥ किमिति ॥ ययाशक्त्याहतोयस्मात्तस्मात्माशुचः

निर्विण्णवक्षाः स तया पपात व्यचूर्णयच्छत्रुबलं हतोपि ॥ तस्मिन् हते जहृषुर्धार्तराष्ट्रा उच्चुकुशुर्दुधुवुश्चांबराणि ॥ २५९ ॥ तदा ननर्त केशवः समाश्लिषच्च फल्गुनम् ॥ ननाद शंखमाधमज्जहास चोरुनिस्वनः ॥ २६० ॥ तमपृच्छद्गुडाकेशः किमेतदिति दुर्मनाः ॥ हते सुतेग्रजेस्माकं वीरे किं नंदसि प्रभो ॥ २६१ ॥ तमाह भगवान्कृष्णो दिष्ट्या जीवसि फल्गुन ॥ त्वदर्थं निहिता शक्तिर्विमुक्तास्मिन्हि राक्षसे ॥ २६२ ॥ ततो युधिष्ठिरो दुःखादमर्षाच्चाभ्यवर्तत ॥ कर्णं प्रति तमाहाथ कृष्णद्वैपायनः प्रभुः ॥ २६३॥ ययार्जुनो निहंतव्यस्तयासौ राक्षसो हतः ॥ तन्मा शुचस्त्वं राजेंद्र दिष्ट्या जीवति फल्गुनः ॥ इत्युक्त्वा प्रययौ व्यासः ततो युद्धमवर्तत ॥२६४॥ भीमार्जुनाभ्यामभिहन्यमाने बले कुरूणामितरैश्च पांडवैः ॥ प्रदीपहस्ता अथ योधकाश्च सर्वेपि निद्रावशगा बभूवुः॥ २६५॥ दृष्ट्वैव तानाह धनंजयस्तदा स्वप्स्यंतु यावच्छशिनः प्रकाशः॥ इतीरिता आशिषः फल्गुनाय प्रयुज्य सर्वे सुषुपुर्यथास्थिताः ॥ २६६ ॥

शोकंमाकुरु । फल्गुनःदिष्ट्याजीवति कर्णादितिशेषः ॥ २६४॥ इहरात्रौभीमार्जुनाभ्यांपांडवैःयुधिष्ठिरादिभिः कुरूणांबलेहन्यमानेसति इतरैश्चकौरवैःपांडवानांबलेहन्यमानेसतीतिचशब्दार्थः । प्रदीपाःमहादीपाः हस्तेयेषांतेतथा योधकाः युद्धकर्तारःवीराइत्यर्थः । अथयोधकाश्चसर्वेपिनिद्रावशगाबभूवुः ॥२६५॥ तान्निद्रावशगान्यावत् शशिनश्चंद्रस्यप्रकाशःचंद्रिकास्यादितिशेषः । तावत्पर्यंतंस्वप्स्यंतुनिद्रांकुर्वंतु । प्रयुज्यदत्त्वेत्यर्थः । यथास्थिताःतथासुषुपुः । गजादिवाहनस्थाः तत्रैवोपविश्यस्वस्वायुधानिहस्तेषुगृहीत्वानिद्रांचक्रुरित्यर्थः ॥ २६६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

युधेयुद्धायशस्त्रमहास्त्राणिवर्षंतितेतथा । तत्रयुद्धे ॥ २६७॥ तेनसात्यकिनाएनंसात्यकिंसबाह्लीकःनस्यसात्यकेःवधाय ॥ २६८ ॥ तंबाणंतस्मिन्भीमेशतघ्नीं ब्रह्मदत्तां गदाविशेषाम् । तयाशतघ्न्याआहतःपोथितःविह्वलितःचंचलीकृतःतंबाह्लीकम् । सबाह्लीकः ॥ २६९ ॥ ननु पूर्वंभीमःवैष्णवत्वात् कर्णनजघानेत्युक्तंतर्हि बाह्लीकस्यापिवैष्णवत्वात्कथंजघानेत्यतआह । बाह्लीकइत्यादिना । हेभीम प्रीतिर्मिच्छतात्वया तदातस्माद्धननात् लोकंभागवतंवीरप्राप्यलोकंप्राप्नुयाम् ॥ २७० ॥ अहंनितरांव्यथितःस्यामितिशेषः । यदातदाहन्यांत्वामितिशेषः । अन्यथाव्यथांविनानहन्यां तद्धननंतेतवशुश्रूषणंभवेदितितमाहेतिसंबंधः ॥ २७१ ॥ तेनकारणेनतत्रयुद्धे ॥२७२ ॥

पुनश्च चंद्रेभ्युदिते युधे ते समाययुः शस्त्रमहास्त्रवर्षाः ॥ तत्रायातः सात्यकिं सोमदत्तो भूरिश्च ताभ्यां युयुधे स एकः ॥ २६७ ॥ हतौ च तौ पेततुस्तेन भूमौ बाह्लीक एनं समरे त्वयोधयत् ॥ स सात्यकिं विरथीकृत्य बाणं वधाय तस्याशु मुमोच वीरः ॥ २६८ ॥ चिच्छेद तं भीमसेनस्त्रिधैव तस्मै शतघ्नीं प्रजहार बाह्लिकः ॥ तयाहतो विह्वलितो वृकोदरो जघान तं गदया सोपतच्च ॥ २६९ ॥ बाह्लीकः प्रार्थयामास पूर्वं स्नेहपुरःसरम् ॥ भीम त्वयैव हंतव्यो रणेऽहं प्रीतिमिच्छता ॥ तदा यशश्च धर्मं च लोकं च प्राप्नुयामहम् ॥ २७० ॥ इत्युक्त आह तं भीमो नितरां व्यथितस्तदा ॥ हन्यां नैवान्यथा युद्धे तत्ते शुश्रूषणं भवेत् ॥ २७१ ॥ इति तेन हतस्तत्र भीमसेनेन बाह्लिकः ॥ २७२ ॥ हते बाह्लीके कौरवा भीमसेनमभ्याजग्मुः कर्णसुयोधनाद्याः ॥ द्रौणिं पुरस्कृत्य गुरुं च पार्षतः सभ्रातृकः सात्यकिना समभ्ययात् ॥ २७३ ॥ संशप्तकैरेव पार्थो युयोध तद्युद्धमासीदतिरौद्रमद्भुतम् ॥ अक्षौहिणी तत्र भीमार्जुनाभ्यां निषूदिता रात्रियुद्धे समस्ता ॥ २७४ ॥ ततः सूर्यश्चाभ्युदितस्तदातिघोरं द्रोणः कर्म युद्धे चकार ॥ स पांचालानां रथवृंदं प्रविश्य जघान हस्त्यश्वरथान्नरांश्च ॥ २७५ ॥ विद्रावितास्तेन महारथाश्च नैवाविंदन्च्छर्म बाणांधकारे ॥ युवेव वृद्धोपि चचार युद्धे स उग्रधन्वा परमास्त्रवेत्ता ॥ २७६ ॥ ॥ ७ ॥ ॥ ७ ॥

कर्णसुयोधनाद्याःकौरवाःद्रौणिंपुरस्कृत्यभीमसेनमभ्याजग्मुः । सभ्रातृकःसात्यकिनासहितः पार्षत धृष्टद्युम्नः गुरुंद्रोणंसमभ्ययात् ॥ २७३ ॥ तत्ररात्रियुद्धेसमस्तांसंपूर्णा अक्षौहिणीनिषूदिता ॥ २७४ ॥ तदासूर्योदयानंतरं द्रोणःयुद्धेघोरंक्रूरंकर्म । घोरत्वंदर्शयति । सइति । सद्रोणः ॥ २७५ ॥ तेनद्रोणेनविद्राविताःमहारथाःमहारथिकाःबाणैःकृतांधकारेशर्मसुखंनैवाविंदन् युवेवतरुणइव ॥ २७६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

रणोत्कटेनरणेउत्कटेनउद्धतेन तेनद्रोणेन तत्रयुद्धेरथार्बुदंहतम्। ततः अर्बुदेनगुणितंनराणां सहस्रंसहस्रार्बुदमित्यर्थः। हयानांततःसहस्रार्बुदस्यदशांशःअर्बुदशतमित्यर्थः।
निहतःगजानामर्बुदंनिहतम् ॥ २७७॥ परमाजिमध्येमहारणमध्येलोकंपरलोकम्। ततःद्रुपदविराटवधानंतरम् ॥ २७८ ॥ उच्चैःउत्कर्षयत्नं सोपिधृष्टद्युम्नः तेनसायकेन॥२७९॥
निषसादउपविष्टोभूत् रथइतिशेषः ॥ २८० ॥ सत्वरंत्वरयासहितंयथास्यात्तथा तंधृष्टद्युम्नं सधृष्टद्युम्नःतैःप्रादेशमात्रशरैः ॥ २८१ ॥ तद्रथात्द्रोणरथात् परावृत्तःनि

रथार्बुदं तेन हतं च तत्र ततः सहस्रं गुणितं नराणाम् ॥ ततो दशांशो निहतो हयानां गजार्बुदं चैव रणोत्कटेन ॥ २७७ ॥ तथा विराटद्रुपदौ शराभ्यां निनाय लोकं परमाजिमध्ये ॥ ततो विजित्यैव गुरोः सुतादीन् धृष्टद्युम्नं भीमसेनो जुगोप ॥ २७८ ॥ धृष्टद्युम्नो भीमसेनाभिगुप्तो द्रोणं हंतुं यत्नमुच्चैश्चकार ॥ निवारयामास गुरुः शरौघैर्धृष्टद्युम्नं सोपि तं सायकेन ॥ २७९ ॥ विव्याध तेनाभिहतः स मूर्च्छामवाप विप्रो निषसाद चाशु ॥ २८० ॥ धृष्टद्युम्नः सत्वरं खड्गचर्मण्यादाय तस्यारुरुहे रथोत्तमम् ॥ संज्ञामवाप्याथ गुरुः शरौघैः प्रादेशमात्रैर्व्यथयामास तं च ॥ २८१ ॥ स तैरतिव्यथितस्तद्रथाच्च परावृत्तः स्वरथं चारुरोह ॥ सुसंरब्धौ तौ पुनरेव युद्धं संचक्रतुर्वृष्टशरांबुधारौ ॥ २८२ ॥ निवार्य शत्रून्स शरैर्ब्रह्मास्त्रमसृजद्द्विजः ॥ तेन संदाहयामास पांचालान्सुबहून् रणे ॥ पुरुजित्कुंतिभोजश्च तेनान्येपि हतास्तदा ॥ २८३ ॥ भीमोर्जुनः सात्यकिश्च पर्यायेण गुरोः सुतम् ॥ दूरतो वारयामासुर्महत्या सेनया सह ॥ २८४ ॥ कर्णदुर्योधनादींश्च शल्यं भोजं कृपं तथा ॥ भीमार्जुनौ शरौघेण वारयामासतू रणे ॥ २८५ ॥ तत्र भीमो गजानीकं जयत्सेनं च मागधम् ॥ जघान सुबहूंश्चैव मागधानां रथव्रजान् ॥ २८६ ॥ ॥ ७ ॥ ॥ ६ ॥

वृत्तः। सुसंरब्धौअतिकोपयुक्तौ वृष्टाःशरांबुधाराःयाभ्यांतौतथा। तौद्रोणधृष्टद्युम्नौ ॥ २८२ ॥ सद्विजःतेनास्त्रेण। पुरुजित्कुंतिभोजश्च अन्येपिराजानःतेनास्त्रेणहताः
॥ २८३ ॥ पर्यायेणभीमाद्युक्तक्रमेणसेनयासहस्थितं गुरोःसुतं दूरतः दूरेवारयामासुः रुरुधुरित्यर्थः ॥ २८४ ॥ भोजंभोजाख्यंवारयामासतुः ॥ २८५ ॥ तत्रयुद्धेग
जानीकंगजसैन्यमित्यर्थः। जयत्सेनंतन्नामानंमागधंचजघान। मागधानांरथव्रजान् रथिकसमूहान्जघान ॥ २८६ ॥ ॥ ॥ ॥ ॥ ॥

मालवराजस्यमालवदेशनृपस्य अश्वत्थामाभिधंअवत्थामाख्यंगजम् । भीमसेनहतंदृष्ट्वा वासुदेवप्रचोदितःकृष्णेनप्रेरितोराजायुधिष्ठिरःअश्वत्थामाहतइतिप्राह ॥ २८७॥ अश्वत्थामाहतइतिकिमर्थंप्राहेत्यतआह । अश्वत्थामेति । पुरास्वयंद्रोणेन अश्वत्थामवधंश्रुत्वा अहंनयोत्स्यएवेतिधर्मराजायोक्तं धर्मजंप्रत्युक्तं यस्मात्तेनकारणेनहतइति प्राहेतिपूर्वेणान्वयः । द्रोणःसत्यंब्रूहीतिप्राह । सराजासत्यमेवेत्यब्रवीत् ॥ २८८ ॥ कुंजरइतिशब्दंउपांशुमंदं द्रोणस्यश्रवणगोचरोयथानस्यात्तथामंदमित्यर्थः ।अब्रवीदिति शेषः । अतः अश्वत्थामवधश्रवणात् ॥ २८९ ॥ भीमःतस्यद्रोणस्यरथेषां रथस्यकाष्ठविशेषंगृहीत्वा गुणवतस्तवेदृशंपरधर्मेणक्षत्रधर्मेणउपजीवनंप्राणधारणंयोग्यंनेत्याह

अथ मालवराजस्य अश्वत्थामाभिधं गजम् ॥ भीमसेनहतं दृष्ट्वा वासुदेवप्रचोदितः ॥ २८७ ॥ अश्वत्थामा हत इति प्राह राजा युधिष्ठिरः ॥ अश्वत्थामवधं श्रुत्वा नाहं योत्स्ये इति स्वयम् ॥ पुरोक्तं धर्मजायैव तेन द्रोणो युधिष्ठिरम् ॥ ब्रूहि सत्यमिति प्राह सत्यमित्येव सोब्रवीत् ॥ २८८ ॥ उपांशु कुंजरश्चेति द्रोणेति व्यथितोभवत् ॥ २८९ ॥ तस्य भीमो रथेषां च गृहीत्वा न तवेदृशम् ॥ योग्यं गुणवतो नित्यं परधर्मोपजीवनम् ॥ २९० ॥ इत्याह खस्था मुनयश्चालमहीति तं तदा ॥ ऊचुस्तदखिलं ज्ञात्वा द्रोणः शस्त्रमवास्रजत् ॥ २९१ ॥ सन्यस्य कर्माणि तदाखिलानि योगारूढः परमं वासुदेवम् ॥ सर्वेश्वरं नित्यनिरस्तदोषं ध्यायन् मुक्त्वा देहमगात्स्वधाम ॥ २९२ ॥ तं केशवः पांडवा गौतमश्च यांतं स्वलोकं ददृशुर्विहायसा ॥ धृष्टद्युम्नः पांडवैर्वार्यमाणोप्यगात् खड्गं चर्म चादाय तत्र ॥ २९३ ॥ छित्त्वासिना तस्य शिरः पुनश्च रथं स्वकीयं त्वरया समास्थितः ॥ दृष्ट्वा कृपस्तं सुभृशं भयार्दितः संप्राद्रवद्वाजिनमेकमास्थितः ॥ २९४ ॥ संछिन्ने द्रोणशिरसि गर्हयामास वासविः ॥ युधिष्ठिरश्च पांचाल्यं सात्यकिश्चापि कोपितः ॥ २९५ ॥ धृष्टद्युम्नस्तु तावाह कथं भूरिश्रवा हतः ॥ इति तं सात्यकिः क्रुद्धो गदापाणिः समभ्ययात् ॥ २९६ ॥ ॥ ॥

॥ २९० ॥ खस्थाआकाशस्थाः मुनयःअलंयुद्धेनपूर्णं एहिस्वलोकमितिशेषः । इतितंद्रोणं तदाभीमोक्तिसमयेऊचुः । तदाखिलंभीममुन्युक्तंज्ञात्वा ममहितरूपमितिशेषः। शस्त्रमवास्रजत्अत्यजत् ॥ २९१ ॥ तदाशस्त्रपरित्यागसमये कर्माणिकर्मफलानि सन्यस्यहरौसमर्प्य ॥ २९२ ॥ गौतमःकृपःविहायसाआकाशमार्गेणयांतंगच्छंतंतंद्रोणं तत्र द्रोणसमीपमगात् ॥ २९३ ॥ एकंवाजिनंअश्वंआस्थितःआरूढःसन् ॥ २९४ ॥ पांचाल्यंधृष्टद्युम्नंगर्हयामासभर्त्सयामास ॥ २९५॥ तौअर्जुनसात्यकीतंधृष्टद्युम्नंप्रति ॥२९६॥

धृतासिःगृहीतखड्गः अविस्मयःशंकारहितः पांचाल्यःआह्वयामास सात्यकिंयुद्धार्थमितिशेषः । कृष्णनप्रचोदितःवारयेत्याज्ञापितो भीमःपांचाल्योधृष्टद्युम्नःतस्मिन्यः स्नेहःतेनयंत्रितोबद्धःभीमःपार्थंचशमयामास । विकोपमकरोदित्यर्थः ॥ २९७ ॥ सुशिक्षिताःबोधिताइत्यर्थः तेपार्थसात्यकिधृष्टद्युम्नाः । यत्ताःस्वीकृतायुधाः उद्यताउत्थिताःअर्जुनादयः आसन्नितिशेषः ॥ २९८ ॥ निःशेषंयथास्यात्तथासर्वेषांरिपूणां प्रमाथनेमर्दनेभीमंक्रने समस्ताःधर्मजपक्षिणःभीताआसन्नितिशेषः ॥ २९९ ॥ विषण्णचेतनःशांतमनाःयुधिष्ठिरःसर्वेप्रतियांतुइतोनिर्गच्छंतु । द्रौणिनामुक्तेनवरास्त्रेणभग्नःदग्धइत्यर्थः । भवेयमितिप्राहेतिसंबंधः । अत्रअस्त्रभयपरिहारविषयेजगाद ॥ ३०० ॥

आह्वयामास पांचाल्यस्तं धृतासिरविस्मयः ॥ तदा जग्राह शैनेयं भीमः कृष्णप्रचोदितः ॥ शमयामास पार्थं च पांचाल्यस्नेहयंत्रितः ॥ २९७ ॥ ते वासुदेवेन तदा सुशिक्षिताः स्नेहं पुनः पूर्ववदायुरुत्तमम् ॥ यत्ताश्च युद्धाय समुद्यताश्च तदागमद्द्रौणिरप्यात्तधन्वा ॥ २९८ ॥ आश्रुत्य तातं निहतं प्रतिज्ञां चकार निःशेषरिपुप्रमाथने ॥ नारायणास्त्रं विससर्ज कोपात्तदा भीता भीमकृते समस्ताः ॥ २९९ ॥ युधिष्ठिरः प्राह विषण्णचेतनः शैनेयपूर्वाः प्रतियांतु सर्वे ॥ सम्भग्नकोहं द्रौणिवरास्त्रभग्नो भवेयमित्यत्र जगाद केशवः ॥ ३०० ॥ नमध्वमस्त्रस्य ततो विमोक्ष्यथेत्यथ प्रणेमुश्च धनंजयादिकाः ॥ सर्वे न भीमस्तदमुष्य मूर्ध्नि पपात सोऽग्नाविव संस्थितोऽग्निः ॥ ३०१ ॥ अदह्यमाने भीमेपि वह्नौ वह्निरिव स्थिते ॥ आवेष्टयद्वारुणेन पार्थोऽस्त्रात्मप्रपत्तये ॥ ३०२ ॥ न देहे पतितास्त्रस्य बहिर्वेष्टनतः फलम् ॥ तथापि स्नेहवशगो वेष्टयामास फल्गुनः ॥ ३०३ ॥ अमोघत्वं निजास्त्रस्य भीमस्यावध्यतामपि ॥ साधयन्सार्जुनः कृष्णो भीमस्य रथमारुहत् ॥ ३०४ ॥ ॥ ७ ॥ ॥

किमिति । अस्त्रस्यनमध्वंनमनंकुरुध्वम् । ततः नमस्करणात्विमोक्ष्यथ । भीमोननमश्चकारेत्यर्थः । तदस्त्रंअमुष्यभीमस्यमूर्ध्निपपात । सभीमःअग्नौअग्निरिवव्यवस्थितः संस्थितोभूत् ॥ ३०१ ॥ वह्नौवह्निरिवादह्यमानेभीमेस्थितेसति पार्थःअत्रअस्त्रबाधापरिहारविषये आत्मप्रपत्तयेस्वविहितपूजार्थं वारुणेनवरुणदेवताकेनास्त्रेणावेष्टयत् ॥ ३०२ ॥ भीमरक्षार्थंआवेष्टयदितिकिंनस्यादित्यतआह । नेति । देहेपतितास्त्रस्यपतितमस्त्रंयस्यसतथोक्तः तस्यभीमस्यबहिः नारायणास्त्राद्बहिः वेष्टनतःयद्यपिफलंन ॥ ३०३ ॥ कृष्णःसाधयन्साधयितुंरथमारुहत् ॥ ३०४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

भीमरथंप्राप्तंपार्थंतदस्त्रंकथंनादहदित्यतआह । वेष्टितमिति । वारुणास्त्रेणवेष्टितं तदस्त्रंनारायणास्त्रं । तस्मात्कारणाद्वारुणास्त्रात् बाह्यतः बहिर्भागेप्रविष्टंस्थितंफल्गुनंकेशवेनसहित

त्वात् नरत्वादथनरावेशत्वाच्चनादहत् । वारुणास्त्राद्बहिस्थितत्वात् कृष्णेनयुक्तत्वात् नरावेशाच्चइतिहेतुत्रयात् पार्थंनादहदित्यर्थः ॥ ३०५ ॥ ताभ्यांकृष्णपार्थाभ्यांआ

च्छिन्नाःअपहृताःहेतयःआयुधानियस्यसतथोक्तः । तस्मिन्भीमेस्वरथात् अवरोपितेसतिअवतरतेसति ॥ ३०६ ॥ वाहनात्रथादिवाहनात्अवतीर्य निरायुधैरन्यैरर्जुनाद्यैःअ

स्त्रेप्रणतेसत्यपि । शुद्धक्षत्रियधर्मेषुनिरतोयद्यस्मात्तस्मात्सायुधःसरथोभीमःईश्वरैरपिसमर्थैर्ब्रह्माद्यैरपिअविपह्यसंसोढुमशक्यं अस्त्रंप्रत्ययुध्यत ॥ ३०७ ॥ भीमःमानमध्वमि

त्यन्यान्किमर्थमवददित्यतआह । स्वधर्मेति । स्वधर्महानौस्वस्ववर्णाश्रमोचितधर्मस्यहानौत्यागेप्रवृत्तानांमित्राणांनिषेधनंइदंमाकुरुध्वमितिनिवारणंकर्तव्यम् । यद्यस्मादतःस

वेष्टितं वारुणास्त्रेण प्रविष्टं बाह्यतस्तदा ॥ सहितत्वात्केशवेन नरत्वादथ फल्गुनम् ॥३०५॥ नदस्त्रं नादहत्ताभ्यां स्वर थादवरोपिते ॥ भीम आच्छिन्नहेतौ च तदस्त्रं शांतिमागमत् ॥ ३०६ ॥ शुद्धक्षत्रियधर्मेषु निरतो यद्वृकोदरः ॥ वा हनादवतीर्यान्यैः प्रणितेपि निरायुधैः ॥ सायुधः सरथो युध्यदविपह्यमपीश्वरैः ॥ ३०७ ॥ स्वधर्महानौ मित्राणां कर्तव्यं यन्निषेधनम् ॥ अतः सोन्यानपि प्राह मा नमध्वमपि स्वयम् ॥ ३०८ ॥ नमस्कार्यमपि त्वस्त्रं न न म्यं जीवनेच्छया ॥ समरे शत्रुणा मुक्तं तस्मात्तं न चकार सः ॥ ३०९ ॥ अस्त्राभिमानी वायुर्हि देवतास्य हरिः स्वयम् ॥ तस्माद्भीमस्वरूपत्वान्नादहच्चाग्निमग्निवत् ॥ ३१० ॥ मनसैवादरं चक्रे भीमोस्त्रे च हरौ तदा ॥ क्षत्रधर्मा नुसारेण न ननाम च बाह्यतः ॥३११॥ वासुदेवः स्वकीयास्त्रं भीमं चामोघमेव तु ॥ साधयित्वानंतशक्तिः पुनरश्वा नचोदयत् ॥३१२॥ पुनः प्रयोक्तुमस्त्रं तद्धार्तराष्ट्रोभ्यचोदयत् ॥ द्रौणिर्न शक्यमित्युक्त्वा धृष्टद्युम्नसमभ्ययात् ॥३१३॥

भीमोमानमध्वंननमस्कुरुध्वमिति अन्यानपिअर्जुनादीनपिप्राह ॥ ३०८ ॥ स्वयंसभीमःनमस्कार्यंनमस्कारयोग्यमपिसमरेशत्रूणामुक्तंअस्त्रंजीवनेच्छयाजीवनापेक्षया

ननम्यंनमस्कार्यं हियस्मात्तस्मात्तंनमनंनचकार ॥ ३०९ ॥ अस्त्राभिमानीअस्त्रद्रष्टावायुःअस्यास्त्रस्यदेवताहरिः हियस्मात्तस्माद्भीमस्वरूपत्वात् भीमंनादहत् । अग्निस्वरूप

मग्निंअग्निवत्अग्निरिव ॥ ३१० ॥ बाह्यतःउरसाशिरसेत्यादिना ननाम ननमश्चकार ॥ ३११ ॥ पुनःअश्वान्पार्थरथाश्वानचोदयत् योद्धुमितिशेषः ॥ ३१२ ॥ तदस्त्रं

नारायणास्त्रंपुनःप्रयोक्तुंप्रयोगंकर्तुं अभ्ययाचतप्रार्थयामास ॥ ३१३ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तावुभौसात्यकिधृष्टद्युम्नौसायकाभ्यामविध्यत् द्रौणिरितिशेषः । तौसात्यकिधृष्टद्युम्नौ ॥ ३१४ ॥ अभ्यागतस्यस्वाभिमुखमागतस्यभीमेतानश्वान् संस्थापयतिसति ॥ ३१५ ॥ ततोर्जुनःरूक्षाःक्रूराःवाचःश्रावयन् तंद्रौणिंयोद्धुमागमत् । क्रुद्धरूपोद्रौणिःतत्रयुद्धेआग्नेयमस्त्रममुंचत् । तेनास्त्रेणपृतनासेना ॥ ३१६ ॥ अत्रयुद्धेहरिःसयानं पार्थंउज्जहारअस्त्रादप्यूर्ध्वमनयत् ॥ ३१७ ॥ अपहायविसृज्य वेदानामंतोनिर्णयःतंकरोतीतिवेदांतकृत् पूर्णषाड्गुण्यदेहःकृष्णःव्यासःतंद्रौणिंप्रत्यागत्यजगाद ॥ ३१८ ॥ मायाहिनगच्छयुद्धादितिशेषः । बलवान्गिरिशस्त्वंसुराणांकार्यायभूमावजायथाः । नारायणास्त्रप्रयोगरूपं तवमहत्कार्यमस्माभिर्दृष्टंच । युद्धांतेशिबिरस्थपांडवसैन्यहनन

आयांतमीक्ष्यैव गुरोः सुतं तं धृष्टद्युम्नं सात्यकिरन्वयाद्रणे ॥ उभौ च तौ सायकाभ्यामविध्य निपेततुस्तौ च विमूर्च्छितौ रणे ॥ ३१४ ॥ भीमस्याभ्यागतस्याश्वान् द्रौणिर्व्यद्रावयद्रणे ॥ संस्थापयति तान् भीमे ददर्श द्रौणिमर्जुनः ॥ ३१५ ॥ ततोर्जुनस्तंप्रति योद्धुमागमद्रूक्षा वाचः श्रावयन् क्रुद्धरूपः ॥ तत्राग्नेयं द्रौणिरमुंचदस्त्रं तेन व्यामा पृतना पांडवानाम् ॥ ३१६ ॥ अक्षौहिणी निहता चात्र सेना पार्थं सयानं हरिरुज्जहार ॥ ३१७ ॥ जीवंतमालोक्य सुरेंद्रनंदनं द्रौणिः कोपात्कार्मुकं चापहाय ॥ ययौ तमागत्य जगाद कृष्णो वेदांतकृत्पूर्णषाड्गुण्यदेहः ॥ ३१८ ॥ मा याहि साक्षाद्गिरिशः सुराणां कार्याय भूमौ बलवानजायथाः ॥ महच्च कार्यं पुनरस्ति दृष्टं तवाशु तच्च प्रतिपादयेति ॥ ३१९ ॥ तथोदितः प्रातरिति ब्रुवाणो ययौ प्रणम्याखिलवेदयोनिम् ॥ ययुस्तमन्वेव सुयोधनादयो दुःखानतास्ते शिबिराय भीताः ॥ ३२० ॥ पार्थाश्च सर्वे मुदिता जनार्दनं परं स्तुवंतः शिबिराय जग्मुः ॥ तत्रापि रात्रावपि तान्हरेर्गुणाननुस्मरंतो मुमुदुः समेताः ॥ ३२१ ॥ इति श्रीमन्महाभारततात्पर्यनिर्णये नारायणास्त्रोपशमनो नाम षड्विंशोऽध्यायः ॥ २६ ॥ ॥

रूपंकार्यंपुनरप्यस्ति । तच्चकार्यंप्रतिपादयेति ॥ ३१९ ॥ व्यासेनोदितोद्रौणिःप्रातःश्वःत्वदुक्तंकरिष्ये इतिब्रुवाणःसन् अखिलवेदयोनिंसर्वेवेदाःयोनयःज्ञापकाःयस्यसतथा तंव्यासंप्रणम्यशिबिरायययौ तमनुद्रौणिमनुदुःखानताः दुःखेनआनताःनम्राःदुःखपूर्णाइत्यर्थः ॥ ३२० ॥ मुदिताःहर्षयुक्ताःपरमानंदादिनाउत्कृष्टंजनार्दनंस्तुवंतः । तत्रापिशिबिरेपिसमेताएकत्रमिलिताःहरेर्गुणाननुस्मरंतः पार्थाःमुमुदुः ॥ ३२१ ॥ ॥ यंगंगाज० ॥ २६ ॥ इति श्रीमहाभारततात्पर्यनिर्णयटीकायां षड्विंशोध्यायः ॥ २६ ॥

श्रीगुरुभ्योनमः ॥ ॐ अथेति । अथद्रोणपरलोकप्राप्त्यनंतरम् । द्रौणेःसकाशात् दंशितःबद्धकवचःसकर्णः ॥ १ ॥ तत्रकर्णसेनापत्येधृतराष्ट्रजैःपांडोःसुतानाम् । तत्रयुद्धमध्येउदयाद्रिप्रतिमे उदयाद्रिर्मानसोत्तरगिरिः तेनप्रतिमेसदृशे गजेगजोपरिस्थितइतिशेषः । अतिनिर्मलःयुद्धेरुधिरलेपक्षतांकादिनारहितः कुलक्षयादिदोषरहितोवा भीमःप्रदृश्यतेलोकैरितिशेषः । कथमिव । अतिनिर्मलःमेघमालानीहारादिसंबंधरहितः उद्यत्सवितायथातथेतिसंबंधः । भीमोअतिगौरवर्णइतिभावः ॥ २ ॥ कालयंतंपीडयंतंतंभीमं तस्यभीमस्य तंक्षेमधूर्तिं मृत्योःयमस्यसदनायलोकायनिनायनीतवान् ॥ ३ ॥ परेषुशत्रुषुपक्षपातोविद्यतेयेषांतेतथा तेषांयूनांतरुणानांशिरांसिकृंतन्छिंदन् ।

हरिः ॐ अथानुज्ञामुपादाय द्रौणेर्दुर्योधनो नृपः ॥ कर्णं सेनापतिं चक्रे सोगाद्युद्धाय दंशितः ॥ १ ॥ तत्राभवद्युद्धमतीवदारुणं पांडोः सुतानां धृतराष्ट्रजैर्गजे ॥ तत्रोदयाद्रिप्रतिमे प्रदृश्यते भीमो यथोद्यत्सवितातिनिर्मलः ॥ २ ॥ तं कालयंतं नृपतीन् क्षेमधूर्तिरभ्यागमत्तस्य गजं जघान च ॥ तं वीर्यमत्तं प्रतिलभ्य भीमो निनाय मृत्योः सदनाय शीघ्रम् ॥ ३ ॥ निहत्य तं मारुतिरभ्यकृंतच्छिरांसि यूनां परपक्षपातिनाम् ॥ विक्षोभयामास च शत्रुसैन्यं सिंहो यथैव श्वसृगालयूथम् ॥ ४ ॥ संक्षोभ्यमाणं तदनीकमीक्ष्य द्रौणी रथेन प्रतिजग्मिवांस्तम् ॥ तद्युद्धमासीदतिघोरमद्भुतं पुरा यथा नास च कस्यचित्क्वचित् ॥ ५ ॥ दृष्ट्वैव तद्देवगंधर्वविप्रा ऊचुर्नेदृग्दृष्टपूर्वं सुयुद्धम् ॥ नचोत्तरं वापि भविष्यतीदृक् कलां च सर्वाणि न षोडशीमयुः ॥ ६ ॥ नैतादृशी ज्ञानसंपद्बलं वा द्वयं कुतो वायुसुते शिवं तथा ॥ द्वयोः समाहार इह द्वयोरपि ज्ञानस्य बाह्वोश्च बलस्य सूर्जितः ॥ ७ ॥ ॥

शत्रुसैन्यंविक्षोभयामासविलोडयामास । श्वसृगालयूथंशुनांगोमायूनांचसमूहंयथा ॥ ४ ॥ द्रौणिः तंभीमं तद्युद्धंतयोःभीमद्रौण्योःयुद्धंयथा अतिरौद्रंअतिक्रूरं अद्भुतंशिक्षासौराश्चर्यकरंआसीत् । तथापुराकस्यचिदपिवीरस्यक्वचिन्नास ॥५ ॥ तद्युद्धंईदृक्‌एतादृशंसुयुद्धं दृष्टपूर्वंपूर्वंदृष्टं पूर्वैरस्मत्कुलवृद्धैर्दृष्टंवानैवनाभूत् । उत्तरमपिउत्तरकालेपिईदृग्युद्धंनभविष्यति । सर्वाणियुद्धानिषोडशींकलां अस्ययुद्धस्येतिशेषः । नअयुःनप्रापुः॥६॥वायुंशिवंचकृते एतादृशीज्ञानसंपत्‌एतादृशंबलंवानास्ति ।ज्ञानंबलंचेतिद्वयंएकत्रमिलितंकुतः नकुतोपीत्यर्थः । ज्ञानस्यबाह्वोर्बलस्यचेतिद्वयोःसूर्जितःअत्युत्कृष्टः समाहारःसंमेलनंइहद्वयोरपि अनयोर्भीमाश्वत्थाम्नोरेवास्तीतिशेषः।अन्यत्रनैवेतिभावः॥७॥

नरोत्तमौभीमद्रौणीपत्रिभिःशरैःसमस्ताःदिशःनिरंतराः गगनमाकाशंचनिरंतरं अवकाशरहितंचक्रतुः । तद्युद्धंअगुःप्रापुः ॥ ८ ॥ निराकृतेतिरस्कृतेसति । अविस्मयःशंकारहितः संशामयामास शांतान्यकरोत् ॥ ९ ॥ चित्रंसुष्ठुयथास्यात्तथा अलमत्यंतं अयुध्यतांविचेतनःमूर्च्छितः ॥ १० ॥ किंचिद्विह्वलाचंचलातनुर्यस्यसतथा । निर्धूतः निराकृतःयुद्धश्रमोयेनसतथा । आत्तधन्वागृहीतचापः सभीमःगुरुसुतेपूर्वंपूर्वकालेगतेसति । क्षणेनउत्तरक्षणेन नादिताः अतिशब्दिताः आशादिशोयेनसतथासन्

इतीर्यमाणे विबुधैर्नरोत्तमौ दिशः समस्ता गगनं च पत्रिभिः ॥ निरंतरं चक्रतुरुत्तमौजसौ दृष्ट्वैव तत्प्रीतिमगुर्महारथाः ॥ ८ ॥ शरासने मारुतिना निराकृते द्रौणिर्महास्त्राणि मुमोच तस्मिन् ॥ तान्यस्त्रवर्यैर्बलवानविस्मयः संशामयामास सुतोनिलस्य ॥ ९ ॥ पुनः शरैरेव परस्परं तावयुध्यतां चित्रमलं च सुष्ठु ॥ तदा तु भीमस्य शरैर्भृशार्दितो द्रौणिः पपाताशु दृढं विचेतनः ॥ १० ॥ भीमश्च विह्वलतनुः स तु किंचिदेव पूर्वं गते गुरुसुते प्रययौ क्षणेन॥ निर्धूतयुद्धश्रम आत्तधन्वा योद्धुं गजौघं प्रति नादिताशः ॥ ११ ॥ तस्मिन् गजान्मर्दयति धार्तराष्ट्रोयुधिष्ठिरम् ॥ आगाद्युद्धाय तौ युद्धं राजानौ चक्रतुश्चिरम् ॥१२॥ तत्र तं विरथं चक्रे सहसैव युधिष्ठिरः ॥ स गदामाददे गुर्वीं तं भीमोभ्यपतद्गदी ॥१३॥ दृष्ट्वा कृपस्तं स्वरथमारोप्यापययौ ततः ॥ तदैव कर्णनकुलौ भृशं बाणैरयुध्यताम् ॥ १४॥ नकुलं विरथं कृत्वा कर्णोथ प्रपलायिनम् ॥ अनुद्रुत्य च वेगेन कंठेधनुरवासृजत् ॥ १५॥ उक्त्वाच परुषा वाचः कुंत्या वचनगौरवात् ॥ न जघानैव नकुलं विसृज्य च परान् ययौ ॥ १६ ॥ ॥ ७ ॥ ॥ ७ ॥

गजौघंप्रतियोद्धुंप्रययौ ॥ ११ ॥ तौराजानौयुधिष्ठिरसुयोधनौ ॥ १२ ॥ तत्रयुद्धेतंदुर्योधनं सहसाबलेन सदुर्योधनः ॥ १३ ॥ तंदुर्योधनंतंभीमं ततःभीमसकाशात् अपययौपराङ्मुखःययौ ॥ १४ ॥ अथप्रपलायिनंनकुलमनुद्रुत्य अवासृजत्अवाक्षिपत् ॥ १५ ॥ परुषाःक्रूराःवाचःवचनगौरवान्निमितात्नकुलंनैवजघान किंतु विसृज्यपरान्शत्रून्ययौ ॥ १६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

कैकयौकैकयदेशीयौ विंदानुविंदौवैशसंयुद्धम् ॥ १७ ॥ ताभ्यांविंदानुविंदाभ्यां निरुद्धःशेधितःसात्यकिः सहसाबलेन तत्रतयोर्मध्येअनुविंदस्यशिरोजहार । अथविंदःशैनेयंयुयोध । अथउत्तमाहवेमहारणे परस्परंअरथौरथहीनौचक्रतुः ॥ १८ ॥ कृतश्रमौकृताभ्यासौ आकाशतलेश्येनौयथातथाविचेरतुः । उभौअन्योन्यंवर्मणीनिकृत्य वरासिपाणीउत्तमखड्गहस्तौ युगपत्एकदैवसमीयतुःप्रापतुः । परस्परंहंतुमितिशेषः ॥ १९ ॥ तत्रतयोर्मध्येसात्यकिःमृधेरणे अपहस्तेनपार्श्वीकृतहस्तेन ॥ २० ॥

विंदानुविंदावथ कैकयौ रणे समासदत्सात्यकिरुग्रविक्रमः ॥ तयोरमुष्याभवदुग्रवैशसं प्रवर्षतोरुत्तमसायकान् बहून् ॥ १७ ॥ ताभ्यां निरुद्धः सहसा जहार तत्रानुविंदस्य शिरोथ विंदः ॥ युयोध शैनेयमथारथावुभौ परस्परं चक्रतुरुत्तमाहवे ॥ १८ ॥ ततश्च चर्मासिधरौ प्रचेरतुःश्येनौ यथाकाशतले कृतश्रमौ ॥ निकृत्य चान्योन्यमुभौ च वर्मणी वरासिपाणी युगपत्समीयतुः ॥ १९ ॥ तत्रापहस्तेन शिरः सकुंडलं जहार विंदस्य मृधे स सात्यकिः ॥ निहत्य तौ बंधुजनैः सुपूजितो जगाम शत्रूनपरान्प्रकंपयन् ॥ २० ॥ कृपमायांतमीक्ष्यैव तपसा मां प्रपीडयेत् ॥ इति मत्वा पार्षतस्तु भीमं शरणमेयिवान् ॥ २१ ॥ कर्णं समंतात्प्रतिकालयंतं वरूथिनीमिंद्रसुतः समभ्ययात् ॥ क्षणात्तमाजौ विरथं च चक्रे ततोपहारं स चकार चम्वाः ॥ २२ ॥ पराजितः संयति सूर्यसूनुः सुतेन शक्रस्य स धार्तराष्ट्रम् ॥ जगाद बाहुं प्रतिगृह्य पार्थो जिगाय मामन्यमनस्कमाजौ ॥ २३ ॥ कामं रथो मे धनुरप्यभेद्यं दत्तं भृगूणामधिपेन दिव्यम् ॥ यंता न तादृङ् मम यादृशो हरिः शल्यो यदि स्यात्त्वदरिं निहन्याम् ॥ २४ ॥ ॥ ७ ॥

पार्षतोधृष्टद्युम्नः ॥ २१ ॥ समंतात्सर्वत्रवरूथिनींसेनांप्रतिकालयंतंअर्दयंतं । आजौरणेतंकर्णंततश्चम्वाःसेनायाः अपहारंअपनयनंचक्रे ॥ २२ ॥ सकर्णः संयतिरणेबाहुं दुर्योधनबाहुं आजौरणेअन्यमनस्कं व्यग्रांतःकरणंमांजिगाय ॥ २३ ॥ अन्यमनस्कत्वेकिंकारणमित्यतआह । काममिति । कामंयथाभवतितथा धनुरादिदत्तंयद्यपि तथापीतिशेषः । यादृशोहरिःकृष्णोयंतापार्थस्यसारथिः तादृक्तादृशःयंताममनास्ति । यदिशल्यःस्यात्तर्हि त्वदरिंतवशत्रुंपार्थंहन्याम् ॥ २४ ॥ ॥ ॥

सदुर्योधनःसौत्यकृतेसूतत्वार्थं सशल्यः क्रुद्धइवरथिनःरथिकात्सकाशात् सारथेःउत्तमतांव्यावर्णयन् प्रशंसन् । अशामयत्शल्यंशांतिमनयत् ॥ २५ ॥ योबुद्ध्यादि भिःरथिनःसकाशात् अधिकःससारथिःस्यात् ॥ २६ ॥ २७ ॥ अस्यकर्णस्यसारथिःबभूव । सेनांव्यूह्यरचनांकृत्वा । तेनशल्येनसहितःसन् गच्छन्दर्पेणगर्वेणप्राह । किमिति । यःपुमान्मेअर्जुनंदर्शयेत् तस्यपुरुषस्यप्रीतःसन् अनर्गलंप्रतिबंधरहितंबह्वित्यर्थः । वित्तंदास्यामि ॥ २८ ॥ बहुशःबहुवारंइतिब्रुवाणंतंकर्णंयेनार्जुनेन ॥ २९ ॥ कोनाममर्त्यः तंपार्थंजयेत् नजयेदित्यर्थः । कःब्रह्माजयेदित्यावर्त्ययोज्यम् । वःयुष्माकंयुष्माभिरपीत्यर्थः । गोग्रहेपांडवाज्ञातवासानंतरं कृतगोग्रहणेदृष्टः । पार्थपराक्र

इतीरिते सौत्यकृते स शल्यं प्रोवाच स क्रुद्ध इवाभवत्तदा ॥ दुर्योधनो रथिनः सारथेस्तु व्यावर्णयन्नुत्तमतामशामयत् ॥ २५॥ बुद्ध्या बलेन ज्ञानेन धैर्याद्यैरपि योधिकः ॥ रथिनः सारथिः स स्यादर्जुनस्य तथा हरिः ॥ २६ ॥ यथा शिवस्य ब्रह्माभूद्दहतस्त्रिपुरं पुरा ॥ इत्यादिवाक्यैः संशांत इव शल्योस्य सारथिः ॥ २७॥ बभूव तेन सहितः सेनां व्यूह्य रवेः सुतः ॥ गच्छन् युद्धाय दर्पेण प्राह यो मेर्जुनं पुमान् ॥ दर्शयेत्तस्य दास्यामि प्रीतो वित्तमनर्गलम् ॥२८॥ इति ब्रुवाणं बहुशः प्राह शल्यः प्रहस्य च ॥ निवातकवचा येन हता दग्धं हि खांडवम् ॥२९॥ को नाम तं जयेन्मर्त्यो दृष्टो वापि स गोग्रहे ॥ काकगोमायुधर्मा त्वं हंससिंहोपमं रणे ॥ ३० ॥ मा याहि पार्थं मा याहि हतोनेन यमक्षयम् ॥ इत्युक्तो रविजो मद्रान् नितरां पर्यकुत्सयत् ॥ ३१ ॥ शल्योपि सर्वदेशेषु नीचमध्योत्तमा नराः ॥ संतीत्युक्त्वास्य सारथ्यं चक्रे पार्थहितेच्छया ॥ ३२ ॥ ॥७॥ ॥७॥ ॥७॥

मोदृष्टइतिभावः । काकःवायसःगोमायुःसृगालः तयोर्धर्मइवधर्मःप्रवृत्तिर्यस्येतिविग्रहः । त्वंहंससिंहोपमं पार्थंरणेमायाहिमायाहीत्यादरेद्विरुक्तिः । वीरंमांकिमर्थंमागच्छेतिनिवारयसीत्यतआह । हतइति । अनेनपार्थेनहतःसन् यमक्षयंयमालयंयास्यसीतिशेषः । अथवा मायाहिमायाहीत्यत्र एकंयमक्षयमित्यनेनान्वेतव्यं । नगच्छेत्यर्थः । मद्रान्मद्रदेशीयान्पर्यकुत्सयत् कुत्सयामास ॥ ३० ॥ ३१ ॥ नीचमध्योत्तमानराःसंतीत्युक्त्वा अस्यकर्णस्यपार्थहितेप्सया अर्जुनजयकांक्षयेत्यर्थः ॥ ३२ ॥ ॥

नियतेनप्रेरितेनरथेनविदुधावकंपयामास । कथंभूतः कर्णःगौतमाद्यैःकृपाद्यैराचार्यजेनद्रौणिनासंरक्षितः ॥ ३३ ॥ पांडवेयपृतनापांडवसेना तंकर्णम् । तांसेनांविदार्यनिर्भिद्य धर्मसूनुंसंप्राद्रवत् अभियर्यौ ॥ ३४ ॥ अथशितशरैःक्रूरबाणैः तंधर्मसूनुंविरथंकृत्वा अस्यधर्मजस्यकंठेसज्जंज्ययासहितंसज्जंधनुर्निधायसंप्रास्य परुषाःनिष्ठुराःगिरःवाच आहेतिभारतानुसरेणश्लोकस्यान्वयः । विदार्यकर्णस्तांसेनांयुधिष्ठिरमथाद्रवदितिकर्णपर्वणि । मारुतिःअमुंधर्मराजंदृष्ट्वैवदुर्योधनंविरथकार्मुकंकृत्वा भृशंआतुतोद व्यथयामास ॥ ३५ ॥ मद्रपतिःशल्यःप्राणसंशयगतं जीवनविषयेसंशयंप्राप्तं तंनृपतिंयुधिष्ठिरंदुर्योधनंवानिरीक्ष्यप्रदर्श्य दर्शयित्वादुर्योधनमितिशेषः । कर्णंजगाद । किमिति ।

कर्णोऽपि शल्यनियतेन रथेन पार्थसेनामवाप्य विदुधाव शरैः समंतात्॥ संरक्षितो युधि सुयोधनगौतमाद्यैराचार्यजेन च महास्त्रविदांवरेण ॥ ३३ ॥ तं भीमपार्षतशिनिप्रवराभिगुप्ता सा पांडवेयपृतनाभिववर्ष बाणैः ॥ तां सूर्यसूनुरथ बाणवरैर्विदार्य संप्राद्रवच्छितशरैरथ धर्मसूनुम् ॥ ३४॥ कृत्वा तमाशु विरथं धनुरस्य कंठे सज्जं निधाय परुषा गिर आह चोच्चैः ॥ दृष्ट्वैव मारुतिरमुं भृशमातुतोद दुर्योधनं विरथकार्मुकमाशु कृत्वा ॥३५ ॥ तं प्राणसंशयगतं नृपतिं निरीक्ष्य कर्णं जगाद युधि मद्रपतिः प्रदर्श्य॥ यस्यार्थमेष समरस्त्वमियं च सेना तं त्वं यमस्य सदनं प्रयियासुमद्य ॥ ३६ ॥ भीमेन पीडितममुं परिपाहि शीघ्रं किं ते युधिष्ठिरममुं हि युधाभिपीड्य ॥ श्रुत्वास्य वाक्यमतिहाय युधिष्ठिरं तं कर्णो ययौ नृपतिरक्षणतत्परोऽलम् ॥ ३७॥ दृष्ट्वैव तं पवनसूनुरभिव्ययाय क्रोधाद्दिधक्षुरिव कर्णममेयधामा ॥राजा वनाय शिनिपुंगवपार्षतौ च संदिश्य कर्णमभिगच्छत आस रूपम्॥ अंते कृतांतनरसिंहतनोर्यथैव विष्णोर्हरं ग्रसत आत्तसमस्तविश्वम् ॥ ३८ ॥ ॥ ७ ॥ ॥ ७ ॥

एषःसमरःरणः त्वंचइयंसेनायस्यार्थेयदर्थमित्यर्थः । त्वंअद्येदानींयमस्यसदनं प्रयियासुंजिगमिषुम् ॥३६॥ भीमेनपीडितंतममुंसुयोधनंशीघ्रंपरिपाहि । तेतवअमुंयुधिष्ठिरंमुधाव्यथाअभिपीड्यकिंफलमित्यर्थः । अस्यशल्यस्यअतिहायविहाय अलंनृपतेःसुयोधनस्यरक्षणेविषयेतत्परःपरमतात्पर्यवान् । तंभीमंप्रतिययौ॥३७॥अमेयधामा अपरिमितपराक्रमःपवनसूनुःतंकर्णंदृष्ट्वैवक्रोधात्तंकर्णंदिधक्षुरिवदग्धुमिच्छुरिवअभिइयायअभिययौ । अंतेमहाप्रलयेआत्तसमस्तविश्वंभक्षितसर्वविश्वंहरंरुद्रंग्रसतःसंहर्तुःकृतांतनर

सिंहतनोःकृतःअतोनाशोययासाकृतांतासानरसिंहतनुर्यस्यसतथोक्तः । तस्यनरसिंहरूपस्यविष्णोः रूपंयथैवयथाभयंकरमित्यर्थः । राजावनायधर्मराजरक्षणार्थं शिनिपुंगवः सात्यकिःपार्षतःधृष्टद्युम्नः । तौसंदिश्यआज्ञाप्य कर्णंप्रतिअभिगच्छतःभीमस्यरूपंतथाभयंकरमासेत्यर्थः॥ ३८॥ तद्वेगतःभीमगमनवेगेन॥ ३९॥ सभीमःतस्मिन्कर्णेतेनशरेणआहतोविद्धः । सकर्णःमृतकवत्मृतसदृशःसन्पपात । भीमःक्षुरंछेदनकरशस्त्रविशेषं जगृहे । पद्भ्यामभिययौकर्णंप्रतीतिशेषः॥ ४०॥ भीमःकिमर्थमभिययावित्यतआह निंदामिति परोक्षगोदूरस्थोपियोविदधातिकरोति विजिह्वंजिह्वारहितं करवाणिकरोमीति । एवमुक्तप्रकारेणप्रतिज्ञा हियस्मात्तेनकारणेनसभीमःछेत्तुंससारप्राप । कर्णःभीमेनयुद्धन्

तद्वेगतः प्रतिचचाल धरा समस्ता विद्राविता च सकला प्रतिवीरसेना ॥ ३९ ॥ वैकर्तनेन शरसंचयताडितः स बाणं च वज्रसदृशं प्रमुमोच तस्मिन् ॥ तेनाहतो मृतकवत्स पपात कर्णो भीमः क्षुरं च जगृहेऽभिययौ च पद्भ्याम् ॥ ॥ ४० ॥ निंदां हरेश्च विदधाति परोक्षगोपि यस्तं प्रगृह्य करवाणि विजिह्वमेव ॥ एवं हि वायुतनयस्य सदा प्रतिज्ञा छेत्तुं स तेन रविजस्य ससार जिह्वाम् ॥ ४१ ॥ आयांतमंतिकममुं प्रसमीक्ष्य शल्यो नेत्याह हेतुभिरहो न मृषा प्रतिज्ञा ॥ कार्या त्वयैव पुरुहूतसुतस्य जिह्वां मा तेन पातय मरुत्सुतसूत सूनोः ॥ ४२ ॥ इत्युक्त्वाप्रमुखात्तस्य रथेनैव तु मद्रराट् ॥ वैकर्तनमपोवाह सर्वलोकस्य पश्यतः ॥ ४३ ॥ जित्वा सूर्यसुतं भीमः कौरवाणामनीकिनीं ॥ सर्वां विद्रावयामास द्रौणिदुर्योधनावृतम्॥ ४४ ॥ अक्षौहिणीत्रयं तेन तदा विलुलितं क्षणात् ॥ तदैव गुरुपुत्रोयात्पांडवानामनीकिनीम्॥ ४५ ॥ विमृद्य सकलां सेनां कृत्वा च विरथं नृपम् ॥ धृष्टद्युम्नं यमौ चैव सात्यकिं द्रौपदीसुतान् ॥ क्षणेन विरथीकृत्य सर्वांश्चक्रे निरायुधान्॥ ४६ ॥

कृष्णमनिंदयदितिभावः ॥ ४१ ॥ शल्यःअमुंभीमंप्रसमीक्ष्यआह । हेमरुत्सुत पुरुहूतसुतस्यप्रतिज्ञात्वया मृषानैवकार्या कर्तुमयोग्या । तेनार्जुनप्रतिज्ञासत्याभवत्विति कारणेन सूतसूनोःजिह्वांमापातयमाछिंधि । इतिहेतुभिःकारणोक्तिभिः भीमंनेत्याह निवारयामास ॥ ४२ ॥ तस्यभीमस्यप्रमुखात्समीपात् अपोवाह अन्यत्रनिन्ये ॥ ४३ ॥ आवृतांयुक्तांअनीकिनीम् ॥ ४४ ॥ अयात्प्राप ॥ ४५ ॥ विमृद्यमर्दयित्वानृपंयुधिष्ठिरम् ॥ ४६ ॥ ॥ ॥ ॥ ॥ ॥ ॥

भग्नदर्पान् हताहंकारान् रणतःअपयातान् परावृत्यगच्छतःतान्युधिष्ठिरादीन्अन्वेव बाणावृतंबाणैराच्छादितं अंतरिक्षं कुर्वन् ययौ। धर्मराजस्तमाह। किमिति। स्वधर्मेनिर तान्नोस्मान् किंकिमर्थंविहंसि ॥ ४७॥ परधर्मस्थद्विजःसन्। परेषांक्षत्रियाणांधर्मेयुद्धकर्मणिस्थितःरतःसन् क्षत्रियान्माहिंसीः इत्युदितोद्रौणिःतान्युधिष्ठिरादीन्विहायैवय त्राच्युतार्जुनौतिष्ठतःतत्रययौ ॥ ४८ ॥ तत्रसद्रौणिःबाणयुक्तंभुजगेंद्रःशेषःतेनकल्पंसदृशंबाहुमुन्नम्यउद्धृत्य युधयेयुद्धार्थं सुशूरंसंशप्तकैःसंयुध्यमानं सुरेंद्रसूनुंसमाह्वया

तान् भग्नदर्पान् रणतोपयातानन्वेव बाणावृतमंतरिक्षम् ॥ कुर्वन्ययौ धर्मराजस्तमाह किन्नः स्वधर्मे निरता न्विहंसि ॥ ४७ ॥ क्षत्रियान्परधर्मस्थो मा हिंसीरिति चोदितः ॥ प्रहस्य तान्विहायैव ययौ यत्राच्युतार्जुनौ ॥ ४८ ॥ संशप्तकैस्तत्र संयुध्यमानं समाह्वयामास सुरेंद्रसूनुम् ॥ स बाणयुक्तं भुजगेंद्रकल्पमुन्नम्य बाहुं युधये सुशूरम् ॥ ४९ ॥ पार्थः संशप्तकगणैः संसृष्टः समरार्थिभिः ॥ आहूतो द्रौणिनाचैव कार्यं कृष्णमपृच्छ त ॥ चोदयामास च हयान्कृष्णो द्रौणिरथं प्रति ॥ ५० ॥ उभौ च तावस्त्रविदां प्रधानौ महाबलौ संयति जातदर्पौ ॥ शरैः समस्ताः प्रदिशो दिशश्च द्रौणींद्रसूनू तिमिराः प्रचक्रतुः ॥ ५१ ॥ द्रौणिस्तदा स्यंदनवाजिरो मस्वरोमकूपध्वजकार्मुकेभ्यः ॥ शरानमोघान्सततं सृजानो बबंध पार्थं शरपंजरेण ॥ ५२ ॥ तस्मिन्निबद्धे हरिरप्र मेयो विबोधयामास सुरेंद्रसूनुम् ॥ आलिंगनेनास्य ददौ बलं च स उत्थितोस्त्राण्यमुचन्महांति ॥ ५३ ॥ निवार्य तान्य स्त्रवरैर्गुरोः सुतश्चिच्छेद च ज्यां युधि गांडिवस्य ॥ ववर्ष पार्थं च शरैरथान्या ज्यासीत्तया गांडिवं सोप्ययुङ्क्त ॥ ५४ ॥

मास ॥ ४९ ॥ समरार्थिभिःयुद्धकांक्षिभिःसंसृष्टःसंयोजितः कार्यंकर्तुंयोग्यमपृच्छत ॥ ५० ॥ संयतियुद्धेउभौद्रौणिपार्थौ प्रदिशोदिशश्चतिमिराःअंधकारवतीःचक्रतुः ॥५१॥ वाजिरोमाणिअश्वरोमकूपानि स्यंदनादिभ्यःसृजानःसृजन्द्रौणिः ॥ ५२ ॥ तस्मिन्पार्थेनिबद्धेसति विबोधयामास ज्ञापयामास। विमूर्छितंचकारेत्यर्थः।आलिंगनेन अस्यपार्थस्य उत्थितःसपार्थःतानिअस्त्राणि ॥ ५३ ॥ गांडीवस्यज्यां मौर्वीं। अन्याज्याआसीत्। सोप्यर्जुनःतयाज्ययागांडीवंअयुङ्क्तयुयोज ॥ ५४ ॥

शितेननतीक्ष्णेनशरेण सद्रौणिः सारथ्यंस्वयमकरोत् ॥५५॥शरान् विसृजनासारथ्यमपिसारथिकर्मापिकुर्वतातेनद्विजन्मनाद्विजेनाश्वत्थाम्ना सपार्थःशरकूटेनशरसमूहेनपुनबद्धोभूत् ॥ ५६ ॥ तंपार्थं तस्मिन्पार्थेशत्रुविघातकंशत्रुनाशकंबलंअधात्स्थापयामास ॥ ५७ ॥ अरिमर्दनःपार्थःभूयोद्रोणपुत्रेशरान्ववर्ष ॥ ५८ ॥ द्रौणिःपुनःतस्यपार्थधनुषः ज्यांतुतोदचिच्छेद । पार्थःतांज्यांपुनःसंधाय अश्वानांरश्मीन्रज्जूः ॥ ५९ ॥ विरश्मयःछिन्नरज्जवःपुनःपार्थशरैर्हताः द्रौणेर्हयाःअस्मात्पार्थात् दूरंअपोढ्ःअपगताः। सोपिद्रौणिःतानश्वान्संस्थाप्य पुनश्चिंतयामास । मनसीतिशेषः । किमिति । पार्थविषये एतस्मात्कृतप्रयासादधिकंकर्तुं नशक्यते ॥ ६० ॥ कुतइत्यतआह । सारथित्वादिति।

ततः शरेण कुपितः शितेन द्रौणिसारथेः ॥ शिरो जहार कौंतेयः सारथ्यं सोकरोत्स्वयम् ॥५५॥ शरान्विसृजता तेन सारथ्यमपि कुर्वता ॥ शरकूटेन पार्थः स पुनर्बद्धो द्विजन्मना ॥५६॥ पुनरालिंग्य कृष्णस्तमधाच्छत्रुविघातकम् ॥ बलमस्मिंस्ततः पार्थ उत्तस्थौ शरचापभृत् ॥ ५७॥ ववर्ष च शरान् भूयो द्रोणपुत्रेरिमर्दनः ॥५८॥ पुनस्तस्य तुतोद ज्यां द्रौणिः संधाय तां पुनः ॥ पार्थो द्रोणसुतस्याश्वरश्मींश्चिच्छेद सायकैः ॥५९॥ विरश्मयो हया द्रौणेः पुनः पार्थशराहताः ॥ अपोढुर्दूरमेवास्मात्सोपि संस्थाप्य तान्पुनः ॥ चिंतयामास नैतस्मादधिकं शक्यतेर्जुने ॥ ६० ॥ सारथित्वात्केशवस्य ध्वजस्थत्वाद्धनूमतः ॥ गांडीवत्वात्कार्मुकस्य चेषुध्योरक्षयत्वतः ॥ ६१ ॥ अवध्यत्वात्तथाश्वानामभेद्यत्वाद्रथस्य च ॥ अतो योद्धुं समर्थोपि नाद्य यामि धनंजयम् ॥६२॥ एवं स मत्वा प्रविवेश सेनां पांडोः सुतानामथ तं समभ्ययात् ॥ पांड्यस्तयोरास सुयुद्धमद्भुतं प्रवर्षतोः सायकपूगमुग्रम् ॥ ६३ ॥ अष्टावष्टशतान्यूहुः शकटानि यदायुधम् ॥ अह्नस्तदष्टभागेन द्रौणिश्चिच्छेद तत्र हि ॥ ६४ ॥

अक्षयत्वतःक्षयरहितत्वात् ॥ ६१ ॥ अतःकारणात् अहंयोद्धुंसमर्थोपि अद्यअस्यामवस्थायांधनंजयंनयामि ॥ ६२ ॥ सद्रौणिःएवमनेनप्रकारेणमत्वाविचिंत्य । अथपांड्योराजा तंद्रौणिंसमभ्ययात् । तयोःपांड्यद्रौण्योः ॥ ६३ ॥ अष्टावितिपदच्छेदः । अष्टशतानिहितथा । अष्टौचअष्टाधिकाष्टशतानीत्यर्थः । शकटानियत्यानि आयुधं आयुधानि । आयुधमितिजात्येकवचनम् । ऊहुःद्रौणिःततानि आयुधानिअह्नःदिवसस्यअष्टभागेनअर्धयामेन तत्रतस्मिन्युद्धेचिच्छेद ॥ ६४ ॥ ॥ ॥ ॥

तंपांड्यंमुकुटेन किरीटेनउज्ज्वलंप्रकाशमानंशिरःजहारअच्छिनत् ॥६५॥ पृतनांसेनां दंडधारनामानं मगधराजानम् ॥६६॥ त्वरावान् धृष्टद्युम्नःगुरोःसुतेनविद्राव्यमाणम । स द्रौणिःतंधृष्टद्युम्नम् ॥ ६७ ॥ अयंखड्गःतवउत्तरंवदिष्यति ॥ ६८ ॥ तुमुलंरोमहर्षणंरोमांचकरम् ॥ ६९ ॥ अंतायनाशायतेशराःतस्यधृष्टद्युम्नस्य त्वचंचचर्मापिनचिच्छिदुः ॥ ७० ॥ खड्गेनअस्त्रैः सहवर्तमानैःशस्त्रैरपिअनिर्भिन्नाअच्छिन्नात्वक्चर्मयस्यसः अनिर्भिन्नत्वक्तंतथा । धृष्टद्युम्नं तदाधनुषःमौर्व्याज्ययाममंथ ॥ ७१ ॥ उभयतःउभयपार्श्वेन ॥ ७२ ॥ सद्रौणिः ॥ ७३ ॥ पांचाल्योपिधृष्टद्युम्नोपिपुनःअन्यंरथंआरुह्य सुष्ठुआत्तंगृहीतंधनुर्येनसतथासन् ॥ ७४ ॥ सुतुमुलंअतितीक्ष्णं अद्भुतंआश्चर्यंदर्शनंयस्मिन् तत्तथा ॥ ७५ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

अथ तं विरथीकृत्य छित्त्वा कार्मुकमाहवे ॥ सकुंडलं शिरो द्रौणिर्जहार मुकुटोज्ज्वलम् ॥६५॥ अथ विद्रावयामास पृतनां पांडवीं शरैः ॥ तदा जघान पार्थोपि दंडधाराख्यमागधम् ॥ ६६ ॥ विद्राव्यमाणां पृतनां निरीक्ष्य गुरोः सुतेनाभ्यगमत्त्वरावान् ॥ धृष्टद्युम्नस्तं स ऊचे सुपापं हनिष्ये त्वामद्य युद्धे गुरुघ्नम् ॥ ६७॥ इत्युक्तो दर्शयामास पार्षतः खड्गमुत्तमम् ॥ अयं तव पितुर्हंता वदिष्यति तवोत्तरम् ॥ ६८ ॥ इत्युक्त्वा धनुरादाय ववर्ष च शरान्बहून् ॥ तयोः समभवद्युद्धं तुमुलं रोमहर्षणम् ॥ ६९ ॥ तत्र पार्षतं द्रौणिः क्षणेन विरथायुधम् ॥ कृत्वांताय शरांस्तीक्ष्णान्मुमोच न च तस्य ते ॥ ७० ॥ त्वचं च चिच्छिदुर्द्रौणिः खड्गहस्तोभिजग्मिवान् ॥ खड्गेन सोस्त्रशस्त्रैरप्यनिर्भिन्नत्वचं तदा ॥ ७१ ॥ मौर्व्या ममंथ धनुषः पातयित्वा धरातले ॥ आकृष्यमाणं पार्षतं दृष्ट्वा कृष्णप्रचोदितः ॥ पार्थो भीमश्चोभयतः शरैरभिविजघ्नतुः ॥ ७२ ॥ स ताभ्यां वज्रसमितैः शरैरभिहतो भृशम् ॥ विसृज्य पार्षतं स्वीयमारुरोह रथं पुनः॥७३॥जगाम च ततोन्यत्र पांचाल्योपि रथं पुनः ॥ आरुह्यान्यं स्वात्तधन्वा कृतवर्माणमभ्ययात् ॥ ७४ ॥ तयोरासीत्सुतुमुलं युद्धमद्भुतदर्शनम् ॥ तत्र नातिप्रयत्नेन पांचाल्यो विरथायुधम् ॥ ७५ ॥ ॥

तत्रयुद्धेनातिप्रयत्नेनअल्पेनैवयत्नेन । गौतमःकृपःतंकृतवर्माणं अपोवाहअन्यत्रानयत् ॥ तस्यदुर्योधनस्यनाभ्यांयमाभ्याम् ॥ ७६ ॥ ७७ ॥ तंदुर्योधनं तंराजानम् ॥ ७८ ॥ रभसःकोपात्वीरोभीमः । अस्यकर्णस्यसमक्षम् ॥ ७९ ॥ आमुष्यकर्णस्यससुषेणःयथाअमुनाभीमेनसत्यसेनः तन्नामाकर्णपुत्रोहतः । यथैवपुराकर्णावरजौनिशायुद्धेकर्ण पुरःकर्णस्याग्रेप्रपातितौ ।भीमेनेतिशेषःतथासुषेणोहतइत्यर्थः ॥ ८० ॥ तंसुषेणंचमूंप्रमृद्यमर्दयित्वा।स्वश्वयुतेशोभमानाश्वयुते अपरेअन्यस्मिन्रथेव्यवस्थितंउपविष्टंयुधिष्ठिरंययौ

चकार कृतवर्माणं तमपोवाह गौतमः ॥ अथ दुर्योधनो राजा माद्रेयावभ्ययाद्रणे ॥ ७६ ॥ ताभ्यां तस्याभवद्युद्धं घोरमद्भुतदर्शनम् ॥ तत्र नातिप्रयत्नेन तेन तौ विरथीकृतौ ॥ ७७ ॥ स्वयं युधिष्ठिरो राजा तदा तं समवारयत् ॥ व्यश्वसूतध्वजं चक्रे तं च दुर्योधनो रणे ॥ ७८ ॥ अथागतं सूर्यसुतं पुनश्च जगाम भीमो रभसो रथेन ॥ दुर्योधनं चास्य समक्षमेव चकार वीरो विरथं क्षणेन ॥ ७९ ॥ निवार्य कर्णं च शरैरमुष्य सूनोः सुषेणस्य शिरश्चकर्त ॥ पपात भूमौ स पितुः समीपे यथा हतः सत्यसेनोमुनैव ॥ ८० ॥ यथैव कर्णावरजौ पुरैव निशायुद्धे कर्णपुरः प्रपातितौ ॥ हतं तमीक्ष्यैव विकर्तनात्मजः क्रोधान्वितो भीमसेनं विहाय ॥ ययौ प्रमृद्यैव चमूं युधिष्ठिरं रथे परे स्वश्वयुते व्यवस्थितम् ॥ ८१ ॥ न्यवारयेतां शिनिपुत्रपार्षतौ कृष्णासुताः सोमकसंघयुक्ताः ॥ स तान्समस्तान्विरथान्विधाय युधिष्ठिरं प्राप युतं यमाभ्याम् ॥ ८२ ॥ निहत्य सोश्वान् युधि धर्मसूनोर्निरायुधौ तौ च यमौ चकार ॥ तानेकयानोपगतान्पुनश्च ममर्द बाणैश्च वचोभिरुग्रैः ॥ ८३ ॥ तदैव मोक्षाय नृपस्य भीमो दुर्योधनं विरथं संविधाय ॥ विव्याध मर्मस्वतितीक्ष्णसायकैस्तं दर्शयामास रवेः सुताय ॥ ८४ ॥

॥ ८१ ॥ कृष्णासुताद्याःन्यवारयन्नितिशेषः । सकर्णः ॥ ८२ ॥ धर्मसूनोरश्वान्तौयमौनिरायुधौ एकयानोपगतान् एकरथस्थान् तान्युधिष्ठिरादित्रीन् पुनरुग्रैस्तीक्ष्णैःबाणैःउग्रैः परुषैर्वचोभिश्चममर्द पीडयामास ॥ ८३ ॥ तदैवभीमःनृपस्ययुधिष्ठिरस्यमोक्षायमोचयितुम् । शल्यःतंसुयोधनंदर्शयामास ॥ ८४ ॥ ॥ ॥ ॥

तद्राकर्णःयत्रदुर्योधनोतत्रेत्यर्थः । युधिष्ठिरोपिशनैःशिबिरंप्रतिगत्वा तत्रशिबिरेशिश्ये । यदाराजगृद्धीराज्ञःसुयोधनस्यगृद्धीरक्षणाकांक्षी गृधुअभिकांक्षायामितिधातुः कर्णः जगाम दुर्योधनंप्रतीतिशेषः ॥ ८५ ॥ तदैवद्रौणिःकृपश्च अत्रदुर्योधनस्थलं जग्मतुःप्रापतुः तदाभीमःजगाम योद्धुमितिशेषः । प्रमुक्तैःशरैःविद्धंनृपंरथंस्वरथंआरोपयत् ॥ ८६ ॥ अपयातेपरावृत्यगतेसति । तंभीमंविहायअभिपातयंतौघातयंतौ वीरानितिशेषः । सोमकानांचमूंजग्मतुः ॥ ८७ ॥ अत्ररणभूमौराजानंयुधिष्ठिरं अचक्षमाणः अपश्यन् वासुदेवप्रणुन्नःकृष्णप्रेरितोधनंजयः अभ्याययौ शिबिरंप्रतिराजानंद्रष्टुमितिशेषः । तदुक्तंकर्णपर्वणि । एवमुक्तःपुनःप्रायाद्द्रष्टुमिच्छन्युधिष्ठिरमिति । कुरूनकौ

शल्यस्तदा धर्मसुतं विहाय कर्णो ययौ तत्र युधिष्ठिरोपि ॥ गत्वा शनैः शिबिरं तत्र शिश्ये कर्णो यदा राजगृद्धी ज
गाम ॥ ८५ ॥ द्रौणिः कृपश्चात्र तदैव जग्मतुस्तदा भीमो द्रौणिकर्णौ जगाम ॥ कृपो नृपं रथमारोपयच्च विद्धं
शरैर्भीमबाहुप्रमुक्तैः ॥ ८६ ॥ नृपं समादाय कृपेपयाते भीमार्दितौ द्रौणिकर्णौ शरौघैः ॥ विहाय तं जग्मतुः सोम
कानां चमूं शरौघैरभिपातयंतौ ॥ ८७ ॥ अथात्र राजानमचक्षमाणो धनंजयो वासुदेवप्रणुन्नः ॥ अभ्याययौ पा
र्षतः स्वां तु सेनां कर्णाहतां वीक्ष्य कुरूनपीडयत् ॥ ८८ ॥ न्यवारयत्समायातं कपिप्रवरकेतनम् ॥ द्रौणिर्दुःशासनश्चै
व धृष्टद्युम्नमवारयत् ॥ ८९ ॥ उभावतिरथौ तौ तु शस्त्रास्त्रैरभ्यवर्षताम् ॥ दुःशासनः पार्षतश्च कुर्वंतौ बाणजं तमः
॥ ९० ॥ तत्र दुःशासनेनाजौ स्तंभितो द्रुपदात्मजः ॥ यतमानोपि निर्यत्नः कृतो युद्धे निरायुधः ॥ ९१ ॥ तदाभवद्युद्ध
मतीव दारुणं द्रौणेस्तनूजेन च वज्रपाणेः ॥ तत्रापि बद्धः शरपंजरेण पार्थोपनुत्तापि च गांडिवज्या ॥ ९२ ॥

रवान् ॥ ८८ ॥ द्रौणिः कपिप्रवरोहनूमान् सएवध्वजोयस्यसतथा तमर्जुनंन्यवारयत् । केतनंध्वजमस्त्रियामित्यमरः । दुःशासनःधृष्टद्युम्नमवारयत् ॥ ८९ ॥ तावुभौदुः शासनःपार्षतश्चबाणजंबाणैरुद्भवंतमःकुर्वंतौसंतौ ॥ ९० ॥ तत्राजौतस्मिन्रणे स्तंभितःजडीकृतःयुद्धविषयेयतमानोपिनिर्यत्नःप्रयत्नरहितःसन् निरायुधःकृतः ॥ ९१ ॥ त त्रापियुद्धेगांडिवज्यामौर्वी अपनुत्ताछिन्नाबभूव ॥ ९२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

कृष्णेन एधितंवर्धितंबाहुवीर्यंयस्यसतथा । रश्मीन्प्रग्रहान् अमुष्यद्रौणेः ॥ ९३ ॥ गुरोःपुत्रंअतीत्यअतिक्रम्य समागतेसति । कर्णःपांडोःसुतानांशरवर्षस्यधारायस्येति विग्रहः । दुर्योधनःतंकर्णमनु ॥ ९४ ॥ धृष्टद्युम्नःअन्यद्धनुःसमादाय कर्णंवीक्ष्यन्यवारयत् ॥ ९५ ॥ अविश्रमंविश्रांतिरहितंयुद्धंसमासीत् तदैवधृष्टद्युम्नःकर्णंयदान्यवारयत् तदैवेत्यर्थः ॥ ९६ ॥ द्रौपदेःधृष्टद्युम्नस्य ॥९७॥ तदंतरासात्यकेरश्वहननद्रौपदिचापच्छेदनयोर्मध्येअपोथयत् अमारयत् । तयोःसात्यकिधृष्टद्युम्नयोः॥९८॥बहुधाबहु

पार्थोथ कृष्णैधितबाहुवीर्यो निहत्य सूतं गुरुपुत्रकस्य ॥ छित्त्वा च रश्मींस्तुरगानमुष्य विद्रावयामास शरैः सुदूरम् ॥ ९३ ॥ अतीत्य पुत्रं तु गुरोः समागते पार्थे कर्णो द्रावयामास सेनाम् ॥ पांडोः सुतानां शरवर्षधारो दुर्योधनश्चानुययौ तमेव ॥ ९४ ॥ कर्णमायांतमालोक्य द्रावयंतं निजां चमूम् ॥ धनुरन्यत्समादाय धृष्टद्युम्नो न्यवारयत् ॥ ९५ ॥ तयोरासीन्महद्युद्धं चिरं सममविश्रमम् ॥ तदैव सात्यकिर्वीरो दुर्योधनमवारयत् ॥ ९६ ॥ निवारितः सात्यकिना रणे दुर्योधनो नृपः ॥ निहत्य सात्यकेरश्वान्द्रौपदेश्चापमच्छिनत् ॥ ९७ ॥ तदंतरैव कर्णोपि पार्षताश्वानपोथयत् ॥ तयोर्विरथयोरेव भग्नं तत्पांडवं बलम् ॥ ९८ ॥ बलं स्वकीयं बहुधा विभिन्नं समीक्ष्य भीमो मृगराजकेतुः ॥ कृत्वा धराकंपकमुग्रनादं रणेभ्ययात्कौरवराजसैन्यम् ॥ ९९ ॥ नादेन बाणैश्च वृकोदरेण भग्नं तदा कौरवसैन्यमाशु ॥ दिशो विदुद्राव सुयोधनोपि कृतो रणे तेन विवाहनायुधः ॥ १०० ॥ दृष्ट्वैव तत्पांडवानां च सेना समावृत्ता क्षिप्रमवार्यविक्रमा ॥ तया पुनः कौरवाणां बलं तद्भग्नं दूराद्दूरतरं प्रदुद्रुवे ॥ १०१ ॥

प्रकारेणविभिन्नंवियोगंप्राप्तम् मृगराजःसिंहःकेतौयस्येतिविग्रहः । भीमःधराकंपंभूकंपनकरं उग्रनादंक्रूरशब्दम् ॥ ९९ ॥ वृकोदरेणकर्कशनादेन बाणैश्चभग्नंपराजितं । तेनभीमेन ॥ १०० ॥ तद्भीमकृतंदृष्ट्वा अवार्यविक्रमाअनिवार्यपराक्रमा सेनाक्षिप्रंसमावृत्तापरावृत्यागता योद्धुमितिशेषः । तयापांडवसेनया ॥ १०१ ॥

आधिरथिःकर्णःदिशःप्रतियांतंपलायमानंदुर्योधनबलंदृष्ट्वा । क्रुधाजज्वाल । कोपाग्निनादग्धइतिभावः ॥ १०२ ॥ सकर्णःरामोभार्गवः । अप्रतिद्वंद्वंप्रतिद्वंद्वास्त्रहीनं असदृशमितियावत् । भार्गवसंज्ञितंभार्गवनामकमस्त्रम् ॥ १०३ ॥ उल्बणंक्रूरंतदस्त्रंभीमंवर्जयामास । नैवार्दयदित्यर्थः । कुतइत्यतआह । रामेति ॥ १०४ ॥ अन्येधृष्टद्युम्नादयोदुद्रुवुः । शिष्टाःउर्वरिताःकेचित्पुनस्त्यक्षयंगृहंप्रापुः । मृताइत्यर्थः । तदस्त्रंरामास्त्रंद्रावमाणान् पलायमानान् नहंति हियस्मात्तेनकारणेनसपार्षताः ॥ १०५ ॥ सर्वशःसर्वेपलायनेनोर्वरिताःजीविताः ॥ १०६ ॥ अर्जुनोपिरवेःसुतंकर्णमप्राप्यानभिगम्य अन्यत्रयुध्यन्सन्निति वाक्यशेषः । प्रत्यस्त्रहीनंप्रतिद्वंद्वास्त्ररहितंउद्यतंकर्णेनमोक्तुमुद्य

हन्यमानं दिशो यांतं पांचाल्यैर्भीमसंश्रयात् ॥ दुर्योधनबलं दृष्ट्वा जज्वालाधिरथिः क्रुधा ॥१०२॥ सोऽमोघं रामदैवत्यमस्त्रं भार्गवसंज्ञितम् ॥ सर्वास्त्रनाशकं दिव्यमप्रतिद्वंद्वमाददे ॥ १०३ ॥ तच्च भीमपुरोगेषु सैन्येष्वमुचदुल्बणम् ॥ तदस्त्रं वर्जयामास भीमं रामप्रसादतः ॥ १०४ ॥ अन्ये तु दुद्रुवुः केचिच्छिष्टाः प्रापुर्यमक्षयम् ॥ नत्वस्त्रं द्रावमाणांस्तद्धंति तेन सपार्षताः ॥ १०५ ॥ पांचाला द्रौपदेयाश्च शैनेयाद्याश्च सर्वशः ॥ पलायनेनोर्वरिता अर्जुनोप्यस्त्रमुद्यतम् ॥१०६॥ वीक्ष्य प्रत्यस्त्रहीनं तदप्राप्यैव रवेः सुतम् ॥ वासुदेवमिदं प्राह वर्जयित्वैव सूतजम् ॥१०७॥ अन्यत्र यामि नैवास्मादस्त्राज्जीवनमन्यथा ॥ इत्यूचिवांसं पार्थं तं कृष्णोऽप्राप्यैव सूतजम् ॥ अन्येनैव पथा भीमं प्रापयामास विश्वकृत् ॥ १०८ ॥ तत्रार्जुनोवदद्भीमं याहि द्रष्टुं युधिष्ठिरम् ॥ १०९ ॥ प्रवृत्तिं विद्धि भूपस्य मां तु संशप्तका युधे ॥ आह्वयंति हतोच्छेषास्तानहं यामि तद्युधे ॥ ११० ॥ इत्यूचिवांसं तमुवाच भीमो जानन्स्वबाहोर्बलमप्रमेयम् ॥ संशप्तकान्सूतजं कौरवांश्च योत्स्येहमेकस्त्वमुपैहि भूपम् ॥ १११ ॥ ॥ ॥

तं तदस्त्रंभार्गवास्त्रंवीक्ष्य । वासुदेवंप्रतिइदंवक्ष्यमाणंप्राह । किमिति । सूतजंवर्जयित्वाविहाय ॥ १०७ ॥ अन्यत्रयामिगच्छेयम् । अन्यथाअन्यत्रगमनाभावेसति । अस्मादस्त्रान्नैवजीवनं । अप्राप्यानभिगम्य अन्येनैवपथामार्गेणभीमंप्रापयामास । विश्वकृदितिहेतुगर्भविशेषणं । विश्वकर्तृत्वात्सर्वकार्यकरणसामर्थ्यवत्वात् ॥ १०८॥ १०९॥ भूपस्य प्रवृत्तिंवार्तांविद्धिजानीहि । हतोच्छेषाःहतावशिष्टाःसंशप्तकाःमांयुधेयुद्धार्थं आह्वयंति तत्तस्मात्अहंतान्युधेयुद्धार्थंयामि॥११०॥त्वमर्जुनंत्वंभूपंउपैहिगच्छ ॥१११॥

अहंरणंत्यक्त्वाइतोरणमंडलात्नव्रजेयम् । कश्चनपुरुषःमांयुद्धभीतंनवदेत् । अधिकेष्टंशेषादिभ्योधिकप्रियं भीमंप्रशशंस ॥ ११२ ॥ आशशंस अर्जुनमितिशेषः॥ ११३॥ अभिवाद्यपार्थेनहनिष्यामीत्युक्तः सराजाक्रुधाकोपेन भृशंविनिंद्यबीभत्सुमाह । किमिति । कृष्णायगांडीवदेहि । सकृष्णःराधायाःपुत्रंकर्णम् ॥ ११४ ॥ अथवात्वयिनिवृत्तेसतियुद्धादितिशेषः । भीमःएनंकर्णंपातयेत् त्वंतुकुंत्यावृथाव्यर्थंसूतःप्रसूतः । वृथेत्युक्तंविवृणोति । क्लीबइति । क्लीबःनपुंसकःमिथ्याप्रतिश्रवःमिथ्याप्रतिज्ञः ॥ ११५ ॥ अहंसूतपुत्रेणक्लिष्टःक्लेशितः । मारुतेर्भीमस्यतेजसासामर्थ्येन जीवामीत्यग्रजेनोक्तः पार्थःउत्तमंअसिंखड्गं उद्बवर्हसंचकर्षेत्यर्थः । कोशादितिशेषः ॥ ११६ ॥ सर्ववित्वासुदेवःएतत्विकोशखड्गधारणंकिमर्थमितिइदंवाक्यमाह ॥ ११७ ॥ तंकृष्णंप्रत्याह । किमिति । यःपुमान्गांडीवंदातुंवदेत् । मामितिशेषः । तद्वधःतस्यपुरुषस्यवधःमयाप्रति

त्यक्त्वा रणं नाहमितो व्रजेयं न मां वदेत्कश्चन युद्धभीतम् ॥ इति ब्रुवाणं तमनंतशक्तिः प्रीतः कृष्णः प्रशशंसाधिकेष्टम् ॥ ११२ ॥ ययौ युधिष्ठिरं द्रष्टुं शिबिरं सार्जुनो हरिः ॥ दृष्ट्वा तौ नृपतिः कर्णं हतं मत्वा शशंस ह ॥ ११३ ॥ अभिवाद्य हनिष्यामीत्युक्तः पार्थेन स क्रुधा ॥ भृशं विनिंद्य बीभत्सुमाह कृष्णाय गांडिवम् ॥ देहि पुत्रं स राधाया हनिष्यति न संशयः ॥ ११४ ॥ अथवा भीम एवैनं निवृत्ते त्वयि पातयेत् ॥ त्वं तु कुंत्या वृथा सूतः क्लीबो मिथ्याप्रतिश्रवः ॥ ११५ ॥ अहं तु सूतपुत्रेण क्लिष्टो मारुतितेजसा ॥ जीवामीत्यग्रजेनोक्त उद्बवर्हासिमुत्तमम् ॥ ११६ ॥ वासुदेवस्तमाहेदं किमेतदिति सर्ववित् ॥ ११७ ॥ तमाह गांडिवं दातुं यो वदेत्तद्वधो मया ॥ प्रतिज्ञातस्ततो हन्मि नृपमित्याह तं हरिः ॥ ११८ ॥ सत्यस्य वचनं श्रेयः सत्यज्ञानं तु दुष्करम् ॥ यत्सतां हितमत्यंतं तत्सत्यमिति निश्चयः ॥ ११९ ॥ धर्मस्य वचनं श्रेयो धर्मज्ञानं तु दुष्करम् ॥ यः सतां धारको नित्यं स धर्म इति निश्चयः ॥ १२० ॥

ज्ञातः । ततःकारणात् नृपंहन्मीत्याहेतिसंबंधः । हरिःतंपार्थमाह ॥ ११८ ॥ किमिति । सत्यस्यवचनंश्रेयःपुण्यकरम् । सत्यज्ञानंईदृशंसत्यमितियज्ज्ञानंतद्दुष्करंकर्तुमशक्यंज्ञातुमशक्यमितियावत् । सत्यंकीदृशमित्यतआह । यदिति । यद्वाक्यंसत्यंवाअसत्यंवा सतांयदिहितरूपंतदेवसत्यमितिभावः ॥ ११९ ॥ धर्मस्यवचनंधर्मःकर्तव्यइत्युक्तिःश्रेयःपुण्यकरम् । धर्मज्ञानंईदृशोधर्मइतियज्ज्ञानंतत्दुष्करं ज्ञातुमशक्यमितिभावः । ननु निषिद्धत्यागोदानादिकंवाधर्मइतिप्रसिद्धत्वात्धर्मज्ञानंकथंदुष्करमित्यतआह । यइति । यःसतांधारकःपोषकःहितरूपइत्यर्थः । प्रतीयमानः धर्मःसतांधारकश्चेत्तर्हि सएवधर्मइतिभावः ॥ १२० ॥ ॥ ॥ ॥

ननुप्रतीयमानंयत्सत्यंतदेवसत्यंकिंनस्यादित्यतआह । कौशिकाख्यइति । तस्करेषुआगतेषुसत्स्विति शेषः । क्वचित्लीनंगूढंग्रामजनंअभिधायउक्त्वातस्करेष्वितिसंबंधः । निरयप्रत्यपद्यतप्राप । ग्रामजनाःकुत्रतिष्ठंतीतितस्करैःप्रपृष्टःकौशिकाख्योद्विजः सत्यत्यागभयादत्रतिष्ठंतीतिलीनान्ग्रामजनानुक्त्वा निरयंप्रापेतिभावः ॥ १२१ ॥ तथा धर्मविषयेप्याह । कश्चिदिति । मातापितृनिमित्ततःमातापित्रोर्निमित्तेनभक्षार्थम् । ननु फलमूलादिनाक्षुत्परिहारसंभवात्कथंतन्मृगवधोधर्मोभूदित्यतआह । असुरइति यतःअसौमृगोऽसुरःलोकस्यउपद्रवायतपश्चरति । अतएवदुर्मति.दुष्टहननस्यलोकोपकारकत्वात् धर्मोभूदितिभावः ॥ १२२ ॥ तस्मादित्युपसंहारः तस्मात्कारणात् सद्धा रकःसतांधारकःपोषकःउपकारकइतियावत् । धर्मइतिसद्धा कोधर्मइति वि नश्चयंकृत्वानृपंमाजहि । त्वंवाचंहन्मीतिप्रतिज्ञारूपांवाचंसत्यांकुरु । हननंविना वाक्कथंस

कौशिकाख्यो ब्राह्मणो हि लीनं ग्रामजनं क्वचित् ॥ तस्करेष्वभिधायैव निरयं प्रत्यपद्यत ॥ १२१ ॥ कश्चिद्व्या धो मृगं हत्वा मातापितृनिमित्ततः ॥ भक्षार्थमभ्यगात्स्वर्गमसुरोसौ मृगो यतः ॥ १२२ ॥ उपद्रवाय लोकस्य तप श्चरति दुर्मतिः ॥ तस्मात्सद्धारको धर्म इति कृत्वा विनिश्चयम् ॥ मा नृपं जहि सत्यं त्वं कुरु वाचं तिरस्कुरु ॥१२३॥ इत्युक्तो बहुधानिंदत्क्रोधाद्देवार्जुनो नृपम् ॥ त्वं नृशंसः कृतघ्नश्च निर्वीर्यः परुषंवदः ॥ १२४ ॥ त्वत्तः सुखं नास्ति कश्चिन्न मां गर्हितुमर्हसि ॥ भीमो मां गर्हितुं योग्यो यो ह्यस्माकं सदा गतिः ॥ १२५ ॥ यो युध्यते सर्ववी रैरद्यापि त्वं तु निंदकः ॥ इत्याद्युक्त्वात्मनाशाय विकोशं कृतवानसिम् ॥ १२६ ॥ पुनः कृष्णेन पृष्टः स स्वाभि प्रायमुवाच तम् ॥ तच्छ्रुत्वा गर्हयित्वैनं पुनराह जनार्दनः ॥ १२७ ॥ मतिपूर्वं देहहानात्पापं महदवाप्यते ॥ धर्मार्थ काममोक्षाणां साधनं देहतोस्ति यत् ॥ १२८ ॥

॥ त्यास्यादित्यतआह । तिरस्कुर्विति । तिरस्कुरुनृपमितिशेषः । स्वोत्तमतिरस्कारःतद्वधएवे तिभावः ॥ १२३ ॥ बहुधाबहुप्रकारेणअनिंदत् बहुधेत्युक्तंविशदयति । त्वमित्यादिना । नृशंसःहिंसारतःक्रूरोवा कृतघ्नःकृतं हंतीतिविग्रहः । कृतोपकारनाशकः निर्वी र्यःपौरुषरहितः । परुषंवद निष्ठुरवादी ॥ १२४ ॥ त्वत्तःकिंचित्सुखंनास्तित्वदीयानामितिशेषः । एतादृशस्त्वमितिवाक्यशेषः । मांगर्हितुंभर्त्सयितुंनार्हसि । गतिराश्रयः ॥ १२५ ॥ योभीमःअद्यापिइदानीमपि युध्यतेत्वंतुकेवलंनिंदकः । आत्मनाशायस्ववधार्थं विकोशंविगतखड्गावरणं असिंचकृतवान्चकार ॥ १२६ ॥ पुनःकृष्णेन विकोशखड्गधारणंकिमर्थमितिपृष्टःसोर्जुनःस्वाभिप्रायंअग्रजनिंदायाःकृतत्वात्स्ववधरूपप्रायश्चित्तंकरिष्यामीत्येवंरूपंस्वाभिप्रायमुवाच । एनंपार्थम् ॥ १२७ ॥ मतिपू

वधपूर्वकं देहहानाद्देहत्यागात् देहनाशादितिवापाठः । महत्पापमवाप्यते देहतःदेहेनधर्मादीनांसाधनंसंपादनंअस्ति यद्यस्मात्तस्मादित्यर्थः ॥ १२८ ॥ अतःकारणाद्देहं मात्यज । तर्हिपापहानिःकथंस्यादित्यतआह । कुर्विति । स्ववधरतिनिधिभूतंआत्मनःस्वस्यप्रशंसनंस्तोत्रंतुविशेषेणकुरु । त्वंकारःत्वंकिमित्यादिरूपंनिंदनं गुरूणांचोत्तमानांवधः । स्वस्यप्रशंसास्तुतिरेवआत्मनश्चस्वस्यवधः ॥ १२९ ॥ इत्युक्तःसोर्जुनःअहंकाराद्गर्वात् अलंअतिशयेनस्वगुणान्स्वस्यवीर्यप्रागल्भ्यादिगुणान्शशंस ॥१३०॥ गुरुनिंदाआत्मपूजास्वप्रशंसनं यद्यपिधर्मायकचित्नभवेत्तथापि जनार्दनःअर्जुनस्यतद्धार्दं नृपवधप्रतिज्ञापालनरूपधर्मः । स्ववधःस्वोत्तमनिंदाजन्यदोषनाशकृदितिएवंरूपंअभिप्रायंप्रकाश्य ॥ १३१ ॥ तस्यपार्थस्यलज्जांममधर्मज्ञानंनास्तीत्येवंरूपांलज्जांसमुत्पाद्य तंमदंअहंसर्वधर्मविदितियोहंकारःतंनाशयित्वाअहंपरंमुख्यंधर्मनवेद

अतो मा त्यज देहं तु कुरु चात्मप्रशंसनम् ॥ वधो गुरूणां त्वंकारः स्वप्रशंसैव चात्मनः ॥ १२९ ॥ इत्युक्तः स त्वहंकाराच्छशंस स्वगुणानलम् ॥ १३० ॥ गुरुनिंदात्मपूजा च न धर्माय भवेत्क्वचित् ॥ तथाप्यर्जुनहार्दं तत्संप्रकाश्य जनार्दनः ॥ १३१ ॥ तस्य लज्जां समुत्पाद्य नाशयित्वा च तं मदम् ॥ नाहं वेद परं धर्मं कृष्ण एव गतिर्मम॥१३२॥ इति भाव समुत्पाद्य दोषान्नाशयितुं हरिः ॥ कारयामास तत्सर्वमर्जुनेन जगत्पतिः ॥ १३३ ॥ तत एतदविज्ञाना त्कुपितो नृपतिर्भृशम् ॥ आहास्तु राजा भीमस्त्वं युवा मां जहि च स्वयम् ॥ वनं वा विफलो यामीत्युक्त्वोत्तस्थौ स्वतल्पतः ॥ १३४ ॥ तं वासुदेवः प्रतिगृह्य हेतुमुक्त्वा सर्वं शमयामास नेता ॥ पार्थश्च भूपस्य पपात पादयोः क्षमापयन्सोपि सुप्रीतिमाप ॥ १३५ ॥ तौ भ्रातरौ वासुदेवप्रसादान्महापदो मुक्तिमाप्यातिहृष्टौ ॥ भक्त्या समस्ताधिपतिं शशंसतुस्त्वया समः को नु हरे हितो नः ॥ १३६ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥

नवेद्मि । कृष्णएवममगतिःज्ञानप्रदइत्यर्थः । आश्रयोवा ॥ १३२ ॥ जगत्पतिर्हरिःदोषान्नाशयितुमेव इतिभावंबुद्धिंसमुत्पाद्य । अर्जुनेनतत्सर्वंगुरुनिंदात्मप्रशंसनादिकं कारयामास ॥ १३३ ॥ ततःएतत्कृष्णकारितंकर्मअविज्ञानात् अपरिज्ञानात् । कुपितोनृपतिराह । किमिति । भीमोराजास्तु त्वंयुवराजोभव मांजहि विफलःअप्रयोजकःस्वयंवनंवायामि । इत्युक्त्वास्वतल्पात्स्वशयनादुत्तस्थौ गंतुमितिशेषः ॥ १३४ ॥ नेता नियंता वासुदेवःतंराजानम् ॥ १३५ ॥ तौपार्थराजानौमहापदःमरणात्मुक्तिंवियोगंनःहितःकोनुनकोपीत्यर्थः ॥ १३६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ततःतेनराज्ञापरिरंभितःआलिंगितःआशीर्भिःअभिनंदितःतोषितोबीभत्सुः अग्रजंप्रणम्ययुधेयुद्धार्थंप्रययौ ॥ १३७ ॥ तदाहरिःकर्णजयेजयविषयेशंकितं शंकायुक्तंस्विन्न गात्रंस्वेदयुक्तदेहंतंपार्थंपूर्वकर्माणि निवातकवचवधादीनिसंकीर्त्यउदीर्य नरावेशंविशेषतःअधिकंव्यंजयामास। अभिव्यक्तिंचकार । तेनव्यक्तनरांशेनतस्यार्जुनस्यसुस्थिरंअ तिस्थिरंधैर्यंधृतःआसीत् ॥१३८॥ तदाभीमःस्वयंत्रात्वसारथिनावार्तांयुद्धगोष्ठींकुर्वन् रममाणएवक्रीडमानःसन्। रममाणइत्यनेनभयरहितत्वंसूचितम्। शत्रुबलंद्रावयामास। आजौयुद्धेरणाययुद्धार्थमभिमुखान्वीरान्जघान ॥ १३९ ॥ उपेतःयुक्तःतंभीमम् ॥ १४० ॥ तंनजघ्निवान् नजघान। कथंभूतंतं स्वेनअक्षगोष्ठ्याद्यूतप्रसंगेनकल्पितंसह

ततः प्रणम्य बीभत्सुरग्रजं परिरंभितः ॥ तेनाभिनंदितः प्रीत्या चाशीर्भिः प्रययौ युधे ॥ १३७ ॥ तं शंकितं कर्णज ये स्विन्नगात्रं हरिस्तदा ॥ संकीर्त्य पूर्वकर्माणि नरावेशं विशेषतः ॥ व्यंजयामास धैर्यं च तस्यासीत्तेन सुस्थिरम् ॥ १३८ ॥ भीमस्तदा शत्रुबलं समस्तं विद्रावयामास जघान चाजौ ॥ वीरान् रणायाभिमुखान्स्वयंत्रा कुर्वन्स वार्तां रममाण एव ॥ १३९ ॥ तदा स दत्तं शकुनिः ससैन्यो दुर्योधनस्यावरजैरुपेतः ॥ तं भीमसेनो विरथं निरा युधं विधाय बाणैर्भुवि तं न्यपातयत् ॥ १४० ॥ न जघ्निवांस्तं सहदेवभागं प्रकल्पितं स्वेन तदाक्षगोष्ठ्या ॥ तं मूर्छि तं श्वासमात्रावशिष्टं दुर्योधनः स्वरथेनापनिन्ये ॥ १४१ ॥ दुर्योधनस्यावरजा दशात्र प्रदुद्रुवुर्भीमसेनं विहाय ॥ ततोर्जुनं वासुदेवं च दृष्ट्वा प्रीतः श्रुत्वा धर्मराजप्रवृत्तिम् ॥ १४२ ॥ पुनश्च निघ्नंतमरिप्रवीरान् विद्रावयंतं च नि जां वरूथिनीम् ॥ ससार दुःशासन आत्तधन्वा भीमोपि तं सिंह इवाभिपेदिवान् ॥ १४३ ॥ ॥ ९ ॥

देवभागंसहदेवोहनिष्यतीतिस्वोक्तत्वान्नजघ्निवानितिभावः । तंशकुनिंस्वरथेनअपनिन्येयुद्धादन्यत्रनीतवान् ॥ १४१॥ अत्रयुद्धेदशअवरजाः । दृष्ट्वाप्रीतोभीमःधर्मराजस्यप्र वृत्तिं क्षेमवार्तांश्रुत्वा ॥ १४२ ॥ पुनश्चअरिप्रवीरान्शत्रुभटान् निघ्नंतंवरूथिनींसेनां विद्रावयंतंभीमम्। भीमोपितंदुःशासनंसिंहइव सिंहोमृगंयथातथा अभिपेदिवान्। अभि ससार ॥ १४३ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

रूक्षवाचः क्रूरवचांसि मुहुः पुनः पुनः अर्पयंतं श्रावयंतमित्यर्थः । दुःशासनं गदाप्रहारतः गदाभिघातेन वक्षो विदारयामास ॥ १४४ ॥ पदा पादेन कंठं आक्रम्य अस्य दुःशासनस्य उदरे निविश्य उपविश्य आत्तः प्राप्तः रोषः कोपो येन स तथा सन् । मुखं पश्यन् आकाशनिभं आकाशसदृशं आकाशवन्नीलवर्णं निर्मलमित्यर्थः महासिं महाखड्गं विकोशं विगतावरणं विधाय । अस्य रिपोः उरसि वक्षसि संचखान विदारयामास ॥ १४५ ॥ तृषितः भीमः अस्य दुःशासनस्य वक्षसि उरु विस्तीर्णं सत्तटाकं कृत्वा तच्छोणितांभः दुःशासनरक्ताख्यजलं अमृतोपमं अमृतमिव कृत्वा निकामं यथेष्टं पपौ पपाविव । भ्रमदक्षं भ्रमल्लोचनं एनं दुःशासनं पुरा द्यूतावसरे कृतानि द्रौपद्याः केशांबरवस्त्राहरणगत्या अनुकरणादीनि संस्मारयामास ॥ १४६ ॥ पुरा समर्पितान् अस्य दुःशासनस्य वाक्सायकान् वागाख्यबाणान् भृशं पुनः पुनः संस्मारयामास । अपेयं नरशोणितं कथं पपावित्यत आह । दंतांतरमिति । पुरु

तं रूक्षवाचो मुहुरर्पयंतं विधाय भीमो विरथं क्षणेन ॥ प्रगृह्य भूमौ विनिपात्य वक्षो विदारयामास गदाप्रहारतः ॥ १४४ ॥ आक्रम्य कंठं च पदोदरेस्य निविश्य पश्यन्मुखमात्तरोषः ॥ विकोशमाकाशनिभं विधाय महासिमस्योरसि संचखान ॥ १४५ ॥ कृत्वास्य वक्षस्युरुसत्तटाकं पपौ निकामं तृषितोमृतोपमम् ॥ तच्छोणितांभो भ्रमदक्षमेनं संस्मारयामास पुराकृतानि ॥ १४६ ॥ वाक्सायकांश्चास्य पुरा समर्पितान् संस्मारयामास पुनःपुनर्भृशम् ॥ दंतांतरं न प्रविवेश तस्य रक्तं त्वपेयं पुरुषस्य जानतः ॥ १४७ ॥ तथापि शत्रुप्रतिभीषणाय पपाविवास्वाद्य पुनःपुनर्भृशम् ॥ स्मरन्नृसिंहं भगवंतमीश्वरं स मन्युसूक्तं च ददर्श भक्त्या ॥ १४८ ॥ यस्ते मन्यो इत्यतो नारसिंहं सोमं तस्मै चार्पयच्छोणिताख्यम् ॥ युद्धाख्ययज्ञे सोमबुद्ध्यारिवक्ष इहेतिसाम्ना गदया विभिंदन् ॥ १४९ ॥ ॥ ७ ॥

षस्य रक्तं अपेयमिति हि । धर्मशास्त्रप्रसिद्धमिति जानन् अस्तस्य भीमस्य दंतांतरं दंतानामंतर्भागं न प्रविवेश ॥ १४७ ॥ तथापि शत्रुप्रतिभीषणाय पुनः पुनः भृशं आस्वाद्य पपाविवेत्यर्थः । स भीमः ईश्वरं भगवंतं नृसिंहं मन्युसूक्तप्रतिपाद्यं नृसिंहं भक्त्या स्मरन् यस्ते मन्यो इति । यस्ते मन्यो विधद्वज्रसायकेत्यादिकं मन्युसूक्तं मन्युनाम्नो नृसिंहस्य प्रतिपादकं सूक्तं ददर्श ॥ १४८ ॥ अतः सूक्तदर्शनानंतरं युद्धाख्ययज्ञे सोमबुद्ध्या सोमवल्लीं भिद्यामीति बुद्ध्या इहेति साम्ना साममंत्रेण अरिवक्षः गदया विभिंदन् नारसिंहं एवं शोणिताख्य सोमं तस्मै मन्युनाम्ने नृसिंहाय अर्पयत् समर्पयामास ॥ १४९ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

पुरुषप्रवीरो भीमः प्रतिज्ञां दुःशासनस्यास्य विदार्य वक्षः पिबामि रक्तं जगतः समक्षमित्येवंरूपां प्रतिज्ञां लोकमध्ये सत्यां विधाय वाचमुवाच । किमिति । याः सपतयः पतिभिः सहिताः पूर्वमिति शेषः ताः धार्तराष्ट्रपत्न्यः अपतयः पतिहीनाः जाताः अभवन् इदानीमिति शेषः । या द्रौपदी अपतिर्भासि कल्याणीत्युक्त्या अपतिरास । द्यूतसमय इति शेषः । सा द्रौपदी सपतिर्जाता अद्येति शेषः ॥ १५० ॥ पूर्वं ये धार्तराष्ट्राः तिलाः वयं वीर्यवंत इति मानिनः ते इदानीं वै षंढतिलाः निर्वीर्या बभूवुः । येपांडवाः पूर्वं षंढतिला इत्युक्ताः ते अषंढतिलाः वै निश्चयेन बभूवुः । हे वीरा इति वाक्यशेषः । परमस्य श्रीहरेः चित्रां शक्तिं पश्यंतु । इह वीरेषु मध्ये मया गृहीतमेनं दुःशासनं कश्चित्पुमान् पुंस्त्ववानित्यर्थः यदि चेत्तर्हि स्व

उवाच वाचं पुरुषप्रवीरः सत्यां प्रतिज्ञां लोकमध्ये विधाय ॥ याः सपतयस्ता अपतयो हि जाता या साऽपतिः सा सपतिश्च जाता ॥ १५० ॥ पश्यंतु चित्रां परमस्य शक्तिं ये वै तिलाः षंढतिला बभूवुः ॥ एनं गृहीतं हि मया यदीह कश्चित्पुमान्मोचयतु स्ववीर्यात् ॥ १५१ ॥ इति ब्रुवाणः पुनरेव रक्तं पपौ सुधां देववरो यथा दिवि ॥ पुनश्च सप्राणममुं विसृज्य नदन्ननर्तारिबले निरायुधः ॥ १५२ ॥ प्रत्यनृत्यन्पुरा येऽस्मान्पुनर्गौरिति गौरिति ॥ तान्वयं प्रति नृत्यामो पुनर्गौरिति गौरिति ॥ १५३॥ इति ब्रुवन्नृत्यमानोरिमध्ये आस्फोटयञ्छत्रुगणानजोहवीत् ॥ शशाक च द्रष्टुममुं न कश्चिद्वैकर्तनद्रौणिसुयोधनादिषु॥१५४॥भयात्तु कर्णस्य पपात कार्मुकं न्यमीलयामास तदाक्षिणी च॥संबोधितो मद्रराजेन युद्धे स्थितः कथंचित्स तु पार्थभार्गः ॥ १५५ ॥ द्रौणिर्विहायैनमपाजगाम दूरं तदा भीमसेनो जगाद ॥ पीतः सोमो युद्धयज्ञे मयाद्य वध्यः पशुर्मे हरये सुयोधनः ॥ १५६ ॥

वीर्यात् स्वसामर्थ्यात् । नमच्छरणं प्रत्येतिभावः । मोचयतु ॥ १५१ ॥ पपौ पपाविव । दिवि स्वर्गे देववरः इंद्रः सुधां यथा तद्वदिति संबंधः । पुनः सप्राणं प्राणैः सह वर्तमानममुं दुःशासनं विसृज्य । नदन् सिंहनादं कुर्वन् ॥१५२॥ पुरा ये धार्तराष्ट्राः अस्मान्प्रति पुनर्गौरिति गौरिति अनृत्यन् वयं तान् प्रति पुनर्गौरिति गौरिति नृत्यामः ॥१५३॥ आस्फोटयन् आस्फालयन् ऊरुमिति शेषः । शत्रुगणान् अजोहवीत् समाह्वयत् योद्धुमिति शेषः । अमुं भीमम् ॥ १५४ ॥ पार्थभार्गः हननार्थमिति भावः । मद्रराजेन संबोधितः बोधं प्रापितः सकर्णः कथंचित्प्रयासेन युद्धे स्थितः स्थिरोभूदित्यर्थः ॥ १५५ ॥ एनं भीमं दूरमपाजगाम अपससार । हरये हरिप्रीत्यै सुयोधनः पशुर्मे मया वध्यः वधार्हः ॥ १५६ ॥

मृतशत्रुंदुःशासनंउत्सृज्य दूरेक्षिप्त्वादुर्योधनंप्रति ॥ १५७ ॥ बलद्वयंकुरुपांडवसैन्यमित्यर्थः । आयोधनंरणमंडलंशून्यंजनरहितम् । मुहूर्तंमुहूर्तपर्यंतं व्याघ्रपदेनव्याघ्रपदन्यासगत्याभुविहस्तौनिधायपदद्वयेन ननर्तेतिभावः ॥ १५८ ॥ आजिमध्येरणमध्येगोवत्संकल्प्यशार्दूलवत्तच्चरितंभीमकृतंकर्मेत्यर्थः निशाम्यदृष्ट्वा । एनंभीमम् ॥ १५९ ॥ रंगःयुद्धस्थानंतत्र तदामुहूर्तमात्रात्परतइतिशेषः । ज्ञानबलयोःसमाहारःसत्वं उदारमुत्कृष्टंसत्वंयस्यसतथा । तंभीमंअवीवृषन् भृशंववृषुः ॥ १६० ॥ निकृत्तानि शीर्षाणियेषांतेतथातान् यमायअनयत् प्रापयत् ॥ १६१ अनन्यौपयिकानि अन्यंउपयंतितानिअन्यौपयिकानि नअन्यौपयिकानिअनन्यौपयिकानि भीमादन्यैरसा

इति ब्रुवन्मृतमुत्सृज्य शत्रुं दुर्योधनं चाशु रुषाभिदुद्रुवे ॥ आयांतमीक्ष्यैव तमुग्रपौरुषं दुद्राव भीतः स सुयोधनो भृशम् ॥ १५७ ॥ बलद्वयं चापययौ विहाय भयाद्भीमं कृष्णपार्थौ विनैव ॥ आयोधनं शून्यमभून्मुहूर्तं ननर्त भीमो व्याघ्रपदेन हर्षात् ॥ १५८ ॥ संकल्प्य शत्रून् गोवदेवाजिमध्ये शार्दूलवत्तच्चरितं निशाम्य ॥ जहास कृष्णश्च धनंजयश्च शशंसतुश्चैनमतिप्रहृष्टौ ॥ १५९ ॥ यदा स रंगः पवमानसूनुना शून्यः कृतस्तत्र मुहूर्तमात्रात् ॥ दुर्योधनस्यावरजाः शरौघैरवीवृषन् भीममुदारसत्वम् ॥ १६० ॥ तान्मारुतिर्बाणवरैर्निकृत्तशीर्षान्यमायानयदाशु वीरः ॥ तस्मिन् दिने विंशतिर्धार्तराष्ट्रा हतास्तदन्ये समरात्प्रदुद्रुवुः ॥ १६१ ॥ कर्माण्यनन्यौपयिकानि भीमे कुर्वत्येवं भीतभीतेऽरिसंघे ॥ निमीलिताक्षे च भयेन कर्णे कर्णात्मजो नकुलं प्रत्यधावत् ॥ १६२ ॥ माद्रीसुतो वृषसेनं शरौघैरवारयत्तं विरथं चकार ॥ कर्णात्मजः सोप्यसिचर्मपाणिस्तस्यानुगांस्त्रिसहस्रं जघान ॥ १६३ ॥ कर्णात्मजस्तस्य संछिद्य चर्म भीमार्जुनादीनपि बाणसंघैः ॥ अवीवृषत्तस्य शरेण पार्थो ग्रीवाबाहूरून्युगपच्चकर्त ॥ १६४ ॥

ध्यानीत्यर्थः कर्माणिकुर्वतिसति अरिसंघेभीतभीतेभीतादपिभीतःतस्मिन्सति । भीमभीतइतिवापाठः । भयेनकर्णेनिमीलिताक्षेसति कर्णात्मजःवृषसेनःनकुलंप्रत्यधावत् । अभिदुद्राव ॥ १६२ ॥ अवारयत् निवारयामास । कर्णात्मजःतंनकुलम् । चर्मासिभृत् सोपिनकुलःतस्यवृषसेनस्याऽनुगान् भटान्त्रिसहस्रंत्रिसहस्रसंख्याकान्जघान ॥ १६३ ॥ तस्यनकुलस्यचर्मसंछिद्य भीमादीनपि अवीवृषत् ववर्ष । तस्यवृषसेनस्यग्रीवाचबाहूचऊरूच ग्रीवाबाहूरवःतान्युगपत्सकृदेव ॥ १६४ ॥

द्वैरथिकोयस्मिन्नत् द्विरथं तच्चनत्युद्धंचतथा । ततःस्वार्थेअण् द्वंद्वयुद्धमित्यर्थः । सर्वास्त्रविदांसर्वास्त्रज्ञानांमध्येवरयोः ॥ १६५ ॥ तत्रयुद्धेतयोःपार्थकर्णयोःपक्षग्रहाःसु राश्चासुराश्च आसुरितिशेषः । पार्थोस्मत्पक्षइतिसुराःकृतांगीकाराइत्यर्थः । कर्णोस्मत्पक्षइत्यसुराःकृतांगीकाराः । अन्येजीवाःभूतपिशाचाद्याःगगनमाकाशंसमाश्रिताः तयोः कृतेपार्थकर्णार्थंमहान्विवादःअस्मत्पक्षीजेष्यत्यस्मत्पक्षीजेष्यतीत्येवंरूपोविवादोप्यभवत् । तदाविवादसमयेअवदत् ॥१६६॥ किमिति । समाश्रयौआश्रयभूतौ द्वौ अर्जुनक र्णौतत्प्रियौतयोर्भीमदुर्योधनयोःप्रियौयेनकारणेन तेनकारणेनकर्णपार्थौप्राणोपमौच असुराणांदेवानामितिशेषः । एतत्कृतेएतयोःपार्थकर्णयोरर्थेतेसुरासुराः ॥ १६७॥ यद्ययु

एकेन बाणेन सुते हते स्वे वैकर्तनो वासविमभ्यधावत् ॥ तयोरभूद्द्वैरथयुद्धमद्भुतं सर्वास्त्रविद्वरयोरुग्ररूपम् ॥१६५॥ पक्षग्रहास्तत्र सुरासुरास्तयोरन्ये च जीवा गगनं समाश्रिताः ॥ महान्विवादोप्यभवत्तयोः कृते तदा गिरीशोवदद ब्जयोनिम् ॥ १६६ ॥ सुरासुराणां भीमसुयोधनौ द्वौ समाश्रयौ तत्प्रियौ कर्णपार्थौ ॥ प्राणोपमौ तेन चैतत्कृ ते ते सुरासुराः कर्तुमिच्छंति युद्धम् ॥ १६७ ॥ तदा विनाशो जगतां महान्स्यात्तेनानयोः सममेवास्तु युद्धम् ॥ इ तीरिते वासवः पद्मयोनिं जगाद कृष्णो यत्र जयश्च तत्र ॥ १६८ ॥ कामो न कृष्णस्य मृषा भवेद्धि कामोस्य पा र्थस्य जयं प्रदातुम् ॥ इत्यूचिवान्वासवः फल्गुनस्य जयोस्तु कर्णस्य वधस्तथेति ॥ उक्त्वा नमत्कंजभवं तथेति प्राहासुरान्देवताश्चाबभाषे ॥ १६९ ॥ न कर्णार्जुनयोरर्थे विरोधं कुरुत क्वचित् ॥ भीमदुर्योधनार्थे वा पश्यंत्वेव च संगरम् ॥ इत्युक्ते शांतिमापन्ना ददृशुः संगरं तयोः ॥ १७० ॥ ववर्षतुस्तौ च महास्त्रशस्त्रैर्भीमो रथस्थोवरजं जुगोप ॥ शैनेयपांचालमुखाश्च पार्थमावार्य तस्थुः प्रसभं नदंतः ॥ १७१ ॥ ॥ ॥

द्वंस्यात्तदातेनकारणेन अनयोःपार्थकर्णयोःयुद्धंसममेवास्तु । वासवःइंद्रःतत्रजयश्चस्यादित्यर्थः ॥ १६८ ॥ कामःवांछासंकल्पइतियावत् । मृषानभवेत् हिश्रुत्यादौप्रसि द्धिः । पार्थस्यजयंप्रदातुं अस्यकृष्णस्यकामोस्तीतिशेषः । इत्यूचिवान्वासवःफल्गुनस्यजयोस्तु तथाकर्णस्यवधोस्तु इतिउक्त्वाकंजभवं ब्रह्माणंअनमत् ननाम । तथेतित थास्त्वितिप्राह । असुरान्देवताश्चाबभाषे । ब्रह्मेतिशेषः ॥ १६९ ॥ किमिति । कर्णार्जुनयोरर्थे भीमदुर्योधनयोरर्थेवा विरोधंनकुरुत । संगरंरणंपश्यतु । तयोःकर्णपार्थ योः ॥ १७० ॥ प्रकृतमनुसरति । ववर्षतुरिति । भीमः अवरजंपार्थंजुगोपररक्ष । आवार्यपरिवार्यतस्थुः ॥ १७१ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तदायुद्धंआस । तत्रयुद्धेसकर्णःअर्जुनंबाणवरैःसम्यक्अर्जुनापेक्षयाऽधिकं अर्दयामास । तदाभीमसेनःविशेषयन्कर्णतोपिविशेषंकुर्वन्रणेनदन् सिंहनादंकुर्वन् समात्तरोष
रात्तकोपःसन् गदांसमादायजगाद । पार्थमितिशेषः ॥ १७२ ॥ किमिति । अहंएनंकर्णंगदया पोथयामिप्रहरामि । त्वंवासमुपात्तवीर्यः प्राप्तवीर्यःसन् इमंकर्णंजहि । कृ
ष्णोपिभूयएवनरावेशंव्यंजयन्अभिव्यक्तंकुर्वन् तंकर्णंहंतुंसमर्थोसीत्याद्युक्तैर्बोधयामासेतिभावः । तर्शंकितंकर्णजयेच्छिन्नगात्रंहरिस्तदा संकीर्त्यपूर्वकर्माणिनरावेशंविशेष
तः व्यंजयामासधैर्यमिति पूर्वमुक्तत्वाद्भूयइत्युक्तम् ॥ १७३ ॥ सन्नद्धवीर्यःसंनद्धवीर्यःसन् साकंएकदैवबाणैर्विरथांश्चकार । अरिहा अरीन्हंतीतिअरिहाशत्रुघ्नःपार्थःशोभ

दुर्योधनद्रौणिमुखाश्च कर्णं ररक्षुरावार्य तदास युद्धम् ॥ तत्रार्जुनं बाणगणैः स कर्णः संमर्दयामास विशेषयन् र
णे ॥ तदा नदन् भीमसेनो जगाद गदां समादाय समात्तरोषः ॥१७२॥ अहं चैनं गदया पोथयामि त्वं वा जहीमं
समुपात्तवीर्यः ॥ कृष्णोपि तं बोधयामास सम्यक् नरावेशं व्यंजयन् भूय एव ॥ १७३॥ सन्नद्धवीर्यः स तदा धनं
जयः सुयोधनद्रौणिकृपान् सभोजान् ॥ साकं च बाणैर्विरथांश्चकार विव्याध तानप्यरिहा सुपुंखैः ॥ १७४ ॥ ते
किंचिद्दूरतस्तस्थुः पश्यंतो युद्धमद्भुतम् ॥ अमानुषं तत्पार्थस्य दृष्ट्वा कर्म गुरोः सुतः ॥ गृहीत्वा पाणिना पाणिं दु
र्योधनमभाषत ॥ १७५ ॥ दृष्टं हि भीमस्य बलं त्वयाद्य तथैव पार्थस्य यथा जिता वयम् ॥ अलं विरोधेन स
मेत्य पांडवैः प्रशाधि राज्यं च मया समेतः ॥ १७६ ॥ धनंजयस्तिष्ठति वारितो मया जनार्दनो नैव विरोधमिच्छ
ति ॥ वृकोदरस्तद्वचने स्थितः सदा युधिष्ठिरः शांतमनास्तथा यमौ ॥१७७॥ हितार्थमेतत्तव वाक्यमीरितं गृहाण
मे नैव भयादुदीरितम् ॥ अहं त्ववध्यो मम चैव मातुलो न शंकितुं मे वचनं त्वमर्हसि ॥१७८॥ ॥७॥ ॥

नानिपुंखानियेषांतैस्तथा तैःशरैःतान् सुयोधनादीन्विव्याध ॥१७४ ॥ तेदुर्योधनाद्याःअमानुषंअलौकिकंतत्कर्मतस्यपार्थस्यकर्म युद्धरूपंदृष्ट्वा पा णनास्वहस्तेनपाणिंदुर्योध
नपाणिम्॥१७५ ॥ यथावयंजिताःपराजिताः विरोधेनअलंपूर्णंविरोधंमाकुर्विंतिभावः पांडवैःसमेत्यमिलित्वा प्रीतिंसंपाद्येतिभावः । मयासमेतःसन् राज्यंप्रशाधिपालय
॥ १७६ ॥ तिष्ठतिरणंहित्वास्थास्यति तस्यकृष्णस्यवचनेस्थितःनिरंतरमित्यर्थः । सदेत्युभयत्रसंबध्यते । यमौतथाशांतमनसौ ॥ १७७ ॥ मेमयातवहितार्थमीरितं एतद्वा
क्यंगृहाणस्वीकुरु । भयात्भीतिभयात् नैवोदीरितंअहंअवध्यःममातुलःकृपश्चावध्यएव । हियस्मात्तस्मान्मेवचनं शंकितुंभयादुदीरितमितिशंकितुंनार्हसि ॥ १७८ ॥

हियस्मात्वपौतत्तस्मादनेन भीमेनसंधिःसंधानमेकथंचिन्नस्यादितिशेषः ॥ १७९ ॥ खंआकाशंनिरंतरंअवकाशरहितम् ॥ १८० ॥ अन्योन्यमृत्यवेपरस्परमरणार्थंएतानि आग्नेयवारुणैंद्रादीनि अस्त्राणिब्रह्मास्त्रमपिउभौतत्ररणेप्रयुज्यप्रयोगंकृत्वा आनदतांजगर्जतुः । उभौपार्थकर्णौअन्योन्यंपरस्परं अस्त्राणांप्रतिघातंपरिहारम ॥ १८१ ॥ वृद्धं एधितंबलंयस्यसनथा । तेनतत्ररणेविरोचनस्यसूर्यस्यात्मजःपुत्रःकर्णःनिराकृतःपराजितःसन् ब्रह्मास्त्रयुक्तंब्रह्मास्त्रेणयुक्तं नागमयंनागात्मकं शरोत्तमं वासवौपार्थेविससर्ज ॥ १८२ ॥ वासुदेवःरथंपार्थरथंआनमय्यनमितंकृत्वाभुवंभित्त्वाअधःकृत्वेत्यर्थः । अर्जुनतःसकाशात् तंनागबाणंमोघंव्यर्थंचकार । तेननागबाणेनसुरेंद्रसूनोःदिव्यंकिरीटं चूर्णीकृतम् । दिवंययाविति क्वचित्पाठः । बाणगतःबाणेविद्यमानोनागःअश्वसेनःदिवंअंतरिक्षंप्रतिययौ ॥ १८३ ॥ वासुदेवेनभुविपंचांगुलं पंचांगुलपरिमाणंरथेनमितेसति कि

इतीरितः प्राह सुयोधनस्तं दुःशासनस्याद्य पपौ हि शोणितम् ॥ शार्दूलचेष्टामकरोच्च भीमो न मे कथंचित्तदनेन संधिः ॥ १७९ ॥ इत्युक्तो द्रौणिरासीत्स तूष्णीं कर्णधनंजयौ ॥ महास्त्रशस्त्रवर्षेण चक्रतुः खं निरंतरम् ॥१८०॥ आग्नेयवारुणैंद्रादीन्येतान्यन्योन्यमृत्यवे ॥ ब्रह्मास्त्रमप्युभौ तत्र प्रयुज्यानदतां रणे ॥ अन्योन्यास्त्रप्रतीघातं कृत्वोभौ च विचेरतुः ॥ १८१ ॥ क्रमेण वृद्धोरुबलेन तत्र सुरेंद्रपुत्रेण विरोचनात्मजः ॥ निराकृतो नागमयं शरोत्तमं ब्रह्मास्त्रयुक्तं विससर्ज वासवौ ॥ १८२ ॥ तं वासुदेवो रथमानमय्य मोघं चकारार्जुनतः किरीटम ॥ चूर्णीकृतं तेन सुरेंद्रसूनोर्दिवं ययौ बाणगतश्च नागः ॥ १८३ ॥ नमिते वासुदेवेन रथे पंचांगुलं भुवि ॥ अपांगदेशमुद्दिश्य मुक्ते नागे किरीटिनः ॥ १८४ ॥ भङ्क्त्वा किरीटं वियति गच्छति प्रभुणोदितः ॥ बाणैस्तक्षकपुत्रं तं वासविः पूर्ववैरिणम् ॥ १८५ ॥ हत्वा निपातयामास भूमौ कर्णस्य पश्यतः ॥ ब्रह्मास्त्रस्यातिवेगित्वं प्राप्तं कर्णेन भार्गवात् ॥१८६॥

रीटिनःअर्जुनस्य अपांगदेशंनेत्रांतदेशंउद्दिश्यमुक्तेनागेनागबाणे किरीटिनः ॥ १८४ ॥ किरीटंमुकुटंभङ्क्त्वाछित्त्वा वियति आकाशेगच्छति यातेसति प्रभुणाकृष्णेनोदितः वियतिगच्छंतं वैरिणंनागंपातयेति उदितोवासविःपूर्ववैरिणंखांडववनदाहे अवशिष्टंशत्रुंतक्षकपुत्रं तमश्वसेनम् ॥ १८५ ॥ बाणैर्हत्वाकर्णस्यपश्यतःसतःभूमौनिपातयामास । ननु पार्थःदिव्यकिरीटभंगात् पूर्वमेवास्त्रपरिहारं किमर्थंनाकरोदित्यतआह । ब्रह्मास्त्रस्येति । अतिवेगित्वंप्रयोगविषयइतिशेषः प्रयोगसमयेअस्त्रस्यातिवेगित्वात्परिहारावसराभावात् । किरीटभंगानंतरं अस्त्रवियुक्तेन गंबाणैर्हत्वा निपातयामासेतिभावः ॥ १८६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

शापात् विप्रशापात् भूमिः रथस्य चक्रं ग्रसति स्म अग्रसत् । तदुक्तं कर्णपर्वणि । यस्मात्त्वयाप्रमत्तेन होमधेन्वाहतः सुतः । श्वभ्रे ते यततां चक्रमिति मां ब्राह्मणोऽब्रवीदिति शापात् । प्रमादीत्वं भविता चास्त्रसंघ इति परशुरामशापात् । विस्मृतिं स्मरणविषयत्वं ययुः । शापादित्युभयत्रसंबंधः ॥१८७॥ अवसरमवकाशं कृष्णो नेत्याह । अवसरं देहीत्याह । त्रिनेत्रो रुद्रः तेन दत्तं अंजलिकं नाम बाणविशेषम् ॥१८८॥ सत्येन धर्मेण स्वगतसत्यधर्माभ्यां बाणं संनियोज्य संयोगं कृत्वा तेनैव बाणेन व । बाणवरं संधित्सतः संधातुमिच्छतः अंजलिकं छेत्तुमिति भावः । तस्य कर्णस्य शीर्षं चिच्छेद ॥ १८९ ॥ अपराह्णस्य अपरं च तदहश्च अपराह्णं । तस्य कर्णस्य युद्धापेक्षया द्वितीयदिवसस्य दिवसद्वयसमुदायापेक्षया द्वितीयदिवसस्यावयवत्वात् पूर्वापराधरोत्तरमित्येकदेशिसमासः । अह्नोऽह्न इत्यह्नादेशः । अह्नोऽदंतादिति णत्वम् । अपराह्णे दिवसस्य प्रातरादिपंचकालेषु मध्येऽपराह्णाख्य चतुर्थ

पुनश्च पार्थेन महास्त्रयुद्धं प्रकुर्वतः सूर्यसुतस्य चक्रम् ॥ रथस्य भूमिर्ग्रसति स्म शापादस्त्राणि दिव्यानि च विस्मृतिं ययुः ॥१८७॥ उद्धर्तुकामो रथचक्रमेव पार्थं ययाचेऽवसरं प्रदातुम् ॥ नेत्याह कृष्णोंऽजलिकं सघोरं त्रिनेत्रदत्तं जगृहे च पार्थः ॥ १८८॥ सत्येन धर्मेण च सन्नियोज्य मुमोच कर्णस्य वधाय बाणम् ॥ चिच्छेद तेनैव च तस्य शीर्षं संधित्सतो बाणवरं सुघोरम् ॥ १८९ ॥ अपराह्णेऽपराह्णस्य सूर्यजस्येंद्रसूनुना ॥ छिन्नमंजलिकेनाजौ सोत्सेधमपतच्छिरः ॥ १९० ॥ तस्मिन्हते दीनमुखः सुयोधनो ययौ समाहृत्य बलं सशल्यः ॥ युधिष्ठिरः कर्णवधं निशम्य तदा समागत्य ददर्श तत्तनुम् ॥ १९१ ॥ शशंस कृष्णं च धनंजयं च भीमं च येन्येपि युधि प्रवीराः ॥ गत्वा च ते शिबिरं मोदमाना ऊषुः सकृष्णास्तदनुव्रताः सदा ॥ १९२ ॥ इति श्रीमन्महाभा० ता० श्रीमदानंदतीर्थभगवत्पादाचार्यवि० कर्णपातो नाम सप्तविंशोऽध्यायः ॥ २७ ॥ ॥ ॥ ॥

काले सूर्यजस्यांजलिकेन छिन्नं सोत्सेधेन कायेन उन्नत्यावा सहितं शिरः अपतत् । उत्सेधः कायउन्नतिरित्यमरः ॥ १९० ॥ बलं सेनामपहृत्य परावृत्य निशम्य श्रुत्वा तदा समागत्य सम्यक् संतोषेण आगत्य तत्तनुं कर्णदेहं ददर्श अपश्यत् ॥ १९१ ॥ शशंस तुष्टाव येऽन्ये युधि युद्धविषये प्रवीराः निपुणाः धृष्टद्युम्नसात्यक्यादयः तांश्च शशंस । सकृष्णाः सदा तदनुव्रताः कृष्णमनुव्रतास्ते पार्थाः शिबिरं प्रतिगत्वा मोदमानाः संतः ऊषुः वासं चक्रुः । रात्राविति शेषः ॥ १९२ ॥ यं गंगाज० पूर्तिं तस्य च सप्तविंशतितमोऽध्यायः शुभायं कुर्यात् श्रीमद्भारत० ॥ २७ ॥ इति श्रीमद्भारततात्पर्यनिर्णयटीकायां पदार्थदीपिकानाम्न्यां जनार्दनभट्टविरचितायां सप्तविंशोऽध्यायः ॥ २७ ॥ श्रीकृष्णार्पण०

श्रीगुरुभ्योनमः ॥ ॐ शर्वर्यांरात्रौप्रभातायांव्युष्टायांअनुमोदितः सांत्वित ॥१॥ दंशिताःकवचवंतः ॥२॥ अग्रेपुरतः ॥३॥ राज्ञोयुधिष्ठिरस्य अन्येषांकौरवाणामग्रे ॥४॥ भ्रातृभिःसहसुयोधनःपृष्ठतः । तस्यशकुनेः सुतः उलूकः ॥ ५ ॥ तत्रतस्मिन्समयेभीमस्यद्रौणिनासह । तथाराज्ञोयुधिष्ठिरस्यशल्येनसह । घोररूपंक्रूरंअतएवभयानकंभयजनकम् । महायुद्धमभवदितिसंबंधः ॥६॥ तत्रयुद्धेनातिप्रयत्नेनअप्रयासेन भीमेनद्रौणिःविरथीकृतः । तथाशल्येनधर्मसूनुःविरथीकृतः ॥ ७ ॥ कपिप्रवरकेतनःहनुमद्ध्वजः

ॐ प्रभातायां तु शर्वर्यां गुरुपुत्रानुमोदितः ॥ शल्यं सेनापतिं कृत्वा योद्धुं दुर्योधनोभ्ययात् ॥१॥ तमभ्ययुः पांडवाश्च दृष्ट्वा युद्धाय दंशिताः ॥ तत्रासीत्सुमहद्युद्धं पांडवानां परैः सह ॥ २ ॥ अग्रे भीमः पांडवानां मध्ये राजा युधिष्ठिरः ॥ पृष्ठे गांडीवधन्वासीद्वासुदेवाभिरक्षितः ॥ ३ ॥ चक्ररक्षौ यमौ राज्ञो धृष्टद्युम्नश्च सात्यकिः ॥ नृपस्य पार्श्वयोरास्तां अग्रेन्येषां गुरोः सुतः ॥ ४ ॥ मध्ये शल्यः पृष्ठतोभूद्भ्रातृभिश्च सुयोधनः ॥ चक्ररक्षौ तु शल्यस्य शकुनिस्तत्सुतस्तथा ॥ कृपश्च कृतवर्मा च पार्श्वयोः समुपस्थितौ ॥ ५ ॥ तत्राभवन्महद्युद्धं भीमस्य द्रौणिना सह ॥ राज्ञः शल्येन च तथा घोररूपं भयानकम् ॥ ६ ॥ तत्र नातिप्रयत्नेन द्रौणिर्भीमेन सायकैः ॥ विरथीकृतस्तथा धर्मसूनुः शल्येन तत्क्षणात् ॥ ७ ॥ आससाद तदा शल्यं कपिप्रवरकेतनः ॥ तयोरासीन्महद्युद्धमद्भुतं रोमहर्षणम् ॥ ८ ॥ रथमन्यं समास्थाय द्रौणिर्भीमं समभ्ययात् ॥ दुर्योधनश्च भीमस्य शरैरावारयद्दिशः ॥ ९ ॥ तावुभौ शरवर्षेण वारयामास मारुतिः ॥ ताभ्यां तस्याभवद्युद्धं सुघोरमतिमानुषम् ॥ १० ॥ दुर्योधनस्यावरजान्द्रौपदेया युयुत्सुना ॥ शिखंड्याद्यैर्मातुलैश्च सह सर्वान्न्यवारयन् ॥ ११ ॥ ॥ छ ॥ ॥ छ ॥ ॥

पार्थः रोमहर्षणंरोमांचोत्पादकम् ॥८ ॥ अन्यंरथंभीमस्यदिशःअवारयत्पर्यवारयत् ॥ ९ ॥ तावुभौअश्वत्थामसुयोधनौ ताभ्यांद्रौणिदुर्योधनाभ्यां तस्यभीमस्यअतिमानुषंमनुष्ययुद्धमतिक्रांतं देवासुरसदृशमित्यर्थः ॥ १० ॥ द्रौपदेयाःद्रौपदीपुत्राः युयुत्सुनाधृतराष्ट्रपुत्रेणसह शिखंड्याद्यैर्मातुलैःसह सर्वान्दुर्योधनस्यावरजान्न्यवारयन् ॥ ११ ॥

उलूकंशकुनिसूनुं हार्दिक्यंकृतवर्माणंन्यवारयन्निति पूर्वेणसंबंधः ॥ १२ ॥ तेषांपूर्वोक्तानांचित्रंआश्चर्यम् । लघु हस्तलाघववत् सुष्ठु द्रष्टॄणांमनोहरं शरसंघातैःशरविक्षेपैः ॥ १३ ॥ सोपिपार्थःआहवेयुद्धेशोभते असौआहवशोभी तंतथा । विशिखैर्बाणैः देवासुरोपमंदेवासुरयुद्धोपमम् ॥ १४ ॥ सपार्थः ॥ १५ ॥ शत्रूणांतापनस्तापकः ॥ १६ ॥ तानिसौरादीन्यस्त्राणिऐंद्रेणइंद्रदेवताकास्त्रेण जघानव्यनाशयत् ॥ १७ ॥ अमर्षितःअसहमानःइंद्रसुतःतस्यशल्यस्यचापम् ॥ १८ ॥ परेवैरिणःसुयोधनाद्याःउच्चुकुशुःसिंहनादं

सहदेवस्तु शकुनिमुलूकं नकुलस्तथा ॥ धृष्टद्युम्नश्च हार्दिक्यं सात्यकिः कृपमेव च ॥ १२ ॥ तेषां तदभवद्युद्धं चित्रं लघु च सुष्ठु च ॥ शल्यस्तु शरसंघातैः पार्थस्यावारयद्दिशः ॥ १३ ॥ सोपि विव्याध विशिखैः शल्यमाहवशोभिनम् ॥ तयोस्तु सममेवासीच्चिरं देवासुरोपमम् ॥ १४ ॥ ततः शरं वज्रनिभं मद्रराजः समाददे ॥ तेन विव्याध बीभत्सुं हृदये स मुमोह च ॥ १५ ॥ उपलभ्य पुनः संज्ञां वासविः शत्रुपातनः ॥ चिच्छेद कार्मुकं संख्ये मद्रराजस्य धीमतः ॥ १६ ॥ सोन्यत्कार्मुकमादाय मुमोचास्त्राणि फल्गुने ॥ सौरं याम्यं च पार्जन्यं तान्यैंद्रेण जघान सः ॥ १७ ॥ पुनर्न्यकृंतत्तच्चापमिंद्रसूनुरमर्षितः ॥ शल्यो गदां समादाय चिक्षेपार्जुनवक्षसि ॥ १८ ॥ तदा मुमोह बीभत्सुस्तत उच्चुक्रुशुः परे ॥ प्राप्तसंज्ञः पुनः पार्थः शल्यं विव्याध वक्षसि ॥ स विह्वलितसर्वांगः शिश्रिये ध्वजमुत्तमम् ॥ १९ ॥ समाश्वस्तः पुनर्बाणं यमदंडनिभं रणे ॥ मुमोच पार्थस्य स च निर्बिभेद स्तनांतरम् ॥ २० ॥ तेन विह्वलितः पार्थो ध्वजयष्टिं समाश्रितः ॥ २१ ॥ समाश्वस्तः प्रचिच्छेद मद्रराजस्य कार्मुकम् ॥ छत्रं ध्वजं च तरसा सारथिं च न्यपातयत् ॥ २२ ॥ तदान्यं रथमास्थाय धर्मराजः शरोत्तमैः ॥ चतुर्भिश्चतुरो वाहाञ्छल्यस्य निजघान ह ॥ २३ ॥

चक्रुः । विह्वलितानिचंचलितानि सर्वांगानियस्यसतथा सशल्यःध्वजंशिश्रियेआश्रितवान् ॥ १९ ॥ समाश्वस्तःविश्रमंप्राप्तः शल्यःयमदंडोपमंकालदंडसदृशंसबाणःपार्थस्यस्तनयोरंतरं मध्यंहृदयंनिर्बिभेद ॥ २० ॥ तेनबाणेनविह्वलितःचंचलितःयष्टिदंडम् ॥ २१ ॥ समाश्वस्तोविश्रांतः ॥ २२ ॥ पूर्वंशल्येनविरथीकृतोधर्मराजः चतुर्भिःशरोत्तमैः ॥ २३ ॥

छादयामासआच्छादयत् । राजानंधर्मराजम् ॥ २४ ॥ अभिभावयतिसर्वानित्यभिभूः । समर्थइत्यर्थः सात्यकेःधृष्टद्युम्नस्यचाश्वान्यमयोश्चापे ॥ २५ ॥ समुदीर्यमाणंउत्कृष्टत्वेनवर्तमानम् । अनेकैःबहुप्रकारैः बाणवरैर्न्यवारयत् । एनंशल्यम् ॥ २६ ॥ आस्थायआरुह्य पुनस्तृतीयंरथमारुरोजबभंज । शल्येन स्थितमितिशेषः । रुजोभंगइति धातुः ॥ २७ ॥ आत्तान्यात्तानि गृहीतानिगृहीतानि अस्यशल्यस्यान्यायुधानिचिच्छेद । पुनर्बाणैर्मर्माणिबिभेद । सशल्यः ॥ २८ ॥ भीमेनभिन्नानिभेदितानिमर्माणि यस्यसतथा तंविवर्माणंविगतकवचंश्वासमात्रमेवावशिष्टंउर्वरितंयस्यसतथा तंअतिक्षीणमित्यर्थः । केवलंमरणायैवमर्तुमेव ॥ २९ ॥ आत्मानंस्वंप्रति अभिगच्छंतंशल्यंदृष्ट्वा

शल्योन्यं रथमास्थाय सर्वांस्ताञ्छरवृष्टिभिः ॥ छादयामास राजानं विरथं च चकार ह ॥२४ ॥ निहत्याश्वान्सात्यकेश्च धृष्टद्युम्नस्य चाभिभूः ॥ चापे छित्वा च यमयोः दध्मौ शंखं महास्वनम् ॥ २५ ॥ ततस्तु शल्यं समुदीर्यमाणं दृष्ट्वा रणे भीमसेनस्तरस्वी ॥ न्यवारयद्बाणवरैरनेकैश्चकार चैनं विरथं क्षणेन ॥ २६ ॥ आस्थाय चान्यं रथमाप तंतं पुनश्च शल्यं भृशमेव मर्मसु ॥ निर्भिद्य बाणैर्विरथं चकार पुनस्तृतीयं रथमारुरोज ॥ २७ ॥ आत्तान्यात्तान्यायुधान्यस्य भीमः सर्वाणि चिच्छेद बिभेद चास्य ॥ मर्माणि बाणैर्नितरां पुनश्च स मुष्टिमुद्यम्य जगाम धर्मजम् ॥ २८ ॥ तं भीमभिन्नमर्माणं विवर्माणं निरायुधम् ॥ श्वासमात्रावशिष्टं च मरणायैव केवलम् ॥ २९॥ आत्मानमभिगच्छंतं दृष्ट्वान्यं रथमास्थितः ॥ हंतुकामो रणे वीरममोघां शक्तिमाददे ॥ ३० ॥ दिव्यास्त्रैरभिसंयोज्य तां तदा धर्मनंदनः ॥ सत्यधर्मफलैश्चैव चिक्षेपास्य हृदि त्वरन् ॥ ३१ ॥ स भिन्नहृदयो भूमौ पपाताभिमुखो नृपम् ॥ सत्यधर्मरतः शल्यः इंद्रस्यातिथितामगात् ॥ ३२ ॥ मद्रराजे हते वीरे सुशर्मार्जुनमभ्ययात् ॥ संशप्तकावशिष्टैस्तमनयन्मृत्यवेर्जुनः ॥ ३३ ॥ ॥ ॥ ॥ ॥

अन्यंरथंआस्थितःसन् रणेवीरंशल्यंहंतुकामोयुधिष्ठिरः अमोघांशक्तिमाददे ॥ ३० ॥ तांशक्तिंदिव्यास्त्रैर्मंत्रैःसत्यधर्मफलैश्चाभिसंयोज्यसंयोगंकृत्वा त्वरन्वेगंकुर्वन् अस्य शल्यस्यहृदिचिक्षेप ॥ ३१ ॥ नृपंयुधिष्ठिरमभिमुखःसन् रतोनिरतःहेतुगर्भविशेषणमेतत् । इंद्रस्यातिथितांअगात् मध्याह्नेमृतःशल्यःस्वर्गंप्रापेत्यर्थः ॥ ३२ ॥ संशप्तकावशिष्टैःअवशिष्टसंशप्तकैः । सहयोगेतृतीया । संशप्तकैःसहितमित्यर्थः । तंसुशर्माणम् ॥ ३३ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

निःशेषांशेषरहिताम् ॥ ३४ ॥ सहदेवःउलूकंजघान । अथोलूकवधानंतरं शकुनिंचजघान । भीष्मपर्वणियथापार्थःपुत्रइरावान् शकुनेःषट्पुत्रान्जघान तथानकुलोपि न कुलःप्रतिजज्ञेयथशाकुनेयवधंप्रतीतियूनसमयेप्रतिज्ञातत्वात्कंचनपुत्रंजघानेतिद्रष्टव्यम् ॥ ३५ ॥ तेद्रौण्यादयः ॥३६॥ शैनेयेनगृहीतःहंतुमितिशेषः । संजयःदुर्योधनप्रवृत्तिं ज्ञातुंधृतराष्ट्रेणप्रेषितः शैनेयगृहीतइतिव्याख्येयम् । तस्ययुद्धेसदासत्वादन्यथाक्षताद्यभाववरप्रदानमनर्थकंस्यात् । उक्तंचभारते सेनापतिमरणानंतरं युद्धात्पुरागमनादि तदाह । नैनंशस्त्राणिछेत्स्यंतिनैवंबाधिष्यतेश्रमः । गावल्गणिरयंजीवन्युद्धादस्माद्विमोक्ष्यतइति । तथा । अथगावल्गणिर्धीमान् समरादेत्यसंजयइतिभीष्मपर्वणि । द्रोणेपि ।

दुर्योधनस्यावरजानवशिष्टान्वृकोदरः ॥ सर्वाञ्जघान सेनां च निःशेषामकरोद्रणे ॥ ३४ ॥ उलूकं सहदेवोथ शकुनिं चातिपापिनम् ॥ जघान द्रौणिहार्दिक्यकृपान् भीमार्जुनौ ततः ॥ ३५ ॥ बहुशो विरथीकृत्य पीडयित्वा पुनः पुनः ॥ द्रावयामासतुस्ते तु भीषिता विविशुर्वनम् ॥ ३६ ॥ शैनेयेन गृहीतोथ संजयोनंतशक्तिना ॥ व्यासेन मोचितोथैकः पार्थान् दुर्योधनोभ्यगात् ॥ ३७ ॥ तेषामभूत्तस्य च घोररूपं युद्धं सबाणैर्बहुशोर्जुनं च ॥ चकार मूर्छाभिगतं युधिष्ठिरं यमावयत्नाद्विरथांश्चकार ॥ ३८ ॥ तं भीमसेनो विरथं चकार गजं समारुह्य पुनः समभ्ययात् ॥ पुनश्च शैनेयशिखंडिपार्षतान्यमौ नृपं च व्यदधान्निरायुधान् ॥ ३९ ॥ गजे च भीमेन शरैर्निपातिते समारुहद्वाजिवरं सुनिर्भयः ॥ स तेन च प्रासकरो रणेऽरिहा चचार शैनेयमताडयच्च ॥ ४० ॥ मुमोह तेनाभिहतः स सात्यकिर्यमावपि प्रासनिपीडितौ रथे ॥ निषीदतुर्धर्मसुतं प्रयांतं समीक्ष्य भीमोस्य जघान वाजिनम् ॥ ४१ ॥ ॥

समरात्संजयंप्राप्तं निन्येनागाह्वयंपुरमिति । कर्णपर्वणि । हतेकर्णेमहाराजनिशिगावल्गणिस्तदा । दीनोययौनागपुरमश्वैर्वातसमैर्जवेत्यादीनि । अथैकःअसहायोदुर्योधनः ॥ ३७ ॥ तेषांपार्थानांतस्यदुर्योधनस्य । सदुर्योधनःबहुशःबहुवारं अर्जुनंमूर्च्छाभिगतंचकार । युधिष्ठिरादींस्त्रीन्विरथान् ॥ ३८ ॥ तंदुर्योधनं गजंसमारुह्य दुर्योधनइति शेषः ॥ ३९ ॥ सुनिर्भयःसुतरांनिर्गतभीः ससुयोधनःतेनवाजिनाचचार ॥ ४० ॥ अस्यसुयोधनस्य ॥ ४१ ॥ ॥ ॥ ॥ ॥ ॥

यथौरणादितिशेषः । गुर्वींश्रेष्ठां उरुविस्तीर्णसरःसरोवरम् ॥ ४२ ॥ अक्षौहिणीषट्कं भीमेननिहतम् । पंचाक्षौहिण्यःपार्थेननिहताः । एवमनेनप्रकारेणकौरवाणामेकादशाक्षौहिण्योभीमपार्थाभ्यांनिहताइत्यर्थः । ननु एकादशाक्षौहिणीसंख्यंकौरवसैन्यं अर्धंभीमेनअर्धंपार्थेनेतियंथांतरोक्तिःकथंघटनइत्यतआह । अर्धमिति । कालिंगकान् भीमहताक्षौहिणीसंख्याकान् कालिंगकान्तेअर्धंभीमेन निहतम् । पार्थेनार्धंनिहतमितियंथांतरोक्तेरभिप्रायः ॥ ४३ ॥ एकादशाक्षौहिणीभ्यःशिष्टमुर्वरितंबलमन्यैःधृष्टद्युम्नसात्यक्याद्यैः । पार्थानामक्षौहिणीचतुष्कम् ॥४४॥ अन्यैःसमस्तैश्चद्रोणकर्णादिभिःअन्याःअक्षौहिण्यःनिषूदिताइत्यर्थः । अन्येष्वपिहननतारतम्यमाह । द्रोणेति। महाव्रतोभीष्मःभौमसूनुर्भगदत्तः । प्रायोबाहुल्येनसेनाःघ्नंतीतितेतथा । द्रोणेनयावत्सैन्यंहतं तस्मात्कर्णेनाल्पंहतम् । कर्णापेक्षयाभीष्मेणाल्पंहतमित्ययंक्रमःप्रायःशब्दस्यार्थः ॥ ४५ ॥

प्रासे निकृंते तु वृकोदरेण विवाहनः सोपि ययौ सुयोधनः ॥ आदाय गुर्वीं च गदां प्रयातो द्वैपायनस्योरुसरो विवेश ॥ ४२ ॥ एवमक्षौहिणीषट्कं भीमेन निहतं रणे ॥ पंच पार्थेन निहता अर्धं कालिंगकान्हते ॥ ४३ ॥ एकादशाक्षौहिणीभ्यः शिष्टमन्यैर्निषूदितम् ॥ अक्षौहिणीचतुष्कं च पार्थानां द्रौणिना हतम् ॥ ४४ ॥ अन्यैरन्याः समस्तैश्च द्रोणकर्णमहाव्रताः ॥ दुर्योधनो भौमसूनुः प्रायः सेनाहनः क्रमात् ॥ ४५ ॥ जयं लब्ध्वा नदत्सूच्चैः पांडवेषु महात्मसु ॥ दुर्योधनो जलस्तंभं कृत्वा मंत्रान् जजाप च ॥ ४६ ॥ मंत्रा दूर्वाससा दत्ता मृतसंजीवनप्रदाः ॥ ४७ ॥ जले स्थित्वा जपन्समदिनैः सर्वान्मृतानपि ॥ उद्धरेद्धार्तराष्ट्रोयं स्युरवध्याश्च ते पुनः ॥ ४८ ॥ इति विद्याबलं तस्य ज्ञात्वा पांडुसुतास्ततः ॥ अन्विष्यंतः शुश्रुवुश्च व्याधेभ्यस्तं जले स्थितम् ॥ ४९ ॥ ॥७॥ ॥ ॥ ॥

पांडवेषुनदत्सुसत्सुस्तंभंनिरोधनम् ॥ ४६ ॥ मंत्राःकस्मात्प्राप्ताः किंफलदाइत्यतआह । मंत्राइति । मृतानांसम्यक्जीवनंप्रददंतीतितथेत्युपलक्षणम् । तेवीर्यदाविजयदाअपिवह्निवारिस्तंभादिदा सकलदेवनिकायरोधाः । दृष्टयायभीप्सितसमस्तकराअमूभिर्जेष्यइतिपूर्वमुक्त्वादिदानीं प्रारब्धकर्मापेक्ष्य मृतसंजीवनप्रदाइत्युक्तम् ॥ ४७ ॥ पार्थाः दुर्योधनान्वेषणं किमर्थंचक्रुरित्यतआह । जलइति । जपन्तान्मंत्रानयंधार्तराष्ट्रः समदिनैःसमचतानिदिनानिचतथातैः मृतानप्युद्धरेदुज्जीवयेत् तेउज्जीविताःपुनरवध्याः स्युः ॥ ४८ ॥ इतितस्यसुयोधनस्यविद्याबलंज्ञात्वा । ततःकारणादन्विष्यतःपांडुसुताः ॥ ४९ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ततःश्रवणानंतरं तत्रद्वैपायनसरोवरं प्रतिआगच्छत । तदाजलात्समुन्मज्ज्यउत्थायबहिर्निर्गत्येत्यर्थः । द्रौणिपुरःसरैः द्रौणिःपुरःसरोयेषामिति तद्गुणसंविज्ञानोबहुव्रीहिः अवयवेन विग्रहः समुदायःसमासार्थइति महाभाष्योक्तेर्धृतीयद्रोणइतिवत् । मंत्रयंतंविचारयंतंदुर्योधनंददृशुःस्म । तद्रौणिकृपकृतवर्माणःतान्पार्थान ॥५०॥ सुपरुषैःरतिनिष्ठुरैः । एवं दुर्योधनम् ॥५१॥ अमर्षितःअसहमानः ॥ दंडहतोयथाअहिःसर्पःतथाश्वसन् । शाठ्यात्शाठ्येनउवाच । किमिति । अहंतपसेवनाययायांगमिष्यामि । भवान्सर्वपृथ्वींशासत शास्तु ॥ ५२ ॥ यस्त्वंसूच्यग्रेणवेधितांविद्धांतावत्परिमितामित्यर्थः । पृथ्वींदातुंनेच्छः ॥ ५३ ॥ सर्वांसर्वांपृथ्वीं सर्वपृथ्वीस्थितानित्यर्थः घातयित्वाभीष्मद्रोणमुख्यानपि

आगच्छंश्च ततस्तत्र पुरस्कृत्य जनार्दनम् ॥ तदा जलात्समुन्मज्ज्य त्रिभिर्द्रौणिपुरःसरैः ॥ मंत्रयंतं स्म ददृशुस्तान दृष्ट्वा ते प्रदुद्रुवुः ॥ ५० ॥ दुर्योधनो विशत्तोयं दृष्ट्वा तं केशवाज्ञया ॥ युधिष्ठिरः सुपरुषैर्वाक्यैरेनमथाह्वयत ॥५१॥ अमर्षितासौ धृतराष्ट्रपुत्रः श्वसंस्तदा दंडहतो यथाहिः ॥ उवाच शाठ्यात्तपसे वनाय यायां भवाञ्छासतु सर्वपृथ्वीम् ॥ ५२ ॥ तमाह धर्मजो राजा यस्त्वं कृष्णे समागते ॥ सूच्यग्रवेधितां पृथ्वीं दातुं नैच्छः कथंचन ॥ ५३ ॥ घातयित्वा सर्वपृथ्वीं भीष्मद्रोणमुखानपि ॥ दातुमिच्छसि सर्वां त्वं पृथ्वीं नाद्य वयं पुनः ॥ ५४॥ अ[illegible] वा प्रतिगृह्णीम एहि युद्धे स्थिरो भव ॥ न कुरूणां कुले जातो यस्त्वं भीतो ह्यपाविशः ॥ ५५ ॥ इत्यादिरूक्षवचनं श्रुत्वा दुर्योधनो रुषा ॥ जलस्तंभात्समुत्तस्थौ श्वसन्नाशीविषो यथा ॥ ५६ ॥ उवाच एक एवाहमकिरीटो विवर्मकः ॥ भवंतो बहवो वर्मशिरस्त्राणयुता अपि ॥ ५७ ॥ यद्येवमपि मे युद्धं सर्वांश्चेन्मन्यसे समम् ॥ सर्वैरेकेन वा युद्धं करिष्ये न च भीर्मम ॥५८॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

घातयित्वापुनस्तेषांमरणानंतरं कथंसर्वांपृथ्वींदातुमिच्छसि ॥ ५४ ॥ वयंअद्यपुनःअहत्वात्वांनिगृहीतः । सर्वांपृथ्वींनगृह्णीमएहियुद्धेस्थिरोभव । यस्त्वंभीतःसन्अपःजलं अविशो हियस्मात्तस्मात् त्वंकुरूणांकुलेजातोन । कुरुकुलोत्पन्नाःसदायुद्धोत्सवाःत्वद्वद्भीतियुतानभवंतीतिभावः ॥ ५५ ॥ आशीविषःसर्पःयथातथाश्वसन्श्वासंमुंचन ॥ ॥ ५६ ॥ उवाच । किमिति । अहंकिरीटकवचरहितःएकएव । भवंतःवर्मशिरस्त्राणयुताअपि कवचोष्णीषाभ्यांयुताश्चेत्यर्थः ॥ ५७ ॥ एवमपियदिसर्वान्समंमन्यसे सर्वैर्भवद्भिःसह युद्धंसमंसमानं मन्यसेतर्हि सर्वैर्भवद्भिःएकेनवायुद्धंकरिष्ये । ममभीर्भयंन ॥ ५८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

त्वंपंचानांमध्येयंप्रतिवीरंयोद्धारंइच्छसि तंवृणीष्व ॥ ५९ ॥ अन्येवयंचत्वारोवनंप्रतियास्यामःतेनप्रतिवीरेणैवभुंजीमःभोक्ष्यामः । येनायुधेनजेतुमिच्छसि तदायुधमाध त्स्वगृह्णीष्व । एकस्मिन्प्रतिवीरेजितेसति सर्वेजिताइतिसूचयितुं शात्रवान्‌च्छत्रुवर्गस्थानिति बहुवचनप्रयोगः ॥ ६० ॥ भवदर्जुनादिभिरर्जुनोआदिर्ययोर्नकुलसहदेवयो स्तावर्जुनादी भवांश्चअर्जुनादीचभवदर्जुनादयः तैस्तथादुर्बलैश्चतुर्भिर्नयोत्स्ये । भीमंव्यावर्तयितुं भवदर्जुनादिभिरित्युक्तम् । गदयाभीमेनयोत्स्ये । सदागदामेप्रिया हिय स्मात्तस्माद्योत्स्यइतिसंबंधः । अथअन्यदायुधंनस्पृशेनग्रहीष्यामि ॥ ६१ ॥ रभसावेगेनवृकोदरःतदाराज्ञोदुर्योधनस्य गदायाःसकाशादध्यर्धभराधिकां अर्धेनाधिकः अ

इत्युक्त आह धर्मात्मा वर्माद्यं च ददामि ते ॥ वृणीष्व प्रतियोद्धारं पंचानां त्वं यमिच्छसि ॥ ५९ ॥ हत्वैकं भुंक्ष्व राज्यं त्वमन्ये याम वनं वयम् ॥ हते वा त्वयि तेनैव भुंजीमश्चाखिलां भुवम् ॥ आदत्स्व चायुधं येन जेतुमिच्छसि शात्रवान् ॥ ६० ॥ इत्युक्त ऊचे नहि दुर्बलैरहं योत्स्ये चतुर्भिर्भवदर्जुनादिभिः ॥ भीमेन योत्स्ये गदया सदा हि मे प्रिया गदा नान्यदथायुधं स्पृशे ॥ ६१ ॥ श्रुत्वास्य वाक्यं रभसा वृकोदरो गदां तदाध्यर्धभराधिकां मुदा ॥ राज्ञो गदायाः प्रतिगृह्य वीरः समुत्थितो युद्धमनाः समुन्नदन् ॥ ६२ ॥ अथाह नारायण आदिदेवो युधिष्ठिरं कष्टमिदं त्वया कृतम् ॥ नत्वेष राजा गदया रणे चरन् शक्यो विजेतुं निखिलैः सुरासुरैः ॥ ६३ ॥ स निश्चयाद्धश्चतुरो निहन्यात्सहार्जुनान् भीमसेनः कथंचिन् ॥ हंतैनमाजौ नहि भीमतुल्यो बले क्वचिद्धार्तराष्ट्रः कृती च ॥ ६४ ॥ ऊरू भीमेन भेत्तव्यौ प्रतिज्ञां रक्षता रिपोः ॥ नाभेरधस्ताद्धननं जना आहुर्गदाम्रधे ॥ ६५ ॥ ॥७॥ ॥ ७ ॥

ध्यर्धःअध्यर्धोभरोयस्याःसाअध्यर्धभरा अतएवाधिकांश्रेष्ठांतांगदां प्रतिगृह्य । तदामुदेतिक्वचित्पाठः । अत्रतत्पदस्यवाक्यमित्यनेनान्वयः । उन्नदनउच्चैःशब्दंकुर्वन् ॥ ६२ ॥ नारायणःकृष्णःइदंपंचानांमध्ये एकंवृणीष्वेतीदंकष्टंकष्टकरम् । चरन्वर्तमानः ॥६३॥ समुयोधनः । भीमसेनःएनंदुर्योधनंकथंचित्केनचिदुपायेनहंताहनिष्यति । बलेबलविषयेभीमतुल्यःक्वचिन्नधार्तराष्ट्ःकृतीगदाशिक्षाकुशलः ॥ ६४ ॥ ननु भीमसेनःदुर्योधनंकथंचिदाजौहंतेत्युक्तंतेनभीमस्यदुर्बलत्वप्रतीतेर्भीमतुल्योबलेकश्चिन्नास्ती तिकथमुच्यतइत्यतस्तदुभयाभिप्रायंसपादेनश्लोकत्रयेणाह । ऊरूइति । असौभीमसेनोअव्याजेनैवदुर्योधनंहंतुंशक्तइतियद्यपिस्फुटंप्रकटं तथापिप्रतिज्ञापालननिमित्तेनना

भ्युपरिदेशे हननाख्येनकिंचिद्व्याजेनयुतो भीमोधार्तराष्ट्रंहन्यादितिव्यक्तमितिकृष्ण ऊचे। किमर्थमितत्योरुभेदनं गदयोरुवेगयाविभेत्स्येइतिपूर्वकृतांप्रतिज्ञांरक्षन्पालयता भीमेनऊ रुभेत्तव्यौ विपाटनीयौ। तदभेदनेप्रतिज्ञात्यागादधर्मः। गदागृधेगदायुद्धेनाभेरधस्ताद्धननमधर्मइतिजनाआहुः। एवंचलोकावगतधर्मातिक्रमनिमित्तप्राप्तालोकनिंदाव्याद्वत्त येधर्मद्वयविरोधरूपायांआपदिमुख्यधर्मरक्षणाख्यंधर्मंदर्शयितुम। ननु कृष्णस्यभीमेबलित्वोक्तिर्भीमप्रशंसनार्थैवास्त्वित्यतआह। बलमिति। भूजोव्यक्तवागर्थकत्वाद्व्यक्तप्रशं साद्रूपमवददित्यर्थः॥६५॥६६॥६७॥ गदाशिक्षाभावमपिदुर्बलत्वंभीमस्यनेत्याह। आहेति। अतिप्रयत्नाभावोपिभीमस्यनदुर्बलत्वापादकः किंतुगुणापादकएव। प्रत्युतदुर्यो धनस्याधिकप्रयत्नोदुर्बलत्वापादकइत्याह। प्रयत्नमिति॥६८॥आपदिमुख्यधर्मोरक्षणीयइत्युक्तं तत्रकोसौमुख्यधर्मइत्यतस्तमाह। प्रतिज्ञेति। सतांप्रीत्यैप्रतिज्ञात्यागस्य धर्म

अधर्म इति तत्कृष्णो लोकनिंदानिवृत्तये ॥ आपद्धर्मं दर्शयितुं किंचिद्व्याजेन संयुतः ॥ ६६ ॥ भीमो हन्याद्धार्त राष्ट्रमित्यूचे यद्यपि स्फुटम् ॥ अव्याजेनापि शक्तोसौ बलं निस्सीममाह च ॥ ६७ ॥ आह शिक्षामप्यनूनां यत्नं दुर्यो धनोधिकम् ॥ नहि भीमोतिप्रयत्नं कुर्यादिति गुणो ह्ययम् ॥ ६८ ॥ प्रतिज्ञापालनं धर्मो दुष्टेषु च विशेषतः ॥ इति धर्मरहस्यं तु वित्तः कृष्णवृकोदरौ ॥ नान्यस्ततो लोकनिंदां व्यपनेतुमुभावपि ॥ ६९ ॥ अनापद्यापदि च दर्शयेतां जनस्य तु ॥ ७० ॥ ततो भीमः सर्वलोकस्य धर्मं प्रकाशयन्वाक्यमिदं जगाद ॥ ऊरू तवाहं हि यथाप्रतिज्ञं भेत्स्या मि नैवात्र विचारणीयम् ॥ ७१ ॥ इति ब्रुवंतं प्रससार चाजौ दुर्योधनस्तत्र बभूव युद्धम् ॥ भीमस्तदाग्र्यप्रकृतिं वि धित्सुर्मंदः स आदौ व्यचरज्जनार्थे ॥ ७२ ॥ ॥ छ ॥ ॥

त्वात्तद्व्यावृत्त्यैदुष्टेष्वित्युक्तम्। तुर्विशेषेणदुष्टेषुप्रतिज्ञापालनं विशेषतोधर्मः। नन्वेतत्सर्वंकृष्णेतरेणापिकुतोनोक्तमित्यतआह। इतीति। रहस्यत्वेनान्यैरज्ञातत्वान्नोक्तम ॥ ६९ ॥ ननूक्तधर्मद्वयेप्रतिज्ञापालनस्यबलवत्वात् अतुल्यबलतयाविरोधएवनास्तीत्याशंक्याह। अनापदीति। धर्मद्वयरूपापदभावेपिलोकनिंदामपनेतुं लोकप्रसिद्ध्याऽप दिवेतिजनस्यदर्शयेताम्॥ ७० ॥ ततः कृष्णोक्त्यनंतरं अत्रोरुभेदनविषयेनविचारणीयम्। अधर्मंकरिष्यतिनवेतिनविचारणीयमित्यर्थः॥७१। तदासभीमःजनार्थेदिदृक्षुजना र्थेअग्र्यप्रकृतिंश्रेष्ठप्रकृतिं। नानाप्रकारशिक्षामित्यर्थःउत्तमानांस्वभावंवा विधित्सुः प्रदर्शयितुमिच्छन् उत्तमाहिआरंभकाले अल्पमेवकृत्वोत्तरोत्तरं बहुतरंकुर्वंतीतिभावः। मंदःस्थिरःआजौव्यचरत्। आदौशनैरयुध्यदितिभावः ॥ ७२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

गदामार्गं गदाशिक्षां दर्शयंतौ द्रष्टृगामित्विशेषः । चित्रं यथास्यात्तथा । तदायुद्धसमये आजगाम तीर्थान्याचरन्निति शेषः ॥ ७३ ॥ तेन बलभद्रेण मानितः अभिवादनादिना ॥ ७४ ॥ मंडलानि गदायुद्धे नियतस्थानानि ॥ ७५ ॥ उच्छिन्नसक्थीक सक्थिशब्देन ऊर्वोः कटिप्रदेशस्य संधि. सक्थ्यैव सक्थीकम् । उच्छिन्नं ऊर्ध्वकृतं सक्थीकं यस्य स तथा । पृष्ठमूले पृष्ठभागस्य मूले आधारस्थाने ॥ ७६ ॥ प्रतिज्ञापालनेन नाभेरुपरि नाहनत् किंत्वधएव ॥ ७७ ॥ गदायुद्धस्य मर्यादां यशश्च अभिरक्षितुम् । अत्यंतं नाभेरधस्तात् नाहनत् । अधइनिव कव्ये अधस्तादित्युक्तिः शब्दाधिक्यादर्थाधिक्यमिति न्यायेन विप्रकृष्टाधोभागसूचनार्थम् । किंतु असौ वृकोदरः तं दुर्योधनं मध्ये पृष्ठमूले निजघ्ने ॥ ७८ ॥ यदा सुयोधनः कृष्णं द्यूते पण्यार्थं निधेहीत्यवादीत् । तत्प्रतिज्ञानुसारेण निपात्य भूतले हितेशिरो मृद्गिष्य इत्यलमिति द्यूतसमये स्वकृतप्रतिज्ञानुसारेण एवं पूर्वोक्तप्रकारेण प्रतिज्ञायुग्मार्थं

दर्शयंतौ गदामार्गं चित्रं तौ प्रविचेरतुः ॥ बलभद्रोप्याजगाम तदा तौ प्रतिवारितुम् ॥ ७३ ॥ वारितावपि तेनोभौ नैव युद्धं व्यमुंचताम् ॥ ततो ददर्श तद्युद्धं मानितः कृष्णपूर्वकैः ॥ ७४ ॥ तौ शिक्षाबलसंयुक्तौ मंडलानि विचेरतुः ॥ तत्र भीमं वंचयितुं धार्तराष्ट्रः शिरः क्षितौ ॥ ७५ ॥ व्यधादुच्छिन्नसक्थीकस्तदा कृष्णाभ्यनुज्ञया ॥ पृष्ठमूलेहनद्भीमो भिन्नसक्थिश्च सोपतत् ॥ ७६ ॥ प्रतिज्ञापालनार्थाय नाभेर्नोपर्यधस्तदा ॥ ७७ ॥ गदायुद्धस्य मर्यादां यशश्चाप्यभिरक्षितुम् ॥ नाधस्तान्मध्य एवासौ निजघ्ने तं वृकोदरः ॥ ७८ ॥ एवं प्रतिज्ञायुग्मार्थं भग्नसक्थियुगं रणे ॥ द्यूते कृष्णं निधेहीति यदावादीत्सुयोधनः ॥ तत्प्रतिज्ञानुसारेण भीमो मूर्धानमक्रमीत् ॥ ७९ ॥ ऋषभं मासमानानामितिसूक्तं ददर्श ह ॥ तेषां पुण्यानि विद्याश्च समादायैव सर्वशः ॥ तांश्चकार तमोगंतॄंस्तस्य मूर्ध्नि पदाक्रमत् ॥ ८० ॥

द्रौपद्याः ऊरुसंदर्शनसमये । तवोरुमेनं गदयोरुवेगयेत्येका प्रतिज्ञा तथा वनवासार्थं सभायाः निर्गमनसमये ऊरून्वाहं चरणे विभेत्स्य इति द्वितीया प्रतिज्ञा इति प्रतिज्ञायुग्मं सत्यं कर्तुमित्यर्थः । भिन्नसक्थियुगं मूर्धविशेषणमेतत् । शरीरावयवैकावयविनं भग्नसक्थ्नो मूर्ध्नश्चावयवत्वात् । शरीरद्वारा मूर्ध्नोपि सक्थिसंबंधोस्त्येव । एवं भग्नसक्थियुगं यस्य मूर्ध्नः स तथा । तं मूर्धानं भीमः अक्रमीत् । मूर्ध्नि पादप्रहारं दत्तवानिति भावः । यद्वा भग्नसक्थियुगं दुर्योधनं मूर्धानं समन्वये द्वितीया । मूर्ध्नि अक्रमीत् पादप्रहारं ददाविति ॥ ७९ ॥ ऋषभं मासमानानामिति सूक्तं तस्मिन्समये ददर्श । एतत्सूक्तस्थमात्रश्चित्तमावोभरमित्यर्थं प्रतिपाद्यमर्थं दर्शयति तेषामिति । तेषां दुर्योधनादिद्विषिणां पुण्यानि विद्याश्च समादाय स्वीकृत्य

सर्वशःसर्वांस्तान्अज्ञानमिथ्यामतिहग्द्विषोपेतान्तमोगंतृंश्चकार। तस्यदुर्योधनस्यमूर्ध्निपदापादेनआक्रमत्। तताड ॥ ८० ॥ दैत्यश्रेष्ठदुर्योधनस्यमूर्ध्नि पदाभिघातेनतत्कृतपुण्यंस्वीकृत्यच तमोगंतृकरणेनचसर्वैर्मूर्ध्निपदाहताः। सर्वेषांपुण्यानिचात्तानिसर्वेतमोगंतारश्चकृताएवेत्यभिप्रायेण तेषामितितांश्चेतिबहुवचनम्। दुर्योधनेनयानिकृतानिकर्माणितानितस्यदुर्योधनस्यस्मारयामास । तरेत्यत्रगतिबुद्धीतिकर्मसंज्ञायामधीगर्थेतिकर्मणिषष्ठी । कृष्णस्यबंधेबंधनविषयेमंत्रोविचारःकृतस्त्वयेतिशेषः इतिसंश्राव्येत्यर्थः पुनःपुनःपदामूर्ध्न्यहनत् ॥ ८१ ॥ तद्वीमकृतताडनभर्त्सनाविति चुक्रोध चुकोप। ऊर्ध्वबाहुकःउद्धृतहस्तःअसौबलभद्रःचुक्रोशे उच्चैःशब्दंकृतवान्॥ ८२ ॥ पुनःअनंतरं क्रोधेनात्यंतताम्रेरक्तवर्णेअक्षिणीयस्यसतथा ॥ ८३ ॥ अभयेभयरहिते ॥ ८४ ॥ कथंधर्मइत्यतआह। नमंडलइति। मंडलेमंडलवत्परिभ्रमणेनाभितःनाभेःसकाशात् अ

स्मारयामास कर्माणि यानि तस्य कृतानि च ॥ कृष्णबंधे कृतो मंत्र इति मूर्ध्नि पदाहनत् ॥ ८१ ॥ पुनः पुनश्च तद्वीक्ष्य चुक्रोध मुसलायुधः ॥ चुक्रोशे नैव धर्मोयमित्यसावूर्ध्वबाहुकः ॥ ८२ ॥ पुनः क्रोधातिताम्राक्ष आदाय मुसलं हलम् ॥ अभिदुद्राव भीमं तं न चचाल वृकोदरः ॥ ८३ ॥ अभये संस्थिते भीमे रामं जग्राह केशवः ॥ आह धर्मेण निहतो भीमेनायं सुयोधनः ॥ ८४॥ न मंडलेभिसारे वा नापसारे च नाभितः ॥ अधो हन्याद्वंचयंतमधो हत्वा न दुष्यति ॥ ८५ ॥ कृता प्रतिज्ञा च वृकोदरेण भेत्स्ये तवोरू इति युक्तिपूर्वकम् ॥ संश्रावयानेन तदेष धर्मतो जघान दुर्योधनमग्र्यकर्मा ॥ ८६ ॥ वासुदेववचः श्रुत्वा धर्मच्छलमिति ब्रुवन् ॥ रौहिणेयो जगामाशु स्वपुरीमेव सानुगः ॥ ८७ ॥ तस्मिन् गते वासुदेवं समपृच्छद्युधिष्ठिरः ॥ धर्मोऽयमथवाधर्म इति तं प्राह केशवः ॥ ८८ ॥

धोनहन्यात् अभिसारेवाअभिमुखेनआगमनेअधोनहन्यात्। अपसारेचनिवर्तनेवा नाभितः नाभेरधोनहन्यात्। वंचयंतंप्रतारयंतं अधोनाभेरधःनदुष्यतिहंतेतिशेषः। दुर्योधनेनवंचयितुं शिरसःअधःकृतत्वात् अधोहननंभीमस्यदोषोनैवेतिभावः ॥ ८५ ॥ प्रकारांतरेणाधर्मत्वशंकांपरिहरति। कृतेति । पूर्वप्रतिज्ञातंत्वदूरुभेदनंमयाऽवश्यंकार्यमित्येवंयुक्तिपूर्वकंयथाभवतितथा। ऊरुभेदनंसंश्रावयानेन आगमजमनित्यमित्युक्तेर्नमुगागमइतिभावः। संश्रावयमानेनवृकोदरेण तवोरूभेत्स्येअर्थानुवादोयं। ऊरूतवाहंचयथाप्रतिज्ञं भेत्स्यामीत्यादिना इदानीमपिप्रतिज्ञाकृता। तत्तस्मात्कारणात् एषःभीमःधर्मतोजघान ॥८६॥ धर्मच्छलंधर्माभासः ॥८७॥ अयंदुर्योधनवधइतिसमपृच्छत्। केशवस्तंयुधिष्ठिरमितिप्राह ॥ ८८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

साक्षात्केवलंसुरगणामरयःशत्रवोदैत्याः ॥ ८९ ॥ अतःकेवलधर्मेणपापिष्ठस्यवधानर्हत्वादयमपिदुर्योधनोपिअधर्मेणहतः । अत्रदुर्योधनस्यवधविषयेदूषणंपापंनास्ति । उक्तार्थंकैमुत्यन्यायेनदर्शयति । भीष्मेति । यद्यस्मादुपाधिनाकपटेन ॥ ९० ॥ तत्तस्मात्कथंचनकेनचित्प्रकारेणपापेहतेसतिकोनुदोषः । नकोपीत्यर्थः । किंबहुनोक्तेनफलमितिवक्तव्यार्थमाह । प्रतिज्ञेति । प्रतिज्ञापालनायापि प्रतिज्ञांरक्षितुमेवबिभेद ॥ ९१ ॥ गदामृधेऽधोहननस्यप्रतिषिद्धत्वात्तवोरूभंक्ष्यामिगदयोरुवेगया बिभेत्स्यइतिभीमःपूर्वंकथंप्रतिज्ञामकरोदित्यतआह । धर्मतइति । अनेनभीमेनइयंप्रतिज्ञागदयोरुभेदनप्रतिज्ञा धर्मतश्चधर्मादेवकृता कुतःअनुरूपतःपापिनामधर्मेणवधस्यधर्मत्वात् अत्रदुर्योधनवधविषयेऽज्ञलोकतोपिधर्मस्यहानिर्नैवेत्यर्थः ॥ ९२ ॥ कथंनेत्यतआह । यइति । भीमस्यअप्रभावज्ञाऊरुहननसामर्थ्यानभिज्ञाः । येतेप्यापद्धर्ममन्वते । जानंति । मनुअ

न साक्षाद्धर्मतो वध्या ये च पापतमा नराः ॥ देवैर्हि वंचयित्वैव हताः पूर्वं सुरारयः ॥ ८९ ॥ अतोयमप्यधर्मेण हतो नात्रास्ति दूषणम् ॥ भीष्मद्रोणौ च कर्णश्च यदैवोपाधिना हताः ॥९० ॥ कोनु दुर्योधने पापे हते दोषः कथंच न ॥ प्रतिज्ञापालनायापि बिभेदोरू वृकोदरः ॥ ९१ ॥ धर्मतश्च प्रतिज्ञेयं कृतानेनानुरूपतः ॥ लोकतोपि न धर्मस्य हानिरत्र कथंचन ॥९२॥ ये भीमस्याप्रभावज्ञा आपद्धर्मं च मन्वते ॥ अवध्यत्वे शिववराद्गदाशिक्षाबलादपि ॥जरासंधोपमो यस्माद्धार्तराष्ट्रः सुविश्रुतः ॥ ९३॥ तस्मात्स धर्म एवायं भीमचीर्ण इति ब्रुवन् ॥ अपि संशयिनं चक्रे धर्मराजं जगत्पतिः॥९४॥भूभारक्षतिजो धर्मो मच्छुश्रूषात्मकश्च यः॥भीमस्यैव भवेत्सम्यगिति बुद्ध्या परः प्रभुः॥९५॥

ववोधनइतिधातुः । प्राणनाशप्राप्तिरूपायामापदि यथाकथंचित्प्राणरक्षणस्यधर्मत्वात् । जरासंधसमबलं दुर्योधनंहंतुंसमर्थोभीमइतिजानतोलोकान्प्रत्यपिनधर्महानिरित्याह । अवध्यत्वइति । शिववरादवध्यत्वेविषये गदाशिक्षाबलादपि धार्तराष्ट्रोजरासंधेनोपमइतिविश्रुतः प्रसिद्धोयस्मात्तस्मात्प्रभावज्ञाअपिप्रतिज्ञापालनरूपापद्धर्ममन्वतइति संबंधः ॥ ९३ ॥ उक्तार्थमुपसंहरति । तस्मादिति । भीमचीर्णःभीमकृतःसुयोधनवधःधर्मएवेतिब्रुवन्नपि । जगत्पतिःसंशयिनंदुर्योधनवधःधर्मोवाधर्मइतिसंशयवंतंचक्रे ॥ ९४ ॥ संशयिनंकर्तुःकृष्णस्यप्रयोजनमाह । भूभारेति । मच्छुश्रूषात्मकःममसेवारूपःभूभारस्यक्षतिःसंहारः तज्जन्योयोधर्मःससम्यक्पूर्णाइतिबुद्ध्याचक्रइतिसंबंधः ॥ ९५॥

स्वेनैवकृष्णेनैवजनायतत्रस्थसर्वलोकायउक्तं दुर्योधनाद्याःधर्मेणैवहताइत्युक्तम् । पुनःपुनःश्रुत्वापियतःसंशयंनतत्याज ॥ ९६ ॥ ततःकारणात् असंशयंचकार । मुख्यधर्मं धर्मेणैवहतइत्येवंरूपंसमीचीनंधर्ममाह ॥ ९७ ॥ राजसुयोधनःधर्मेणैवहतइतिपुनःयद्वक्ष्यति तदर्जुनस्यनिश्चयार्थेयथार्थज्ञानार्थम् ॥ ९८॥ राजानंजघानेतिब्रुवंतंकृष्णं स्फुरितश्चंचलीभूतःअधरोष्ठोयस्यसनथाजगाद ॥ ९९ ॥ किमिति । पापेपापकर्मणिनिहिताःस्थापिताः ॥ १०० ॥ भीष्मादीनांहत्याहननमपितवैवपापम् । पापेपापकर्मणि निश्चयोयस्येतिविग्रहः त्वामपिअन्वयुःअनुगताः । यद्यस्मात्तस्मादितिसंबंधः । पापंत्वांपापानुगतंभीष्मादिसज्जनंच ॥ १०१ ॥ प्रयत्नात्युद्धादिप्रयत्नात् । निसर्गतश्चापि

स्वेनैव बलभद्राय जनाय च पुनःपुनः ॥ श्रुत्वाप्युक्तं न तत्याज्य संशयं धर्मजो यतः ॥ ९६ ॥ ततोप्यसंशयं कृष्णो न चकार युधिष्ठिरम् ॥ मुख्यधर्मं हि भगवान्बलायाह जनाय च ॥ ९७॥ धर्मेणैव हतो राजा धार्तराष्ट्रः सुयोधनः॥ इति यद्वक्ष्यति पुनर्निश्चयार्थेर्जुनाय च ॥ ९८ ॥ पुनः पुनर्धर्मत एव भीमो जघान राजानमिति ब्रुवंतम् ॥ जगाद कृष्णं स्फुरिताधरोष्ठः क्रोधात्सुपापो धृतराष्ट्रसूनुः ॥ ९९ ॥ त्वयैव पापे निहिता हि पार्थाः पापाधिकरत्वं हि सदैक एव ॥ इत्यूचिवांसं प्रजगाद कृष्णो न त्वत्समः पापतमः कदाचित् ॥ १०० ॥ भीष्मादिहत्यापि तवैव पापं यदन्वयुस्त्वामपि पापनिश्चयम् ॥ पापं च पापानुगतं च हत्वा कथं च नाप्यस्ति नचैव पापम् ॥ १०१॥ न पांडवेष्वास्ति ततो हि किंचित्पापं प्रयत्नाच्च निसर्गतोपि ॥ गुणाधिकास्ते मदुपाश्रयाश्च को नाम तेष्वण्वपि पापमाह ॥ १०२॥ निसर्गतःपापतमस्त्वमन्यान्धर्मस्थितान्पापपथे निधाय ॥ स्वयं च पापे निरतः सदैव पापात्सुपापां गतिमेव यासि ॥ १०३ ॥ इति ब्रुवंतं पुनराह कृष्णं दुर्योधनः पापकृतां प्रधानः ॥ स्वंतोत्तमो नाम क एव मत्तः को नाम दोषोऽस्ति मया कृतोत्र ॥ १०४ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥

स्वभावाद्वा । किंचित्पापंमदुपाश्रयात्मामुपाश्रितत्वात् तेपार्थाःगुणाधिकाःकोनामतेषुपांडवेषुअण्वपिईषदपिपापं आहब्रूयादित्यर्थः ॥ १०२ ॥ धर्मेस्थितानन्यान्भीष्मादीन् पापपथेपापमार्गेनिधाय सदापापेविष्णुवैष्णवद्वेषात्मकमहत्तरपापेनिरतःनात्पर्यवान् । स्वयंचस्वयमेवत्वमेवेत्यर्थः । पापात्सुपापांअतिपापतमां गतिंअंधंतमइत्यर्थःयासि ॥ १०३ ॥ स्वंतोत्तमःशोभनश्चासौअंतश्चतिसमीचीनांतःकरणंतेनउत्तमःशुद्धांतःकरणेनउत्तमइत्यर्थः । शोभनःअंतोमरणंयेषांतेनथा । तेषूत्तमोवा मत्तःमत्सकाशात् को नामनकोपीत्यर्थः । अत्रजन्मनिमयाकृतःकोनामदोषोस्ति ॥ १०४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

यज्ञैश्चइष्टं पूर्तैःवापीकूपतटाकैश्चरितम् । रिपूणांमूर्ध्निपदंनिहितंस्थापितम् । रणोन्मुखेनयुद्धाभिमुखेनमयासंग्रामशिरसि रणमुखे । अन्यत्किं इत.परमत्रशिष्टंकिमित्यर्थः । नकिमपिसर्वंकृतमेवेतिभावः ॥ १०५ ॥ इष्टाःअभीष्टाःभोगाःभुक्ताःपरमागतिः वीरस्वर्गाख्यागतिः प्राप्ताप्राप्तप्राया । दुःखिनःउत्पत्तितःएतावत्कालपर्यंतंदुःखिनस्तेपार्थाःदुःखमाप्स्यंति । उत्तरत्रेतिशेषः । यतःकूटयोधिनःकपटेनयुद्धकारिणः ॥ १०६ ॥ निभैःसदृशैःसद्भिरतएवधार्मिकैःधर्मनिष्ठैःशूरैःवीरैःउज्झितारहितारत्नहीना केवलाम्रन्मात्रावशिष्टाइयंमही ॥ १०७ ॥ नृपेदुर्योधनेविहिताकृतापतितेत्यर्थः । किंकर्तुं । तामेवबुद्धिंस्वंतोत्तमइत्यादिपूर्वोक्तांबुद्धिंदृढांनिश्चितांकृत्वा । तमसिपातयितुम् ॥ १०८ ॥ विशेषतः अंतेमृतिकाले आत्मानंस्वंसंभावयतः स्तुवतः । वासुदेवंश्रीनारायणंतत्परान्भागवतान् विनिंदतःनिंदांकुर्वतः । तत्रःकथंनस्यात्स्यादेवेत्यर्थः ॥ १०९॥ यदातत्रतमःप्राप्तिविषये

इष्टं च यज्ञैश्चरितं च पूर्तैः पदं रिपूणां निहितं च मूर्ध्नि ॥ मृत्युश्च संग्रामशिरस्यवाप्तो रणोन्मुखेनैव मया किमन्यत् ॥ १०५ ॥ इष्टा भोगा मया भुक्ताः प्राप्ता च परमा गतिः ॥ दुःखिनो दुःखमाप्स्यंति पार्थास्ते कूटयोधिनः ॥ १०६ ॥ चंद्रार्कसन्निभैः शूरैर्धार्मिकैः सद्भिरुज्झिता ॥ केवला रत्नहीनेयं पांडवैर्भुज्यतां मही ॥१०७ ॥ इत्युक्तवत्येव नृपे सुरेशैः प्रसूनवृष्टिर्विहिता पपात ह ॥ तामेवबुद्धिं धृतराष्ट्रसूनोः कृत्वा दृढां पातयितुं तमोंधे ॥ १०८ ॥ संभावयत आत्मानं वासुदेवं विनिंदतः ॥ तत्परांश्च कथं न स्यात्तमोंते च विशेषतः ॥ १०९ ॥ यदैकैकमलं तत्र दुःखाधिक्यं समुच्चयात् ॥ इति तत्कारयित्वेश आह मोघं तवाखिलम् ॥ ११० ॥ नृशंसस्य कृतघ्नस्य गुणवद्द्वेषिणः सदा ॥ यदि धर्मफलं ध्वांतं सूर्यवत्स्यात्प्रकाशकम् ॥ १११ ॥

एकैकंहरिनिंदनंवैष्णवनिंदनंवा आत्मस्तवनंवा इत्येकैकंअलंसमर्थम् । यदि त्रिषुमध्येएकेनैवतमःप्राप्तिःतर्हिद्वयोःप्रयोजनंकिमित्यतआह । दुःखेति । समुच्चयाद्धरिनिंदनादित्रयाणांमेलनाद्दुःखाधिक्यम् । तमसिदुःखोद्रेकोभवति इतिहेतोः ईशःकृष्णःतद्धरिनिंदनादित्रयंकारयित्वा तवअखिलमिष्टंचयज्ञैश्चरितंच पूर्तैरित्याद्युक्तमखिलं मोघंनिरर्थकंफलप्रदंनेत्यर्थः ॥ ११० ॥ नृशंसस्यहिंसकस्येत्यनेन पांडवेभ्यः विषदानलाक्षागृहप्रवेशनादिकंसूच्यते । कृतघ्नस्यकृतोपकारनाशकस्येत्यनेन पार्थकृतकलिंगचित्रसेनबंधमोचनाद्युपकारमानीनभवतीतिसूचितम् । सदागुणवतांपार्थविदुरादिसतां द्वेषिणस्तेयदि धर्मफलंस्यात्तर्हि ध्वांतमंधकारःसूर्यवत्प्रकाशकंस्यात् ॥ १११ ॥

निजजनस्यस्वभक्तजनस्येष्टदःअभीष्टदः । भगवान्कृष्णःइदंपूर्वोक्तंपुनःपुनर्वदन् भीमेनदुर्योधनःधर्मतोहतइतिजनेभक्तजनेख्यापयामास ॥११२॥ सतांसमस्तंहृद्यंमनोभीष्टम् । अयंदुर्योधनःपापएवेतिविनिश्चितःअर्थःअभिप्रायोयेषांतेतथा।संतःधर्मेणधर्मेणैवहतंभीमसेनेनहतंनृपंदुर्योधनंव्यजानन्॥११३॥सुमनोभिवृष्ट्या देवकृतपुष्पवृष्ट्या अपापदर्शी अपापोयंदुर्योधनइतिदर्शनशीलःयुधिष्ठिरःसदाससंशयोभूत् । दौर्योधनात्दुर्योधनेविद्यमानात् स्नेहात् ॥ ११४ ॥ ततःकृष्णःप्राप्तजयत्वाद्धर्षितैः भृशंनदद्भिस्तैःपांडुपांचालकैःसमेतः । विरिंचादिमुख्यैःसंपूजितःसन् । तैश्चपांडुपांचालकैश्चसंपूजितःसन् स्मयन्विस्मयंप्रापयन् रणांगणात्रणस्थानाद्ययौ ॥ ११५ ॥ संजयाच्छ्रुत्वापुत्रपातनमि

वदन् पुनः पुनरिदं धर्मतो हत इत्यपि ॥ ख्यापयामास भगवान् जने निजजनेष्टदः ॥ ११२ ॥ प्रख्यापिते वासुदेवेन धर्मे सतां सर्वेषां हृद्यमासीत्समस्तम् ॥ हतं च धर्मेण नृपं व्यजानन् पापोयमित्येव विनिश्चितार्थाः ॥११३ ॥ युधिष्ठिरोपापदर्शी सदैव ससंशयोभूत्सुमनोभिवृष्ट्या ॥ स्नेहाद्द्रौणिः संजयो रौहिणेयः दौर्योधनात्पापमित्येव चोचुः ॥११४ ॥ ततः कृष्णः पांडुपांचालकैस्तैर्भृशं नदद्भिर्हर्षितैः समेतः ॥ ययौ विरिंचेशसुरेंद्रमुख्यैः संपूजितस्तैश्च रणांगणात्स्मयन् ॥ ११५॥ ततः श्रुत्वा संजयाद्दुःखतप्तं संबोधयिष्यन् पितरं युयुत्सुः ॥ कृष्णस्य राज्ञश्च मतेनुयातो जगाम चान्वेव जनार्दनश्च ॥ ११६ ॥ धर्मयुक्तैश्च तत्त्वार्थैः लोकवृत्तानुदर्शकैः ॥ वाक्यै राजानमाश्वास्य प्रायात्पार्थान्पुनर्हरिः ॥ ११७॥ कालानुसारतो देवांश्चोपसंहर्तुमच्युतः ॥ ययौ सपार्थशैनेयः कुरूणां शिबिरं निशि ॥ ११८ ॥

तिशेषः । दुःखतप्तंपितरंसंबोधयिष्यन्बोधयितुमिच्छन्युयुत्सुःवैश्यकन्यायांधृतराष्ट्राज्जातोयुयुत्सुनामकः । राज्ञःधर्मराजस्यमतेअनुमतेअनुयातःरणस्थानाद्गच्छंतीः दुर्योधनभार्याःअनुयातइत्यर्थः । नागपुरमितिशेषः । अन्वेवयुयुत्सुमन्वेव ॥११६॥ धर्मयुक्तैःधर्मशास्त्रमनुसृतैःतत्त्वार्थैःयथार्थाभिप्रायकैः । लोकवृत्तिलोकप्रवृत्तिंअनुदर्शकैः । लोकेकेचित्पुत्राःपितुःपरतःगच्छंतीति लोकप्रवृत्तिप्रदर्शकैःवाक्यैः राजानंधृतराष्ट्रंआश्वास्यानुनीय ॥ ११७ ॥ कालानुसारतःकलिकालानुसारेण देवांश्चअत्रोत्पन्नान् धृष्टद्युम्नादिदेवान् । निशिशिबिरंप्रतिययौ ॥ ११८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

आयादगात् । श्वानश्वसृगालाश्च भूतानि च श्वसृगालभूतानि तैः संभक्ष्यमाणं श्वसंतं श्वासान्मुंचंतं प्रभग्नसक्थिशयानं भुविपतितं अमुंदुर्योधनंददर्श ॥ ११९ ॥ दुःखशोकाभि हतः शोकस्येष्टवियोगस्यदुःखमितिदुःखशोकः । तेनाभिहतःसंतप्तः । साक्षादनिष्टायमानंदुःखंतज्जन्यःशोकःकंठशोषादिःतेनेतिवा । सोश्वत्थामापार्थान्विनिंद्यआह । किमिति । हेभूपअत्रेदानींमयाकिंकार्यमित्याहेतिसंबंधः । नृपःदुर्योधनः निष्पांडवतां पांडवरहिततांत्वंकुरुष्वेत्यभिप्रायेण अमुंद्रौणिंपांसुभिःधूलिभिःअभिषेकिणंसाम्राज्याभिषेकवंतंव्यधात् ॥ १२० ॥ पांस्वभिषेकंकृतवतोऽभिप्रायमाह । उच्छिद्येति । पांडोःराज्ञःसंततिं संतानंउच्छिद्य विनाश्य । स्वक्षेत्रेस्वभार्यायांसंततिंकृत्वा । जनयित्वेत्यर्थः

तदैव हार्दिक्यकृपान्वितोयात्सुयोधनं द्रौणिरमुं शयानम् ॥ प्रभग्नसक्थिं श्वसृगालभूतैः संभक्ष्यमाणं ददृशे श्वसंतम् ॥ ११९ ॥ सदुःखशोकाभिहतो विनिंद्य पार्थान्मया भूप किमत्र कार्यम् ॥ इत्याह निष्पांडवतां कुरुष्वेत्यमुं व्यधात्पांस्वभिषेकिणं नृपः ॥ १२० ॥ उच्छिद्य संततिं पांडोः कृत्वा स्वक्षेत्रसंततिम् ॥ तया भूरक्षणहृदा सोभिषिक्तस्तथेत्यगात् ॥ १२१ ॥ स कृष्णभीमपार्थानां भयादेव पुनर्वनम् ॥ कृपसात्वतसंयुक्तो विवेश गहनं रथी ॥१२२॥ तस्य चिंतयतो द्रोणवधं दुर्योधनस्य च ॥ नागान्निद्रा निशीथे च ध्वांक्षान्न्यग्रोधवासिनः ॥ १२३ ॥ हतान्सुबहुसाहस्रानेकेनातिबलेन तु ॥ कौशिकेन निरीक्ष्यैव प्राह तौ कृपसात्वतौ ॥ १२४ ॥ निदर्शनेन त्वेतेन प्रेरितः परमात्मना ॥ यामि पांडुसुतान्हंतुमित्युक्त्वारुरुहे रथम् ॥ निवारितोपि ताभ्यां स प्राद्रवच्छिबिरं प्रति ॥ १२५ ॥ अनुजग्मतुस्तावपि तं शिबिरद्वारि चैक्षत ॥ उग्ररूपधरं रुद्रं स्वकीयां तनुमेव सः ॥ १२६ ॥

तया संतत्या भूरक्षणंकार्यमितिहृत् तेनहृदावांछया अभिषिक्तःसन् द्रौणिःतथेतितवक्षेत्रेपुत्रमुत्पादयामीत्युक्त्वा अगात् ॥ १२१ ॥ रथोस्यास्तीतिरथी सद्रौणिःकृपसात्वताभ्यांकृपकृतवर्माभ्यांसंयुक्तःसन्गहनंगंभीरंवनम ॥ १२२ ॥ दुर्योधनस्यवधंचिंतयतस्तस्यद्रौणेःनिद्रानागात्नागता । निशीथेअर्धरात्रौ अतिबलेनएकेनकौशिकेनउलूकेनहतान् न्यग्रोधवासिनःवटवृक्षवासिनोसुबहुसहस्रान् ध्वांक्षान्काकान् निरीक्ष्यकृपसात्वतौ कृपकृतवर्माणौप्रतिप्राह ॥ १२३ ॥ १२४ ॥ अनेननिदर्शनेनकौशिकहतवायसदृष्टांतेन परमात्मनाप्रेरितोहम् ॥ १२५ ॥ तावपिकृपकृतवर्माणावपितंद्रौणिमनु सद्रौणिः शिबिरद्वारिपांडवानामितिशेषः ॥ १२६ ॥ ॥ ॥ ॥

बहुकोटिस्वरूपिणावासुदेवेन परीतमावृतं । स्वकीयांतनुंस्वस्वरूपभूतं उग्ररूपधरंरुद्रंऐक्षत । गौतमीसुतःकृपीसुतः । अश्वत्थामानंवासुदेवंदृष्ट्वैव अत्रसत्अबिभेत् ॥१२७॥ अत्रशिबिरद्वारिसदाशिवःहरःस्वात्मनापिस्वस्वरूपेणापि द्रौणिनावासुदेवाज्ञयैव वासुदेवप्रेरणेनैव अयुध्यत् । सर्वायुधान्यपिअयसच्च ॥ १२८ ॥ ननु शिवःवासुदेवाज्ञयापिस्वस्वरूपेणद्रौणिनाकथमयुध्यतइत्यतआह । अचिंत्येति । यद्यस्माद्धरिशक्तिरचिंत्यातस्मात्स्वात्मनापिअयुध्यत् । हरिशक्तेरचिंत्यत्वे प्रत्यक्षसिद्धंलिंगमाह । दृश्यंतइति । हियस्मादात्महंतारोपिदृश्यंतेअतोहरिशक्तेरचिंत्यत्वात्तयाहरिशक्त्याप्रेरितेनस्वात्मनैवस्वस्वरूपभूतरुद्रेणैव॥१२९॥अखिलेष्वायुधेषुनिगीर्णेषुसत्स्वपिद्रौणिरात्मानं स्वं पशुंकृत्वापशुत्वेपरिकल्प्येत्यर्थः । स्वात्मस्थायस्वांतर्यामिणे विष्णवेविष्णुप्रीत्यर्थमित्यर्थः । मानसंध्यानात्मकंयज्ञंचक्रे ॥ १३० ॥ द्रोणपुत्रायआत्मनेद्रोणपुत्रत्वेनोत्पन्नायआत्मनेददौ ॥ १३१ ॥ उवाचच । किमिति । प्रभविष्णुनासामर्थ्यशीलेन आदिष्टःआज्ञापितोहं इयंतंकालमेवएतत्कालपर्यंतं तुविशेषशक्त्यापार्थशिबिरमरक्षम् ॥१३२॥ तदिच्छयाहरीच्छयानिर्दिष्टःप्रेरितः अहमितिशेषः । इमाञ्छिबिरस्थान्हंतुं आयुधानिचदास्ये ॥१३३ ॥ वृषःनंदीध्वजेयस्येतिविग्रहः । सर्वाःहेतीःसर्वायुधानि । अंतर्दधेतिरोहितोभूत् ॥ १३४ ॥ सद्रौणिःनिर्यास्यंतिनिर्गमिष्यंति । तान्सर्वशःसर्वान्जहितमित्येकंपदम् । धातूनामनेकार्थत्वाद्धतंयुबामितिशेषः । ओहाक्त्यागइतिधातोर्लोटिमध्यमपुरुषद्विवचनं । अंतःशिबिरस्येतिशेषः । कृतांतवत् मृत्युवत् ॥ १३५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

परीतं वासुदेवेन बहुकोटिस्वरूपिणा ॥ दृष्ट्वैव वासुदेवं तमत्रसद्गौतमीसुतः ॥ १२७ ॥ वासुदेवाज्ञयैवात्र स्वात्मनापि सदाशिवः ॥ अयुध्यदग्रसच्चाशु द्रौणेः सर्वायुधान्यपि ॥ १२८ ॥ अचिंत्या हरिशक्तिर्हि दृश्यंते त्वात्मनोपि हि ॥ अतस्तया प्रेरितेन स्वात्मनैवाखिलेष्वपि ॥ १२९ ॥ आयुधेषु निगीर्णेषु द्रौणिर्यज्ञं तु मानसम् ॥ चक्रेऽऽत्मानं पशुं कृत्वा स्वात्मस्थायैव विष्णवे ॥ १३० ॥ यज्ञतुष्टेन हरिणा प्रेरितः शंकरः स्वयम् ॥ आत्मने द्रोणपुत्राय ददौ सर्वायुधानि च ॥ १३१ ॥ उवाच चाहमादिष्टो विष्णुना प्रभविष्णुना ॥ अरक्षं पार्थशिबिरमियंतं कालमेव तु ॥ १३२ ॥ तदिच्छयैव निर्दिष्टो दास्ये मार्गं तवाद्य च ॥ आयुधानि च सर्वाणि हंतुं सर्वानिमाञ्जनान् ॥ १३३ ॥ इत्युदीर्य प्रदायाशु सर्वा हेतीर्वृषध्वजः ॥ तत्रैवांतर्दधे सोपि प्रोवाच कृपसात्वतौ ॥ १३४ ॥ ये निर्यास्यंति शिबिराज्जहि तं तांश्च सर्वशः ॥ इत्युक्त्वा प्रविवेशांतर्धन्वी खड्गीकृतांतवत् ॥ १३५ ॥

पारावताश्वंपारावतसमानवर्णाश्वं धृष्टद्युम्नंवीतनिद्रःविगतनिद्रोसौधृष्टद्युम्नः तनूजंपुत्रम् ॥१३६॥ समुत्थितंतल्पादितिशेषः। शस्त्रपाणिंमांजहि। यतःत्वंवीरोसि। शस्त्रपाणेर्व धोयःसवीरधर्मः शस्त्रपूताःलोकाःयुद्धे शस्त्रहतानांयेलोकास्तेशस्त्रपूताइत्युच्यते वीरस्वर्गाख्यालोकाइत्यर्थः। मेसंत्वितिब्रुवाणंधृष्टद्युम्नंप्रतिसोश्वत्थामारुषाजगाद॥ १३७॥ किमिति। हेसुपाप ब्रह्महणांब्राह्मणहंतॄणांसुलोकाः उत्तमलोकानसंति। गुरुद्रुहांगुरुहंतॄणांविशेषतः नसंतीतिकिंपुनः किमुवक्तव्यमित्यर्थः। त्वद्विधास्त्वत्सदृशाःयेपापतमाः तेधर्मयुद्धेनवधायअर्हकाः योग्यान। अवश्यंनिश्चयेनभाविनं अपरिहार्यमित्यर्थः। तंमृत्युंविचिंत्यनिश्चित्यतूष्णींबभूव। कुतोनिश्चयइत्यतआह। स्वप्नेपीति। हियस्मात्त

पारावताश्वं स तदा शयानमुपेत्य पद्भ्यां समताडयच्च ॥ वक्षस्यसाववदद्वीतनिद्रो जाने भवंतं हि गुरोस्तनूजम् ॥ १३६ ॥ समुत्थितं मां जहि शस्त्रपाणिं शस्त्रेण वीरोसि स वीरधर्मः॥ लोकाश्च मे संत्वथ शस्त्रपूता इति ब्रुवाणं स रुषा जगाद ॥ १३७ ॥ न संति हि ब्रह्महणां सुलोका विशेषतश्चैव गुरुद्रुहां पुनः ॥ न धर्मयुद्धेन वधार्हकाश्च ये त्वद्विधाः पापतमाः सुपाप ॥ १३८ ॥ अवश्यभाविनं मृत्युं धृष्टद्युम्नो विचिंत्य तम् ॥ तूष्णीं बभूव स्वप्नेपि नित्यं पश्यति तां मृतिम् ॥ १३९ ॥ द्रौणिं च कालरात्रिं च द्रोणपातादनंतरम् ॥ विशसंतं कृषंतीं च स्वप्ने पश्यति पार्षतः॥ १४०॥ समाक्षिपद्द्रोणसुतोस्य कंठे निबध्य मौर्वीं धनुषोप्युरस्थः॥ ममंथ कृच्छ्रेण विहाय देहं ययौ निजस्थानमसौ च वह्निः॥ १४१ ॥ ततः शिखंडिनं हत्वा युधामन्यूत्तमौजसौ ॥ जनमेजयं च पांचालीसुतानभिययौ ज्वलन् ॥ १४२॥

स्मादितिशेषः। स्वप्नेपितांमृतिंनित्यंपश्यति। धृष्टद्युम्नइतिशेषः ॥ १३८ ॥ १३९॥ स्वप्नदृष्टंविशदयति। द्रौणिमिति। पार्षतोधृष्टद्युम्नःद्रौणिंविशसंतंमारयंतंकालरात्रिंमहाकालीमृत्युदेवतामित्यर्थः। कृषंतीमाकर्षयंतींस्वप्नेपश्यति ॥१४०॥ द्रोणसुतः अस्यकंठेधनुषोमौर्वीज्यां समाक्षिपत्। उरस्थःसन्धनुषोमौर्व्या कंठमितिशेषः। निबध्यकृच्छ्रेणममंथचकर्ष। वह्निरग्न्यवतारः। असौधृष्टद्युम्नःकृच्छ्रेणदेहंविहाय॥ १४१॥ शिखंड्यादिचतुरःद्रुपदपुत्रान्हत्वा पांचाल्याः द्रौपद्याःसुतानृपति॥ १४२॥

शयनादुत्थितैस्तैः पांचालीसुतैः शरैरस्यमानः अभिक्षिप्तोपिसन् असुक्षेपणइतिधातुः । खड्गेनजघ्निवान् तथाकाशिराजात्मजाकालीतदात्मजंभैमसेनिंभीमपुत्रमेकंकृते । अन्यान् पांडवात्मजान् द्रौपदीसुतेभ्योन्यान्सर्वान् सव्यापसव्येनसव्यापसव्यक्रमेणजघ्निवान् ॥ १४३ ॥ तदाहननसमयेअंतर्हितःलीनःशर्वःतंभीमपुत्रम् । अतःसभीमपुत्रः शर्वत्रातनामासीत् । सशर्वत्रातःअत्रकैलासे ॥ १४४ ॥ पुराकाशिराजेनस्वदौहित्रस्य कालीसुतस्यअमरत्वाय अवध्यत्वार्थंशंकरःअर्थितःअर्थितोयतः तेनकारणेनकृपायुतःअनुकंपयायुक्तोसौशंभुः एनंभीमपुत्रंजुगोपअरक्षत् ॥ १४५ ॥ ननु भूलोकंकिमर्थंनागादित्यतआह । वासुदेवेति । शिवःपरीक्षितःपरीक्षिन्नाम्नः अभिमन्युसुतस्य

तैरुत्थितैरस्यमानः शरैः खड्गेन जघ्निवान् ॥ सर्वान्सव्यापसव्येन तथान्यान्पांडवात्मजान् ॥ १४३ ॥ कृत एकं भैमसेनिं काशिराजात्मजात्मजम् ॥ तं तदांतर्हितः शर्वः कैलासमनयत्क्षणात् ॥ १४४ ॥ स शर्वत्रातनामासीद तस्तत्रैव सोवसत् ॥ पुरार्थितः स्वदौहित्रस्यामरत्वाय शंकरः ॥ काशिराजेन तेनासौ जुगोपैनं कृपायुतः ॥ १४५ ॥ वासुदेवमतं ज्ञात्वा साम्राज्याय परीक्षितः ॥ वारयामास भूलोकं नैव याहीत्यमुं शिवः ॥ १४६ ॥ सामान्यतो पांडवाय द्रौणिनाप्यभिसंधितम् ॥ तद्रूपेणैव रुद्रेण विनैनमिति चिंतितम् ॥ १४७ ॥ अस्त्रं ब्रह्मशिरश्चैनं न जघानैक्यतस्तयोः ॥ चेकितानादिकांश्चैव जघानान्यांश्च सर्वशः ॥ १४८ ॥ स चेदिपांचालकरूशकाशीनन्यांश्च सर्वान्विनिहत्य वीरः ॥ शिशून् स्त्रियश्चैव निहंतुमुग्रः प्राज्वालयत्तच्छिबिरं समंतात् ॥ १४९ ॥ ॥ध॥

साम्राज्यायराज्याभिषेकार्थं वासुदेवमतंकृष्णस्याभिप्रायंज्ञात्वा । अमुंशर्वत्रातं भूलोकंप्रतिनैवयाहीति निवारयामास ॥ १४६ ॥ ननु अपांडवायेतिद्रौणिनाअस्त्रस्याभिसंधानादस्य जीवनंकथमित्यतआह । सामान्यइति । सामान्यतःविशेषंविनेत्यर्थः । अपांडवायापांडववधार्थंअभिसंधितंप्रयोजितं अस्त्रमितिशेषः । यद्यपितथापितद्रूपेणैव द्रौण्यात्मकेनैव रुद्रेणएनंभीमपुत्रंविनेतिचिंतितम् । अतइतिशेषः ॥ १४७ ॥ तयोरैक्यतःद्रौणिरुद्रयोरेकस्वरूपत्वाद्ब्रह्मशिरोनामास्त्रं एनंशर्वत्रातंनजघान ॥ १४८ ॥ काशीन्काशिराजसंबंधिनः शिशून्स्त्रियश्चनिहंतुंशिबिरंसमंतात्सर्वतः प्राज्वालयत्समदाहयत् । अतएवोग्रःक्रूरइत्यर्थः ॥ १४९ ॥

तत्रहन्यमानवीरेषुमध्येजिजीविषून् जीवितुमिच्छून् पलायमानान् कृपकृतवर्माणौनिजघ्नतुः । पार्षतस्यधृष्टद्युम्नस्य एकस्तुएकएवसूतःदैवयोगात् जीवनहेतुभूतादृष्टयोगात् । शेषितःमृतेःसकाशादुर्वरितः ॥ १५० ॥ जीवनप्रकारंदर्शयति । खड्गेनेति । प्रहृतंप्रहारंहार्दिक्यकर्तृकखड्गकरणकप्रहारमित्यर्थः । दृष्ट्वा संस्पर्शात्खड्गस्पर्शात्प्रागेवभूमौपपातह । अमुनाकृतवर्मणा तमसाअंधकारनिमित्तेननज्ञातः ॥ १५१ ॥ अन्यस्यहननेआसक्तेसति कृतवर्मणीतिशेषः । यत्रोपप्लाव्ये तस्यैद्रौपद्यैसर्ववृत्तमकथयत् । साद्रौपदी । पुत्रादिवधश्रवणेनदुःखितासतीभीमायाह । कौरवशिबिरंप्रत्यागत्याहेतिभावः । धन्वीसभीमःगौतमीसुतंअश्वत्थामानंप्रतिप्राद्रवत् ॥ १५२ ॥ तदंतरेशि

जिजीविषूंस्तत्र पलायमानान् द्वारि स्थितौ गौतमसात्वतौ च ॥ निजघ्नतुः सर्वतः पार्षतस्य सूतस्त्वेकः शेषितो दैवयोगात् ॥ १५० ॥ खड्गेन प्रहृतं दृष्ट्वा हार्दिक्येन पपात ह ॥ भूमौ प्रागेव संस्पर्शान्न ज्ञातस्तमसामुना ॥ १५१ ॥ अन्यासक्ते समुत्थाय प्राद्रवद्यत्र पार्षती ॥ तस्या अकथयत्सर्वं सा भीमायाह दुःखिता ॥ प्राद्रवद्रथमारुह्य स धन्वी गौतमीसुतम् ॥ १५२ ॥ तदंतरे द्रौणिरपि प्रयातः कृष्णासुतानां मुदितः शिरांसि ॥ आदाय हार्दिक्यकृपानुयातो दुर्योधनं सन्निकृष्टप्रयाणम् ॥१५३॥ दृष्ट्वा तदुक्तं च निशम्य पापः तुष्टोत्यजत्साध्विति देहमाशु ॥ भीमार्जुनाभ्यामथ केशवाच्च भीताः पृथक् द्रौणिमुखाः प्रयाताः ॥ १५४॥ तत्रैकलं द्रोणसुतं रथेन यांतं रथी मारुतिरन्वधावत् ॥ तमाद्रवंतं प्रसमीक्ष्य भीतः पराद्रवद्द्रौणिरतिद्रुताश्वैः ॥ १५५ ॥ आद्रवंतं पुनर्दृष्ट्वा भीमं द्रोणात्मजो रुषा ॥ आवृत्य युध्यन्विजितोऽस्त्रं ब्रह्मशिर आददे ॥ १५६ ॥

बिरात्सूतगमनंशिबिरंप्रतिभीमस्यागमनं तयोर्गमनागमनयोरंतरेमध्येमुदितःहार्दिक्यकृतवर्मभ्यामनुयातः । अनुगोद्रौणिःकृष्णासुतानांशिरांस्यादाय प्रतिगृह्यसन्निकृष्टप्रयाणंआसन्नमरणंदुर्योधनंप्रयातःप्राप ॥ १५३ ॥ दृष्ट्वाशिरांसीतिशेषः । तदुक्तंद्रौण्युक्तंनिशम्य साध्वितिसाधुकृतमित्युक्त्वेतिशेषः । तुष्टःसन् देहमत्यजत् अतएवपापः । द्रौणिमुखास्त्रयःपृथक् एकोएकत्रअन्योअन्यत्रप्रयातःइतरोपितथेतिपृथक् ॥ १५४ ॥ तत्रत्रिषुमध्येरथेनयांतंगच्छंतं एकलंसहायरहितं आद्रवंतंअनुयांतंतंभीमंअभिद्रुतैःगमनवेगवद्भिःअश्वैःपराद्रवत् ॥ १५५ ॥ पुनराद्रवंतंआगच्छंतं भीमंदृष्ट्वा आवृत्ययुध्यन् विजितःसन् ब्रह्मशिरोस्त्रंब्रह्मास्त्रंआददे ॥ १५६ ॥ ॥ ॥

एतस्मिन्नंतरेभीमंहंतुंब्रह्मास्त्रग्रहणकाले । तत्रयुद्धस्थलेतदस्त्रं अव्यर्थतामगोघतांनयन्प्रापयन् भीमंचअव्यर्थतांअवध्यतांनयन्नगमदितियोजना ॥ १५७ ॥ कृष्णेन अस्त्रभीमौकिमर्थमव्यर्थतांनेतव्यावित्यतआह । अवध्यइति । यस्मादवध्यः अस्त्रंचामोघंतस्मादुभयं अव्यर्थतांनयन् अगमदितिसंबंधः । भीमास्त्रयोरवध्यत्वामोघत्वेकुत इत्यतआह । विष्णुनेति । भीमस्यावध्यत्वंअस्त्रस्यामोघत्वंचेत्युभयंविष्णुनैवक्लृप्तंसंकल्पितं यस्मात्तस्माद्भीमोवध्यएव अस्त्रंचामोघमेव । भीमस्यप्रकारांतरेणावध्य त्वमाह । भीमइति । तदस्त्रंब्रह्मास्त्रंभीमएवभीमात्मकमित्यर्थः । भीमस्यब्रह्मपदप्राप्तेर्नियतत्वात् । भीमेनाभिमन्यमानमित्यर्थः ॥ १५८ ॥ यद्यस्मादत्रब्रह्मास्त्रेगायत्रीमंत्रः तत्तस्माद्ब्रह्माध्यानदेवता ध्यानकर्तृदेवताजगत्प्रसविताब्रह्मादिजगतःउत्पादकःस्वयंनारायणोदेवोध्येयः नतुसूर्यःप्रतिपाद्यइतिभावः ॥ १५९ ॥ कृष्णोद्रौणेःसाहसंधर्मार्जु नौप्रत्याहेत्याह । ऊचेचेत्यादिना । कृष्णःस्वायुधानांस्वस्यचक्राद्यायुधानांउद्धृतौउद्धारेअशक्तेनापि द्रौणिनापुरायद्याचनंकृतं चक्रस्येतिशेषः । तत्पार्थयोर्युधिष्ठिरार्जुनयो

एतस्मिन्नंतरे कृष्णो धर्मजेनार्जुनेन च ॥ तत्रागमत्तदस्त्रं च भीमं चाव्यर्थतां नयन् ॥ १५७ ॥ अवध्यो भीमसेन स्तदस्त्रं चामोघमेव यत् ॥ विष्णुनैवोभयं यस्मात्क्लृप्तं भीमोस्त्रमेव तत् ॥ १५८ ॥ गायत्री तत्र मंत्रो यद्ब्रह्मा तद्ध्या नदेवता ॥ ध्येयो नारायणो देवो जगत्प्रसविता स्वयम् ॥ १५९ ॥ ऊचे च पार्थयोः कृष्णो यत्कृतं द्रौणिना पुरा ॥ स्वायुधानां याचनं चाप्यशक्तेन तदुद्धृतौ ॥ १६० ॥ पृष्टेनोक्तं त्वया हीनां कृत्वा दुर्योधनाय गाम् ॥ दातुं तदायुधं मेधेत्येवमुक्त्वात्मनोदितम् ॥ मैवं कार्षीः पुनरिति ध्यायताब्धेस्तटे स्वमु ॥ १६१ ॥ तदस्त्रं प्रज्वलद्दृष्ट्वाऽपांडवत्वंवि धित्सया ॥ धरायां द्रौणिना मुक्तं कृष्णेन प्रेरितोर्जुनः ॥ १६२ ॥

पुरःऊचे । द्रौण्युक्तमप्यूचइतिचार्थः ॥ १६० ॥ द्रौण्युक्तंकिमित्यतआह । पृष्टेनेति । पृष्टेनआयुधैःकिंप्रयोजनमितिपृष्टेनद्रौणिनोक्तंमामितिशेषः । किमिति । गांत्वयाहीनांरहि तांकृत्वा त्वांहत्वेत्यर्थः । दुर्योधनायगांपृथ्वींदातुं त्वदायुधंतवआयुधंचक्रंमेदेहीतिद्रौणिनोक्तेसति अब्धेस्तटेस्वमु स्वंउइतिभिन्नंपदम् । उईशःस्वंस्वस्वरूपंध्यायता । उतापेक्ष्ययमी शेचेतियादवः । स्वंउस्वस्वरूपमेवेतिवात्मनाआत्मनामयेत्यर्थः । एवमनेनप्रकारेणपुनःकदापिमाकार्षीःमाकुर्वित्युक्तमिति कृष्णऊचइतिसंबंधः । एवमुक्तोमयाद्रौणिःमा मिदंप्रत्युवाचह । प्रयुज्यभवतःपूजांयोत्स्येकृष्णत्वयासहेति ऐषिकपर्वणि ॥ १६१ ॥ प्रकृतमनुसरति । तदस्त्रमिति । धरायामपांडवत्वस्यपांडुनृपतेःसंतानाभावस्य विधि त्सयाकर्तुमिच्छयाद्रौणिनामुक्तंप्रयोजितं प्रज्वलत्तदस्त्रंब्रह्मास्त्रंदृष्ट्वा कृष्णेनप्रेरितोर्जुनः ॥ १६२ ॥

द्रोणपुत्रायस्वस्त्यस्तु भूतेभ्यःप्राणिभ्य.मह्यंचस्वस्त्यस्तुइतिब्रुवन् अस्त्रशांत्यैद्रौणिमुक्तास्त्रशमनार्थंतदेवास्त्रंब्रह्मास्त्रमेव व्यसर्जयत्मुमोच ॥ १६३ ॥ ननु द्रौणेरस्त्रहननमे वनप्राप्तं एवंसतिद्रौणे.स्वस्त्यस्त्विनिब्रुवन् किमर्थमस्त्रंव्यसर्जयदित्यतआह । अनस्त्रज्ञेति । अनस्त्रज्ञेषुअस्त्रानभिज्ञेषुमुक्तंतद्ब्रह्मास्त्रं अस्त्रमुचंपुरुषंहन्याद्यतः ततःकारणादित्य र्थः । अस्त्रानभिज्ञेषुयुधिष्ठिरादिषु द्रौणिनाऽस्त्रस्यमुक्तत्वात्तदस्त्रंद्रौणिमेवधक्ष्यति । तदस्त्रंद्रौणिंनदहत्वित्यभिप्रायेणस्वस्त्यस्तुद्रोणपुत्रायेत्युक्तमितिभावः । तथापीष्टभूतं शत्रुहननंकथंनैच्छदित्यतआह । गुरुभक्त्येति ॥ १६४ ॥ तर्हि भूतेभ्यःस्वस्त्य.स्त्वितिकिमर्थमब्रवीदित्यतआह । तदस्त्रयोरिति । तेचतेअस्त्रेचतदस्त्रे तयोःसंहृतिर्विनाशः

स्वस्त्यस्तु द्रोणपुत्राय भूतेभ्यो मह्यमेव च ॥ इति ब्रुवंस्तदेवास्त्रमस्त्रशांत्यै व्यसर्जयत् ॥ १६३॥ अनस्त्रज्ञेषु मुक्तं त द्धन्यादस्त्रमुचं यतः ॥ गुरुभक्त्या ततो द्रौणेः स्वस्त्यस्त्वित्याह वासविः ॥ १६४ ॥ तदस्त्रयोस्तु संयोगे भूतानां संहृ तिर्भवेत् ॥ भूतानां स्वस्तिरप्यत्र कांक्षिता करुणात्मना ॥१६५॥ तथाप्यस्त्रद्वयं युक्तं भूतानां नाशकृद्ध्रुवम् ॥ तस्मा न्निवारयन्योगं तयोर्मध्येऽभवत्क्षणात् ॥ १६६ ॥ निःसीमशक्तिः परमः कृष्णः सत्यवतीसुतः ॥ संस्थाप्यास्त्रद्वयं दू रे तावाह पुरुषोत्तमः ॥१६७॥ संति ह्यस्त्रविदः पूर्वे प्रायश्चैतन्न तैः कृतम् ॥ लोकोपद्रवकृत्कर्म संतः कुर्युः कथं क्वचित् ॥ १६८ ॥ इत्युक्ते फल्गुनः प्राह मया मुक्तं महापदि ॥ शांत्यर्थमेव च विभो क्षंतव्यं भवता ततः ॥ १६९ ॥ द्रौणि रप्येवमेवाह तौ वेदपतिरब्रवीत् ॥ निवर्त्यतामस्त्रमिति शक्रसूनुस्तथाऽकरोत् ॥ १७० ॥ निवर्तनाप्रभुं द्रौणिं वासु देवोप्यभाषत ॥ १७१ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥

अस्त्रसंयोगेस्पष्टत्वान्मह्यमित्यस्याभिप्रायोनोक्तइतिभावः ॥ १६५ ॥ तथाप्यर्जुनप्रार्थनेसत्यपिध्रुवंनिश्चयेननाशकृद्भवेदितिशेषः । यतस्तस्मात्कृष्णःश्रीवेदव्यासःतयोर्ब्रह्मा स्त्रयोर्योगंसंमेलनंनिवारयन्सन् तत्क्षणादस्त्रसंयोगात्पूर्वमेव तयोरस्त्रयोर्मध्येऽभवत् ॥ १६६ ॥ तावर्जुनद्रौणीपूर्वंप्रायोस्त्रविदोहिअभूवन्नित्यर्थः । संतीदानीमपीतिशेषः । तै श्चएतादृशंलोकविनाशकारकंकर्मनकृतम् । संतःक्वचिन्महापद्यपिकथंकुर्युः । नकुर्युरित्यर्थः ॥ १६७ ॥ १६८ ॥ महापदिसत्यांशांत्यर्थं अस्त्रशांत्यैमुक्तं ततःकारणात्क्षंत व्यम् ॥ १६९ ॥ १७० ॥ शक्रसूनुःतथा अस्त्रापहरणमकरोत् । निवर्तनेअस्त्रोपसंहरणेअप्रभुमसमर्थं वासुदेवःयादवेशःकृष्णः ॥ १७१ ॥ ॥ ॥ ॥

पांडवःपार्थःक्षत्रतेजाःक्षत्रवर्चस्वी । कौमारादपिकौमारावस्थामारभ्यब्रह्मचारीब्रह्मचर्यव्रतनिष्ठोयतःततः ॥ १७२ ॥ अयमश्वत्थामाअब्रह्मचर्यात्ब्रह्मचर्याभावात् दुर्यो धनक्षेत्रेसंतानोत्पादने प्रतिज्ञातत्वादितिभावः । निवर्तनेनशक्तइत्यर्थः ॥ १७३ ॥ प्रागेवब्रह्मास्त्रयोगात्पूर्वमेव भीमेनजितःपराजितस्त्वं भीमायैवनैसर्गिकंसहजंमणिंदेहि । केवलयावाचापिवाक्यमात्रेणैवेत्यर्थः ॥ १७४ ॥ इत्युक्तोद्रौणिःमूर्ध्निजातं गंधध्वांतयोर्दुर्गंधांधकारहरंनाशकंरत्नंमणिम् ॥ १७५ ॥ उत्कृत्यमस्तकादुत्पाट्यभीमायददौ

क्षत्रतेजा ब्रह्मचारी कौमारादपि पांडवः ॥ निवर्तने ततः शक्तो नायं द्रोणात्मजोपि सन् ॥ १७२ ॥ अब्रह्मचर्यादि त्युक्ते व्यासो द्रौणिमभाषत ॥ निवर्तनासमर्थस्त्वं देहि नैसर्गिकं मणिम् ॥ १७३ ॥ जितः प्रागेव भीमेन भीमायैव महा प्रभम् ॥ अपि केवलया वाचा पार्थेभ्योस्त्रं निवर्तय ॥ १७४ ॥ इत्युक्तो मूर्धजं रत्नं जरामरणनाशनम् ॥ क्षुत्तृट् श्रमहरं दिव्यं गंधध्वांतहरं शुभम् ॥ १७५ ॥ उत्कृत्य भीमाय ददौ मुक्ताः पंचैव पांडवाः ॥ अस्त्रादिति ततो वेदभ र्ता वासविमब्रवीत् ॥ १७६ ॥ तात मुक्तं द्रौणिनापि त्वमेवास्त्रं निवर्तय ॥ इत्युक्तस्तं प्रणम्याशु संजहारार्जुनोपि तत् ॥ १७७ ॥ यादवेशोथ गौतम्याः सुतमाहैकसंततेः ॥ वाचा निवर्तयास्त्रं त्वमित्युक्ते द्रौणिरब्रवीत् ॥ १७८ ॥ प क्षपाताद्दिच्छसि त्वं भागिनेयस्य संततिम् ॥ तत्रैव पातयाम्यस्त्रमुत्तरागर्भकृंतने ॥ १७९ ॥ वासुदेवः पुनः प्राह य दि हंतव्य एव ते ॥ गर्भस्तथापि नैवास्त्रं पातयास्मिन्कथंचन ॥ १८० ॥ अभिमन्योर्मृतस्यैव देहे पातय मानद ॥ एवं त्वदस्त्रनिहतं गर्भमुज्जीवयाम्यहम् ॥ १८१ ॥ ॥ ॥ ॥ ॥

अस्त्रात्पंचैवपांडवाःमुक्ताइत्यब्रवीदितिशेषः । एवकारःअन्यःकश्चनन्मुक्तइतिसूचकः । ततोवेदभर्तावेदव्यासः ॥ १७६ ॥ तदस्त्रम् ॥ १७७ ॥ एकसंततेःएकस्मात्पांडवसं तानात्सकाशात् ॥ १७८ ॥ भागिनेयस्य अभिमन्योःतत्राभिमन्युसंताने उत्तरायाःउत्तरानाम्न्यभिमन्युधर्मपत्न्याःगर्भस्यकृंतनेछेदनार्थंपातयामि ॥ १७९ ॥ यदितेत्वया गर्भोहंतव्यःपातनीयइत्याशयः तथाप्यस्मिन्नुत्तरागर्भेऽस्त्रंनैवपातय ॥ १८० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

हेमानद अस्त्रज्ञत्व मानिन् मृतस्याभिमन्योर्देहे पातय गर्भे त्वदस्त्रपातनं एवमेवमृतदेहे अस्त्रपातनवद्व्यर्थमेवेतिभावः । कुतोऽयर्थमित्यतआह । उज्जीवयामीति । त्वदस्त्रनिहतं गर्भंउज्जीवयामीतिप्राहेतिसंबंधः ॥ १८१ ॥ ईषत्क्रुद्धइवतंद्रौणिमाह । द्रौणिःस्वभक्तइति । कृष्णस्यईषत्क्रुद्धत्वमितिभावः ॥ १८२ ॥ शक्तितोपियततःहंतुंप्रयत्नंकुर्वतस्तेसकाशात् अहंगर्भमुज्जीवयामि ॥ १८३ ॥ वर्षसाहस्रंसहस्रवर्षपर्यंतं पांडवानांसंततिः । तावत्सहस्रवर्षपर्यंतं तांपार्थसंततिम् ॥ १८४ ॥ पार्थसंततिंजिघांसोःहंतुमिच्छतःधार्तराष्ट्रस्यभूयःसुदुष्करंकर्तुमशक्यं मदाज्ञांविनैवेतिशेषः । तंतुंसंतानंकर्तुमिच्छतस्ते दुष्टांमतिंजानामि ॥ १८५ ॥ सावांछापार्थसंतानोच्छेदनदुर्योधनतंतुवृद्धि

पातये गर्भ एवाहमित्यूचे गौतमीसुतः ॥ अथाह वासुदेवस्तमीषत्क्रुद्ध इव प्रभुः ॥ १८२ ॥ दुर्मते पश्य मे वीर्यं यत्ते शक्यं कुरुष्व तत् ॥ उज्जीवयाम्यहं गर्भं यततः शक्तितोपि ते ॥ १८३ ॥ संततिर्वर्षसाहस्रं पांडवानां भवेद्भुवि ॥ मत्पालितां न कश्चित्तां तावद्धंतुं क्षमः क्वचित् ॥ १८४ ॥ जानामि ते मतिं दुष्टां जिघांसोः पार्थसंततिम् ॥ चिकीर्षोर्धार्तराष्ट्रस्य तंतुं भूयः सुदुष्करम् ॥ १८५ ॥ मदाज्ञया सा विफला भवित्री वांछा मुमुक्षोर्विमुखस्य विष्णोः ॥ यथैव तेनैव नराधिरूढो गम्यस्तव स्यान्न च भूमिभागः ॥ १८६ ॥ दुर्गंधयुक्तो व्रणसंचितांगः सदा चरः स्या विपिनेषु मंदः ॥ यावद्भुवि स्यादिह पार्थ तंतुर्व्यासोपि तं प्राह तथेति देवः ॥ १८७ ॥ रूपद्वयेनापि हरेस्तथोक्तो जगाद कालीतनयं स कृष्णम् ॥ त्वया सह स्यान्मम संगमो विभो यथेष्टतः स्यान्न च मेत्र विघ्नः ॥ १८८ ॥

विषयकावांछातवेतिशेषः । मदाज्ञयाविफलाव्यर्थाभवित्री । कथमिव । विष्णोर्विमुखस्यविरुद्धकर्मणःमुमुक्षोःमोक्षेच्छायथाविफलातथेत्यर्थः । तेनैवमत्कामविरुद्धकामेनैवनराधिरूढःमनुष्यगोचरः भूमिभागःभूप्रदेशः तवगम्योनस्यात् ॥ १८६ ॥ यावदिहभुविपार्थानांतंतुःसंततिःतावत् व्रणैःसंचितानियुक्तानिअंगानिअवयवानियस्येतिविग्रहः । मंदोनिर्बलःविपिनेषुवनेषुसदासर्वदाचरःचरन्स्याःभविष्यसि । व्यासोपिदेवःतंद्रौणिंतथेति कृष्णोक्तंयथातथेतिप्राह ॥ १८७ ॥ हरेःरूपद्वयेनव्यासकृष्णाख्यरूपद्वयेन तथादुर्गंधादिमान्स्यादित्युक्तःसोश्वत्थामाकाल्याःसत्यवत्यास्तनयंकृष्णंव्यासंजगाद । किमिति । हेविभो ममत्वयासहसंगमःयथेष्टतःस्यात् अत्रसंगमविषये ॥ १८८ ॥

ओमितितथास्त्वितिसद्रौणिःतंव्यासम् ॥ १८९ ॥ स्वप्नदृष्टंकिमित्यतआह । स्वप्नेति । आत्मनास्वेननिशिद्रौपदेयानांद्रौपदीपुत्राणांवधःस्वप्नेदृष्टःअर्जुनेनद्रौपद्यैद्रौपदीपुत्र शोकापनुत्तयइत्यर्थः । स्वस्यवधंप्रति प्रतिज्ञातम् ॥ १९० ॥ तेनैवार्जुनेननिबध्यबद्धा ॥ १९१ ॥ निर्यापणंनिष्कासनंइत्यादिस्वप्नदृष्टंयत् तत्सत्यमभूदित्यनुस्मरन् य याविनिपूर्वेणान्वयः । शिबिरंप्रतिनयनादिव्यावृत्त्यर्थंप्राप्येत्युक्तम् । तदेवंश्रीनारायणंविचिंतयन् कृष्णोकंदुर्गंधादिव्यसनम् ॥ १९२ ॥ उत्तरद्वापरेभविष्यद्द्वापरे विभ जिष्यतिविभागंकरिष्यति । ततोवेदविभागकरणानंतरम् ॥ १९३ ॥ सप्तर्षिसंज्ञाशब्दोयएकःकश्चनसप्तर्षिरित्यर्थः । स्वरूपेणरुद्रेणनिष्ठया भक्तिदार्ढ्येन ॥ १९४ ॥

इत्युक्त ओमिति प्राह भगवान्बादरायणः ॥ तं प्रणम्य ययौ सोपि स्वप्नदृष्टमनुस्मरन् ॥ १८९ ॥ स्वप्ने हि द्रौपदेयानां वधो दृष्ट्वात्मना निशि ॥ अर्जुनेन प्रतिज्ञातं द्रौपद्यै स्ववधं प्रति ॥ १९० ॥ निबध्यानयनं चैव तेनैव शिबिरं प्रति ॥ मुंचेति द्रौपदीवाक्यं नेति भीमवचस्तथा ॥ १९१ ॥ कृष्णवाक्यान्मणिं हृत्वा देशान्निर्यापणं तथा ॥ इत्यादिस्वप्नदृष्टं यत्प्रायः सत्यमभूदिति ॥ चिंतयन्प्रययौ देवं द्रौणिः शस्त्रभृतांवरः ॥ १९२ ॥ स कृष्णोक्तमपि प्राप्य बादरायणशिष्यताम् ॥ प्राप्योत्तरद्वापरे च वेदान्संविभजिष्यति ॥ १९३ ॥ ततः सप्तऋषिर्भूत्वा पाराशर्यप्रसादतः ॥ एकीभावं स्वरूपेण यास्यत्यच्युतनिष्ठया ॥ १९४ ॥ कृपोथ पांडवान्प्राप्य गौरवात्पूजितश्च तैः ॥ अभूदाचार्य एवासौ राज्ञां तत्तंतुभाविनाम् ॥ १९५ ॥ बादरायणशिष्यत्वं पुनः प्राप्य भजन्नमुम् ॥ साकं स्वभागिनेयेन भाव्येको मुनिसप्तके ॥ १९६ ॥ कृतवर्मा द्वारवतीं ययौ कृष्णानुमोदितः ॥ १९७ ॥

तैःपार्थैःअसौकृपःतेषांपार्थानांतंतौवंशे भाविनांउत्पत्स्यमानानांराज्ञांक्षेमकांतानांआचार्यः । आचिनोतिचशास्त्रार्थानाचारान्ग्राहयत्युत । स्वयमाचरतेयस्तुतमाचार्यंप्रचक्षतइत्युक्तलक्षणवानाचार्योभूत् ॥ १९५ ॥ पुनःपांडवसंतानोच्छेदनानंतरम् । शिष्यत्वंप्राप्यअमुंव्यासंभजन्कृपःभागिनेयेनद्रौणिनासाकंसहमुनीनांसप्तकंतास्मिंस्तथा सप्तमुनिष्वित्यर्थः । एकःएकोमुनिःभावीभविता ॥ १९६ ॥ कृष्णेनानुमोदितःअनुमतः ॥ १९७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तद्द्रौणिरत्नंमणिं तन्मणिमितिक चित्पाठः । सचासौमणिश्चेतिविग्रहः । तांकृष्णांपर्यसांत्वयत् । अनुनिनाय भीमवाक्येनविकोपा पुत्रवधनिमित्तकोपरहितासाद्रौपदी राज्ञेयु धिष्ठिरायमणिंददौ ॥ १९८ ॥ किमर्थंददावित्यतआह । राजार्हइति । राजार्हेमणौभीमेनमह्यंदत्तेसति लोकाएवलौकिकाः राजाचमारुतेःस्त्रीपक्षपातंशंकेयुः ॥ १९९ ॥ इतिभर्तृ रियत्प्रियंस्नेहःतेनहितंभर्तृहितमित्यर्थः । तस्मिन्रताकृष्णाराज्ञेमणिंददौ । सोपिराजागवांकिरणानां राजेवसूर्यइव ॥ २०० ॥ वेदेश्वरेणकृष्णेनव्यासेन यदूत्तमेनकृष्णेनचयु क्ताः पार्थाःसभार्याःसंतः निजराजधानींनागपुरंययुः । किंकृत्वा अंतःस्वगेहस्थान्दुर्योधनादीन् अरीन्च्छत्रून्हत्वा केकानिव संतोभागवताःअंतर्हृद्गृहस्थान् अरीन्कामादी

कृष्णायै तं मणिं दत्त्वा भीमस्तां पर्यसांत्वयत् ॥ विकोपा भीमवाक्येन राज्ञे सा च मणिं ददौ ॥ १९८ ॥ राजार्हे च मणौ दत्ते मह्यं भीमेन लौकिकाः ॥ स्त्रीपक्षपातं राजा च शंकेयुर्मारुतेरिति ॥ १९९ ॥ मणिं राज्ञे ददौ कृष्णा भर्तृप्रियहिते रता ॥ सोप्याबध्य मणिं मूर्ध्नि रेजे राजा गवामिव ॥ २०० ॥ वेदेश्वरेणापि यदूत्तमेन कृष्णेन युक्ता स्तत आशु पार्थाः ॥ ययुः सभार्या निजराजधानीं हत्वेव संतोंतररीन् स्वराज्यम् ॥ २०१ ॥ युधिष्ठिरस्यानु विचित्रवीर्यसुतस्य पादावभिवंदमानम् ॥ आकृष्य भीमं परमेश्वरोयोमयाकृतिं धात्पुरतो नृपस्य ॥ २०२ ॥ भीमाकृतिं तां स सुयोधनेन कारायितामभ्यसने गदायाः ॥ आश्लिष्य चूर्णीकृतवानसृग्वमन्हा तात भीमेति वदन्पपात ॥ २०३ ॥ तमाह कृष्णो न हतोद्य भीमो न च त्वयान्यैरपि शक्यतेसौ ॥ हंतुं स्वबुद्धिः प्रथिता त्वयाद्य पापा हि ते बुद्धिरद्यापि राजन् ॥ २०४ ॥

न्हत्वेत्युपलक्षणं हरेरपरोक्षंप्राप्येतिग्रास्यम । स्वराज्यविमोक्षमिवेत्यर्थः ॥ २०१ ॥ परमेश्वरःकृष्णःयुधिष्ठिरस्यअनु युधिष्ठिरकृतवंदनानंतरं विचित्रवीर्यसुतस्यधृतराष्ट्रस्यपादौ अभिवंदमानं भीममाकृष्यअपसार्य अयोमयाकृतिंलोहप्रचुरांप्रतिमां नृपस्यधृतराष्ट्रस्यपुरतोपेधात् अधात् ॥ २०२ ॥ सधृतराष्ट्रःसुयोधनेनगदाया.अभ्यसनेअभ्यासार्थंका रायितांकारितां भीमाकृतिंभीमप्रतिमां आश्लिष्यचूर्णीकृतवान् असृग्वमन्हातातभीमेतिवदन् हतोसीतिवदन्निति शेषः । पपातस्वयमिति शेषः ॥ २०३ ॥ त्वयाअन्यैःसुरासुरैरपि असौभीमोहंतुंनशक्यते अयंतेत्वयास्वबुद्धिः प्रथिताप्रख्यापिता । हेराजन्अद्यापितवबुद्धिः पापा पापरता हि।पुत्राणांनाशेसत्यपिपापबुद्धिर्नगतेत्याश्चर्यमितिभावः॥ २०४ ॥

स्वबुद्धिदोषात् अतिपापशीलाश्चतेपुत्राश्चपापशीलपुत्राइतिआख्यायेषांतानितथा तानिचतानिपापानिचतानिविवर्धयित्वातैःपुत्रैःवशंनीतःप्रापितःसन् अद्यफलंपाप फलंभुंजन्सन्भीमसेनेक्रोधितुंनार्हसि ॥ २०५ ॥ तस्यभीमस्ययेऽनुजाद्याःअनुजाःअर्जुनादित्रयः । आदिशब्देनद्रौपद्यादिद्वाराविवक्षिताः तेपिववंदिरइतिशेषः ॥ २०६ ॥ ननुभीममाकृष्य अयोमयाकृतिंकिमर्थमधादित्यतस्तदभिप्रायमाह । वज्रादिति । वज्राच्चवज्रादपिदृढदेहत्वाद्धेतोः अविकारेहस्तपादादिभंगरहिते वृकोदरेसत्यपि अस्यधृतराष्ट्रस्यदोषःबुद्धिस्थदोषः । विवृतःप्रकाशितोनस्यादितिहेतोःकृष्णेनवंचितः । धृतराष्ट्रइतिशेषः ॥२०७॥ पूर्वंराज्ञोभीमेमहान्यःकोपःसइदानींनास्तीति

स्वबुद्धिदोषादतिपापशीलपुत्राख्यपापानि विवर्धयित्वा ॥ नीतो वशं तैः फलमद्य भुंजन्न क्रोधितुं चार्हसि भीमसेने ॥ २०५ ॥ इत्युक्ते शांतबुद्धेव राज्ञाहूतो वृकोदरः ॥ अभ्यवंदत तत्पादावनुजाद्याश्च तस्य ये ॥ २०६ ॥ वज्राच्च दृढदेहत्वादविकारे वृकोदरे ॥ न दोषो विवृतोऽस्य स्यादिति कृष्णेन वंचितः ॥ २०७ ॥ सर्वानाश्लिष्य च प्रेम्णा युयोज नृप आशिषः ॥ कुलनाशकरः पापः शापयोग्यस्तव त्वहम् ॥ २०८ ॥ इत्युक्त्वैव प्रणमतो गांधारीसुपदांगुलीः ॥ ददर्श धर्मराजस्य पटांतेन प्रकोपिता ॥ २०९ ॥ तस्याः क्रोधाग्निनिर्दग्धनखः स कुनखोऽभवत् ॥ २१० ॥ वंदमानं पुनर्भीममाह सा क्रोधविह्वला ॥ अधर्मतः कथं भीम सुतं मे त्वं निजघ्निवान् ॥ २११ ॥ इत्युक्तोऽस्याः शमयितुं क्रोधमग्रे वृकोदरः ॥ प्राह न प्राणसंदेहे पापं स्यात्पापिनो वधे ॥ २१२ ॥ ॥ ॥

ज्ञापयितुं सर्वानित्युक्तम् । सर्वान्युधिष्ठिरादीन्पंचेत्यर्थः ॥२०८॥ प्रकोपितागांधारी अहंशापयोग्यइत्युक्त्वाप्रणमतः धर्मराजस्यसुपदांगुलीः पादयोरंगुल्यःशोभनाश्चताः पदांगुल्यश्चतथा ताःपटांतेननयनबद्धवस्त्रांतेनददर्श ॥ २०९ ॥ तस्याःगांधार्याःधर्मराजः ॥ २१० ॥ पुनर्युधिष्ठिरांगुलिदर्शनानंतरं क्रोधेनविह्वलाचंचलासागांधारीसुतंसुयोधनम ॥ २११ ॥ गांधार्याइत्युक्तेसति अस्याः गांधार्याःक्रोधंशमयितुं शांत्यर्थंअग्रेप्रथमतःप्राह । किमिति । प्राणसंशयेप्राणत्यागसंदेहेप्राप्तेसति पापिनःहरिद्वेषिणःवधेबधविषयेपापंनस्यात् अधर्मेणहतइतिगांधारीमतमंगीकृत्याहेतिभावः । नत्वधर्मेणहतः ॥ २१२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

बलवतोभीमस्यप्राणसंदेहः कथमित्यतस्तस्याभिप्रायमाह । प्रतिज्ञेति प्रतिज्ञाहानिमंतराविना मेप्राणसंदेहोनास्तीतिजानन्वृकोदरःप्राहेतिपूर्वेणसंबंधः ॥ २१३ ॥ यथा-
प्रतिज्ञंप्रतिज्ञामनतिक्रम्यरणेभ्रातृव्यान्वैरिणःनिजघ्नुषोहंतुः क्षत्रजातेर्ममअधर्मःक नक्कापीत्यर्थः । तद्धानौप्रतिज्ञाहानौसत्यांजीवनंनतु नास्त्येव हियस्मात्तस्मात्प्रतिज्ञाहानि
रेवप्राणसंदेहइत्यर्थः ॥ २१४ ॥ प्रतिज्ञांविनापिगदायुद्धेनाभेरधोहननंधर्मएवेत्याह । पापाइति । अन्यवत्धार्मिकहननवत् पापानांहरिद्वेषिणांहननंपापायनभवतीतिश्रु
तिराह हियस्मात्तस्मान्नैकृतिकान्कपटिनःअसुरान् निकृत्याछद्मना ॥ २१५ ॥ तांश्रुतिमुदाहरति । निकृत्यानिकृतिमिति । निकृत्याछद्मना निकृतिंकपटिनंहन्यात् । नि
कृत्याधार्मिकान्नैवेतिसदाअपौरुषेया अतएवपरमाश्रुतिःपैंगभिःपैंगिमहापैंगिनामभिः ऋषिगणैःपठ्यते ॥ २१६ ॥ नरेणसतैवमनुष्यभूतेनैवेत्यर्थः । सतापवित्रेणनरेणे

इत्युक्त्वा तां पुनः प्राह प्रतिज्ञाहानिमंतरा ॥ न मेस्ति प्राणसंदेह इति जानन्वृकोदरः ॥ २१३ ॥ यथाप्रतिज्ञं भ्रातृ
व्यान् रणे मम निजघ्नुषः ॥ कोऽधर्मः क्षत्रजातेस्तु तद्धानौ जीवनं नहि ॥ २१४॥ पापा न शुद्धधर्मेण हंतव्या इति
च श्रुतिः ॥ अन्यवत्पापहननं पापायेत्याह हि श्रुतिः ॥ अतोऽसुरान्नैकृतिकान्निकृत्या घ्नंति देवताः ॥ २१५ ॥ निकृ
त्या निकृतिं हन्यान्निकृत्या नैव धार्मिकान् ॥ इति श्रुतिर्हि परमा पठ्यते पैंगिभिः सदा ॥ २१६ ॥ इत्युक्ता तं पुनः
प्राह कथं ते नरशोणितम् ॥ पीतं नरेणैव सता न पीतमिति सोऽब्रवीत् ॥ २१७ ॥ दंतांतरं न मे प्राप शोणितं त्वत्सु
तस्य तत् ॥ प्रतिज्ञापालनायापि प्रतिकर्तुं च तत्कृतम् ॥ २१८ ॥ भीषणाय च शत्रूणां पीतवच्च प्रदर्शितम् ॥ वेद
दृष्टश्च धर्मोऽयमिति पापजनं प्रति ॥ २१९ ॥ इत्युक्तोवाच नैवांधद्वयस्यास्य वृकोदर ॥ घ्नता पुत्रशतं यष्टिमात्रं
चोर्वरितं त्वया ॥ २२० ॥

तिवा । तेत्वयानरस्यशोणितंरक्तं कथंपीतमितिप्राह ॥ २१७ ॥ सभीमःनेसुतस्यतच्छोणितंमेदंतानामंतरंअंतर्भागंनप्रापनप्राविशत् । प्रतिज्ञायाःपालनायापिप्रतिज्ञापाल
नार्थमपि प्रतिकर्तुंचदुःशासनकृतवस्त्राहरणादिकर्मणःप्रतिकर्तुमित्यर्थः । तत्तादृशंकृतम् ॥ २१८ ॥ रक्तपानेमुख्यकारणद्वयमुक्त्वापुनःकारणांतरमप्याह । भीषणा
येति । पीतवत्पीतमिव । अयंप्रतिज्ञापालनरूपोधर्मः । पापजनंप्रतिचदुष्टजनंप्रत्येव वेदेनदृष्टःप्रतिपाद्यः । नतुसज्जनंप्रतीतिभावः ॥ २१९ ॥ इत्युक्तागांधारीउवाच ।
किमिति । हेवृकोदर अस्यांधस्यद्वयोरावयोरित्यर्थः । धृतराष्ट्रस्तुजात्यंधः स्वनेत्रबंधनात्त्वरयाअप्यंधत्वमुक्तम् । पुत्रशतंघ्नताहंत्रात्वयायष्टिमात्रंअवलंबनयष्टिःदंडः
तत्स्थानीयत्वेन एकोपिपुत्रइत्यर्थः । चकथंनैवोर्वरितंनावशेषितम् ॥ २२० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तांगांधारीमाह । किमिति । पापिष्ठाःहरिद्वेषाख्यपापरताःवधायवधार्थंयोग्यःअपराधोयेषांतेतथा । अतएवसर्वैर्हताइत्याह । सागांधारीपुनराह । किमिति । येनमत्पुत्रेण तवअपराधोनकृतःसएकोपिपुत्रःनास्तिकिंनाभूत्किमित्याहेतिसंबंधः । सभीमःतांप्रति अकृतापराधःपुत्रइतिवाक्यशेषः । नास्तीत्यवदत् ॥ २२१ ॥ ननु भीमःकेनाभि प्रायेणएकोप्यनपराधीनास्तीत्यवददतस्तस्याभिप्रायमाह । सर्वैरिति । विनिश्चितंनिश्चयःकृतः ॥ २२२ ॥ अत्रयुद्धेसुपापानिपापरूपकर्माणि पुरापिबाल्यावस्थामार भ्याज्ञातवासपर्यंतंच । धर्मसहितंधर्मशास्त्रार्थयुक्तंयथाभवतितथाब्रुवाणंवासुदेवम् ॥ २२३ ॥ अवज्ञायतिरस्कृत्य बहिःसभायाःबहिःयांतंदुर्योधनंसर्वेऽन्वगच्छन् । वृ

तामाह भीमः पापिष्ठा वधयोग्यापराधिनः ॥ सर्वे हता इति पुनः साह येनाकृतस्तव ॥ अपराधः स एकोपि किं ना स्तीत्यवदत्स ताम् ॥ २२१ ॥ सर्वैः समेतैः कृष्णस्य बंधनाय विनिश्चितम् ॥ २२२ ॥ अन्यानि च सुपापानि कृता न्यत्र पुरापि च ॥ वासुदेवं सभासंस्थं ब्रुवाणं धर्मसंहिताम् ॥ २२३ ॥ पुनः पुनरवज्ञाय यांतं दुर्योधनं बहिः ॥ सर्वे न्वगच्छन्नित्यादीन्यभिप्रेत्य वृकोदरः ॥ २२४ ॥ नैकोप्यनपराधी मे स्वयंताननुशिक्षितुम् ॥ असमर्था मयि क्रोधं किं करोषि निरर्थकम् ॥ २२५ ॥ इत्युक्ता साभवत्तूष्णीं क्रमात्सर्वैश्च पांडवैः ॥ वंदिता व्यासवाक्याच्च किंचिच्छांता च साभवत् ॥ २२६ ॥ तस्या याश्च स्नुषाः सर्वास्ताभिः सह पुरस्कृताम् ॥ कृत्वा तं धृतराष्ट्रं च विदुरादींश्च सर्वशः ॥ २२७ ॥ पांडवाः प्रधनस्थानं सभार्याः पृथया सह ॥ कृष्णाभ्यां च ययुस्तत्र गांधार्यास्तपसो बलम् ॥ २२८ ॥ जानन्पांडवरक्षार्थं चिकीर्षुस्तत्तपोव्ययम् ॥ वेदेश्वरो ददौ चक्षुर्दिव्यं सत्यवतीसुतः ॥ २२९ ॥

कोदरोभीमः इत्यादीन्यभिप्रेत्यनिश्चित्य मनसीतिशेषः ॥ २२४ ॥ एकोपिमेअनपराधीनास्तीत्यवददितिशेषः । स्वयंत्वमित्यर्थः । तान्पुत्रान्अनुशिक्षितुंशास्तुंअसमर्था सती मयिनिरर्थकंक्रोधंवृथाकिंकरोषि ॥ २२५ ॥ व्यासवाक्यात्किंचिच्छांतागतक्रोधेत्यर्थः ॥ २२६ ॥ सभार्याःपांडवाःपृथयाकुंत्या कृष्णाभ्यांसत्यवतीदेवकीनंदनव्यासि ष्ठयादवाभ्यांसह । तस्याःगांधार्याःसर्वाःयाःस्नुषाःताभिःस्नुषाभिःसह । सहितांपुरस्कृतांपुरःस्थितांकृत्वा तंधृतराष्ट्रंविदुरादीन्सर्वशःसर्वांश्चपुरस्कृत्य प्रधनस्थानंरणभूमिंप्रतिय युः । अत्ररणस्थानेबलंसामर्थ्यंजानन् सत्यवतीसुतःतस्याःगांधार्याःतपोव्ययंतपोनाशंचिकीर्षुः कर्तुमिच्छुःदिव्यंचक्षुःददौ । गांधार्याइतिशेषः ॥ २२७ ॥ २२८ ॥ २२९ ॥

नेनदिव्यचक्षुषातत्ररणस्थाने सर्वान्दुर्योधनादीन्समाकुला दुःखेनेतिशेषः । यादवानामीशानंस्वामिनंकृष्णंशशाप । किमिति । नाशनंकृतम् । यद्यस्मात्तस्मात्तवकुलम न्योन्यतः परस्परंक्षयंनाशंगच्छतु ॥ २३० ॥ भगवानन्यथाकर्तुमीश्वरोपि स्वेनैवचिकीर्षितंकर्तुमिष्टमेव तत्कुलनाशनं एवंत्वदुक्तप्रकारेणैवास्त्वित्याह ॥ २३१ ॥ तेन शापप्रदानेनतस्याःगांधार्याः सागांधारी अतःतपोनाशात् भर्तृनःभर्तुःसकाशाद्धीना गुणतोनीचाभूदितिशेषः ॥ २३२ ॥ स्वस्यायोग्याद्गुणसमूहात् अधिकांस्तपोबलेनवृद्धान्नाशयेदितिहि एधमानद्विडित्यादि श्रुतिषुप्रसिद्धम् ॥ २३३ ॥ ततःकेशवःकृष्णः भर्तृणांदेहानाश्लिष्य प्ररुदतीःप्रलापंकुर्वतीःदुर्योधनादीनांसर्वाःस्त्रियःपत्नीःकृष्णायैदर्शयामास । पतीन्समालिंग्यविमुक्तकेशान्भीमाहतान्दर्शयेनान्यथेतीतिस्वप्रतिज्ञांसत्यांकर्तुंदर्शयामासेतिभावः ॥ २३४ ॥ पार्थाःपंचपार्थाःप्रसिद्धानांसतांद्रोणशल्यादीनां

तेन दृष्ट्वा प्रेतदेहान् सर्वांस्तत्र समाकुला ॥ शशाप यादवेशानं त्वयास्मत्कुलनाशनम् ॥ यत्कृतं तत्तव कुलं गच्छ त्वन्योन्यतः क्षयम् ॥ २३० ॥ इत्युक्तो भगवान्कृष्णो स्वचिकीर्षितमेव तत् ॥ अस्त्वेवमित्याह विभुरीश्वरोप्यन्यथा कृतौ ॥ २३१ ॥ तेन तस्यास्तपो नष्टं हीना साता हि भर्तृतः ॥ २३२ ॥ नाशयेद्धि स्वयं विष्णुः स्वयोग्यादधिकान्गुणान् ॥२३३ ॥ तत आश्लिष्य भर्तृणां देहान्प्ररुदतीः स्त्रियः ॥ सर्वा दुर्योधनादीनां दर्शयामास केशवः ॥ २३४ ॥ कृष्णायै सा च तं देवमस्तुवत्पूर्णषड्गुणम् ॥ ततो देहान्प्रसिद्धानां पार्थाः समदहन्सताम् ॥ अन्येषां धृतराष्ट्रादीन् पुरस्कृत्यैव कांश्चन ॥ २३५ ॥ सूतैः पंचभिरेव स्वैः सरस्वत्यां प्रचिक्षिपुः ॥ स्नेहान्नृपो यमौ च स्वानाजौ तस्मिन्न्ययोजयन् ॥ शवाः प्रायो बहुत्वेन तत्र तत्रैव संस्थिताः ॥ २३६ ॥

धृतराष्ट्रादीन्पुरस्कृत्यअन्येषांदुर्योधनादीनांदेहान्समदाहयन् तैरदाहयन्नितिभावः ॥ २३५ ॥ स्वैःस्वकीयैःपंचभिःसूतैः कांश्चदेहान्स्वानामितिशेषः । विचिक्षिपुःक्षेपयामासुः । नृपःयमौचआजौयुद्धे मृतदेहानांतस्मिन्क्षेपणकर्मणिस्वान्सूतान्न्ययोजयन्योजयामासुः । ननु पंचपार्थानांसूताःसतांदेहान्विचिक्षिपुः । युधिष्ठिरादित्रयःस्वांस्त्रीन्सूतान् सरस्वत्यांशवक्षेपणार्थं पुनःकिमर्थंन्ययोजयन्नित्यतआह । स्नेहादिति । बांधवस्नेहादित्यर्थः । शवाःप्रायःबहुत्वेनबहुत्वात् यत्रयत्रैवमृताःतत्रतत्रैवस्थिताः । अवशिष्टा. ॥ २३६ ॥

पानीयंतिलोदकांजलिमित्यर्थः । ददस्तुसःसुधृतराष्ट्रयुधिष्ठिरादिष्विति शेषः । दत्तेत्याह तंकर्णंअग्रजमित्याह ॥ २३७ ॥ ततःकर्णोस्मदग्रजइतिश्रवणानंतरं राजापरम दुःखितःसन् हाहेतिविलपन्प्रलापंकुर्वन्शशाप । किमिति । अतःपरंगुह्यंगोप्यंनतिष्ठतु ॥ २३८ ॥ धृत्याधैर्येणभृशंहताः पापभाजनीकृताः । हाकष्टमभूत् । ज्येष्ठमग्रजं कांगतिंनरकमित्यर्थः । कुत्सितगतिमितिवा । प्रतिपत्स्यामयास्यामः ॥ २३९ ॥ नारदेनसहवर्तमानःवासुदेवःकृष्णःसद्वाक्यैःदोषनिराकरणवचनैःशमयामास

ततो ददत्सु पानीयं गंगायां स्वजनस्य तु ॥ पृथा कर्णाय दत्तेति पार्थानाहाग्रजं च तम् ॥२३७॥ ततो हाहेति विलपन् राजा परमदुःखितः ॥ शशाप सर्वनारीणां गुह्यं हृदि न तिष्ठतु ॥ २३८ ॥ हा मातस्तव धृत्यैव वयं सर्वे भृशं हताः ॥ ज्येष्ठं पितृसमं हत्वा प्रतिपत्स्याम कां गतिम् ॥ २३९ ॥ एवं वदंतं कौंतेयं वासुदेवः सनारदः ॥ शमयामास सद्वाक्यैर्गुणान्कर्णस्य चाब्रवीत् ॥ २४० ॥ ततस्ते प्रेतकार्याणि चक्रुः सर्वेपि सर्वशः ॥ सर्वेषामधिराज्ये च स्थितोभूत्पांडवाग्रजः ॥ २४१ ॥ इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये अष्टाविंशोध्यायः ॥ २८ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥

शांतमकरोत् । कर्णस्यगुणांश्चअग्रेण्यत्वेषुप्रीतिकरणादिरूपान्दुर्गुणान् ॥ २४० ॥ सर्वेतेपार्थाःसर्वशःसर्वाणिदाहतिलोदकपिंडसंयोजनानुमासिकांतानि प्रेतकार्याणिचक्रुः । पांडवाग्रजःधर्मजःसर्वेषांराज्ञां अधिराज्येसाम्राज्येस्थितोभूत् ॥ २४१ ॥ यंगंगाजमदग्निजान्वयभवाद्विट्ठद्धिरण्याभिधात्पुत्रंप्राप जनार्दनंशमदमस्वाध्यायसंपद्युतात् ॥ पूर्तिंतस्यकृतौचविंशतितमोध्यायोष्टभिःसंयुतः श्रीमद्भारत भावनिर्णयोद्दीपिकायामगात् ॥ २८ ॥ इति श्रीमत्तात्पर्यनिर्णयटीकायां अष्टाविंशोध्यायः ॥ २८ ॥ श्रीकृ०



श्रीगुरुभ्योनमः ॐ यदैवेति । विप्रैर्युतौकृष्णौ युक्ताःयुधिष्ठिरभीमयोर्योग्याआशिषोदत्त्वातौयुधिष्ठिरभीमौ । द्वितीयाद्विवचनमेतत् । यदैवहर्षयामासतुः संतोषिणौचक्रतुः ॥ १ ॥ तदैवनाम्नाचार्वाकइतिप्रसिद्धम् । रक्षएवत्रिदंडीयतिर्भूत्वा विप्रास्त्वांगर्हयंतीतियुधिष्ठिरंगर्हयामासनिंदयामास । अतएवसुपापशीलः ॥ २ ॥ तद्वचनंभृशार्ताअतिदुःखिताःसंतः अमुंयतिवेषधारिणंशेपुः शप्तवंतः । शापविशदयति । अगर्हितमिति । हेपाप अस्माभिर्नित्यमगर्हितं अनिंदितं एनंराजानमस्माभिर्गर्हितंनिंदितमितिअद्येदानींयतःअवोचःउक्तवानसि ततःकारणात्त्वंआशुभस्मीभवेति विप्रैरितीरितेसति पापतमःसचार्वाकःक्षणाद्भस्मसाद्भस्माधीनोभूत् ॥३॥ वृष्णिसिंहःयादवश्रेष्ठःकृष्णः प्रोवाच कि

ॐ यदैव कृष्णौ सकलाधिराज्ये युधिष्ठिरं यौवराज्ये च भीमम् ॥ विप्रैर्युतावभिषिच्याशिषश्च युक्ता दत्त्वा हर्षयामासतुस्तौ ॥ १ ॥ तदैव चार्वाक इति प्रसिद्धं रक्षस्त्रिदंडी यतिरेव भूत्वा ॥ युधिष्ठिरं गर्हयामास विप्रास्त्वां गर्हयंतीति सुपापशीलः ॥ २ ॥ श्रुत्वैव तद्दुःखितमाशु धर्मजं दृष्ट्वा विप्राः शपुरमुं भृशार्ताः ॥ अगर्हितं नित्यमस्माभिरेनं यतोवोचो गर्हितमद्य पाप ॥ भस्मीभवाश्वेव ततस्त्वितीरिते क्षणादभूत्पापतमः स भस्मसात् ॥ ३ ॥ भस्मीकृतेस्मिन्यतिवेषधारिणि युधिष्ठिरं दुःखितं वृष्णिसिंहः ॥ प्रोवाच नायं यतिरुग्रकर्मा सुयोधनस्यैव सखा सुपापः ॥ रक्षोधमोयं निहतोद्य विप्रैस्तन्मा शुचः कृतकार्योद्य राजन् ॥ ४ ॥ इतीरितः शांतमनाः स विप्रान् संतर्पयामास धनैश्च भक्त्या ॥ ५ ॥ असांत्वयच्च बांधवान् स्वपौरसंश्रयादिकान् ॥ ददौ यथेष्टतो धनं ररक्ष चानुपूर्ववत् ॥ ६ ॥ स भीष्मद्रोणकर्णानां वधाद्दुर्योधनस्य च ॥ पापशंकी तप्यमानो राज्यत्यागे मनो दधे ॥ ७ ॥ ॥

मिति । अयंभस्मीकृतःपुमान्यतिर्न किंतुउग्रकर्मासुपापःरक्षोधमः राक्षसाधमः सुयोधनस्यसखैववयद्यस्मात्तस्मादयंविप्रैर्निहतः । हेराजन् माशुचःशोकंमाकुरु । त्वंकृतकार्योसितवविहितंदुष्टहननरूपंकार्यंविप्रैरेवकृतं अतस्त्वंकृतकार्योसीतिभावः ॥४॥ संतर्पयामाससंतृप्तांश्चकार ॥ ५ ॥ सम्यक्श्रयंतीतिसंश्रयाःस्वस्ययेपौराःपुरस्थाःसंश्रयाःभृत्याद्याश्चतएवआदयोयेषांतान् स्वस्यपौरादीन्बांधवांश्च असांत्वयत्सांत्वयामास । तेषांबंधुवधजन्यदुःखंशमयामासेतिभावः । बांधवादिभ्योधनंददौ । तान्पूर्ववदानुकूल्येनररक्ष च ॥ ६ ॥ सराजा पापमाशंकतेसौपापशंकीस्वस्यपापमभूदितिशंकमानःसन् दधेदध्रे ॥ ७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

अनुजायैरपिधर्मशासनंधर्मशिक्षणंउक्तः । सराजाभीमंसंप्रार्थयित्वा धर्मशिक्षणंमाकुर्वितिसंप्रार्थ्य । फल्गुनंत्वंसूक्ष्मधर्मंनवेत्सिनजानासिइत्याह ॥ ८ ॥ तस्मिन्नर्जुनेशक्रः इंद्रावतारोर्जुनःत्वत्तोपित्वत्सकाशादपितत्त्ववित्तत्त्वज्ञइतिश्रुत्वापि सराजाभीमं बप्राद्याअपिअयंशत्रुवधःधर्मइतिमत्स्नेहादेववादिनःवक्तारइतिएतद्धर्मे एतस्मिन्कृच्छ्रत्रुवधरूपेधर्मे ससंशयंचक्रइतिशेषः ॥ ९ ॥ एवमुक्तरीत्याशंकमानं राजानंप्रति कृष्णौअयंद्रोणादिविनाशःधर्मएवेतिशास्त्रोक्तयुक्त्याऊचतुः ॥ १० ॥ अव्ययौपुरुषोत्तमौकृष्णौतथापि स्वोक्त्यनंतरमपि नातिनिश्चितबुद्धिंनिश्चितबुद्धिरहितं तंराजानंहतानां स्वेनहतशत्रूणांपक्षगत्वेनतवशंकायाःमत्स्नेहादेव अधर्मंधर्ममितिवदंतीतिशंकायाःअगोचरःअ

सोनुजैः कृष्णया विप्रैरप्युक्तो धर्मशासनम् ॥ भीमं संप्रार्थयित्वैव न वेत्सीत्याह फल्गुनम् ॥ ८ ॥ तस्मिन् क्रुद्धे नृपं प्राहुर्विप्रास्त्वत्तोपि धर्मवित् ॥ शक्रोर्जुन इति श्रुत्वाप्येतद्धर्मे ससंशयम् ॥ ९ ॥ मत्स्नेहादेव सर्वेपि धर्मोयमिति वादिनः ॥ इत्येवं शंकमानं तमूचतुर्विप्रयादवौ ॥ १० ॥ कृष्णौ धर्मोयमित्येव शास्त्रयुक्त्या पुनःपुनः ॥ नातिनिश्चितबुद्धिं तं तदापि पुरुषोत्तमौ ॥ ११ ॥ हतपक्षगतत्वेन त्वच्छंकाया अगोचरः ॥ यतो भीष्मस्ततो याहि तमित्यूचतुरव्ययौ ॥ १२ ॥ स ताभ्यां भ्रातृभिश्चैव मुनिभिश्च समन्वितः ॥ भीष्मं ययौ लज्जितेस्मिंस्तं भीष्मायाह केशवः ॥१३॥ पृच्छेत्युक्तः स भीष्मेण पप्रच्छाखिलमंजसा ॥ अत्रोवाचाखिलान् धर्मान्कृष्णो भीष्मशरीरगः ॥ १४ ॥ भीष्मोप्याह हरिं पार्था बोधनीयास्त्वयैव हि ॥ का शक्तिर्मम देवेश पार्थान्बोधयितुं प्रभो ॥ १५ ॥ ॥

विषयोभीष्मोयतःततस्तंभीष्मंप्रतियाहि । धर्मंप्रष्टुमितिशेषः । इत्यूचतुः ॥ ११ ॥ १२ ॥ ताभ्यांकृष्णाभ्यांअस्मिन्धर्मराजेलज्जिते भीष्मोमयाघातितःअनेनसहकथंवक्तव्यमितिलज्जितेसतिकेशवःधर्मान्प्रष्टुं आगतंतंयुधिष्ठिरं भीष्मायाह ॥ १३ ॥ भीष्मेणधर्ममितिशेषः । पृच्छेत्युक्तःसराजाअंजसासम्यक्लज्जांहित्वेत्यर्थः । अखिलंप्रष्टव्यंपप्रच्छ । तत्रप्रश्नेकृतेसति ॥ १४ ॥ ननु कृष्णःस्वयंकिमर्थंधर्मान्नाहेत्यतआह । भीष्मइति । त्वंकिंनबोधयसीत्यतआह काशक्तिरिति । हेप्रभो देवेशाश्चतेपार्थाश्चेतिविग्रहः । अतएवबोधयितुंममकाशक्तिःशक्तिर्नास्तीत्यर्थः ॥ १५ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

सूक्ष्मंतत्त्वमपिपरंतत्त्वंचप्रवक्ष्यामीत्याह ॥ १६ ॥ राज्ञः प्रथमतः आदौभगवद्धर्मपालनंवैष्णवधर्माणांप्रवर्तनंधर्मः तदर्थंवैष्णवधर्मप्रवर्तनार्थं कंटकोद्धारः कंटकानांधर्मनिबंधकायवैष्णवानांउद्धारःउत्पाटनंदुष्टसंहारइत्यर्थः । प्रथमतःमुख्योधर्मइत्यावर्त्ययोज्यम् । भागवताःभगवत्संबंधिनोपिअन्येपिधर्माः राज्ञोधर्माइतियोज्यम् ॥ १७ ॥ केतेधर्माइत्यतआह । मनइति । अच्छिद्रत्वेनअव्यवधानेनअर्चनंचधर्मइत्यर्थः । विष्णुरेवकुतःपूज्यइत्यतआह । पूर्णेति । एकस्यैवविष्णोः स्वातंत्र्यंकथमित्यतआह । तद्वशमिति । अन्यज्जगत्सर्वदासंसारेमुक्त्यवस्थायांचतद्वशंविष्णवधीनमितिविनिश्चयः निर्णयः रमापितद्वशेतिचार्थः ॥ १८ ॥ देवतानांरमादीनांक्रमस्यतारतम्यस्यविज्ञानंधर्मइतिसर्वत्रसंबध्यते । हरेःसकाशादन्यस्यदेवसमूहस्यवैनिश्चयेनसर्वोत्तमत्वबुद्ध्येत्यर्थः । अपूजापूजायाअकरणम् ॥ १९ ॥ ननु अन्यदेवाः सर्वथानैवपूज्याः

इत्युक्तो भगवानाह त्वत्कीर्त्यै त्वयि संस्थितः ॥ प्रवक्ष्याम्यखिलान्धर्मान् सूक्ष्मं तत्त्वमपीति ह ॥ १६ ॥ राज्ञः प्रथमतो धर्मो भगवद्धर्मपालनम् ॥ तदर्थं कंटकोद्धारो धर्मा भागवता अपि ॥ १७ ॥ मनोवाक्कर्मभिर्विष्णोरच्छिद्रत्वेन चार्चनम् ॥ पूर्णाशेषगुणो विष्णुः स्वतंत्रश्चैक एव तु ॥ तद्वशं सर्वमन्यच्च सर्वदेति विनिश्चयः ॥ १८ ॥ देवताक्रमविज्ञानमपूजान्यस्य वै हरेः ॥ १९ ॥ पूजा भागवतत्वेन देवादीनां च सर्वशः ॥ वृथाकर्माकृतिः क्वापि निराशीस्त्वं सदैव च ॥ २० ॥ विष्णोर्भागवतानां च प्रतीपस्याकृतिः सदा ॥ परस्परविरोधे तु विशिष्टस्यानुकूलता ॥ २१ ॥ प्रियं विष्णोस्तदीयानामपि सर्वं समाचरेत् ॥ धर्ममप्यप्रियं तेषां नैव किंचित्समाचरेत् ॥ २२ ॥ साम्ये विरोधे च बहूननुवर्तेत वैष्णवान् ॥ एते साधारणा धर्मा ज्ञेया भागवता इति ॥ २३ ॥

किमित्यतआह । पूजेति । भागवतत्वेनभगवत्परिवारत्वेनसर्वशःसर्वेषांदेवानां आदिशब्देनकृष्णादिवैष्णवाः तेषांपूजाचधर्मः । क्वापिवृथाकर्मणः जलताडनादिकर्मणो कृतिःअकरणं सदैवनिराशीस्त्वंफलेच्छाराहित्यम् ॥ २० ॥ प्रतीपस्यविरोधस्य परस्परविरोधेशिष्टाशिष्टयोःविरोधेप्राप्तेसति विशिष्टस्यानुकूलतापक्षपातित्वम् ॥ २१ ॥ विष्णोःतथातदीयानांविष्णुभक्तानामपि अधर्मवत्प्रतीयमानमपि प्रियंचेत्सर्वंसमाचरेत् । तेषांविष्णुवैष्णवानांधर्ममपिधर्मवत्प्रतीयमानमपि अप्रियंचेत्किंचिदपिनैव समाचरेत् ॥ २२ ॥ साम्येउभयपक्षस्यविशिष्टत्वेनसाम्ये विरोधेप्राप्तेसति बहून्वैष्णवाननुवर्तेत आनुकूल्येनवर्तेत । मनोवागित्यादिनोक्ताधर्माराज्ञःकिमसाधारणानेत्याह । एतइति । एतेपूर्वोक्ताधर्माःसाधारणाःक्षत्रियादीनांसाधारणाज्ञेयाः ॥ २३ ॥

विप्रस्यतत्त्वानांविज्ञापनंउपदेशःविशेषतोमुख्योधर्मः । पुत्रादीनृतेशारीरःशरीरसंबंधीयोदंडःताडनंतस्यत्यागः । मनोवाक्कायकर्मभिःपरित्यागोविप्रस्यधर्मइत्यर्थः ॥ २४ ॥ पुत्रभार्यादिदंडविषयेविशेषमाह । तत्रापीति । तत्रपुत्रादिताडनेपियथाअंगहानिःहस्तपादाद्यवयवभंगः चिरंयथास्यात्तथा तुविशेषेणवेदनावाव्यथावानस्यात्तथा शारीरदंडःकर्तव्यइतिभावः । विप्रवैश्यादिभिःक्षत्रजातिमृते विप्रादित्रिवर्णरवर्णैश्चक्वचिदर्थदंडोनकर्तव्यः ॥ २५ ॥ वैश्यादिवर्णानांविप्रवत् शारीरदंडविषयेधर्मउक्तइतिशेषः । अंगहानिश्चिरंवेदनावायथानस्यात्तथापुत्रभार्यादिकेषुदंडःकर्तव्यः । अन्यत्रनकर्तव्यइत्यर्थः । द्विजोत्तमःयथालब्धेन यत्नंविनालब्धेन भिक्षयावावर्तेत जीवेत ॥ २६ ॥ शिष्यात्याज्यात् यजमानादुपलब्धैर्द्रव्यैःशिष्याणांयाजनैरुपलब्धेनवावर्तेत अनापदीतिशेषः । आपदिक्षत्रधर्मेणवर्तेत । महापदिक्षत्रधर्मेणापि योगक्षेमाभावेविशांधर्मैःवर्तेत विप्रइतिशेषः । सुरविप्रयोरन्यत्रसुरविप्रवित्तंविनेत्यर्थः ॥ २७ ॥ सर्वेषांवैश्यादीनांवित्तेनस्वप्रयोजनोपयुक्तसर्ववित्तेनवर्तेत । किंकुर्वन्

तत्त्वविज्ञापनं धर्मोविप्रस्य तु विशेषतः ॥ शारीरदंडसंत्यागः पुत्रभार्यादिकानृते ॥ २४ ॥ तत्रापि नांगहानिः स्याद्वेदना वा चिरं न तु ॥ न चार्थदंडः कर्तव्यो विप्रवैश्यादिभिः क्वचित् ॥२५॥ शारीरदंडविषये वैश्यादीनां च विप्रवत् ॥ यथालब्धेन वर्तेत भिक्षया वा द्विजोत्तमः ॥ २६ ॥ शिष्ययाज्योपलब्धैर्वा क्षत्रधर्मेण वापदि ॥ महापदि विशां धर्मैः क्षत्रियः सुरविप्रयोः ॥ २७॥ अन्यत्र सर्ववित्तेन वर्तेतैतांश्च पालयन् ॥ विरोधिनः क्षत्रियाच्च प्रसह्यैव हरेद्धनम्॥ २८ ॥ सामादिक्रमतो धर्मान्वर्तयेद्दंडतोंततः॥ अपलायी सदा युद्धे सतां कार्यमृते क्वचित् ॥२९॥ कृषिवाणिज्यगोरक्षाकुसीदं वैश्यजीवनम् ॥ परिचर्यैव शूद्रस्य वृत्तिरन्ये स्वपूर्ववत् ॥ ३० ॥

एतान्वैश्यादीन्पालयन् । विरोधिनःसद्धर्मविरोधिनःक्षत्रियात्प्रसह्यबलात्कारेणधनंहरेदेवअपहरेत् ॥ २८ ॥ सामादिक्रमतःसामादिभेदक्रमेणधर्मान्वर्तयेत् । अंततःसामादिभिः धर्मप्रवृत्त्यभावेअंतेदंडतःदंडेनधर्मान्वर्तयेत् । असतांकार्येयुद्धकार्यमृते अपलायीपलायनशीलरहितःभवेत् । जरासंधाद्यसतांयुद्धसाहाय्यकारिणां शल्यबाह्लीकादीनांपलायनंअधर्मोनैवेतिभावः ॥ २९ ॥ विशांधर्मानाह । कृषीति । कृषिलांगलेनकर्षणंकर्म वाणिज्यंसमर्घेणक्रययोग्यधान्यादिकंआदायमहार्घेणविक्रयणंकर्मवाणिज्यं गोरक्षागवांपालनं गोजातक्षीरवृषादिविक्रयणंकर्मगोरक्षेतिभावः । कुसीदंधनिकेनकलावृद्ध्यादीयमानंद्रव्यं एषांसमाहारः वैश्यानांजीवनंजीवनोपायः । शूद्रस्यपरिचर्यासेवावृत्तिःजीवनोपायःत्रिवर्णानामितिशेषः । अन्येवर्णेभ्योन्येसूतसूतादयःस्वपूर्ववत् अनिंदितस्वकुलवृद्धाचरणवत् वर्तेयुः ॥ ३० ॥

हरिप्रियाःब्राह्मणाद्याःक्रमात् ब्राह्मणादिवर्णक्रमात् पूज्याः । हरिभक्तौअनुच्चःअनुत्कृष्टःवर्णोञ्चस्तुब्राह्मणादिवर्णोत्कृष्टोपिनातिपूज्यते । विष्णुभक्त्यधिकवर्णहीनादप्यति पूज्योनैवेतिभावः ॥ ३१ ॥ प्रणामंविनानमस्कारंहित्वापूज्यःपूजार्हः । यत्रपुरुषेहरेर्भक्तिर्वराअधिकातत्रतस्मिन्नादरःप्रीतिः ॥ ३२ ॥ तत्त्वविज्ञापनंधर्मोविप्रस्यतुविशेष नइत्युक्तम । तर्हि विप्रवर्णेअज्ञेसति विज्ञापनंकस्यधर्मइत्यतआह । ज्ञापनमिति । विप्राभ्यनुज्ञयातत्त्वानभिज्ञविप्रस्याभ्यनुज्ञयाक्षत्रियाणांज्ञापनंतत्वोपदेशोधर्मः । तदभा वेक्षत्रियाभावे क्षत्रियस्योपदेशसामर्थ्याभावेसत्यपीत्यर्थः । वैश्यानांविज्ञापनंधर्मःविप्राभ्यनुज्ञयेतिसर्वत्रसंबध्यते । परमापदिविप्रादित्रिवर्णेषुअज्ञेषुसत्स्वित्यर्थः । शूद्रस्य विज्ञापनंधर्मःस्वपुत्रादीनामितिशेषः । नतुस्वोत्तमवर्णानामितिभावः ॥ ३३ ॥ ननु वर्णाभावेअवर्णस्यज्ञापनंधर्मःकिमित्यतआह । वर्णेष्विति । वर्णेषुविप्रादिचतुर्वर्णेषु अज्ञेषुसत्सु अवर्णःवर्णबाह्यःज्ञानीनस्यादितिश्रुतेः । अवर्णस्यज्ञापनप्राप्तिर्नैव ज्ञानशून्यत्वादितिभावः ॥ ३४ ॥ त्रिवर्णस्थैःविप्रादित्रिवर्णपुरुषैःसर्वंवेदतंत्रोक्तंज्ञेयम् । स्त्री

वर्तेयुर्ब्राह्मणाद्याश्च क्रमात्पूज्या हरिप्रियाः ॥ हरिभक्तावनुच्चस्तु वर्णोच्चो नातिपूज्यते ॥ ३१ विना प्रणामं पूज्यस्तु वर्णहीनो हरिप्रियः ॥ आदरस्तत्र कर्तव्यो यत्र भक्तिर्हरेर्वरा ॥ ३२ ॥ ज्ञापनं क्षत्रियाणां च धर्मो विप्राभ्यनुज्ञया ॥ तदभावे तु वैश्यानां शूद्रस्य परमापदि ॥३३॥ वर्णेष्वज्ञेष्ववर्णस्तु न ज्ञानी स्यात्कथंचन ॥ इति श्रुतेरवर्णस्य ज्ञापन प्राप्तिरेव न ॥ ३४ ॥ ज्ञेयं सर्वं त्रिवर्णस्थैः स्त्रीभिर्वेदान्विनाखिलम् ॥ स्वीयपुन्नियतिः स्त्रीणां स्वदारनियतिर्नृणाम् ॥ ३५ ॥ धर्मो गुणोत्तमानां तु स्मृत्यैवांधं तमो व्रजेत् ॥ गुणसर्वस्वहानिः स्यादुत्तरोत्तरतोत्र च ॥ ३६ ॥

भिःत्रिवर्णस्त्रीभिःवेदान्विनाऽखिलंतंत्रोक्तंज्ञेयम । स्त्रीणांस्वीयपुन्नियतिःस्वस्वपतिनियमःधर्मः । नृणांपुंसांस्वस्वदाराणांभार्याणांनियतिःनियमोधर्मः ॥ ३५ ॥ गुणैर्हरिभ क्त्यादिगुणैरुत्तमाःया देवर्ष्यादिस्त्रियःतासांस्मृत्यैवस्मरणमात्रादेवरमणेच्छयेतिशेषः । अंधं अंधयतीत्यंधंतमोव्रजेत् तमोयोग्यःपुमानेवेतिशेषः । अन्यथानद्युषादिषुव्यभि चारः । अत्युत्तमस्त्रीणांरमणेच्छयास्मरणेनांधंतमःप्राप्तिरित्युक्त्वा स्वोत्तमस्त्रीविषयेप्याह । गुणेति । अत्रउत्तमस्त्रीभ्योन्यासुउत्तरोत्तरतःस्वापेक्षया अधिकाधिकगुणैर्या याउत्तमा तासांतासांरमणइत्यर्थः । गुणाःज्ञानादिगुणाःतएवसर्वस्वंसर्ववित्तंतस्यहानिःस्यात् । उत्तरोत्तरतःप्रतिलोमतःस्त्रीसंभोगाद्वा । तथाचशूद्रस्त्रीसंभोगाद्यावतांगुणानां हानिःततोप्यधिकावैश्यस्त्रीसंभोगाद्गुणहानिः । ततोप्यधिकाक्षत्रियायाःततोपिविप्रायाश्च ॥ ३६ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ऋषिदेवस्त्रीभोगेच्छास्मरणेन गुणसर्वस्वहानिंप्राप्यांधंतमोव्रजेदिति । स्वदारनियतिर्नृणामित्युक्तस्यविपक्षेबाधकमुक्त्वा स्वीयपुन्नियतिस्त्रीणामित्यस्यापि विपक्षेबाधकमाह । अंधइति । स्त्रीणामन्यत्रस्वनियतपतेरन्यत्र अन्यंमध्यतःस्वभर्तृसमानमारभ्यअधोधःजात्यागुणैर्वा यथायथानीचनीचपुरुषगमनंतथातथाधिकाधिकदोषःस्यात् । स्त्रीभिर्वेदान्विनेत्युक्तस्यापवादमाह । वेदाइति । उत्तमानांस्त्रीणांस्त्रीभिरखिलाअपिवेदाःज्ञातव्याः कृष्णाद्याभिरिवद्रौपद्याद्युत्तमस्त्रीभिःवेदाःयथाज्ञातुंयोग्याः तथैवेत्यर्थः ॥ ३७ ॥ ननु मनुष्योत्पन्नानां द्रौपद्यादीनांउत्तमत्वाभावाद्वेदाधिकारःकथमित्यतआह । देव्यइति । देव्यःदेवस्त्रियः मुनिस्त्रियश्च नरादिकुलजाअपि आदिशब्देनवानरादयोविवक्षिताः अतएववालिस्त्रीताराजांबवत्याद्याअपिउत्तमाएवेतिज्ञेयाः । भारतीशच्यादिभिर्वेदाज्ञातव्याइतिवक्तव्येनरादिकुलजानांदिवर्षिस्त्रीणामुत्तमत्वंवक्तुंकृष्णाद्याभिरित्युक्तमितिभावः । सच्छूद्रैरप्यवैदिकंवेदातिरिक्तंवेदार्थानुवादकभारतपंचरात्रोक्तंज्ञेयम् अन्यैर्वर्णबाह्यैर्हरेर्नाममनिजकर्तव्यमेव स्वकर्तव्यकर्मोपयुक्तमेवचकर्तव्यम्

अधोधोधिकदोषः स्यात्स्त्रीणामन्यत्र मध्यतः ॥ वेदा अप्युत्तमस्त्रीभिः कृष्णाद्याभिरिवाखिलाः ॥ ३७ ॥ देव्यो मुनिस्त्रियश्चैव नरादिकुलजा अपि ॥ उत्तमा इति विज्ञेयास्तच्छूद्रैरप्यवैदिकम् ॥ ज्ञेयमन्यैर्हरेर्नाम निजकर्तव्यमेव च ॥ ३८ ॥ सर्वथांधंतमो याति वरं सदृशमेव च ॥ यो विष्णोर्मन्यते किंचिद्गुणैः कैश्चिदपि क्वचित् ॥ ३९ ॥ ब्रह्मेशानादिकमपि भेदं वा यो न मन्यते ॥ भेददृक्तद्गुणादौ वा प्रादुर्भावगतेपि यः ॥ ४० ॥ प्राकृतं देहमथवा दुःखाज्ञानश्रमादिकम् ॥ मन्यते तारतम्यं वा तद्भक्तेष्वन्यथैव यः ॥४१॥ मनोवाक्तनुभिर्यो वा तस्मिंस्तद्भक्त एव वा ॥ विरोधकृद्विष्ण्वधीनादन्यत्किंचिदपि स्मरन् ॥ ४२ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

॥ ३८ ॥ ब्रह्मेशानादिकंजगत् कैश्चिदपिकैश्चनगुणैरपिक्वचित्कस्मिंश्चिद्देशे विष्णोःसकाशात्किंचिद्वरंविष्णोर्नारायणस्यसदृशंवा यःपुरुषःमन्यतेजानातिससर्वथाअनिवार्यंअंधंतमोयात्येव ॥ ३९ ॥ ब्रह्मेशानादिकमपिजगत् भेदंभेदवत्जीवानांभेदमितिभावः । योवानमन्यतेसोंधंतमोयातीत्यर्थः । विष्णोःसकाशाद्भेदंजगदितिवा । तद्गुणादौतस्यविष्णोर्गुणेषु आदिशब्देनरामकृष्णाद्यवतारेषु जगत्सृष्ट्यादिकर्मसुच भेदंपश्यतीतिभेददृक् यःसोंधंतमइतिसर्वत्रसंबध्यते । यःप्रादुर्भावगतेअवतारमितेहरौप्राकृतं पंचभूतात्मकंदेहंमन्यते । अथवा दुःखाज्ञानश्रमादिकं आदिपदेनलोभमरणादिकंग्राह्यम् । यःमन्यतेसइतिसंबंधः ॥ ४० ॥ प्रादुर्भावगतेहरौतारतम्यंवामन्यते मूलरूपस्यरामकृष्णाद्यवताराणांचयुगानुसारेणतारतम्यमित्यर्थः । तस्यहरेर्भक्तेषुविरिंचादिषु अन्यथातारतम्याभावंमन्यते ॥ ४१ ॥ तस्मिन्हरौतद्भक्तेब्रह्मादौवा विरोधकृत् । विष्ण्वधीनादपिविष्णोरधीनपदार्थसमूहादन्यत्स्वतंत्रमित्यर्थः । किंचिद्वस्तुस्मरन् ॥ ४२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

अस्यहरेरन्याधीनत्ववित् परतंत्रत्वज्ञःअस्यहरेःसर्वैःस्वातंत्र्याद्यनंतगुणैःपूर्तिपूर्णत्वं अवित् अनभिज्ञः भक्तिहीनाश्चहरौस्नेहरहिताश्चते सर्वेपूर्वोक्ताश्चअसंशयंनिश्चयेनतमोयांति ॥४३॥ नवविधद्वेषिणांतमःप्राप्तिरित्युक्त्वा संशययुक्तानांत्रिविधानांमध्ये अधमानांगतिमाह । तत्त्वइति । येतत्त्वेहरिसर्वोत्तमत्वादितत्त्वविषयेनित्यंसंशययुक्ताः तेमनुष्याधमाःनिरयोपगाः । मनुष्योत्तमानांगतिमाह । दोषेभ्यइति । तेसंशयज्ञानिनःदोषेभ्यःसंशयरूपमनोदोषेभ्यः गुणाधिक्येज्ञानादिगुणाधिक्येअधमांगतिंनिरयगतिंनैवयांति ॥ ४४ ॥ मनुष्यमध्यमानांगतिमाह । गुणेति । गुणाःज्ञानादयःदोषाःसंशयादयःतेषांसाम्येसति सर्वदाकल्पेकल्पेपुनःपुनःमानुष्यमेवमनुष्यजन्मैवभवतीतिशेषः । ननु मनुष्योत्तमानांदोषेभ्यःगुणाधिक्यादधमांगतिंनयांतीत्युक्तं तर्हितेषांकागतिरित्यतआह । यावदिति । यावत्यथादोषक्षयः तथातथाक्रमशःभुवःस्वःमहरितिक्रमेणोर्ध्वागतिः ॥ ४५ ॥ सर्वदोषक्षयेसति आत्मयोग्यानुसारतःस्वस्वयोग्यतानुसारेण भक्तिज्ञानयोःउन्नतौपूर्तौसत्यांमुक्तिःस्यादितिशेषः । ज्ञानफलमुक्त्वाधर्मफलमाह । स्वर्गइति । शुभ

अन्याधीनत्वविच्चास्य सर्वपूर्त्यविदेव च ॥ भक्तिहीनाश्च ते सर्वे तमोऽधं यांत्यसंशयम् ॥ ४३॥ तत्त्वे संशययुक्ता ये सर्वे ते निरयोपगाः ॥ दोषेभ्यस्ते गुणाधिक्ये नैव यांत्यधमां गतिम् ॥ ४४ ॥ गुणदोषसाम्ये मानुष्यं सर्वदैव पुनःपुनः ॥ यावद्दोषक्षयश्चोर्ध्वा गतिः क्रमश एव तु ॥ ४५ ॥ सर्वदोषक्षये मुक्तिरात्मयोग्यानुसारतः ॥ भक्तिज्ञानोन्नतावेव स्वर्गश्च शुभकर्मणः ॥ ४६ ॥ विष्णुर्वैष्णववाक्येन हानिः पापस्य कर्मणः ॥ इत्यादिधर्मसर्वस्वं भीष्मस्थेनैव विष्णुना ॥ ४७ ॥ पार्थानां गदितं तत्तु श्रुत्वा धर्मसुतोऽनुजान् ॥ पप्रच्छ विदुरं चैव सारं धर्मादिषु त्रिषु ॥ ४८॥ आह क्षत्ता धर्ममेव सारमर्थं च मध्यमम् ॥ नीचं कामं निष्फलत्वादर्थमेवार्जुनोऽब्रवीत् ॥ ४९ ॥

कर्मणःवर्णाश्रमोचितकर्मणःसकाशात्स्वर्गश्च ॥ ४६ ॥ विष्णुर्वैष्णववाक्येन विष्णुर्वैष्णवोक्तविध्यनुष्ठानेनत्वंशुद्धइतिवाक्येनच । पापस्यकर्मणःनिषिद्धाचरणस्यहानिः परिहारोभवेदितिशेषः धर्मसर्वस्वंसर्वधर्मसारभूतं पार्थानामर्थेगदितंकृष्णोक्तम् । ननु पार्थानांगदितमित्युक्तमयुक्तं पृच्छेत्युक्तःसभीष्मेणेति विरोधादितिचेन्न । सर्वेषामपिश्रोतृत्वात् । प्रश्नवाक्येधर्मस्यैवोक्तिस्तुतस्यैवाधिकसंदेहपूर्वकप्रश्नवत्त्वज्ञापनार्था । भीमार्जुनयोःसंदेहाभाववत्त्वात् । अतएवपार्थानितिबहुवचनम् । त्रयाणामपिश्रोतृत्वादविशेषेपि धर्मस्यैवसंदेहपूर्वकप्रश्नवत्त्ववचनंतुधर्मापेक्षया भीमार्जुनयोर्मुख्याधिकारसूचनार्थं कृष्णवक्तृत्वादितिध्येयम् ॥ ४७ ॥ तत्पार्थेभ्यउक्तंधर्मसारंश्रुत्वाअनुजान्भीमादीन्विदुरंच धर्मादिषुत्रिषुपुरुषार्थेषुमध्ये सारंमुख्यपुरुषार्थंपप्रच्छ ॥ ४८ ॥ क्षत्ताविदुरः धर्ममेवसारंमुख्यमित्याह । अर्थंमध्यमंचाह । कामंनीचमित्याह । कुतःनिष्फलत्वात् विषयभोगस्यपरलोकानंगत्वादितिभावः । अर्जुनःअर्थमेवसारमब्रवीत् ॥ ४९ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

सोर्थःदैवोमानुषएवेतिद्विविधःद्विप्रकारोज्ञेयः। दैवोर्थःविद्याज्ञानमित्यर्थः। हिरण्यादिःस्वर्णरजतादिःमानुषोर्थःपरिकीर्तितः॥ ५० ॥ अत्रत्रिषुपुरुषार्थेषुमध्ये धर्मःधर्माख्यार्थःमध्यमः। विद्याख्यार्थस्योत्तमत्वमुपपादयति ॥ साध्यमित्यादिना। विद्याह्वयःविद्याख्योर्थःपुरुषार्थःधर्मस्यसाध्यंफलमित्यर्थः। धर्मेकृतेसतिविद्यायाउत्पादनात्साध्यमित्यर्थः। साध्यमितिसामान्येनपुंसकम्। विद्याह्वयोर्थःधर्मस्यसाधनमेवचज्ञानपूर्वकमनुष्ठितेनैवकर्मणाधर्मजननात्साधनमित्यर्थः। इतोपिदैवार्थस्यमुख्यत्वंविशदयति। विद्येति। विद्ययैवज्ञानेनैवविमुच्यते संसारादितिशेषः ॥ ५१ ॥ दैवोर्थःधर्मादुत्तमोभवतुमानुषार्थस्यधर्मादुत्तमत्वंकथमित्यतआह। मानुषइति। सुप्रयोजितःशुभेषुवेदविद्विष्णुभक्तेषुप्रयोजितःविष्णुप्रीत्यर्थमर्पितइत्यर्थः। मानुषोर्थोहिण्यादिःविद्यायाःज्ञानस्यकारणंहेतुः। कैमुत्यन्यायेनसुप्रयोजितस्यमानुषार्थस्य ज्ञानकारणत्वमुपपादयति। तुष्टइति। यस्मात्कारणादर्थेनमानुषार्थेनतुष्टोगुरुःकैवल्यमपिदातुमलंसमर्थः। तस्माज्ज्ञानंदातुंसमर्थइतिकिमुवक्तव्यमितिभावः॥ ५२ ॥ ननु सुप्रयोजितोमानुषोर्थः धर्मजनकत्वेनैवकारणं अतोधर्मादधिकःनस्यादित्यतआह। धर्मार्थतामिति। धर्मप्रयोजनतांविना धर्ममनुद्दिश्येत्यर्थः। अर्थैःसुप्रयोजितार्थैः गुरुदेवताःतुष्येयुः तुष्टाःस्युः।

सारं स द्विविधो ज्ञेयो दैवो मानुष एव च ॥ दैवो विद्याहिरण्यादिर्मानुषः परिकीर्तितः ॥ ५० ॥ मध्यमो धर्म एवात्र साध्यं साधनमेव च ॥ विद्याह्वयोर्थो धर्मस्य विद्ययैव विमुच्यते ॥ ५१ ॥ मानुषोर्थोपि विद्यायाः कारणं सुप्रयोजितः ॥ तुष्टोर्थेन गुरुर्यस्मात्कैवल्यं दातुमप्यलम् ॥ ५२ ॥ धर्मार्थतां विनाप्यर्थैस्तुष्येयुर्गुरुदेवताः ॥ यद्यनुद्देशितो धर्मोप्यर्थमेवानुसंव्रजेत् ॥ ५३ ॥ गुरुतार्थगतैव स्यात्कामोधस्ताद्धि निष्फलः ॥ यमावत्र विदां श्रेष्ठावर्जुनोक्तमनूचतुः ॥ ५४ ॥ अथाह भीमः प्रवरः सुतत्त्वदृशां समस्तानभिभाष्य हर्षात् ॥ स्मयन्न कामादतिरिक्तमस्ति किंचिच्छुभं क्वावरतां स यायात् ॥ ५५ ॥ ॥ ॥ ॥ ॥

ननु निष्कामकर्मजधर्मस्यापि ज्ञानसाधनत्वात्कथंधर्मान्मानुषोर्थोधिकइत्यतआह। यदीति। अनुद्देशितःज्ञानफलोद्देशेनाकृतकर्मजनितोधर्मोयद्यपितथापिअर्थमनुज्ञानार्थमन्वेवसंव्रजेत्। यद्वा अनुद्देशितःअन्नाच्छादनस्त्रीपुत्रादिफलोद्देशेनाकृतकर्मजनितोधर्मःअर्थमन्वेवसंव्रजेत्। अन्नाच्छादनादिकमुत्पाद्यैव अर्थानुकूल्येवर्तते ॥ ५३ ॥ अर्थस्यश्रेष्ठत्वमुपसंहरति। गुरुतेति। गुरुताश्रेष्ठताअर्थगतैवअर्थेविद्यमानैवस्यात्कामःअधस्तान्नीचत्वादित्यर्थः। निष्फलःव्यर्थइत्यर्थः। हीतिप्रसिद्धिः। अत्रप्रश्नेविदांज्ञानिनांमध्ये श्रेष्ठौयमावर्जुनोक्तंअर्थस्योत्तमत्वंअनुआवयोरनुकूलमित्यूचतुः॥५४॥कामस्यावरत्वमसहन् भीमःतस्योत्तमत्वंसाधयन्स्वमतमाह। अथेत्यादिना। सुतत्त्वदृशांसमीचीनतत्वज्ञानिनांमध्ये प्रवरोभीमःहर्षात्समस्तांस्तांस्तत्रस्थितानभिभाष्यस्वाभिमुखीकृत्यस्मयन्विस्मययुक्तान्कुर्वन् काम्यंकामविषयमितिवा। कामनंकामइच्छावा इतिविकल्पौमनसिनिधायाह। किमिति। कामादतिरिक्तं अन्यत्किंचित्शुभमुत्तमंनास्तिसकामःसर्वस्मादुत्तमइत्यर्थः। अवरतांधर्मार्थाभ्यांनीचतांककथंयायात्प्राप्येत ॥ ५५ ॥

कामशब्दार्थकथनपूर्वकं कामस्यौत्तमत्वंसाधयति । काम्यमिति । आर्याःज्ञानवृद्धाःकाम्यंकाम्यतेतत्काम्यमितिव्युत्पत्त्या कामविषयंकामाभिधं कामशब्दवाच्यंआहुः। हिप्रसिद्धिः । पुमर्थाःधर्मादिपुरुषार्थाःसाधनैःस्वस्वोचितसाधनैःसहकाम्याः यद्यस्मात्तत्तस्मात्काम्यस्यैव कामत्वात्कावरतांसयायादितिपूर्वेणान्वयः । काम्यंतइतिकामाइ तिनिरुक्त्याधर्मादीनामेवकामत्वात् कामावरत्ववर्णनमनुपपन्नमितिभावः । तर्ह्यकाम्यंकिमित्यपेक्षायामाह । अकाम्यतामिति । अपुमर्थएवदुःखंतत्साधनंकंटकादिकंच अकाम्यतांयात्यप्राप्नोतीतिबुद्धेरगोचरतांयाति । ननु धर्मादीनांकाम्यत्वात्कामत्वमुक्तंतत्कथमित्यतआह । पुमर्थत्वादिति । पुंभिरर्थितत्वाद्धर्मादिकं तत्साधनंचपुमर्थइत्युक्तः। हियस्मात्तस्मात्काम्यत्वात्पुमर्थः कामइतिवाक्यशेषः । अपुमर्थितत्वाद्दुःखंतत्साधनंच अकामइतिवाक्यशेषः ॥ ५६ ॥ नकेवलंपुमर्थानामेवकामत्वं किंतुतत्साधनानां मोक्षस्यापि कामत्वमस्तीत्याह । विज्ञानेति । अतीवमुख्यतत्साधनंधर्मादिसाधनं विज्ञानभक्त्यादिकमपिकामबहिष्कृतंचेत् अकाम्यंचेत्तर्हि साधनंधर्मादिसाधनंनस्यात् तस्माद्विज्ञानभक्त्यादिकमपिकाम्यत्वात्कामइतिवाक्यशेषः । एतेनकाम्याःपुमर्थाःसहसाधनैरित्युक्तमुपपादितंभवति । कामात्मोक्षविषयकामात् विनापरमःपुरुषार्थोऽपि

काम्यं हि कामाभिधमाहुरार्याः काम्याः पुमर्थाः सह साधनैर्यत् ॥ अकाम्यतां यात्यपुमर्थ एव पुमर्थितत्वाद्धि पुमर्थ उक्तः ॥ ५६ ॥ विज्ञानभक्त्यादिकमप्यतीव तत्साधनं काम्यबहिष्कृतं चेत् ॥ न साधनं स्यात्परमोपि मोक्षो न साध्यतां याति विना हि कामात् ॥ ५७ ॥ परात्परोप्यादिपुमान्हरिश्च स्वस्येतरेषामपि काम्य एव ॥ अकामितोवाग्गतिमेव दद्यात्कामः पुमर्थोऽखिल एव तेन ॥ ५८ ॥ इच्छैव कामोस्तु तथापि नैतामृते हि चित्त्वं घटकुड्यवत्स्यात् ॥ सारस्ततः सैव चिदात्मिकापि सा चेतना गूढतनुः सदैव ॥ ५९ ॥

मोमोक्षोपिसाध्यतांनयाति । हियतस्तस्मात्तस्यापि कामविषयत्वात्सोपि कामएवेतिवाक्यशेषः ॥ ५७ ॥ नकेवलंधर्मादयःकाम्याअपितुतत्संपादकोहरिरपिकाम्यइत्याह । परात्परइति । स्वस्यइतरेषामपिपुरुषार्थार्थिनां चशब्दःमोक्षसमुच्चयवाचकः । स्वस्येतरोऽङ्कितःकाम्यइत्यतआह । अकामितइति । अकामितःकामविषयत्वमप्रापितोहरिःअवाग्गतिं अधमांगतिमेवदद्यादितियस्मात्तस्मात् काम्यत्वात्सोपिकामइतिभावः । तेनकाम्यस्यैवकामशब्दवाच्यत्वेनाखिलःपुमर्थःतत्साधनं तत्संपादकोहरिरपिकामएव ॥ ५८ ॥ द्वितीयंविकल्पमुपपादयति । इच्छेति । इच्छैव कामशब्दवाच्यास्तुतथापिकामएवोत्तमइतिशेषः । कथमित्यतस्तदुपपादयति । नेत्यादिना । एतामिच्छामृतेचित्त्वंचेतनत्वंनसंभवति । जीवस्येतिशेषः । किंतुघटकुड्यवदचेतनत्वमितिशेषः स्यात् ततःइच्छाभावेजीवस्याप्यचेतनत्वापत्तेरिच्छायाःसर्वपुरुषार्थमूलत्वात्सैवइच्छैवसारःउत्तमा । इच्छांविभजति । चिदात्मकेति । साइच्छाचिदात्मकाचेतनस्वरूपाअपिशब्दादचेतनस्वरूपाइतिद्विविधाज्ञातव्या । उभयोः स्वरूपमाह । सेति । चेतनाचेतनस्वरूपासाइच्छासदैवआमुक्तेः गूढतनुःअविद्यावृतस्वरूपामुक्तावाविर्भूता अचेतनाअचेतनस्वरूपासाइच्छासदैवमोक्षात्पूर्वंसंसारदशायामगूढतनुः अनभिभूतस्वरूपा । मुक्तिदशायांनास्त्येवेतिचेतनायाःसंसारेस्वातंत्र्येणव्यवहाराभावेनाचे

तनायाःसुषुप्तौकारणरूपेणसत्वान्नासंभवइतिभावः ॥ ५९ ॥ एवंपूर्वोक्तःकामःतेनैवसर्वपुमर्थस्य कामत्वेनैव पृथक्धर्मादिषुउत्तमइतिविभज्यप्रश्नयोग्योन । तेनैवइच्छायाः कामत्वेनैवइच्छाभावेप्रश्नादेरसंभवादिच्छायाउत्तमत्वेसिद्धेसतिएषकामःपृथक्प्रश्नयोग्योनेतिचयोजना । हेराजन् यदिकामस्यतारतम्यंइच्छसितर्हि अयंकाम्यतइतिनिरुक्तःकामःतेत्वयात्रिविधोवेद्यः ज्ञातव्यः । त्रैविध्यमेवदर्शयति । धर्मेति । अत्रत्रिविधकाममध्येयः धर्मार्थाभ्यांयुक्तः सइच्छारूपकामःपरमःउत्तमःमतः यथाएकादश्युपवासः ॥६०॥ यदि एकाविरोधीधर्मार्थयोर्मध्येएकस्यविरोधी एकस्याविरोधीचेत्तर्हिसमध्यमःयथादानम् । अर्थविरोधीधर्माविरोधीच यथाचनिंदितप्रभुसेवनं धर्मविरोधी अर्थविरोधीयोसौकामःद्वयोर्धर्मार्थयोर्विरोधीतर्हि सएवकामोनीचः यथानास्तिकायदानम् । उपसंहरति । तस्मादिति । तस्मात्पूर्वोक्तप्रकारेण कामस्योत्तमत्वात्स्वबुद्ध्यएवप्र

न प्रश्नयोग्यः पृथगेव कामस्तेनैष राजन्यदि तारतम्यम् ॥ इच्छस्ययं ते त्रिविधो हि वेद्यो धर्मार्थयुक्तः परमो मतोत्र ॥ ६० ॥ एकाविरोधी यदि मध्यमोसौ द्वयोर्विरोधी तु स एव नीचः ॥ तस्मात्स्वबुद्धिप्रमदाभिरेव कामं रमेथा अनुरूपकामः ॥६१॥ राजन्नकामादपरं शुभं हि परो हि कामो हरिरेव येन॥ प्राज्ञः सुहृच्चंदनसारलिप्तो विचित्रमाल्याभरणैरुपेतः॥ इदं वचो व्याससमासयुक्तं संप्रोच्य भीमो विरराम वीरः ॥६२॥ प्रशस्य भीममन्यांश्च राजा मोक्षमथास्तुवत् ॥ स्वयुक्तेरप्रतीपत्वान्निराचक्रे न मारुतिः ॥६३॥ इति श्रीमदा० विरचिते श्रीमन्महाभारततात्पर्यनिर्णये धर्मसारनिरूपणो नाम एकोनत्रिंशोध्यायः ॥ २९ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥

मदाःताभिःअनुरूपकामःधर्माद्यनुरूपेच्छःकामंयथेष्टं रमेथाःरमस्व॥६१॥पूर्वोक्तमेवसंक्षेपेणानुवदति । राजन्निति । हेराजन् कामादपरंशुभमुत्तमंनहिनास्ति । कुतइत्यतआह परोहीति । येनहरिरेवपरःकामेषूत्तमःकामोहि । होतिश्रुत्यादिप्रसिद्धिंद्योतयति । अतःकामउत्तमइतिभावः । हरेर्मुख्यकामत्वंकुतइत्यतआह । प्राज्ञइति । प्राज्ञइत्यादिचतुर्भिर्विशेषणैर्हरिरेवपरःकामइत्यर्थः । वीरःआरब्धस्यांतगामीभीमः व्यासःविस्तारःसमासःसंकोचःताभ्यांयुक्तंइदंपूर्वोक्तंवचःसंप्रोच्यउक्त्वाविररामतूष्णींबभूव । नकामादतिरिक्तमस्तीत्यारभ्यानुरूपकामाइत्यंतंविस्तरोक्तिः । राजन्नकामादपरंशुभंहीत्यादिसंक्षेपोक्तिरितिभावः ॥ ६२ ॥ राजाभीममन्यान्विदुरादींश्चप्रशस्यस्तुत्वा अथस्वयंमोक्षमस्तुवत् सार मतिशशंस । मारुतिःस्वयुक्तेःकामस्योत्तमत्वयुक्तेरप्रतीपत्वादविरुद्धत्वात्कामस्योत्तमत्वसाधकयुक्त्यैव मोक्षोत्तमत्वस्यसिद्धत्वान्ननिराचक्रे । राजोक्तमितिशेषः ॥ ६३ ॥ यंगंगाज० इति श्रीमद्भारततात्पर्यनिर्णयटीकायां एकोनत्रिंशोध्यायः ॥ २९ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

श्रीगुरुभ्योनमः ॥ ॥ ॐ अथेति । अथधर्मकथनानंतरं स्वांवसुतांगतेसति युनामवमुनाएकीभावंप्राप्तेसतीत्यर्थः । धर्मजःकार्याणि और्ध्वदैहिककर्माणि कृत्वास्वयमिति शेषः । धृतराष्ट्रादिभिःकारयित्वेतिवाशेषः ॥ १ ॥ कृष्णाभ्यांदुःखितांपुत्रमरणेनदुःखितांगंगामाश्वास्यसांत्वयित्वा कृष्णाभ्यांस्वयंचआश्वासितश्च आश्वासितोपिदुःखितःसन् पुनरनंतराधसा अपरिमिताभीष्टसिद्धिमतापराशरसुतेन व्यासेनोक्तोभूदितिशेषः । इतिशेषपूर्णेनआनुशासनाश्वमेधकपर्वानुकूलेनान्वयः ॥ २ ॥ किमिति । अपापेपापरहितेसर्वनाशविषये पापशंकित्वात् इदंपापमितिशंकित्वादश्वमेधैरच्युतंयज । अपालकाःपालकरहिताः ॥ ३ ॥ सराजातथाव्यासोक्तप्रजापालनादिकं सर्वशः

ॐ अथ कृष्णमनुस्मृत्य भीष्मे स्वां वसुतां गते ॥ कृत्वा कार्याणि सर्वाणि गंगामाश्वास्य दुःखिताम् ॥ १ ॥ आश्वासितश्च कृष्णाभ्यां धर्मजो दुःखितः पुनः ॥ पराशरसुतेनोक्तः कृष्णेनानंतराधसा ॥ २ ॥ अपापे पापशंकित्वादश्वमेधैर्यजाच्युतम् ॥ कुरुष्व राज्यं धर्मेण पालयाऽपालकाः प्रजाः ॥ ३ ॥ इत्युक्तः स तथा चक्रे त्यक्त्वा भोगांश्च कृत्स्नशः ॥ गोव्रतादिव्रतैर्युक्तः पालयामास मेदिनीम् ॥ ४ ॥ ददौ देयानि मुख्यानि यथाकाममखंडितम् ॥ नैवार्थी विमुखः कश्चिदभूद्योग्यः कथंचन॥५॥ प्रष्टा च दाताखिलराजनम्यो यष्टा च धर्मात्मज एव तत्र ॥ बभूव पांडोर्गृहमावसंश्च राजाधिराजो वनितानिवृत्तः ॥ ६ ॥ भीमस्तु दौर्योधनमेव सद्म प्रपेदिवानूर्जितवीर्यलब्धम् ॥ कृष्णासहायः सुरराजयोग्यानभुङ्क्त भोगान्युवराज एव ॥ ७ ॥

सर्वान्भोगान् स्त्रीभोगादिसर्वविषयभोगान् । गोव्रतंगोःभक्षार्थंधान्यंदत्त्वा तन्निर्गतधान्येनशरीरनिर्वाहरूपंव्रतंगोव्रतं तदादिव्रतैःमेदिनींपृथ्वीम ॥ ४ ॥ अखंडितंनिरंतरंयथाकामंयथेष्टं मुख्यानिश्रेष्ठानिदेयानिदातुंयोग्यानितुलापुरुषादिमहादानानिददौ । योग्योर्थदानयोग्यगुणवान् ॥ ५ ॥ पंचपांडवानांप्रवृत्तिमाह । प्रष्टाचेत्यादिना । तत्रतेषु मध्येगृहम् । उपान्वध्याङ्वसइति आधारस्यकर्मत्वम् । आवसन्वासंकुर्वन् । वनितानिवृत्तःस्त्रीभोगान्निवृत्तः धर्मात्मजःप्रष्टाप्रश्नकर्ता दाताद्दानकर्ता नम्योनमस्कार्यः यष्टायागकर्ताबभूव ॥ ६ ॥ युवराजोभीमःऊर्जितवीर्यलब्धंउत्कृष्टपराक्रमेणप्राप्तं दौर्योधनंदुर्योधनसंबंधिसद्म सुरराजस्येंद्रस्ययोग्यान्भोगानभुङ्क्तबुभुजे ॥ ७ ॥ ॥

सुव्यक्तःसारस्वतःशुद्धस्वभावोयस्याःसाकृष्णाचतुरःपार्थान् भीमादन्यान्चतुरोविहाय अनन्ययोगेनअन्येषांधर्मादिचतुर्णांसंगाभावेननित्यं राजावरजेनभीमेनसहरराज । केव अनन्ययोगेनधूमसंबंधाभावेनवह्नेःशिखेवज्वालेव ॥ ८ ॥ विज्ञानयुजोभीमस्यैवभार्या द्रौपदीतिविशेषज्ञानसहितया प्रीत्याउत्तमेतिभक्त्यापार्थैश्चतुर्भिःसंवादतःसंमत्यापरिहृतात्यक्ता । इदानीमेवत्यक्तेतिन किंतुगतभाविकालेपि भूतभविष्यत्कालेपिपरिहृतेतिअपिशब्दार्थः । स्वकीयपतिमेवभीमं मुदैवपर्यचरदसेवत ॥ ९ ॥ राजावरजो भीमः सोमकोद्रुपदःकाशिःकाशिराजः ताभ्यांजातयाद्विरूपयाद्रौपदीकालीतिद्विरूपवत्यातयाभार्ययारराज । अब्जनाभः पद्मनाभःश्रीदेव्याभूदेव्याचयथातथेत्यर्थः ॥ १० ॥ भीमःअन्याभिःस्त्रीभिःभोगानभुङ्क्तेत्याह । सर्वोत्तुंगइति । प्राणवायोःप्राणादिपंचसुमध्येप्राणाख्यवायोरंशःस्वरूपभूतःअवतारइत्यर्थः । अत्रनामतःनाम्नासर्वोत्तुंगोयःनिशा

कृष्णा च पार्थांश्चतुरो विहाय सुव्यक्तसारस्वतशुद्धभावा ॥ रराज राजावरजेन नित्यमनन्ययोगेन शिखेव वह्नेः ॥ ८ ॥ प्रीत्यैव विज्ञानयुजान्यपार्थैः संवादतः परिहृता गतभाविकाले ॥ अपि स्वकीयं पतिमेव भीममवाप्य सा पर्यचरन्मुदैव ॥ ९ ॥ रराज राजावरजस्तया स द्विरूपया सोमककाशिजातया ॥ श्रिया भुवा चैव यथाब्जनाभो निहत्य सर्वान् दितिजान्पयोब्धौ ॥ १० ॥ सर्वोत्तुंगो नामतः प्राणवायोरंशो निशायां गुरुपुत्रसूदितः ॥ मातास्य देवीति च रौहिणेयी भीमप्रियासीद्या पुरास्यैव राका ॥ ११ ॥ अन्याश्चासुर्वासुदेव्यो दिशो या आपश्च पूर्वं विंशतिरग्र्यरूपाः ॥ ताभिर्युक्तो दैवतैरप्यलभ्यानभुङ्क्त भोगान्विबुधानुगार्चितः ॥ १२ ॥

यांगुरुपुत्रेणद्रौणिनासूदितः । अस्यसर्वोत्तुंगस्यमातारौहिणेयी रोहिण्याःअपत्यंस्त्रीरौहिणेयी बलभद्रभगिनीदेवीतिदेवीइतिनामवतीयाभीमभार्याआसीत् । सापुराअस्यैवभीमरूपस्यवायोःराकाराकानाम्नीभार्येतिशेषः ॥ ११ ॥ पूर्वयाःदिशःदिक्शब्दवाच्याःदिगभिमानिदेवताश्चयाआपश्चकाश्चित् अप्शब्दवाच्याअबभिमानिदेवताश्चअग्र्यरूपाः वासुदेव्यःवसुदेवस्यापत्यानिस्त्रियोवासुदेव्यःविंशतिःविंशतिसंख्याकाः अन्याश्चभीमभार्याः आसुः ताभिःरोहिणीपुत्र्यासह एकविंशतिभार्याभिर्युतः विबुधाःदेवतानानुगच्छंतीत्यनुगाःगंधर्वादयःतैरर्चितोभीमःदैवतैरपिअलभ्यान्भोगान्अभुङ्क्तबुभुजे ॥ १२ ॥

सभीमःसद्वैष्णवान् शुद्धभागवतधर्मनिष्ठान् मिश्रभक्तान्नैवेत्यर्थः। अतएवविदुषोज्ञानिनःयुक्तान्परस्परसंमतान् सवेतनान्कृतयोगक्षेमान् स्वकीयान्विप्राननुशास्यग्रामस्थज नाभवद्भिःशिक्षणीयाइतिशिक्षित्वाग्रामंमनुप्रतिग्रामं पंचपंचसंख्याकान्निधाय हरेरखिलान्धर्मान्भागवतधर्मान्ररक्ष ॥ १३ ॥ स्वयंभीमःतदवर्तिषु तेषांविप्राणामनुकूल तया अवर्तिषुवर्तनरहितेषुदंडंदधारचकार । अथतद्वान् तदनुकूलतयास्थितान् मुदैवानुजग्राह अंगीचकार अन्यैरपिविप्रवर्यैःतद्वृत्तंतेषांग्रामजनशिक्षणार्थंस्थापितांव प्राणांवृत्तंवर्तनंसंशोधयन् विचारयन्। असौभीमःयथाभागवतधर्मप्रवर्तनंचयथास्यात्तथाव्यधात् ॥ १४ ॥ तदेवविवृणोति। नावैष्णवइति। कश्चित्कुतश्चित्कारणेनअवै ष्णवोनाभूत्। अन्यनिष्ठःरमाद्यन्यदेवतासु सर्वोत्तमत्वेनभक्तिनिष्ठोनैव धर्महंताधर्मप्रतिबंधकः। विध्यवर्तीवर्णाश्रमोचितविध्यतिक्रमणशीलः। दुःखितोदुःखयुक्तः अपूर्णवि

रक्ष धर्मानखिलान्हरेः स निधाय विप्राननुशास्य युक्तान् ॥ सद्वैष्णवान्विदुषः पंच पंच सवेतनान् ग्राममनु स्व-
कीयान् ॥ १३ ॥ दधार दंडं तदवर्तिषु स्वयं जग्राह चान्वेव मुदाथ तद्वान् ॥ तद्वृत्तमन्यैरपि विप्रवर्यैः संशोधयन्
सर्वमसौ यथावत् ॥ १४ ॥ नावैष्णवः कश्चिदभूत्कुतश्चिन्नैवान्यनिष्ठो न च धर्महंता ॥ न विध्यवर्ती न च दुःखि-
तोभून्नापूर्णवित्तश्च तदीयराष्ट्रे ॥ १५ ॥ वासिष्ठवृष्णिप्रवरौ प्रपश्यतां ताभ्यां च भीमेन मुनीश्वरैश्च ॥ संशिक्षि-
तानां प्रथमाद्युगाच्च गुणाधिकः कलिरासीत्प्रजानाम् ॥ १६ ॥ शुभं महत्स्वल्पफलं कृते हि विपर्ययेणाशुभमेष
दोषः ॥ तद्धीनमप्युच्चशुभं कृताद्युगाच्चक्रे कलिं मारुतिरच्युताश्रयात् ॥ १७ ॥ ॥ ७ ॥७॥

त्तःस्वेच्छानुसारवित्तरहितः। तदीयेभीमसंबंधिनिराष्ट्रेराज्येनाभूदितिसर्वत्रसंबध्यते ॥ १५ ॥ वासिष्ठंव्यासंवृष्णिप्रवरंकृष्णंप्रपश्यतांप्रपश्यंतीनां ताभ्यांकृष्णाभ्यांचभीमेनमुनी श्वरैश्च संशिक्षितानांप्रजानांकलिःकलियुगःप्रथमाद्युगाच्च कृतयुगादपिगुणाधिकआसीत् ॥ १६ ॥ गुणाधिकत्वंस्पष्टयति। शुभमिति । कृतेकृतयुगेमहच्छुभंबहुपुण्यं स्वल्पफलंहि। अल्पफलंभवतीति शेषः। अशुभंपापंविपर्ययेण अल्पमपिपापंबहुफलदमित्यर्थः। कृतेएषदोषः। मारुतिःअच्युताश्रयान्निमित्तात् तद्धीनमपितस्मात्कृतयुगा द्धीनंनीचमपिकलिंकलियुगंकृताद्युगात्कृतयुगात् उच्चंशुभंबहुपुण्यप्रदंचक्रे। कलियुगंअल्पपुण्येनबहुपुण्यफलप्रदं बहुपापेनाल्पपापफलप्रदंचक्रइतिभावः ॥ १७ ॥

धनंजयःसदाऽन्यचक्रेषुपरराष्ट्रेषुप्रोद्यतदंडःउद्यतदंडयात्रःदंडयात्रायांप्रवृत्तिमानित्यर्थः। आसीत्। निजाग्रजेनयुधिष्ठिरेणईरितःनृपान्भीषयित्वा करग्रहाणतान्माजहीत्युक्तः पार्थःसरत्नान्नृपतीन् अग्रेभवतीत्यग्रभूः तस्यअग्रजस्यनृपस्ययुधिष्ठिरस्यपदोःपादयोर्न्यपातयत् ॥ १८ ॥ पिबन्नसावर्जुनःसुताद्याधिं मृतसुतवंधुनिमित्तजातमनोव्यथांक्रमेणत्यजन् क्रमेणविरतातिभोगःनिवृत्तभोगःसन् रेमे ॥ १९ ॥ अवसथंगृहंअध्यावसन् वासंकुर्वन् । सुभद्रयाचित्रांगदयाचसहितः । चित्रांगदाअश्वमेधयागसमयेपांड्यविषयादर्जुनालयंप्रत्यागत्यअत्रैवस्थिता। अतएवचित्रांगदासहितइत्युक्तमितिभावः। चंद्रिकाकांतिःचंद्रिकाचंद्रकांतिरिवशरीरकांतिर्यस्यसतथा। अनूनबिंबःसंपूर्णावयवयुक्तरूपःसोर्जुनःअत्यरोचत। अत्यंतरेजे। कइव। सचंद्रिकाकांतिःचंद्रिकाचंद्रकांतिःकांतिनाम्नीभार्याताभ्यांसहवर्तमानःअनूनबिंबःषोडशकलायुक्तमंडलःचंद्रइव। सचंद्रिका

धनंजयः प्रोद्यतदंड आसीत्सदान्यचक्रेषु निजाग्रजेरितः ॥ विभीषयित्वा नृपतीन्सरत्नान् पदोर्नृपस्याग्रभुवो न्यपातयत् ॥ १८ ॥ तदैव कृष्णस्य मुखारविंदाद्विनिःसृतं तत्त्वविनिर्णयामृतम् ॥ पिबन् सुताद्याधिमसौ क्रमेण त्यजंश्च रेमे विरतातिभोगः ॥ १९ ॥ दुःशासनस्यावसथं सुभद्राचित्रांगदासहितोध्यावसंश्च ॥ सचंद्रिकाकांतिरनूनबिंबो नभस्थितश्चंद्र इवात्यरोचत ॥ २० ॥ समस्तभृत्याश्रितवेतनानां माद्रेय आसीत्प्रथमः प्रदाता ॥ स दुर्मुखस्यावसथेवसच्च समद्रराजात्मज अग्र्यवर्ती ॥ २१ ॥ संधानभेदानुगतप्रवृत्तिस्तिष्ठंश्च दुर्मर्षणशुभ्रसद्मनि ॥ नृपांगरक्षः प्रगृहीतखड्गस्तस्यानुजो मागधकन्ययासीत् ॥ २२ ॥ सेनापतिः कृप आसीद्युयुत्सुः ससंजयो विदुरश्चांबिकेयम् ॥ पार्थैरिताः पर्यचरन्स्वयं च सर्वे यथादैवतमादरेण ॥ २३ ॥ ॥ ७ ॥ ७॥

कांतिरित्यत्र अर्जुनविशेषणेसइतिभिन्नंपदम्। चंद्रविशेषणेएकंपदम् ॥ २० ॥ प्रथमःज्येष्ठोमाद्रेयःमाद्रीपुत्रःसनकुलःसमस्तानां भृत्यानांआश्रितानां वेतनानियोगक्षेमार्थं मासिमासिदीयमाननियतद्रव्याणितेषांप्रदाताआसीत्। अग्र्यस्यज्येष्ठस्यवर्ती आज्ञानुवर्तीमद्रराजस्यशल्यस्यआत्मजयापुत्र्यासहितः। दुर्मुखस्यतन्नाम्नोधृतराष्ट्रपुत्रस्यअवसथेगृहेअवसत् ॥ २१ ॥ मागधकन्ययाजरासंधकन्ययासह दुर्मर्षणस्यतन्नाम्नोधृतराष्ट्रपुत्रस्यशुभ्रेशुद्धेसद्मनि तिष्ठन् तस्यनकुलस्य अनुजःसहदेवः संधानेस्वेषामसंमतानांसंधिकरणेपरस्परमसंमतस्वशत्रूणांद्वैधीकरणेअनुगतायुक्ताप्रवृत्तिर्यस्यसतथा सन् प्रगृहीतखड्गःसन्नृपस्यांगरक्षः पृष्ठरक्षकआसीत् ॥ २२ ॥ युयुत्सुःधृतराष्ट्रपुत्रःप्रसिद्धःसंजयःविदुरश्च,। पार्थैरीरिताःप्रेरिताःसंतःआंबिकेयंधृतराष्ट्रंपर्यचरन् सेवांचक्रुः। स्वयंचसर्वेपार्थाःयथादैवंतथाआदरेणप्रीत्यापर्यचरन् ॥ २३ ॥

द्विरूपाभ्यांकृष्णाभ्यांप्रहितेषुस्थापितेषु । आतुरःरोगी । अकस्मान्मृत्युः वृद्धात्पूर्वंबालमृतिः । विभर्तृका:विधवाःनराःपुरुषाःविधुराःमृतभार्याः ॥ २४ ॥ शब्दादयःपंचअती वहृद्याःमनोहराः। निकामवर्षीयथेष्टवर्षणशीलः । आईषत्स्पृष्टाःआस्पृष्टाःनआस्पृष्टाः समस्ततापाःआध्यात्मिकादित्रिविधतापाःयासांतास्तथा प्रजाःअनन्यभक्त्याअन्यत्रा विद्यमानभक्त्या ॥ २५ ॥ पृथ्वीससरस्वतीकाःसवेदाःगावःधेनवःसदैवनिकामदोहाः यथेष्टदोहनशीलाः वेदानांनिकामदोहत्वंनामवेदोक्तानुष्ठानवतांउक्तफलप्रदत्वम् । अब्दाः मेघाःअब्धयःसमुद्राःनद्यःसरितःजंगमाःअश्वगजाद्याःरत्नानांप्रभवोयेभ्यस्ते तथोक्ताःबभूवुः । सर्वेपीतिसर्वत्रसंबध्यते । पांडवानांराष्ट्रेकेवलंलवणाब्धेःसकाशात् ताम्रपर्ण्याः सकाशाद्रत्नोत्पत्तिरितिन । किंतुसर्वसमुद्रादिभ्यः ॥ २६॥ तेपार्थाःइदंपृथिव्यादिकम् ॥ २७ ॥ समुज्ज्वलादेदीप्यमानापांडवानांकीर्तिःनारीव । तयापदंपादंसतांमूर्ध्निकराभ्यां

द्विरूपकृष्णप्रहितेषु पांडुषु क्षितिं प्रशासत्सु न कश्चनातुरः ॥ नचाकस्मान्मृत्युरभून्न नार्यो विभर्तृका नो विधु- रा नराश्च ॥ २४ ॥ शब्दादयश्चासुरतीव हृद्या निकामवर्षी च सुरेश्वरोभूत् ॥ प्रजा अनास्पृष्टसमस्ततापा अन- न्यभक्त्याच्युतमर्चयंति ॥ २५ ॥ पृथ्वी च गावः ससरस्वतीका निकामदोहा अभवन्सदैव ॥ अब्दाब्धिनद्यो गि- रिवृक्षजंगमाः सर्वेपि रत्नप्रभवा बभूवुः ॥ २६ ॥ कृष्णाश्रयात्सर्वमिदं वशे ते विधाय सम्यक्परिपालयंतः ॥ दिवीव देवा मुमुदुः सदैव मुनींद्रगंधर्वनृपादिभिर्युताः ॥ २७ ॥ समुज्ज्वला पांडवकीर्तिनारी पदं निधायासुरप- क्षमूर्धसु ॥ वराभयं चैव सतां कराभ्यां कृष्णप्रसूता जगदंडमावृणोत् ॥ २८ ॥ पातालपादां पृथिवीनितंबा माकाशमध्यां करसंततशाम् ॥ ग्रहर्क्षताराभरणां द्युवक्षसं विरिंचलोकस्थलसन्मुखांबुजाम् ॥ २९ ॥ विकुंठनाथा- भयहस्तमादरान्मूर्ध्ना वहंतीं वरभारताख्याम् ॥ निशम्य तामीक्ष्य समस्तलोकाः पवित्रिता वेदिभवामिवान्याम् ॥ ३० ॥

वरमभयंचनिधाय जगदंडंजगत्सहितब्रह्मांडंआवृणोत् व्याप्तवती । जगद्व्याप्तिशक्तिःकथमित्यतआह । कृष्णप्रसूतेति । व्यासमुखात्प्रसूतत्वात्कृष्णप्रसूता ॥२८॥ व्याप्तिप्रकारं दर्शयति । पातालेति । पातालेपादौयस्याइतिविग्रहः । एवमुत्तरत्रापिविग्रहः । पृथिव्यांनितंबःकटिप्रदेशः । आकाशेअंतरिक्षेमध्यःनाभेरूर्ध्वभागः । उदरमित्यर्थः । करा- भ्यांसंतताःव्याप्ताःआशाःदिशःग्रहाआदित्यादयःनवग्रहाःऋक्षाणिसामान्यनक्षत्राणिताराःअश्विन्याद्याःसप्तविंशतिः । ग्रहर्क्षताराआभरणानियस्याःसातथा साचसाद्यौश्च- स्वर्गःतस्यांदिविवक्षोयस्याःसाग्रहर्क्षताराभरणद्युवक्षाःनांविरिंचलोकेस्थितंलसन्मुखांबुजंमुखकमलंयस्याः॥२९॥विकुंठस्वामिनोहरेःअभयमुद्रांकितहस्तं आदरात् मूर्ध्नावहं- तींवराश्रेष्ठाभारतेतिआख्यानामयस्याःतांकीर्तिनारींनिशम्य भारतार्थंश्रुत्वेत्यर्थः । समस्तलोकाःपवित्रिताःपवित्रीभूताःअन्यांवेदिभवांवेदिमध्यात्समुत्थितांद्रौपदींदृष्ट्वेव ॥ ३० ॥

कलिःबलिश्चप्रह्लादपौत्रंबलिमाविष्टोयःबलिनामादैत्यःसबलिश्च । अतएवसुपापदैत्यावित्युक्तम् । प्रह्लादपौत्रस्तुहरिभक्तः । क्वचक्वचिद्राष्ट्रविप्लवंराज्योपद्रवम् ॥ ३१ ॥ तौकलिबलीनृपेंद्रोधर्मराजः ॥ ३२ ॥ विप्लावयसिनाशयसि ॥ ३३ ॥ दुर्योधनस्यनिपातनं मरणमारभ्यअयंकालःमम । तत्रमत्काले ॥ ३४ ॥ ततःमत्कालाक्रमणात् राष्ट्रविप्लवःकृतइत्याहेतिसंबंधः । राज्ञोबलाद्राज्यंप्रवर्तते । राजानःशारीरबलात् सामादिबलाद्वा राज्यंप्रवर्तयंतीतिभावः । हियस्मात् ॥ ३५ ॥ तस्मात्त्वदीयंकालभवमपि-

प्रपालयत्स्वेव धरां स कृष्णेष्वद्धैव पार्थेषु कलिर्बलिश्च ॥ सुपापदैत्यौ क्व च राष्ट्रविप्लवं संचक्रतुस्तच्छ्रुतमाशु पार्थैः ॥ ३१ ॥ नृपेण कृष्णेन च साधु चोदितो भीमस्तदा तौ सगणौ विजित्य ॥ बलिं प्रविद्राव्य कलिं निबध्य समानयत्कृष्णनृपेंद्रयोः पुरः ॥ ३२ ॥ पप्रच्छ तं कृष्णपुरो युधिष्ठिर उदारधीः ॥ कले किमिति मे राष्ट्रं विप्लावयसि दुर्मते ॥ ३३ ॥ इत्युक्त आह कालोयं दुर्योधननिपातनम् ॥ आरभ्य मम तत्र त्वं बलादाक्रम्य तिष्ठसि ॥ ३४ ॥ ततो मया कृतो राष्ट्रविप्लवस्ते नराधिप ॥ तमाह राजा राज्ञां हि बलाद्राज्यं प्रवर्तते ॥ ३५ ॥ अपि कालभवं राष्ट्रं त्वदीयं मादृशैर्नृपैः ॥ ह्रियते बलवद्भिर्हि राज्याशा ते कुतस्तदा ॥ ३६ ॥ कालो वा कारणं राज्ञो राजा वा कालकारणम् ॥ इति ते संशयो मा भूद्राजा कालस्य कारणम् ॥ ३७ ॥ तमुवाच कलिः काले मदीये त्वादृशः कुतः ॥ राजानं पूर्वमाविश्य विप्रांश्च स्यामहं नृप ॥ ३८ ॥ वासुदेवसहायेषु तेजो युष्मासु मे नहि ॥ ३९ ॥ क्व राजासावृते युष्मान्यो मया नाभिभूयते ॥ मदीयकाले भूपाल विप्रदेवविरोधिनि ॥ मद्दृष्टिपाते क्व गुणाः क्व वेदाः क्व सुयुक्तयः ॥ ४० ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

कालनिमित्तकमपि राष्ट्रंमादृशैःमत्सदृशैःबलवद्भिर्नृपैर्बलात् ह्रियते । तदा तस्मिन्काले तेराज्याशाकुतः नहीत्यर्थः ॥ ३६ ॥ कारणंराज्यप्रमावितिशेषः ॥ ३७ ॥ राजाकालस्यकारणमित्युक्तस्योत्तरमाह । तमुवाचेति । त्वादृशःज्ञानबलाभ्यांत्वत्सदृशः कुतःनकुतोपीत्यर्थः । तत्कारणमाह । राजानमिति । स्यांतिष्ठामि ॥ ३८ ॥ तेजःसामर्थ्यंनहिनभवेत् ॥ ३९ ॥ हेभूपाल विप्रदेवविरोधिनिमदीयेकाले युष्मानृतेमयायोनाभिभूयते ननिराक्रियते असौराजाक्व नक्कापीत्यर्थः ॥ ४० ॥ ॥ ॥

हेकले त्वं अनृतःअसत्यवादीसन्नपिसत्यंवक्षिवदसि । त्वात्वांकृत्स्ववचनान्निमित्तात् मोचयेमोक्ष्यामि । यदाअस्मत्संततेःक्षेमकस्यपरंअनंतरम् ॥ ४१ ॥ विलुंपसि तत्रापितस्मिन्कालेपिनोस्माकंकरंबलिं अर्पयप्रयच्छ । कीदृशोयंकरइत्यतआह । सीमेति । सीमाग्रामस्थक्षेत्रमर्यादा । आधिःऋणप्रतिनिधिः ऋणदातुःविश्वासार्थतद्धस्तेदत्तंयद्वसु तदाधिरित्युच्यते । बहूनांवाक्यं तुलाचमानंचतुलामाने।तुलागुडादिक्रेयवस्तुस्थापनार्थंकृताप्रसिद्धा मानंधान्यादिपरिमाणज्ञापकंपात्रविशेषः। मेदीयमानइतिशेषः । करः ॥४२॥कचिदेतेषुव्याजेसत्यपि एतेषांसीमादिपंचानां अतिक्रमंसर्वथानैवकुरु । तंकलिंपांडवसंततिःभूमाविनिशेषः । यावत्॥४३॥ तावत्पांडवेभ्यःपरंयावत्क्षेमकःतावत्क्षेमक

जगाद नृपतिः सत्यं कले वक्ष्यन्नृतोपि सन् ॥ मोचये त्वत्वचनाद्यदास्मत्संततेः परम् ॥ ४१ ॥ विलुंपस्यखिलान्धर्मान्करं तत्रापि नोर्पय ॥ सीमाधिर्बहुवाक्यं च तुलामाने च मे करः ॥ ४२ ॥ नैवातिक्रममेतेषां कुरु सर्वात्मना क्वचित् ॥ तमाह भगवान्कृष्णो यावत्पांडवसंततिः ॥ ४३ ॥ तावन्न ते भवेच्छक्तिः प्रवृत्तस्यापि भूतले ॥ पांडवेभ्यः परं यावत्क्षेमकः क्रमवर्धिना ॥४४॥ क्षेमकात्परतः पूर्तिं शक्तिस्ते यास्यति ध्रुवम् ॥ न द्रष्टव्यं भूतलं ते कुत एव स्पृशेर्भुवम् ॥ ४५ ॥ यावत्पार्था अहं चात्र ततो भुवि पदं कुरु ॥ इत्युक्तो वासुदेवेन मोचितो धर्मजेन च ॥४६॥ तान्प्रणम्य ययौ पारे समुद्रस्याश्रयद्गुहाम् ॥ पार्थाश्च कृष्णसहिता रक्षंतः क्ष्मां मुदं ययुः॥४७॥ एवं पार्थान्प्रतिष्ठाप्य शक्रप्रस्थे तु सार्जुनः ॥ क्रीडन् दिव्याः कथाः प्राह पुत्रशोकापनुत्तये ॥४८॥ गीतोक्तं विस्मृतं चास्मै पुनर्विस्तरतोवदत् ॥ वाणी प्राणो वासुदेव इत्येतैरखिलं ततम् ॥४९ ॥ सर्वोत्तमत्वमेतेषां सर्वमेतद्वशे जगत् ॥ उत्तरोत्तरमेतेपि गुणोच्चास्तद्वशेपरे ॥ ५० ॥

पर्यंतंक्रमविवर्धितास्यात् । पांडवसंततिरितिशेषः ॥४४॥क्षेमकात्परतःक्रमवर्धितातेशक्तिःपूर्तिंयास्यति। क्रमवर्धिनेतिपदं देहलीदीपिकान्यायेनयोज्यम्। यावदत्रभूविपार्था अहंचतावत् तेत्वयाभूतलंनद्रष्टव्यम् । भुवंकुतएवस्पृशेः ॥ ४५॥ ततःअस्मद्गमनानंतरं भुविपदमवस्थानंकुरु ॥ ४६ ॥ समुद्रस्यपारेपरतीरेप्लक्षद्वीपइत्यर्थः । तत्रस्थगुहांआश्रयत् क्ष्मांपृथ्वीम् ॥ ४७ ॥ सार्जुनःकृष्णः ॥ ४८ ॥ अस्मैअर्जुनायवाणीभारती प्राणोमुख्यवायुःइत्येतैःत्रिभिःअखिलंजगत् ततंव्याप्तम् ॥ ४९॥ सर्वोत्तमत्वंएतेषांत्रयाणामस्तीतिशेषः । एतेषांवशे तिष्ठतीतिशेषः । एतेपिवाण्यादित्रयःउत्तरोत्तरंगुणैरुच्चाःउत्तमाः । अपरेशेषेंद्राद्याःतेषांवाण्यादीनांवशेसंतीतिशेषः ॥ ५० ॥ ॥ ॥

इत्थंशेषादीनांवाण्याद्यधीनत्वप्रकारेण हरेर्वशेसर्ववाणीप्राणादिकम् । सहरिःप्रभुःगुणपूर्णश्चएकएव । अन्योनास्ति रमाप्राणादुच्चाउत्तमा । तदधःतस्माद्धरेरधःअधरानीचा ॥ ५१ ॥ सहरिः हुताशइतिप्रोक्तःयतःहुतंसर्वंअत्तिअतःहुतमश्नातीतिहुताशः । वाक्प्राणयोर्मध्यगःहृत्कमलमध्यवर्तीसईशोहरिःअखिलंजगत् यतोधारयति । अतोधातेति-नामवानित्यर्थः । हुताशोधातेत्युपलक्षणं सर्वनामवानित्यर्थः । यद्वा योहरिःअखिलंधारयतिसईशः ॥ ५२ ॥ ब्रह्माद्याःजीवाःतेब्रह्माद्युत्तमजीवाःएतस्यहरेः ॥ ५३ ॥ अ-स्मिन्हरौमिश्राःकिंचिद्भक्तिद्वेषाभासयुक्ताःमध्यमाः ॥ ५४ ॥ एतेत्रिविधाजीवाःअन्यथाउक्तयोग्यताविपर्ययेणनभवंति । दैहिकैःदेहसंबंधिशंखचक्रादिधारणैः श्रीविष्णुमुद्दिश्यप्रदक्षिणनमस्काराद्यैर्वा । मानसैःज्ञानाद्यैःलिंगैःलक्षणैःतारतम्यंविज्ञेयं जीवानामितिशेषः । उक्तलक्षणाउत्तमाःतद्रहिताअधमाः इतिविज्ञेयमितिभावः ॥ ५५ ॥ वि-

इत्थं हरेर्वशे सर्वं गुणपूर्णश्च स प्रभुः ॥ एक एव न चान्योस्ति प्राणोच्चा तदधो रमा ॥५१॥ स हुताश इति प्रोक्तो हुतमत्यखिलं यतः ॥ वाक्प्राणमध्यगो नित्यं धारयत्यखिलं जगत् ॥५२॥ स ईशो ब्रह्मरुद्राद्या जीवा एव प्रकीर्तिताः ॥ एतस्यानादिसद्भक्ता मुक्तियोग्या हि ते स्मृताः ॥५३॥ अनादिद्वेषिणो येस्मिंस्तमोयोग्याः सुपापिनः ॥ मिश्रा मध्या इति ज्ञेया संसारपरिवर्तिनः ॥ ५४ ॥ एवं जीवास्त्रिधा प्रोक्ता भवंत्येते नचान्यथा ॥ तारतम्यं च विज्ञेयं लिंगैर्दैहिकमानसैः ॥५५॥ विष्णोर्लिंगानुसारित्वात्तारतम्यात्तदीक्षणम् ॥ विष्णोस्तदनुगानां च प्रीतिकृद्धर्म ईरितः ॥५६॥ अधर्मोन्य इयं निष्ठा प्रलापः किं करिष्यति ॥ एवमाद्यनुशास्याजः पार्थं पार्थैः सुसत्कृतः ॥ ५७ ॥ कथंचित्तानवस्थाप्य सुदूरानुगतान्प्रभुः ॥ सुभद्रासहितः प्रायाद्यानेन द्वारकां पुरीम् ॥ ५८ ॥

ष्णोर्लिंगानुसारित्वात् भक्त्याद्यनुकूलत्वात्तारतम्यात्तदीक्षणं तेषांजीवानामीक्षणम् । ज्ञानंविष्णोश्चतथातस्यअनुकूलानांभक्तानांप्रीतिकृत्प्रीतिकरणम् ॥ ५६ ॥ अन्यःप्रीत्यकरणंअधर्मःपापहेतुरित्यर्थः । इयंनिष्ठानिर्णयः । प्रलापःमृतपुत्रमुद्दिश्यकृतःप्रलापः । किंकरिष्यतिनकिमपीत्यर्थः । अतएवप्रलापंहित्वा पूर्वोक्तंज्ञानंसंपाद्यमांभजेतिभावः । अनुशास्यबोधयित्वा पार्थेनसहहस्तिनपुरंप्रत्यागत्येतिवाक्यशेषः । एवंसंभाषमाणौतौप्राप्तौवारणसाह्वयमित्याश्वमेधिके । पार्थैःसुसत्कृतःसम्यगादृतःप्रभुः ॥ ५७ ॥ सुदूरानुगतांस्तान्पार्थान् कथंचित्केनचित्प्रकारेणावस्थाप्य सुभद्रासहितःसन् द्वारकायांप्रतिप्रायात् ॥ ५८ ॥ ॥ ॥ ॥ ॥ ॥ ॥

पथिसमाधेःसकाशाद्विरतेन निवृत्तेनउदंकाख्यमुनिना परिपृष्टः त्वयाकुत्रगतंकिंकृतं कागम्यतेइतिपृष्टःप्रभुर्दुर्योधनंहतंप्राह ॥ ५९ ॥ केशवःशिष्यस्यदुर्योधनस्यवधनिमित्त कोपेन आत्मानंकृष्णमित्यर्थः । शप्तुमुद्यतंतमुदंकविश्वरूपंप्रदर्श्य । वाक्यैःतत्त्वबोधवाक्यैरशमयत्शमयामास ॥ ६० ॥ अशमयदित्यत्रकारणमाह । मद्भक्तइति । एषउदंकः अतितरांमद्भक्तःममआराधनेपूजाविषयेतत्परः तात्पर्यवान् अतएवमामवज्ञायतिरस्कृत्य अनुत्थानंपुनरावृत्तिरहितं निरयंतमःमाव्रजेत् नप्राप्नुयादिति अशमयदितिसंबंधः ॥ ६१ ॥ पश्चात्तापेनाभितप्तःआत्माअंतःकरणंयस्यसतथोक्तः उदंकस्तमेव कृष्णमेव ॥ ६२ ॥ तवअमृतंदातुंशक्रंप्रेषयिष्यइतिप्रोक्त्वा ॥ ६३ ॥ मुनेरुदंकस्यअनादरेषष्ठी । अमृतं-

समाधिविरतोदंकपरिपृष्टः पथि प्रभुः ॥ हतं दुर्योधनं प्राह सभ्रातृसुतसैनिकम् ॥ ५९ ॥ तं शिष्यवधकोपेन श-
प्तुमात्मानमुद्यतम् ॥ केशवोशमयद्वाक्यैर्विश्वरूपं प्रदर्श्य च ॥ ६० ॥ मद्भक्तो नितरामेष मदाराधनतत्परः ॥
मामवज्ञाय निरयं माऽनुत्थानं व्रजेदिति ॥ ६१ ॥ कृपया वासुदेवेन बोधितः शांतमानसः ॥ पश्चात्तापाभितप्ता-
त्मा तमेव शरणं ययौ ॥ ६२ ॥ तस्मै देवोभयं दत्त्वा प्रेषयिष्येऽमृतं तव ॥ दातुं शक्रमिति प्रोक्त्वा ययौ द्वारव-
तीं प्रभुः ॥ ६३ ॥ अथादिदेश देवेशं वासुदेवोमृतं मुनेः ॥ देहीति वंचयिष्यामीत्याह सोपि क्षमापयन् ॥ ६४ ॥
ओमित्युक्तो भगवता तत्स्नेहात्स शचीपतिः ॥ सुजुगुप्सितमातंगवेषो भूत्वा मुनिं ययौ ॥ ६५ ॥ मूत्रस्रोतसि
सौधं च निधाय कलशं वशी ॥ मूत्रयन्निव तं प्राह वासुदेवः सुधामिमाम् ॥ ६६ ॥ महर्षे प्रेषयामास तवार्थे
तां पिबेति च ॥ स मूत्रमिति मत्वा तं याहीत्येवाह भर्त्सयन् ॥ ६७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

देहीतिआदिदेश अदिशत् । सोपींद्रःक्षमापयन्कृष्णमितिशेषः वंचयिष्यामि उदंकमितिशेषः ॥ ६४ ॥ तस्येंद्रस्यस्नेहात् सुजुगुप्सितमातंगवेषः अतिनिंदितांत्यजस्यवेषइव वेषोयस्यसतथा ॥ ६५ ॥ वशीजितेंद्रियःमूत्रनिरोधनेसमर्थइतिभावः । इंद्रःमूत्रस्रोतसि मूत्रद्वारेसौधं अमृतसंबंधिकलशंनिधाय निवध्यमूत्रयन्निवतमुदंकंप्राह ॥ ६६ ॥ किमिति । हेमहर्षे वासुदेवःतवार्थे इमांसुधांप्रेषयामास । तांसुधांपिबेतिप्राहेतिसंबंधः ॥ सउदंकःतमिंद्रंभर्त्सयन्निंदयन् याहीत्येवमत्पुरतोगच्छेत्येवाह ॥ ६७ ॥ ॥

स्वमालयंस्वर्गंवंचयितुरिंद्रस्याभिप्रायमाह । असाधारणमिति । अमृतं देवानांसदाअसाधारणंमुख्यंअन्नं । हियस्मात्ततःकारणात्तस्यामृतस्यान्यपीतिः देवेभ्योन्यैःपीतिःपानंप- रमत्यंतं अप्रियाप्रीतिकरा अतोवंचयामासेतिभावः ॥ ६८ ॥ स्वापराधाच्चस्वाज्ञानादेव उदंकेआत्मदत्तप्रसादादमृतदानरूपप्रसादात्प्रचालितेप्रचलितेसति वासुदेवःयुक्तमे- वेतिमन्यते अमन्यत् ॥ ६९ ॥ शूरसूनवेवसुदेवाय यदूनांसंसदिसभायां वृत्तांतंयुद्धादिवार्ताम् ॥ ७० ॥ सात्वतीसुभद्रासात्वतानामीशेनस्वामिनाकृष्णेन सूनोरभिमन्योःअंत रितंव्यवहितमकथितमित्यर्थः । वधंकथयेतिप्रणम्यऊचे । ततःसुभद्राप्रार्थनानंतरंआह । अभिमन्युवधमितिशेषः ॥ ७१ ॥ बहुशःबहूनिश्राद्धादिदानानि ॥ ७२ ॥ अत्र

वंचयित्वैव तं शक्रो ययौ प्रीतः स्वमालयम् ॥ असाधारणमन्नं हि देवानाममृतं सदा ॥ अन्यपीतिस्ततस्तस्य देवानां परमाऽप्रिया ॥ ६८ ॥ आत्मदत्तप्रसादाच्च स्वापराधात्प्रचालिते ॥ उदंके वासुदेवस्तु युक्तमित्येव मन्य ते ॥ ६९ ॥ स्वपुरीं प्राप्य यदुभिः पूजितः शूरसूनवे ॥ वृत्तांतं कथयामास केशवो यदुसंसदि ॥ ७० ॥ वध मंतरितं सूनोः सात्वतेशेन सात्वती ॥ प्रणम्य कथयेत्यूचे तत आह जनार्दनः ॥ ७१ ॥ ततः सुदुःखिताः शूर पुत्राद्या अभिमन्यवे ॥ श्राद्धदानादि बहुशश्चक्रुः केशवसंयुताः ॥ ७२ ॥ निवसत्यत्र देवेशे धर्मराजः क्रतूत्त- मम् ॥ अश्वमेधमनुष्ठातुं नाविंदद्वित्तमंजसा ॥ ७३ ॥ हतशेषात्क्षात्रसंघात्करं नैच्छद्दयापरः ॥ नच मध्यमक- ल्पेन यष्टुं तस्य मनोगतम् ॥ ७४ ॥ विज्ञाय नित्यविज्ञातनिखिलो बादरायणः ॥ आविर्भूतो हिमवतः शृंगं यत्राभिसं- गतम् ॥ ७५ ॥ मेरुशृंगेण यत्रैव विष्णुः स्वात्मानमव्ययम् ॥ लोकस्य संग्रहायेजे कर्मबंधोज्झितोपि सन् ॥ ७६ ॥

द्वारकायांअंजसाउत्तमकल्पेन अनुष्ठातुंकर्तुं वित्तंनाविंदत पूर्णंनज्ञातवान् । अस्मासुविद्यमानवित्तेन यज्ञःपूर्णोनभवेदिति ज्ञातवानितिभावः ॥ ७३ ॥ दयापरःकृपालुःनृपोनै- च्छत् । आदातुमितिशेषः । मध्यमकल्पेनयष्टुं नेच्छतीतिशेषः ॥ ७४ ॥ नित्यंविज्ञातंनिखिलंयेनेतिविग्रहः । सर्वज्ञइत्यर्थः । तस्यराज्ञोमनोगतंमनःप्रवृत्तिंविज्ञाय आवि- र्भूतःसन्नृपोत्तमंधर्मराजंप्रतिइत्याहेत्युत्तरत्रसंबंधः । इतीतिकिमित्यतआह । हिमवतइत्यादिना । यत्रहिमवत्पर्वतेहिमवतःपर्वतस्यशृंगंशिखरं मेरुशृंगेणहिमवत्पर्वतेस्थितेन मेरुशिखरेणसंगतंमिलितं तत्पर्वतंइतिशेषः ॥ ७५ ॥ यत्रैवविष्णुरव्ययंस्वात्मानं एवंलोकस्यसंग्रहाय भक्तजनशिक्षणार्थंईजे ॥ ७६ ॥

यत्रगिरौसुराः मरुत्ताख्योराजा । मरुत्तइत्यकारांतःशब्दः । हरिमुद्दिश्येतिशेषः । ईजिरे । वृषपर्वादानवः यत्रईजे तत्राक्षयंधनमस्ति ॥७७॥ शंकरशरीरस्थंरुद्रांतर्गतं जामदग्न्यं परशुरामंइत्वासंपूज्य तस्यरामस्यअनुज्ञयातद्धनंस्वीकृत्य तेनधनेनयजेत्याह ॥ ७८ ॥ व्यासवाक्यमनु अनुकूलंयत्रक्रियायामितिक्रियाविशेषणम् । भीमोप्याह ॥ ७९ ॥ किमिति । विष्णुर्जामदग्न्यः धनस्यदेवता कुतः यतोखिलेश्वरः । शंकरशरीरस्थःसजामदग्न्यःयज्ञेउच्छिष्टस्यावशिष्टस्यधनस्यअधिपः॥८०॥ तेनैवशंकरशरीरस्थेन विष्णुना जामदग्न्येनअस्त्रंपाशुपतास्त्रम् । एतेनशंकरस्थेन ॥ ८१ ॥ सविष्णुःपददातासत्यलोकादिनियतपदाधिपत्यप्रदाता अखिलसृष्ट्यादिप्रदाता । परतंत्रान्परमात्माधीनान्

शंकराद्याः सुरा यत्र मरुत्तश्चेजिरे हरिम् ॥ दानवो वृषपर्वा च तत्रास्ति धनमक्षयम् ॥ ७७ ॥ तच्छंकरशरीरस्थं जामदग्न्यं हरिं परम् ॥ इष्ट्वैवानुज्ञया तस्य स्वीकृत्य यज तेन च ॥ ७८ ॥ इत्याह व्यासवाक्यानु भीमोप्याह युधिष्ठिरम् ॥ ७९ ॥ धनस्य देवता विष्णुर्जामदग्न्योखिलेश्वरः ॥ स शंकरशरीरस्थो यज्ञोच्छिष्टधनाधिपः ॥ ८० ॥ तेनैव विष्णुना दत्तमर्जुनायास्त्रमुत्तमम् ॥ कार्याण्यन्यानि चास्माकं कृतान्येतेन विष्णुना ॥ ८१ ॥ स ब्रह्मरुद्रशक्रादिपददाताखिलेश्वरः ॥ स्वतंत्रः परतंत्रांस्तानावर्तयति चेच्छया ॥ ८२ ॥ प्रियोस्माकं प्रियास्तस्य सर्वदैव वयं नृप ॥ अतस्तदभ्यनुज्ञातधनेनैव यजामहे ॥ ८३ ॥ सोयं पितामहोस्माकं व्यासस्तं नः प्रदास्यति ॥ इत्युक्त्वा तं पुरस्कृत्य कृष्णद्वैपायनं ययुः ॥ ८४ ॥ धनं कृष्णः समादाय समंताच्छतयोजनम् ॥ ददौ तेषां तेपि चोहुर्हस्त्यश्वोष्ट्रनरादिभिः ॥ ८५ ॥ युधिष्ठिरस्तते सर्वे भीमसेनपुरोगमाः ॥ यज्ञार्थमूहिरे भूरि स्वर्णमुद्यद्रविप्रभम् ॥ ८६ ॥

ब्रह्मादीनिच्छया आवर्तयतिमुक्तिपर्यंतंपर्यावर्तयति ॥ ८२ ॥ प्रियःरामइतिशेषः । तस्यरामस्ययतःअतःतेनरामेणअभ्यनुज्ञातेन आज्ञापितेनधनेनयजामहे ॥ ८३ ॥ सरामःअस्माकंपितामहोयंव्यासः व्यासस्वरूपःतद्धनं तंकृष्णद्वैपायनम् ॥ ८४ ॥ समंतात्परितः शतंयोजनंशतयोजनपरिमितं धनंआदायतेषांपांडवानांददौ । तेपांडवाःहस्त्यादिभिःसहऊहुः ॥ ८५ ॥ सामान्योक्तिंविशेषेणविशदयति । युधिष्ठिरमिति । उद्यदादित्यस्यप्रभेवप्रभायस्यतत्तथातत् भूरिवहुस्वर्णमूहिरे ॥ ८६ ॥ ॥ ७ ॥

तदैवपांडवागमनसमये सवासुदेवःकृष्णःसुभद्रयासह ॥ ८७ ॥ उदकार्थिनःतत्स्यमरुदेशवासिनःउदकस्य तस्योदकस्यकामेन इच्छानुसारेणवर्षिणःवर्षणशीलान्मेघान्दत्त्वा स्ववरं अमृतंप्रेषयामीतिपूर्वदत्तंवरम् ॥ ८८ ॥ आसन्नेषुनागपुरसमीपंप्राप्तेषुसत्सु कृष्णः पुरंहस्तिनपुरंप्रविवेश । व्यासःपार्थेभ्यःपूर्वंप्रविवेशेतिभावः । तदाकृष्णागमनसमये उत्तराअभिमन्युभार्या मृतंमृतबालकंअसूतसुषुवे ॥ ८९ ॥ वासुदेवंकृष्णम् ॥ ९० ॥ गर्भेआत्मनाकृष्णेनेत्यर्थः । रक्षितंप्रसवेप्रसूतिसमयेहतंद्रौण्यस्त्रेणहतंबालकं प्रत्यक्षं लोकप्रत्यक्षंयथास्यात्तथा पार्थानांतंतवेसंतानवृद्ध्यर्थं पुनरुज्जीवयामास। मयागर्भेरक्षितमिति सतांज्ञापयितुं प्रसवकालेऽस्त्रस्यअवकाशंदत्त्वा अस्त्रदग्धंपुनरुज्जीवयामासेति

तदैव वासुदेवोपि सभार्यः ससुभद्रया ॥ आगच्छद्धास्तिनपुरं पथ्युदकेन पूजितः ॥ ८७ ॥ तत्कामवर्षिणो मेघांस्तस्य दत्त्वोदकार्थिनः ॥ सफलं स्ववरं कृत्वा जगाम गजसाह्वयम् ॥ ८८ ॥ आसन्नेष्वेव पार्थेषु व्यासे च पुरुषोत्तमे ॥ प्रविवेश पुरं कृष्णस्तदाऽसूतोत्तराम्रुतम् ॥ ८९ ॥ द्रौण्यस्त्रसूदितं बालं दृष्ट्वा कुंत्यादिकास्त्रियः ॥ शरण्यं शरणं जग्मुर्वासुदेवं जगत्पतिम् ॥ ९० ॥ प्रत्यक्षमात्मना गर्भे रक्षितं प्रसवे हतम् ॥ पुनरुज्जीवयामास केशवः पार्थतंतवे ॥ ९१ ॥ तदैव विविशुः पार्थाः सकृष्णाः सधनोच्चयाः ॥ सर्वे मुमुदिरे दृष्ट्वा पौत्रं केशवरक्षितम् ॥ ९२ ॥ ददौ दानानि बहुशो धर्मपुत्रो युधिष्ठिरः ॥ पौत्रजन्मनि हृष्टात्मा वासुदेवं ननाम च ॥ ९३ ॥ कुंतीकृष्णासुद्राभिर्वैराट्यादिभिरेव च ॥ पांडवैः पुरुषैरन्यैः संस्तुतः प्रणतो हरिः ॥ ९४ ॥ ततः कृष्णाभ्यनुज्ञाताः पाराशर्यसदस्यकाः ॥ आरेभिरेऽश्वमेधं ते मुनिभिर्ब्रह्मवादिभिः ॥ ९५ ॥ सर्वयज्ञात्मकं तेषामश्वमेधं जगत्पतिः ॥ कारयामास भगवान्कृष्णद्वैपायनः स्वयम् ॥ ९६ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

भावः ॥ ९१ ॥ सकृष्णाःसव्यासाःधनस्योच्चयोराशिः तेनसहिताः ॥ ९२ ॥ पौत्रजन्मनीतिनिमित्तसप्तमी । हृष्टात्मासंतुष्टमनाःबहुशःबहूनिबहुवारंवा ॥ ९३ ॥ वैराट्याविराटसुतयोत्तरया । अन्याभिःस्त्रीभिश्च । अन्यैःपुरुषैश्च ॥ ९४ ॥ पाराशर्यःव्यासःसदस्यःमंत्रपूर्वकविधिवक्तायेषांतेतथा ॥ ९५ ॥ तेषांपार्थानांअश्वमेधंयज्ञं सर्वयज्ञात्मकंसर्वयज्ञस्वरूपं कारयामास ॥ ९६ ॥ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ॥

ईरितः प्रेरितः साधनानि उपकरणानि हिरण्मयानीति शेषः । शालां यज्ञसभां चक्रे ॥ ९७ ॥ वासविः पार्थः पुरोहितेन धौम्येन पुरस्कृतः आदौ अनुमंत्रितः पश्चादुत्सृष्टः अनुमंत्रितो त्सृष्टः तं कृष्णसारंगं कृष्णश्च बहुकृष्णश्चासौ स रंगः नानावर्णश्च तं तुरंगं अश्वं अनु पृष्ठतः इत्यर्थः । वव्राज ययौ ॥ ९८ ॥ अरिभिरजितः पराजयरहितः स पार्थः रुंधतः अश्वरोधकान् ॥ ९९ ॥ तदा तस्मिन् दिग्विजये युधिष्ठिराज्ञया कश्चिदपि न हंतव्य इत्येवं रूपया आज्ञया । तेन पार्थेन कश्चिन्न निहतः । प्रीयता प्रीतिमता तेन पार्थेन आहूताः आकारिताः ॥ १०० ॥ मळलूरं मळलूरनाम्नीं पांड्यानां राजधानीं क्रमात् दिग्विजयक्रमात् प्राप्तः प्राप्तवान् । तत्र मळलूरे बभ्रुवाहनः अर्जुनाज्जातः चित्रांगदापुत्रः नाम्ना बभ्रुवाहनः अर्घ्यपाद्या

साधनानि च सर्वाणि शालां चैव हिरण्मयीम् ॥ पवमानसुतश्चक्रे कृष्णद्वैपायनेरितः ॥ ९७ ॥ अथानुमंत्रितोत्सृष्टं पुरोहितपुरस्कृतम् ॥ तुरंगं कृष्णसारंगमनुवव्राज वासविः ॥ ९८ ॥ स जित्वा रुंधतः सर्वान्नृपतीन्छस्त्रतेजसा ॥ चारयामास सर्वेषु राष्ट्रेष्वविजितोरिभिः ॥ ९९ ॥ युधिष्ठिराज्ञया तेन न कश्चिन्निहतस्तदा ॥ आहूताश्च नृपास्तेन यज्ञार्थं प्रीयताखिलाः ॥ १०० ॥ मळलूरं क्रमात्प्राप्तः तत्रैनं बभ्रुवाहनः ॥ अभ्ययादर्घ्यपाद्याद्यैस्तमाह विजयः सुतम् ॥ १०१ ॥ योद्धुकामोर्घ्यमादाय त्वयाद्याभिगतो ह्यहम् ॥ न प्रीये पौरुषं धिक्ते यन्मेध्याश्वो न वारितः ॥ १०२ ॥ तदापि पितृभक्त्यैनमयुध्यंतमुलूपिका ॥ आह युध्यस्व तत्प्रीत्यै गुरोः कार्यमसंशयम् ॥ १०३ ॥ प्रीणनायैव युध्यस्व पित्रे संदर्शयन्बलम् ॥ इत्युक्तो युयुधे पित्रा बलं सर्वं प्रदर्शयन् ॥ १०४ ॥ ॥ छ ॥ ॥ छ ॥

द्यैः सहैनं पितरं अभ्ययात् ॥ १०१ ॥ विजयः पार्थः सुतं तं बभ्रुवाहनं आह । किमिति । योद्धुकामोहं अर्घ्यमादाय अभिगतः अभिमुखं प्राप्तोयद्यस्मात्तस्मात् न प्रीये न तुष्यामि मे मेध्याश्वः यज्ञार्होश्वः यद्यस्मान्न निवारितः तत्तस्मात्ते पौरुषं वीर्यं धिक् निष्फलमित्यर्थः ॥ १०२ ॥ तदापि विनिंदनसमयेपि पितृभक्त्या अयुध्यंतं युद्धमकुर्वंतं एनं बभ्रुवाहनं उलूपिका पार्थभार्या नागकन्यका प्राह । किमिति । युध्यस्व पित्रा सहेति शेषः । यत्कर्म गुरोः प्रीत्यै भवति तत्कर्म असंशयं यथास्यात्तथा कार्यं कर्तव्यम् ॥ १०३ ॥ अतएव प्रीणनायैव प्रीत्यर्थमेव । न तु द्वेषबुद्ध्या । पित्रे बलं संदर्शयन् युध्यस्व ॥ १०४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

स्मयन्विस्मयंकुर्वन् मंदंयोधयतिअयुध्यत्। सबभ्रुवाहनःसर्वेषांआयुधानांक्षेपेपि प्रयोगेकृतेपि अविकारंश्रमादिरहितंधनंजयम् ॥१०५॥ दृष्ट्वाबाल्यात्बालस्वभावात् परीक्षायैअर्जुनसामर्थ्यपरीक्षार्थं मंत्रपूतं मोहप्रापकदैवनमंत्रेणाभिमंत्रितं महाशरंपित्रेचिक्षेप । दैवेनदेवताधिष्ठितेननेनशरेणमोहोमूर्छाएनंपार्थमाविशत् ॥ १०६ ॥ तद्भ त्त्यागुरुभक्त्याप्रायोपविष्टः । प्राणत्यागार्थमुपविष्टोभूदित्यर्थः । तन्माताचित्रांगदाविललाप प्रलापंकृतवतीअतिदुःखिता ॥ १०७ ॥ तदाचित्रांगदाउलूपींविजगर्हे भर्त्स यामास । किमिति । जगत्त्रयपूजितंमेभर्तारं अविजानतैवबाल्यबुद्धिमतेत्यर्थः । पुत्रेणअजीघनःघातितवत्यसि । अतएवधिक्तेजीवनमितिशेषः ॥ १०८ ॥ हेकलिप्रिये

अर्जुनस्तु सुतस्नेहान्मंदं योधयति स्मयन् ॥ स तु सर्वायुधक्षेपेप्यविकारं धनंजयम् ॥ १०५ ॥ दृष्ट्वा बाल्यात्परी क्षायै मंत्रपूतं महाशरम् ॥ चिक्षेप पित्रे दैवेन तेनैनं मोह आविशत् ॥ १०६ ॥ मूर्छितं तं गुरुं दृष्ट्वा तद्भक्त्या भृश दुःखितः ॥ प्रायोपविष्टस्तन्माता विललापातिदुःखिता ॥ १०७ ॥ विजगर्हे तदोलूपीं धिग्जगत्त्रयपूजितम् ॥ अजी घनो मे भर्तारं पुत्रेणैवाविजानता ॥ १०८ ॥ लोकवीरं पतिं हित्वा न मे कार्यं सुतेन च ॥ पतिलोकमहं यास्ये त्वमा भव कलिप्रिये ॥ १०९ ॥ इत्युक्त्वा मरणायैव तां विनिश्चितमानसाम् ॥ धरायां विलुठंतीं च दृष्ट्वा भुजग नंदिनी ॥ ११० ॥ नागलोकात्समादाय विशल्यकरणीं क्षणात् ॥ उत्थापयामास पतिं त्रिलोकातिरथं तया ॥ १११ ॥ प्रहस्योवाच च तदा श्रुतं वाक्यं पुरा मया ॥ सुरलोके सुरैः प्रोक्तं भीष्माद्या नातिधर्मतः ॥ यद्धतास्तेन दोषेण पार्थस्तेनातिवेदनाम् ॥ ११२ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

कदनप्रिये मेसुतेनकार्यंनास्ति । अहंपतिलोकंयास्ये । पतिमनुमरणंगमिष्यामीतिभावः । लोकवीरं पतिंहित्वात्वमाभव । त्वमितिशेषः । पतिंहत्वेतिपाठे पतिंहत्वासुतेनकार्यं नेत्यन्वयः ॥ १०९ ॥ विलुठंतींलोठयंतीं तांचित्रांगदांभुजगनंदिनीउलूपिका ॥ ११० ॥ तयाविशल्यकरण्या ॥ १११ ॥ प्रहस्यउवाच उलूपिकेतिशेषः । किमिति ॥ पुरा मयासुरलोकेसुरैःप्रोक्तंवाक्यंश्रुतं तत्किमित्यतआह । भीष्माद्याइति । तेनपार्थेनभीष्माद्याःअतिधर्मतोनहताः किंचिद्व्याजेनहताइत्यर्थः । यद्यस्मात्तेनदोषेणपार्थः रणेअति वेदनांव्रजेत् इतिश्रुतमितिपूर्वेणान्वयः ॥ ११२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

नद्धितद्पिदुःखंपरतःअन्यस्मान्नस्यात् पुत्रादेवदुःखंस्यादितिभावः । इतिदेवानांवचनादेवाहंआत्मजंबभ्रुवाहनं युध्ययुध्यस्वइत्यब्रुवम्॥ ११३॥ देवानामेवसंकल्पादित्याचार्योक्तिः । ननुपुत्रसामर्थ्यान्मूर्छितइतिभावः । अयमर्जुनःअन्यतःपुत्रादितिशेषः॥ ११४॥पुत्राद्वैदगंप्रामोत्वितिकुतोदेवानांसंकल्पइत्यतआह । अन्येनेति ।अस्यपार्थस्यत्रिलोकगंत्रिषुलोकेषुविद्यमानम् ॥११५॥ पुत्रश्चभार्याचताभ्यांयुतःलघ्वक्षरमितिपुत्रपदस्यपूर्वनिपातः । तौचित्रांगदाबभ्रुवाहनौ ततःमळ्लूरात् ॥ ११६॥ समीपस्थंपार्थंअश्वंमेध्या

रणे व्रजेदिति न तत्परतः स्यादिति त्वहम् ॥ वचनादेव देवानां युध्येत्यात्मजमब्रुवम् ॥११३॥ देवानामेव संकल्पान्मूर्छितश्चार्जुनोभवत् ॥ भुक्तदोषफलश्चायं पुनर्भोक्ष्यति नान्यतः॥ ११४॥ अन्येन पतितस्यास्य यशो नश्येत्त्रिलोकगम् ॥ नार्जुनस्य यशो नश्येदिति देवैरिदं कृतम् ॥ ११५ ॥ इत्युक्तः प्रीतिमापेदे पुत्रभार्यायुतोर्जुनः॥ यज्ञार्थं तावथाहूय पूजितः प्रययौ ततः ॥ ११६ ॥ द्वारकायाः समीपस्थं प्रद्युम्नाद्याः सुता हरेः ॥ प्रसत्याश्वमथाजह्रुराह्वयंतोर्जुनं युधे ॥ ११७ ॥ सुभद्राहरणं मार्ष्टुं नीतेश्वे तैर्धनंजयः ॥ गौरवाद्वासुदेवस्य मातुलस्य च केवलम् ॥ ११८ ॥ मातुलायाब्रवीदश्वं हृतं पौत्रैरबंधुवत् ॥ स निर्भर्त्स्य कुमारांस्तान्मेध्यमश्वममोचयत् ॥ ११९ ॥मातुलं स प्रणम्याथ यज्ञार्थं तान्निमंत्र्य च ॥ गच्छन् गजाह्वयं दूतमग्रतोयापयन्नृपे ॥ १२० ॥ सकृष्णः सहसोदर्यः श्रुत्वासौ प्राप्तमर्जुनम् ॥ प्रीतो बाष्पातिपूर्णाक्षो भ्रातृस्नेहादभाषत ॥ १२१ ॥ वासुदेव न पश्यामि दुर्लक्षणमथार्जुने ॥ केन दुर्लक्षणेनायं बहुदुःखी प्रवासगः॥ १२२॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

श्वम् ॥ ११७ ॥ सुभद्राहरणंपार्थकृतसुभद्राहरणापकीर्तिं मार्ष्टुंपरिहर्तुं तैःकृष्णपुत्रैःमातुलस्यचवसुदेवस्यगौरवात् ॥११८॥ केवलंअबंधुवत् अरिभिरिवेत्यर्थः । पौत्रैःवसुदेवपौत्रैःहृतमश्वंमातुलायअब्रवीदकथयत् । सवसुदेवः ॥ ११९ ॥ तान्वसुदेवादीन्निमंत्र्यआहूय नृपेधर्मराजायअयापयत् प्रेषयामास ॥ १२० ॥ असौराजाप्राप्तमर्जुनंश्रुत्वाप्रीतःसंतुष्टःभ्रातुःपार्थस्यस्नेहात्बाष्पैःअतिपूर्णअक्षिणीयस्यसतथासन् अभाषत ॥ १२१ ॥ अथशब्दःप्रश्ने ॥ १२२ ॥ ॥ ॥ ॥ ॥

पृष्टःराज्ञेतिशेषः । तंराजानंप्राह । किमिति । तेतवभ्राताअर्जुनःदीर्घपिंडिकेपार्ष्णीयस्यसतथा । तेनदीर्घपिंडिकावत्वदुर्लक्षणेन । बहुलंदुःखंयस्येतिदुःखबहुलः । इत्युक्त्वापु नरेवदुर्लक्षणांतरम् ॥ १२३ ॥ वदंतंवक्तुमिच्छंतंकृष्णंपांचालीद्रौपदी कटाक्षेणअपांगसंज्ञयान्यवारयत् । मावदेतिनिवारितवतीत्यर्थः ॥ १२४ ॥ इयंविद्यापुरुषाणांलक्षणंज्ञा पयंतीविद्यासम्यक्शुद्धाअत्युत्तमा ॥१२५॥ विद्याशीलःविद्याग्रहणस्वभावः युधिष्ठिरःप्रसंगात् लक्षणकथनप्रसंगात् प्राप्तुमिच्छेदितिज्ञात्वेत्यर्थः । लोभात् विद्यासुलोभात् ॥ १२६ ॥ तस्याःद्रौपद्याःगौरवात् उत्तरंलक्षणकथनोत्तरं नप्रत्यभाषत नाकथयत् । कथांतरंअन्यप्रसंगंब्रुवाणःसन् तंलक्षणकथनप्रसंगंविस्मारयामास ॥ १२७ ॥ वासु देवेनअतिदीर्घपिंडिकत्वदोषादपिअर्जुनेस्फुटंव्यक्तंदृश्यमानमपिउदरस्यकिंचिदाधिक्यंतथासव्यबाहोःवामकरस्यआधिक्यंदीर्घत्वम् । एवंचएवंविधंदुर्लक्षणंनैवोक्तम्॥१२८॥

पृष्टस्तं केशवः प्राह भ्राता ते दीर्घपिंडिकः ॥ तेनायं दुःखबहुल इत्युक्त्वा पुनरेव च ॥ १२३ ॥ वदंतमेवं पांचाली कटाक्षेण न्यवारयत् ॥ समस्तलक्षणाभिज्ञाः कृष्णःसत्या वृकोदरः ॥ १२४ ॥ कृष्णा च पंचमो नास्ति विद्या शुद्धे-यमंजसा ॥ १२५ ॥ प्रसंगात्प्राप्तुमिच्छेत्तां विद्याशीलो युधिष्ठिरः ॥ इति लोभात्तु पांचाली वासुदेवं न्यवारयत् ॥ १२६ ॥ तद्गौरवाद्वासुदेवो नोत्तरं प्रत्यभाषत ॥ विस्मारयामास च तं प्रब्रुवाणः कथांतरम् ॥ १२७ ॥ उदरस्य किंचिदाधि-क्यं वृषणाधिक्यमेव च ॥ सव्यबाहोस्तथाधिक्यं दुर्लक्षणमथार्जुने ॥ १२८ ॥ तन्नोक्तं वासुदेवेन दृश्यमानमपि स्फुटम् ॥ ज्ञानानंदह्रासकराः ह्येते दोषाः सनातनाः ॥ १२९ ॥ समस्तजीवराशौ तु दुर्लक्षणविवर्जितौ ॥ पूर्णचि-त्सुखशक्त्यादेर्योग्यौ कृष्णा च मारुतिः ॥ १३० ॥ अनादिदुःखहीनत्वे सुखाधिक्ये च लक्षणम् ॥ रुक्मिणीसत्य-भामादिरूपायाः श्रिय एव तु ॥ १३१ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

हियस्मात्कारणात् एतेदोषाःदीर्घपिंडिकादिदोषाःसनातनाः । नित्याःजीवसंस्थाइत्यर्थः । अतःज्ञानानंदह्रासकराः । नित्यत्वान्मुक्तावपिज्ञानंदाच्छादकाइतिभावः ॥ १२९ ॥ चित्ज्ञानंसुखमानंदःशक्तिःशरीरबलं ताआदयोयस्यभक्त्यादिगुणसमूहस्यसतथा । पूर्णःअपरिमितःसचासौचित्सुखशक्त्यादिश्चतथोक्तः तस्ययोग्यौ ॥ १३० ॥ रुक्मिणी सत्यभामेआदीयासांताःसीतादयःतथातासांरूपायाःस्वरूपवत्याःश्रियएवलक्ष्म्याएवतुकृष्णामारुत्योःसकाशात् विशेषेण अनादिदुःखहीनत्वेसुखाधिक्येचविषयेमुख्यंलक्ष-णंजीवसंघाद्विशेषलक्षणंअस्तीतिशेषः ॥ १३१ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ततोपिश्रियोपिमुख्यंअशेषतःरमादेःसकाशात् गुणराशेःगुणसमूहस्यनित्यंपरमुत्कृष्टंलिंगंलक्षणंव्यासादिरूपिणःविष्णोरेवास्तीतिशेषः । अन्यस्यनचहियस्मात्तस्मात्सएको-विष्णुःपूर्णसद्गुणः ॥ १३२॥ प्रसंगाद्रमादित्रयाणांस्वरूपमाहात्म्यमुक्त्वा विष्णोःसर्वोत्तमत्वमुक्त्वा प्रकृतमनुसरति । साश्वइत्यादिना । यज्ञवाटंयज्ञशालांकेशवेनसहिताःसह-केशवाःअस्यार्जुनस्यसहोदराःपार्थेनपूजिताःसंतःपार्थमालिंगनादिनापूजयामासुः ॥ १३३॥ समागतैर्नृपैश्चसमागतैर्विप्रवरैश्च जुष्टःसेवितःयुक्तइत्यर्थः ॥ १३४ ॥ अधिष्ठितः युक्तःसयज्ञःअशोभतशुशुभे । विश्वादिरूपेणविश्वतैजसप्राज्ञनामकत्रिरूपेणतेनपरेणपुंसाअधिष्ठितंएतद्विश्वंयथाशोभतेतथाअशोभतेत्यर्थः ॥ १३५ ॥ सोश्वमेधयज्ञःशक्र-स्यशतक्रतुत्वेशतक्रतुत्वसंपादकेयथातथा पांडवक्रतोयज्ञःआविःप्रकटभूतैर्विध्यादिसुरैरधिकमलक्रतोभूत् ॥१३६ ॥ स्वधर्माःस्वस्ववर्णाश्रमोचितधर्मस्थाः तेचतेमर्त्यादिकाश्च

मुख्यं ततोतिमुख्यं तु स्वातंत्र्यादेरशेषतः ॥ गुणराशेः परं लिंगं नित्यं व्यासादिरूपिणः ॥ विष्णोरेव न चान्यस्य स ह्येकः पूर्णसद्गुणः ॥ १३२ ॥ साश्वेर्जुने यज्ञवाटं प्रविष्टस्य सहोदराः ॥ पूजिताः पूजयामासुर्मुदिताः सहकेशवाः ॥ १३३ ॥ ततः स यज्ञो यदुवीररक्षितो व्यासोपदिष्टो मुनिभिः प्रवर्तितः ॥ अशोभतालं सकलैर्नृपैश्च समागतैर्विप्रवरैश्च जुष्टः॥ १३४ ॥ स कृष्णयुग्मेन च भार्गवेण त्रिधा विभक्तेन परेण पुंसा ॥ अधिष्ठितोशोभत विश्वमेतद्विश्वादिरूपेण यथैव तेन ॥ १३५ ॥ यथा विरिंचस्य पुरा स यज्ञो यथैव शक्रस्य शतक्रतुत्वे ॥ तथैव सोभूद्विधिशर्वशक्रपूर्वैः सुरैराविरलं क्रतोधिकम् ॥ १३६ ॥ न देवगंधर्वमुनिस्वधर्ममर्त्यादिकेष्वास स योत्र नास ॥ स्वलंकृतैर्नाकिजनैः सकांतैररूरुचन्नाकवदेतदोकः॥ १३७ ॥ तत्रैव तत्त्वानि ससंशयानि निःसंशयान्यासुरलं विवादे॥ परस्परोत्थे हरिणा त्रिरूपिणा संस्थापितान्यग्र्यवचोभिरुच्चैः ॥ १३८ ॥ प्रगीतगंधर्ववरः प्रनृत्तसदप्सराः संततवादिविप्रः ॥ विवेचयद्देवनृपौघ एको रराज राजाखिलसत्क्रतूनाम् ॥ १३९ ॥ आदिपदेनविभीषणादिसद्राक्षसादिकाविवक्षिताः । देवगंधर्वमुनयश्चस्वधर्ममर्त्यादिकाश्चतथातेषुमध्येयःअत्रयज्ञेनासनागतइत्यर्थः । सनास लोकत्रयेपिनबभूवेत्यर्थः । एतदोकःइदंयज्ञस्थलंकांताभिःस्त्रीभिःसहवर्तमानैर्नाकिजनैर्देवैःनाकवत्स्वर्गवत् अरूरुचत्शुशुभे ॥१३७॥ तत्रैवयज्ञशालायां ससंशयानितत्त्वानि परस्परोत्थेविवादेसतिहरिणाउच्चैःव्यक्तंयथाभवतितथा अग्र्यवचोभिःउपनिषद्वाक्यैः संस्थापितानिप्रतिपादितानिनिःसंशयान्यासुः ॥१३८॥ प्रगीताःउत्कृष्टगीता.गंधर्ववराःयस्मिन्सतथा । प्रनृत्ताःप्रकृष्टनृत्तंकुर्वत्यःसदप्सरसोयस्मिन्सतथा । संततंनिरंतरं वादिनः ब्रह्मवादिनोविप्राःयस्मिन्सतथा विवेचयतांतत्वविवेकंकुर्वतां देवानांनृपाणांचओघःसंघोयस्मिन्सतथा अखिलसत्क्रतूनांएकोमुख्यःराजाअश्वमेधाख्योयज्ञःरराज ॥ १३९ ॥

सहवासुदेव्यःकृष्णभार्याभिःसहिताः समस्तदेव्यःदेवभार्याःअत्रयज्ञशालायांविचेरुः । अच्युतसत्कथासु रमंतेतास्तथा तथाभूताःसत्यःनिषेदुःउपविष्टाः ॥ १४० ॥ प्राज्ञव-
रेसर्वेषांमनोभीष्टज्ञे अनिलात्मजेप्रदातरिसति अत्रयज्ञेकुतश्चित्कश्चिद्दापनवैमुमुक्षुःमोक्षेच्छुःनाभूत् चिद्रूपिणोहरेर्दर्शनसद्भावात्बुभूषुःभवितुमिच्छुःऐश्वर्यादिमान्स्यामितिका-
मीनवैनासीदित्यर्थः । विवित्सुःवेत्तुमिच्छुःज्ञानकामीनवै बुभुक्षुःभोजनेच्छुःकुतःहियस्मात्तस्मात् असत्यकामाःव्यर्थकामाःनाभवन् ॥ १४१ ॥तत्रयज्ञेदिनेदिनेपंचदशवर्षपर्यं-
तंप्रतिदिनंऊर्जिताःउत्कृष्टाःरसवंतः लेह्यादिमंतः सभक्षसाराःगुडोपेततैलपक्वादिभक्षविशेषयुक्ताः । महान्नपर्वताःउत्तमतंडुलोदनपर्वताः । समाक्षिकाद्याःमध्विक्षुविकारादियु-
क्ताः पयसादुग्धेन सर्पिषाघृतेन अजस्रनिरंतरं अव्ययाह्रासराहित्यं यथास्यात्तथा पूर्णाःनद्यःपायसह्रदाअपि ॥ १४२ ॥ त्रिदशादीनांदेवगंधर्वादीनां योग्याःभोगार्हाः

समस्तदेव्यः सहवासुदेव्यः स्वलंकृताः फुल्लमुखारविंदाः ॥ विचेरुरत्रैव सहाप्सरोभिर्निषेदुरप्यच्युतसत्कथारमाः ॥ १४० ॥ न वै मुमुक्षुर्न बुभूषुरत्र न वै विवित्सुश्च कुतो बुभुक्षुः ॥ नासत्यकामा अभवन्कुतश्चित्प्रदातरि प्राज्ञवरेऽनिलात्मजे ॥ १४१ ॥ दिनेदिने तत्र महान्नपर्वताः सभक्ष्यसारा रसवंत ऊर्जिताः ॥ नद्यः पयःसर्पिरजस्रपूर्णाः समाक्षिकाद्या अपि पायसह्रदाः ॥ १४२ ॥ ह्रदा महांतस्त्रिदशादियोग्याः सुयोगयुक्ता हरिचंदनादेः ॥ तथांजनालक्तकमुख्यमंडनद्रव्याग्र्यावाप्यो मणिकांचनोद्भवाः ॥ १४३ ॥ यथेष्टपानाशनभोगशिष्टाः सहस्रशो मारुतिनापि कारिताः ॥ गंधा रसाद्याश्च समस्तभोगा दिवीव तत्रासुरतीवहृद्याः ॥ १४४ ॥ नैतादृशः कश्चन भूतपूर्वो मखो विना रामविरिंचवज्रिणाम् ॥ मखानिति प्रोचुरशेषलोकादृष्ट्वा मखं तं पुरुषोत्तमेरितम् ॥ १४५ ॥ ७ ॥

तेषांतेषांयोग्यतानुरूपाइतिभावः । सुयोगयुक्ताःकस्तूर्यादिद्रव्ययोगयुक्ता हरिचंदनादेःश्रीगंधागुर्वादिगंधस्यमहांतःविस्तीर्णत्वादिनामहांतोह्रदाःमणिकांचनोद्भवाःरत्नसुवर्ण-
निर्मिताः । अंजनंकज्जलंअलक्तकंलाक्षाविकारः तेमुख्येपूर्वेयेषांतानि मंडनद्रव्याणि अलंकारनिमित्तहरिद्राकुंकुमादिद्रव्यश्रेष्ठानितेषांवाप्यः । तत्तद्द्रव्यवर्णसदृशरत्ना-
दिनिर्मिताःनानामंडनादिद्रव्याणांवाप्यइतिभावः ॥ १४३ ॥ यथेष्टपानाशनभोगैःभोग्यवस्तुभिःशिष्टाःविशिष्टाःमारुतिनाकारिताःसहस्रशःसहस्रसंख्याका गंधारसाद्याःसम-
स्तभोगाःभोगविषयाःदिवीवस्वर्गेयथातथा तत्रयज्ञेअतिहृद्याःअत्यंतमनोहराआसुःआसन् । अतएवबुभुक्षुःकुतएवेतिभावः ॥ १४४ ॥ अशेषलोकाःपुरुषोत्तमेरितंप्र-
वर्तितं वा तंमखंपांडवकृताश्वमेधंदृष्ट्वा । रघुनाथब्रह्मेंद्राणांमखान्विनाभूतपूर्वःपूर्वंजातःएतादृशःकश्चनमखःनाभूदितिप्रोचुः ॥ १४५ ॥ ॥ ॥ ॥

वत्सरपंचकत्रयंपंचदशवत्सरपर्यंतं दिनेदिने सुष्ठुवृद्धाःवर्धमानागुणाःयस्यसतथा । उच्चकल्पःउत्तमकल्पःपंचाश्वमेधात्मकःअद्वैवकेवलमेवेत्यर्थः । हरिदैवतःसक्रतुःमुदावहो बभूव । सतामितिशेषः ॥ १४६ ॥ सवित्तांकोशस्थादिवित्तसहितां पृथ्वींदयितानांभार्याणांशरीरेमांगल्यमात्रंसुवासिन्याःअसाधारणलक्षणभूतंमांगल्यतंतुंनिधायस्थापयित्वासर्वाभरणानिच ॥ १४७ ॥ यथोक्तंशास्त्रेनियतंऋत्विजांविभागायविभज्य दातुंवरेण्येवरणीयेव्यासेसमर्पयामासुः । तैःद्रौपदीपार्थैःहृदामनसःसमस्तं पृथ्व्यादिहरयेव्यासायसमर्पितं पूर्वमितिशेषः । पुनस्तदैवेतवाक्यशेषः । अमुष्यव्यासात्मकस्यविष्णोः विभागःयद्यस्मात्प्रियःअतःविभागार्थमिवविभज्यदातुमिवआर्पयन् । मनःपूर्वकंहरयेसमर्पितत्वाद्विभागार्थंसमार्पितं औपचारिकमितिसूचयितुंइवेत्युक्तमितिभावः ॥ १४८ ॥ नन्वनर्थसाधनभूतंदत्तापहारंकृत्वा अत्रर्त्विग्भ्यःकथंदत्तमित्यतआह ।

स एवमद्धा हरिदैवतः क्रतुः पंचाश्वमेधात्मक उच्चकल्पः ॥ दिने दिने स्वृद्धगुणो बभूव मुदावहो वत्सरपंचकत्रयम् ॥ १४६ ॥ यज्ञावसाने निखिलाश्च पांडवाः कृष्णा च पृथ्वीमखिलां सवित्ताम् ॥ मांगल्यमात्रं दयिताशरीरे निधाय सर्वाभरणानि चैव ॥१४७॥ समर्पयामासुरजे वरेण्ये व्यासे विभागाय यथोक्तमृत्विजाम् ॥ प्रियो विभागो यदमुष्य विष्णोरतो विभागार्थमिवार्पयंस्ते ॥१४८॥ हृदा समस्तं हरयेर्पितं तैः स हि द्विजस्थोपि समस्तकर्ता ॥ देहेंद्रियप्राणमनांसि चेतनैः सहैव तस्मा अतिसृज्य नेमुः ॥ १४९ ॥ त्वदीयमेतन्निखिलं वयं च न त्वस्मदीयं क्व च किंचनेश ॥ स्वतंत्र एकोसि न कश्चिदन्यः सर्वत्र पूर्णोसि सदेति हृष्टाः ॥ १५० ॥ ततो विभक्ते मुनयोवदंस्ते प्रत्यर्पयामो वयमेषु राज्यम् ॥ पूर्णा हिरण्येन वयं धरायाः प्रपालने योग्यतमा इमे हि ॥ १५१ ॥ पार्थाः सभायां द्विजवाक्यमेतन्निशम्य कृष्णाय पुनः प्रणम्य॥ ऊचुस्तपो नोस्तु वनेर्पयित्वा राज्यं मखांते त्वयि धर्मलब्धम्॥१५२॥

सहीति । द्विजस्थःऋत्विक्स्थःसन् समस्तकर्ताऋत्विग्विहितसर्वकर्मकर्तासोपिसएवव्यासोहियस्मात्तस्माद्दत्तापहारदोषोनास्तीत्यर्थः । चेतनैःस्वरूपैःसह । देहादीनितस्मैएवव्यासायैव अतिसृज्यसमर्प्यअतएवनिखिलंपृथ्व्यादिकंत्वदीयंवयंचत्वदीयाः । हेईशक्वचक्वापिकिंचिनअस्मदीयंनास्ति । त्वदीयंकुतइत्यतआह । स्वतंत्रइति । इत्युक्त्वाहृष्टाःसंतःनेमुः ॥ १४९ ॥ १५० ॥ एषुपार्थेषुप्रत्यर्पयामः । पूर्णाःतृप्ताःइमेपार्थाःधरायाःप्रपालनेयोग्यतमाहियस्मात्तस्मात्प्रत्यर्पयामइतिसंबंधः ॥ १५१ ॥ त्वयिराज्यंअर्पयित्वानोस्माकंवनेतपोस्तु । तपसेवनंप्रतिगच्छामइतिभावः ॥ १५२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

इदंहिरण्यंमुनीनां स्वमेवद्रव्यमेव नतुराज्यमित्यर्थः । भुंक्ष्वंयूयमितिशेषः ॥ १५३ ॥ मेमह्यंयत्समर्पितंतत्फलवच्चस्यात् । अतएवपुनर्ग्रहःपुनःस्वीकारःदोषकारीनैव । विशेषतोभवतांपुनर्ग्रहोदोषकारीनैवेतिचार्थः । कुतःयतोहंभवतांपितामहःगुरुःपतिश्चततःकारणात् मत्तःअर्हथ । राज्यस्वीकारमितिशेषः । पालने ॥ १५४ ॥ तेपार्थाःराज्यंप्रतिपद्यअंगीकृत्यतस्मैव्यासाय । सव्यासःविप्रान्प्रतिविभज्य ॥ १५५ ॥ पुत्रःपांडुःतस्माद्भवंतीतिपुत्रभुवः तेषांपांडवानांअशेषतःसमग्राणि ॥ १५६ ॥ एभ्यःपांडवेभ्यःक्रतुपतिः अजः सहरिर्व्यासःतेषांतत्प्रसिद्धंयज्ञपंचकं त्रिगुणांनिखिलांअश्वमेधकल्पोक्तपूर्णांसद्दक्षिणांसमीचीनदक्षिणांअवाप्य बहुसुवर्णकनामधेयं एकंयज्ञंअश्वमेधत्रयंचक्रे । संवत्सरत्रयसाध्याश्वमेधं पंचदशवत्सरपर्यंतं प्रवर्तयित्वापंचाश्वमेधात्मकत्वंसंपाद्यतत्राप्येकैकस्यत्रिगुणदक्षिणावत्वेनत्रित्वंसंपाद्य पंचदशसंख्याश्वमेधत्वं संपादितवानितिभा

इतीरितः प्राह स बादरायणो मुनीश्वरैरप्यभियाचितः प्रभुः ॥ हिरण्यमेव स्वमिदं मुनीनां मदाज्ञयाभुंक्ष्वमशेषराज्यम् ॥ १५३ ॥ समर्पितं मे फलवच्च तत्स्यात्पुनर्ग्रहो नैव च दोषकारी ॥ पितामहोहं भवतां विशेषतो गुरुः पतिश्चैव ततो मदर्हथ ॥ १५४ ॥ इतीरितास्ते प्रतिपद्य राज्यं ददुर्हिरण्यं निखिलं च तस्मै ॥ विभज्य विप्रान्सं निजं च भागमदात्पृथायै निखिलं प्रसन्नः ॥ १५५ ॥ सभार्यकाणां वररत्नभूषणान्यशेषतः पुत्रभुवां प्रदाय ॥ पृथक्पृथग्योग्यवरांस्तथैभ्यः प्रादात्प्रभुस्ते मुदिताः प्रणेमुः ॥ १५६ ॥ तद्यज्ञपंचकमजस्त्रिगुणां स एभ्यः सद्दक्षिणां क्रतुपतिर्निखिलामवाप्य ॥ चक्रेश्वमेधत्रयमेकमेकं तेषां हरिर्बहुसुवर्णकनामधेयम ॥ १५७ ॥ सकृष्णेष्वथ पार्थेषु सुस्नातावभृथेष्वलम् ॥ पंचेंद्रवद्विराजत्सु स्तूयमानेष्वपीश्वरैः ॥ १५८ ॥ स्तूयमाने च तद्यज्ञे क्रोधो नकुलतां गतः ॥ कृत्वोग्रगर्जनं यज्ञं तांश्च यज्ञकृतोखिलान् ॥ १५९ ॥ गर्हयन्नूचिवानित्थं भार्यापुत्रस्नुषान्वितः ॥ सक्तुप्रस्थमदाद्विप्र उंछवृत्तिः सुभक्तितः ॥ १६० ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

वः ॥ १५७ ॥ सुस्नातःअवभृथोयैस्तेसुस्नातावभृथाः तेषुईश्वरैःसमर्थैरित्युभयत्रसंबध्यते ॥ १५८ ॥ तेषांपार्थानांयज्ञेसचासौयज्ञश्चेतिवाविग्रहः । क्रोधःक्रोधाभिमानी क्रोधनामकोसुरःनकुलतांबभ्रुरूपंगतःप्राप्तःसन् । उग्रगर्जनंक्रूरशब्दंकृत्वायज्ञंपार्थकृताश्वमेधंयज्ञकृतःतान्निखिलान्ऋत्विगादीन् ॥ १५९ ॥ गर्हयन्निंदयन् इत्थमूचिवान् इत्थंकथंमित्यतआह । भार्येति । भार्यादियुतःउंछवृत्तिर्विप्रःसुभक्तितः अतिथयेधर्मायायमायसक्तुप्रस्थं प्रस्थपरिमितसक्तुमित्यर्थः । अदात् ॥ १६० ॥ अयंयज्ञःअश्वमेधः तस्यातिथिपूजनस्यषोडशीकलांषोडशांशंनार्हति इत्यूचिवानितिसंबंधः । विप्रैस्तत्रहेतुंपृष्टःअभ्यभाषत ॥ १६१ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

तस्यउंछवृत्तेःविप्रस्यातिथेरतिथिभूतस्य यमस्यपादोदेनक्षालितपादोदकेनक्लिन्नःआर्द्रःपार्श्वःहिरण्मयःसुवर्णप्रचुरोभूत् । सर्वतीर्थोदकेषु । यज्ञानांअवभृथेषुअत्रचपंचदशा-
श्वमेधावभृथेचादरात् श्रद्धापूर्वकंमज्जतोपि स्नातस्यापिममापरःपार्श्वःहिरण्मयोनाभूदितिहेतुमभ्यभाषतेतिसंबंधः । तत्तत्त्ववेदिभिःतस्यनकुलोक्तस्य तत्त्वस्ययथार्थाभिप्रा-
यस्यवेदिभिःजानद्भिः ॥ १६२ ॥ १६३ ॥ तत्क्रोधंतमोंधंप्रापयद्भिःमुनिपुंगवैःकृष्णेनचस्मितेईषद्धास्येकृतेसति आशुअदर्शनंदृष्टयगोचरत्वंजगाम । कालतःकालांतरेतमः
प्रापच ॥ १६४ ॥ तदर्थमेवपार्थानांयज्ञंविनिंद्य तमःप्रापयितुमेवहैरण्यःसौवर्णः आदिपदेनऋत्विक्समूहः कृष्णादीनांगुणान्वदंतःस्तुवंतःतदसुरानिंदनंमधुद्विषःश्रीकृष्णस्यमत-
ज्ञाःमतमितिअभिमतमिति जानंतोमुन्यादयःभर्त्सयांचक्रुः । तंमतज्ञाइतिपाठे मधुद्विषोमतज्ञाः तंअसुरंभर्त्सयांचक्रुः ॥ १६५ ॥ असुरस्यनकुलत्वप्राप्तिकारणमाह ।

धर्मायातिथये तस्य कलां नार्हति षोडशीम् ॥ यज्ञोयमिति हेतुं च विप्रैः पृष्टोभ्यभाषत ॥ १६१ ॥ अतिथेस्तस्य
पादोदक्लिन्नपार्श्वो हिरण्मयः ॥ एको ममाभूदपरः सर्वतीर्थोदकेष्वपि ॥ १६२ ॥ मज्जतोऽवभृथेष्वद्धा यज्ञानामत्र
चादरात् ॥ नाभूदित्यथ तत्तत्त्ववेदिभिर्मुनिपुंगवैः ॥ १६३ ॥ कृष्णेन च तमोंधं तं प्रापयद्भिः स्मिते कृते ॥ अदर्शनं
जगामाशु तमः प्राप च कालतः ॥ १६४ ॥ तदर्थमेव हैरण्यः पार्श्वस्तस्याभवत्पुरा ॥ कृष्णस्य पांडवानां च मखा-
देश्च गुणान्बहून् ॥ वदंतो भर्त्सयांचक्रुस्तन्मतज्ञा मधुद्विषः ॥ १६५ ॥ श्राद्धार्थं हि पयः पूर्वं जमदग्नेरदूषयत् ॥
॥ १६६ ॥ नाकुलेनैव रूपेण क्रोधस्तं पितरो शपन् ॥ भव त्वं नकुलस्तावद्यावद्धर्मादिकान्सुरान् ॥ १६७ ॥ क्षे-
प्स्यसीति तमो घोरं भूयः पापेन यास्यसि ॥ इत्यभिप्रेत्य तैः शप्तस्तथा कृत्वा तमोऽभ्यगात् ॥ १६८ ॥ यद्यप्यल्प-
धनत्यक्तं वित्तं बहुफलं भवेत् ॥ तथाप्यनंतफलदाः कर्तुरेव महागुणाः ॥ १६९ ॥ सतां प्रीतिश्च तत्रापि सद्वरो हरिरेव हि ॥
पार्थेभ्योऽभ्यधिकः कर्ता समो वा को गुणैर्भवेत् ॥ १७० ॥ श्राद्धार्थमिति । क्रोधःनाकुलेनैवनकुलसंबंधिनैवरूपेणश्राद्धार्थंकल्पितं जमदग्नेः-
ऋषेःपयःक्षीरंअदूषयत् । उच्छिष्टंकृतवान् ॥ १६६ ॥ तैःपितृभिःअयंनकुलस्वरूपःक्रोधःभूयःनकुलस्वरूपप्राप्त्यनंतरं पापेनविष्णुवैष्णवनिंदारूपेणपापेनघोरंतमोयात् ।
इत्यभिप्रेत्यत्वंयावद्धर्मादिकान्यमादिकान्सुरान् क्षेप्स्यसिनिंदिष्यसि तावन्नकुलोभवेतिशप्तःक्रोधःतथाधर्मादिनिंदनंकृत्वा ॥ १६७ ॥ १६८ ॥ ननु दरिद्रेणकष्टार्जितंअल्पं
दत्तंबहुफलदंकथंनस्यादित्यतआह । यदीति । अल्पंधनंयस्यसतथा । तेनदरिद्रेणेत्यर्थः त्यक्तंसत्पात्रेदत्तंवित्तं तथापिकर्तुर्महागुणाएवज्ञानादयोगुणाएव ॥ १६९ ॥ तथापिकर्तु-
र्गुणेष्वपि सतांप्रीतिश्चअनंतफलदा । तत्रापिसत्स्वपिसत्सुवरःहरिरेवहिप्रसिद्धिः । अतस्तत्प्रीतिःअनंतफलदेतिशेषः । पार्थेभ्यःगुणैरभ्यधिकःसमोवाकोनुभवेत्नकोपीत्यर्थः ॥ १७०

सतांमध्येप्रवरोविष्णुःसद्भिःमुनिसुरैर्युतःसन् प्रियतमैःतैःपार्थैः ॥ १७१ ॥ यंमखप्रवरंप्रत्यक्षतःकारयति । तस्यमखस्यसमंशुभसाधनंकर्मकिमस्ति । नकिमपीत्यर्थः । इहअस्मदुक्तार्थे पैंगिनःपौंगिशाखिनःएतान्वक्ष्यमाणानन्वर्थकान् अस्मदुक्तार्थोपयुक्तान्मंत्रान्पठंति ॥ १७२ ॥ तान्मंत्रानुदाहरति । अवैष्णवकृतमित्यादिना । अंतवत्नाशवत् तत्रवैष्णवकृतकर्मणि वर्णक्रमात् । शूद्रकृताद्वैश्यकृतं ततःक्षत्रियकृतमित्यादिक्रमात् । परमधिकं ॥ १७३ ॥ ततःमनुकृतकर्मणःगांधर्वंगंधर्वकृतं ॥ १७४ ॥ तस्माद्दृषिकृतात्क्रमेण देवशक्रादिक्रमेण शतोत्तरंशतगुणाधिकमितिज्ञेयं ॥१७५ ॥ नब्रह्मकृतोपममित्युक्तंविशदयति । वैष्णवत्वमिति । क्षितिपादिब्रह्मांतंक्रमाद्वृद्धंएधितम । नान्यथाविष्णुप्रीतिंविनाफलंनैवेत्यर्थः ॥ १७६ ॥ इतिमंत्रान्पठंतीतिपूर्वेणान्वयः । तेनकारणेनपार्थानांकर्मणागुणैर्वासममन्यद्वस्तुनास्ति । तस्मात्पांडवानामुत्तमत्वात् तामसः

सतां च प्रवरो विष्णुः सद्भिर्मुनिवरैर्युतः ॥ प्रत्यक्षतः कारयति पार्थैः प्रियतमैश्च तैः ॥ १७१ ॥ यं मखप्रवरं तस्य समं किं शुभसाधनम् ॥ पठंति पैंगिनश्चैतान्मंत्रानन्वर्थकानिह ॥ १७२ ॥ अवैष्णवकृतं कर्म सर्वमंतवदुच्यते ॥ अनंतं वैष्णवकृतं तत्र वर्णक्रमात्परम ॥ १७३ ॥ वैष्णवैरपि मर्त्यैर्यत्कृतं शतगुणं ततः ॥ गांधर्वं कर्म तस्माच्च पितृभिर्मुनिभिस्ततः ॥ १७४ ॥ देवशक्रशिवब्रह्मकृतं तस्मात्क्रमेण च ॥ शतोत्तरमिति ज्ञेयं नान्यद्ब्रह्मकृतोपमम् ॥ ॥ १७५ ॥ वैष्णवत्वं क्रमाद्वृद्धं ब्रह्मांतं जीवराशिषु ॥ फलाधिक्यं कर्मणां हि विष्णोः प्रीत्यैव नान्यथा ॥ १७६ ॥ इति तेन न पार्थानां कर्मणान्यत्समं क्वचित् ॥ गुणैर्ज्ञानादिभिः क्वापि तस्मात्क्रोधः स तामसः ॥ विनिंद्य तान्सुसत्वस्थान् तमोंधमुपजग्मिवान् ॥ १७७ ॥ अथ पृष्टो वासुदेवः सुरविप्रादिसंसदि ॥ युधिष्ठिरेण संहृष्टो जगादाशेषतः प्रभुः ॥ १७८ ॥ ते च श्रुत्वाखिलान्धर्मान् भक्त्या परमया युताः ॥ पूजयंतो जगन्नाथमापुश्च परमां मुदम् ॥ ॥ १७९ ॥ इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते श्रीम० भा० ता० नि० त्रिंशोध्यायः ॥ ३० ॥ ॥ ॥

तमोगुणप्रधानः स क्रोधः । सुसत्वःसुतरांज्ञानबलवान् । तस्मिन्सुसत्वेपरमात्मनितिष्ठंतितेतथा तान्स्थिरांतःकरणानित्यर्थः । अधिकसत्वगुणस्थान्वा तान्पार्थान्विनिंद्य अंधंतमःउपजग्मिवान्प्राप ॥ १७७ ॥ पृष्टोवासुदेवःअशेषतःवर्णाश्रमोचितसर्ववैष्णवधर्मान्जगाद ॥ १७८ ॥ तेपार्थाःपरमयाउत्कृष्टयाभक्त्यायुताः जगन्नाथंपूजयंतःसंतः परमामुत्कृष्टांमुदमापुः ॥ १७९ ॥ यंगंगाज० त्रिंशस्तस्यकृतौसतांसुखकरोध्यायःसमाप्तिंशुभःश्रीमद्भारत० ॥ ३० ॥ इति श्रीमद्भारततात्पर्यनिर्णयटीकायां पदार्थदीपिकायां,त्रिंशोध्यायः ॥ ३० ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

श्रीगुरुभ्योनमः ॥ ॐ यज्ञेश्वरेणेति । यज्ञेश्वरेणश्रीकृष्णेन अभियुतेषुयुक्तेषु भक्त्याहरिभक्त्याअभियुतेषु यियक्षुःयागंकर्तुमिछुःवित्तंअभीप्समानः युधिष्ठिरंप्रत्यगात् ॥ १ ॥ मखार्थेत्वरितःमुहूर्तातिक्रमशंकयात्वरावान् सभीमःहस्तभूषणकटकं ॥ २ ॥ अनर्घंअमौल्यं अग्निप्रतिमंअग्निवद्दीप्यमानं । विचित्ररत्नैःअन्वितंखचितं तद्धस्तभूषणम् । अथविप्रगमनानंतरं नंदिरवंउत्सवभेरिरवं ॥ ३ ॥ नंदिघोषंदूतैः दूतव्यवधानेनपप्रच्छ । भीमःतंराजानंप्रतिउवाच । दूतव्यवधानेनेतिशेषः । किमिति । यद्यस्मान्मर्त्यदेहोपिनृपःविनिश्चितायुर्बभूव तेनकारणेन ॥ ४ ॥ धर्मार्थंधर्मंकर्तुंत्वरेत । वेगंकुर्यादित्यस्यभीमस्यमतंअभीष्टं इहमर्त्यलोकेत्वरावान्वेगवान्संबभूव ॥ ५ ॥ मारुतिःदुष्टानां दुर्योधनादीनांसंगेनदुष्टं । नतुस्वभावतइत्यर्थः । अप्ययोनाशःआंबिकेयंधृतराष्ट्रंविचार्यविनिश्चित्य अन्वकंपतकृपांचक्रे ॥ ६ ॥ कृपाकरणंस्पष्टयति । अकुर्वतइत्यादिना ।

ॐ यज्ञेश्वरेणाभियुतेषु भक्त्या महीं प्रशासत्सु पृथासुतेषु ॥ यियक्षुरागान्निशि विप्रवर्यो युधिष्ठिरं वित्तमभीप्समानः ॥ १ ॥ प्रातर्ददानीति नृपस्य वाक्यं निशम्य विप्रस्त्वरितो मखार्थे ॥ भीमं ययाचे स नृपोक्तमाशु निशम्य चादान्निजहस्तभूषणम् ॥ २ ॥ अनर्घमग्निप्रतिमं विचित्ररत्नान्वितं विप्रवरस्तदाप्य ॥ ययौ कृतार्थोथ च नंदिघोषमकारयद्वायुसूनुस्तदैव ॥ ३ ॥ अकालजं तं तु निशम्य राजा पप्रच्छ दूतैस्तमुवाच भीमः ॥ यन्मर्त्यदेहोपि विनिश्चितायुरभून्नृपस्तेन ममास हर्षः ॥ ४ ॥ इतीरितोसौ नृपतिस्त्वरेत धर्मार्थमित्यस्य मतं प्रपूजयन् ॥ जगाद साध्वित्यथ भूय एव धर्मे त्वरावानथ संबभूव ॥ ५ ॥ अथांबिकेयं विषयेषु सक्तं दुःसंगदुष्टं कृतभूरिदोषम् ॥ समस्तराजाप्ययहेतुभूतं विचार्य तं मारुतिरन्वकंपत ॥ ६ ॥ अकुर्वतस्तीक्ष्णतपः कुतश्चिन्नैव स्वलोकाप्तिरमुष्य भूयात् ॥ रागाधिकोयं न तपश्च कुर्यादित्यस्य वैराग्यकराणि चक्रे ॥ ७ ॥ आज्ञां परैरस्य निहंति सोदरैर्बंधुजनैरप्यभिपूजितेस्मिन् ॥ स निष्टनत्येवमपीतरैः स्वैः संपूजितो नास तदा विरागः ॥ ८ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥

तीक्ष्णतपःअकुर्वतःअस्यधृतराष्ट्रस्यअमुष्य लोकाप्तिःस्वर्गंधर्वपदप्राप्तिर्नैवभूयात् । तर्हि अयंतपःकरिष्यतीत्यतःअस्यतपःकरणेबुद्धिर्नस्यादित्याह । रागेति । अयंरागाधिकःविषयेप्रीत्यधिकःसन् । तपः नकुर्यादितिनिश्चित्य अस्यधृतराष्ट्रस्यवैराग्यकराणिवैराग्यसंपादकानिचक्रे । कर्माणीतिशेषः ॥ ७ ॥ वैराग्यसंपादककर्माण्युदाहरति । आज्ञामित्यादिना । सभीमः अस्मिन्धृतराष्ट्रेपूजितेसत्यपि अस्यधृतराष्ट्रस्यआज्ञांपरैर्निहंतिनाशयति । स्वयंचनिष्टनतिअवज्ञासूचकशब्दंकरोति तदापिअवज्ञाकरणकालेपि इतरैर्भीमादन्यैःस्वैःस्वकीयैःपूजितःसन् । विरागःविरक्तोनास ॥ ८ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥

तम्हतेभीमंविनाआदरेणैवपरिचक्रुःपरिचर्यांचक्रुः । कृष्णाद्रौपदी तनयार्तिमान्पुत्रशोकवान्नस्यादितिपरिचर्यांचक्रे । पुत्रशोकात्पुनरपिपापंनस्यादितिकृपयासेवितत्वात् कृ-
ष्णयाभीमस्यकर्मणः आनुकूल्यमेवाचरितमितिभावः॥९॥ तेषुपांडवेषुनितरांप्रीयमाणश्चप्रीतिमापन्नोपिपरमस्यश्रीसंकर्षणस्यप्रभावंसर्वसंहारकसामर्थ्यंजानन्नपिसधृतराष्ट्रः
तेनभीमेनहतान्समस्तान्सुतान्स्मरन्सन् भीमसेनेअधिकंसर्वेभ्योधिकंनप्रीयते॥१०॥तस्यधृतराष्ट्रस्यसक्तिं आसक्तिंअपनेतुंनाशयितुं द्वेषंस्वस्माद्गुणाधमेभ्योधर्मादिभ्यःस्वस्मि-
न्नल्पप्रीतिकरणरूपंद्वेषं तस्यधृतराष्ट्रस्यसंशृण्वतःसतःआस्फोट्यभुजावितिशेषः ॥११॥ चंदनेनरूषितौलिप्तौययोर्भुजयोःअंतरंमध्यंजरठस्यवृद्धस्यधृतराष्ट्रस्य ॥१२ ॥ यमौ-
तद्भीमचित्तं अन्वमोदेतांअनुमोदनंचक्रतुः । नन्वाभ्यामपिकिमर्थंनिष्ठुरभाषणंनकृतमित्यतआह । तदिति । तत्स्नेहात्धृतराष्ट्रस्नेहात् । गौरवादपिकिंचिदप्रियंनोचतुरितिशेषः ।
माद्रीपुत्रौतु चित्तज्ञौचित्तंतस्यान्वमोदतां । राज्ञस्तुचित्तंरक्षंतौनोचतुःकिंचिदप्रियमित्याश्रमवासिके । पुत्राभ्यांयुधिष्ठिरार्जुनाभ्यांसहितयापृथयाकृष्णयाचतद्भीमोक्तंनैव

सर्वेपि पार्थास्तम्हते सभार्या वैचित्रवीर्यं परमादरेण ॥ पर्यैव चक्रुः सततं सभार्यं कृष्णा च न स्यात्तनयार्तिमा-
निति ॥ ९ ॥ स प्रीयमाणो नितरां च तेषु नैवाधिकं प्रीयते भीमसेने ॥ स्मरन्सुतांस्तेन हतान्समस्तानपि प्रभावं
परमस्य जानन् ॥ १० ॥ तस्यापनेतुं विषयेषु सक्तिं द्वेषं तथैवात्मनि भीमसेनः ॥ जगाद माद्रीसुतयोः समक्षमा
स्फोट्य संशृण्वत एव तस्य ॥ ११ ॥ ताविमौ मे भुजौ वृत्तौ पीनौ चंदनरूषितौ ॥ ययोरंतरमासाद्य जरठस्य सुता
हताः ॥ १२ ॥ यमौ तदन्वमोदेतां तत्स्नेहाद्गौरवादपि ॥ नैव तत्कृष्णया ज्ञातं पृथया च सपुत्रया ॥ १३ ॥ तच्छ्रु-
त्वोत्पन्ननिर्वेदं क्षत्ता ज्येष्ठस्य वर्धयन् ॥ उवाच जीविताशा ते ननु राजन् गरीयसी ॥ १४ ॥ अहा महीयसी जं-
तोर्जीविताशा यया भवान् ॥ भीमापवर्जितं पिंडमादत्से गृहपालवत् ॥ १५ ॥ न चापराधो भीमस्य ब्रुवतस्त्वा-
मिदं वचः ॥ अग्निर्निसृष्टो दत्तश्च गरो दाराश्च दूषिताः ॥ १६ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

ज्ञातं ॥ १३ ॥ तद्भीमोक्तंश्रुत्वा जेष्ठस्यधृतराष्ट्रस्यउत्पन्नश्चासौनिर्वेदश्चेत्युत्पन्ननिर्वेदः । तंतथाउत्पन्नवैराग्यंवर्धयन् क्षत्ताविदुरःउवाच किमिति । हेराजन् तेगरीयसीमह-
तीजीविताशाजीवितुमिच्छावर्ततेननु ॥१४॥ अहोआश्चर्यं जंतोःप्राणिनःजीविताशामहीयसी तत्रदृष्टांतमाह । भवान्यथातथेत्यर्थः । अहोमहीयसीतिक्षेपकमितिकेचित् ।
तथापिआचार्योक्तिसंमिश्रितत्वाद्व्याख्यातम् । भीमेनअपवर्जितंपरिहृतंपिंडग्रासंअन्नमित्यर्थः । आदत्सेअंगीकरोषि । गृहपालवत्श्वायथातथेत्यर्थः ॥ १५ ॥ त्वांप्रतिब्रु-
वतःभीमस्य यस्यभीमस्यअग्निःनिसृष्टःप्रदत्तःलाक्षागृहइतिशेषः । गरःविषंदत्तः दाराःद्रौपदीदूषिता सभायांआकृष्टा ॥ १६ ॥ ॥ ॥ ॥ ॥ ॥

क्षेत्रंभूः धनंचहृतं इत्याद्यनिष्टकर्तरित्वयिभीमेन किमनिष्टंकृतं नकिमपीत्यर्थः ॥ अलंआसज्जतःविषयासक्तस्य तेउपकारायच निर्वेदकरं वैराग्यकरंवाक्यं अद्यभीमेनईरितं ॥ १७॥ यद्यस्मात्तस्मात् अत्रभीमेद्वेषंत्यजद्वेषकामौभीमेद्वेषं विषयेषुकामं ॥१८॥ ततःकर्मणाभीमेद्वेषंमुत्सृज्य ॥ १९ ॥ अनश्नंतंअभुंजानं ॥ २० ॥ २१ ॥ अन्यथा आज्ञायाःअभावेननैवभोक्ष्येइतिवदन् उपवासेनकृशःअतएवश्रमान्वितःधृतराष्ट्रःमूर्छितःसन् क्षणात्क्षणमात्रं भार्यांशिश्रियेसमाश्रयत् ॥ २२ ॥ अतिशयंशंसुखं यस्मादसौ-

हृतं क्षेत्रं धनं यस्य किं भीमेन कृतं त्वयि ॥ अलमासज्जतस्तेद्य निर्वेदकरमीरितम् ॥ १७ ॥ उपकाराय भीमेन तव द्वेषं त्यजात्र यत् ॥ विमुच्य द्वेषकामौ त्वं वने तीर्थनिषेवकः ॥ १८ ॥ तपसाराधय हरिं ततः पूतो भविष्यसि॥ इत्युक्तो द्वेषमुत्सृज्य भीमे निर्वेदमागतः ॥ १९ ॥ अनुज्ञां तपसे प्राप्तुं उपवासपरो भवत् ॥ अनश्नंतं चतुर्थेह्नि धृतराष्ट्रं युधिष्ठिरः ॥ २० ॥ ज्ञात्वा संप्रार्थयामास भोजनार्थं पुनः पुनः ॥ अनुज्ञां वनवासाय त्वत्तः प्राप्यैव सर्व-था ॥ २१ ॥ भोक्ष्येन्यथा नेति वदन्धृतराष्ट्रः श्रमान्वितः ॥ उपवासकृशो भार्यां शिश्रिये मूर्छितः क्षणात् ॥ २२ ॥ शंतमेन करेणाथ धर्मजस्तं मृदु स्पृशन् ॥ शनैः संज्ञामगमयदब्रवीच्च सुदुःखितः ॥ २३ ॥ पुरस्कृत्य युयुत्सुं त्वं कुरुराज्यमकंटकम् ॥ वयमेव त्वदर्थाय कुर्मः सर्वे तपोवने ॥ २४ ॥ नेत्याह धृतराष्ट्रस्तं कुलधर्मो हि नो वने ॥ अंते देहपरित्यागस्तन्ममाज्ञातुमर्हसि ॥ २५ ॥ तयोर्विवदतोरेवं कृष्णद्वैपायनः प्रभुः ॥ सर्वज्ञः सर्वकर्तेश आवि-र्भूतोब्रवीन्नृपम् ॥ २६ ॥ तपसाऽशेषदोषाणां क्षयकाममिमं नृपम् ॥ अनुजानीहि नैवास्य धर्मविघ्नकरो भव ॥ २७ ॥ काले निर्वेदमापन्नस्तपसा दग्धकिल्बिषः ॥ शुभां गतिमयं यायादन्यथा न कथंचन ॥ २८ ॥

शंतमःतेनतथा । अगमयत् प्रापयामास । सुदुःखितःयुधिष्ठिरःअब्रवीच्च ॥ २३ ॥ किमिति अकंटकंशत्रुरहितमित्यर्थः ॥ २४ ॥ तंयुधिष्ठिरंनोस्माकंअंतेवार्धक्ये वनेदेहप-रित्यागःकुलधर्मोहियस्मात्तत्तस्मात्मामां ॥ २५ ॥ तयोःयुधिष्ठिरधृतराष्ट्रयोः आविर्भूतःप्रकटःसन् ॥ २६ ॥ अनुजानीहि अनुज्ञांदेहि । अस्यधृतराष्ट्रस्य ॥ २७ ॥ कालेकल्यावेशवियोगकाले । दग्धकिल्बिषःहृतदोषः । यायात्प्राप्नुयात् अन्यथातपोविनानसद्गतिंनयायादित्यर्थः ॥ २८ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

तंधृतराष्ट्रंअनुजज्ञेआज्ञापयामास । सचधृतराष्ट्रःआशितःभुक्तवान् विदुषेराज्ञेधर्मराजाय ॥ २९ ॥ सचयुधिष्ठिरःविनयवान्शुश्राव । अनुज्ञायअनुज्ञाप्य । धृतराष्ट्रमितिशेषः ॥३०॥ श्राद्धायपुत्राणांश्राद्धार्थंवित्तंआकांक्षन् विदुरंप्रेषयामास । युधिष्ठिरःतद्वचःविदुरवचःश्रुत्वा । श्राद्धेच्छोःश्राद्धंकर्तुमिच्छतःधृतराष्ट्रस्यवित्तंदातव्यं॥३१॥ पारलौकिकस्यपरलोकसंबंधिकर्मणःसाहाय्यंनकार्यं । ननु भीष्मादिवैष्णवानांश्राद्धार्थंदास्यामइत्यतआह । इतरेति । इतरार्थतःइतरेषांभीष्मादीनांअर्थतः ॥ ३२ ॥ श्राद्धार्थेदत्तेनापिवित्तेन । हिनिश्चयेनपुत्रश्राद्धंकरिष्यति। तत्श्राद्धकरणंज्ञात्वा ददतांवित्तमितिशेषः। दोषोभवेत् अतएवकष्टतरंयांत्वितिविचिंतयन् भीमःपारलौकिकसाहाय्यं नकार्यमित्याहेतिसंबंधः ॥ ३३ ॥ भीष्मादीनांश्राद्धकर्तारोवयंयतः ततःकारणात्तेनधृतराष्ट्रेण धृतराष्ट्रायदत्तवित्तेनकिं किंफलमित्यर्थः ॥ ३४॥ तर्हिकर्णस्यश्राद्धंकरिष्यतीत्याह ।

इत्युक्तो धर्मराजस्तमनुजज्ञे स चाशितः ॥ शिक्षयामास सद्धर्मान्नीतिं च विदुषेप्यलम् ॥ २९ ॥ केवलस्नेहतो राज्ञे सुश्राव विनयात्स च ॥ अनुज्ञाय गृहं प्राप्ते धर्मज्ञे विदुरं पुनः ॥ ३० ॥ श्राद्धाय वित्तमाकांक्षन्प्रेषयामास तद्वचः ॥ श्रुत्वा युधिष्ठिरो भीममाह दातव्यमद्य नः ॥ ३१ ॥ पुत्रपौत्रान्नबंधूनां श्राद्धेच्छोर्वित्तमंजसा ॥ तमाह भीमः पापानां विमुखानां मधुद्विषः ॥ पारलौकिकसाहाय्यं न कार्यमितरार्थतः ॥ ३२ ॥ दत्तेनापि हि वित्तेन पुत्रश्राद्धं करिष्यति ॥ तज्ज्ञात्वा ददतां दोषो भवेदिति विचिंतयन् ॥ ३३ ॥ कष्टात्कष्टतरं यांतु सर्वे दुर्योधनादयः ॥ भीष्मादीनां वयं श्राद्धकर्तारस्तेन किं ततः ॥ ३४ ॥ कानीनत्वात्तु कर्णस्य सहास्माभिः पृथैव हि ॥ श्राद्धकर्मण्यधिकृता किं तस्मै दीयते धनम् ॥ ३५ ॥ इत्युक्तवंतं नृपतिरर्जुनश्चोचतुः पुनः ॥ यियासोर्याचमानस्य निजबाहुबलार्जितम् ॥ ३६ ॥ देहि वित्तं परमतः किं त्वामेषोभियाचते ॥ इत्युक्तमपि नेत्येव ब्रुवाणं शुद्धधार्मिकम् ॥ ३७ ॥

कानीनत्वादिति । कर्णस्यकानीनत्वात् कन्यकायांउत्पन्नत्वात् अस्माभिःसहैवश्राद्धकर्मणि अधिकृताअधिकारवती हियस्मात्तस्मात् तस्मैधृतराष्ट्रायकिं किमर्थंदीयते। धनंनदेयमित्यर्थः ॥ ३५ ॥ उक्तवंतंभीमंइयासोर्वनंयातुमिच्छतःनिजबाहुबलार्जितंस्वबाहुबलेनसंपादितंवित्तंदेहि । भवतानिर्जितंवित्तंदातुमिच्छतिकौरवः । भीष्मादीनांमहाबाहो तदनुज्ञातुमर्हसि । कौरवोधृतराष्ट्र इत्याश्रमवासिके अतःपरंवनंप्रतिगमनानंतरं एषांराजात्वांअभियाचयतेकिं वनगतस्यवृद्धस्यपुनरागमनंक्वेतिभावः । इत्युक्तमपिनैव नकर्तव्यमेवेतिब्रुवाणंशुद्धधार्मिकंभगवद्धर्मनिष्ठंभीमम् ॥ ३६ ॥ ३७ ॥

अप्रीत्यायुधिष्ठिरः जोषंतूष्णींआस्वतिष्ठेतिप्रोच्यउक्त्वाउवाच॥३८॥किमिति। पित्रेधृतराष्ट्रायअर्पितंदत्तम्। पुनरूचतुःयुधिष्ठिरपार्थाविति शेषः॥३९॥ किमिति। मुख्यधर्मरते शुद्धभगवद्धर्मरतेक्रोद्धुंकोपितुंनार्हति॥४०॥ अग्रजेअग्रजमित्यर्थःयद्वा अग्रजेज्येष्ठेवृद्धइत्यर्थः। त्वयिभक्तिंचक्रतुरित्यब्रवीत्। धृतराष्ट्रमिति शेषः॥४१॥भीमःत्वदाज्ञायांनातिहृष्टःसंतुष्टोन। कुतइत्यतआह। यद्यस्माद्वृकोदरःशुद्धक्षत्रियधर्मेषुनिरतः तत्तस्मादत्रभीमेमाक्रुधः कोपंमाकुरु॥४२॥ धर्मार्जुनावपिक्षत्रधर्मरतावपि लोकेषुप्राणिषु कृपापरौदयापरौ॥४३॥ तद्विदुरवाक्यंश्रुत्वाअजातकोपःअनुत्पन्नकोपः अतएवप्रशांताधीःमनोयस्यसतथा। निर्ऋणत्वधीःनविद्यतेऋणंयस्यासौनिर्ऋणः तस्यभावःनिर्ऋणत्वं तन्मेस्यादितिधीर्बुद्धिर्यस्यासौतथोक्तः पापिष्ठपुत्राणांऋणमोचनेन तत्संबंधःपुनर्नस्यादितिबुद्धिमानितिभावः। तदेवविशदयति। शुद्धेति। शुद्धमनसापवित्रांतःकरणेनकल्या

अप्रीत्या जोषमास्वेति प्रोच्योवाच युधिष्ठिरः॥ कोशतो यद्बहिर्वित्तं दानभोगादिकारणम्॥३८॥ मम संनिहतं सर्वं तत्पित्रे चार्पितं मया॥ एवमेवार्जुनोप्याह विदुरं पुनरूचतुः॥३९॥ मुख्यधर्मरते भीमे न पिता क्रोद्धुमर्हति॥४०॥ इत्युक्तो वित्तमादाय गत्वा क्षत्ताग्रजेब्रवीत्॥ युधिष्ठिरार्जुनौ भक्तिं नितरां त्वयि चक्रतुः॥४१॥ नातिहृष्टस्त्वदाज्ञायां भीमस्तन्मा क्रुधोत्र च॥ शुद्धे क्षत्रियधर्मे हि निरतो यद्वृकोदरः॥४२॥ नृपार्जुनौ धर्मरतावपि लोककृपापरौ॥४३॥ अजातकोपस्तच्छ्रुत्वा धृतराष्ट्रः प्रशांतधीः॥ कृत्वा श्राद्धानि सर्वेषां महादानान्यनारतम्॥ दशरात्रं ददौ शुद्धमनसा निर्ऋणत्वधीः॥४४॥ सर्वं समर्प्य गोविंदे पार्थेभ्योन्येभ्य एव च॥ स्वजनेभ्यः समादाय स्त्रवन्नेत्रेभ्य उच्चधीः॥४५॥ अनुज्ञां निर्गतः प्राह पौरजानपदान्नृपः॥ धर्मतो रक्षिता यूयमस्मत्पूर्वैर्महात्मभिः॥४६॥ न चाहं परमस्नेहाद्युष्माभिः सुकृपालुभिः॥ अरक्षितेति कथितः प्रमादादपि सज्जनाः॥४७॥ इष्टं च यज्ञैः पूर्तैश्च चरितं युष्मदाश्रयात्॥ पुत्रस्तु मम पापात्मा सर्वक्षत्रविनाशकः॥४८॥ सर्वातिशंकी मूढश्च वृद्धानां शासनातिगः॥ सौभ्रात्रं येन संत्यज्य पांडवेषु महात्मसु॥ कृतं विरूपं सुमहत्कुर्याद्यन्नापरः क्वचित्॥४९॥

॥वेशवियुक्तत्वादिति शेषः। सर्वेषांश्राद्धानिकृत्वा दशरात्रंअनारतं निरंतरंमहादानानिददौ॥४४॥ सर्वंशुद्धमनसाकृतंकर्म गोविंदेसमर्प्यस्त्रवन्नेत्रेभ्यःजलस्त्रवन्नेत्रेभ्यःपार्थादिभ्यः आज्ञांआदायनिर्गतःवनंगंतुंगृहादिति शेषः। उच्चधीःउदारबुद्धिःनृपःधृतराष्ट्रःपौरादीन्प्राह॥४५॥ किमिति। हेसज्जनाअस्मत्पूर्वैःअस्माकंपूर्वजैःपूर्वादिभिःयूयंधर्मतोरक्षिताः पालिताः। युष्माभिःपरमस्नेहात् अहंअरक्षिताप्रजापालकोनेतिप्रमादादपिनकथितःनोक्तः अतएवसज्जनाइत्यर्थः॥४६॥४७॥ पूर्तैःकूपतटाकाद्यैः॥४८॥ सर्वत्रअत्यंतशंकाशीलःअतएवमूढः वृद्धानांज्ञानवृद्धानां शासनातिगः आज्ञातिवर्ती। येनमत्पुत्रेणपांडवेषु सौभ्रात्रंस्नेहंसंत्यज्यविरूपंद्वेषःकृतम्। यद्विरूपंअपरःअन्यःकश्चित्क्वचिन्नकुर्यात् तत्कृतमित्यर्थः॥४९॥

अप्रियाणिविरुद्धकर्माणि मंदेनमूर्खेण तेनापिमत्पुत्रेण।पियुष्मास्वपिअप्रियंअनिष्टंप्रायःकृतम् ॥५०॥ अस्यदुर्योधनस्य तच्छीलमनुवर्तिनःदुर्योधनस्यस्वभावानुकूलप्रवृत्तिशीलाः ॥५१॥ पुत्राधिभिःपुत्रकृतमनःपीडाभिःअभिप्लुतःसंस्पृष्टइत्यर्थः । सोहंवयोगतश्चैववृद्धएव ॥५२॥ सकृष्णेषुपांडवेषुतेषांपुत्राणांसंबंधेनकृतंपापंस्वकृतमपिस्वेनापिकृतम् ॥५३॥ पांडवेषुक्रियमाणोपिस्नेहः मत्प्रियार्थमपिभूयःसदाअचलःअविच्छिन्नःस्नेहःकर्तव्यएव । तेपार्थाः ॥ ५४॥ ५५ ॥ इत्युक्तेसतिधृतराष्ट्रेणस्वगुणानुच्चैःकीर्तयद्भिःपर्यश्रूणिपूर्णाश्रूणिनयनानियेषांतैस्तथोक्ताः । तैस्तथापौरैःपुरस्थैःजानपदैःदेशस्थैःपार्थैश्च कृच्छ्राच्चिरात् शनैःअनुज्ञातैःआज्ञापितःसुदूरतःअतिदूरं अनुयातःअनुगतःययौ॥५६॥

अप्रियाणि च कृष्णस्य सुबहून्याचरत्कुधीः ॥ प्रायस्तेनापि मंदेन युष्मास्वप्यशिवं कृतम् ॥५०॥ भ्रातरोस्य च सर्वेपि तच्छीलमनुवर्तिनः ॥५१॥ हताश्च स्वेन पापेन ससुतामात्यबांधवाः ॥ सोहं वयोगतश्चैव पुत्राधिभिरभिप्लुतः ॥५२॥ तत्संबंधात्कृतं पापं स्वकृतं चाप्यपेशलम् ॥ पांडवेषु सकृष्णेषु तपसा मार्ष्टुमुद्यतः ॥ ५३ ॥ तत्र मामनुजानीध्वं कृपया मित्रवत्सलाः ॥ मत्प्रियार्थमपि स्नेहः पांडवेषु महात्मसु ॥ ५४ ॥ क्रियमाणोपि कर्तव्यो भूय एव सदाचलः ॥ ते हि मे पुत्रकाः संत इहामुत्र च सौख्यदाः ॥५५॥ इत्युक्ते स्वगुणानुच्चैः कीर्तयद्भिः सुदुःखितैः ॥ पर्यश्रुनयनैः कृच्छ्रात्पौरजानपदैश्चिरात् ॥ अनुज्ञातो ययौ पार्थैरनुयातः सुदूरतः ॥५६॥ संजयो विदुरश्चैनं सभार्यमनुजग्मतुः ॥ अनुवव्राज तं कुंती वनाय कृतनिश्चया ॥५७॥ वार्यमाणापि तनयैः सभार्यैर्भृशदुःखितैः ॥ संस्थाप्य तान् सुकृच्छ्रेण ययौ सान्वेव तं नृपम् ॥५८॥ संदर्शितपथो राजा कुंतीविदुरसंजयैः ॥ गांधारीसहितः प्राप कुरुक्षेत्रं जगद्गुरोः ॥५९॥ क्रमेणैवाश्रमं व्यासदेवस्य सुरपूजितम् ॥६०॥ त्रिवत्सरेणास्य निजस्य लोकप्राप्तिं सभार्यस्य जगाद तत्र ॥ ब्रह्मांकजस्तेन भृशं प्रतीतो व्यासोपदिष्टं व्यचरत्तपोग्र्यम् ॥ ६१ ॥ सक्षत्तृगांधारिपृथे ससंजये तपोभिराराधयति प्रभुं हरिम् ॥ वैचित्रवीर्येत्र ससारबंधुभृत्याश्च पार्था द्रष्टये समाययुः ॥ ६२ ॥ क्षत्तैकतामत्र युधिष्ठिरेण प्राप्नोथ भार्यासहितं ससंजयम् ॥ उपास्यमानेषु विचित्रवीर्यपुत्रं पृथां चैव पृथासुतेषु ॥ ६३ ॥ एनंधृतराष्ट्रं वनायकृतनिश्चयागंतुमितिशेषः कुंतीवार्यमाणापितंधृतराष्ट्रं अनुवव्राजअनुययौ ॥ ५७ ॥ साकुंतीपार्थान्संस्थाप्य तंनृपंधृतराष्ट्रंअन्वेवययौ ॥५८॥ कुंत्यादिभिःसंदर्शितःपंथाःमार्गोयस्यसतथा कुरुक्षेत्रंप्राप ॥ ५९ ॥ क्रमेणैवतीर्थयात्राक्रमेणजगद्गुरोःव्यासदेवस्यआश्रमंबदरिकाश्रमंप्राप ॥६०॥ तत्र आश्रमेब्रह्मांकजोनारदःअस्यधृतराष्ट्रस्यनिजस्यलोकस्यगंधर्वलोकप्राप्तिंजगाद तेननारदोक्तेन भृशंप्रतीतःप्रत्ययंप्राप्तः ६१ क्षत्ताविदुरःतदादिभिःसहितेवैचित्रवीर्येहरितपोभिःआराधयतिसतिअत्रआश्रमेद्रष्टयेद्रष्टुम् ॥६२॥ अत्रवनेक्षत्तायुधिष्ठिरेणएकतां विदुरशरीरंहित्वायुधिष्ठिरस्वरूपेणऐक्यंप्रा

प्तःप्राप्तवान् । अथविदुरदेहत्यागानंतरम् । पृथासुतेषु विचित्रवीर्यपुत्रं धृतराष्ट्रंपृथांचउपास्यमानेषु सेवांकुर्वत्सुसत्सु ॥ ६३ ॥ तेजःसामर्थ्यंश्यामकांतिर्वा । उदग्र्यभक्त्याअत्यु त्कृष्टभक्त्या ॥६४॥ तैःपार्थाद्यैःनिषण्णःउपविष्टःसन् आह । किमिति । यस्ययस्ययत्यत्इष्टंतत्तत्प्रवदंतु तस्यतस्यतद्दास्यामीत्याहेतिसंबंधः । सदारैःसस्त्रीकैःपांडुसु तैःअमुष्मिन्श्रीवेदव्यासेभक्त्युच्छ्रयःभक्त्यभिवृद्धिःकृतः ॥६५॥ कुंतीअत्रअस्मिन्जन्मनि रविसूनोःकर्णस्यजन्ममृत्युभ्यांउत्थदोषस्यअपगमंपरिहारंययाचेकन्यावस्थायां प्रसूतत्वात्पुत्रत्वाच्छादनेनअर्जुनेनहतत्वादुभयकर्मजनितदोषःकुंत्याएवेतिभावः॥६६॥तेषांकुंतीपार्थानांसंमंत्र्यविचार्य रणेहतानामित्यलुक्समासः निःशेषाःनिर्गतशेषाः तेचते रणेहताश्चनिःशेषरणेहताःतेषांरणेनिःशेषहतानामित्यर्थः पुत्रादीनाम्॥६७॥तेसर्वेरणेहताःराज्ञःधृतराष्ट्रस्यदिव्यादृक्दृष्टिःदत्ताव्यासेनेतिशेषः। परमस्यआज्ञयासर्वेस्वर्लोकादानी

प्रादुर्बभूवामितशक्तितेजोज्ञानाद्भुतैश्वर्यसुखादिरूपः ॥ व्यासो हरिस्तत्र समीक्ष्य सर्वे संपूजयामासुरुदग्र्यभक्त्या ॥६४॥ तैः पूजि तस्तत्र निषण्ण आह यद्यद्यदिष्टं प्रवदंतु तत्तत् ॥दास्यामि तस्याद्य तदित्यमुष्मिन् भक्त्युच्छ्रयः पांडुसुतैः सदारैः॥६५॥ कृतोत्र कुंती रविसूनुजन्ममृत्यूत्थदोषापगमं ययाचे ॥६६॥ तेषां प्रदत्तेष्वभिवांछितेषु वैचित्रवीर्यः सह भार्ययैव ॥ संमंत्र्य निःशेषरणेहतानां सं दर्शनं प्रार्थितवांस्तमीशम्॥६७॥ततस्तु ते सत्यवतीसुतस्य सर्वेश्वरस्याज्ञया सर्व एव ॥ समागताः स्वर्गलोकात्क्षणेन दत्ता च दिव्या दृगमुष्य राज्ञः॥ ऊषुश्च रात्रिं परमाज्ञयैव सर्वे स्वभार्यासहिता यथा पुरा ॥६८॥ तृप्तः सदारो नृपतिश्च तत्र सर्वेपि दृष्ट्वा परमा द्भुतं तत् ॥६९॥अथाज्ञयैवास्य परस्य सर्वाः स्त्रियो निजेशैः सहिता ययुः स्वः॥विनोत्तरां तां तु कथां निशम्य पारीक्षितो याचत तातदृ ष्टिम् ॥ तं चानयामास तदैव कृष्णो ह्यचिंत्यशक्तिः स विकुंठलोकात्॥७०॥दृष्ट्वा स पारीक्षित आप तुष्टिं स्वतातमीशेन समाहृतं पु नः ॥ संपूज्य तं कृष्णमपीशवंद्यं क्षमापयामास परीक्षितात्मजः॥ चक्रे च विस्रंभमतीव भारते पुनश्च तत्र स्वजनैः समेतः॥७१॥

तायेतेसर्वेस्वभार्याभिःसहिताःसंतः पुरामनुष्यदेहेयथातथा तत्रबदर्यांरात्रिंएकरात्रिंऊषुः वासंचक्रुः ॥ ६८ ॥ दारैःगांधार्यासहितोनृपःतृप्तोभूदितिशेषः सर्वेपितत्रस्थापार्थाद्याः अद्भुतंतत्रमृतागमनंदृष्ट्वातृप्ताबभूवुरितिशेषः ॥ ६९ ॥ अथप्रातःकालेउत्तरांअभिमन्युभार्यांविनानिजेशैःस्वस्वभर्तृभिःस्वःस्वर्गंपारीक्षितःपरीक्षितःपुत्रोजनमेजयःवैशंपायनमु खादेतत्पूर्वकथांशृण्वन्नितिवाक्यशेषः । तांकथांव्यासोमृतानदर्शयदित्येवंरूपांकथांतुआदरेणनिशम्यश्रुत्वा तातदृष्टिंपरीक्षिद्दर्शनंअयाचत व्यासमितिशेषः । सकृष्णःव्यासःतं परीक्षितम्॥७०॥ सपारीक्षितोजनमेजयःईशेनसमर्थेनव्यासेनसमाहृतंआनीतंस्वतातंपुनःदृष्ट्वा तुष्टिंआप । तंपितरंसंपूज्यईशैःसमर्थैर्ब्रह्मादिभिःशिवेनवंद्यंकृष्णंसंपूज्यक्षमापया मास । परीक्षिदात्मजः तत्रस्थजनैःतत्रस्थपुराणश्रोतृजनैःसमेतःसन् पुनःमृततातदर्शनानंतरम् ।भारतेअद्भुतार्थकथनभारतार्थविषयेअतीवविस्रंभंअत्यंतंविश्वासंचक्रे । भीमेनप्र

क्षिप्ताःगजाःतत्रतत्रमेघमंडलादौलग्नाइदानीमपिकुरुक्षेत्रेपतंति । जात्यंधस्यदिव्यदृष्टिंदत्त्वामृतानदर्शयदित्यादिभारतार्थैपूर्वंसंशययुक्तस्तातदर्शनानंतरं अतीवविस्मयंचक्रइति भावः ॥७१॥ पुरंनागपुरअरागाःविषयेच्छारहिताःवासुदेवेयुक्ताःमनोयोगयुक्ताःपार्थाःयोग्यान्सद्भिःसेव्यान्भोगान् अजुषंतअसेवंत ॥ ७२॥ वर्षत्रयस्यअंतेसमाप्तौ त्मनिआत्मनिसमाहितःसमारोपिताःअग्नयोयेनसतथा । तंवनंआलिहद्भिःभक्षयद्भिःदहद्भिरित्यर्थः । तैस्त्यक्ताग्निभिःकुंत्यासहपरिदग्धदेहं धृतराष्ट्रंशुश्रुवुः । संजयादितिशेषः । तदुक्तंब्रह्मांडे। धृतराष्ट्रेगतेसूनःसंजयःपांडुसूनवे। गतिंशशंसकुंत्याश्चगांधारीधृतराष्ट्रयोरिति ७३वीटामुखंकंदुकयुक्तमुखम् । व्रीडेतिपाठे व्रीडयालज्जयाकृतंमुखमिवमुखंयस्यसतथा तंअधःकृतमुखमित्यर्थः । ध्यानपरंहरिध्यानरतंस्वर्यातंस्वर्गप्राप्तं आत्मीयपितृव्यंनिशम्य समेत्यभर्तृलोकमितिशेषः भर्त्रासहप्रतिपूज्यमानांस्वावरैरितिशेषः।कुंतींचनिशम्यतमाःदुःखतमाइत्यर्थः । क्रियाःऔर्ध्वदेहिककर्माणिविदधुःचक्रुः ॥ ७४ ॥ अंतेमृतिकालेज्ञानेनमाहात्म्यज्ञानेनतंवासुदेवंअन्वनु पुनःपुनःस्मरंतस्तेकुंतीगांधारीधृतराष्ट्राःविष्णुभ

पार्थाः पुनः प्राप्य पुरं स्वकीयं धर्मेण पृथ्वीं परिपालयंतः ॥ भोगानरागा अजुषंत योग्यान्युक्ता जगद्धातरि वासुदेवे ॥ ७२ ॥ वर्षत्रयं ते त्मसमाहिताग्निं त्यक्ताग्निभिस्तैर्वनमालिहद्भिः ॥ ते शुश्रुवुर्धृतराष्ट्रं सभार्यं सहैव कुंत्या परिदग्धदेहम् ॥ ७३॥ वीटामुखं ध्यानपरं निशम्य स्वर्यातमात्मीयपितृव्यमाशु ॥ समेत्य भर्त्रा प्रतिपूज्यमानां कुंतीं च तमा विदधुः क्रियाश्च ॥ ७४॥ ते विष्णुभक्त्या परिपूतकर्मभिर्ज्ञानेन चांते तमनुस्मरंतः ॥ पार्थैः सुपुत्रैः सुकृतोर्ध्वकर्मभिर्वृद्धिं शुभस्यापुरनप्ययां शुभाः ॥ ७५॥ गावद्गणिर्व्याससकाशमेत्य शुश्रूषया तस्य पुनर्निजां गतिम् ॥ प्रपेदिवान्पांडुसुताश्च कृष्णं प्रतीक्षमाणाः पृथिवीमशासन् ॥ ७६॥ अष्टादशाब्दाः पृथिवीं समस्तां प्रशासतामेवमगुर्महात्मनाम् ॥ अरिक्तधर्मार्थसुखोत्तमानामनुज्झितानंतपदस्मृतीनाम् ॥७७॥

इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते भारततात्पर्यनिर्णये एकत्रिंशोध्यायः ॥ ३१ ॥

क्त्यापरिपूतानिपवित्रीभूतानिकर्माणितपआदीनियेषांतानितैस्तथाज्ञानेनचतारतम्यज्ञानेन। सुपुत्रैःपार्थैःकृतानिऊर्ध्वकर्माणिऊर्ध्वलोकसंबंध्यंतकर्माणियेषांतानितैस्तथा साधनैःअनप्ययांनाशरहितांसुखस्य आनंदस्यअभिवृद्धिंस्वस्वनियतानंदाविर्भावमित्यर्थः । आपुः । यतःशुभाःउत्तमाःअधिकारिणइत्यर्थः। स्वतःसद्गतियोग्यस्यपुत्रादेर्हेतुताभवेत् । योग्यतानादिभक्तिःस्यादयोग्यस्यकुतोगतिरिरितिवचनात् । शुभत्वात्सुखस्याभिवृद्धिंप्रापुरितिभावः ॥ ७५ ॥ गावद्गणिर्गवद्गणाख्यसूतपुत्रःसंजयः तस्यव्यासस्यशुश्रूषयासेवयापांडुसुताःकृष्णंप्रतीक्षमाणाःसंतःकृष्णस्यस्वलोकप्राप्तिंप्रतीक्षमाणाइतिभावः । अशासन् अरक्षन् ॥ ७६ ॥ एवमनेनप्रकारेण प्रशासतांरक्षतांमहात्मनांसुखोत्तमंमोक्षःअरिक्तानिसंपूर्णानिधमार्थसुखोत्तमानियेषांतेतथा । तेषांअनुज्झिताअपरित्यक्ताअनंतपदस्यहरिचरणस्यस्मृतिर्यैस्तेतथोक्तास्तेषांपार्थानांअष्टादशाब्दाःअगुःअतिक्रांताः ॥ ७७ ॥ इति टी० त्रि०

श्रीगुरुभ्योनमः ॐ ततइत्यादि। द्विषडब्दसत्रे द्वादशाब्दलभ्यसत्रेव्यासभृगूद्वहात्मासएवकृष्णःअत्रसत्रेक्षादस्यंमंत्रपूर्वकविधिवक्तासदस्यःतत्संबंधिकर्मचस्वयमेवचक्रे अ तएवाप्रमेयः ॥ १ ॥ अनंतदासाःहरिभक्ताःयतःअतइतिशेषः। सुसमीचीनभक्त्या साचिव्यंसचिवःसेवकःतद्विहितंकर्मसाचिव्यम् ॥ २ ॥ अंतरिक्षमंतरिक्षलोकःद्यौःस्वर्गःअंतरिक्षद्यावौमुखेयेषांतेअंतरिक्षद्युमुखाःतेचतेउत्तरेचमहरादयोलोकाःतेषु सनागा इत्यनेनपातालादिसप्तलोकस्थानामागमनंसूचितम्। अत्रयज्ञे ॥ ३ ॥ वादशीलिनांविवादस्वभावानां विनिर्णयार्थिनां विशेषेणतत्त्वनिर्णयमर्थिनांतत्त्वस्यसुनिर्णयःसुतरामभूत्। कस्मात्सुराणांमिथःपरस्परंभूसुराणांब्राह्मणानांमिथः। विवादान्निमित्ताद्धरेर्वाक्यात्॥४॥

ॐ ततः कुरुक्षेत्रमवाप्य कृष्णो दीक्षां प्रपेदे द्विषडब्दसत्रे ॥ स एव च व्यासभृगूद्वहात्मा चक्रेत्र सादस्यमजोप्रमेयः ॥ १॥ तत्रर्त्विजो दक्षभृगुप्रधानाः पार्था यदूनां प्रवरैः समेताः ॥ ब्रह्मेशशक्रप्रमुखाः सुराश्च चक्रुः सुसाचिव्यमनंतदासाः ॥ २॥ सर्वे च जीवा वसुधातलस्था येन्येंतरिक्षद्युमुखोत्तरेषु ॥ वसंति नारायणपादसंश्रयास्ते चात्र सर्वे मुमुक्षुः सनागाः ॥ ३॥ सुनिर्णयस्तत्त्वविनिर्णयार्थिनां तत्त्वस्य चाभूदिह वादशीलिनाम् ॥ मिथोविवादात्सुरभूसुराणां वाक्याद्धरेर्व्यासभृगूद्वहात्मनः ॥ ४॥ धर्मार्थकामानखिलानवापुस्तदर्थिनो मुक्तिमपीह कृष्णात् ॥ यथेष्टपानाशनवाससो जना विचेरुरत्रामरमानवादयः ॥५॥ क्षेत्रं तदासीद्धरिलोकसंमितं यदीयुरत्राखिलसज्जना युतिम् ॥ नानाप्तकामाश्च यतो बभूवुर्निर्यत्नदृश्यश्च यतोत्र केशवः ॥६॥ द्वादशाब्दं महासत्रमेवमेतादृशं हरिः ॥ समाप्यावभृथस्नातः पूजयित्वाखिलान् जनान् ॥ अनुजज्ञे क्रमेणैव वत्सरेण समागतान् ॥ ७॥ स्वकुलं संजिहीर्षुः स विप्रशापमजीजनत् ॥ ८॥

इहयज्ञेकृष्णात् यथेष्टपानाशनवाससोजनाः तदर्थिनःधर्माद्यर्थिनः अखिलान्संपूर्णान् धर्मादीनवापुः। केवलंधर्मादित्रयंइतिन किंतुमुक्तिमप्यापुः। अत्रयज्ञेअमरमानवादयः विचेरुः॥५॥तदासत्रसमयेक्षेत्रंकुरुक्षेत्रं हरिलोकेनवैकुंठलोकेनसंमितंसदृशंआसीत्।हरिलोकसंमितत्वेहेतुत्रयंदर्शयति।यदीयुरित्यादिना।यद्यस्मात् युतिंमेलनंईयुःप्रापुः।यतोनानाप्तकामाः बभूवुः। अखिलसज्जनाइत्युभयत्रसंबध्यते। यतोत्रक्षेत्रेकेशवः निर्यत्नेनअप्रयासेनदृश्यःद्रष्टुंयोग्यःततोहरिलोकसंमितमासीदितिसंबंधः ॥ समाप्यसत्रमितिशेषः।पूजयित्वामानयित्वाक्रमेणअयक्रांश्चित्श्वःकांश्चित्इतिक्रमेणवत्सरेणवत्सरपरिमितकालेनअनुजज्ञेआज्ञापयामास प्रेषयामासेत्यर्थः॥७॥ संजिहीर्षुःसंहर्तुमिच्छुःकृष्णः ८

प्रभुःकृष्णःअमुंउद्धवंबदर्याख्यंआश्रमंप्रापयित्वा शताद्दुत्तरंअधिकंसप्तमाब्दंप्रतीक्षन्सन् ॥ ९ ॥ पुनःकलियुगप्रवृत्त्यनंतरं कृष्णःषट्त्रिंशाब्दपरिमितकलियुगंकृतमेवकृतयुगवदेवेत्यर्थः अन्ववर्तयत्प्रवर्तयामास ॥ १० ॥ कालात्कलियुगस्वभावात् तथाकृष्णाज्ञयापुण्यस्यअल्पपुण्यस्येत्यर्थः। अधिकंफलंमहत्फलंभवतीत्यर्थः। पापस्यबहुपापस्यअल्पमेवअल्पफलंभवतियद्यस्मात् तत्तस्मात् कृतादपिकृतयुगादपि अयंउक्तोयंगुणविशेषःकलाविति शेषः ॥ ११ ॥ एवंपुण्याधिक्यपापाल्पत्वप्रकारेण कलिलिंगेषुकलियुगपापचिह्नेषुनष्टेषुसत्सु। युगवृत्तिंकलियुगधर्मप्रवृत्तिं अभीप्सवःइच्छंतः ॥ १२ ॥ देवाःस्वलोकप्राप्तिंप्रतिकेशवंव्यज्ञापयन् प्रार्थयामासुः। ओमितितथास्त्वितिआह ॥ १३ ॥ सज्जनस्यप्राचुर्येबाहुल्येसति कलेःवृद्धिःयुगधर्मवृद्धिः अंजसासम्यक्नस्यादितिभावेनस्वकुलस्यसंहृत्यै संहर्तुंप्रभासंप्रत्यनयत्। स्वकुलमितिशेषः ॥ १४ ॥

उपदिश्य परं ज्ञानमुद्धवायामुमाश्रमम् ॥ बदर्याख्यं प्रापयित्वा सप्तमाब्दं शतोत्तरम् ॥ ९॥ प्रतीक्षन्पालयामास पार्थैः सह भुवं प्रभुः ॥ समारब्धं कलियुगं यदा दुर्योधनोपतत् ॥ षट्त्रिंशाब्दं पुनः कृष्णः कृतमेवान्ववर्तयत् ॥ १० ॥ कृतादपि विशेषोयं यत्पुण्यस्याधिकं फलम् ॥ अल्पमेव च पापस्य कालात्कृष्णाज्ञया तथा ॥ ११ ॥ एवं सुधार्मिके लोके हरिभक्तिपरायणे ॥ नष्टेषु कलिलिंगेषु युगवृत्तिमभीप्सवः ॥१२ ॥ ब्रह्मरुद्रादयो देवाः स्तुत्वा केशवमव्ययम् ॥ व्यज्ञापयन्स्वलोकातिमोमित्याह स चाच्युतः ॥ १३ ॥ प्राचुर्ये सज्जनस्य स्यान्न कलेर्वृद्धिरंजसा ॥ इति स्वकुलसंहृत्यै प्रभासमनयत्प्रभुः ॥ १४॥ पुण्यक्षेत्रेपि न मृतिः स्वगृहेप्यतिधर्मदा ॥ गत्वैवाल्पमपि क्षेत्रं स्यान्महत्फलमित्यजः ॥ १५ ॥ प्रकाशयितुमेवैतान्प्रभासाय कुशस्थलात् ॥ नीत्वा दानानि सद्धर्मांस्तैरकारयदच्युतः ॥ १६ ॥ ते ततः शापदोषेण कृष्णेनैव विमोहिताः ॥ मैरेयमत्ता अन्योन्यं निपात्य स्वां तनुं गताः ॥ १७ ॥ ॥छ॥

ननु हरिःमृतिकालेस्वकुलंपुण्यक्षेत्रात्किमर्थंप्रभासमनयदित्यतआह। पुण्यक्षेत्रइति। पुण्यक्षेत्रेपिविद्यमानेपिस्वगृहेमृतिःअतिधर्मदाअतिपुण्यदान। अल्पमपिक्षेत्रंगत्वास्वगृहादितिशेषः। महत्फलंस्यात्मृतस्येतिशेषः ॥ १५ ॥ अजःइतिप्रकाशयितुमेव एतान्यादवान्नीत्वायादवैःअकारयत् कारयामास ॥ १६ ॥ ततःस्नानदानानंतरं तेयादवाःशापदोषेण सांबगर्भोत्पन्नमुसलेनयादवनाशःस्यादित्येवंरूपब्रह्मशापदोषनिमित्तेन कृष्णेनैवविमोहिताःमोहनसंहारादौकृष्णएवमुख्यकारणं शापादिकममुख्यकारणमित्येवार्थः। मैरेयमत्ताःमधुपानमत्ताःसंतः अन्योन्यंस्वांतनुंस्वस्वावतारदेहं निपात्यनाशयित्वा स्वांतनुंस्वमूलरूपंगताःप्रापुः ॥ १७ ॥ ॥ ॥ ॥ ॥ ॥

तद्यादवमरणंदृष्ट्वा जहौअत्यजत् ॥ १८ ॥ ततःअगणितानुभावः अपरिमितसामर्थ्यःकृष्णः। स्वसारथिंदारुकं स्वस्यअनुअनंतरम् । एषांपांडवानांस्वलोकयानप्रतिबोधनाय स्वलोकान्प्रतियानेगमनविषये ज्ञापनार्थंपांडवानांसकाशंप्रतित्वरयाअभ्यपातयत् प्रेषयामास ॥ १९ ॥ अथदारुकगमनानंतरं पिप्पलमूलेअश्वत्थमूलेआसतःउपविष्ट-स्यकृष्णस्यऊरुस्थितंअंकस्योपरिस्थितं सुताम्रंअत्यारक्तपादतलंदृष्ट्वा रोहितंआरक्तमृगविशेषं शंकमानःमन्यमानः अलंभक्तोपिजरानामजराख्योव्याधः शल्यंसांबगर्भ-जातमुसलशेषनिर्मितबाणंससर्ज ॥ २० ॥ शल्येअच्छेद्याभेद्यदेहस्य कृष्णस्यपादंउपसमीपेस्थितेसति समीपंकृष्णस्यसमीपं आगतःप्राप्तोव्याधः दृष्ट्वाकृष्णंदृष्ट्वा भुविअपतत्नमश्चकारेत्यर्थः ॥ २१ ॥ विप्रवाक्यंविप्रशापंमानयानःहरिःअमुनाव्याधेनकारयित्वा विप्रशापात्सांबगर्भजातमुसलशेषनिर्मितशरेणस्वपादतलेहननमितिशेषः।

तद्दृष्ट्वा बलदेवोपि योगेन स्वां तनुं जहौ ॥ १८ ॥ ततः परेशोगणितानुभावः स्वसारथिं पांडवानां सकाशम् ॥ स्व-लोकयानप्रतिबोधनाय स्वस्यानु चैषां त्वरयाभ्यपातयत् ॥ १९ ॥ अथासतः पिप्पलमूलईशेतुरूरुस्थितं पादतलं सुताम्रम् ॥ दृष्ट्वा जरानाम ससर्ज शल्यं भक्तोप्यलं रोहितं शंकमानः ॥ २० ॥ अच्छेद्याभेद्यदेहस्य शल्ये पाद-मुपस्थिते ॥ समीपमागतो व्याधो दृष्ट्वा भीतोऽपतद्भुवि ॥ २१ ॥ विप्रवाक्यं मानयानः कारयित्वामुना हरिः ॥ पापं मां जहि देवेति याचंतमनयद्दिवम् ॥ २२ ॥ पादप्रहारदोषेण तं भृगुं व्याधतां गतम् ॥ पश्चात्तापेन भक्त्या च सुप्रीतस्तच्छरीरिणम् ॥ स्वाज्ञाप्राप्तविमानेन दिवं निन्ये जनार्दनः ॥ २३ ॥ नीचा योनिर्नीचनीचकर्मात्तं नीच-कर्मतः ॥ अदुष्टत्वात्तु मनसो भक्तिलोपो न चाप्यभूत् ॥ २४ ॥ ॥ ६ ॥ ॥ ६ ॥ ॥ ६ ॥

हेदेवपापंपापिष्ठंमांजहीतियाचंतंयाचमानंव्याधंदिवंस्वर्गंअनयत् ॥ २२ ॥ कोसौव्याधइत्यतस्तत्स्वरूपमाह । पादप्रहारेणेति । पूर्वंविष्णोःपादप्रहारदोषेणजनार्दनः स्वा-ज्ञयास्वर्गात्प्राप्तेनविमानेन तच्छरीरिणंव्याधदेहवंतंदिवंस्वर्गंनिन्ये ॥ २३ ॥ नीचकर्मतःपादप्रहाररूपनिंद्यकर्मतःनीचायोनिःनिंद्यव्याधरूपायोनिः आप्तेतिशेषः । नीचनी-चकर्मनिंद्यान्निंद्यकर्म कृष्णपादतलवेधरूपमित्यर्थः । आप्तंभृगुणेतिशेषः । नीचांयोनिंनीचनीचेतिपाठे नीचकर्मतःनीचांयोनिंआप्तं नीचनीचकर्मचआप्तंभृगुंदिवंनिन्य इत्यर्थः । भृगोर्मनसःअदुष्टत्वात्पादप्रहारकालेदोषाभावात्तुविशेषात् व्याधयोनिंप्राप्तस्यापीतिचार्थः । भक्तिलोपोनाभूत्ब्रह्मादिभ्यउत्तमइतिज्ञापनार्थंपादप्रहारंकृतवानि-तिभावः ॥ २४ ॥ ॥ ॥ ॥

अत्रापिव्याधजन्मनि अबुद्धिपूर्वकृष्णपादतलमित्यविज्ञायविद्धंअतिदोषकृन्नाभूत् ॥ २५ ॥ कृष्णावताराथंकृतस्तुत्यपेक्षया पुनःस्तुवंतःकृष्णंअभिययुः । सचकृष्णइदं जगत् ॥ २६ ॥ गोपालमंत्रंभजतांउपासकानांतु कलौसर्ववैष्णवमंत्रापेक्षया विशेषेणअदृश्यःमनुष्यदृष्ट्यगोचरः । शिवपूजितंशिवलोकस्थमित्यर्थः । तृतीयंवपुःतृतीयरूपंसंपूजितंआसीदितिशेषः ॥ २७ ॥ परंउत्तमंधामवैकुंठं समामुवानंगच्छन् अस्यकृष्णस्यपंचमंवपुःस्वरूपंस्वशक्त्यास्वस्यस्वरूपयोग्यतानुसारशक्त्या अन्वयुःअनुययुः ॥ २८ ॥ अमिताउरुदीधितिःउत्कृष्टप्रकाशोयस्यतत्तथोक्तं तस्यधाम्नःतेजसाप्रविमुष्टदृष्टयःतिरस्कृतदृष्टयोयस्मात्तत्तस्मात्तेपुरुहूताद्याःइंद्राद्याःदेवाःनिमीलि-

भृगोरत्राबुद्धिपूर्वं नातिदोषकृदप्यभूत् ॥ २५ ॥ ततो विरिंचेशपुरंदराद्याः पुरः स्तुवंतोभिययुः प्रणम्य ॥ कृष्णं सचाश्वेव ययौ स्वलोकं स्वतेजसा सर्वमिदं प्रकाशयन् ॥ २६ ॥ गोपालमंत्रं भजतां फलप्रदस्त्वेकेन रूपेण स भुव्यदृश्यः ॥ तस्थौ द्वितीयेन च सूर्यमंडले तृतीयमासीच्छिवपूजितं वपुः ॥ २७ ॥ संपूजितं ब्रह्मलोके चतुर्थं कंजोद्भवेनाथ परं स्वधाम ॥ समाप्नुवानं वपुरस्य पंचमं भक्त्यान्वयुर्देववराः स्वशक्त्या ॥ २८ ॥ तत्तेजसा ते प्रविमुष्टदृष्टयः पुरुहूताद्या अमितोरुदीधितेः ॥ यावत्स्वगम्यं त्वनुगम्य तस्थुर्निमीलिताक्षा विहतोर्ध्वचाराः ॥ २९ ॥ वींद्रेशशेषानुगतः स्वयंभूर्धामप्रविष्टं तमजं प्रणम्य ॥ वींद्रादिकैरप्ययुतः स्वपित्रा श्लिष्टोरहश्चाकथयत्तथास्तौत् ॥ ३० ॥ स पूर्वरूपेण समाप्य चैक्यं विभज्य चेच्छानुसृतोथ रेमे ॥ हरिश्रिया ब्रह्ममुखैश्च मुक्तैः संपूज्यमानोमितसद्गुणात्मा ॥ ३१ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

तानि आच्छादितानिअक्षीणियेषांतेतथोक्ताः । तथाभूताःसंतःविहत प्रतिहतःऊर्ध्वचारःउत्तरत्रगतिर्येषांतेतथोक्ताः उत्तरत्रगंतुमशक्ताइत्यर्थः । तथाभूताःसंतःयात्रस्वगम्यं स्वेषांगंतुंयोग्यंतावत् दूरंअनुगम्यकृष्णमनुगत्वातस्थुः ॥ २९ ॥ गरुडरुद्रशेषयुतोपि पर्वकालइतिशेषः । स्वयंभूःवींद्रादिकैःत्रिभिरयुतःवियुक्तःस्वपित्राकृष्णेनआश्लिष्टःसन् धाममुक्तस्थानंप्रविष्टंतंअजंप्रणम्य रहःएकांतेअकथयत् कथनीयमितिशेषः । तथाअस्तौच्च ॥ ३० ॥ सहरिःकृष्णःपूर्वरूपेणमूलस्वरूपेण ऐक्यंसमवाप्य विभज्यचपृथक् कृष्णरूपंप्राप्येत्यर्थः । रेमेयतःइच्छानुसृतःस्वेच्छानुसारी अतः ऐक्यंप्राप्यविभज्यरेमइत्यर्थः ॥ ३१ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तत्रसत्यलोकेसुराःरविबिंबस्थंसूर्यमंडलगतंकृष्णं पश्यंतःप्रतिपूजयंतःसंतोरेमिरइत्यर्थः ॥ ३२ ॥ हरिणाप्रादुर्भावेषुमत्स्यादिनानावतारेषु क्वचिदप्यवतारेपिदेहत्यागानुसारेण देहवियोगानुकूलच्छलेनभ्रांति.नदर्शिता दुष्टानामितिशेषः । यतःकारणात्तत्तस्मात्कारणात् । अच्युतःक्षयरहितः ॥ ३३ ॥ प्रभुःअद्भुतकर्मकरणसमर्थःकृष्णःचिदानंदावेवएकः केवलःदेहोयस्यसतथा एतादृशोपिस्वदेहोपमितंप्राकृतानांदर्शनयोग्यस्वस्वरूपसदृशंत्यक्तदेहमिवजीवेनपरित्यक्तकलेवरमिव भुविशयानंपतितमित्यर्थः । अपरंअन्यंदेहं असुरान् अंधंतमःप्रापयितुंसृष्ट्वा असुरान्मोहयित्वासृष्टदेहेनेतिशेषः । दिवमगात् ॥ ३४ ॥ दारुकःकृष्णसारथिः तस्योक्त्यातंमोहनार्थसृष्टदेहम् ॥ ३५ ॥ प्रधानतः

ब्रह्मापि शर्वादियुतः स्वलोकं प्राप्तः पुनस्तत्र गतं च कृष्णम् ॥ रेमेक्षिपश्यन्प्रतिपूजयंस्तं सुराश्च सर्वे रविबिंबसंस्थम् ॥ ३२ ॥ यतो न दर्शिता भ्रांतिः प्रादुर्भावेष्वपि क्वचित् ॥ देहत्यागानुकारेण हरिणा तदिहाच्युतः ॥ ३३ ॥ मोहयित्वाऽसुरानंधं तमः प्रापयितुं प्रभुः ॥ चिदानंदैकदेहोपि त्यक्तं देहमिवापरम् ॥ सृष्ट्वा स्वदेहोपमितं शयानं भुव्यगाद्दिवम् ॥ ३४ ॥ दारुकोक्त्या समायातः पार्थस्तमदहत्तदा ॥ ३५ ॥ रौहिणेयादिकानां च शरीराणि प्रधानतः ॥ दारुको विष्णुलोकं तु पुनराप यथागतम् ॥ ३६ ॥ तथैव जनमोहाय प्राप वह्नावदृश्यताम् ॥ रुक्मिण्यगाद्धरेः पार्श्वं सत्या कृत्वा तपस्तथा ॥ ३७ ॥ चिदानंदैकदेहेपि द्विरूपे इव ते यतः ॥ एकैवातः कृष्णवत्ते दुष्टान्मोहयतस्तथा ॥ ३८ ॥ अन्या महामहिष्यस्तु त्यक्त्वा देहं हुताशने ॥ काश्चित्काश्चिच्च तपसा त्यक्तदेहा हरिं ययुः ॥ ३९ ॥ रौहिणेयादिकानां च भार्या वह्निमुखे तनुम् ॥ त्यक्त्वा स्वभर्तॄनेवापुः सर्वा एव पतिव्रताः ॥ ४० ॥ वसुदेवः पार्थमुखाच्छ्रुत्वैतद्योगमास्थितः ॥ त्यक्त्वा देहं कश्यपत्वं प्राप कृष्णानुरागतः ॥ ४१ ॥ ॥ ७ ॥ ॥

प्रधानानांरौहिणेयादिकानांचादहत् । यथाआगतंतथापुनराप ॥ ३६ ॥ तथैवकृष्णवदेवसत्यातपःकृत्वातथारुक्मिणीवत् हरेःपार्श्वमगात् ॥ ३७ ॥ एकैवद्विरूपेइवस्थितेतेरुक्मिणीसत्यभामेचिदानंदैकदेहेयतः अतःतेकृष्णवद्दुष्टान्मोहयतः तथारुक्मिणीसत्यभामावत् ॥ ३८ ॥ अन्याःमहामहिष्यः जांबवत्यादिषण्महिष्यः । तासुमध्येकाश्चित् हुताशनेदेहंत्यक्त्वा काश्चित्तपसात्यक्तदेहाः सत्योहरिंययुः ॥ ३९ ॥ स्वभर्तॄनेवापुरित्यत्र पतिव्रतात्वमेवहेतुः ॥ ४० ॥ एतद्यादवमरणं कृष्णस्यअनुरागतःप्रीत्या ॥ ४१ ॥

तस्यवसुदेवस्यअंत्यकर्मदेहदाहं वह्नौअश्वमेधाग्नौत्यक्तदेहास्तस्यवसुदेवस्य भार्यास्तंकश्यपमेवापुः ॥ ४२ ॥ धनंजयःस्त्र्यादिकं आदायद्वारवत्याःसकाशाद्विनिर्ययौ । साग-रःतांद्वारवतींजयासस्वोदकेनाच्छादयामास ॥ ४३ ॥ आभीराःम्लेच्छविशेषाः ॥ ४४ ॥ शतसंख्ययासंयुताःयाःषोडशसहस्रसंख्याकाःकृष्णवनिताःआसुः ताःदर्पनिमित्त-तःकृष्णविषयेकृतगर्वनिमित्तेन कृष्णदत्तशापात् ॥ ४५ ॥ वनितासुहृतासुसतीषु युयुत्सुर्योद्धुमिच्छुःवासविः कृच्छ्रेणैवज्ययासहितंसज्यं आरोपितगांडीवंचकार। ह हंत ॥ ४६ ॥ तस्यपार्थस्यशराःदैवात् हरिसंकल्पात् क्षीणाःनिःशेषाःअभवन्। दैवादस्त्राणिमंत्राः। सपार्थःतत्पराभवादिकं दैवकृतंईश्वरकृतमितिज्ञात्वा तत्रकारणंपुरुषोत्तमंकृष्णं

तस्यार्जुनोश्वमेधाग्नौ अंत्यकर्माकरोत्तदा ॥ त्यक्तदेहास्तस्य भार्या वह्नौ प्रापुस्तमेव च ॥ ४२ ॥ स्त्रियो बालांस्तथा दाय धनं चैव धनंजयः ॥ विनिर्ययौ द्वारवत्यास्तां च जग्रास सागरः ॥ ४३ ॥ स्त्रीबालसहिते पार्थ एकस्मिन्पथि गच्छति ॥ शापात्सुपापा आभीराः स्त्रीजनाञ् जह्रुरुद्धताः ॥ ४४ ॥ यास्ताः षोडशसाहस्रवनिताः शतसंयुताः ॥ कृष्णशापान्म्लेच्छवशं ययुर्दर्पनिमित्ततः ॥ ४५ ॥ ह्रियमाणे धने चैव वनितासु च वासविः ॥ युयुत्सुर्गांडिवं सज्जं कृच्छ्रेणैव चकार ह ॥ ४६ ॥ क्षीणास्तस्य शरा दैवान्नास्त्राणि स्मृतिमाययुः ॥ स तद्दैवकृतं ज्ञात्वा संस्मरन्पुरुषोत्तमम् ॥ निघ्नन् शत्रून् गांडिवेन शेषं रक्षन्कुरूनगात् ॥ ४७ ॥ तदा कुरुक्षेत्रगतं जगद्गुरुं सुपूर्णविज्ञानबलाब्धि सत्सुखम् ॥ तमेव वासिष्ठकुलोद्भवं हरिं निरीक्ष्य दुःखेन पपात पादयोः ॥ ४८ ॥ स तेन पुंसां प्रवरेण हेतुभिः संबोधितो ज्ञानतमोंशुमालिना ॥ संस्थाप्य चेतः पुनरेव तस्मिन् जहौ शुचः प्रायश एव धैर्यात् ॥ ४९ ॥ ॥ ७ ॥

संस्मरन्। गांडिवेनबाणरहितगांडिवधनुषाशत्रून्निघ्नन्शेषंआभीरापहृतादुर्वरितं धनादिकंरक्षन्कुरून्कुरुविषयान्ययौ ॥ ४७ ॥ सपार्थःतदाअर्जुनागमनकाले कुरुक्षेत्रंगतंप्रा प्तंसुपूर्णाभ्यांविज्ञानबलाभ्यांअब्धिरिवअब्धिःसचासौसत्सुखश्चतथोक्तः। तत्तथातमेवकृष्णस्वरूपमेव वासिष्ठकुलेकृतावतारंहरिंश्रीवेदव्यासम् ॥ ४८ ॥ अज्ञानाख्यतमसः अंधकारस्यअंशुमालिनासूर्येणव्यासेनहेतुभिःनिमित्तैःसंबोधितःसपार्थःपुनःतस्मिन् वेदव्यासेचेतःकृष्णोयमितिबुद्धिंसंस्थाप्य धैर्यात्प्रायःशुचोदुःखानिजहौ ॥ ४९ ॥

स्त्रियः कृष्णप्रेरिताद्दाल्भ्यतः दाल्भ्यनाम्नोमुनेःसकाशात्पुनःगोविंदैकादशींश्रुत्वाउपवासंकृत्वासारस्वतेसरस्वतीसंबंधिनिजलेनिमज्ज्यस्नात्वावायोर्वचनात् अत्रभवतीभिःदेहस्त्य
क्तव्यइत्येवंरूपवचनात् । चैत्रादिशुद्धद्वादश्यैकादशीनां केशवादिद्वादशमूर्तीनां देवतात्वादाषाढशुद्धैकादश्याः गोविंददेवतात्वेनगोविंदैकादशीत्वमुक्तम् । तथाचैत्रादिकृष्णैकाद
शीद्वादशीनां संकर्षणादयःक्रमाद्द्वादशदेवताः ॥ ५० ॥ हार्दिक्यःकृतवर्मायुयुधानःसात्यकिःतयोःसुतौकुरुक्षेत्रेसारस्वतेदेशेच राज्येसाम्राज्यार्थंअभ्यषेचयत् । कुरुक्षेत्रे-
कृतवर्मसुतंसारस्वतेसात्यकिसुतमितिक्रमेणैवयोज्यम् ॥ ५१ ॥ वशीस्वाधीनराष्ट्रःजितेंद्रियोवा । पार्थःअनिरुद्धःकृष्णपौत्रःतत्सुतंवज्राख्यंशूरसेनराष्ट्रेण सहितस्येंद्रप्रस्थस्य
राजानंसमासांतोविधिरनित्यइतिज्ञेयम् ॥ ५२ ॥ तस्मिन्वज्रेतेषांभ्रातॄणाम् ॥ ५३ ॥ मुरवैरिणःकृष्णस्यअवियोगे वियोगाभावेवयंराज्यंकुर्मइतिसमयंसंकेतकालंस्मरंतस्ते-

स्त्रियो म्लेच्छहृताः कृष्णप्रेषिताद्दाल्भ्यतः पुनः ॥ गोविंदैकादशीं श्रुत्वा कृत्वा सारस्वते जले ॥५०॥ निमज्ज्य वायो-
र्वचनात्त्यक्तदेहा दिवं ययुः ॥ अर्जुनस्तु कुरुक्षेत्रे हार्दिक्ययुयुधानयोः ॥ सुतौ सारस्वते चैव देशे राज्येऽभ्यषेचयत्
॥ ५१ ॥ अनिरुद्धसुतं वज्रं प्रियं कृष्णस्य सद्गुणम् ॥ स शूरसेनेंद्रप्रस्थराजानमकरोद्वशी ॥ ५२ ॥ स्त्रीबालांश्च
धनं चैव तस्मिन्संस्थाप्य फल्गुनः ॥ ययौ भ्रातॄनशेषं च वृत्तं तेषामवर्णयत् ॥ ५३ ॥ ते वै वियोगसमयं स्मरंतो
मुरवैरिणः ॥ अभ्यषिंचन् भागवतं महाराज्ये परीक्षितम् ॥ ५४ ॥ स्त्रीहारिणां च म्लेच्छानां वधायैनमयोजयन् ॥
कृतं च तेन तत्कर्म वोढ्रा पैतामहीं धुरम् ॥ ५५ ॥ समयं परिरक्षद्भिर्न पार्थैरेव तत्कृतम् ॥ ५६ ॥ वासुदेवपदा
स्पृष्टं भूकंटकसमुद्धृतिः ॥ समयः पांडवानां हि तस्यैवानुगतिः परम् ॥ ५७ ॥ ७ ॥ ॥ ७ ॥

पार्थाः ॥ ५४ ॥ एवंपरीक्षितंअयोजयत् आज्ञापयामास । पैतामहींपांडवसंबंधिनींधुरंभारंवोढ्रावहतातेनपरीक्षिता तत् म्लेच्छहननरूपंकर्मकृतम् ॥ ५५ ॥ दुष्टवधरूपह-
रिसेवार्थमवतीर्णैःपार्थैस्तत्कर्मकुतोनकृतमित्यतआह समयमिति ॥ ५६ ॥ कोसौसमयइत्यतआह । वासुदेवेति । वासुदेवस्यकृष्णस्यपदापादेनस्पृष्टाचसाभूश्चस्पृष्टभूः तस्याः
कंटकानांकंटकरूपासुराणांसमुद्धृतिःउत्पाटनंवधइतियावत् । सापेक्षत्वात्समासः । यद्वा पदाभ्यामस्पृष्टाचसाभूश्चेति । पदंव्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुष्वित्यमरः ।
पांडवानांसमयःसंकेतकालःसिद्धांतोवा । समयाःशपथाचारकालसिद्धांतसंविदइत्यमरः । परंस्वधामप्राप्त्यनंतरं तस्यकृष्णस्यअनुपश्चाद्गतिःगमनंस्वलोकान्प्रतीतिशेषः ।
पांडवानांसमयः ॥ ५७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

उक्तसमयादपिसमयविशेषंदर्शयति । अनुव्रजद्भिरिति । तेनकृष्णेनउज्झितापरित्यक्ताभूःनभोज्यानचापिरक्ष्या इत्येवतेषांपार्थानांपुरासमयःकालनियमोहियस्मात्तस्मात् पार्थैःतन्नैवकृतमितिपूर्वेणान्वयः ॥ ५८ ॥ तत्रतदायोगंसमाधिं हरिध्यानमित्यर्थः ॥ ५९ ॥ तदाज्ञयापार्थानामाज्ञया युयुत्सुर्धृतराष्ट्रपुत्रोयुयुत्सुनामापौत्रस्यपरीक्षितःशिक्षार्थं राजधर्मशिक्षार्थं अत्रपुरेनागपुरे असवत् ॥ ६० ॥ राजचिह्नानिच्छत्रचामरादीनि सर्वेपंचभ्रातरःकृष्णयाशुनासह । भ्रातरःपंचकृष्णाच षष्ठीश्वाचैवसप्तमः । आत्मनासप्तमोराजा निर्ययौगजसाह्वयादिति महाप्रास्थानिके । वीराध्वानंवीरप्राप्यमार्गम् ॥ ६१ ॥ पूर्वंआदौप्रागुदीचींपूर्वोत्तरसंबंधिनींऐशानींदिशम् । तत्रपांडवेषुमध्ये पावकः समुद्रंउपसमीपेतं अत्यक्तगांडिवंपार्थंदृष्ट्वाराजानंययाचे । तदुक्तःधर्मराजेनोक्तोर्जुनःअंबुधौप्रास्यत्चिक्षेप । तूणौधनुश्चेतिशेषः । सजलेप्राक्षिपच्चैतत्तथाक्षय्येमहेषु-

अनुव्रजद्भिर्विश्वेशं नास्माभिर्भूस्तदुज्झिता ॥ भोक्ष्या रक्ष्यापि वा तेषामित्येव समयः पुरा ॥ ५८ ॥ तत्र काली भीमभार्या वैष्णवं योगमास्थिता ॥ कृष्णस्यैकत्वमापन्ना त्यक्त्वा देहं तु मानुषम् ॥ ५९ ॥ सुभद्राद्यास्तु या भार्याः पार्थानां तु तदाज्ञया ॥ युयुत्सुश्चात्र शिक्षार्थं पौत्रस्यैवावसन्पुरे ॥ ६० ॥ संत्यज्य राजचिह्नानि वैष्णवं योगमास्थिताः ॥ वीराध्वानं ययुः सर्वे कृष्णया सह पांडवाः ॥ ६१ ॥ प्रागुदीचीं दिशं पूर्वं ययुस्तत्रार्जुनो धनुः ॥ नात्यजल्लोभतस्तत्तु समुद्रमुप पावकः ॥ दृष्ट्वा ययाचे राजानं तदुक्तः प्रास्यदंबुधौ ॥ ६२ ॥ प्रातिभाव्यं तु वरुणे निस्तीर्याग्निरदृश्यताम् ॥ ययौ तेपि ययुः क्षिप्रं प्लवंतः सप्तवारिधीन् ॥ ६३ ॥ अहोभिः सप्तभिर्योगं समारूढाः प्रदक्षिणम् ॥ कृत्वा क्वचिदसज्जंत आसेदुर्गंधमादनम् ॥ ६४ ॥ तत्र नारायणक्षेत्रे तेषां तन्वोपतन् क्रमात् ॥ द्रौपदीसहदेवादिपंचानां तत्र मारुतिः ॥ ६५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

धीइतिमहाप्रास्थानिके ॥ ६२ ॥ वरुणेवरुणविषयेप्रातिभाव्यंप्रतिभूत्वंनिस्तीर्यधनुरादानेननिस्तीर्यअर्जुनायधनुर्देहि तत्पुनरहंतेदास्यामीति यत्कथनंतत्प्रतिभूत्वं अदृश्यतां ययौ सप्तवारिधीन्प्लवंतस्तेपि पार्थाःक्षिप्रंययुः ॥ ६३ ॥ योगंध्यानंसमारूढाःक्वचिद्दुर्गमार्गेपि असज्जंतःअश्रांताःपार्थाःसप्तभिरहोभिःसप्तदिनैःप्रदक्षिणांभुवंप्रदक्षिणंकृत्वा गंधमादनंआसेदुःप्रापुः ॥ ६४ ॥ तत्रगंधमादनेविद्यमानेनारायणक्षेत्रे बदरिकाश्रमेतेषांद्रौपदीसहदेवादिपंचानांआदिपदेननकुलार्जुनभीमाःग्राह्याःतन्वःदेहाः । क्रमात् वयोनीचक्रमादपतन् ॥ ६५ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तत्रतद्दामारुतिः तेषांद्रौपद्यादीनांइहभूमौतद्देहप्रपतनं देहेनसहितःनाकःस्वर्गःसदेहनाकः तत्रअनिच्छत्वात् इच्छारहितत्वान्निमित्तात् अभूदितिशेषः ॥ ६६ ॥ इतियाथार्थ्यंजा
ननूसन् केनदोषेणनोस्माकंदेहःक्रमात् नीचक्रमात् विपर्ययमृत्युरित्यर्थः । अपतत् इतिधर्मजं पप्रच्छेत्यन्वयः ॥ ६७ ॥ ननु याथार्थ्यंजानन्नपिभीमःकिमर्थमपृच्छदित्यतआह ।
मृतिकालइति । मृतिकालेयःयस्यदोषंवक्तितस्मात्दोषंब्रुवतःसकाशात् उक्तःदोषःतस्यतस्यतथादोषित्वेनवर्णितस्येत्यर्थः । ऋणमोचनंस्यादेवेतिश्रुतिः आहयद्यस्मात्तस्मात्
॥ ६८ ॥ भीमःसर्वेषांऋणमोक्षायदोषान्अवादयत् धर्मजेनेतिशेषः ॥ ६९ ॥ सोपिराजाशुद्धकर्मणांपूतकर्मणांद्रौपद्यादीनांइच्छयास्वेच्छानुसारेणपतितान्देहान् अजानन्सन्
कारणंदेहपतनकारणंच अपश्यन्सन् अकारणंकारणरहितंकार्यंन हियस्मात्तस्मात् एवंस्यादपिएवंभवितुमर्हत्यपिइतिसंभावनामात्रंयथाभवतितथा दोषान्प्राह । द्रौपद्यांभीम

सदेहनाकानिच्छत्वाद्देहप्रपतनं हि तत् ॥ ६६ ॥ तेषामिहेति याथार्थ्यं जानन् पप्रच्छ धर्मजम् ॥ केन केनापतद्देहो
दोषेण न इति क्रमात् ॥ ६७ ॥ मृतिकाले हि यो यस्य दोषं वक्त्यृणमोचनम् ॥ तस्मात्स्यादुक्तदोषस्येत्याह तच्छ्रु-
तिरेव तत् ॥ ६८ ॥ ऋणमोक्षणाय सर्वेषां भीमो दोषानवादयत् ॥ ६९ ॥ सोपीच्छापतितान् देहानजानन् शुद्ध-
कर्मणाम् ॥ अपश्यन्कारणं प्राह दोषात्स्यादेवमित्यपि ॥ राजा संभावनामात्रान्न हि कार्यमकारणम् ॥ ७० ॥
स्वच्छंदमृत्यवो योगाद्देहानुत्सृज्य पांडवाः ॥ कृष्णा चापुः परं स्थानं यन्नायांत्यपि देवताः ॥ ७१ ॥ इति श्रुतेर्न ते
पापाद्देहांस्तत्यजुरूर्जिताः ॥ ७२ ॥ ऋणान्युन्मुच्य दोषोक्त्या स्वानां भीमः स्वकां तनुम् ॥ तत्याज परमं ध्यायन्नाप
च स्थानमुत्तमम् ॥ इति स्कंदपुराणोक्तं व्यासवाक्यमृषीन्प्रति ॥ ७३ ॥ ७३ ॥ ७३ ॥

मनुयुधिष्ठिरादित्रिभ्यःपार्थेअधिकपक्षपाताख्यदोषं सहदेवेनीतिज्ञत्वाभिमानाख्यदोषं नकुलेरूपित्वाभिमानाख्यदोषं पार्थेवीरत्वाभिमानाख्यदोषं भीमेबलित्वाभिमाना
ख्यदोषंप्राहेत्यर्थः ॥ ७० ॥ ननु विद्यमानाएवदोषायुधिष्ठिरोक्ताःकिंनस्युरित्यतस्तेषां दोषाभावंश्रुत्योपपादयति । स्वच्छंदेति । स्वच्छंदेनस्वेच्छयैवमृत्युर्येषांतेतथा देवताअपि
यत्परमंस्थानं नयांति तत्स्थानंआपुः ॥ ७१ ॥ इतिश्रुतेःस्वच्छंदमृत्यवइतिश्रुतेः । ऊर्जिताःज्ञानभक्त्यादिगुणैःउत्कृष्टास्तेद्रौपद्यादिपंचपापाद्देहान्नतत्यजुः ॥ ७२ ॥ अस्मि
न्नर्थेप्रमाणत्वेनव्यासोक्तपुराणवाक्यमुदाहरति । ऋणानीति । भीमःदोषोक्त्यायुधिष्ठिरकृतदोषानुवादेनस्वानांद्रौपदीसहदेवादीनांऋणानिउन्मुच्य परमंहरिंध्यायन्स्वकांतनुं
तत्याज । उत्तमंस्थानंआपच । इतिऋणान्युन्मुच्येतिस्कंदपुराणोक्तंव्यासवाक्यमृषीन्प्रतिवर्ततेअतोदोषाःविद्यमानाःनभवंतीतिभावः ॥ ७३ ॥

द्रौपद्यादीनांयुधिष्ठिरोक्तदोषाभावंदर्शयन् कुत्रचिदर्जुनादित्रयाणां दोषसद्भावेपिसदोषोदेहपातेनैवहेतुरित्याह । भीमादित्यादिना । भीमादृतेचतुर्षुयुधिष्ठिरादिचतुर्षुसत्सुवासवौ पार्थे तुविशेषेणपक्षपातः योग्यएवयुक्तएवइतिहेतोःकृष्णायाःकथंचननस्यात् ॥ ७४ ॥ महांतिउत्तमानिनीतिरूपेवीर्यबलेयेषांसहदेवादिचतुर्णांक्रमात्नीत्यादीनिसहदेवाद्युत्तरक्रमात्संतियतः अतोनदोषइत्यर्थः । भीमोबहन्नभोक्तेतिधर्मजेनोक्तदोषंनिरस्यन्नाह । प्राणत्वादिति । प्राणत्वात्प्रधानवायुस्वरूपत्वात् भोगशक्तिःबह्वन्नभोक्तृत्वशक्तिः मारुतेःदोषायनहि किंतुपितुमानितिप्रतिपाद्यगुणएवेत्यर्थः । पितुरित्यन्ननाम ॥ ७५ ॥ ननु स्वस्मिन्विद्यमानगुणेष्वभिमानःदोषकृद्भवेदित्यतआह । यथेति । आत्मनियथास्वरूपमनतिक्रम्यएतादृशोहमितियद्विज्ञानंअपितदपीत्यर्थः । दोषकृन्नइतिव्यासस्मृतेः । यथास्वरूपविज्ञानमितिव्यासस्मृतेस्तेएषांद्रौपदीसहदेवादीनांउक्तदोषोद्भवः राजोक्तदोषाणांसंभवःकथंस्यादितिशेषः ॥ ७६ ॥ ननु सहदेवनकुलार्जुनानां स्वरूपातिरिक्ताभिमानाद्देहपातःकिंनस्यादित्यतआह । कदाचिदिति । कदाचित् त्रयाणांसहदेवनकुलपार्थानांएषुनीतिरूपवीर्येषु अतिमानःविद्यमाननीत्यादिगुणेभ्योधिकाभिमानःअहंकारइत्यर्थः अपियद्यपिजायतेतथापि अभिमानेसत्यपिएतद्देहपातनंतत्फलंनीत्यादिषुअभिमानदोषफलंन । तर्हितत्फलंकिमित्यतआह । तारतम्यमिति । मुक्तिगंतारतम्यंहि । अतिमानादिदोषेण मुक्तौस्वसमानगणात्किंचिज्ज्ञानानंदह्रासरूपंफलमितिभावः ।

**भीमादृते हि चतुर्षु पक्षपातस्तु वासवौ ॥ योग्य एवेति कृष्णाया न दोषः स्यात्कथंचन ॥ ७४ ॥ नीतिरूपे वीर्यबले महांत्येषां यतः क्रमात् ॥ प्राणत्वाद्भोगशक्तिश्च न हि दोषाय मारुतेः ॥ ७५ ॥ यथास्वरूपविज्ञानमात्मन्यपि न दोषकृत् ॥ इति व्यासस्मृतेरेषामुक्तदोषोद्भवः कथम् ॥ ७६ ॥ कदाचिदतिमानोपि त्रयाणामेषु जायते ॥ तथापि तत्फलं नैतत्तारतम्यं हि मुक्तिगम् ॥ ७७ ॥ गुणदोषाधिकाल्पत्वादत्रस्थमपि हि श्रुतम् ॥ प्रारब्धकर्मनाशे हि पतेद्देहोप्यपापिनः ॥ ७८ ॥**

कुतःगुणदोषाधिकाल्पत्वादपरोक्षज्ञानोत्तरकृतगुणानांशुभानांअधिकत्वाद्दोषाणामशुभानांअल्पत्वान्निमित्तात् तर्हि अभिमानफलंकिमित्यतआह । तारतम्यमिति। अत्रस्थमामुक्तेःप्राक् भोग्यत्वेनप्राप्तमपितारतम्यंमुक्तौस्वसमानगणात्किंचिदधिकप्रसक्तानंदह्रासरूपंफलंचंद्रसुग्रीवादिव मुक्तिगंहि मोक्षगतमेवश्रुतंश्रुतिप्रसिद्धम् । तदुक्तमनुव्याख्याने । चंद्रसुग्रीवयोश्चैवस्वोच्चदारपरिग्रहात्इत्यादिना । तथाच । पापाधिक्येगुणाल्पत्वेऽनैवफलंभवतीतिज्ञेयम् । यथापांडुमांडव्यादीनांतस्मादभिमानफलंदेहपतनंनैवेतिभावः । यद्वा । मुक्तिगंतारतम्यंसमुद्रतरलवत्कादाचित्कविशेषरूपमानंदह्रासरूपंफलमित्यर्थः ॥७७॥ ऐहिकमपिफलंभवतीत्याह । गुणेति । दोषाधिक्यंगुणाल्पत्वंचविधायअत्रस्थमपिफलंश्रुतंहीत्यर्थः । तस्यमुक्तावपिकारणत्वात् । तदुक्तमनुव्याख्याने । देवानामपिनप्रायइत्यादिना । तर्हि देहपतनेकिंकारणमित्यतआह । प्रारब्धेति । अपापिनोपिअपरोक्षज्ञानानंतरं कृतपापफलरहितस्यैवप्रारब्धकर्मनाशेसति देहारंभककर्मनाशेसतिदेहःपतेद्धियस्मात्सहदेवादीनांदेहपातोअतिमानफलंभवतीतिनकिंतुप्रारब्धकर्मनाशएवहेतुरितिभावः ॥ ७८ ॥

प्रारब्धकर्मनाशाभावेदेहपाताभावमुपपादयति । युधिष्ठिरोपीति । तत्तनुःअत्यक्तमनुष्यदेहोयुधिष्ठिरोपिस्वर्गंगतोपिस्वर्गेस्वर्गभोगंनैवबुभुजे । हियस्मात्तस्मात्स्वर्गगतस्यापि-युधिष्ठिरस्यप्रारब्धकर्मनाशाभावाद्देहपातोनाभूदितिभावः । सहदेवादीनांअतिमानमंगीकृत्यतत्फलांतरमुक्तं मारुतेस्तन्नास्तीत्याह । अतीति । मारुतेःअतिमानादयः ॥ ७९॥ कुतोनैवेत्यतआह । अनादीति । अनादिकालतःसर्वजीवगणेभ्यःगुणाधिकाःअतएवसर्वदोषहीनाःदेवानामपिदेवताःऋजवोनामयेदेवाःसंतितेवायुत्वंवायुपदाधिकारत्वंआपुः । हियस्मात्तस्मात्मारुतेःवायुत्वादतिमानादयःकुतएवेतिसंबंधः ॥ ८० ॥ केशवःकृष्णःभीमस्यअतिमानादेर्दोषसमूहस्यअभावंआहेतिहिभारतेप्रसिद्धम् ॥ ८१ ॥ स्वोक्तार्थेप्रमाणंकृष्णोक्तभारतवाक्यमुदाहरति । यत्किंचेति । हेपांडवभीम यत्किंचकिंचिदात्मनित्वयीत्यर्थः । कल्याणंज्ञानानंदादिशुभंसंभावयसिमन्यसे । अहंएतदपित्वया

युधिष्ठिरोपि हि स्वर्गं बुभुजे नैव तत्तनुः ॥ अतिमानादयो दोषाः कुत एव हि मारुतेः ॥ ७९ ॥ अनादिकालतः सर्वदोषहीना गुणाधिकाः ॥ सर्वजीवगणेभ्यो ये ते हि वायुत्वमापुयुः ॥ ऋजवो नाम ये देवा देवानामपि देवताः ॥ ८० ॥ अभावं त्वतिमानादेर्भीमस्याह च केशवः ॥ ८१ ॥ यत्किंचात्मनि कल्याणं संभावयसि पांडव ॥ सहस्रगुणमप्येतत्त्वयि संभावयाम्यहम् ॥ ८२ ॥ इति तस्माद्यथा युद्धे धर्महानिममन्यत ॥ एवमत्राप्यधर्मेण देहपातं नृपोब्रवीत् ॥ ८३ ॥ पूज्येभ्यः पूर्वमेवैषां देहपातमभीप्सताम् ॥ तत्कामाद्देहपातोभून्न पापान्मुच्यतां यथा ॥ ८४ ॥ न हि पापफलं मुक्तौ देहपातः कथंचन ॥ किंतु कर्मक्षयादेव तथा सर्वत्र निश्चितः ॥ ८५ ॥ ॥ ७ ॥

अल्पत्वेनसंभावितंकल्याणादिकंसहस्रगुणंसहस्रगुणितंत्वयिसंभावयामिमन्ये । इत्याहेतिपूर्वेणसंबंधः ॥ ८२ ॥ तस्मात्कारणात्नृपःयुद्धेधर्महानिंदुर्योधनादिवधेन यथाधर्महानिंअमन्यत एवंअनेनप्रकारेणअत्रापिस्वस्वरूपप्राप्तिकालेपिअधर्मेणअतिमानदोषेण देहपातंअब्रवीत् ॥ ८३ ॥ पूज्येभ्यःवयोवृद्धेभ्यःनतुगुणोत्तमेभ्यइत्यर्थः । पूर्वं नैवआदावेव देहपातंअभीप्सतांइच्छतां तेषांद्रौपदीसहदेवादीनांतत्कामात् तेषांमनोभीष्टानुसारात्देहपातोभूत् पापादतिमानाद्दोषान्नाभूत् । तत्रदृष्टांतमाह । मुच्यतामिति । मुच्यतांमोक्षंप्राप्नुवतां व्युत्क्रमतःलयोयथाभवतितथेत्यर्थः ॥ ८४ ॥ मुक्तिंप्राप्नुवतांव्युत्क्रमाद्देहपातदोषादेवस्यादित्यतआह । नहीति । मुक्तौमुक्तिप्राप्तिकाले कर्मक्षयाद्देहपातोयथातथाभीमादीनांदेहपातस्तथेतिसर्वत्रवेदेषुनिर्णयग्रंथेषुच निश्चितःनिर्णीतः ॥ ८५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तेषुभीमादिषुधर्मजःश्वात्मनासारमेयस्वरूपेणयमेनसह दैवात्प्राप्तेनेतिशेषः । ययौस्वर्गंप्रतिगंतुंकिंचिद्दूरमार्गमितिशेषः । तदागमनसमयेअस्यराज्ञःपुरःअग्रेदेवरथःदेवैःप्रेषितोरथः अवततारअवतीर्णःप्राप्तइत्यर्थः ॥ ८६ ॥ रथिनारथस्थपुरुषेण रथंआरुहआरूढोभवेतिकथितःउदितोराजापुरतःआदौशुनःसारमेयस्य अरोहंअरोहणंअब्रवीत् । सोपिरथिकःतंराजानं एतत्सारमेयारोहणंयुक्तंनेत्याह ॥ ८७ ॥ अहंश्वानं विनानआरुहेयंनारोहेयं संज्ञापूर्वकोविधिरनित्यइतिगुणाभावः । इनितेनराज्ञा स्थिरोदितेनिश्चयेनोदितेसति धर्मस्वरूपतांयमस्वरूपत्वं आप्तःसन् स्वरूपंस्वस्ययमरूपंदर्शयामास । राज्ञइतिशेषः ॥ ८८ ॥ वृषोयमःआनृशंस्यपरत्वेनकृपारतत्वेनकौंतेयस्वरूपिणःयुधिष्ठिरस्वरूपिणः

तेषु स्वलोकान्प्राप्तेषु धर्मजः स्वात्मना सह ॥ ययौ पुरो देवरथस्तदास्यावततार ह ॥ ८६ ॥ रथमारुहेति कथितो रथिना पुरतः शुनः ॥ आरोहमब्रवीन्नैतद्युक्तमित्याह सोपि तम् ॥ ८७ ॥ नारुहेयं विना श्वानमिति तेन स्थिरोदिते ॥ स्वरूपं दर्शयामास धर्मो त्याप्तः स्वरूपताम् ॥ ८८ ॥ आनृशंस्यपरत्वेन कीर्तिमेवात्मनो वृषः ॥ ख्यापयामास कौंतेयरूपिणो धर्मसूक्तिभिः ॥ ८९ ॥ ततः स रथमारुह्य लोकानामुत्तरोत्तरम् ॥ अतिक्रम्याखिलान् राज्ञो जगाम श्रीपतिप्रियः ॥ ९० ॥ सर्वेषामुत्तरं लोकमैंद्रं प्राप्येदमेव ते ॥ स्थानमित्युदितो देवैर्दुर्योधनमवैक्षत ॥ ९१ ॥ सभ्रातृकं ज्वलंतं च सर्वेषामुपरि स्थितम् ॥ तं दृष्ट्वा परमक्रुद्धो निमील्य नयने शुभे ॥ ९२ ॥ भ्रातरो मे क्व कृष्णा च कर्णाद्याः क्व च बांधवाः ॥ धृष्टद्युम्नादयः पुत्राः हैडिंबाद्याश्च सर्वशः ॥ ९३ ॥ ७ ॥ ७ ॥

आत्मनएवस्वस्यैवकीर्तिःआनृशंस्यपरत्वंकीर्तिंधर्मसूक्तिभिःधर्मयुक्तसद्वाक्यैःख्यापयामास ॥ ८९ ॥ ततःश्रीपतिप्रिय.सराजालोकानांभूम्यादिलोकानां उत्तरोत्तरंविद्यमानंलोकंअतिक्रम्यअखिलान्राज्ञःयमलोकस्थनृपानित्यर्थः । अतिक्रम्यजगाम ॥ ९० ॥ सर्वेषांलोकानांमध्येउत्तरंश्रेष्ठंऐंद्रंलोकंप्राप्य तेतवइदंस्थानंवासार्थमितिशेषः । देवैरित्युदितोराजादुर्योधनमवैक्षत ॥ ९१ ॥ ज्वलंतंप्रकाशमानंनंदुर्योधनंदृष्ट्वा परमक्रुद्धःअत्यंतकोपयुक्तोराजा शुभेनयनेनिमील्य देवान्पप्रच्छेत्युत्तरत्रसंबंधः ॥ ९२ ॥ किमितिं । सकर्णाः भ्रातरःकृष्णाचक्वक्व तिष्ठंतीत्यर्थः धृष्टद्युम्नादयोबांधवाःहैडिंबाद्याःपुत्राः ॥ ९३ ॥ ॥ ॥ ॥ ॥ ॥

यादवाश्चमेसर्वशःसर्वेकेतिपदं सर्वत्रसंबध्यते इतिपप्रच्छ । तेदेवाःतंराजानमब्रुवन् । किमिति । तेतवएतैःपूर्वोक्तभ्रात्रादिभिःकिं किंप्रयोजनमित्यर्थः । अत्रस्वर्गेस्वकृतंकर्म स्वेनैवभुज्यते अपरैःनैवभुज्यते ॥ ९४ ॥ इत्युक्तोराजाआह । किमिति । पृथिवीक्षयकारकःपृथिवीस्थसर्वनृपनाशहेतुभूतःसर्वत्रअतिशंकीदोषशंकाशीलःमित्रध्रुक्मित्र-द्विट् नारायणपराङ्मुखःहरिसेवायांविमुखः ॥ ९५ ॥ नास्तिकःकृतघ्नःअतिशठःमहाधूर्तःकेवलंहरिसेवापराङ्मुखइतिनकिंत्विति चार्थः विष्णोःद्वेष्टातद्भवांतस्मिन्भवंती-तितद्भुवःतद्भक्ता इत्यर्थः । सविष्णुःभूःआश्रयोयेषांतेतथेतिवा तेषांद्वेष्टा अयंदुर्योधनःसर्वोत्तमंस्थानंकथंकेनप्रकारेणआप्तवान् ॥ ९६ ॥ परमेभागवतेधर्मेसंस्थिताः स्थिराःभ्रात्रादयोत्रकथंनदृश्यंते ॥९७॥ तेसंतोभ्रात्रादयःयत्रनिरयेपिवसंति मेमयातत्रैवस्थातव्यं अत्रापिस्वर्गेपिअनेनपापिना नस्थातव्यमित्याहेतिपूर्वेणसंबंधः॥९८॥कथं-

यादवाश्चेति पप्रच्छ देवास्ते च तमब्रुवन् ॥ किं ते तैः स्वकृतं कर्म भुज्यतेत्र न चापरैः ॥ ९४ ॥ इत्युक्त आह पापोयं पृथिवीक्षयकारकः ॥ सर्वातिशंकी मित्रध्रुङ् नारायणपराङ्मुखः ॥ ९५ ॥ नास्तिकोतिशठः क्रूरो द्वेष्टा विष्णोश्च तद्भुवाम् ॥ कथं दुर्योधनः स्थानं सर्वोत्तममवाप्तवान् ॥ ९६ ॥ कथं च सर्वधर्मज्ञा नारायणपरायणाः ॥ संस्थिताः परमे धर्मे दृश्यंतेत्र न मत्प्रियाः ॥ ९७ ॥ यत्र संतस्तु ते संति तत्र स्थातव्यमेव मे ॥ निरयेपि न चात्रापि त्वनेन सह पापिना ॥ ९८ ॥ अस्य वीरतमस्येदं धार्तराष्ट्रस्य युज्यते ॥ इत्युक्त्वा देवता दूतं स्वानां संदर्शनार्थिनः ॥ ९९ ॥ राज्ञः संप्रेषयामासुस्तत्संदर्शितवर्त्मना ॥ दुर्गंधेन सुकृच्छ्रेण तमसा प्रावृतेन च ॥ १०० ॥ गत्वैव कियतीं भूमिं तद्दुर्गंधासहो नृपः ॥ इच्छन्निवर्तनं तत्र स्वानां वाच इवाशृणोत् ॥ १०१ ॥ ॥ ७ ॥ ॥ ७ ॥

दुर्योधनःस्थानं सर्वोत्तममवाप्तवानित्यस्योत्तरमाहुरित्याह अस्यवीरतमस्येति । वीरतमस्येतिस्वर्गप्राप्तौहेतुगर्भविशेषणम् । धार्तराष्ट्रस्यइदंसर्वोत्तमंस्थानं युज्यतइतिदेवताराजा-नंप्रत्युक्त्वास्वानांभ्रात्रादीनां संदर्शनार्थिनःदर्शनशीलस्यराज्ञःदूतंसंप्रेषयामासुः । दर्शनार्थमितिशेषः । नृपः दुष्टःगंधोयस्मिन्सतथा तेनसुकृच्छ्रेणअतिकष्टस्वरूपेणतमसाअं-धकारेणआवृतेनव्याप्तेनतेनदूतेनसंदर्शितेनवर्त्मनामार्गेणकियतींभूमिंकिंचिन्मार्गमित्यर्थः । गत्वा सचासौदुर्गंधश्चेतितद्दुर्गंधःतंअसहःसोढुमशक्तःसन् निवर्तनंइच्छन्सन् तद्दुर्गंधस्थलेस्वानांस्वकीयानांवाचइववाक्यानीवअशृणोत् ॥ ९९ ॥ १०० ॥ १०१ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

किमशृणोदित्यतआह । क्षणमिति । तवसन्निधानस्यसामीप्यस्य बलात्नःवेदनानिरयभोगव्यथानमहतीअल्पमात्रंभवतीत्यर्थः । युधिष्ठिरःएतद्वचयितुंदेवैर्निर्मितवाक्यजा तंश्रुत्वा विशंकितःस्वभ्रात्रादयइतिशंकमानःअतएवदीनध्वनिःस्वलद्ध्वनिःसकेयूयमितिपप्रच्छ ॥ १०२ ॥ १०३ ॥ अमर्षणकोपेन अहंइतःदुर्गंधस्थानात् ॥ १०४ ॥ ईदृशंदुःखार्तंस्वजनंत्यक्त्वाकार्यंप्रयोजनम् ॥ १०५ ॥ ततःदूतगमनानंतरं अत्रदुर्गंधस्थानेयुधिष्ठिरेस्नेहवशात् तेषुइंद्रादिषुअत्रस्थलेदीनाःवाचःनाशृणोत् । दुर्गंधेनयुतंतमोपि नापश्यत् ॥ १०६ ॥ तदाइंद्राद्यागमनकाले अभ्रांतचेताःमोहरहितचित्तःसयुधिष्ठिरःएतत्पूर्वदृष्टस्थानं स्वर्गोत्तमंदेशंअपश्यत् । अत्रअस्मिन्समयेधर्मोयमःपुनःआत्मनःसद्य

क्षणं तिष्ठ महाराज सन्निधानबलात्तव ॥ वेदना नो न महतीत्येतच्छ्रुत्वा युधिष्ठिरः ॥ १०२ ॥ के यूयमिति पप्रच्छ दीन-ध्वनिविशंकितः ॥ भीमोहमर्जुनः कर्ण इत्याद्युक्तमिवाशृणोत् ॥ १०३ ॥ श्रुत्वा तत्कृपयाविष्टः शोकामर्षसमन्वितः ॥ आह दूतं यथेष्टं त्वं गच्छ नाहमितो व्रजे ॥ १०४ ॥ न च स्वर्गेण मे कार्यं त्यक्त्वा स्वजनमीदृशम् ॥ इत्युक्तः प्रय-यौ दूतस्तस्थावत्र युधिष्ठिरः ॥ १०५ ॥ ततोत्र देवाः पुरुहूतपूर्वकाः समाययुः स्नेहवशाद्युधिष्ठिरे ॥ तेष्वागतेष्वेव न तत्र वाचो दीना नदुर्गंधतमोप्यपश्यत् ॥ १०६ ॥ स्वर्गोत्तमं देशमपश्यदेतदभ्रांतचेताः स युधिष्ठिरस्तदा ॥ आहा-त्र धर्मः पुनरात्मसद्मशः प्रकाशयन्पांडुसुताभिधं स्वम् ॥ १०७ ॥ धर्माद्विशिष्टा हि सदा ऽनृशंसता दृष्टा च सा त्वय्यधिका त्रिशो मया ॥ शक्रोप्युवाचैनमिदं मृषा ते प्रदर्शितं द्रोणकृते मृषा गिरः ॥ १०८ ॥ ॥ ५ ॥

शःप्रकाशयन् पांडुसुतःयुधिष्ठिरइतिअभिधायस्यसतथा तंयुधिष्ठिरनामकंस्वं आत्मानंप्रत्याह ॥ १०७ ॥ किमिति । धर्मात्धर्मसमूहात् विशिष्टाउत्तमायाअनृशंसताकृ पालुतासदात्वयिवर्ततइतिशेषः । साअनृशंसतामयात्रिशःत्रिवारंत्वयिअधिकादृष्टायचेकःस्यान्नकुलोस्त्वितियक्षप्रश्नकालेएकवारम् । नारुहेयंविनाश्वानमित्यत्रएकवारम् । स्वानांवाचइवाशृणोत् श्रुत्वातत्कृपयाविष्टइत्येकवारम् । एवंत्रिवारंनकुलेशुनिस्वकीयेषुचअनृशंसतामयादृष्टेत्यर्थः । एनंयुधिष्ठिरंउवाच । किमिति । द्रोणकृतेद्रोणार्थं सत्यंब्रूहीत्युक्तवतोद्रोणस्य अश्वत्थामवधनिश्चयार्थंसत्यमेवेतिमृषागीर्वाग्यस्यासौमृषागीःतस्यतथा अनृतवाक्यस्यतेइदंअविद्यमानदुर्गंधादिकंमयाप्रदर्शितम् ॥ १०८ ॥

ननु कृष्णोक्तंवदतःअसत्यभाषित्वंकथमित्यतआह । कृच्छ्रादिति । इदंअश्वत्थामाहतइतिब्रूहीति कृष्णोक्तंकृच्छ्रात्त्वमयाअसत्यमुच्यतइतिकष्टादेवतेत्वयाकथितम् । अश्वत्थामाहतइत्युक्तं अतएवतत्कृष्णवाक्ये अतिविस्रंभःअतिविश्वासोनासीत् । वासुदेवस्याज्ञयासर्वविधर्मिणःसर्वश्रुतिस्मृतिपुराणानांविरुद्धाचरणशीलस्यकिंचित्पापंनभवेद्धीति श्रुत्यादौप्रसिद्धिः ॥ १०९ ॥ ननु अपरोक्षज्ञानानंतरं कृतपुण्यपापफलाभावात् धर्मजस्यैतज्जन्मकृतकृष्णवाक्याविस्रंभदोषलेपःकथंघटतइत्यतआह । ब्रह्मेति । ब्रह्मणः परब्रह्मणः अपरोक्षेपिअपरोक्षज्ञानसमयेपिविकर्म विरुद्धकर्मप्रारब्धस्यभोक्तुमुपक्रांतस्यपापस्यसूचकं फलसंपादननिमित्तभूतं तस्मात्युधिष्ठिरदृष्टदुर्गंधादिकं प्रारब्धपापफलमेव नतुकृष्णवाक्यविस्रंभदोषफलं किंतुकृष्णवाक्याविस्रंभदोषः प्रारब्धपापफलसूचकएवेत्यर्थः । तत्रदृष्टांतमाह । विषाशनमिति । विषाशनमित्युपलक्षणं जलाग्निशस्त्रपातादिकमपिग्राह्यम् । प्रारब्धपापफलात् म्रियमाणस्यविषाशनंविषभक्षणंयथाप्रारब्धफलसूचकंभवति तद्वदपरोक्षज्ञानानंतरंकृतदोषोपि प्रारब्धसूचकएवेत्यर्थः । भ्रातरोमेक्वेतिपृष्टस्याप्युत्तरमाह । पश्चात्रेति । अत्रस्वर्गे ॥ ११० ॥ सुशुद्धानिशमदमादिभिःअतिशुद्धानिसंति हरिसमर्पणत्वेनोत्तमानि कर्माणियेषांतेतथा । तेषांपरब्रह्म

**कृच्छ्रादिदं ते कथितं न चातिविस्रंभ आसीत्तव कृष्णवाक्ये ॥ न त्वाज्ञया वासुदेवस्य किंचित्पापं भवेत्सर्वविधर्मिणोपि ॥ १०९ ॥ ब्रह्मापरोक्षेपि विकर्मसूचकं प्रारब्धपापस्य विषाशनं यथा ॥ पश्चात्र भीमप्रमुखान्मखस्थान् संपूज्यमानांस्त्रिदशैः सुरूपान् ॥ ११० ॥ कुतः परब्रह्मदृशां सुशुद्धसत्कर्मणां विष्णुपरायणानाम् ॥ परेण योगेन विसृष्टतन्वां दुःखं भवेद्देववराधिपानाम् ॥ १११ ॥ एते हि देवप्रवराः पृथिव्यां जाता भुवो भारजिहीर्षुमीशम् ॥ प्रतोष्य तद्भावितबुद्धिकर्मभिः पुनश्च तेनैव सहापिरे दिवम् ॥ ११२ ॥ न ते नृपाद्यापि हि मानुषो गतो भावस्ततो द्वेष्टि सुयोधनादीन् ॥ निमज्य तद्विष्णुपदोदकेत्र विसृज्य देहं भज देवभावम् ॥ ११३ ॥ सुयोधनाद्या यदिमे सुपापा आरब्धपुण्यक्षयमाप्य नित्ये ॥ निःशेषसौख्योज्झितनित्यदुःखेऽवशाः पतिष्यंत्यपुनर्निवृत्ताः ॥ ११४ ॥ ॥ ७ ॥**

दृशांब्रह्मज्ञानिनांपरब्रह्मापरोक्षेणपश्यतांवा । परेणयोगेनउत्तमध्यानेनविसृष्टतन्वांविसृष्टतनूनांत्यक्तदेहानांभीमादीनांकुतोदुःखंभवेत् । नभवेदित्यर्थः ॥ १११ ॥ एतेदेवप्रवराः वाय्वादयःपृथिव्यांजाताःभीमादिरूपेणावतीर्णाःसंतःभूम्याःभारंजिहीर्षुंसंहर्तुमिच्छंतंईशंतद्भावितबुद्धिकर्मभिःतस्मिन्नर्पितबुद्धिकर्मभिःप्रतोष्य पुनश्चअनंतरंतेनैवसह दिवंस्वर्गंआपिरे आपुः ॥ ११२ ॥ हेनृपअद्यापिइदानीमपि तेतवमानुषोभावःमनुष्यस्वभावःनगतः । ततःमनुष्यभावात् सुयोधनादीन्द्वेष्टिद्विषसे तत्तस्माद्विष्णुपदोदकेस्वर्गस्थमंदाकिन्यांनिमज्यस्नात्वा अत्रमंदाकिन्यांदेहंमनुष्यदेहंविसृज्यदेवभावंदेवत्वमितियावत् । भज ॥ ११३ ॥ कथंदुर्योधनः स्थानंसर्वोत्तममवाप्तवानित्युक्तस्योत्तरमाह । सुयोधनाद्याइति । यद्यस्मादिमेसुपापाः तत्तस्मादारब्धस्य भोक्तुमुपक्रांतस्य यज्ञदानादिपुण्यस्य क्षयंस्वर्गभोगेननाशंप्राप्यनिःशेषंयथास्यात्तथा सौख्येनउज्झितेरहिते नित्यदुःखे नित्यदुःखात्मके नित्येअंधेतमसिनपुनःनिवृत्तिर्येषांते अपुनर्निवृत्ताःअवशाःदुःखाधीनाः यद्वा अवशाःविष्ण्वधीनाःसंतःपतिष्यंति ॥ ११४ ॥ ॥ ७ ॥ ॥ ७ ॥

येदेवांशजाःलक्ष्मणप्रमुखाः तेकालेब्रह्मप्रलयेस्वमूलरूपंप्राप्य स्वतारतम्यानुसृतांस्वस्वतारम्यानुगुणां अत्रदैत्यानांतमःप्राप्तिविषये देवानांमुक्तिप्राप्तिविषये ॥ ११५ ॥ नंदेहंमनुष्यदेहं विसृज्यपरिज्यादैवंदेवसंबंधिनंकायंदेहम्। विसृष्टाःसंत्यक्ताःरोषादयःकोपादयःसमस्तदोषायेनसतथोक्तःबभौ ॥ ११६ ॥ स्वस्वमूलरूपाणांदेवानां अतिसमीपसंस्थंप्रपश्यन्सधर्मजःमरुतांगणस्यमध्येमरुतःश्रीमुख्यप्राणस्यसमीपेज्वलंतंप्रकाशमानम् ॥ ११७ ॥ तत्समीपेभीमसमीपेअन्याःदेवभार्या.समतीत्यअतिक्रम्य । यद्वा अन्याःपार्वत्याद्याःसमतीत्यनिःसार्य श्रियाकांत्याज्वलंतींकृष्णामपिददर्श । धर्मजःसंस्कारवशात् अन्याःसभातलस्थदेवभार्याःसमतीत्यउल्लंघ्य कृष्णांस्प्रष्टुंइयेषऐच्छदितिवायोजना । सुराधिराजःइंद्रःधर्मजं निषिध्यमास्पृशेतिनिषेधंकृत्वा प्राह ॥११८॥ निषिध्येत्युक्तंविवृणोति । एषाहीत्यादिना । एषाजगतांसज्जनानामित्यर्थः । प्रियस्यहित-

देवांशजा ये तु समस्तशस्ते स्वमूलरूपं समवाप्य काले ॥ स्वतारतम्यानुसृतां विमुक्तिं प्राप्स्यंति नात्रापि विचार्यमस्ति ॥ ११५ ॥ इत्युक्त आश्वेव निमज्य गंगां धर्मात्मजस्तत्र विसृज्य देहम् ॥ सद्यो बभौ दैवतमाप्यकायं विसृष्टरोषादिसमस्तदोषः ॥ ११६ ॥ स तु प्रपश्यन्स्वजनं समस्तं स्वमूलरूपातिसमीपसंस्थम् ॥ ददर्श भीमं च मरुत्समीपे मध्ये ज्वलंतं मरुतां गणस्य ॥ ११७ ॥ ददर्श कृष्णामपि तत्समीपे श्रिया ज्वलंतीं समतीत्य चान्याः ॥ स्प्रष्टुं च संस्कारवशादियेष निषिध्य तं प्राह सुराधिराजः ॥ ११८ ॥ एषा हि साक्षाज्जगतां प्रियस्य प्राणात्मनो जीववरेश्वरस्य ॥ प्राणप्रिया श्रीरिति नाम यस्याः शमात्मकेस्मिन् रमते सदैका ॥ ११९ ॥ युष्मच्चतुर्देहगतस्य वायोर्वायुप्रिया भीमतनोस्तथैव ॥ भोगाय सृष्टा पुरुषोत्तमेन युष्मत्प्रियार्थं भवतां च दारैः ॥ १२० ॥ प्रीतिस्ततो ह्यभ्यधिका बभूव भीमस्य चास्यास्तदनु स्म पार्थे ॥ ततो भवत्स्वेव यथाक्रमेण गुणानुसारेण समीरणस्य ॥ १२१ ॥ ॥

रूपस्यजीववराणांसरस्वत्यादीनांईश्वरस्यप्राणात्मनःश्रीमुख्यप्राणस्यसाक्षात्प्राणवत्प्रिया यस्याःवायुप्रियायाःश्रीरितिनामसैकाद्रौपदी शंसुखंआत्मस्वरूपंयस्यासौतथोक्तः । स्वार्थेकप्रत्ययः । तस्मिन्तथाअस्मिन्वायौसदारमते ॥ ११९ ॥ युष्माकंचतुर्णांभवदर्जुननकुलसहदेवाइतिचतुःसंख्याकानांदेहगतस्यदेहेप्रविष्टस्यतथैवभीमात्मनश्चवायोः भोगाययुष्मत्प्रियार्थं भवतांदारैःस्त्रीभिःसह । वायुप्रियाभारतीपुरुषोत्तमेनसृष्टा ॥ १२० ॥ ततःकारणादस्याःकृष्णायाःभीमस्यविषयेप्रीतिःअभ्यधिकाबभूव तदनुभीमानंतरं पार्थेततःपार्थानंतरं भवत्सुभवन्नकुलसहदेवेषुसमीरणस्यवायोःगुणानुसारेणविशेषावेशलक्षणगुणानुकूलेन यथाक्रमेण आवेशतारतम्यक्रमेण कृष्णायाःप्रीतिर्बभूवेतिसंबंधः । अनेन भीमादृते हिचतुर्षु पक्षपातस्तुवासवौ । योग्यएवेत्युक्तमुपपादितंभवति ॥ १२१ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

साभवनांदारैःसहस्त्रष्टासाकृष्णाइयंपुरास्थिताइदानीं शुद्धतनुःअन्यसंबंधरहिताप्रजाता हियस्मात्कारणात्शच्यादीनांयोगेनसंपर्केणअपगतारहिताअतएवाग्र्यदेहाभारतीस्त्व । रूपायूयंचसर्वैमरुतः विशेषसंयोगेनविशेषावेशेनहीनाःरहिताःस्वशरीरेषुस्वमूलरूपेषुसंस्थाः ॥ १२२ ॥ तस्मात्कारणादस्याःपवमानपत्न्याःस्पर्शेपिभवतांसुपूतताअतिपवि-त्रतानालं नपूर्णा । स्पर्शेप्यर्हत्वंनास्तीत्यर्थः । उत्तरत्रापिनभवेत् स्पर्शाधिकारइतिशेषः । तत्रदृष्टांतमाह । दिवौकसामिति । यथामानुपदेहिनःमनुष्यस्य । यद्वा मानुषः मनुष्यसंबंधीदेहोविद्यतेयस्येतिविग्रहः । मनुष्योत्पन्नदेवस्येत्यर्थः । दिवौकसांमूलरूपस्थदेवानांस्पर्शेनालंतथेत्यर्थः ॥ १२३ ॥ हरेःस्तनात्दक्षिणस्तनादुत्थः जातःस्वयं-धर्मःयमःइंद्रेणइतिईरितंप्रतिसन्निवृत्तंकृष्णास्पर्शेच्छानिवृत्तबुद्धिमित्यर्थः । युधिष्ठिरंमानुषवासनां मनुष्यसंस्कारंविनाशयन्सन्समाश्लिषत्सधर्मजःशुद्धतनुःसन् मनुष्य संस्काररहितइत्यर्थः । तत्समःयमसदृशः अभवत् ॥ १२४ ॥ स्वमूलरूपैःसहैवधामानिस्थानानिविविशुः तत्रधाम्नितत:मूलरूपादपि अनूनाःन्यूनरहिताःसमाइतियावत्

इयं हि सा शुद्धतनुः प्रजाता शच्यादियोगापगताग्र्यदेहा ॥ यूयं च सर्वे मरुतो विशेषसंयोगहीनाः स्वशरीरसंस्थाः॥ १२२ ॥
स्पर्शेपि नास्याः पवमानपत्न्याः सुपूततालं भवतामिदानीम् ॥ न चोत्तरत्रापि भवेत्कथंचिद्दिवौकसां मानुपदेहिनो यथा॥ १२३ ॥
इतीरितं तं प्रतिसन्निवृत्तं विनाशयन्मानुषवासनां स्वयम्॥समाश्लिषच्छुद्धतनुः स्तनोत्थो धर्मो हरेः सोभवदाशु तत्समः॥ १२४॥
ततस्तु पार्था अखिलाः स्वमूलरूपैः सहैवाविविशुर्मुदान्विताः॥स्वीयानि सद्मानि ततोप्यनूनभोगाः सदारा न्यवसंश्च तत्र॥ १२५॥
तत्रापि कृष्णेन समागमोभूत्पुरेव तेषामपि तत्पराणाम् ॥ चिक्रीड एभिः सहितस्तथैव कृष्णोपि तद्वत्सरथोर्जुनेन ॥ १२६॥ अ-न्ये तु देवांशभवाः समस्ताः स्वमूलरूपैक्यमवापुराशु॥ कर्मक्षयादेव सुरेतरास्तु पुण्यक्षयं प्राप्य भुवि प्रजाताः ॥ १२७ ॥ चतुः सहस्रं त्रिशतोत्तरं ते संवत्सराणामनुभूय दिव्यान् ॥ भोगान्नरत्वेपि सदेश्वरोहमसज्जगच्चेतिधियाप्नुवंस्तमः ॥ १२८ ॥ ७ ॥

भोगायेषांतेतथा न्यवसन् ॥ १२५ ॥ स्वस्वमूलरूपंप्राप्य भीमादिरूपेणकृष्णंभजंतीत्याह । तत्रेति । तत्रापिस्वर्गेपिसएवकृष्णएवपरोयेषांतेतत्पराःतेषां तथातेषामपिभी-मादीनामपिपुरेवस्वर्गप्राप्तेःप्रागिवयथातथेतिशेषः कृष्णेनसमागमोभूत् । कृष्णःतथैवएभिःपार्थैःसहितश्चिक्रीडे सरथोपिकृष्णःतद्वत्पूर्ववत्अर्जुनेनचिक्रीडे ॥ १२६ ॥ देवांशभवाःदेवावताराः अन्येद्रोणाद्याःकर्मक्षयादेव प्रारब्धकर्मक्षयादेव स्वमूलरूपैक्यंअवापुः । तेसुरेतराःदुर्योधनाद्याअसुराः ॥ १२७ ॥ संवत्सराणांत्रिशतैरुत्तरं अधिकं-चतुःसहस्रं कलियुगापेक्षयात्रिशताधिकचतुःसहस्राब्दपर्यंतंदिव्यान् भोगाननुभूयपुण्यक्षयंप्राप्य स्वर्गभोगादितिशेषः । भुविप्रजाताः । नरत्वेपिमनुष्यस्वरूपेपि अहंईश्वरः जगदसत् मिथ्याइतिसदानित्ययास्वरूपभूतयेतियावत् धियाज्ञानेनतमः अवापुवन् ॥ १२८ ॥ ॥ ॥ ॥ ॥ ॥ ॥

इहतमसितेषामसुराणांदुःखेपितारतम्यमस्तीतिशेषः । इहतमसिअखिलाद्दैत्यसंघात् कलेःपरंपूर्णमित्यर्थः । दुःखम् । तत्रदृष्टांतमाह । यथेति । तथाहरिद्वेषकृतःसर्वाधिक्येने-तिशेषः । पुरुषस्यविशेषःदुःखविशेषः ॥ १२९ ॥ नरत्वेपीत्युक्त्यासर्वेषांनरत्वप्राप्तिशंकांनिराकरोति । केचिदिति । तस्मिन्विष्णौपरास्तात्पर्यवंतः भक्ताइत्यर्थः । तेषांतथा देवाःस्वकालेस्वरूपयोग्यतापूर्तिकाले समाप्नुयुरित्युभयत्रसंबध्यते ॥ १३० ॥ सभीमःभीमरूपेणकृष्णेनसह यःक्रीडतिसएवेत्यर्थः । एतदेवतृतीयाध्यायेपि भैमीतनुर्मरुत-आहकथाःपरस्येत्याचार्यैरुक्तम् । पुनःक्षत्रजात्यवतारानंतरं कलौपृथिव्यांकर्मभुविविप्रतनुःब्राह्मणरूपःजातःसन् दैत्यैःबौद्धादिदुर्वादिभिः निगूढंनिर्गुणत्वादिकयुक्त्या गूहितं हरितत्त्वंहरिस्वरूपमाह । हरिभक्तेभ्यइतिशेषः ॥१३१॥ तदाभीमस्यविप्रावतारकाले कृष्णापिभुविप्रजातासती हरेःप्रीत्यैमहासुरानंधेतमसिअपातयत् । विष्णुपरास्तेसर्वे-अर्जुनाद्याः । कृतेवैवस्वतमन्वंतरापेक्षया एकोनत्रिंशत्कृतयुगेहरितोषणायप्रजाताः पुनःस्थानंस्वर्गंअवाप्य परांतेब्रह्मप्रलयेस्वीयांस्वयोग्यांविमुक्तिंआप्नुयुः प्राप्स्यंति

दुःखेपि तेषामिह तारतम्यं कलेः परं दुःखमिहाखिलाच्च ॥ यथा विरिंचस्य वरं सुखं स्यान्मुक्तौ हरिद्वेषकृतो विशेषः ॥ १२९ ॥ केचित्पिशाचासुरराक्षसत्त्वमवाप्य विष्णोरपि तत्पराणाम् ॥ द्वेषात्तमोंधं त्वरया समाप्नुयुर्देवाः स्वकाले निजयोग्यमुक्तिम् ॥ १३० ॥ चतुःसहस्रे त्रिशतोत्तरे गते संवत्सराणां तु कलौ पृथिव्याम् ॥ जातः पुनर्विप्रतनुः स भीमो दैत्यैर्निगूढं हरितत्त्वमाह ॥ १३१ ॥ तदैव कृष्णापि भुवि प्रजाता प्रीत्यै हरेरंधतमस्यपातयत् ॥ महासुरान्विष्णुपरार्जुनाद्याः कृते प्रजाता हरितोषणाय ॥ पुनश्च ते स्थानमवाप्य सर्वे स्वीयां परां ते तु विमुक्तिमाप्नुयुः ॥१३२ ॥ वायुत्वमाप्तः स हनूमदंशो ब्राह्मं पदं प्राप्य वृकोदरश्च ॥ वागीश्वरत्वं गतयैव कृष्णया सहैव मुक्तिं गमिताखिलोत्तमाम् ॥ १३३ ॥ भुवि द्युलोके च विरिंचतायां मुक्तौ च ताभ्यामधिकं समस्तात् ॥ संतोष्यते पूर्णगुणो रमेशः सदैव नित्योर्जिततद्रतिभ्याम् ॥ १३४ ॥ भूषन्नयेधिवभ्रूपुनम्रते बळित्थातद्वपुषेधायिदर्शतम् ॥ तां सुते कीर्तिं मघवन्महित्वेत्यादिसूक्तानि च तत्प्रमाणम् ॥ १३५ ॥ ॥ ७ ॥ ॥ ७ ॥॥ १३२ ॥ हनूमतः

अंशेनसहितःसहनूमदंशःहनूमान्भीमेऐक्यंप्राप्येतिभावः । वृकोदरःवायुत्वंवायुस्वरूपंप्राप्तःसन् ब्राह्मंब्रह्मसंबंधिपदंस्थानंप्राप्य उत्तरकल्पइतिशेषः । वागीश्वरत्वंसरस्वतीरूपंगतयाप्राप्तयाकृष्णयाभारत्यैक्यंप्राप्तयाकृष्णयेत्यर्थः । सहैवअखिलेभ्योजीवगणेभ्यः उत्तमांअधिकानंदवतीं सायुज्यमित्यर्थः ॥ १३३ ॥ भुविहनुमदाद्यवतारावस्थायां द्युलोकेवायुत्वभारतीत्वावस्थायां विरिंचस्यभावः विरिंचता तस्यांतथाब्रह्मत्वेमुक्तौचतस्मिन्हरौरतिःप्रीतिःतद्रतिःनित्याअविच्छिन्नाऊर्जिताउत्कृष्टातद्रतिर्ययोस्तौतथा ताभ्यांभारतीवायुभ्यांरमेशःसदैवसमस्तात् जीवसंघातअधिकंयथाभवतितथा संतोष्यते॥१३४॥भूषन्नयेधीत्युदाहृतसूक्तत्रयादीनि तस्मिन्नुक्तार्थविषये प्रमाणानि॥१३५॥

पंचरात्रेउक्तिभिःव्यासोदितोक्तिभिः । पुराणैःपौराणवाक्यैःसहितानिअन्यानिवैदिकानिवाक्यानिचउक्तार्थैप्रमाणानीत्यर्थः । अत्रचअस्मिन्नेवार्थेयुधिष्ठिरेणपृष्टोभीष्मःन-
युधिष्ठिरपृष्टप्रमेयं मोक्षधर्मैष्वपिएवंउक्तार्थानुकूलेन किंचित्समासेनाह॥ १ ३ ६ ॥प्रकृतमनुसरति प्रयातेष्वित्यादिना । तेषांपार्थानांअन्वयेवंशेउत्थाःउत्पन्नाःव्यासेनअनुशिष्टा
शिक्षिताः ॥ १ ३ ७ ॥ व्यासप्रसादाद्भारतादिशास्त्राणि शृण्वद्भिःअतएवाशेषविद्भिःसकलज्ञैः तैःपरीक्षिताद्यैःक्षेमकांतैरिह भूमौकलौचकलियुगेपिज्ञानं सुत्रातंसम्यग्रक्षितंअ-
तएवसर्वधर्मः पूर्वपार्थैःपालितोधर्मःनाशंनागात् । ज्ञानंचसूत्रार्थमगादितिक्वचित्पाठः ॥ १ ३ ८ ॥ सहस्रकेगतेसतिकलियुगइतिशेषः सत्सुविद्यांतत्वविद्यांप्राप्तेषुसत्सु त्रिपुरघ्न-
तात्रिपुरनाशकेनरुद्रेणयेअसुराःदग्धाःतेजाताः ॥ १ ३ ९ ॥ सज्ज्ञानस्यमहानिधानेमुख्याश्रयेव्यासे अदर्शनंप्रयातेसत्यपितैरपिअसुरैरपितस्यव्यासस्यसंप्रदायात् सुतत्वविद्याअ-

अन्यानि वाक्यानि च वैदिकानि सपंचरात्रोक्तिपुराणकानि ॥ पृष्टश्च भीष्मोत्र युधिष्ठिरेण तन्मोक्षधर्मैष्वपि किंचिदाह ॥ १३६ ॥
एवं प्रयातेषु स केशवेषु स्वानेव लोकान्यदुपांडवेषु ॥ परीक्षिताद्यास्तु तदन्वयोत्था व्यासानुशिष्टाः पृथिवीमरक्षन् ॥ १३७ ॥ तैः
क्षेमकांतैरिह भारतादिशास्त्राणि शृण्वद्भिरशेषविद्भिः ॥ व्यासप्रसादाच्च कलौ च धर्मो ज्ञानं च सुत्रातमगान्न नाशम् ॥ १३८ ॥
संवत्सराणां च सहस्रके गते प्राप्तेषु विद्यामखिलेषु सत्सु ॥ दग्धाः पुरा ये त्रिपुरघ्नतैव रुद्रेण जाताः पृथिवीतले ते ॥ १३९ ॥
अदर्शनं सर्वमुनींद्रवंदैः सहैव सज्ज्ञानमहानिधाने ॥ व्यासे प्रयातेपि सुतत्त्वविद्या तत्संप्रदायादपि तैरवाप्ता ॥ १४० ॥ उ-
त्सादितत्वात्तु दुरागमानां तत्संप्रदायस्य च नाशितत्वात् ॥ प्रसारितत्वाच्च सदागमानां पापा अपि ज्ञानमवापुरेतत् ॥ १४१ ॥
शुनापुरोडाशमिवावलीढं वेदश्रुतिं चांत्यजनैरवाप्ताम् ॥ अनंतदुःखाप्तिसुयोग्यदैत्यैर्विद्यामवाप्तां तु न सेहिरे सुराः ॥ १४२ ॥
नावाग्गतिः क्वापि सुवेदिनां भवेत्प्राप्यं सुखं नित्यमवश्यमेभिः ॥ प्राप्यं तमोंधं त्वसुरैर्न मुक्तिः कदाचिदप्येतदचिंतयन्सुराः ॥ १४३ ॥

वाप्ता ॥ १४० ॥ असुराणांतत्वविद्याप्राप्तिविषयेहेतुत्रयंदर्शयति । उत्सादितत्वादिति । दुरागमाःपाशुपतादयः । तत्संप्रदायःदुरागमसंप्रदायः । सदागमाःपंचरात्राद्यागमाःते-
षांप्रसारितत्वात्विस्तारितत्वात् एतत्तत्त्वज्ञानम् ॥ १४१ ॥ शुनासारमेयेन अवलीढंआस्वादितंपुरोडाशमिव । अंत्यजनैःचंडालैःवेदश्रुतिंवेदश्रवणंअवाप्तांचयथासंतोनसहं-
तेतथासुराः अनंतंअवधिरहितंदुःखंयस्मिन्ततअनंतदुःखं अंधंतमःतत्प्राप्तौसुतरांयोग्यैर्दैत्यैः अवाप्तांविद्यांनसेहिरे ॥ १४२ ॥ तर्हिकिंचक्रुरित्यतआह । नावाग्गतिरिति ।
सुराःएतदचिंतयन् अमंत्रयन् एतत्किंसुवेदिनांसम्यग्ज्ञानिनां क्वापिअवाग्गतिःअधोगतिर्नभवेत् । तमःप्राप्तिर्नस्यादित्यर्थः । एभिःसुवेदिभिःनित्यंसुखंमोक्षः अवश्यंनिश्चयेन-
प्राप्यं असुरैःअंधंतमःप्राप्यं मुक्तिःकदाचिन्नप्राप्या इत्येतदचिंतयन् ॥ १४३ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

विष्णुनासतांज्ञानप्रदानायतेभ्यःसद्भ्यःअन्येअसंतःतेषांज्ञानप्रणाशाय एतेसुराःकूर्माःनिर्मिताःयस्मात्ततःकारणात् विरिंचशर्वाभ्यांसहितास्तेसुराःविष्णुंउपेत्यप्राप्यविज्ञापयामासुः ॥ १४४ ॥ निष्ठितैःसंस्थितैःसुरैःसुष्टुतिभिः उत्तमस्तोत्रैरभिष्टुतःपुरुभिःश्रेष्ठैर्ब्रह्मादिभिस्तुतत्वात् पुरुष्टुतनामारमापतिःतेषांदेवानांचारुतराअतिरमणीया आकृतिर्यस्यसतथाशिशुरभूत् ॥ १४५ ॥ त्रैपुराणांत्रिपुरसंबंध्यसुराणां यःप्रथमःआद्यःसोत्रभूमौजातःसन्शुद्धोदनेतिशुद्धोदननाम्नाजिनेतिचजिनेतिनाम्नाचउक्तःजनैरितिशेषः । अस्यशुद्धोदनेतिजिनेतिनाम्नः गयाख्येगयानाम्निक्षेत्रे भार्यायांगयाख्यक्षेत्रविशेषेवा प्रजातंशिशुंदूरेसंप्रास्यक्षिप्त्वाविष्णुर्बभूव शिशुरूपइतिशेषः ॥ १४६ ॥ गतंक्षिप्तंतंस्वशिशुंअजानमानाः जिनादयःशिशुंशिशुरूपिणंहरिंवीक्ष्य निजंशिशुमित्यर्थः । मेनिरे । तदाकेशवःतेषांजिनादीनांवैदिककर्मजातकर्मादिवेदोक्तकर्मवीक्ष्य तद्वपुषैवशिशु-

ज्ञानप्रदानाय सतां तदन्यज्ञानप्रणाशाय च विष्णुनैते ॥ कूर्मास्ततस्ते सविरिंचशर्वा विज्ञापयामासुरुपेत्य विष्णुम् ॥ १४४ ॥ क्षीरोदधेरुत्तरतीरनिष्ठितैरभिष्टुतः सुष्टुतिभिः पुरुष्टुतः ॥ प्रदाय तेषामभयं रमापतिः क्षणादभूच्चारुतमाकृतिः शिशुः ॥ १४५ ॥ यस्त्रैपुराणां प्रथमोत्र जातः शुद्धोदनेत्येव जिनेति चोक्तः ॥ क्षेत्रे गयाख्येस्य शिशुं प्रजातं संप्रास्य दूरेत्र बभूव विष्णुः ॥ १४६ ॥ अजानमानाः स्वशिशुं गतं तं शिशुं हरिं वीक्ष्य निजं स्म मेनिरे ॥ तेषां तदा वैदिककर्म वीक्ष्य संप्राहसत्तद्वपुषैव केशवः ॥ १४७ ॥ तं जातमात्रं प्रहसंतमीक्ष्य सुविस्मितैः पृष्ट उवाच विष्णुः ॥ बुद्धोहमित्येव सुनित्यबोधाज्जगाद चैषामथ बुद्धदर्शनम् ॥ १४८ ॥ तथाप्यविश्वासमवेक्ष्य तेषां सस्मार देवानखिलान् जनार्दनः ॥ विज्ञायते तस्य मनोगतं निजान्प्रचिक्षिपुर्हेतिगणानमुष्मिन् ॥ १४९ ॥ स जातमात्रः शिवपूर्वकाणां शूलादिहेतीरखिला निगीर्य ॥ दैत्यातिमोहाय निजं च चक्रं स्वमुक्तमाश्वेव वशी समग्रहीत् ॥ १५० ॥ ॥

स्वरूपेणैवसंप्राहसत् उच्चैर्जहास ॥ १४७ ॥ त्वंकइतिपृष्टउवाच । किमिति । सुनित्यबोधात् सुष्ठुनित्यज्ञानरूपत्वात् अहंबुद्धएवेति । तेषांजिनादीनांबुद्धदर्शनंबुद्धशास्त्रंजगाद ॥ १४८ ॥ तथापिशिशुस्वरूपेणआत्मनाबुद्धशास्त्रेउदितेसत्यपितेषांजिनादीनां अविश्वासंस्वप्रणीतशास्त्रेअविश्वासंअवेक्ष्य देवान्सस्मार योद्धुमितिशेषः । तेदेवाःतस्यजनार्दनस्यमनोगतंमनोभीष्टंविज्ञाय निजान्हेतीनांआयुधानांगणान्समूहान् अमुष्मिन्बालरूपेविष्णौप्रचिक्षिपुः । स्वायुधैर्जघ्नुरितिभावः ॥ १४९ ॥ जातएवजातमात्रःतात्कालिकशिशुरित्यर्थः । बुद्धःनिखिलाःशूलादिहेतीः त्रिशूलाद्यायुधानिनिगीर्य भक्षयित्वा दैत्यानांअतिमोहायविष्णोःसकाशात्बुद्धःश्रेष्ठइतिमोहार्थं स्वमुक्तंस्वस्वरूपेणविष्णुनामुक्तंनिजंचक्रंसुदर्शनंआश्वेवसमग्रहीत् यतोवशी ॥ १५० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तच्चक्रंतस्मिन्चक्रेसमास्थितंउपविष्टंदैत्याःतस्यबुद्धस्यवचांसिबुद्धशास्त्रप्रणीतवाक्यानिस्वीचक्रुः । प्रमाणत्वेनेतिशेषः ॥१५१॥ समस्तंजगत्क्षणिकंज्ञानंनसत् उपलक्षणमे तत्। शून्यंअभावइतिचदृढंस्मरंतःध्यायंतःसंतःअधंतम.जग्मु ॥१५२॥नारायणःबुद्धरूपःसुरेंद्रवृंदंआप्य तेषांदेवानांअखिलंवृत्तंस्वकृतवृत्तांतंनिगद्यउक्त्वा तैर्देवैःपृष्टःबुद्धशास्त्राभिप्रायपृष्टःसन् सृतेःसंसारस्यबंधस्यमोचनंनाशकंनिजंहृदिस्थंबौद्धागमस्यार्थंस्वाभिप्रेतार्थमित्यर्थः । आह॥१५३॥क्षणिकशब्दार्थमाह । क्षणादयइति । तद्विशेषाःकालस्यसाक्षीसिद्धत्वेनातिसंनिहितत्वादित्यनेनकालपरामर्शःक्षणादयःक्षणलवनिमेषादयःक्षणिकाःआशुतरविनाशिनः निसर्गतःस्वभावतःयतःप्रयांतिनश्यंति अतःकालविशेषस्यआशुतरविनाशित्वात्स्थिरत्वेपिसोयंघटइतिप्रत्यभिज्ञया सकलपदार्थस्यआशुतरविनाशित्वाभावेपि विशेषसंश्रयात् क्षणादिकालसंबंधात् मयासमस्तंशतेपंचाशन्न्यायेन क्षणस्थायिक्षणेतिष्ठतीतिक्षणस्थायीत्युक्तम् ॥१५४॥ ननु विशेषविशेषिणोर्भेदोवाच्यःभेदस्यापिविशेषिणाभेदोवाच्यः एवंसतिभेदपरंपरयाअनवस्थास्यादित्यतआह । तद्वा-

तदासनत्वेन विधाय तस्मिन् समास्थितं देवगणाः प्रणम्य ॥ जग्मुः स्वधामानि वचांसि चास्य स्वीचक्रुराश्वेव जिनादिदैत्याः ॥ १५१ ॥ ते ज्ञानधर्मावपहाय पापा विमोहिता देववरेण सर्वे ॥ जग्मुस्तमोंधं क्षणिकं समस्तं ज्ञानं न सच्चेति दृढं स्मरंतः ॥ १५२ ॥ नारायणः प्राप्य सुरेंद्रवृंदं वृत्तं च तेषामखिलं निगद्य ॥ पृष्टश्च तैराह निजं हृदिस्थं बौद्धागमार्थं सृतिबंधमोचनम् ॥१५३॥क्षणादयः क्षणिकास्तद्विशेषा यतः प्रयांत्येव निसर्गतोखिलाः॥ ततः स्थिरत्वेपि विशेषसंश्रयादुक्तं क्षणस्थायि मया समस्तम् ॥ १५४ ॥ तद्वान्विशेषश्च यतो न भिन्नौ सदा स्वनिर्वाहकशक्तियुक्तौ ॥ अतः क्षणस्थायि समस्तमेतत्स्थिरात्मकं चेति हि नास्ति भेदः ॥ १५५ ॥ ज्ञोहं सदैकः परमो मयैतत्सदाननीयं च यतोस्वतंत्रम् ॥ ज्ञानात्मकं विश्वमतो मयोक्तं जडस्वरूपं च किमु स्म चेतनम् ॥ १५६ ॥७॥

निति । तद्वान्विशेषसंबंधवान् विशेषश्चयतोनभिन्नौ अतोभेदपरंपरयानानवस्थेतिभावः । ननु विशेषःविशेषवान् अनयोःपर्यायत्वंस्यादित्यतआह स्वनिर्वाहकेति । सदासर्वकालंस्वनिर्वाहकशक्तियुक्तौअभेदेपिभेदव्यवहारनिर्वाहकशक्तियुक्तौ । अनेनविशेषस्यस्वरूपमुक्तंभवति । अतःस्थिरात्मकस्यापिऔपचारेणक्षणिकत्वादेवतत्समस्तंविश्वंक्षणस्थायिस्थिरात्मकंचेति अनयोर्भेदःभिद्यतइतिभेदोविरोधोनास्ति ॥ १५५ ॥ ज्ञानात्मकंविश्वमित्युक्तं तत्रचेतनस्यचिदात्मकत्वंप्रसिद्धमित्यभिप्रेत्य जडस्यचिदात्मकतामाह । ज्ञइति । सदासर्वकालेएकःमुख्यतयापरमःउत्कृष्टःज्ञःज्ञातायतः अस्वतंत्रंएतद्विश्वंमयाज्ञेनअननीयंचेष्टनीयंयतःअतःजडस्वरूपंजडात्मकंविश्वंचापिज्ञानात्मकंमयाउक्तं चेतनस्यज्ञानात्मकत्वस्यसर्वसिद्धत्वाच्चेतनंकिमुस्म ज्ञानात्मकमितिकिमुवक्तव्यमित्यर्थः । एतेनज्ञेनअनीतिचेष्टते आत्मास्वरूपंयस्येतिविग्रहः ॥ १५६ ॥

ननु त्वयाचेष्टनीयंविश्वंकथंशून्यमित्यतःशून्यशब्दार्थमाह । शंशीलकइति । अहंशंशीलकःसुखस्वभावःउच्चश्चउत्तमश्चयतःअतःशूनामकःशूइतिनामयस्यसतथा । शंशीलकत्वाच्छुःउच्चत्वात्ऊःशुश्चासावूश्चेति शूइतिविग्रहः । यतोमयाशूनाम्नातद्विश्वंनिधेयंस्थापनीयं हियस्मात्तस्मात्शून्याभिधंशून्यनामकंमयाउक्तमितिशेषः । श्वानीयतइतिशून्यमितिविग्रहः । असच्छब्दार्थमाह । दोषेति । दोषविरुद्धरूपःदोषविरुद्धसद्गुणस्वरूपत्वादित्यर्थः । दोषोज्झितत्वात् अखिलाज्जगतःअन्यस्तुअन्यत्वाच्च अनामा अइतिनामयस्यसतथोक्तः । अशब्दस्यतद्विरुद्धतदभावतदन्यवाचकत्व तुअहंचदोषविरुद्धःदोषोज्झितःअखिलादन्यःअतःअनामाइतिभावः ॥ १५७ ॥ अइत्यस्य एनेति तृतीयैकवचनम् । एन अनाम्नासार्धमेवसंहार्यमेव । यतःअतःअसदेवेतिनामविश्वस्येतिशेषः । एनसीदतिनश्यतीत्यसदितिविग्रहः । अभावशब्दार्थमाह । अभावइति । एनैव अनाम्नैवभवेत् । उत्पद्यतेयस्मात्तस्मादभावः । अभावशब्दवाच्यः आद्भवतीतिअभावइतिविग्रहः । इदंसमस्तंजडचेतनात्मकंविश्वमित्यर्थः । क्षणिकंइदंसमस्तंशून्यंइदंअभावः

**शंशीलकोहं यत एव चोच्चः शूनामकस्तद्धि मया निधेयम् ॥ शून्याभिधं दोषविरुद्धरूपो दोषोज्झितोन्यस्त्वखिलादनामा ॥ १५७॥ एनैव सार्धं त्वसदेव नामतस्त्वभाव एनैव भवेद्यतस्तत् ॥ इत्यादि बोद्धव्यमिदं समस्तं मयोदितं क्वापि न हेयमस्ति ॥ १५८ ॥ इत्यादि देवान्प्रतिबोधयंश्च देवैः स होवास स बुद्धदेवः ॥ गत्वा स्वधामाप्यपरेण रूपेणास्ते पृथक् चैकतनुर्यथेष्टम् ॥ १५९ ॥ ततस्तु बुद्धोदितपक्षसंस्थो जिनोपि चक्रे मतमन्यदेव ॥ बौद्धेन जैनेन मतेन चैवं दैत्यांशकाः प्रीतिमगुः समस्ताः ॥ १६० ॥ प्रशांतविद्येत्यभिधं तथान्यद्बुद्धोक्तशास्त्रं त्रिदशा अवाप्य ॥ तेषं यदुर्वेदसमस्तसारं यामाश्रितानामचिरेण मुक्तिः ॥ १६१ ॥ अन्ये मनुष्या अपि भारताद्यं सत्संप्रदायं परिगृह्य विष्णुम् ॥ यजंत आपुः परमां गतिं तन्न सेहिरे क्रोधवशादिदैत्याः ॥ १६२ ॥ ॥ ७ ॥ ॥ ७ ॥**

इदंअसत् इदंज्ञानंइत्यादि । एवमुक्तार्थविशिष्टं मयोदितमितिबोद्धव्यं नप्रतीतार्थइतिभावः । मयोक्तंहेयंअग्राह्यत्वेनत्याज्यंक्वापिकिंचिदपिनास्ति ॥ १५८ ॥ अपरेणरूपेणस्वधामवैकुंठंगत्वा पृथक्बुद्धरूपःसन् एकतनुश्चमूलरूपेणएकीभूत सन् यथेष्टंइच्छानुसारेणआस्ते ॥ १५९ ॥ बुद्धोदितपथाप्रतीयमानार्थप्रतिपादकबुद्धोक्तशास्त्रेसंस्थःनिष्ठः । अन्यत् भगवदभिप्रेतार्थमतात् अन्यत् प्रतीयमानार्थपरमितिभावः । मतंचक्रे । बुद्धोदितत्वाद्बौद्धं जिनकृतत्वाज्जैनं तदाख्येनमतेनअगुःआपुः ॥ १६० ॥ तथाप्रशांतविद्याइत्यभिधानामयस्यतत् अन्यत् जिनेनाभिप्रेतार्थमतादन्यत बुद्धेनबुद्धदेवेनोक्तंशास्त्रंअवाप्यतेषंययुः । कथंभूतंशास्त्रं वेदानांसमस्तःसंपूर्णःसारःमुख्यार्थोयस्मिन्नतत्तथा । यांप्रशांतविद्याम् ॥ १६१ ॥ अन्येपिदेवेभ्योन्येपिमुक्तियोग्याअपीत्यर्थः । मनुष्याःमनुष्योत्तमाःसतांसंप्रदायंसंप्रदायार्थोपेतमित्यर्थः । भारतादिशास्त्रं परिगृह्यस्वीकृत्यक्रोधवशाःमर्णिमत्पूर्वकक्रोधतंत्रकगणाःतएवआदयोयेषांतेतथा तेचतेदैत्याश्चतथातद्भारतादिशास्त्रप्रवर्तनम् ॥ १६२ ॥ ॥ ७ ॥ ॥ ७ ॥

अस्माच्छिवात् जगतः विमोहनार्थं ऊर्जितां महतीं शक्तिं कुतर्कैः तर्काभासैः अभिधां जीवपरमात्मनोः जीवानां च परस्परं ऐक्यं वदंतः मोहनं मोहकशास्त्रमित्यर्थः ॥ १६३ ॥ तेषां क्रोधवशादिदैत्यानां प्रपाताय अंधे तमसीति शेषः । अत्र श्रीमन्महाभारततात्पर्यनिर्णयाख्यग्रंथे अस्मिन्नध्याये वा जातः पुनर्विप्रतनुः स भीमो दैत्यैर्निगूढं हरितत्त्वमाहेति भीमस्य यज्जन्मोक्तं तज्जन्म आसेत्यर्थः । क्रोधवशादिभिः मोहकशास्त्रप्रवर्तने कृते सतीति शेषः । यथा स्कंद एव षण्मुखः तथापि कृष्णाज्जाते जांबवतीपुत्रः सांबः षण्मुखांशः । तथा भीमः वायुत्वमपि प्राप्य पुनः पृथक् भीमरूपेण यः आस्ते तदंशो मध्व इत्यर्थः । दुर्गा पयस्विनीतीरे पुनः विप्रकुले जाता सती असुराणां व्रातं समूहं हनिष्यती ॥ १६४ ॥ ततः दुर्गावतारानंतरं कलेः कलियुगस्य अंतं समाप्तिं अवाप्य लोके सज्जने धर्मज्ञानादिकल्याणगुणैर्हरिभक्त्याद्युत्तमगुणैः प्रहीने नष्टे सति ॥ १६५ ॥ तैर्देवैः भवाय अवताराय अर्थितः लोकस्य सज्जनस्य भवाय धर्मज्ञानादिसंपदे शंफलाख्ये ग्रामे विष्णुयश इति अभिधा नाम यस्य तस्य गृहे धर्मपत्न्यां आविः प्रकटो बभूव ॥ १६६ ॥ अवतीर्णस्य हरेर्नामनिरुक्तिपूर्वकमाह । कलेरिति । कलेः कलिनाम्नो-

शैवं तपस्ते विपुलं विधाय जगद्विमोहोर्जितशक्तिमस्मात् ॥ प्राप्य प्रजाता भुवि मोहनं च चक्रुः कुतर्कैरभिधां वदंतः ॥ १६३ ॥ तेषां प्रपाताय सतां विमुक्त्यै जन्मास भीमस्य यदुक्तमत्र ॥ दुर्गा पुनर्विप्रकुलेऽवतीर्णा हनिष्यति व्रातमथासुराणाम् ॥ १६४ ॥ ततः कलेरंतमवाप्य धर्मज्ञानादिकल्याणगुणप्रहीने ॥ लोके विरिंचत्रिपुरघ्नशक्रपूर्वाः पयोब्धिं त्रिदशाः प्रजग्मुः ॥ १६५ ॥ नारायणस्तैस्तु हि पूर्वमर्थितो भवाय लोकस्य स शंफलाख्ये ॥ ग्रामे मुनेर्विष्णुयशोभिधस्य गृहे बभूवाविरचिंत्यशक्तिः ॥ १६६ ॥ कलेस्तु कात्कारत एव कल्की ज्ञानं कलं कं सुखमेव तद्वान् ॥ कल्कीति वा तेन समस्तदस्युविनाशनं तेन दिनाद्व्यधायि ॥ १६७ ॥ अधर्मवृत्तं विमुखं हरेश्च निहत्य निःशेषजनं तुरंगी ॥ संस्थापयामास स धर्मकेतुं ज्ञानं स्वभक्तिं च निजप्रजासु ॥ १६८ ॥ इत्याद्यनंतानि हरेरुदारकर्माणि रूपाणि च सद्गुणाश्च ॥ नित्यव्यपेताखिलदोषकस्य ब्रह्मेत्यनंतेति च नाम येन ॥ १६९ ॥ ७ ॥

सुरस्य कात्कारत एव निराकरणादेव कल्की । अर्थांतरमाह । ज्ञानमिति । ज्ञानं कलशब्दवाच्यम् । कल ज्ञान इति धातुः कमिति सुखनाम तेज्ञानसुखे विद्येते यस्य सः तद्वान् ज्ञानसुखवानित्यर्थः । तेन निमित्तेन कल्कीति वा । कल्कीति नाम वा नित्यर्थः । कलं च कं च अस्यस्त इति कल्कीतिनिरुक्तिः । तेन कल्किना दिनाद्दिनमात्रेण समस्तदस्यूनां विनाशनं व्यधायि कृतम् ॥ १६७ ॥ तुरंगी अश्वारूढः स कल्की धर्मलक्षणकेतुं संस्थापयामास । निजप्रजासु स्वभक्तेषु स्वभक्तिं च संस्थापयामास ॥ १६८ ॥ आनंदतीर्थवरनामवती तृतीया भैमी तनुर्मरुत-आह । कथाः परस्येति प्रतिज्ञात भगवदवतारकथा उक्त्वोपसंहरन् भगवानाचार्यः भगवदवतारगुणकर्मणां परिसमाप्तत्वादुपसंहारं करोतीत्यल्पज्ञशंकां परिहरन्नाह इत्यादीति । येन कारणेन नित्यं व्यपेताः अपगताः अखिलदोषाः पारतंत्र्यादयो यस्य स तथा । स्वार्थे कप्रत्ययः । तस्य तथा हरेः इत्यादीनि च तानि अनंतानि चेति इत्याद्यनंतानि उदाराणि च तानि कर्माणि च

तथाउत्कृष्टकर्माणिरूपाणिचमत्स्याद्यवताररूपाणिच सद्गुणाश्चस्वातंत्र्यादिनिर्दुष्टगुणाश्चवर्ततेनइतिशेषः। तेनगुणादिपूर्णत्वकारणेन हरेर्ब्रह्मेति अनंतेतिचनाम ॥ १६९ ॥
आप्तोक्तत्वेन अस्मिन्ग्रंथेसतांभक्त्युत्पादनार्थं ग्रंथकर्तुःस्वस्वनामग्रंथस्य अशेषप्रमाणमूलकत्वंचाह। आनंदेति । आनंदतीर्थःपूर्णप्रज्ञश्चेतिद्विनामा अभिहितःग्रंथंकुर्वि-त्याज्ञापितः तस्यैवव्यासस्यैव ॥ १७० ॥ यश्चानंदतीर्थःतत्प्रसादात् व्यासप्रसादात् सपंचरात्रान्सरहस्यसंग्रहान् रहस्यानिउपनिषदस्तासांसंग्रहैःसूत्रैःसहितानखिलान्वेदान् पुराणयुक्तेतिहासांश्चअन्याअपिसर्वविद्याःयथावत्वेदव्यासाभिप्रेतार्थत्वेनवेद।सग्रंथंचकारेतिपूर्वेणान्वयः॥१७१॥ ग्रंथस्वरूपमाह। समस्तेति। समस्तशास्त्राणांअर्थःविनिर्णयोयस्मिन्त्सोतथा विशेषतःभारतवर्त्मचारीभारतमार्गवर्तीभारतनिर्णयात्मकइतिभावः। ग्रंथप्रयोजनमाह। ग्रंथइति। जगतांजनित्रंजनयितारं गुरुंश्रीहरिंवेदव्यासंप्रीणयता-अमुनैवआनंदतीर्थेन॥१७२॥इहवेदपंचरात्रेतिहासादिषु विप्रस्थितानांकुत्रचित्परस्परविरुद्धत्वेनस्थितानां सर्वेषांवेदादीनांवाचांवाक्यानां अमुनामहाभारततात्पर्यनिर्णयाख्य ग्रंथेन विनाविनिर्णयोनास्ति यद्यस्मात्तत्तस्मादयंग्रंथःकृतइत्यन्वयः।ननु ब्रह्मसूत्रेषुसत्सु कुतोविनिर्णयोनास्तीत्यतआह।ब्रह्मसूत्राणीति।कृष्णःब्रह्मसूत्राणियद्यपिचकार वेदा

आनंदतीर्थाख्यमुनिः सुपूर्णप्रज्ञाभिधो ग्रंथमिमं चकार ॥ नारायणेनाभिहितो बदर्यां तस्यैव शिष्यो जगदेकभर्तुः ॥ १७० ॥
यस्तत्प्रसादादखिलांश्च वेदान्सपंचरात्रान्सरहस्यसंग्रहान् ॥ वेदेतिहासांश्च पुराणयुक्तान्यथावदन्या अपि सर्वविद्याः ॥ १७१ ॥
समस्तशास्त्रार्थविनिर्णयोयं विशेषतो भारतवर्त्मचारी ॥ ग्रंथः कृतोयं जगतां जनित्रं हरिं गुरुं प्रीणयतामुनैव ॥ १७२ ॥ विनिर्णयो नास्त्यमुना विना यद्विप्रस्थितानामिह सर्ववाचाम् ॥ तद्ब्रह्मसूत्राणि चकार कृष्णो व्याख्या तथैषामयथाकृतान्यैः॥१७३॥
निगूहितं यत्पुरुषोत्तमत्वं सूत्रोक्तमप्यत्र महासुरेंद्रैः ॥ जीवेश्वरैक्यं प्रवदद्भिरुग्रैर्व्याख्याय सूत्राणि चकार चाविः ॥ १७४ ॥
व्यासाज्ञया भाष्यवरं विधाय पृथक्पृथक् चोपनिषत्सु भाष्यम् ॥ कृत्वाखिलान्यं पुरुषोत्तमं च हरिं वदंतीति समर्थयित्वा॥१७५॥

दीनांनिर्णयार्थमितिशेषः। तथातथापिअन्यैःदुर्वादिभिःएषांब्रह्मसूत्राणांव्याख्याअन्यथाव्यासाभिप्रेतार्थवैपरीत्येनकृता तस्मादमुनाविनाविनिर्णयोनास्तीतिपूर्वेणसंबंधः१७३ तर्हि सूत्राण्यव्याख्यातानिकिमित्यतआह। निगूहितमि।अत्रभुविजीवेश्वरयोःऐक्यंप्रवदद्भिःअतएवउग्रैर्महासुरैःमणिमत्पूर्वकक्रोधवशादिदैत्यैःसूत्रोक्तमपिपुरुषोत्तमत्वं रमा-दिभ्यउत्तमत्वंभगवतइतिशेषः। निर्गूहितंआच्छादितंयद्यस्मात्तस्मात् सूत्राणिव्याख्याय आविःपुरुषोत्तमत्वंप्रकटंचकार ॥ १७४ ॥ आविश्चकारेत्युक्तमेवविवृण्वन् अन्यद-प्याह। व्यासाज्ञयेत्यादिना। भाष्यवरंउत्तमभाष्यं विधायब्रह्मसूत्राणामितिशेषः। भाष्यवरमित्युक्त्या अन्येषामेकविंशतिभाष्याणांदुर्भाष्यत्वमुक्तमित्यर्थः। पृथक्पृथगुप-निषदांसुभाष्यं भाष्याणीत्यर्थः जातावेकवचनम्।कृत्वा हरिंनिखिलान्यं सर्वस्माद्विलक्षणं पुरुषोत्तममितिवदंति। सूत्रवेदादयइतिशेषः। इतिसमर्थयित्वाप्रतिपाद्य॥१७५॥

शोभनश्चासौ भारतार्थश्च तथा तस्य प्रतिपादनाय प्राधान्येनेति शेषः । यइमंग्रंथं चकार यस्मिन्ग्रंथे । उदीर्णा हरिसर्वोत्तमत्वप्रतिपादकत्वेन उत्तमविद्या येषां ते तथा । हरिपादभ-
क्ताः रमंते सेयं पवनस्य तृतीया तनुः आनंदतीर्थाख्यः तृतीयोवतारः ॥ १७६ ॥ ज्ञानप्रदत्वार्थं वायोस्तृतीयावतारात्पूर्णप्रज्ञाचार्यात् ज्ञानं प्रापुरित्यत्र श्रुतिं प्रमाणमाह । तृतीय-
मिति । वृषभस्य देवश्रेष्ठस्य अस्य वायोः तृतीयं दशप्रमतिं पूर्णप्रज्ञनामकं रूपं योषणः योषितः आचार्याणां मातृत्वेन पूज्यत्वाद्बहुवचनम् । दोहसे ज्ञानदोहनार्थं जनयंत अजनयंत
॥ १७७ ॥ ईशानासः शेवाद्याः सूरयः ज्ञानिनः महिषस्य पूर्णस्य हरेः वर्पसः तत्संज्ञकान् बलज्ञानादिगुणान् यत् यस्मात् ईं एव यस्माद्बुध्नात् बोधरूपात् पूर्णबोधाख्यावतारात्
शवसा सुखेन निः अंत निरकंत नितरां ज्ञातवंतः । देवाः पूर्णबोधाद्विष्णोर्गुणान् कथमजानन्नित्यत आह । यदीमिति । यदीं य एव प्रदिवः प्रकृष्टद्युतिमान् मातरिश्वा मातरिप्रमा-
णभूते क्षणादौ श्वयति गच्छतीति मातरिश्वा वायुः तदवतारो मध्वः मधुशब्दः सुखवाची वशब्दवाच्यं शास्त्रं सुखकरं शास्त्रं यस्य असौ मध्वः मध्वनामक इत्यर्थः । गुहासंतं निर्गुणत्व-

## तनुस्तृतीया पवनस्य सेयं सद्भारतार्थप्रतिपादनाय ॥ ग्रंथं चकारेममुदीर्णविद्या यस्मिन् रमंते हरिपादभक्ताः ॥ १७६ ॥ तृती-
## यमस्य वृषभस्य दोहसे दशप्रमतिं जनयंत योषणः ॥ १७७ ॥ निर्यदीं बुध्नान्महिषस्य वर्पस ईशानासः शवसा क्रंत सूरयः ॥
## यदीमनु प्रदिवो मध्व आधवे गुहासंतं मातरिश्वा मथायति ॥ १७८ ॥ इत्यादिवाक्योक्तमिदं समस्तं तथा पुराणेषु च पंचरात्रे ॥
## अत्रोदिता याश्च कथाः समस्ता वेदेतिहासादिविनिर्णयोक्ताः ॥ १७९ ॥ तस्मादयं ग्रंथवरोखिलानां धर्मादिमोक्षांतपुमर्थहेतुः ॥
## किंचोदितैरस्य गुणैस्ततोन्यैर्नारायणः प्रीतिमुपैत्यतोलम् ॥ १८० ॥ ॥ ७ ॥ ॥ ॥ ॥ ॥ ॥

प्रतिपादकतर्काभासैः गूहितं परमात्मानं आधवे आसमंतात् धवत्वे सर्वस्वामित्वे स्वामित्वज्ञापनार्थमिति यावत् । अनुमथायति अन्वनुमथ्नाति वेदेतिहासादिसच्छास्त्रं सम्यग्-
व्याचकारेत्यर्थः ॥ १७८ ॥ इत्यादिवाक्यैः तृतीयमस्येत्यादिवेदवाक्यैः उक्तं इदं समस्तं प्रमेयं तथा श्रुत्युक्तप्रकारेण पुराणेषु पंचरात्रे च उक्तम् । अत्रोक्तकथाः पुराणोक्तकथानां
प्रतिकूला इव प्रतीयंते अतः अस्य ग्रंथस्य अग्राह्यत्वमिति शंकां परिहरन् स्वोक्तकथाप्रयोजनमाह । अत्रोदिता इति । अत्र ग्रंथे याः कथाः उदिताः ताः समस्ताः वेदेतिहासादीनां परस्पर-
विरुद्धानामिव स्थितानां वेदेतिहासपुराणानां विनिर्णयायुक्ताः तस्मात् एतदनुकूलेन सर्वाः कथाः योज्या इति भावः ॥ १७९ ॥ तस्मात्सर्वनिर्णायकत्वादखिलानां सर्वग्रंथानां मध्ये
अयं ग्रंथवरः निर्णायकत्वाद्ग्रंथस्योत्तमत्वमिति भावः । अत एव धर्मादिमोक्षांतपुमर्थहेतुः नारायणो लं प्रीतिं उपैति । एतद्ग्रंथश्रवणमननादिनेति शेषः । यतः ततः अस्य ग्रंथस्य
उदितैः अन्यैर्गुणैः किंच किं प्रयोजनं हरिप्रीत्युक्त्या सर्वे गुणा उक्तप्राया इत्यर्थः ॥ १८० ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

श्रुतिसंमतालंकारश्लोकंपठति । यस्येति । यस्यवायोःअलंदिव्यानिअत्युत्तमानित्रीणिरूपाणित्रयोवताराःवेदवचनेबलित्थेत्यादिवेदवचने उदितानितस्यवायोर्देवस्यतत मूलरूपंबदूबलात्मकंदर्शनंज्ञानपूर्णं इत्थमेववक्ष्यमाणप्रकारेण निहितंप्रवृत्तंभर्गःभरणगमनकर्तृमहत् उत्तमं भाविष्यन्महत्तत्वस्वरूपंवा । अवतारत्रयस्थव्यापारंभेदंदर्शयति । रामेति । वायोःप्रथमकंहनुमदाख्यंप्रथमरूपंरामवचांसिसीताकीर्तिंप्रतिनयतीतितया । वायोः द्वितीयंवपुःभीमाख्यंरूपंपृक्षःपृतनासेनातस्याःक्षयकारि । यदेतत्मध्वःमध्वाख्यं तृतीयरूपमित्यर्थः । अमुनामध्वनाम्नाकेशवेसमर्पणबुद्ध्या ग्रंथःश्रीमन्महाभारततात्पर्यनिर्णयाख्योग्रंथःकृतः ॥ १८१ ॥ श्रीमद्भगवदाचार्यःस्वचिकीर्षितग्रंथंपरिसमाप्य

यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं बट्तद्दर्शनमित्थमेव निहितं देवस्य भर्गो महत् ॥ वायो रामवचोनयं प्रथमकं पृक्षोद्वितीयं वपुर्मध्वो यत्तु तृतीयमेतदमुना ग्रंथः कृतः केशवे ॥१८१॥ ॐ यः सर्वगुणसंपूर्णः सर्वदोषविवर्जितः ॥ प्रीयतां प्रीत एवालं विष्णुर्मे परमः सुहृत् ॥१८२॥ इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये पांडवस्वर्गारोहणं नाम द्वात्रिंशोध्यायः ॥ ३२ ॥ श्रीकृष्णार्पणमस्तु ॥ श्रीवेदव्यासायमंगलम् ॥ ॥ ॥छ॥ ॥ ॥

नित्यप्रीतस्यविष्णोःप्रीतिरूपंमंगलंस्वग्रंथांतेनिबध्नाति । यइति । सर्वगुणैःसर्वदोषैःविवर्जितःमेअलंप्रीतएव नित्यमेवप्रीतोयोविष्णुःसपरमःमुख्यःसुहृत्प्रियःमुख्यसुहृदित्यर्थः । विष्णुः प्रीयतामित्यखिलमतिमंगलम् ॥ १८२ ॥ ॥ इति श्रीमद्भारततात्पर्यनिर्णयस्य टीकायां जनार्दनभट्टविरचितायां पदार्थदीपिकानाम्न्यां द्वात्रिंशोध्यायः समाप्तः ॥ ३२ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ श्रीमद्धनुमद्भीममध्वांतर्गतश्रीरामकृष्णवेदव्यासात्मकश्रीमदनंतात्मकश्रीलक्ष्मीनृसिंहायमंगलम् ॥ श्रीवेदव्यासार्पणमस्तु ॥ ॥

---

संशोधितमेतदैनापुरेइत्युपाख्यबाळाचार्यतनूजेन उद्धवाचार्येण तदनुजेन च वासुदेवाचार्येण ॥ श्रीमदानन्दतीर्थभगवत्पादाचार्यसेवितचरणविष्णुप्रीतिकामेन सावंतोपाख्यरामचन्द्रतनूजन्मना आबाजीरायनाम्ना मुम्बय्यां गणपतकृष्णाजीमुद्रालयेमुद्रितम् ।

॥ शकाब्दाः १८१३ ॥